श्रीवामनजयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# काशिका






सम्पादकः

## विजयपालो विद्यावारिधिः

**ट्रस्ट के उद्देश्य**

प्राचीन वैदिक साहित्य का अन्वेषण, उसकी रक्षा तथा प्रचार एवं भारतीय संस्कृति, भारतीय शिक्षा, भारतीय विज्ञान और चिकित्सा द्वारा जनता की सेवा।

---

प्रकाशक : 
रामलाल कपूर ट्रस्ट
ग्राम-रेवली, सोनीपत-१३१०३९



संस्करण : द्वितीय—६००
विं०सं० २०७० (अक्तूबर २०१३)

मूल्य : ₹ ६४०.००

प्राप्ति स्थान : १. रामलाल कपूर ट्रस्ट
ग्राम-रेवली, पो०-ई०सी० मुरथल
सोनीपत-१३१०३९ (हरियाणा)
(०१३०) ३२९०२७६
Web : www.rlktrust.org
email : rlktrust@yahoo.in

२. रामलाल कपूर एण्ड संस
पेपर मर्चेण्ट्स, २५९६, नई सड़क, दिल्ली-६

३. विजयकुमार गोविन्दराम हासानन्द
४४०८, नई सड़क, दिल्ली-६

मुद्रक : अजय प्रिंटर्स
दिल्ली-३२

# प्रस्तावना

अथ प्रस्तूयते 'काशिका' नाम्नः सुमहतो ग्रन्थस्य नूतनं संस्करणं पुरस्तात् शब्दविदाम्। अनेकवर्षशतैः सुतरां व्यकिरद् ग्रन्थरत्नमिदं स्वकीयान् प्रोज्ज्वलान् ज्ञानरश्मीन् विमलेन्दुरिव व्याकरणनभोमण्डले। कालचक्रवशात् सूत्रक्रमानुसारी ग्रन्थचन्द्रोऽयं दुर्ग्रस्त इवाजायत प्रक्रियानुसारिभिर्ग्रन्थराहुभिः। तत उपचतुरवत्सर-शतानन्तरं पुनरुददीधरन् इमं ग्रन्थतल्लजं सूत्रक्रमानुयायिनः सूरयः। तदैतिह्यं तावत् समासतोऽधस्ताद् उदीर्यते।

## वेदाङ्ग-प्रवृत्तिः

निरुक्तकृद् आचार्यो यास्कः स्वशास्त्रम् अवतारयन् पुरावृत्तं संक्षिपति— 'साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च' ( निरु० १.२० ) इति। त्रयः खल्वत्र कालविभागाः परिलक्ष्यन्ते—दर्शनकालः, सम्प्रदानकालः, समाम्नानकालश्चेति। तत्र प्रथमे तावद् दर्शनकालविभागे नीरजस्तमसो महर्षयः सार्थान् मन्त्रान् ददृशुः सर्गारम्भे। कालान्तरे तु द्रष्टारो महर्षयः स्वापेक्षयाल्पसामर्थ्येभ्यः श्रुतर्षिभ्यो मौखिकेनोपदेशेन मन्त्रान् तदर्थांश्च सम्प्रादुः। तस्मिन् कालविभागे चरणाभिधाः सम्प्रदायाः प्रादुरभूवन्। अथान्तिमे कालविभागे भारतयुद्धाद् नातिविप्रकृष्टे कालखण्डे सार्थान् मन्त्रान् चिरं धारयितुमसमर्थान् जनान् दर्शंदर्शं कृपायमाणा आचार्याः सब्राह्मणाः शाखा वेदाङ्गानि च षड् ग्रन्थरूपेण समदृभन्। इत्थं च वेदाङ्गप्रवृत्तिः स्वरूपार्थयोः संरक्षणार्थं वेदानां जाता। तथा चाह पतञ्जलिः—'रक्षार्थं वेदानामध्येयं व्याकरणम्' (महाभाष्य-पस्पशा) इति। वेदाङ्गत्वं च नाम वेदोपकारकत्वम्, न तु साक्षात् चक्षुरादिवद् वेदशरीरावयवत्वम्। षण्णां वेदाङ्गानां नामग्राहं प्राचीनतम उल्लेखो मुण्डकोपनिषदि ( १.१.५ ) उपलभ्यते—'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति'।

## व्याकरणं वेदाङ्गम्

व्याकरणं ह्यर्थविशेषमाश्रित्य स्वरविशेषादीन् विदधत् पदार्थविशेषनिर्णयस्य हेतुरित्यतोऽस्य वेदाङ्गत्वं प्रसिध्यति। षट्स्वपि वेदाङ्गेषु व्याकरणस्य प्राधान्यमब्रवीद् भाष्यकारः पतञ्जलिः—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च। प्रधानं च षट्स्वङ्गेषु व्याकरणम्' (महाभाष्य-पस्पशा) इति। वाक्यवाक्यार्थनिश्चयो हि पदपदार्थ-बोधाधीनः, पदपदार्थबोधश्च व्याकरणनिमित्तक इति व्याकरणस्य प्राधान्यं सुवचम्।

व्याकरणग्रन्थान् त्रिधा भेदयन्ति तद्विदः—प्रथमास्तावत् छान्दसाः प्रातिशाख्याभिधाः, द्वितीया लौकिकाः कातन्त्रादयः, तृतीयास्तूभयविधाः पाणिनीयादयः। तत्र प्रातिशाख्यानि चरणविशेषसम्बद्धानि वर्णोच्चारण-स्वर-सन्धिप्रतिपादनपराणीति शिक्षावेदाङ्गेऽन्तर्भवन्ति प्रायेण। वस्तुतस्तानि न व्याकरणानि पदपदार्थावगमस्यानिमित्तत्वात्। कातन्त्रादीनां वेदाङ्गत्वस्य प्रश्न एव नोदेति, तेषां लौकिकत्वात्। अतः सम्प्रति पाणिनीयमेवैकं तन्त्रं व्याकरणवेदाङ्गत्वेन सर्वैरभ्यनुज्ञायते। तथा चाह पतञ्जलिः—'सर्ववेदपारिषदं हीदं शास्त्रम्' (२.१.५८ महाभाष्य) इति। पाणिनीयं व्याकरणं त्रिमुनित्वेन लोके प्रख्यायते। पाणिनिः कात्यायनः पतञ्जलिश्चेति त्रयो मुनयः सूत्र-वार्त्तिक-भाष्यैः सम्पूर्णं वैदिक-लौकिकशब्दौघं निबबन्धुरस्मिन् तन्त्रे। पाणिनिस्तावद् आपिशल्याद्याचार्याणां कृतीरधिगम्य स्वशास्त्रम् 'अष्टाध्यायी' नामकं प्रोवाच। शास्त्रप्रवृत्तिर्हि वृत्तिरित्युच्यते। वृत्तेर्व्याख्यानं वार्त्तिकम्, तच्च कात्यायनादय आचार्या प्रणिन्युः। वार्त्तिकान्यधिकृत्य पतञ्जलिः सुमहद् भाष्यं विरचयामास।

### वृत्तिग्रन्थाः

'सूत्रार्थप्रधानो ग्रन्थो वृत्तिः' इति हरदत्तः (पदमञ्जरीप्रारम्भे)। वृत्तिग्रन्थेषु पदच्छेदः पदार्थः समासविग्रहोऽर्थ उदाहरणं प्रत्युदाहरणम् इत्येवं सूत्रव्याख्यानं प्रधानतः क्रियते, यथाप्रसङ्गं च शङ्कासमाधानं विधीयते। तत्राद्यवृत्तिकारः पाणिनिरेवासीदिति भर्तृहर्यादयो व्याजह्रुः। तथा हि—'उभयथा ह्याचार्येण शिष्याः प्रतिपादिताः, केचिद्वाक्यस्य केचिद्वर्णस्य' (महाभाष्यदीपिका १.१.४५) इति। 'सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः। तदुभयमपि ग्राह्यम्' (काशिका ५.१.५०) इति। पाणिनि-जयादित्ययोरन्तराले काले दश वृत्तिकारान् सूचयन्ति पुरावृत्तविदः (संस्कृतव्याकरणशास्त्रस्येतिहासोऽत्रानुसन्धेयः)। परं तेषां कृतयोऽद्य नोपलभ्यन्ते। तथैव काशिकातोऽर्वाक्कालिकाः त्रिंशद्देशीया वृत्तिकारा सूच्यन्ते, वृत्तयस्तु तेषां काश्चनैवोपलभ्यन्ते। काशिकां विहाय, पुरुषोत्तमदेवकृता भाषावृत्तिः (लघुवृत्तिः), शरणदेवकृता दुर्घटवृत्तिः, अन्नंभट्टकृता पाणिनीयमिताक्षरा, भट्टोजिदीक्षितकृतः शब्दकौस्तुभः, दयानन्दकृतम् अष्टाध्यायीभाष्यम् इत्येता वृत्तयोऽपि सम्प्रति सुलभा वर्त्तन्ते। परं काशिकैवैकाकिनी वृत्तिषु मूर्धन्या विराजते।

वृत्तयः सूत्रक्रममनुसरन्तीति व्यक्तमेव। तत्र सुप्तिङादिविषयविशेषस्य समग्रविधानम् एकस्मिन् स्थले न सम्भवतीति किमप्यसौविध्यम् अनुभूयेत लौकिकैर्व्युत्पित्सुभिः। अत एव कातन्त्रादिलौकिकव्याकरणग्रन्थाः प्रकरणान्यधिकृत्य प्रावर्त्तन्त—समास-कृत्-तद्धित-सुप्-तिङ्-प्रकरणानि स्वात्मपरिनिष्ठितानि पृथक्पृथक् न्यरूप्यन्तामुत्र। पाणिनीया

अपि तादृशं सौविध्यं कामयाञ्चक्रिर इति तैः प्रक्रियाक्रम आविरक्रियत। प्रक्रियाक्रमे यदसौविध्यं दोषश्च तदनुपदं वक्ष्यते।

## प्रक्रियाग्रन्थाः

प्रक्रियाग्रन्थानां प्रादुर्भावो विक्रमसंवत्सरस्य द्वादश्याः शताब्द्या मध्ये तदाजायत यदा धर्मकीर्तिना रूपावतारो नाम प्रक्रियाग्रन्थो निबद्धः। ततः शताब्द्यनन्तरं रामचन्द्रः प्रक्रियाकौमुदीं रचयामास। ततश्च विक्रमसंवत्सरस्य सप्तदश्यां शताब्द्यां भट्टोजिदीक्षितः सिद्धान्तकौमुदीं प्रणीतवान्। अनेनैव विदुषा पूर्वं शब्दकौस्तुभनामा सूत्रक्रमानुसारी वृत्तिग्रन्थोऽपि निरमायि। अन्येऽपि बहवो ग्रन्थाः प्रक्रियाक्रमानुसारिणो व्यरच्यन्त, परं सिद्धान्तकौमुद्याः पश्चात् सर्वे पठनपाठनतो निरास्यन्त। विगतां शताब्दीं यावत् सिद्धान्तकौमुद्यास्तट्टीकोपटीकानां च पताका दोधूयते स्म व्याकरणक्षेत्रे। सूत्रक्रमानुसार्यध्ययनमध्यापनं चोत्सन्नप्रायमेवाजायत। एतावान् अभूत् कौमुद्याः प्रभावो यद् महाभाष्यस्याप्यार्षग्रन्थरत्नस्याध्ययनमपार्थकं घोषयामासुः पण्डितपुङ्गवाः। तथा हि त ऊचुः—

कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।<br>
कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः॥ इति

## सूत्रक्रमोद्धारः

उपचतुरैर्वर्षशतैः प्रक्रियाक्रमपताकादोधूयत सर्वासु दिक्षु, तत्र कौमुदीमयमिव समजायत भारतीयसांस्कृतिकं नभोमण्डलम्। एतादृशि परिस्थितौ उदैद् एको ज्योतिःपुञ्जो विरजानन्दाभिधो दण्डी स्वामी वैयाकरणभास्करो विक्रमसंवत्सरस्यैकोनविंश्यां शताब्द्याम्। स तत्र भवान् चर्मचक्षुर्विहीनोऽपि प्रज्ञाचक्षुः सर्वां दुरवस्थां समवबुध्य सिद्धान्तकौमुदीक्रममुत्सृज्य घोषयामास—

अष्टाध्यायीमहाभाष्ये द्वे व्याकरणपुस्तके।<br>
ततोऽन्यत् पुस्तकं यत्तु तत् सर्वं धूर्तचेष्टितम्॥ इति

स महाभागः सूत्रक्रममनुसृत्याजीवनं व्याकरणमध्यापयामास समहाभाष्यम्। तस्य तत्र भवतः शिष्यवरो वेदोद्धारको दयानन्दसरस्वती स्वकीये विख्याते सत्यार्थप्रकाशनाम्नि ग्रन्थे व्याकरणाध्ययनप्रसङ्गेऽष्टाध्यायीसूत्रक्रमानुसार्यध्ययनस्य वैशिष्ट्यं प्रदर्शयामास, स्वयं च खलु सूत्रक्रममनुसृत्य वृत्तिग्रन्थमष्टाध्यायीभाष्यनामानं रचयामास। ततः प्रचलितः पुनः स प्राचीनः क्रमः।

## सूत्रक्रमानुसार्यध्ययनस्य वैशिष्ट्यम्

कातन्त्रादिषु यः प्रकरणानुसारी क्रम आश्रीयत, स स्वाभाविक आसीत् , मूलत

एव सूत्राणां तथा प्रणीतत्वात्। इह तु पाणिनीयतन्त्रे विषयोपस्थापनयोजना मूलतो भिद्यते, सूत्राणीह भिन्नविषयाणि परस्परं सुगुम्फितानि वर्तन्ते लाघवानुरोधेन। तद्यथा— 'अतो दीर्घो यञि', 'सुपि च' (७.३.१०१, १०२) इत्यत्र तिङा सह सुपो गुम्फनम्, 'चरफलोश्च', 'उत्परस्यातः', 'ति च' (७.४.८७—८९) इत्यत्र चाभ्यासप्रसङ्गेऽपि तदितरनिरूपणम्। तस्मात् स्वस्थानाद् भ्रष्टो योगो न स्वार्थं बोधयितुं शक्नोति। स्वस्थान आसीनः सूत्रविशेषः स्वार्थमभिधाय, प्रक्रियादशायां स्वस्थानं त्यजेत् चेद्, कामं त्यजतु, न ततः कापि क्षतिः। स्वकथ्यं स्पष्टीक्रियते कतिभिश्चिद् निदर्शनैः संस्कृतव्याकरण-शास्त्रस्येतिहासाद् उद्धृतैः—

१. सिद्धान्तकौमुद्याः सन्धिप्रकरण एकोनसप्ततितमस्य 'आद् गुणः' (६.१.८७) इति सूत्रस्य वृत्तिः पठ्यते—'अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात् संहितायाम्' इति। तत्र 'अचि, पूर्वपरयोः, एकः, संहितायाम्' इत्येतानि पदानि न सन्निधीयन्त इत्यध्येतुर्महान् श्रमो जायते वृत्तितत्तात्पर्यग्रहणधारणयोः। वृत्तिघोषणाद् ऋते नास्त्यन्य उपायश्छात्राणाम्। अष्टाध्याय्यां पुनरेकस्मिन्नेव स्थले पौर्वापर्येण सूत्राणि पठ्यन्त इति वृत्तिबोधधारणयोः क्लेशलेशोऽपि नानुभवन्ति व्युत्पित्सवः।

२. अष्टाध्याय्यां द्विर्वचनेड्नुमादिप्रकरणानि सुसम्बद्धानि पठ्यन्ते। अध्येता कदाचित् कस्मिंश्चिद् विधौ सन्देग्धि चेत्, तर्हि ततत् प्रकरणम् अभिसमीक्ष्य कतिभिश्चित् क्षणैः सन्देहं निवर्तयति। कौमुद्यां पुनरिमानि प्रकरणानि विच्छिद्य पठ्यन्त इति सन्देहं कथंकारं निवर्तयेदध्येता?

३. पाणिनीयतन्त्रे 'विप्रतिषेधे परं कार्यम्' (१.४.२), 'असिद्धवदत्राभात्' (६.४.२२), 'पूर्वत्रासिद्धम्' (८.२.१) इत्येतैर्योगैः सम्पद्यमानेषु कार्येषु सूत्रानुक्रमोऽपेक्ष्यते। सूत्रानुक्रमबोधमन्तरा पौर्वापर्यज्ञानं कथं नाम स्यात्? सिद्धान्तकौमुद्याम् अनुक्रमविपर्यासेन सूत्राणां पठितत्वात् पौर्वापर्यबोधो न सम्भवत्येव। तमन्तरा कियान् क्लेशोऽनुभवेद् व्युत्पित्सुरिति समीक्षन्तां सूरयः।

४. सिद्धान्तकौमुद्यादिप्रक्रियाग्रन्थान् अधीयानस्य क्वचिद् भ्रान्तिरपि जायेत। तथा हि, 'समर्थः पदविधिः' (२.१.१) इति सूत्रं सिद्धान्तकौमुद्यां समासप्रकरणे पठितत्वाद् अध्येतृभिः समासमात्रपरम् अभिमन्यते। वस्तुतस्तु परिभाषेयमिति सर्वं शास्त्रम् अभिव्याप्नोति, समासो हि 'प्राक् कडारात् समासः' (२.१.३) इत्यत आरभ्यते।

तदेवं सूत्रक्रमानुसार्यध्ययनं स्वाभाविकम्, प्रक्रियानुसार्यध्ययनं पुनरस्वाभाविकमिति निष्कर्षः। सूत्रक्रमानुसार्यध्ययनं खल्वपि तदैव सफलीभवति, यदा सकलाष्टाध्यायी-कण्ठस्थीकरणपुरःसरं भवतीति ध्येयम्। प्राचीनकाल एषैवासीत् परिपाटी, यामाधुनिकयुगे

युगपुरुषो दयानन्द उदजीवयत्, तदनुयायिनश्च प्रतरां चालयन्ति स्वसंस्थानेषु। दरीदृश्यन्ते हि सुबहूनि प्रतिष्ठानानि गुरुकुलाभिधानि यत्र छात्रा अष्टाध्यायीसूत्रपाठं कण्ठस्थीकृत्य, प्रथमावृत्तिं ( सूत्राणां पदच्छेद-विभक्ति-समास-अनुवृत्ति-अर्थ-उदाहरण-तत्साधनिकाः), द्वितीयावृत्तिं ( पारिभाषिक-काशिके ), सम्पूर्णं महाभाष्यं चाधीत्य पञ्चषैर्वर्षैर्वैयाकरणाः सम्पद्यन्ते। इत्थं सूत्रानुपूर्वीम् अनुसरन्तश्छात्रा अनिवार्यतया काशिकामाश्रयन्ते। इयं वृत्तिः स्वगुणग्रामेण सर्वान् प्राचीनार्वाचीनान् वृत्तिग्रन्थान् अतिक्रामति।

## काशिकाया विशिष्टगुणाः

१. प्राचीनवृत्तिष्वसन्निविष्टो गणपाठोऽस्यां वृत्तौ संशोध्य संकलय्यते, सूच्यते चैतद् ग्रन्थारम्भे 'शुद्धगणा' इति।

२. प्राचीनानां विलुप्तवृत्तीनामनेकमन्यत्र दुर्लभं मतमत्रोल्लिख्यते। तद्यथा— 'माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः' ( ७.१.९४ सूत्रे काशिका )।

३. अनेकं पाणिनीयं सूत्रं प्राचीनवृत्तीराश्रित्य व्याख्यायतेऽत्र ( यथा ५.१.९४ )। काशिका महाभाष्यमुत्क्रम्यापि बहुकृत्वः सूत्राणि व्याचष्टे। केभ्यश्चनैतद् न रोचते। वस्तुतस्तु नैतदरुचिरं मन्तव्यम्, प्राचीनतरैरनुमोदितत्वात्।

४.अस्यां वृत्तौ सूत्राणामुदाहरणप्रत्युदाहरणानि प्राचीनवृत्तिभ्य उद्धृत्य विन्यस्तानि। तानि तात्कालिकैतिह्यतथ्यानि स्वात्मनि निगूहयन्तीति सुव्यक्तम्।

५. अयं ग्रन्थः साम्प्रदायिकप्रभावाद् मुक्त इति शक्यते वक्तुम्। अपरतः सिद्धान्त-कौमुद्यादयः प्रक्रियाग्रन्थाः कल्पितसाम्प्रदायिकोदाहरणादिभिराकीर्णा इति सम्प्रदायनिरपेक्षं पाणिनीयं तन्त्रं सदपि साम्प्रदायिकमिव समपद्यत।

## काशिकास्थः सूत्र-वार्त्तिक-कारिकापाठः

काशिकाव्याख्येयानि सूत्राणि क्वचित् क्वचिद् अष्टाध्यायीसूत्रैः सह न संवदन्ते। तत्र हरदत्तादिवैयाकरणाः काशिकाकृतं वार्त्तिकप्रक्षेपम् अभिमन्यन्ते। आधुनिकास्तु केचित् काशिकाकृतं चान्द्रसूत्रप्रक्षेपं प्रतिजानते। एतदुभयमतं प्रत्याख्याय महामहोपाध्यायः श्रीयुधिष्ठिरमीमांसकोऽष्टाध्यायीसूत्राणां पाठत्रैविध्यं पर्यकल्पयत्। तत्र प्राच्यपाठो वृद्धः, यमाश्रित्य काशिका प्रववृते। औदीच्य-दाक्षिणात्यपाठौ लघू, यावाश्रित्य वार्त्तिकानि प्रणिन्यिरे। अपरे त्वेतद् मतं न सहन्ते, आतिष्ठन्ते च—वृत्तिकारविशेष-संशोधितं सूत्रपाठमाश्रयामास काशिकाकार इति। 'वृत्तौ भाष्ये तथा' ( काशिकारम्भे ) इत्यत्र या वृत्तिर्निर्दिष्टा, तदाश्रितः सूत्रपाठ एव काशिकाकृतापि समाश्रीयतेति त आहुः।

महाभाष्यवार्त्तिकपाठात् काशिकावार्त्तिकपाठोऽपि बहुधा भिद्यते। बहूनि वार्त्तिकानि काशिकायां पठ्यन्ते, न तु महाभाष्ये। महाभाष्यस्थानि बहूनि वार्त्तिकानि काशिकायां न संगृह्यन्ते। तथैव कारिका अपि भाष्यान्तर्गताः काश्चन काशिकायां संगृह्यन्ते, काश्चन त्यज्यन्ते, अपराश्चोत्सान्तराद् उद्ध्रियन्ते। तत्र यान् सूत्र-वार्त्तिक-कारिकापाठान् प्राचीन-वृत्तिकारा आश्रयन्, तेषामनुकुर्वन् काशिकाकारोऽपि तानेवाश्रयत्, नामग्राहं कश्चित् स्रोतोविशेषो न शक्यते निर्देष्टुम्।

## काशिकायाः कर्तृत्व-व्याख्यातृत्व-प्रत्याख्यातृत्वानि

वामनजयादित्याभिधौ विद्वांसौ विक्रमसंवत्सरस्य सप्तम्याः शताब्द्या उत्तरार्धे काशिकां वृत्तिं विरचयामासतुः। द्वावपि शाब्दिकावेतौ पृथक्पृथक् स्वस्ववृत्तिं व्यरचयतामित्यैतिहासिकाः। कथं ते उभे वृत्ती सम्मिश्रिते इति रहस्यमद्यावधि स्वोद्घाटनं प्रतीक्षते। वर्त्तमानवृत्तावादिमाः पञ्चाध्याया जयादित्यप्रणीताः, अन्त्याश्च त्रयोऽध्याया वामनप्रणीता इत्याहुः। वामनकृतिः प्रौढा इति स्पष्टं प्रतीयते। काशिकावृत्तेः प्रथमो व्याख्याता जिनेन्द्रबुद्धिर्विक्रमसंवत्सरस्य द्वादश्याः शताब्द्याः प्रारम्भे 'काशिकाविवरण-पञ्जिकां' न्यासापराभिधां सुविस्तृतां रमणीयां विवृतिं रचयामास। तस्मिन्नेव काले विद्वद्वरो हरदत्तमिश्रः प्रौढां न्यासानुवादिनीं 'पदमञ्जरीं' व्याख्यां प्रणिनाय। पाणिनीयतन्त्रं प्रविविक्षवो नैकवर्षशतैरिमां वृत्तिं व्यापकरूपेणाधिजगिरे। अत एवोत्तरवर्त्तिनां प्रायेण समेषां वैयाकरणमूर्धन्यानां प्रत्यालोचनाविषयोऽपि सुतरां समपद्यतायं ग्रन्थः। प्रत्यालो-चनायाश्च प्रयोजिका महाभाष्ये प्रामाण्यबुद्धिरासीत् प्रधानतः। कैयट-हरदत्त-भट्टोजि-दीक्षित-ज्ञानेन्द्रसरस्वती-नागेशभट्ट-दयानन्दसरस्वतीप्रभृतयः शब्दविदः स्वस्वकृतौ काशिकामतानि निराकुर्वन्।

## काशिकाया मुद्रितसंस्करणानि

सेयमतिमहत्त्वपूर्णा वृत्तिः काशिका नाम विगतशताब्द्या अन्तिमचरणं यावद् विस्मृतैवास्त। अन्ततः प्राचीनसंस्कृतनिबन्धोज्जीवनदीक्षेण काशिकराजकीयपाठशालाया अध्यक्षेण श्रीग्रिफिथमहाशयेन तस्यामेव पाठशालायां धर्मशास्त्राध्यापकः पण्डितवरो बालशास्त्री प्रवर्त्तितोऽस्याः सम्पादनकर्मणि। बालशास्त्रिणा प्रथमतोऽस्याः प्रकाशनं काशीविद्यासुधानिधिनामकपत्रिकाद्वारा व्यधायि। ततः स एव १८९८ ईस्वीयाब्दे पुस्तकाकारेण मुद्राप्य प्राकाशयत्। कृपारामशर्मा, अनन्तशास्त्री, शोभितमिश्रश्च ( १९५२ ई० ) चौखम्बा-वाराणसीतः, द्वारिकादास-कालिकाप्रसादौ ( १९६५ ई० ) तारा-यन्त्रालय-वाराणसीतः, नारायणमिश्रः ( १९६९ ई० ) चौखम्बा-वाराणसीतः, आर्येन्द्र-शर्मादयः ( १९७० ई० ) उस्मानियाविश्वविद्यालय-हैदराबादतः काशिकायाः संस्करणानि

प्राकाशयन्। उत्तरोत्तरं काशिकायाः पाठेषु संशोधितेष्वपि ग्रन्थोऽयं दोषबहुल एवास्थात्। अस्मद्-विद्यावंशे पूर्वं तावद् गुरुवराः पदवाक्यप्रमाणज्ञाः श्रीब्रह्मदत्तजिज्ञासुचरणाः संशुद्धकाशिकां प्रकाशयितुमचकमन्त, परं प्रवृत्त्यन्तरे व्यापृतत्वात् ते तथा कर्तुं नाशकन्। ततो गुरुकल्पा महामहोपाध्यायाः श्रीयुधिष्ठिरमीमांसकाश्चिरं काशिकायाः शुद्धतमं संस्करणं प्रकाशयितुकामा आसत, परं धनाभावात् तथा कर्तुं नापारयन्। स्वर्गमनात् मासेन पूर्वं ते तत्र भवन्तो लक्षरूप्योपहारात्मकेन विश्वभारतीत्याख्येन पुरस्कारेण सम्मानिता आसन् उत्तरप्रदेशसंस्कृताकादमीद्वारा। तं राशिं ते स्वार्धाङ्गिन्याः स्वर्गीयाया यशोदादेव्याः स्मृति-संरक्षणार्थं रामलालकपूरट्रस्टाख्याय न्यासाय प्रादुः, अचकमन्त च काशिकाधातुवृत्ति-प्रभृतिग्रन्थान् प्रकाशयितुमनेन राशिना। अतोऽयं विधीयते प्रयासः सश्रद्धैरस्माभिः।

## प्रस्तुतं संस्करणम्

सर्वाण्येवाद्य यावत् प्रकाशितानि काशिकासंस्करणानि नैकदोषदूषितानीति न्यवीविदाम पुरस्तात्। तत्र हैदराबादसंस्करणे पाठभेदाः संकलिताः, ग्रन्थान्तरोद्धृताः सन्दर्भाः स्थलसंकेतैर्युताः, पाठशोधप्रयासश्च बहुधा विहित इति तत् संस्करणमुपयोगितमं वर्तते। अतस्तदेवाश्रित्य वयं संस्कारान् व्यधिष्महि, बालशास्त्रि-तारायन्त्रालयसंस्करणे च तुलनार्थम् उपायुक्ष्महि। मूल्याधिक्यं मा भूद् इति समीक्ष्य ग्रन्थस्यास्य मुद्रणं पुरातनप्रणाल्या सततपाठरूपेण समचीचराम, न परिच्छेदरीत्या। अस्य संस्करणस्य विशेषा अधस्ताद् विन्यस्यन्ते—

१- अपपाठपरिमार्जनम्—मेद्यति ( १.१.३ ), पणायति ( २.३.५७ ), याज्ञवल्कानि ( ४.२.६६ ), कयाशुभीयम् ( ५.२.५९ ), चिखाद ( ६.१.५२ ) इत्यादयः परिमृष्टाः पाठाः। पादटिप्पणीषु प्रदर्शिता एषामपपाठाः।

२- मूलपाठशोधः—ऋष्यपत्यनैरन्तर्ये प्रतिषेधः ( ४.१.१०४ ), वत्सवती ( ५.२.९८ ), अनुनासिकान्तानाम् ( ६.४.३७ ), किमर्थ.....मर्थम् ( ७.३.३८ ) इत्यादयः शोधिताः पाठाः। चतुर्भ्यः ( ६.१.१७९ ) इति पदं निरस्तम्। मूलपाठास्तु पादटिप्पणीषु निर्दिष्टाः।

३- संभावितपाठपरामर्शः— अलुनात्, अजहात् ( ६.४.११२ ) इत्येवमादिषु संभावितपाठाः पादटिप्पणीषु परामृश्यन्ते।

४- उद्धृतसंदर्भाकरसंकेतशोधः— मूल उद्धृतानां सन्दर्भाणाम् आकरस्थलसंकेताः प्रदीयन्ते हैदराबादसंस्करणे। ते पुनः समीक्ष्य, बहुधा संशोध्य च न्यस्यन्तेऽत्र। क्वचित् स्वल्पभिन्नेऽप्याकरपाठे तुलनादृष्ट्या संकेताः प्रदीयन्त इत्यवधेयम्।

५- अभिनवसन्दर्भाविष्कारः— अनुप्रयोगे तु ( २.४.५२ ), पाप्मना भ्रातृव्येण ( ४.१.१४५ ), बैल्वः खादिरो वा यूपः ( ४.३.१४३ ), सममब्राह्मणे दानम् ( ५.१.४७), समापं नाम देवयजनम् ( ६.३.९७ ) इत्यादयः संदर्भा अन्वेषिताः। पाठभेदे सत्यपि क्वचित् तुलनार्थं निर्देशाः क्रियन्ते।

६- स्वराङ्कनम्—हैदराबादसंस्करणे स्वरा बहुधा अशुद्धा अङ्क्यन्ते। अस्मिन् संस्करणे स्वराः सावधानतया शोधिताः, यथासंहितं च न्यस्यन्ते।

७- व्याख्यासंवादः—न्यास-पदमञ्जरीभ्यां यथासंभवं वृत्तिपाठान् समवीवदामहि। सामान्यतो न्यास आश्रायि, छान्दसप्रसङ्गे स्वरविषये च पदमञ्जरी प्रमाणत्वेनाश्रायि।

८- त्यक्तशब्दपूर्त्तिः—उपसर्जनस्त्रीप्रत्ययान्तान्तस्य ( १.२.४८ ) इत्यत्रान्तपदम्, कम्रा युवतिः ( ३.२.१६७ ), लुब्धो व्याधः ( ५.४.१२६ ), पात्रेसमितादयश्च ( ६.२.८१), न ( ६.२.१५५ ) इत्यादीनि पदानि त्यज्यन्ते हैदराबादसंस्करणे। तानीह संस्करणे पूर्यन्ते।

९- सम्पादनदोषनिराकरणम्— हैदराबादसंस्करणे शुद्धो वापेक्षितो वा पाठो हस्तलिखितपुस्तकेषु वर्त्तमानोऽपि टिप्पण्यां प्रदर्श्यते बहुषु स्थलेषु। सोऽत्र यथास्थानं नीतः। यथा—यस्य ( ४.१.१६३ ), वर्चस्वान्.......कपालानाम् ( ४.४.१२५ ), यज्यमानः ( ६.१.१०८ ), कुमारिदा ( ६.३.६५ ) इत्यादिषु। अन्येऽपि सम्पादनदोषा यथासंभवं निराकृताः।

१०- मुद्रणदोषपरिहारः— हैदराबादसंस्करणेऽगणिता मुद्रणदोषाः समजायन्त। ते सर्वेऽत्र परिहृताः। यथा—अकार्षीत् = अकार्क्षीत् ( ३.१.४४ ), गार्गस्य = गार्ग्यस्य ( २.४.६४ ), गुरुकार्येष्व्हितः=गुरुकार्येष्ववहितः ( ४.४.६२ ) इत्येवमादयः।

११- अप्रासङ्गिकानन्वितपाठनिरासः— यदूरीकरोति ( २.२.१८ ) इति समास-प्रकरणेऽप्रासङ्गिकम्। एवंविधाः पाठा निरस्ताः, टिप्पणीषु निर्दिष्टाश्च।

१२- अनावश्यकसन्दर्भस्रोतोनिरासः—हैदराबादसंस्करणे बहुत्र स्थलेषु सन्दर्भ-स्रोतोनिर्देशः कृतोऽप्यत्र निरस्यतेऽनावश्यकत्वात्। यथा—क्रौञ्चं साम, वैश्वामित्रम् ( ४.२.७ ), पित्र्यम् ( ४.२.३१ ), सावित्रम् ( ४.३.७८ ) इत्यादिषु स्रोतोऽन्वेषणस्य प्रयोजनं मृग्यम्।

१३- अत्यावश्यकपाठभेदप्रदर्शनम्—अस्मिन् संस्करणे सर्वे पाठभेदा नोल्लिख्यन्ते। अत्यावश्यकास्तु निर्दिश्यन्त एव टिप्पणीषु।

१४- अभिप्रायाविष्कारः—मूलपाठाभिप्रायः केषुचित् सांशयिकेषु स्थलेषु स्पष्टीक्रियते।

१५- वार्त्तिकगणसूत्रनिर्देशः—अस्मिन् संस्करणे वार्त्तिकपाठो भिन्नमुद्रणाक्षरैर्निर्दिश्यते। वार्त्तिकसंख्यात्र त्यज्यते द्विस्त्रिर्वावृत्तत्वात्। गणसूत्राणां संख्या प्रदर्श्यते हैदराबादसंस्करणोपात्तसंख्यां संशोध्य।

१६- सूत्रवार्त्तिकानुक्रमसूची— काशिकास्थानां सूत्राणां वार्त्तिकानां चाकारादिक्रमेण सूचीद्वयं ग्रन्थान्ते संयोज्यते।

## कृतज्ञताप्रकाशः

स्वर्गीया महामहोपाध्यायाः श्रीयुधिष्ठिरमीमांसकाः स्वनिधनात् प्राक् काशिकादिप्रकाशनकार्यं मयि न्यस्यन्त। तदिदं तेषां शुभाशंसनेन यथामति यथाशक्ति च सम्पाद्यानृणोऽहमित्यनुभवामि। श्रीरामलालकपूरट्रस्टाधिकारिणः प्रति कृतज्ञतां ज्ञापयामि, ये सर्वकार्येषु सर्वथा स्वातन्त्र्यं प्रदाय सततं प्रोत्साहयन्ति माम्। मदीया अन्तेवासिनो ब्रह्मचारिणः प्रदीप—देवदत्त—पाण्डुरङ्ग—धर्मेश—वेदमुनि—हरिप्रसाद—नरेश—निरञ्जना आयुष्मन्त अनूचाना भूयासुरिति हार्दिकशुभाशीर्वचोभिः समर्धयामि। सर्वैरेतैर्मे साहाय्यं चेद् न व्यधायिष्यत, तर्हि मय्येतद् गुरुकार्यमस्मिन् रूपे न समपादयिष्यत। तत्रापि ब्र० धर्मेशो विशिष्टोल्लेखमर्हति, यः श्रद्धाविनयसम्पन्नः सम्पूर्णां मुद्रणप्रतिकां सुपठैः सुन्दराक्षरैरलेखीत्, ततश्च सर्वाणि मुद्रणपत्राणि सुतरां निरैक्षिष्ट। वस्तुतस्त्वेतत् कार्यमेतैरेवायुष्मद्भिः समपादि, अहं त्वत्र निमित्तमात्रमेवात्मानं मन्ये। स्वसहयोगिनः श्रीजीवनरामस्य हार्दिकमाभारमनुभवामि, यः स्वशारीरमायासमविगणय्यासेवया दिल्लीगमनागमनमकार्षीद् एतद्ग्रन्थमुद्रणमभिलक्ष्य। कम्प्यूटरविन्यासकृत् श्रीसतीशः (आर्ष प्रकाशन, नई दिल्ली) हार्दिकधन्यवादान् अर्हति, यस्य सहयोगादृते ग्रन्थरत्नमिदमेतादृशमुत्कृष्टं रूपं नावाप्स्यत्। सर्वथा सावधानतया कृते प्रयासेऽपि, अल्पज्ञत्वात् प्रमादाद् वा येऽत्र दोषाः स्युः, तान् क्षाम्यन्तु गुणग्राहिणो विपश्चित इति विनिवेद्य विरमत्येषः—

बहालगढ़ | विदुषां विधेयः
३.६.१९९६ | विजयपालो विद्यावारिधिः

# संक्षेपाणां विवरणम्

## संहितानाम्

| | | | |
|---|---|---|---|
| उत्तरा० | उत्तरार्चिकम् (कौथुमसंहितायाः) | स्वाध्यायमण्डलम् | १९५६ ई० |
| ऋ० | ऋग्वेदः (शाकलसंहिता) | " | १९४० ई० |
| कपि०कठ सं० | कपिष्ठलकठसंहिता | मेहरचन्द लछमनदास, दिल्ली | १९६८ ई० |
| काठ० सं० | काठकसंहिता | स्वाध्यायमण्डलम् | १९४३ ई० |
| कौ० सं० | कौथुमसंहिता | " | १९५६ ई० |
| खि० | ऋग्वेदखिलानि | (सं० शेफ़्तेलविज़) ब्रेस्लान | १९०६ ई० |
| जै० सं० | जैमिनीयसंहिता | सरस्वतीविहार, लाहौर | १९३८ ई० |
| तै० सं० | तैत्तिरीयसंहिता | स्वाध्यायमण्डलम् | १९५७ ई० |
| पै० सं० | पैप्पलादसंहिता | सरस्वतीविहार, लाहौर | १९४१ ई० |
| मा० सं० | माध्यन्दिनसंहिता | स्वाध्यायमण्डलम् | २००३ वि० |
| मै० सं० | मैत्रायणीसंहिता | " | १९९८ वि० |
| शौ० सं० | शौनकीयसंहिता | " | १९४३ ई० |

## ब्राह्मणानाम्

| | | | |
|---|---|---|---|
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् | सं० मार्टिन हॉग, मुम्बई | १८६३ ई० |
| गो० ब्रा० | गोपथब्राह्मणम् | सावित्रीदेवी बागड़िया ट्रस्ट, कलकत्ता | १९८० ई० |
| जै० ब्रा० | जैमिनीयब्राह्मणम् | सरस्वतीविहार, नागपुरम् | १९५४ ई० |
| ता० ब्रा० | ताण्ड्यमहाब्राह्मणम् | चौखम्बा संस्कृत सीरीज़, बनारस | १९९१ वि० |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् | आनन्दाश्रम, पूना | १९३४ ई० |
| वं० ब्रा० | वंशब्राह्मणम् | केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति | १९६५ ई० |
| श० ब्रा० | शतपथब्राह्मणम् | अच्युतग्रन्थमाला, काशी | १९९४ वि० |
| शा० ब्रा० | शाङ्खायनब्राह्मणम् | आनन्दाश्रम, पुण्यपत्तन | १९११ ई० |
| ष० वि० | षड्विंशब्राह्मणम् | केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति | १९६७ ई० |

## आरण्यकयोः

| | | | |
|---|---|---|---|
| तै० आ० | तैत्तिरीयारण्यकम् | आनन्दाश्रम, पूना | १८९८ ई० |
| शा० आ० | शाङ्खायनारण्यकम् | " | १९२२ ई० |

## उपनिषदोः

| | | | |
|---|---|---|---|
| छा० उ० | छान्दोग्योपनिषत् | वैदिकसंशोधनमण्डलम् , पूना | १९५८ ई० |
| मै० उ० | मैत्रायण्युपनिषत् | " | १९५८ ई० |

## स्मृतेः

| | | | |
|---|---|---|---|
| मनु० | मनुस्मृतिः | गुजराती प्रिंटिंग प्रैस, बम्बई | १९१३ ई० |

## शिक्षायाः

| | | | |
|---|---|---|---|
| पा० श्लो० शि० | पाणिनीयश्लोकात्मक-शिक्षा | शिक्षासंग्रहः, संपूर्णानन्द सं० वि०, वाराणसी | १९८९ ई० |

## कल्पसूत्राणाम्

| | | | |
|---|---|---|---|
| आ० गृ० | आश्वलायनगृह्यसूत्रम् | ज्येष्ठराम मुकुन्द जी पुस्तकालय, मुम्बई | १९०९ ई० |
| आ० श्रौ० | आश्वलायनश्रौतसूत्रम् | आनन्दाश्रम, पूना | १९१७ ई० |
| आप० गृ० | आपस्तम्बगृह्यसूत्रम् | चौखम्बा संस्कृत सीरीज, बनारस | १९२८ ई० |
| आप० ध० | आपस्तम्बधर्मसूत्रम् | भण्डारकर प्राच्यविद्या प्रतिष्ठान, पूना | १९३२ ई० |
| आप० श्रौ० | आपस्तम्बश्रौतसूत्रम् | मुन्शीराम मनोहरलाल, दिल्ली | १९८३ ई० |
| का० श्रौ० | कात्यायनश्रौतसूत्रम् | अच्युतग्रन्थमाला, काशी | १९८७ वि० |
| कौ० गृ० / कौ० सू० | कौशिकगृह्यसूत्रम् | अमेरिकन ओरियन्टल सोसायटी | १८८९ ई० |
| पार० गृ० | पारस्करगृह्यसूत्रम् | वैङ्कटेश्वर, बम्बई | १९८६ वि० |
| मा० गृ० | मानवगृह्यसूत्रम् | वेदप्रकाश यन्त्रालय, इटावा | १९०५ ई० |
| मा० श्रौ० | मानवश्रौतसूत्रम् | इन्टरनेशनल अकादमी, नई दिल्ली | १९६१ ई० |

| | | | |
|---|---|---|---|
| लौ० गृ० | लौगाक्षिगृह्यसूत्रम् | निर्णयसागर प्रैस, मुम्बई | १९२८ ई० |
| वा० गृ० | वासिष्ठगृह्यसूत्रम् | | |
| वै० श्रौ० | वैखानसश्रौतसूत्रम् | रायल एशियाटिक सोसायटी, कलकत्ता | १९४१ ई० |
| शा० श्रौ० | शाङ्खायनश्रौतसूत्रम् | मेहरचन्द लछमनदास, दिल्ली | १९८१ ई० |

## व्याकरणस्य

| | | | |
|---|---|---|---|
| अदा० | अदादिर्गणः (पाणिनीय-धातुपाठस्थः) | रामलालकपूर ट्रस्ट, बहालगढ़ | १९६९ ई० |
| का० | काशिका | | |
| क्र्या० | क्र्यादिर्गणः (पाणिनीय-धातुपाठस्थः) | " " | " " |
| क्षीर० | क्षीरतरङ्गिणी | " " | २०४२ वि० |
| ग० सू० | गणसूत्रम् | | |
| चु० | चुरादिर्गणः (पाणिनीय-धातुपाठस्थः) | " " | १९६९ ई० |
| जु० | जुहोत्यादिर्गणः ( " ) | " " | " " |
| तना० | तनादिर्गणः ( " ) | " " | " " |
| तारा० | तारायन्त्रालयसंस्करणम् (काशिकायाः) | प्राच्यभारती प्रकाशन, वाराणसी | १९६५ ई० |
| तुदा० | तुदादिर्गणः (पाणिनीय-धातुपाठस्थः) | रामलालकपूर ट्रस्ट, बहालगढ़ | १९६९ ई० |
| द० उ० | दशपाद्युणादिसूत्रम् | " " | १९८७ ई० |
| दिवा० | दिवादिर्गणः (पाणिनीय-धातुपाठस्थः) | " " | १९६९ ई० |
| न्या० | न्यासः | प्राच्यभारती प्रकाशन, वाराणसी | १९६५ ई० |
| प० उ० | पञ्चपाद्युणादिसूत्रम् | सावित्रीदेवी बागड़िया ट्रस्ट, कलकत्ता | १९८७ ई० |
| पद० | पदमञ्जरी | प्राच्यभारती प्रकाशन, वाराणसी | १९६५ ई० |

| | | | |
|---|---|---|---|
| परि० | परिभाषा (परिभाषेन्दु-शेखरस्था) | परिभाषासंग्रहः, भण्डारकर प्राच्य विद्या प्रतिष्ठान, पूना | १९६७ ई० |
| पु० वृ० | पुरुषोत्तमदेवीयपरि-भाषावृत्तिः | परिभाषासंग्रहः, भण्डारकर प्राच्य विद्या प्रतिष्ठान, पूना | १९६७ ई० |
| फिट् | फिट्सूत्रम् | पूनाविश्वविद्यालय | १९६७ ई० |
| बाल० | बालशास्त्रिसंस्करणम् (काशिकायाः) | बनारस | १८९८ ई० |
| भ्वा० | भ्वादिर्गणः (पाणिनीय-धातुपाठस्थः) | रामलालकपूर ट्रस्ट, बहालगढ़ | १९६९ ई० |
| महाभाष्य | व्याकरणमहाभाष्यम् | एफ. कीलहॉर्न (भागपृष्ठाङ्कानां निर्देशः) | १९०६ ई० |
| रुधा० | रुधादिर्गणः (पाणिनीय-धातुपाठस्थः ) | रामलालकपूर ट्रस्ट, बहालगढ़ | १९६९ ई० |
| वा० | वार्त्तिकम् (काशिकास्थम्) | | |
| व्या० प० | व्याडीयपरिभाषा | परिभाषासंग्रहः, भण्डारकर प्राच्य विद्या प्रतिष्ठान, पूना | १९६७ ई० |
| सीर० प० | सीरदेवीयपरिभाषा | " " | " " |
| स्वा० | स्वादिर्गणः (पाणिनीय-धातुपाठस्थः) | रामलालकपूर ट्रस्ट, बहालगढ़ | १९६९ ई० |
| है० | हैदराबादसंस्करणम् (काशिकायाः) | उस्मानियाविश्वविद्यालय, हैदराबाद | १९६९ ई० |

## निरुक्तस्य

| | | | |
|---|---|---|---|
| निरु० | निरुक्तम् (यास्कीयम्) | मोतीलाल बनारसीदास, नई दिल्ली | १९६७ ई० |

## दर्शनस्य

| | | | |
|---|---|---|---|
| जै० सू० | जैमिनीयमीमांसासूत्रम् (शाबरभाष्यम्) | रामलाल कपूर ट्रस्ट, बहालगढ़ | १९८७ ई० |

## आयुर्वेदस्य

| | | | |
|---|---|---|---|
| चि० | चिकित्सास्थानम्(चरकस्य) | आर्य साहित्य मण्डल, अजमेर | १९९२ वि० |
| सूत्र० | सूत्रस्थानम् ( " ) | " " | " " |

## काव्यस्य

| | | | |
|---|---|---|---|
| कि० | किरातार्जुनीयम् | निर्णयसागर प्रैस, मुम्बई | १९०७ ई० |
| महाभारतम् | | भण्डारकर प्राच्य विद्या प्रतिष्ठान, पूना | १९३३ ई० |
| युद्ध० | युद्धकाण्डम् (वाल्मीकि-रामायणस्थम् ) | नारायणस्वाम्यार्यः, मद्रास | " " |
| वा० रा० | वाल्मीकिरामायणम् | " " | " " |

## अवशिष्टानाम्

| | |
|---|---|
| तु० | तुलना विधेया |
| द्र० | द्रष्टव्यम् |
| सू० | सूत्रम् |

## स्वराङ्कन-विवरणम्

१. शाकल (ऋग्वेद)-माध्यन्दिन-तैत्तिरीय-शौनकीयसंहितासु उदात्तोऽनङ्कितः, अनुदात्तोऽधोरेखया, स्वरित ऊर्ध्वरेखया—यथा—अ॒ग्निमी॑ळे।

२. माध्यन्दिन-तैत्तिरीयसंहितयोः स्वरितविशेषः—अधोवक्ररेखया, अधस्त्रिशूलाकृत्या च—यथा—वी॒र्या॑णि, उ॒र्व॒न्तरि॑क्षम्।

३. काठक-मैत्रायणीसंहितयोः—उदात्त ऊर्ध्वरेखया, स्वरितोऽधोवक्ररेखया—यथा—इ॒षे॑ त्वा॒। अनुदात्तैकश्रुतिपरः स्वरितोऽधश्चापाकृत्या —यथा—मि॒त्रोऽसि॒, शि॒क्युं भवति॒।

४. कौथुमसंहितायाम्—सामान्यत उदात्त-अनुदात्त-स्वरिता यथासंख्यम् उपरिष्टाद् १,२,३ संख्याभिः। यथा— अ॒ग्न आ या॒हि।

५. शतपथब्राह्मणे—उदात्तोऽधोरेखया।

व्यावहारिकमात्रोऽयं निर्देशोऽपवादबहुलः।

# ॥ काशिका ॥

वृत्तौ भाष्ये तथा धातुनामपारायणादिषु ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसंग्रहः ॥ १ ॥
इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥ २ ॥
व्याकरणस्य शरीरं परिनिष्ठितशास्त्रकार्यम्[1] एतावत् ।
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण ॥ ३ ॥

## ॥ अथ शब्दानुशासनम् ॥

केषां शब्दानाम्? लौकिकानां वैदिकानां च । कथमनुशासनम्? प्रकृत्यादिविभाग-कल्पनया सामान्यविशेषवता लक्षणेन । अथ किमर्थो वर्णानामुपदेशः? प्रत्याहारार्थः। प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थः ॥

### अइउण् ॥ १ ॥

अ इ उ इत्यनेन क्रमेण वर्णानुपदिश्यान्ते णकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन 'उरण् रपरः' ( १.१.५१ ) इत्यकारेण । ह्रस्वमवर्णं प्रयोगे संवृतम्। दीर्घप्लुतयोस्तु विवृतत्वम् । तेषां सावर्ण्यप्रसिद्ध्यर्थमकार इह शास्त्रे विवृतः प्रतिज्ञायते। तस्य प्रयोगार्थम् 'अ अ' ( ८.४.६८ ) इति शास्त्रान्ते प्रत्यापत्तिः करिष्यते ॥

### ऋऌक् ॥ २ ॥

ऋ ऌ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ककारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभिः। 'अकः सवर्णे दीर्घः' ( ६.१.१०१ ) इत्यकारेण । 'इको गुणवृद्धी' ( १.१.३ ) इतीकारेण । 'उगितश्च' ( ४.१.६ ) इत्युकारेण । अकारादयो वर्णाः प्रचुर-प्रयोगविषयास्तेषां सुज्ञानमुपदेशे प्रयोजनम् । ऌकारस्तु क्ऌपिस्थ एव प्रयुज्यते क्ऌपेश्च 'पूर्वत्रासिद्धम्' ( ८.२.१ ) इति लत्वमसिद्धम् । तस्यासिद्धत्वाद् ऋकार एव अच्कार्याणि भविष्यन्तीति किमर्थम् ऌकार उपदिश्यते ? लत्वविधानाद् यानि पराण्यच्कार्याणि तानि ऌकारे यथा स्युरिति। कानि पुनस्तानि ? प्लुतः स्वरितो द्विर्वचनम्। क्ऌ३प्तशिख। प्रक्लृप्तः । क्लृप्तः। क्लृप्तवान् इति। यच्चाशक्तिजमसाधुशब्दरूपं तदनुकरणस्यापि साधुत्वमिष्यते। तत्स्थस्यापि ऌकारस्याच्कार्यप्रतिपत्त्यर्थम् ऌकारोपदेशः क्रियते । ऋतक

---

१ – '० कृत्यम् ' इति पद० ।

इति प्रयोक्तव्ये शक्तिवैकल्यात् कुमारी लृतक इति प्रयुङ्क्ते। तदन्योऽनुकरोति कुमार्यॢतक इत्याहेति ॥

## एओङ् ॥ ३ ॥

ए ओ इत्येतौ वर्णावुपदिश्यान्ते ङकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन । 'एङि पररूपम्' ( ६.१.९४ ) इत्येकारेण ॥

## ऐऔच् ॥ ४ ॥

ऐ औ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते चकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति चतुर्भिः। 'अचः परस्मिन् पूर्वविधौ' ( १.१.५७ ) इत्यकारेण। 'इच एकाचोऽम्प्रत्ययवच्च' ( ६.३.६८ ) इति इकारेण। 'एचोऽयवायावः' ( ६.१.७८ ) इति एकारेण। 'वृद्धिरादैच्' ( १.१.१ ) इति ऐकारेण।

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न।
आचारादप्रधानत्वाल्लोपश्च बलवत्तरः॥

वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति, तच्छायानुकारिणो हि ते न पुनस्त एव। पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्त्याचार्याः। नुड्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम्। नुड्विधौ ( ७.४.७१ ) ऋकारग्रहणम्—आनृधतुः, आनृधुः। लादेशे ( ८.२.१८ ) ऋकारग्रहणम्—क्लृप्तः। क्लृप्तवान्। विनामे ( ८.४.१ ) ऋकारग्रहणम्—कर्तृणाम् ॥

## हयवरट् ॥ ५ ॥

ह य व र इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते टकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन। 'शश्छोऽटि' ( ८.४.६३ ) इत्यकारेण। अयं रेफो यकारात् पर उपदिश्यते। तस्य यर्ग्रहणेन ययग्रहणेन च ग्रहणे सति स्वर्नयति, प्रातर्नयतीत्यत्र 'यरोऽनुनासिकेऽनुनासिको वा' ( ८.४.४५ ) इति अनुनासिकः प्राप्नोति। मद्रह्रदो भद्रह्रद इत्यत्र द्विर्वचनं प्राप्नोति 'अचो रहाभ्यां द्वे' ( ८.४.४६ ) इति। कुण्डं रथेन, वनं रथेनेत्यत्र 'अनुस्वारस्य ययि परसवर्णः' ( ८.४.५८ )[1] इति परसवर्णः प्राप्नोति। नैष दोषः। आकृतौ पदार्थे समुदाये सकृल्लक्ष्ये लक्षणं प्रवर्तत इत्येतस्मिन् दर्शने यरोऽनुनासिकेऽनुनासिको वान्तरतमो भवतीत्येवमेतत् प्रवर्तते। तदनेन गकारादीनां ङकारादयो ये यथास्वं स्थानतो गुणतश्चान्तरतमास्ते सर्वे विहिताः। ये तु न स्थानतो नापि गुणतः,

---

१ - "वा पदान्तस्य" ( ८.४.५९ ) इत्यभिप्रायः।







स्थानमात्रेण गुणमात्रेण वान्तरतमास्ते सर्वे निवर्तिता इति स्थानमात्रान्तरतमो रेफस्य णकारो न भवति। द्विर्वचनेऽपि रेफस्य यरन्तर्भावे सति यर्कार्यं प्राप्तम्, तत् साक्षाच्छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफः। 'अनुस्वारस्य ययि परसवर्णः' ( ८.४.५८ ) इत्येतदप्यनुस्वारान्तरतमं सकृदेव परसवर्णं विदधाति। न च रेफस्यानुस्वारान्तरतमः सवर्णोऽस्तीति न भविष्यति कुण्डं रथेन वनं रथेनेत्यत्र। अटां मध्ये विसर्जनीयजिह्वामूलीयोपध्मानीयानामप्युपदेशः कर्तव्यः। किं प्रयोजनम्? उरᳵकेण, उरःकेण। उरᳶपेण, उरःपेण। अत्राड्व्यवाये ( ८.४.२ ) इति णत्वं यथा स्यादिति॥

## लण् ॥ ६ ॥

ल इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते णकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति त्रिभिः। 'अणुदित्सवर्णस्य चाप्रत्ययः' ( १.१.६९ ) इत्यकारेण। 'इण्कोः' ( ८.३.५७ ) इतीकारेण। 'इको यणचि' ( ६.१.७७ ) इति यकारेण। इण्ग्रहणानि सर्वाणि परेण णकारेण, अण्ग्रहणानि तु पूर्वेण। 'अणुदित्सवर्णस्य चाप्रत्ययः' ( १.१.६९ ) इत्येकम् अनेन[2]। अथ किमर्थमज्ग्रहणमेवैतन्न क्रियते? नैवं शक्यम्। अन्तःस्थानामपि हि सवर्णानां ग्रहणमिष्यते। सँय्यँन्ता, सँव्वँत्सरः, यँल्लँलोकम्, तँल्लँलोकमित्यत्रानुस्वारस्यानुनासिके ययि परसवर्णे ( ८.४.५८ ) कृते तस्य यर्ग्रहणेन ग्रहणाद् द्विर्वचनं ( ८.४.४७ ) यथा स्यादिति। हकारादिष्वकार उच्चारणार्थो नानुबन्धः[3]। लकारे त्वनुनासिकः प्रतिज्ञायते। तेन 'उरण् रपरः' ( १.१.५१ ) इत्यत्र र इति प्रत्याहारग्रहणाल्लपरत्वमपि भवति॥

## ञमङणनम् ॥ ७ ॥

ञ म ङ ण न इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते मकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति त्रिभिः। 'पुमः खय्यम्परे' ( ८.३.६ ) इत्यकारेण। 'हलो यमां यमि लोपः' ( ८.४.६४ ) इति यकारेण। 'ङमो ह्रस्वादचि ङमुण् नित्यम्' ( ८.३.३२ ) इति ङकारेण। 'ञमन्ताड्डः' ( प० उ० १.११४ ) इति ञकारेणापि ग्रहणमस्य दृश्यते। केचित्तु सर्वाण्येतानि प्रत्याहारग्रहणानि ञकारेण भवन्त्विति मकारमनुबन्धं प्रत्याचक्षते। तथा च सति 'ङमो ह्रस्वादचि ङमुण् नित्यम्' ( ८.३.३२ ) इत्यत्रागमिनोर्झभोरभावादागमाभावप्रतिपत्तौ प्रतिपत्तिगौरवं भवति॥

---

१ - 'यत्कार्यत्वम्' इति बाल०। २ - 'परेण' इति पद०। ३ - 'नेत्संज्ञकः' इति न्या०।

## झभञ् ॥ ८ ॥

झ भ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ञकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन, 'अतो दीर्घो यञि' ( ७.३.१०१ ) इति यकारेण॥

## घढधष् ॥ ९ ॥

घ ढ ध इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते षकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति द्वाभ्याम्। 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' ( ८.२.३७ ) इति भकारझकाराभ्याम्॥

## जबगडदश् ॥ १० ॥

ज ब ग ड द इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते शकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति षड्भिः। 'भोभगोअघोअपूर्वस्य योऽशि' ( ८.३.१७ ) इति अकारेण। 'हशि च' ( ६.१.११४ ) इति हकारेण। 'नेड् वशि कृति' ( ७.२.८ ) इति वकारेण। 'झलां जश् झशि' ( ८.४.५३ ) इति जकारझकाराभ्याम्। 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' ( ८.२.३७ ) इति बकारेण॥

## खफछठथचटतव् ॥ ११ ॥

ख फ छ ठ थ च ट त इत्येतान् वर्णानुपदिश्यान्ते वकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन 'नश्छव्यप्रशान्' ( ८.३.७ ) इति छकारेण। खफग्रहणमुत्तरार्थम्॥

## कपय् ॥ १२ ॥

क प इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते यकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति चतुर्भिः। 'अनुस्वारस्य ययि परसवर्णः' ( ८.४.५८ ) इति यकारेण। 'मय उञो वो वा' ( ८.३.३३ ) इति मकारेण। 'झयो होऽन्यतरस्याम्' ( ८.४.६२ ) इति झकारेण। 'पुमः खय्यम्परे' ( ८.३.६ ) इति खकारेण॥

## शषसर् ॥ १३ ॥

श ष स इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते रेफमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति पञ्चभिः। 'यरोऽनुनासिकेऽनुनासिको वा' ( ८.४.४५ ) इति यकारेण। 'झरो झरि सवर्णे' ( ८.४.६५ ) इति झकारेण। 'खरि च' ( ८.४.५५ ) इति खकारेण। 'अभ्यासे चर्च' ( ८.४.५४ ) इति चकारेण। 'शर्पूर्वाः खयः' ( ७.४.६१ ) इति शकारेण॥

## हल् ॥ १४ ॥

ह इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते लकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति षड्भिः। 'अलोऽन्त्यात् पूर्व उपधा' ( १.१.६५ ) इति अकारेण। 'हलोऽनन्तराः संयोगः' ( १.१.७ ) इति हकारेण। 'लोपो व्योर्वलि' ( ६.१.६६ ) इति वकारेण। 'रलो व्युपधाद्धलादेः संश्च' ( १.२.२६ ) इति रेफेण। 'झलो झलि' ( ८.२.२६ ) इति झकारेण। 'शल इगुपधादनिटः क्सः' ( ३.१.४५ ) इति शकारेण। अथ किमर्थमुपदिष्टोऽपि हकारः पुनरुपदिश्यते ? कित्त्वविकल्पक्सेड्विधयो यथा स्युरिति। स्निहित्वा स्नेहित्वेत्यत्र 'रलो व्युपधाद्धलादेः संश्च' ( १.२.२६ ) इति कित्त्वं वा यथा स्यात्। लिहेरलिक्षदिति 'शल इगुपधादनिटः क्सः' ( ३.१.४५ ) इति क्सो यथा स्यात्। रुदिहि स्वपिहीति वलादिलक्षण इड् ( ७.२.७६ ) यथा स्यात्। अदाग्धाम्। झल्ग्रहणेषु ( ८.२.२६ ) च हकारस्य ग्रहणं यथा स्यात्। यद्येवं हयवरडित्यत्र तर्हि किमर्थमुपदिश्यते? महाँ हि सः, देवा हसन्तीत्यत्राड्ग्रहणेषु ( ८.३.३ ) चाश्ग्रहणेषु ( ८.३.२२ ) च हकारस्य[1] ग्रहणं यथा स्यात्[2]। ब्राह्मणो हसति—'हशि च' ( ६.१.११४ ) इति उत्वं यथा स्यात्।

एकस्मान् ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः॥ इति ॥

## ॥ इति प्रत्याहारप्रकरणम् ॥

# ॥ अथ प्रथमाध्यायस्य प्रथमः पादः ॥

## वृद्धिरादैच् ॥ १ ॥

वृद्धिशब्दः संज्ञात्वेन विधीयते प्रत्येकमादैचां वर्णानां सामान्येन तद्भावितानामतद्भावितानां च। तपरकरणमैजर्थं तादपि परस्तपर इति, खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तये। आश्वलायनः। ऐतिकायनः। औपगवः। औपमन्यवः। शालीयः। मालीयः। वृद्धिप्रदेशाः— 'सिचि वृद्धिः परस्मैपदेषु' ( ७.२.१ ) इत्येवमादयः॥

## अदेङ् गुणः ॥ २ ॥

गुणशब्दः संज्ञात्वेन विधीयते प्रत्येकमदेङां वर्णानां सामान्येन तद्भावितानामतद्भावितानां च। तपरकरणं त्विह सर्वार्थम्। तरिता। चेता। स्तोता। पचन्ति। यजन्ति। अहं

---

१ - ' हकारस्य ' इति नास्ति बाल०, तारा० ।

२ - ' हशि चेति हकारस्य ग्रहणं यथा स्यात् ' इत्यधिकं बाल०, तारा० ।

पचे। गुणप्रदेशाः—'मिदेर्गुणः' (७.३.८२) इत्येवमादयः॥

## इको गुणवृद्धी ॥ ३ ॥

परिभाषेयं स्थानिनियमार्था। अनियमप्रसङ्गे नियमो विधीयते। वृद्धिगुणौ स्वसंज्ञया शिष्यमाणाविक एव स्थाने वेदितव्यौ[1]। वक्ष्यति—'सार्वधातुकार्धधातुकयोः' (७.३.८४) अङ्गस्य गुण इति। स इक एव स्थाने वेदितव्यः। तरति। नयति। भवति। वृद्धिः खल्वपि—अकार्षीत्। अहार्षीत्। अचैषीत्। अनैषीत्। अलावीत्। अस्तावीत्। यत्र[2] गुणवृद्धी स्वसंज्ञया विधीयेते तत्र इक इति एतदुपस्थितं द्रष्टव्यम्। किं कृतं भवति? द्वितीया षष्ठी प्रादुर्भाव्यते। मिदिमृजिपुगन्तलघूपधच्छिर्दृशिक्षिप्रक्षुद्रेष्वङ्गेनेग् विशेष्यते। जुसि सार्वधातुकादिगुणेष्विकाङ्गं विशेष्यते। मेद्यति[3]। अबिभयुः। इक इति किम्? आत्सन्ध्यक्षरव्यञ्जनानां मा भूत्—यानम्। ग्लायति। उम्भिता। पुनर्गुणवृद्धिग्रहणं स्वसंज्ञया विधाने नियमार्थम्। इह मा भूत्—द्यौः। पन्थाः। सः। इममिति॥

## न धातुलोप आर्धधातुके ॥ ४ ॥

धात्वेकदेशो धातुः, तस्य लोपो यस्मिन्नार्धधातुके तदार्धधातुकं धातुलोपम्, तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः। लोलुवः। पोपुवः। मरीमृजः। लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि (३.१.१३४) विहिते 'यङोऽचि च' (२.४.७४) इति यङो लुकि कृते तमेवाचमाश्रित्य ये गुणवृद्धी प्राप्ते तयोः प्रतिषेधः। धातुग्रहणं किम्? लूञ्—लविता। रेड॑सि (मा० सं० ६.१८)। पर्णं नयेः[4]। अनुबन्धप्रत्ययलोपे मा भूत्। रिषेर्हिंसार्थस्य विच्प्रत्ययलोप उदाहरणं रेडिति। आर्धधातुक इति किम्? त्रिधा॑ ब॒द्धो वृ॑ष॒भो रो॑रवीति (ऋ० ४.५८.३)। सार्वधातुके मा भूत्। इक इत्येव—अभाजि। रागः। बहुव्रीहिसमाश्रयणं किम्? क्नोपयति। प्रेद्धम्॥

## क्ङिति च ॥ ५ ॥

निमित्तसप्तम्येषा। क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः। चितः। चितवान्। स्तुतः। स्तुतवान्। भिन्नः। भिन्नवान्। मृष्टः। मृष्टवान्। ङिति खल्वपि—चिनुतः, चिन्वन्ति। मृष्टः, मृजन्ति। गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते। 'ग्लाजिस्थश्च क्स्नुः' (३.२.१३९)—जिष्णुः। भूष्णुः। इक इत्येव—कामयते। लैगवायनः। मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते। संक्रमो नाम गुणवृद्धिप्रतिषेधविषयः। परिमृजन्ति,

---

१ - 'भवत इति वेदितव्यम्' इति पाठान्तरम्।  २ - 'यत्र' इति न सार्वत्रिकः।
३ - 'मेद्यते' इति प्रायिकोऽपपाठः।  ४ - 'पु॒र्णं न वेः' (ऋ० ४.४०.३) इति है० शोधितः पाठः। सोऽपि सन्दिग्धः।

परिमार्जन्ति। परिमृजन्तु, परिमार्जन्तु। लघूपधगुणस्याप्यत्र प्रतिषेधः। अचिनवमसुनवमित्यादौ लकारस्य सत्यपि ङित्त्वे यासुटो ङिद्वचनं ज्ञापकं ङिति यत् कार्यं तल्लकारे ङिति न भवतीति॥

## दीधीवेवीटाम् ॥ ६ ॥

दीधीवेव्योरिटश्च ये गुणवृद्धी प्राप्नुतस्ते न भवतः। आदीध्यनम्। आदीध्यकः। आवेव्यनम्। आवेव्यकः। इटः खल्वपि—कणिता श्वः, रणिता श्वः। वृद्धिरिटो न संभवतीति लघूपधगुणस्यात्र प्रतिषेधः॥

## हलोऽनन्तराः संयोगः ॥ ७ ॥

भिन्नजातीयैरज्भिरव्यवहिताः श्लिष्टोच्चारिता हलः संयोगसंज्ञा भवन्ति। समुदायः संज्ञी। जातौ चेदं बहुवचनम्, तेन द्वयोर्बहूनां च संयोगसंज्ञा सिद्धा भवति। अग्निरिति गनौ। अश्व इति शवौ। कर्ण इति रणौ। इन्द्रश्चन्द्रो मन्द्र इति नदराः। उष्ट्रो राष्ट्रं भ्राष्ट्रमिति षटराः। तिलानूस्त्र्यावपतीति नसतरयाः, नतसतरया वा। हल इति किम्? तितउच्छत्रम्। 'संयोगान्तस्य लोपः' (८.२.२३) इति लोपः स्यात्। अनन्तरा इति किम्? पचति। पनसम्। 'स्कोः संयोगाद्योः०' (८.२.२९) इति लोपः स्यात्। संयोगप्रदेशाः—'संयोगान्तस्य लोपः' (८.२.२३) इत्येवमादयः॥

## मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥

मुखसहिता नासिका मुखनासिका, तया य उच्चार्यते वर्णः सोऽनुनासिकसंज्ञो भवति। 'आङोऽनुनासिकश्छन्दसि' (६.१.१२६)—अभ्र आँ अपः (ऋ० ५.४८.१)। गभीर आँ उग्रपुत्रे (ऋ० ८.६७.११)। च न आँ इन्द्रः[१]। मुखग्रहणं किम्? अनुस्वारस्यैव हि स्यात्। नासिकाग्रहणं किम्? कचटतपानां मा भूत्। अनुनासिकप्रदेशाः—'आङोऽनुनासिकश्छन्दसि' (६.१.१२६) इत्येवमादयः॥

## तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥

तुल्यशब्दः सदृशपर्यायः। आस्ये भवमास्यम्, ताल्वादिस्थानम्। प्रयतनं प्रयत्नः स्पृष्टतादिर्वर्णगुणः। तुल्य आस्ये प्रयत्नो यस्य वर्णस्य येन वर्णेन सह स समानजातीयं प्रति सवर्णसंज्ञो भवति। चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायामाश्रीयन्ते। स्पृष्टता, ईषत्स्पृष्टता, संवृतता, विवृतता चेति। अ अ अ इति त्रयोऽकारा उदात्तानुदात्तस्वरिताः प्रत्येकं सानुनासिका निरनुनासिकाश्च ह्रस्वदीर्घप्लुतभेदादष्टादशधा भिद्यन्ते। तथेवर्णः।

---

१ - 'अपः' इति पाठान्तरम्।

तथोवर्णः। तथा ऋवर्णः। लृवर्णस्य दीर्घा न सन्ति। तं द्वादशप्रभेदमाचक्षते। सन्ध्यक्षराणां ह्रस्वा न सन्ति, तान्यपि द्वादशप्रभेदानि। अन्तःस्था द्विप्रभेदा रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च। रेफोष्मणां सवर्णा न सन्ति। वर्ग्यो वर्ग्येण सवर्णः। दण्डाग्रम्। खट्वाग्रम्। आस्यग्रहणं किम्? कचटतपानां तुल्यप्रयत्नानां भिन्नस्थानानां मा भूत्। किं च स्यात्? तर्प्ता, तर्प्तुमित्यत्र 'झरो झरि सवर्णे' (८.४.६५) इति पकारस्य तकारे लोपः स्यात्। प्रयत्नग्रहणं किम्? इचुयशानां तुल्यस्थानानां भिन्नप्रयत्नानां[1] मा भूत्। किं च स्यात्? अरुश्श्च्योततीत्यत्र 'झरो झरि सवर्णे' (८.४.६५) इति शकारस्य चकारे लोपः स्यात्॥ ऋकारलृकारयोः सवर्णसंज्ञा वक्तव्या॥ होतृ लृकारः—होतॄकारः। उभयोर्ऋवर्णस्य लृवर्णस्य चान्तरतमः सवर्णो दीर्घो नास्तीति ऋकार एव दीर्घो भवति। सवर्णप्रदेशाः—'अकः सवर्णे दीर्घः' (६.१.१०१) इत्येवमादयः॥

## नाज्झलौ ॥ १० ॥

अच्च हल् च अज्झलौ। तुल्यास्यप्रयत्नावपि अज्झलौ परस्परं सवर्णसंज्ञौ न भवतः। अवर्णहकारौ—दण्डहस्तः। इवर्णशकारौ—दधि शीतम्। सवर्णदीर्घत्वं न भवति। वैपाशो मत्स्यः। आनडुहं चर्मेति 'यस्येति च' (६.४.१४८) इति लोपो न भवति॥

## ईदूदेद्द्विवचनं प्रगृह्यम् ॥ ११ ॥

ईत् ऊत् एत् इत्येवमन्तं द्विवचनं शब्दरूपं प्रगृह्यसंज्ञं भवति। अग्नी इति। वायू इति[2]। माले इति। पचेते इति। पचेथे इति[3]। ईदूदेदिति किम्? वृक्षावत्र। प्लक्षावत्र। द्विवचनमिति किम्? कुमार्यत्र। किशोर्यत्र। तपरकरणमसंदेहार्थम्। प्रगृह्यप्रदेशाः—'प्लुतप्रगृह्या अचि' (६.१.१२५) इत्येवमादयः। ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः।

मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम (महाभारत १२.१७७.१२)।
दम्पतीव (ऋ० २.३९.२)। जम्पतीव। रोदसीव॥

## अदसो मात् ॥ १२ ॥

अदसः सम्बन्धी यो मकारस्तस्मात् पर ईदूदेतः प्रगृह्यसंज्ञा भवन्ति। अमी अत्र। अमी आसते। अमू अत्र। अमू आसाते। एकारस्य नास्त्युदाहरणम्। अदस इति किम्? शम्यत्र। दाडिम्यत्र। मादिति किम्? अमुकेऽत्र॥

---

१ – 'भिन्नजातीयानाम्' इति है०। २ – 'खट्वे इति' इत्यधिकं न्यासे।
३ – 'यजेते इति' इति न्यासे।

## शे ॥ १३ ॥

शे इत्येतत् प्रगृह्यसंज्ञं भवति। किमिदं शे इति? सुपामादेशश्छन्दसि (७.१.३९)। न युष्मे वाजबन्धवः (ऋ० ८.६८.१९)। अस्मे इन्द्राबृहस्पती (ऋ० ४.४९.४)। युष्मे इति। अस्मे इति। त्वे रायः, मे रायः (मा० सं० ४.२२)। त्वे इति। मे इति। छान्दसमेतदेवैकमुदाहरणम् अस्मे इन्द्राबृहस्पती इति। तत्र तथा पाठात्। इतरत् तु लौकिकमनुकरणम्। युष्मे इति। अस्मे इति। त्वे इति। मे इति॥

## निपात एकाजनाङ् ॥ १४ ॥

एकश्चासावच्चेत्येकाच्। निपातो य एकाच् आङ्वर्जितः स प्रगृह्यसंज्ञो भवति। अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। आ एवं नु मन्यसे। आ एवं किल तत्। निपात इति किम्? चकारात्र। जहारात्र। एकाजिति किम्? प्रागग्नये वाचमीरय (ऋ० १०.१८७.१)। अनाङिति किम्? आ उदकान्तात् ओदकान्तात्।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥

## ओत् ॥ १५ ॥

निपात इति वर्तते। तस्यौकारेण तदन्तविधिः। ओदन्तो यो निपातः स प्रगृह्यसंज्ञो भवति। आहो इति। उताहो इति॥

## संबुद्धौ शाकल्यस्येतावनार्षे ॥ १६ ॥

ओदिति वर्तते। संबुद्धिनिमित्तो य ओकारः स शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञो भवति, इतिशब्देऽनार्षेऽवैदिके परतः। वायो इति, वायविति। भानो इति, भानविति। संबुद्धाविति किम्? गवित्ययमाह। अत्रानुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादसत्यर्थवत्त्वे विभक्तिर्न भवति। शाकल्यग्रहणं विभाषार्थम्। इताविति किम्? वायोऽत्र। अनार्ष इति किम्? एता गा ब्रह्मबन्ध इत्यब्रवीत् (काठ० सं० १०.६)॥

## उञः ॥ १७ ॥

शाकल्यस्येतावनार्ष इति वर्तते। उञः प्रगृह्यसंज्ञा भवति इतौ शाकल्यस्याचार्यस्य मतेन। शाकल्यस्येति विभाषार्थम्। उ इति। विति॥

## ऊँ ॥ १८ ॥

उञ इति वर्तते। उञ इतावनार्षे ऊँ इत्ययमादेशो भवति दीर्घोऽनुनासिकश्च शाकल्यस्य मतेन प्रगृह्यसंज्ञकश्च। शाकल्यस्य ग्रहणं विभाषार्थमिहाप्यनुवर्तते, तेन त्रीणि रूपाणि भवन्ति। उ इति। विति। ऊँ इति॥

## ईदूतौ च सप्तम्यर्थे ॥ १९ ॥

शाकल्यस्येतावनार्ष इति निवृत्तम्। ईदन्तमूदन्तं च शब्दरूपं सप्तम्यर्थे वर्तमानं प्रगृह्यसंज्ञं भवति। अध्यस्यां मामकी तनू ( पै० सं० ६.६.८ )। मामक्यां तन्वामिति प्राप्ते। मामक्याम्, मामकी इति। तन्वाम्, तनू इति। सोमो॑ गौ॒री अधि॑ श्रि॒तः ( ऋ० ९. १२.३)। ईदूताविति किम् ? प्रि॒यः सूर्ये॑ प्रि॒यो अ॒ग्ना भ॑वाति ( ऋ० ५.३७.५ )। अग्निशब्दात् परस्याः सप्तम्या डादेशः। सप्तमीग्रहणं किम् ? धीती मती सुष्टुती। धीत्या मत्या सुष्टुत्या इति प्राप्ते। अर्थग्रहणं किम् ? वाप्यश्वः। नद्यातिः। तपरकरणमसन्देहार्थम्।

ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद् भवेत्।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते॥ १॥
वचनाद् यत्र दीर्घत्वं तत्रापि सरसी यदि।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत्॥ २॥

## दाधा घ्वदाप् ॥ २० ॥

दारूपाश्चत्वारो धातवो धारूपौ च द्वौ दाब्दैपौ वर्जयित्वा घुसंज्ञका भवन्ति। डुदाञ्—प्रणिददाति। दाण्—प्रणिदाता। दो—प्रणिद्यति। देङ्—प्रणिदयते। डुधाञ्—प्रणिदधाति। धेट्—प्रणिधयति वत्सो मातरम्। अदाबिति किम् ? 'दाप् लवने' ( अदा० ५२ )—दातं बर्हिः। 'दैप् शोधने' ( भ्वा० ६५८ )—अवदातं मुखम्। घुप्रदेशाः—'घुमास्थागापाजहातिसां हलि' ( ६.४.६६ ) इत्येवमादयः[१]॥

## आद्यन्तवदेकस्मिन् ॥ २१ ॥

असहायस्याद्यन्तोपदिष्टानि कार्याणि न सिध्यन्तीत्ययमतिदेश आरभ्यते। सप्तम्यर्थे वतिः। आदाविव अन्त इव एकस्मिन्नपि कार्यं भवति। यथा क॒र्तव्य॑म् इत्यत्र प्रत्ययाद्युदात्तत्वं ( ३.१.३ ) भवति, एवम् औ॒प॒ग॒वम् इत्यत्रापि यथा स्यात्। यथा वृक्षाभ्यामित्यत्रातोऽङ्गस्य दीर्घत्वम् ( ७.३.१०२ ) एवमाभ्यामित्यत्रापि यथा स्यात्। एकस्मिन्निति किम् ?

१ – 'नेर्गदनदपतपदघुमास्यतीत्येवमादयः' इति पाठान्तरम्।

सभासन्नयने भवः साभासन्नयनः। आकारमाश्रित्य वृद्धसंज्ञा न भवति॥

## तरप्तमपौ घः ॥ २२ ॥

तरप् तमप् इत्येतौ प्रत्ययौ घसंज्ञौ भवतः। कुमारितरा। कुमारितमा। ब्राह्मणितरा। ब्राह्मणितमा। घप्रदेशाः—'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः' (६.३.४३) इत्येवमादयः॥

## बहुगणवतुडति संख्या ॥ २३ ॥

बहु गण वतु डति इत्येते संख्यासंज्ञा भवन्ति। बहुकृत्वः। बहुधा। बहुकः। बहुशः। गणकृत्वः। गणधा। गणकः। गणशः। तावत्कृत्वः। तावद्धा। तावत्कः। तावच्छः। कतिकृत्वः। कतिधा। कतिकः। कतिशः। बहुगणशब्दयोर्वैपुल्ये सङ्घे च वर्तमानयोरिह ग्रहणं नास्ति, संख्यावाचिनोरेव। भूर्यादीनां निवृत्त्यर्थं संख्यासंज्ञा विधीयते॥ अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यं समासकन्विध्यर्थम्॥ अर्धपञ्चमशूर्पः। अर्धं पञ्चमं येषामिति बहुव्रीहौ कृतेऽर्धपञ्चमैः शूर्पैः क्रीतः। 'तद्धितार्थो०' (२.१.५१) इति समासः। तत्र 'दिक्संख्ये संज्ञायाम्' (२.१.५०) इत्यनुवृत्तेस्ततः संख्यापूर्वस्य द्विगुसंज्ञायां (२.१.५२) 'शूर्पादञन्यतरस्याम्' (५.१.२६) इत्यञ् ठञ्च। 'अध्यर्धपूर्वद्विगोः०' (५.१.२८) इति लुक्। अर्धपञ्चमकः। संख्याप्रदेशाः—'संख्या वंश्येन' (२.१.१९) इत्येवमादयः[१]॥

## ष्णान्ता षट् ॥ २४ ॥

स्त्रीलिङ्गनिर्देशात् संख्येति संबध्यते। षकारान्ता नकारान्ता च या संख्या सा षट्संज्ञा भवति। षकारान्ता तावत्—षट् तिष्ठन्ति। षट् पश्य। नकारान्ता—पञ्च। सप्त। नव। दश। अन्तग्रहणमौपदेशिकार्थम्। तेनेह न भवति—शतानि। सहस्राणि। अष्टानामित्यत्र नुड् (७.१.५५) भवति। षट्प्रदेशाः—'षड्भ्यो लुक्' (७.१.२२) इत्येवमादयः॥

## डति च ॥ २५ ॥

डत्यन्ता च या संख्या सा षट्संज्ञा भवति। कति तिष्ठन्ति। कति पश्य॥

## क्तक्तवतू निष्ठा ॥ २६ ॥

क्तश्च क्तवतुश्च क्तक्तवतू प्रत्ययौ निष्ठासंज्ञौ भवतः। कृतः। कृतवान्। भुक्तः।

१ – ' संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् (५.४.१७) इत्येवमादयः ' इति पाठान्तरम्।

भुक्तवान्। ककारः कित्कार्यार्थः। उकार उगित्कार्यार्थः। निष्ठाप्रदेशाः—'श्वीदितो निष्ठायाम्' ( ७.२.१४ ) इत्येवमादयः॥

## सर्वादीनि सर्वनामानि ॥ २७ ॥

सर्वशब्द आदिर्येषां तानीमानि सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वः, सर्वौ, सर्वे। सर्वस्मै। सर्वस्मात्। सर्वेषाम्। सर्वस्मिन्। सर्वकः। विश्वः, विश्वौ, विश्वे। विश्वस्मै। विश्वस्मात्। विश्वेषाम्। विश्वस्मिन्। विश्वकः। उभ, उभय—उभशब्दस्य सर्वनामत्वे प्रयोजनं 'सर्वनाम्नस्तृतीया च' ( २.३.२७ ) इति। उभाभ्यां हेतुभ्यां वसति, उभयोर्हेत्वोर्वसति। उभये। उभयस्मै। उभयस्मात्। उभयेषाम्। उभयस्मिन्। डतर, डतम—कतर। कतम। कतरस्मै। कतमस्मै। इतर, अन्य, अन्यतर—इतरस्मै। अन्यस्मै। अन्यतरस्मै। त्वशब्दोऽन्यवाची स्वरभेदाद् द्विः पठितः। एक उदात्तः, द्वितीयोऽनुदात्तः। केचित् तकारान्तमेकं पठन्ति त्व त्वदिति, द्वावपि चानुदात्ताविति स्मरन्ति। नेम—नेमस्मै। वक्ष्यमाणेन ( १.१.३३ ) जसि विभाषा भवति। नेमे, नेमा इति। सम—समस्मै। कथं 'यथासंख्यमनुदेशः समानाम्' ( १.३.१० ), समे देशे यजेतेति? समस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञेष्यते, न सर्वत्र। सिम—सिमस्मै। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ( ग० सू० १ )। स्वमज्ञातिधनाख्यायाम् ( ग० सू० २ )। अन्तरं बहिर्योगोपसंव्यानयोः ( ग० सू० ३ )। त्यद्। तद्। यद्। एतद्। इदम्। अदस्। एक। द्वि। युष्मद्। अस्मद्। भवतु। किम्। सर्वादिः। सर्वनामप्रदेशाः—'सर्वनाम्नः स्मै' ( ७.१.१४ ) इत्येवमादयः॥

## विभाषा दिक्समासे बहुव्रीहौ ॥ २८ ॥

'न बहुव्रीहौ' ( १.१.२९ ) इति प्रतिषेधं वक्ष्यति, तस्मिन्नित्ये प्रतिषेधे प्राप्ते विभाषेयमारभ्यते। दिशां समासो दिक्समासः। दिगुपदिष्टे समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनामसंज्ञानि भवन्ति। उत्तरपूर्वस्यै, उत्तरपूर्वायै। दक्षिणपूर्वस्यै, दक्षिणपूर्वायै। दिग्ग्रहणं किम्? 'न बहुव्रीहौ' ( १.१.२९ ) इति प्रतिषेधं वक्ष्यति, तत्र न ज्ञायते क्व विभाषा क्व प्रतिषेध इति। दिग्ग्रहणे पुनः क्रियमाणे ज्ञायते दिगुपदिष्टसमासे विभाषा, अन्यत्र प्रतिषेध इति। समासग्रहणं किम्? समास एव यो बहुव्रीहिस्तत्र विभाषा यथा स्यात्, बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्। दक्षिणदक्षिणस्यै देहि। बहुव्रीहाविति किम्? द्वन्द्वे विभाषा मा भूत्—दक्षिणोत्तरपूर्वाणामिति। 'द्वन्द्वे च' ( १.१.३१ ) इति नित्यं प्रतिषेधो भवति॥

## न बहुव्रीहौ ॥ २९ ॥

सर्वनामसंज्ञायां तदन्तविधेरभ्युपगमाद् बहुव्रीहेरपि सर्वाद्यन्तस्य संज्ञा स्यादिति प्रतिषेध आरभ्यते। बहुव्रीहौ समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। प्रियविश्वाय। प्रियोभयाय। द्व्यन्याय। त्र्यन्याय। इह च त्वत्कपितृको मत्कपितृक इत्यकज् न भवति। बहुव्रीहाविति वर्तमाने पुनर्बहुव्रीहिग्रहणं भूतपूर्वमात्रेऽपि प्रतिषेधो यथा स्यात्— वस्त्रान्तरवसनान्तरा इति॥

## तृतीयासमासे ॥ ३० ॥

तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। मासपूर्वाय। संवत्सरपूर्वाय। द्व्यहपूर्वाय। त्र्यहपूर्वाय। समास इति वर्तमाने पुनः समासग्रहणं तृतीयासमासार्थवाक्येऽपि प्रतिषेधो यथा स्यात्। मासेन पूर्वाय। 'पूर्वसदृशसमोनार्थ०' ( २.१.३१ ) इति तृतीयासमासं प्रतिपदं वक्ष्यति, तस्येदं ग्रहणम्, न यस्य कस्यचित् तृतीयासमासस्य, 'कर्तृकरणे कृता बहुलम्' ( २.१.३२ ) इति। त्वयका कृतम्। मयका कृतम्॥

## द्वन्द्वे च ॥ ३१ ॥

द्वन्द्वे च समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। पूर्वापराणाम्। कतरकतमानाम्॥

## विभाषा जसि ॥ ३२ ॥

पूर्वेण नित्ये प्रतिषेधे प्राप्ते जसि विभाषारभ्यते। द्वन्द्वे समासे जसि विभाषा सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। कतरकतमे, कतरकतमाः। जसः कार्यं प्रति विभाषा, अकज् हि न भवति। कतरकतमकाः॥

## प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ ३३ ॥

'विभाषा जसि' ( १.१.३२ ) इति वर्तते। द्वन्द्व इति निवृत्तम्। प्रथम चरम तय अल्प अर्ध कतिपय नेम इत्येते जसि विभाषा सर्वनामसंज्ञा भवन्ति। प्रथमे, प्रथमाः। चरमे, चरमाः। द्वितये, द्वितयाः। अल्पे, अल्पाः। अर्धे, अर्धाः। कतिपये, कतिपयाः। नेमे, नेमाः। तय इति तयप्प्रत्ययः। शिष्टानि प्रातिपदिकानि। तत्र नेम इति सर्वादिषु पठ्यते, तस्य प्राप्ते विभाषा, अन्येषामप्राप्ते। उभयशब्दस्य तयप्प्रत्ययान्तस्य गणे पाठान्नित्या सर्वनामसंज्ञा। इहापि जस्कार्यं प्रति विभाषा। काकचोर्यथायोगं वृत्तिः॥

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ ३४ ॥

पूर्व पर अवर दक्षिण उत्तर अपर अधर इत्येतेषां गणे पाठात् पूर्वेण नित्यायां सर्वनामसंज्ञायां प्राप्तायां जसि विभाषारभ्यते। पूर्वादीनि विभाषा जसि सर्वनामसंज्ञानि भवन्ति व्यवस्थायामसंज्ञायाम्। स्वाभिधेयापेक्षावधिनियमो[१] व्यवस्था। पूर्वे, पूर्वाः। परे, पराः। अवरे, अवराः। दक्षिणे, दक्षिणाः। उत्तरे, उत्तराः। अपरे, अपराः। अधरे, अधराः। व्यवस्थायामिति किम्? दक्षिणा इमे गाथकाः। प्रवीणा इत्यर्थः। असंज्ञायामिति किम्? उत्तराः कुरवः। सत्यामेव व्यवस्थायामियं तेषां संज्ञा॥

## स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥

अत्रापि नित्या सर्वनामसंज्ञा प्राप्ता जसि विभाष्यते। स्वमित्येतच् छब्दरूपं जसि विभाषा सर्वनामसंज्ञं भवति, न चेज् ज्ञातिधनयोः संज्ञारूपेण वर्तते। स्वे पुत्राः, स्वाः पुत्राः। स्वे गावः, स्वा गावः। आत्मीया इत्यर्थः। ज्ञातिप्रतिषेधः किम्?

धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संहताः।
उल्मुकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ॥ ( महाभारत ५.३६.५८ )

अधनाख्यायामिति किम्? प्रभूताः स्वा न दीयन्ते। प्रभूताः स्वा न भुज्यन्ते। प्रभूतानि धनानीत्यर्थः॥

## अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥

अत्रापि पूर्वेण नित्या सर्वनामसंज्ञा प्राप्ता सा जसि विभाष्यते। अन्तरमित्येतच् छब्दरूपं विभाषा जसि सर्वनामसंज्ञं भवति बहिर्योग उपसंव्याने च गम्यमाने। अन्तरे गृहाः, अन्तरा गृहाः। नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते। अन्तरे शाटकाः, अन्तराः शाटकाः। उपसंव्यानं परिधानीयमुच्यते, न प्रावरणीयम्। बहिर्योगोपसंव्यानयोरिति किम्? अनयोर्ग्रामयोरन्तरे तापसः प्रतिवसति। तस्मिन्नन्तरे शीतान्युदकानि। मध्यप्रदेशवचनोऽन्तरशब्दः। गणसूत्रस्य चेदं प्रत्युदाहरणम्॥ अपुरीति वक्तव्यम्॥ अन्तरायां पुरि वसति॥ विभाषाप्रकरणे तीयस्य वा ङित्सु सर्वनामसंज्ञेत्युपसंख्यानम्॥ द्वितीयस्मै, द्वितीयाय। तृतीयस्मै, तृतीयाय॥

## स्वरादिनिपातमव्ययम् ॥ ३७ ॥

स्वरादीनि शब्दरूपाणि निपाताश्चाव्ययसंज्ञानि भवन्ति। स्वर्, अन्तर्, प्रातर् एतेऽन्तोदात्ताः पठ्यन्ते। पुनर् आद्युदात्तः। सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्,

---

१ - 'स्वाभिधेयापेक्षोऽवधिनियमः' इति पाठान्तरम्।

आरात्, ऋते, युगपत्, पृथक् एतेऽपि सनुतरप्रभृतयोऽन्तोदात्ताः पठ्यन्ते। ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, आविस्, अवस्, अधस्, समया, निकषा, स्वयम्, मृषा, नक्तम्, नञ्, हेतौ, अद्धा, इद्धा, सामि एतेऽपि ह्यस्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते । वत् ( ग० सू० ४ ), वदन्तमव्ययसंज्ञं भवति। ब्राह्मणवत्। क्षत्रियवत्। सन्, सनात्, सनत्, तिरस् एत आद्युदात्ताः पठ्यन्ते। अन्तरा अयमन्तोदात्तः। अन्तरेण, ज्योक्, कम्, शम्, सना, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मुधा, मिथ्या। क्त्वातोसुन्कसुनः ( ग० सू० ५ ), कृन्मकारान्तः सन्ध्यक्षरान्तः ( ग० सू० ६ ), अव्ययीभावश्च ( ग० सू० ७ ), पुरा, मिथो, मिथस्, प्रबाहुकम्, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्द्धम्, समम्, नमस्, हिरुक्। तसिलादिस्तद्धित एधाच्पर्यन्तः ( ग० सू० ८ ), शस्तसी ( ग० सू० ९ ), कृत्वसुच् ( ग० सू० १० ), सुच् ( ग० सू० ११ ), आस्थालौ ( ग० सू० १२ ), च्व्यर्थाश्च ( ग० सू० १३ ), अम् ( ग० सू० १४ ), आम् ( ग० सू० १५ ), प्रतान्, प्रशान्। स्वरादिः। निपाता वक्ष्यन्ते—'प्राग्रीश्वरान्निपाताः' ( १.४.५६ ) इति। च, वा, ह, अह, एव, एवमित्यादयः। अव्ययप्रदेशाः—'अव्ययादाप्सुपः' ( २.४.८२ ) इत्येवमादयः। अव्ययमित्यन्वर्थसंज्ञा।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥ ( गो० ब्रा० १.१.२६ )

## तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥

तद्धितान्तः शब्दोऽसर्वविभक्तिरव्ययसंज्ञो भवति। यस्माद् न सर्वविभक्तेरुत्पत्तिः सोऽसर्वविभक्तिः। ततः । यतः। तत्र। यत्र। तदा। यदा। सर्वदा। सदा। तद्धित इति किम् ? एकः। द्वौ। बहवः। असर्वविभक्तिरिति किम् ? औपगवः, औपगवौ, औपगवाः॥

## कृन्मेजन्तः ॥ ३९ ॥

कृद् यो मकारान्त एजन्तश्च तदन्तं शब्दरूपमव्ययसंज्ञं भवति। स्वादुंकारं भुङ्क्ते। सम्पन्नंकारं भुङ्क्ते। लवणंकारं भुङ्क्ते। एजन्तः—वक्षे रायः। ता वामेषे रथानाम् ( ऋ० ५.६६.३ )। क्रत्वे दक्षाय जीवसे ( ऋ० १०.५७.४ )। ज्योक् च सूर्यं दृशे ( ऋ० १०.५७.४ )। वक्षे इति वचेः 'तुमर्थे सेसेन०' ( ३.४.९ ) इति सेप्रत्यये कुत्वे षत्वे च कृते रूपम्। एषे इति इणः सेप्रत्यये गुणे षत्वे च कृते रूपम्। जीवसे इति जीवेरसेप्रत्यये रूपम्। दृशे इति दृशेः केन्प्रत्ययो निपात्यते—'दृशे विख्ये च' ( ३.४.११ ) इति। अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम्। इह मा भूत्—आधये, चिकीर्षवे, कुम्भकारेभ्य इति॥

## क्त्वातोसुन्कसुनः ॥ ४० ॥

क्त्वा तोसुन् कसुन् इत्येवमन्तं शब्दरूपमव्ययसंज्ञं भवति। कृत्वा। हृत्वा। तोसुन्—पुरा सूर्यस्योदेतोराधेयः (काठ० सं० ८.३)। पुरा वत्सानामपाकर्तोः (काठ० सं० ३१.१५)। 'भावलक्षणे स्थेण्कृञ्वदि०' (३.४.१६) इति इणः कृञश्च तोसुन् प्रत्ययः। कसुन्—'सृपितृदोः कसुन्' (३.४.१७)—पुरा क्रूरस्यं विसृपों विरप्शिन् (तै० सं० १.१.९.३)। पुरा जत्रुभ्यं आतृदंः (ऋ० ८.१.१२)॥

## अव्ययीभावश्च ॥ ४१ ॥

अव्ययीभावसमासोऽव्ययसंज्ञो भवति। किं प्रयोजनम् ? लुङ्मुखस्वरोपचाराः। लुक्—उपाग्नि। प्रत्यग्नि शलभाः पतन्ति। मुखस्वरः—उपाग्निमुंखः। प्रत्यग्निमुंखः। 'मुखं स्वाङ्गम्' (६.२.१६७) इत्युत्तरपदान्तोदात्तत्वं प्राप्तम्, 'नाव्ययदिक्छब्द०' (६.२.१६८) इति प्रतिषिध्यते। तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वर एव भवति। उपचारः—उपपयःकारः। उपपयःकामः। विसर्जनीयस्थानिकस्य सकारस्य उपचार इति संज्ञा। तत्राव्ययीभावस्याव्ययत्वे 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' (८.३.४६) इति पर्युदासः सिद्धो भवति। सर्वमिदं काण्डं स्वरादावपि पठ्यते। पुनर्वचनमनित्यत्वज्ञापनार्थम्। तेनायं कार्यनियमः सिद्धो भवति। इह च पुरा सूर्यस्योदेतोराधेयः (काठ० सं० ८.३), पुरा क्रूरस्यं विसृपों विरप्शिन् (तै० सं० १.१.९.३) इति 'न लोकाव्ययनिष्ठा०' (२.३.६९) इति षष्ठीप्रतिषेधो न भवति॥

## शि सर्वनामस्थानम् ॥ ४२ ॥

शि इत्येतत् सर्वनामस्थानसंज्ञं भवति। किमिदं शि इति ? 'जश्शसोः शिः' (७.१.२०) इति शिरादेशः। कुण्डानि तिष्ठन्ति। कुण्डानि पश्य। दधीनि। मधूनि। त्रपूणि। जतूनि। सर्वनामस्थानप्रदेशाः—'सर्वनामस्थाने चासंबुद्धौ' (६.४.८) इत्येवमादयः॥

## सुडनपुंसकस्य ॥ ४३ ॥

सुडिति पञ्च वचनानि सर्वनामस्थानसंज्ञानि भवन्ति नपुंसकादन्यत्र। नपुंसके न विधिर्न प्रतिषेधः, तेन जसः शेः[1] सर्वनामस्थानसंज्ञा पूर्वेण भवत्येव। राजा, राजानौ, राजानः। राजानम्, राजानौ। सुडिति किम् ? राज्ञः पश्य। अनपुंसकस्येति किम् ? सामनी। वेमनी॥

---

१ - 'जसंशे' इति बाल०।

## न वेति विभाषा ॥ ४४ ॥

नेति प्रतिषेधो वेति विकल्पः, तयोः प्रतिषेधविकल्पयोर्विभाषेति संज्ञा भवति। इतिकरणोऽर्थनिर्देशार्थः। विभाषाप्रदेशेषु प्रतिषेधविकल्पावुपतिष्ठेते। तत्र प्रतिषेधेन समीकृते विषये पश्चाद् विकल्पः प्रवर्तते। उभयत्रविभाषाः प्रयोजयन्ति। 'विभाषा श्वेः' ( ६.१.३० )—शुशाव, शिश्वाय। शुशुवतुः, शिश्वियतुः। विभाषाप्रदेशाः—'विभाषा श्वेः' ( ६.१.३० ) इत्येवमादयः॥

## इग् यणः सम्प्रसारणम् ॥ ४५ ॥

इग् यो यणः स्थाने भूतो भावी वा तस्य संप्रसारणमित्येषा संज्ञा भवति। यज्—इष्टम्। वप्—उप्तम्। ग्रह्—गृहीतम्। केचिदुभयथा सूत्रमिदं व्याचक्षते—वाक्यार्थः संज्ञी, वर्णश्चेति। इग्यण इति यो वाक्यार्थः स्थान्यादेशसम्बन्धलक्षणः स संप्रसारणसंज्ञो भवति, यण्स्थानिको य इग्वर्णः स संप्रसारणसंज्ञो भवतीति। तत्र विधौ वाक्यार्थ उपतिष्ठते। 'ष्यङः संप्रसारणम्' ( ६.१.१३ ), 'वसोः संप्रसारणम्' ( ६.४.१३१ ) इति। अनुवादे वर्णः, 'संप्रसारणाच्च' ( ६.१.१०८ ) इति। संख्यातानुदेशादिह न भवति—अदुहितरामिति[१]। संप्रसारणप्रदेशाः—'वसोः संप्रसारणम्' ( ६.४.१३१ ) इत्येवमादयः॥

## आद्यन्तौ टकितौ ॥ ४६ ॥

आदिष्टिद् भवति अन्तः किद् भवति षष्ठीनिर्दिष्टस्य। लविता। मुण्डो भीषयते। टित्प्रदेशाः—'आर्धधातुकस्येड् वलादेः' ( ७.२.३५ ) इत्येवमादयः। कित्प्रदेशाः—'भियो हेतुभये षुक्' ( ७.३.४० ) इत्येवमादयः॥

## मिदचोऽन्त्यात् परः ॥ ४७ ॥

अच इति निर्धारणे षष्ठी। जातौ चेदमेकवचनम्[२]। अचां संनिविष्टानामन्त्यादचः परो मिद् भवति। स्थानेयोगप्रत्ययपरत्वस्यायमपवादः। विरुणद्धि। मुञ्चति। पयांसि। मित्प्रदेशाः—'रुधादिभ्यः श्नम्' ( ३.१.७८ ) इत्येवमादयः॥ मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम्॥ मग्नः। मग्नवान्। मङ्क्ता। मङ्क्तुम्॥

## एच इग्घ्रस्वादेशे ॥ ४८ ॥

एचो ह्रस्वादेशे कर्तव्य इगेव ह्रस्वो भवति नान्यः। रै—अतिरि। नौ—अतिनु। गो—उपगु। एच इति किम् ? अतिखट्वः। अतिमालः। ह्रस्वादेश इति किम् ? देवंदत्त। दे३वदत्त[३]॥

---

१ – 'द्युभ्यामित्यत्र 'दिव उत्' ( ६.१.१३१ ) इति तपरकरणाद् दीर्घो न भवति ' इति है० संस्करणेऽधिकः पाठः।

२ – ' अचः ...... एकवचनम् ' इति पाठो न सार्वत्रिकः। ३ – ' दे३वदत्त । देवद३त्त । ' इत्यपपाठो मुद्रितेषु ।

## षष्ठी स्थानेयोगा ॥ ४९ ॥

परिभाषेयं योगनियमार्था। इह शास्त्रे या षष्ठी अनियतयोगा श्रूयते, सा स्थानेयोगैव भवति नान्ययोगा। स्थानेयोगस्य निमित्तभूते सति सा प्रतिपत्तव्या। स्थानशब्दश्च प्रसङ्गवाची। यथा दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति दर्भाणां प्रसङ्ग इति गम्यते। एवमिहापि अस्तेः स्थाने प्रसङ्गे भूर्भवति। भविता। भवितुम्। भवितव्यम्। ब्रुवः प्रसङ्गे वचिर्भवति। वक्ता। वक्तुम्। वक्तव्यम्। प्रसङ्गे सम्बन्धस्य निमित्तभूते ब्रुव इति षष्ठी। बहवो हि षष्ठ्यर्थाः स्वस्वाम्यनन्तरसमीपसमूहविकारावयवाद्याः। तत्र यावन्तः शब्दे संभवन्ति तेषु सर्वेषु प्राप्तेषु नियमः क्रियते षष्ठी स्थानेयोगेति। स्थाने योगोऽस्या इति व्यधिकरणो बहुव्रीहिः। अत एव निपातनाच्च सप्तम्या अलुक्॥

## स्थानेऽन्तरतमः ॥ ५० ॥

स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति सदृशतमः। कुतश्च शब्दस्यान्तर्यम्? स्थानार्थगुणप्रमाणतः। स्थानतः—'अकः सवर्णे दीर्घः' (६.१.१०१)—दण्डाग्रम्। यूपाग्रम्। द्वयोरकारयोः कण्ठ्य एव दीर्घ आकारो भवति। अर्थतः—वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः। पुंवद्भावेनान्तरतमः पुंशब्दोऽतिदिश्यते। गुणतः—पाकः। त्यागः। रागः। 'चजोः कु घिण्ण्यतोः' (७.३.५२) इति चकारस्याल्पप्राणस्याघोषस्य तादृश एव ककारो भवति, जकारस्य घोषवतोऽल्पप्राणस्य तादृश एव गकारः। प्रमाणतः—अमुष्मै। अमूभ्याम्। 'अदसोऽसेर्दादु दो मः' (८.२.८०) इति ह्रस्वस्य ह्रस्वः, दीर्घस्य दीर्घः। स्थान इति वर्तमाने पुनः स्थानेग्रहणं किम्? यत्रानेकमान्तर्यं संभवति तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात्। चेता। स्तोता। प्रमाणतोऽकारो गुणः प्राप्तः, तत्र स्थानत आन्तर्यादेकारौकारौ भवतः। तमब्ग्रहणं किम्? वाग् घसति। त्रिष्टुब् भसति। 'झयो होऽन्यतरस्याम्' (८.४.६२) इति हकारस्य पूर्वसवर्णे क्रियमाणे सोष्मणः सोष्माण इति द्वितीयाः प्रसक्ताः, नादवतो नादवन्त इति तृतीयाः, तमब्ग्रहणाद् ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः॥

## उरण् रपरः ॥ ५१ ॥

उः स्थानेऽण् प्रसज्यमान एव रपरो वेदितव्यः। कर्ता। हर्ता। किरति। गिरति। द्वैमातुरः। त्रैमातुरः। उरिति किम्? खेयम्। गेयम्। अण्ग्रहणं किम्? 'सुधातुरकङ् च' (४.१.९७)—सौधातकिः॥

## अलोऽन्त्यस्य ॥ ५२ ॥

षष्ठीनिर्दिष्टस्य य उच्यत आदेशः, सोऽन्त्यस्यालः स्थाने वेदितव्यः। 'इद् गोण्याः' (१.२.५०)—पञ्चगोणिः। दशगोणिः॥

## ङिच्च ॥ ५३ ॥

ङिच्च य आदेशः, सोऽनेकालपि अलोऽन्त्यस्य स्थाने भवति। 'आनङ् ऋतो द्वन्द्वे' (६.३.२५)—होतापोतारौ। मातापितरौ। तातङि ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वात् सर्वादेशस्तातङ् भवति। जीवताद् भवान्। जीवतात् त्वम्॥

## आदेः परस्य ॥ ५४ ॥

परस्य कार्यं शिष्यमाणमादेरलः प्रत्येतव्यम्। क्व च परस्य कार्यं शिष्यते? यत्र पञ्चमीनिर्देशः। तद् यथा—'ईदासः' (७.२.८३)—आसीनो यजते। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६.३.९७)—द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्॥

## अनेकाल्शित् सर्वस्य ॥ ५५ ॥

अनेकाल् य आदेशः शिच् च, स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। 'अस्तेर्भूः' (२.४.५२)—भविता। भवितुम्। भवितव्यम्। शित् खल्वपि—'जश्शसोः शिः' (७.१.२०)—कुण्डानि तिष्ठन्ति। कुण्डानि पश्य॥

## स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥

स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यमादेशे न प्राप्नोतीत्ययमतिदेश आरभ्यते। स्थानिना तुल्यं वर्तत इति स्थानिवत्। स्थानिवदादेशो भवति स्थान्याश्रयेषु कार्येष्वनलाश्रयेषु, स्थान्यलाश्रयाणि कार्याणि वर्जयित्वा। न अल्विधिरनल्विधिरित्यर्थः[1]। किमुदाहरणम्? धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः[2]। धात्वादेशो धातुवद् भवति। 'अस्तेर्भूः' (२.४.५२)। 'ब्रुवो वचिः' (२.४.५३)। आर्धधातुके विषये प्रागेवादेशेषु कृतेषु 'धातोः' (३.१.९१) इति तव्यादयो भवन्ति। भविता। भवितुम्। भवितव्यम्। वक्ता। वक्तुम्। वक्तव्यम्। अङ्गादेशोऽङ्गवद् भवति। केन, काभ्याम्, कैः। 'किमः कः' (७.२.१०३) इति कादेशे कृतेऽङ्गाश्रया इनदीर्घत्वैस्भावा भवन्ति। कृदादेशः कृद्वद् भवति। प्रकृत्य। प्रहृत्य। क्त्वो ल्यबादेशे कृते 'ह्रस्वस्य पिति कृति तुक्' (६.१.७१) इति तुग् भवति। तद्धितादेशस्तद्धितवद् भवति। दाधिकम्। अद्यतनम्। 'कृत्तद्धितसमासाश्च' (१.२.४६) इति प्रातिपदिकसंज्ञा भवति। अव्ययादेशोऽव्ययवद् भवति।

---

१ - 'अनल्विधिरनेकाल्विधिरित्यर्थः' इति बाल०। २ - 'प्रयोजनम्' इत्यधिकम्—न्या०, पद०।

प्रस्तुत्य। उपहृत्य। उपस्तुत्य। 'अव्ययात्०' (२.४.८२) इति सुब्लुग् भवति। सुबादेशः सुब्वद् भवति। वृक्षाय। प्लक्षाय। 'सुपि च' (७.३.१०२) इति दीर्घत्वं भवति। तिङादेशस्तिङ्वद् भवति। अकुरुताम्। अकुरुतम्। 'सुप्तिङन्तं पदम्' (१.४.१४) इति पदसंज्ञा भवति। पदादेशः पदवद् भवति। ग्रामो वः स्वम्। जनपदो नः स्वम्। 'पदस्य' (८.१.१६) इति रुत्वं भवति। वत्करणं किम्? स्थानी आदेशस्य संज्ञा मा विज्ञायीति, स्वाश्रयमपि यथा स्यात्। 'आङो यमहनः' (१.३.२८)—आहत, आवधिष्ट इत्यात्मनेपदमुभयत्रापि भवति। आदेशग्रहणं किम्? आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात्। पचतु। 'एरुः' (३.४.८६)। अनल्विधाविति किम्? द्युपथित्यदादेशा न स्थानिवद् भवन्ति। द्यौः। पन्थाः। स इति। 'हल्ङ्याब्भ्यः०' (६.१.६८) इति सुलोपो न भवति॥

## अचः परस्मिन् पूर्वविधौ ॥ ५७ ॥

पूर्वेणानल्विधौ स्थानिवद्भाव उक्तः। अल्विध्यर्थमिदमारभ्यते। आदेशः स्थानिवद् इति वर्तते। अच इति स्थानिनिर्देशः। परस्मिन्निति निमित्तसप्तमी। पूर्वविधाविति विषयसप्तमी। अजादेशः परनिमित्तकः पूर्वविधौ कर्तव्ये स्थानिवद् भवति। पटयति। अवधीत्। बहुखट्वकः। पटुमाचष्ट इति णिचि टिलोपे कृते तस्य स्थानिवद्भावाद् 'अत उपधायाः' (७.२.११६) इति वृद्धिर्न भवति। अवधीत्। अतो लोपस्य स्थानिवद्भावाद् 'अतो हलादेर्लघोः' (७.२.७) इति हलन्तलक्षणा वृद्धिर्न भवति। बहुखट्वकं इति 'आपोऽन्यतरस्याम्' (७.४.१५) इति ह्रस्वस्य स्थानिवद्भावाद् 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' (६.२.१७४) इति स्वरो न भवति। अच इति किम्? प्रश्नः। आक्राष्टाम्। आगत्य। प्रश्न इति प्रच्छेर्नङ्प्रत्यये 'च्छ्वोः शूडनुनासिके च' (६.४.१९) इति छकारस्य शकारः परनिमित्तकस्तुकि न स्थानिवद् भवति। आक्राष्टामिति 'झलो झलि' (८.२.२६) इति सिचो लोपः परनिमित्तकः कृषेः षकारस्य 'षढोः कः सि' (८.२.४१) इति ककारे कर्तव्ये न स्थानिवद् भवति। आगत्येति 'वा ल्यपि' (६.४.३८) इत्यनुनासिकलोपः परनिमित्तकस्तुकि कर्तव्ये न स्थानिवद् भवति। परस्मिन्निति किम्? युवजानिः। वधूटीजानिः। वैयाघ्रपद्यः। आदीध्ये। युवजानिरिति 'जायाया निङ्' (५.४.१३४) न परनिमित्तकस्तेन यलोपे न स्थानिवद् भवति। वैयाघ्रपद्य इति न परनिमित्तकः पादस्यान्त-लोपः पद्भावं न प्रतिबध्नाति। आदीध्ये इति दीधीङ उत्तमपुरुषैकवचने टेरेत्वस्यापर-निमित्तकत्वाद् 'यीवर्णयोर्दीधीवेव्योः' (७.४.५३) इति लोपो न भवति। पूर्वविधाविति किम्? हे गौः। बाभ्रवीयाः। नैधेयः। हे गौरिति वृद्धिरजादेशः सम्बुद्धिलोपे कर्तव्ये न स्थानिवद् भवति। बाभ्रवीया इति बाभ्रव्यस्यामीच्छात्रा इति 'वृद्धाच्छः' (४.२.११४) इति छः। 'हलस्तद्धितस्य' (६.४.१५०) इति यकारलोपे कर्तव्येऽवादेशो न स्थानिवद्

भवति। नैधेयः। 'आतो लोप इटि च' (६.४.६४) इत्याकारलोप 'इतश्चानिञः' (४.१.१२२) इति द्व्यज्लक्षणे प्रत्ययविधौ न स्थानिवद् भवति॥

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु॥ ५८॥

पूर्वेणातिप्रसक्तः स्थानिवद्भाव एतेषु विधिषु प्रतिषिध्यते। पदान्तविधिं प्रत्यजादेशो न स्थानिवद् भवति। कौ स्तः। यौ स्तः। तानि सन्ति। यानि सन्ति। 'श्नसोरल्लोपः' (६.४.१११) क्ङिति सार्वधातुक इति परनिमित्तकः, स पूर्वविधावावादेशे यणादेशे च कर्तव्ये स्थानिवत् स्यात्, अस्माद् वचनाद् न भवति। द्विर्वचनविधिं प्रति [अजादेशः] न स्थानिवद् भवति। दद्ध्यत्र। मद्ध्वत्र। यणादेशः परनिमित्तकः, तस्य स्थानिवद्भावाद् 'अनचि च' (८.४.४७) इति धकारस्य द्विर्वचनं न स्यादस्माद् वचनाद् भवति। वरे योऽजादेशः स पूर्वविधिं प्रति न स्थानिवद् भवति। अप्सु यायावरः प्रवपेत पिण्डान्। यातेर्यङन्ताद् 'यश्च यङः' (३.२.१७६) इति वरचि कृते 'अतो लोपः' (६.४.४८) परनिमित्तकः, तस्य स्थानिवत्त्वाद् 'आतो लोप इटि च' (६.४.६४) इत्याकारलोपः स्याद्, अस्माद् वचनाद् न भवति। यलोप—यलोपविधिं प्रत्यजादेशो न स्थानिवद् भवति। कण्डूतिः। कण्डूयतेः क्तिचि[1] कृते 'अतो लोपः' (६.४.४८) परनिमित्तको 'लोपो व्योर्वलि' (६.१.६६) इति यलोपे स्थानिवत् स्याद्, अस्माद् वचनाद् न भवति। स्वर—स्वरविधिं प्रत्यजादेशो न स्थानिवद् भवति। चिकीर्षकः। जिहीर्षकः। ण्वुलि कृते 'अतो लोपः' (६.४.४८) परनिमित्तको 'लिति' (६.१.१९३) प्रत्ययात् पूर्वमुदात्तमिति स्वरे कर्तव्ये न स्थानिवद् भवतीति। सवर्ण—सवर्णविधिं प्रत्यजादेशो न स्थानिवद् भवति। शिण्ढि। पिण्ढि। शिषेः पिषेश्च लोण्मध्यमपुरुषैकवचने 'रुधादिभ्यः श्नम्' (३.१.७८) हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु 'श्नसोरल्लोपः' (६.४.१११) क्ङिति सार्वधातुके परनिमित्तकः, अनुस्वारस्य ययि परसवर्णे (८.४.५८) कर्तव्ये न स्थानिवद् भवति। अनुस्वार—अनुस्वारविधिं प्रत्यजादेशो न स्थानिवद् भवति। शिंषन्ति। पिंषन्ति। 'नश्चापदान्तस्य झलि' (८.३.२४) इत्यनुस्वारे कर्तव्ये 'श्नसोरल्लोपः' (६.४.१११) न स्थानिवद् भवति। दीर्घ—दीर्घविधिं प्रत्यजादेशो न स्थानिवद् भवति। प्रतिदीव्ना। प्रतिदीव्ने। प्रतिदिवन्नित्येतस्य 'भस्य' (६.४.१२९) इत्यधिकृत्य तृतीयैकवचने चतुर्थ्येकवचने च 'अल्लोपोऽनः' (६.४.१३४) इत्यकारलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद् 'हलि च' (८.२.७७) इति दीर्घत्वं न स्यात्, न ह्ययं वकारो हल्पर इति, अस्माद् वचनाद् भवति। जश्—जश्विधिं प्रत्यजादेशो न स्थानिवद् भवति। सग्धिश्च मे सपीतिश्च मे (मा० सं० १८.९)। बब्धां ते हरी धानाः (नि० ५.१२)। अदेः क्तिनि 'बहुलं छन्दसि' (२.४.३९) इति घस्लादेशः, 'घसिभसोर्हलि च' (६.४.१००) इत्युपधालोपः, 'झलो

---

१ – 'क्तिनि' इति है०, स चायुक्तः।

झलि' ( ८.२.२६ ) इति सकारलोपः, 'झषस्तथोर्धोऽधः' ( ८.२.४० ) इति धत्वम्, उपधालोपस्य स्थानिवत्त्वात् 'झलां जश् झशि' ( ८.४.५३ ) इति घकारस्य जश्त्वं न स्याद्, अस्माद् वचनाद् भवति। समाना ग्धिः, समानस्य सभावः। सग्धिः। बब्धामिति। भसेर्लोड्द्विवचने शपः श्लुः, द्विर्वचनम्, अभ्यासकार्यम्, 'घसिभसोर्हलि च' ( ६.४. १००) इत्युपधालोपः, 'झलो झलि' ( ८.२.२६ ) इति सकारलोपः, 'झषस्तथोर्धोऽधः' ( ८.२.४० ) इति धत्वम्। उपधालोपस्य स्थानिवत्त्वात् 'झलां जश् झशि' ( ८.४.५३ ) इति भकारस्य जश्त्वं न स्याद्, अस्माद् वचनाद् भवति। चर्—चर्विधिं प्रत्यजादेशो न स्थानिवद् भवति। जक्षतुः। जक्षुः। अक्षंन् पितरोऽमीमदन्त पितरः ( मा० सं० १९. ३६)। लिड्द्विवचनबहुवचनयोरदेर्घस्लादेशः, 'गमहनजनखनघसाम्०' ( ६.४.९८ ) इत्युपधालोपः, द्विर्वचनम्, अभ्यासकार्यम्। तत्रोपधालोपस्य स्थानिवत्त्वात् 'खरि च' ( ८.४.५५ ) इति घकारस्य चर्त्वं न स्याद्, अस्माद् वचनाद् भवति। 'शासिवसिघसीनां च' ( ८.३.६० ) इति षत्वम्। अक्षन्नित्यदेर्लुङ्बहुवचने घस्लादेशः, च्लेरागतस्य 'मन्त्रे घसह्वर०' ( २.४.८० ) इति लुक्। 'गमहनजनखनघसाम्०' ( ६.४.९८ ) इत्युपधालोपः, तस्य स्थानिवत्त्वात् 'खरि च' ( ८.४.५५ ) इति चर्त्वं न स्याद्, अस्माद् वचनाद् भवति॥ स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद् भवति॥ अन्यस्तु[1] स्थानिवदेव। तेन बहुखट्वकः, किर्योः, गिर्योः, वाय्वोरिति स्थानिवत्त्वात् स्वरदीर्घयलोपा न भवन्ति॥

## द्विर्वचनेऽचि ॥ ५९ ॥

द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद् भवति द्विर्वचन एव कर्तव्ये। रूपातिदेशश्चायं नियतकालः। तेन कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते। आल्लोपोपधालोपणिलोपयणयवायावादेशाः प्रयोजनम्। आल्लोपः—पपतुः, पपुः। 'आतो लोप इटि च' ( ६.४.६४ ) इत्याकारलोपे कृते तस्य स्थानिवद्भावाद् 'एकाचो०' ( ६.१.१ ) इति द्विर्वचनं भवति। उपधालोपः—जघ्नतुः, जघ्नुः। 'गमहनजनखनघसाम्०' ( ६.४.९८ ) इत्युपधालोपे कृतेऽनच्कत्वाद् द्विर्वचनं न स्यात्, अस्माद् वचनाद् भवति। णिलोपः—आटिटत्। अटतेर्णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वाद् 'अजादेर्द्वितीयस्य' ( ६.१.२ ) इति टिशब्दस्य द्विर्वचनं भवति। यण्—चक्रतुः, चक्रुः। करोतेरतुसि उसि च यणादेशे कृतेऽनच्कत्वाद् द्विर्वचनं न स्यात्, स्थानिवत्त्वाद् भवति। अयवायावादेशाः—निनय। निनाय। लुलव। लुलाव। नयतेर्लुनातेश्चोत्तमे णलि गुणे कृते वृद्धौ चायवायावादेशाः, तेषां स्थानिवत्त्वाद् नेनैलोलाविति द्विर्वचनं भवति। द्विर्वचने कर्तव्य इति किम् ?

---

१ - 'अन्यत्र' इति है०, 'अन्यत्र तु' इति बाल० तारा०।

जग्ले। मम्ले। श्रवणमाकारस्य न भवति। द्विर्वचननिमित्त इति किम्? दुद्यूषति। ऊठि यणादेशो न स्थानिवद् भवति। अचीति किम्? जेघ्रीयते। देध्मीयते। 'ई घ्राध्मोः' (७.४.३१) 'यङि च' (७.४.३०) इतीकारादेशः, तस्य स्थानिवद्भावादाकारस्य द्विर्वचनं स्यात्, अज्ग्रहणाद् न भवति॥

## अदर्शनं लोपः ॥ ६० ॥

अदर्शनम्, अश्रवणम्, अनुच्चारणम्, अनुपलब्धिः, अभावः, वर्णविनाश इत्यनर्थान्तरम्। एतैः शब्दैर्योऽर्थोऽभिधीयते, तस्य लोप इतीयं संज्ञा भवति। अर्थस्येयं संज्ञा न शब्दस्य। प्रसक्तस्यादर्शनं लोपसंज्ञं भवति। 'गोधाया ढ्रक्' (४.१.१२९)—गौधेरः। पचेरन्। 'जीवे रदानुक्' (द० उ० १.१६३)—जीरदानुः। स्त्रिवेर्मनिन्—आस्रेमाणम्। यकार-वकारयोरदर्शनमिहोदाहरणम्। अपरस्यानुबन्धादेः प्रसक्तस्य। लोपप्रदेशाः—'लोपो व्योर्वलि' (६.१.६६) इत्येवमादयः॥

## प्रत्ययस्य लुक्श्लुलुपः ॥ ६१ ॥

अदर्शनमिति वर्तते। प्रत्ययादर्शनस्य लुक्, श्लु, लुप् इत्येताः संज्ञा भवन्ति। अनेकसंज्ञाविधानाच्च च तद्भावितग्रहणमिह विज्ञायते। लुक्संज्ञाभावितं प्रत्ययादर्शनं लुक्संज्ञं भवति, श्लुसंज्ञाभावितं श्लुसंज्ञं भवति, लुप्संज्ञाभावितं लुप्संज्ञं भवति। तेन संज्ञानां संकरो न भवति। विधिप्रदेशेषु च भाविनी संज्ञा विज्ञायते। अत्ति। जुहोति। वरणाः। प्रत्ययग्रहणं किम्? अगस्तयः। कुण्डिनाः। लुक्श्लुलुप्प्रदेशाः—'लुक् तद्धित-लुकि' (१.२.४९), 'जुहोत्यादिभ्यः श्लुः' (२.४.७५), 'जनपदे लुप्' (४.२.८१) इत्येवमादयः॥

## प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥

प्रत्ययनिमित्तं कार्यमसत्यपि प्रत्यये कथं नु नाम स्यादिति सूत्रमिदमारभ्यते। प्रत्ययलोपे कृते प्रत्ययलक्षणं प्रत्ययहेतुकं कार्यं भवति। अग्निचित्, सोमसुत्, अधोगित्यत्र सुप्तिङोर्लुप्तयोः 'सुप्तिङन्तं पदम्' (१.४.१४) इति पदसंज्ञा भवति। अधोगिति दुहेर्लङि तिपि शब्लुकि तिलोपे घत्वभष्भावजश्त्वचर्त्वेषु कृतेषु रूपम्। प्रत्यय इति वर्तमाने पुनः प्रत्ययग्रहणं किम्? कृत्स्नप्रत्ययलोपे यथा स्यात्। इह मा भूत्—आघ्नीय। सङ्गमीय। हनिगम्योर्लिङात्मने-पदे 'लिङः सलोपोऽनन्त्यस्य' (७.२.७९) इति सीयुट्सकारलोपः प्रत्ययैकदेशलोपः, तत्र प्रत्ययलक्षणेन झलि (६.४.३७) इत्यनुनासिकलोपो न भवति। प्रत्ययलक्षणमिति किम्? रायः कुलं रैकुलम्। गवे हितं गोहितम्। आयवादेशौ न भवतो वर्णाश्रयत्वात्॥

## न लुमताङ्गस्य ॥ ६३ ॥

पूर्वेणातिप्रसक्तं प्रत्ययलक्षणमिति विशेषे प्रतिषेध उच्यते। लुमता शब्देन लुप्ते प्रत्यये यदङ्गम्, तस्य प्रत्ययलक्षणं कार्यं न भवति। गर्गाः। मृष्टः। जुहुतः। यञ्शपोर्लुमता लुप्तयोरङ्गस्य गुणवृद्धी न भवतः। लुमतेति किम्? कार्यते। हार्यते। अङ्गस्येति किम्? पञ्च। सप्त। पयः। साम॥

## अचोऽन्त्यादि टि ॥ ६४ ॥

अच इति निर्धारणे षष्ठी। जातावेकवचनम्। अचां संनिविष्टानां योऽन्त्योऽच्, तदादि शब्दरूपं टिसंज्ञं भवति। अग्निचित्—इच्छब्दः। सोमसुत्—उच्छब्दः। आताम्, आथाम्—आम्शब्दः। पचेते। पचेथे। टिप्रदेशाः—'टित आत्मनेपदानां टेरे' (३.४.७९) इत्येवमादयः॥

## अलोऽन्त्यात् पूर्व उपधा ॥ ६५ ॥

धात्वादौ वर्णसमुदायेऽन्त्यादलः पूर्वो यो वर्णः, सोऽलेवोपधासंज्ञो भवति। पच्, पठ्—अकारः। भिद्, छिद्—इकारः। बुध्, युध्—उकारः। वृत्, वृध्—ऋकारः। अल इति किम्? शिष्टः। शिष्टवान्। समुदायात् पूर्वस्य मा भूत्। उपधाप्रदेशाः—'अत उपधायाः' (७.२.११६) इत्येवमादयः॥

## तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥

तस्मिन्निति सप्तम्यर्थनिर्देशे पूर्वस्यैव कार्यं भवति, नोत्तरस्य। 'इको यणचि' (६.१.७७)—दध्युदकम्। मध्विदम्। पचत्योदनम्। निर्दिष्टग्रहणमानन्तर्यार्थम्। अग्निचिदत्रेति व्यवहितस्य मा भूत्॥

## तस्मादित्युत्तरस्य ॥ ६७ ॥

निर्दिष्टग्रहणमनुवर्तते। तस्मादिति पञ्चम्यर्थनिर्देश उत्तरस्यैव कार्यं भवति, न पूर्वस्य। 'तिङ्ङतिङः' (८.१.२८)—ओदनं पचति। इह न भवति—पचत्योदनम् इति॥

## स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥

शास्त्रे स्वमेव रूपं शब्दस्य ग्राह्यं बोध्यं प्रत्याय्यं भवति, न बाह्योऽर्थः, शब्दसंज्ञां वर्जयित्वा। शब्देनार्थावगतेरर्थे कार्यस्यासंभवात् तद्वाचिनां शब्दानां संप्रत्ययो मा भूदिति सूत्रमिदमारभ्यते। 'अग्नेर्ढक्' (४.२.३३)—आग्नेयमष्टाकपालं निर्वपेत् (वै० श्रौ०

१.१९)। अग्निशब्दोऽग्निशब्दस्यैव ग्राहको भवति, न ज्वलनः पावको धूमकेतुरिति, नातः प्रत्ययो भवति। 'उदश्वितोऽन्यतरस्याम्' (४.२.१९)—औदश्वित्कम्। औदश्वितम्। तक्रमरिष्टं कालशेयं दण्डाहतं मथितमिति नातः प्रत्ययो भवति। अशब्दसंज्ञेति किम्? 'दाधा घ्वदाप्' (१.१.२०), 'तरप्तमपौ घः' (१.१.२२) घुग्रहणेषु घग्रहणेषु च संज्ञिनां ग्रहणम्, न संज्ञायाः॥ सित्तद्विशेषाणां वृक्षाद्यर्थम्॥ सिन्निर्देशः कर्तव्यः। ततो वक्तव्यं तद्विशेषाणां ग्रहणं भवतीति। किं प्रयोजनम्? वृक्षाद्यर्थम्। 'विभाषा वृक्षमृगतृण०' (२.४.१२) इति। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः॥ पित्पर्यायवचनस्य च स्वाद्यर्थम्॥ पिन्निर्देशः कर्तव्यः। ततो वक्तव्यं पर्यायवचनस्य ग्रहणं भवति, चकारात् स्वस्य रूपस्य तद्विशेषाणां चेति। किं प्रयोजनम्? स्वाद्यर्थम्। 'स्वे पुषः' (३.४.४०)—स्वपोषं पुष्टः। रैपोषम्। धनपोषम्। अश्वपोषम्। गोपोषम्॥ जित्पर्यायवचनस्यैव राजाद्यर्थम्॥ जिन्निर्देशः कर्तव्यः। ततो वक्तव्यं पर्यायवचनस्यैव ग्रहणं भवतीति, न स्वरूपस्य, नापि तद्विशेषाणाम्। किं प्रयोजनम्? राजाद्यर्थम्। 'सभा राजामनुष्यपूर्वा' (२.४.२३)—इनसभम्। ईश्वरसभम्। तस्यैव न भवति—राजसभा। तद्विशेषाणां च न भवति—पुष्यमित्रसभा। चन्द्रगुप्तसभा॥ झित्तद्विशेषाणां च मत्स्याद्यर्थम्॥ झिन्निर्देशः कर्तव्यः। ततो वक्तव्यं तस्य च ग्रहणं भवति तद्विशेषाणां चेति। किं प्रयोजनम्? मत्स्याद्यर्थम्। 'पक्षिमत्स्यमृगान् हन्ति' (४.४.३५) इति ठक्। पाक्षिकः। मात्स्यिकः। तद्विशेषाणाम्—शाकुनिकः। पर्यायाणां न भवति—अजिह्मान् हन्ति। अनिमिषान् हन्तीति। अथैकस्येष्यते। मीनान् हन्ति मैनिकः॥

## अणुदित् सवर्णस्य चाप्रत्ययः॥ ६९॥

परेण णकारेण प्रत्याहारग्रहणम्। अण् गृह्यमाण उदिच्च सवर्णानां ग्राहको भवति, स्वस्य च रूपस्य, प्रत्ययं वर्जयित्वा। 'आद् गुणः' (६.१.८७)। 'अस्य च्वौ' (७.४.३२)। 'यस्येति च' (६.४.१४८)। स्वरानुनासिक्यकालभिन्नस्य ग्रहणं भवति। उदित् खल्वपि—'चुटू' (१.३.७), 'लशक्वतद्धिते' (१.३.८) चवर्गटवर्गयोः कवर्गस्य च ग्रहणं भवति। अप्रत्यय इति किम्? 'सनाशंसभिक्ष उः' (३.२.१६८)। 'अ साम्प्रतिके' (४.३.९)। दीर्घो न भवति॥

## तपरस्तत्कालस्य॥ ७०॥

तः परो यस्मात् सोऽयं तपरः, तादपि परस्तपरः। तपरो वर्णस्तत्कालस्यात्मना तुल्यकालस्य गुणान्तरयुक्तस्य सवर्णस्य ग्राहको भवति, स्वस्य च रूपस्य। विध्यर्थमिदम्। अणिति नानुवर्तते। अणामन्येषां च तपराणाम् इदमेव ग्रहणकशास्त्रम्। 'अतो भिस ऐस्' (७.१.९) इत्येवमादिषु पूर्वग्रहणकशास्त्रं न प्रवर्तत एव। अतपरा अणस्तस्यावकाशः।

किमुदाहरणम्? 'अतो भिस ऐस्' (७.१.९)—वृक्षैः। प्लक्षैः। 'विड्वनोरनुनासिकस्यात्' (६.४.४१)—अब्जाः। गोजाः। तत्कालस्येति किम्? खट्वाभिः। मालाभिः॥

## आदिरन्त्येन सहेता ॥ ७१ ॥

आदिरन्त्येनेत्संज्ञकेन सह गृह्यमाणस्तन्मध्यपतितानां वर्णानां ग्राहको भवति, स्वस्य च रूपस्य। अण्। अक्। अच्। हल्। सुप्। तिङ्। अन्त्येनेति किम्? सुडिति तृतीयैकवचनेन टा इत्यनेन ग्रहणं मा भूत्॥

## येन विधिस्तदन्तस्य ॥ ७२ ॥

येन विशेषणेन विधिर्विधीयते स तदन्तस्यात्मान्तस्य समुदायस्य ग्राहको[1] भवति, स्वस्य च रूपस्य। 'एरच्' (३.३.५६)—इवर्णान्तादच्प्रत्ययो भवति। चयः। जयः। अयः। 'ओरावश्यके' (३.१.१२५)—उवर्णान्ताद् ण्यत् भवति। अवश्यलाव्यम्। अवश्यपाव्यम् ॥ समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः ॥ द्वितीयान्तं श्रितादिभिः सह समस्यते। कष्टश्रितः। इह मा भूत्—कष्टं परमश्रित इति। प्रत्ययविधौ—'नडादिभ्यः फक्' (४.१.९९)। नडस्यापत्यं नाडायनः। इह मा भूत्—सूत्रनडस्यापत्यं सौत्रनाडिः। किमविशेषेण? नेत्याह ॥ उगिद्वर्णग्रहणवर्जमिति वाच्यम्॥ 'उगितश्च' (४.१.६) इति ङीप्प्रत्ययस्तदन्तादपि भवति। भवती। अतिभवती। वर्णग्रहणम्—'अत इञ्' (४.१.९५)—दाक्षिः। प्लाक्षिः ॥ यस्मिन् विधिस्तदादावल्ग्रहणे ॥ अल्ग्रहणेषु यस्मिन् विधिस्तदादाविति वक्तव्यम्। 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६.४.७७) इति। श्रियः। भ्रुवः॥

## वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥ ७३ ॥

यस्येति समुदाय उच्यते। अचां मध्ये यस्य वृद्धिसंज्ञक आदिभूतः तच्छब्दरूपं वृद्धसंज्ञं भवति। अचामिति जातौ बहुवचनम्। शालीयः। मालीयः। औपगवीयः। कापटवीयः। आदिरिति किम्? सभासन्नयने भवः साभासन्नयनः ॥ वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ॥ देवदत्तीयाः, दैवदत्ताः ॥ गोत्रान्तादसमस्तवत् प्रत्ययो भवतीति वक्तव्यम्॥ घृतप्रधानो रौढिः, घृतरौढिः। तस्य छात्रा घृतरौढीयाः। ओदनप्रधानः पाणिनिः, ओदनपाणिनिः। तस्य छात्रा ओदनपाणिनीयाः। वृद्धाम्भीयाः। वृद्धकाश्यपीयाः ॥ जिह्वाकात्यहरितकात्यवर्जम्॥ जैह्वाकाताः। हारितकाताः॥

---

१ - 'संज्ञा' इति न्या०, पद०।

### त्यदादीनि च ॥ ७४ ॥

यस्याचामादिग्रहणमुत्तरार्थमनुवर्तते। इह तु न संबध्यते। त्यदादीनि शब्दरूपाणि वृद्धसंज्ञानि भवन्ति। त्यदीयम्। तदीयम्। एतदीयम्। इदमीयम्। अदसीयम्। त्वदीयम्। त्वादायनिः। मदीयम्। मादायनिः। भवदीयम्। किमीयम्॥

### एङ् प्राचां देशे ॥ ७५ ॥

यस्याचामादिग्रहणमनुवर्तते। एङ् यस्याचामादिस्तत् प्राचां देशाभिधाने वृद्धसंज्ञं भवति। एणीपचनीयः। भोजकटीयः। गोनर्दीयः। एङिति किम्? आहिच्छत्रः। कान्यकुब्जः। प्राचामिति किम्? देववत्तो नाम वाहीकेषु ग्रामः। तत्र भवो दैववत्तः। देश इति किम्? गोमत्यां भवा मत्स्या गौमताः।

प्रागुदञ्चौ विभजते हंसः क्षीरोदकं[१] यथा।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य प्रथमः पादः॥



## ॥ प्रथमाध्यायस्य द्वितीयः पादः ॥

### गाङ्कुटादिभ्योऽञ्णिन् ङित् ॥ १ ॥

अतिदेशोऽयम्। गाङिति इङादेशो गृह्यते, न 'गाङ् गतौ' (भ्वा० ६८१) इति, ङकारस्यानन्यार्थत्वात्। कुटादयोऽपि 'कुट कौटिल्ये' (तुदा० ७५) इत्येतदारभ्य यावत् 'कुङ् शब्दे' (तुदा० १११) इति। एभ्यो गाङ्कुटादिभ्यः परेऽञ्णितः प्रत्यया ङितो भवन्ति, ङिद्वद् भवन्तीत्यर्थः। गाङः—अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। कुटादिभ्यः— उत्कुटिता। उत्कुटितुम्। उत्कुटितव्यम्। उत्पुटिता। उत्पुटितुम्। उत्पुटितव्यम्। अञ्णिदिति किम्? उत्कोटयति। उच्चुकोट। उत्कोटकः। उत्कोटो वर्तते॥ व्यचेः कुटादित्वमनसीति वक्तव्यम्॥ विचिता। विचितुम्। विचितव्यम्। अनसीति किम्? उरुव्यचाः॥

१ – 'क्षीरोदके' इति है० अन्यत्र च मुद्रितेषु।

## विज इट् ॥ २ ॥

'ओविजी भयचलनयोः' ( तुदा० ९ ) अस्मात् पर इडादिः प्रत्ययो ङिद्वद् भवति। उद्विजिता। उद्विजितुम्। उद्विजितव्यम्। इडिति किम् ? उद्वेजनम्। उद्वेजनीयम्॥

## विभाषोर्णोः ॥ ३ ॥

इडिति वर्तते। 'ऊर्णुञ् आच्छादने' ( अदा० ३२ ) अस्मात् पर इडादिः प्रत्ययो विभाषा ङिद्वद् भवति। प्रोर्णुविता, प्रोर्णविता। इडित्येव—प्रोर्णवनम्। प्रोर्णवनीयम्॥

## सार्वधातुकमपित् ॥ ४ ॥

सार्वधातुकं यदपित् तद् ङिद्वद् भवति। कुरुतः, कुर्वन्ति। चिनुतः, चिन्वन्ति। सार्वधातुकमिति किम्? कर्ता। कर्तुम्। कर्तव्यम्। अपिदिति किम्? करोति। करोषि। करोमि॥

## असंयोगाल्लिट् कित् ॥ ५ ॥

अपिदिति वर्तते। असंयोगान्ताद् धातोः परो लिट् प्रत्ययोऽपित् किद् भवति। बिभिदतुः, बिभिदुः। चिच्छिदतुः, चिच्छिदुः। ईजतुः, ईजुः। असंयोगादिति किम्? सस्रंसे। दध्वंसे। अपिदित्येव—बिभेदिथ[1]॥

## इन्धिभवतिभ्यां च ॥ ६ ॥

इन्धिभवतीत्येताभ्यां परो लिट् प्रत्ययः किद् भवति। समीधे दस्युहन्तमम् ( ऋ० ६.१६.१५ )। पुत्र ईधे अथर्वणः ( ऋ० ६.१६.१४ )। भवतेः खल्वपि—बभूव। बभूविथ। इन्धेः संयोगार्थं ग्रहणम्। भवतेः पिदर्थम्। अत्रेष्टिः ॥ श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्॥ श्रेथतुः, श्रेथुः। ग्रेथतुः, ग्रेथुः। देभतुः, देभुः। परिषस्वजे, परिषस्वजाते॥

## मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ ७ ॥

मृड मृद गुध कुष क्लिश वद वस् इत्येतेभ्यः परः क्त्वा प्रत्ययः किद् भवति। 'न क्त्वा सेट्' ( १.२.१८ ) इति कित्त्वप्रतिषेधं वक्ष्यति, तस्यायं पुरस्तादपकर्षः। गुधकुषक्लिशीनां तु 'रलो व्युपधाद्०' ( १.२.२६ ) इति विकल्पे प्राप्ते नित्यार्थं

---

१ - 'बिभेद' इति पाठान्तरम्।

वचनम्। मृडित्वा। मृदित्वा। गुधित्वा। कुषित्वा। क्लिशित्वा। उदित्वा। उषित्वा॥

## रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥ ८ ॥

रुद विद मुष ग्रहि स्वपि प्रच्छ् इत्येतेभ्यः संश्च क्त्वा च कितौ भवतः। रुदविदमुषीणां 'रलो व्युपधाद्०' (१.२.२६) इति विकल्पे प्राप्ते नित्यार्थं ग्रहणम्। ग्रहेर्विध्यर्थमेव। स्वपिप्रच्छ्योः सन्नर्थं ग्रहणम्। किदेव हि क्त्वा। रुदित्वा, रुरुदिषति। विदित्वा, विविदिषति। मुषित्वा, मुमुषिषति। गृहीत्वा, जिघृक्षति। सुप्त्वा, सुषुप्सति। पृष्ट्वा, पिपृच्छिषति। ग्रहादीनां कित्त्वात् संप्रसारणं भवति। 'किरश्च पञ्चभ्यः' (७.२.७५) इति प्रच्छेरिडागमः॥

## इको झल् ॥ ९ ॥

सन्नित्यनुवर्तते। क्त्वेति निवृत्तम्। इगन्ताद् धातोः परो झलादिः सन् किद् भवति। चिचीषति। तुष्टूषति। चिकीर्षति। इक इति किम्? पिपासति। तिष्ठासति। झलिति किम्? शिशयिषते। किमर्थमिदमुच्यते? गुणो मा भूदिति। 'अज्झनगमां सनि' (६.४.१६) इति दीर्घत्वं गुणस्य बाधकं भविष्यति। यथैव तर्हि दीर्घत्वं गुणं बाधते तथा णिलोपमपि बाधेत। तस्माद् दीर्घत्वस्यावकाशदानाय कित्त्वमिदमारभ्यते। चिचीषतीत्यादिषु सावकाशं दीर्घत्वं परत्वाद् णिलोपेन बाध्यते। ज्ञीप्सति॥

इकः कित्त्वं गुणो मा भूद् दीर्घारम्भात्कृते भवेत्।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते॥ १॥
सामर्थ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम्।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम्॥ २॥

## हलन्ताच्च ॥ १० ॥

इकः सन् झल् किदिति वर्तते। समीपवचनोऽन्तशब्दः। हल् चासावन्तश्च हलन्तः। इगन्ताद् इक्समीपाद् हलः परः सन् झलादिः किद् भवति। बिभित्सति। बुभुत्सते। इक इत्येव—यियक्षते। झलित्येव—विवर्तिषते। दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्। धीप्सति। धिप्सति॥

## लिङ्सिचावात्मनेपदेषु ॥ ११ ॥

हलन्ताद् इको झल् किदिति वर्तते। सन् इति निवृत्तम्। इगन्ताद् इक्समीपाद् हलः परौ झलादी लिङ्सिचावात्मनेपदेषु परतः कितौ भवतः। भित्सीष्ट। भुत्सीष्ट। सिचि खल्वपि—अभित्त। अबुद्ध। इक इत्येव—यक्षीष्ट। अयष्ट। संप्रसारणं हि

स्यात्। आत्मनेपदेष्विति किम्? अस्राक्षीत्। अद्राक्षीत्। 'सृजिदृशोर्झल्यमकिति' (६.१.५८) इत्यमागमो न स्यात्। हलन्तादित्येव—चेषीष्ट। अचेष्ट। गुणो न स्यात्। झल् इत्येव—वर्तिषीष्ट। अवर्तिष्ट। गुणो न स्यात्। लिङ्सिचाविति किम्? द्वेष्टा। द्वेक्ष्यते[1]॥

## उश्च ॥ १२ ॥

ऋवर्णान्ताद्[2] धातोः परौ लिङ्सिचावात्मनेपदेषु झलादी कितौ भवतः। कृषीष्ट। हृषीष्ट। सिचः खल्वपि—अकृत। अहृत। झल् इत्येव—वरिषीष्ट। अवरिष्ट। 'वृतो वा' (७.२.३८)—अवरीष्ट[3]॥

## वा गमः ॥ १३ ॥

लिङ्सिचावात्मनेपदेष्विति वर्तते। गमेर्धातोः परौ लिङ्सिचावात्मनेपदेषु झलादी वा कितौ भवतः। संगंसीष्ट, संगसीष्ट। सिचः खल्वपि—समगंस्त, समगत। कित्त्वपक्षेऽनुनासिकलोपो भवति—'अनुदात्तोपदेशवनतितनोत्यादीनाम्०' (६.४.३७) इति॥

## हनः सिच् ॥ १४ ॥

हन्तेर्धातोः परः सिच् किद् भवति। आहत, आहसाताम्, आहसत। सिचः कित्त्वाद् अनुनासिकलोपः। सिज्ग्रहणं लिङ्निवृत्त्यर्थम्, उत्तरत्रानुवृत्तिर्मा भूत्। आत्मनेपदग्रहणमुत्तरार्थमनुवर्तते। इह तु परस्मैपदे हन्तेर्वधभावस्य नित्यत्वात् कित्त्वस्य प्रयोजनं नास्ति॥

## यमो गन्धने ॥ १५ ॥

सिच् आत्मनेपदेष्विति वर्तते। यमेर्धातोर्गन्धने वर्तमानात् परः सिच् प्रत्ययः किद् भवत्यात्मनेपदेषु परतः। गन्धनं सूचनम्, परेण प्रच्छाद्यमानस्यावद्यस्याविष्करणम्। अनेकार्थत्वाद् धातूनां यमिस्तत्र वर्तते। उदायत, उदायसाताम्, उदायसत। सूचितवान् इत्यर्थः। सिचः कित्त्वादनुनासिकलोपः। 'आङो यमहनः' (१.३.२८) इत्यात्मनेपदम्। गन्धन इति किम्? उदायंस्त पादम्। उदायंस्त कूपाद् उदकम्[4]। उद्धृतवान् इत्यर्थः। सकर्मकत्वेऽपि 'समुदाङ्भ्यो यमोऽग्रन्थे' (१.३.७५) इत्यात्मनेपदम्॥

---

१ - 'द्वेक्ष्यति' इत्येव सार्वत्रिकः पाठः। स च द्व्यङ्गविकल इति न युक्तः।

२ - 'ऋकारान्ताद्' इति न्यासः। ३ - 'आत्मनेपदेष्वित्येव—अकार्षीत्' इत्यपि क्वाचित्कः पाठः।

४ - 'रज्जुम्' इति पाठान्तरम्।

## विभाषोपयमने ॥ १६ ॥

यमः सिजात्मनेपदेष्विति वर्तते। यमेर्धातोरुपयमने वर्तमानात् परः सिच् प्रत्ययो विभाषा किद् भवत्यात्मनेपदेषु परतः। उपायत कन्याम्, उपायंस्त कन्याम्। उपायत भार्याम्, उपायंस्त भार्याम्। उपयमनं स्वीकरणम्, विवाहः, दारकर्म, पाणिग्रहणमित्यर्थः। 'उपाद् यमः स्वकरणे' ( १.३.५६ ) इत्यात्मनेपदम् ॥

## स्थाघ्वोरिच्च ॥ १७ ॥

सिजात्मनेपदेष्विति वर्तते। तिष्ठतेर्धातोर्घुसंज्ञकानां च इकारश्चान्तादेशः सिंच्च किद् भवत्यात्मनेपदेषु परतः। उपास्थित, उपास्थिषाताम्, उपास्थिषत। घुसंज्ञकानाम्— अदित। अधित ॥

इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेऽपि सः।
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ॥

## न क्त्वा सेट् ॥ १८ ॥

क्त्वाप्रत्ययः सेण् न किद् भवति। देवित्वा। वर्तित्वा। सेडिति किम् ? कृत्वा। हत्वा[1]। क्त्वाग्रहणं किम् ? निगृहीतिः। उपस्निहितिः। निकुचितिः ॥

न सेड् इति कृतेऽकित्त्वे निष्ठायामवधारणात्।
ज्ञापकान् न परोक्षायां सनि झल्ग्रहणं विदुः ॥ १ ॥
इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि।
वस्वर्थं किदतीदेशान् निगृहीतिः प्रयोजनम् ॥ २ ॥

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ १९ ॥

न सेडिति वर्तते। शीङ् स्विदि मिदि क्ष्विदि धृष् इत्येतेभ्यः परो निष्ठाप्रत्ययः सेण् न किद् भवति। शयितः, शयितवान्। प्रस्वेदितः, प्रस्वेदितवान्। प्रमेदितः, प्रमेदितवान्। प्रक्ष्वेदितः, प्रक्ष्वेदितवान्। प्रधर्षितः, प्रधर्षितवान्। सेड् इत्येव—स्विन्नः, स्विन्नवान्। स्विदादीनाम् 'आदितश्च' ( ७.२.१६ ) इति निष्ठायामिट् प्रतिषिध्यते। 'विभाषा भावादिकर्मणोः' ( ७.२.१७ ) इति पक्षेऽभ्यनुज्ञायते, स विषयः कित्त्वप्रतिषेधस्य ॥

## मृषस्तितिक्षायाम् ॥ २० ॥

मृषेर्धातोः तितिक्षायामर्थे निष्ठा सेण् न किद् भवति। तितिक्षा क्षमा। मर्षितः, मर्षितवान्। तितिक्षायामिति किम् ? अपमृषितं वाक्यमाह ॥

---

१ - ' हुत्वा ' इति पाठान्तरम्।

## उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ २१ ॥

निष्ठा सेण् न किद् इति वर्तते। उदुपधाद् धातोः परो भाव आदिकर्मणि च वर्तमानो निष्ठाप्रत्ययः सेड् अन्यतरस्यां न किद् भवति। द्युतितमनेन, द्योतितमनेन। प्रद्युतितः, प्रद्योतितः। मुदितमनेन, मोदितमनेन। प्रमुदितः, प्रमोदितः। उदुपधाद् इति किम् ? लिखितम् अनेन। भावादिकर्मणोरिति किम् ? रुचितं कार्षापणं ददाति। सेड् इत्येव—प्रभुक्त ओदनः। व्यवस्थितविभाषा चेयम्। तेन शब्विकरणानामेव भवति। 'गुध परिवेष्टने' ( दिवा० १४ )—गुधितम्[१] इत्यत्र न भवति॥

## पूङः क्त्वा च ॥ २२ ॥

अन्यतरस्याम् इति न स्वर्यते, उत्तरसूत्रे पुनर्वावचनात्। न सेड् इति वर्तते। पूङश्चेड् विहितः 'क्लिशः क्त्वानिष्ठयोः' ( ७.२.५० ) 'पूङश्च' ( ७.२.५१ ) इति। पूङः परो निष्ठाप्रत्ययः क्त्वा च सेण् न किद् भवति। पवितः, पवितवान्। क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' ( १.२.१८ ) इति सिद्ध एव प्रतिषेधः। तस्य ग्रहणमुत्तरार्थम्। तथा चोक्तम्—'नित्यमकित्त्वमिडाद्योः क्त्वानिष्ठयोः क्त्वाग्रहणमुत्तरार्थम्' ( महाभाष्य १.२०१ ) इति॥

## नोपधात् थफान्ताद् वा ॥ २३ ॥

निष्ठेति निवृत्तम्। नकारोपधाद् धातोस्थकारान्तात् फकारान्ताच्च परः क्त्वाप्रत्ययः सेड् वा न किद् भवति। ग्रथित्वा, ग्रन्थित्वा। श्रथित्वा, श्रन्थित्वा। गुफित्वा, गुम्फित्वा। नोपधाद् इति किम्? रेफित्वा। गोफित्वा। थफान्ताद् इति किम्? स्रंसित्वा। ध्वंसित्वा॥

## वञ्चिलुञ्च्यृतश्च ॥ २४ ॥

वञ्चि लुञ्चि ऋत् इत्येतेभ्यः परः क्त्वाप्रत्ययः सेड् वा न किद् भवति। वचित्वा, वञ्चित्वा। लुचित्वा, लुञ्चित्वा। ऋतित्वा, अर्तित्वा। 'ऋतेरीयङ्' ( ३.१.२९ ) आर्धधातुके विकल्पितः[२]। स यत्र पक्षे नास्ति तत्रेदम् उदाहरणम्। सेड् इत्येव—वक्त्वा॥

## तृषिमृषिकृशेः काश्यपस्य ॥ २५ ॥

'न क्त्वा सेट्' ( १.२.१८ ) इति प्रतिषेधे प्राप्ते कित्त्वं विकल्प्यते। तृषि मृषि कृशि इत्येतेभ्यः परः क्त्वाप्रत्ययः सेट् काश्यपस्याचार्यस्य मते वा न किद् भवति। तृषित्वा, तर्षित्वा। मृषित्वा, मर्षित्वा। कृशित्वा, कर्शित्वा। काश्यपग्रहणं पूजार्थम्, वेत्येव हि

१ – 'निगुधितम्' इति न्यासः। २ – 'विकल्प्यते' इति न्यासः।

वर्तते ॥

## रलो व्युपधाद्धलादेः संश्च ॥ २६ ॥

वेति वर्तते, सेड् इति च। उश्च इश्च वी। वी उपधे यस्य स व्युपधः। उकारोपधाद् इकारोपधाच् च धातो रलन्ताद् धलादेः परः संश्च क्त्वा च सेटौ वा कितौ भवतः। द्युतित्वा, द्योतित्वा। दिद्युतिषते, दिद्योतिषते। लिखित्वा, लेखित्वा। लिलिखिषति, लिलेखिषति। रल इति किम्? देवित्वा। दिदेविषति। व्युपधाद् इति किम्? वर्तित्वा। विवर्तिषते। हलादेरिति किम्? एषित्वा। एषिषिषति। सेड् इत्येव—भुक्त्वा। बुभुक्षते ॥

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ २७ ॥

ऊ इति त्रयाणामयं मात्रिकद्विमात्रिकत्रिमात्रिकाणां प्रश्लिष्टनिर्देशः। ह्रस्वदीर्घप्लुत इति द्वन्द्वैकवद्भावे पुँल्लिङ्गनिर्देशः। उ ऊ ऊ३ इत्येवंकालोऽज् यथाक्रमं ह्रस्वदीर्घप्लुत इत्येवंसंज्ञो भवति। उकालो ह्रस्वः—दधि। मधु। ऊकालो दीर्घः—कुमारी। गौरी। ऊ३ कालः प्लुतः—देवदत्त३ अत्र न्वसि। कालग्रहणं परिमाणार्थम्। दीर्घप्लुतयोर्ह्रस्वसंज्ञा मा भूत्—आलूय। प्रलूय। 'ह्रस्वस्य पिति कृति तुक्' (६.१.७१) इति तुङ् न भवति। अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम्। प्रतक्ष्य। प्ररक्ष्य। ह्रस्वाश्रयस्तुङ् मा भूत्। तितउच्छत्रम्। 'दीर्घात्' (६.१.७५) 'पदान्ताद् वा' (६.१.७६) इति विभाषा तुङ् मा भूत्। ह्रस्वदीर्घप्लुतप्रदेशाः—'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७)। 'अकृत्सार्वधातुकयोर्दीर्घः' (७.४.२५)। 'वाक्यस्य टेः प्लुत उदात्तः' (८.२.८२)॥

## अचश्च ॥ २८ ॥

परिभाषेयं स्थानिनियमार्था। ह्रस्वदीर्घप्लुताः स्वसंज्ञया शिष्यमाणा अच एव स्थाने वेदितव्याः। वक्ष्यति—'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७)—रै—अतिरि। नौ—अतिनु। गो—उपगु। अच इति किम्? सुवाग् ब्राह्मणकुलम्। 'अकृत्सार्वधातुकयोर्दीर्घः' (७.४.२५)—चीयते। श्रूयते। अच इति किम्? भिद्यते। छिद्यते। 'वाक्यस्य टेः प्लुत उदात्तः' (८.२.८२)—देवदत्त३। यज्ञदत्त३। अच इति किम्? अग्निचि३त्। सोमसु३त्। तकारस्य मा भूत्। स्वसंज्ञया विधाने नियमः। अज् इति वर्तते। इह मा भूत्—द्यौः। पन्थाः। सः। द्युभ्याम्। द्युभिः। अत्र नियमो नास्ति॥

## उच्चैरुदात्तः ॥ २९ ॥

अज् इति वर्तते। उदात्तादिशब्दाः स्वरे वर्णधर्मे लोकवेदयोः प्रसिद्धा एव। त इह तद्गुणेऽचि परिभाष्यन्ते। उच्चैरुपलभ्यमानो योऽच् स उदात्तसंज्ञो भवति। उच्चैरिति च

श्रुतिप्रकर्षो न गृह्यते। उच्चैर्भाषते। उच्चैः पठतीति। किं तर्हि ? स्थानकृतम् उच्चैस्त्वं संज्ञिनो विशेषणम्। ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते। तत्र यः समाने स्थान ऊर्ध्वभागनिष्पन्नोऽच् स उदात्तसंज्ञो भवति। यस्मिन्नुच्चार्यमाणे गात्राणामायामो निग्रहो भवति, रूक्षता अस्निग्धता स्वरस्य, संवृतता कण्ठविवरस्य। ये। ते। के। उदात्तप्रदेशाः—'आद्युदात्तश्च' ( ३.१.३ ) इत्येवमादयः॥

## नीचैरनुदात्तः ॥ ३० ॥

अज् इति वर्तते। नीचैरुपलभ्यमानो योऽच् सोऽनुदात्तसंज्ञो भवति। समाने स्थाने नीचभागे निष्पन्नोऽज् अनुदात्तः। यस्मिन्नुच्चार्यमाणे गात्राणामन्ववसर्गो मार्दवं भवति, स्वरस्य मृदुता स्निग्धता, कण्ठविवरस्योरुता महत्ता। 'त्वसमसिमनेमेत्यनुच्चानि' ( फिट्० ४.१० )। नमंस्ते रुद्र नीलकण्ठ सहस्राक्ष। अनुदात्तप्रदेशाः—'अनुदात्तौ सुप्पितौ' ( ३.१.४ ) इत्येवमादयः॥

## समाहारः स्वरितः ॥ ३१ ॥

अजु इति वर्तते। उदात्तानुदात्तसमाहारो[१] योऽच् स स्वरितसंज्ञो भवति। सामर्थ्याच् चात्र लोकवेदयोः प्रसिद्धौ गुणावेव वर्णधर्मावुदात्तानुदात्तौ गृह्येते, नाचौ। तौ समाह्रियेते यस्मिन्नचि तस्य स्वरित इत्येषा संज्ञा विधीयते। शिक्यंम्। कुन्यां। सामुन्यंः। क्वं। स्वरितप्रदेशाः—'तित् स्वरितम्' ( ६.१.१८५ ) इत्येवमादयः॥

## तस्यादित उदात्तमर्धह्रस्वम् ॥ ३२ ॥

उदात्तानुदात्तसमाहारः[१] स्वरित इत्युक्तम्। तत्र न ज्ञायते कस्मिन्नंश उदात्तः कस्मिन्ननुदात्तः, कियान् वोदात्तः, कियान् वानुदात्त इति। तदुभयमनेनाख्यायते। तस्य स्वरितस्यादावर्धह्रस्वम् उदात्तम्, परिशिष्टम् अनुदात्तम्। अर्धह्रस्वम् इति चार्धमात्रोपलक्ष्यते। ह्रस्वग्रहणमतन्त्रम्। सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेष स्वरविभागः। शिक्यंम् इत्यत्रार्धमात्रादित उदात्ता, अपरार्धमात्रानुदात्ता, एकश्रुतिर्वा। कुन्यां इत्यत्रार्धमात्रादित उदात्ता, अध्यर्धमात्रानुदात्ता। माणवकं३ माणवक इत्यत्रार्धमात्रादित उदात्ता, अर्धतृतीयमात्रानुदात्ता॥

## एकश्रुति दूरात् संबुद्धौ ॥ ३३ ॥

त्रैस्वर्ये पदानां प्राप्ते दूरात् संबुद्धावैकश्रुत्यं विधीयते। एका श्रुतिर्यस्य तदिदमेकश्रुति। एकश्रुति वाक्यं भवति। दूरात् संबोधयति येन वाक्येन तत् संबोधनं संबुद्धिः, न

---

१ - ' उदात्तानुदात्तस्वरसमाहारः ' इति मुद्रितेषु।

'एकवचनं संबुद्धिः' (२.३.४९)। स्वराणामुदात्तादीनामविभागो भेदतिरोधानमेकश्रुतिः। आगच्छ भो माणवक देवदत्त३। दूराद् इति किम्? आगच्छ भो माणवक देवदत्त३॥

## यज्ञकर्मण्यजपन्यूङ्खसामसु ॥ ३४ ॥

त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते। तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्त एकश्रुतिर्विधीयते। जपन्यूङ्खसामानि वर्जयित्वा यज्ञकर्मणि मन्त्राणामैकश्रुत्यं भवति। अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म् (ऋ० ८.४४.१६)। यज्ञकर्मणीति किम्? संपाठे मा भूत्। अजपेष्विति किम्? ममाग्ने वर्चो विहवेष्वस्तु (ऋ० १०.१२८.१)। जपोऽनुकरणमन्त्रः[1], उपांशुप्रयोगः। अन्यूङ्खेष्विति किम्? न्यूङ्खा ओकाराः षोडश (द्र०—आश्व० श्रौ० उत्तरार्द्ध १.११)। तेषु केचिदुदात्ताः केचिदनुदात्ताः। असामस्विति किम्? ए३ विश्वं समत्रिणं दह[2] (जै० सं० ४.८.६)। सामानि वाक्यविशेषस्था गीतय उच्यन्ते। तत्रैकश्रुतिर्न भवति॥

## उच्चैस्तरां वा वषट्कारः ॥ ३५ ॥

यज्ञकर्मणीति वर्तते। यज्ञकर्मणि वषट्कार उच्चैस्तरां वा भवति एकश्रुतिर्वा। वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते। वौषड् इत्यस्यैवेदं स्वरविधानम्। यद्येवं वौषड्ग्रहणमेव कस्माद् न कृतम्? वैचित्र्यार्थम्। विचित्रा हि सूत्रस्य कृतिः पाणिनेः। सोमस्याग्ने वीही३ वौ३षट्। सोमस्याग्ने वीही३ वौ३षट् (तु०—ऐ० ब्रा० ३.५, ६)॥

## विभाषा छन्दसि ॥ ३६ ॥

छन्दसि विषये विभाषैकश्रुतिर्भवति, पक्षान्तरे त्रैस्वर्यमेव भवति। वेति प्रकृते विभाषाग्रहणं यज्ञकर्मणीत्यस्य निवृत्त्यर्थम्। तेनायं स्वाध्यायकालेऽपि पाक्षिक ऐकश्रुत्यविधिर्भवति। इषे त्वोर्जे त्वा, इषे त्वोर्जे त्वा (मा० सं० १.१)। अग्न आ याहि वीतये, अग्न आ याहि वीतये (कौ० सं० १.१.१)। अग्निमीळे पुरोहितम्, अग्निमीळे पुरोहितम् (ऋ० १.१.१)। शन्नो देवीरभिष्टये, शन्नो देवीरभिष्टये (शौ० सं० १.६.१)[3]॥

---

१ – 'अकरणमन्त्रः' इति पाठभेदः, स च युक्ततरः। 'अन्तःकरणमन्त्रः' इति पद०।

२ – 'ए३' इति गीतिपूरणोऽनेकमात्रः, न प्लुतः। मुद्रितसंहितायां स्वरो नोपलभ्यते।

३ – 'व्यवस्थितविकल्पोऽयमिति केचित्। व्यवस्था च वेदे मन्त्रदले नित्यं त्रैस्वर्यं ब्राह्मणदले नित्यमैकश्रुत्यमिति। "इच्छासंहितयोरार्षे छन्दो वेदे च छन्दसि" इति नानार्थकोशात्। छन्दसि वर्णसंहितायामिति भट्टाचार्यचरणा इति। भाषायामप्येकश्रुतिर्विभाषा भवतीति सिद्धम्।' इत्यपि क्वाचित्कः पाठः।

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ ३७ ॥

सुब्रह्मण्या नाम निगदस्तत्र 'यज्ञकर्मण्य०' (१.२.३४) इति 'विभाषा छन्दसि' (१.२.३६) इति चैकश्रुतिः प्राप्ता प्रतिषिध्यते। सुब्रह्मण्यायामेकश्रुतिर्न भवति। यस्तु लक्षणप्राप्तः स्वरितस्तस्योदात्त आदेशो भवति। सुब्रह्मण्यो३म्, इन्द्रागच्छ, हरिव आगच्छ, मेधातिथेर्मेष, वृषणश्वस्य मेने, गौरावस्कन्दिन्नहल्यायै जार, कौशिकब्राह्मण गौतमब्रुवाण, श्वः सुत्यामागच्छ मघवन् (श० ब्रा० ३.३.४.१७—१९)। अत्र सुब्रह्मण्योमित्योकारस्तित्स्वरेण स्वरितस्तस्योदात्तो विधीयते। इन्द्र आगच्छेत्यामन्त्रितमाद्युदात्तं द्वितीयो वर्णोऽनुदात्तः। 'उदात्तादनुदात्तस्य स्वरितः' (८.४.६६) इति स्वरितः प्रसक्तस्तस्यानेनोदात्तः क्रियते। तेन द्वावप्युदात्तौ संपन्नौ। आगच्छेत्याकार उदात्तः। ततः परोऽनुदात्तः स्वरितस्तस्यानेनोदात्तः क्रियते। तदेवमिन्द्र आगच्छेति चत्वार उदात्ताः। पश्चिम एकोऽनुदात्तः। हरिव आगच्छेत्यनयैव प्रक्रियया चत्वार उदात्ता द्वावनुदात्तौ। मेधातिथेरिति षष्ठ्यन्तं परमामन्त्रितमनुप्रविशति। 'सुबामन्त्रिते पराङ्गवत् स्वरे' (२.१.२) इति। ततः सकलस्यामन्त्रिताद्युदात्तत्वे कृते द्वितीयमक्षरमनुदात्तम्, तस्य 'उदात्तादनुदात्तस्य स्वरितः' (८.४.६६) इति स्वरितत्वे प्राप्त इदमुदात्तत्वं विधीयते। तेन द्वावप्युदात्तौ भवतः, शेषमनुदात्तम्। वृषणश्वस्य मेने इति समानं पूर्वेण। गौरावस्कन्दिन्निति तथैव द्वे आद्ये अक्षरे उदात्ते, शेषमनुदात्तम्। अहल्यायै जारेति सुबन्तस्यामन्त्रितानुप्रवेशात् तद्वदेव स्वरः। द्वावुदात्तौ, शेषमनुदात्तम्। कौशिकब्राह्मणेति समस्तमामन्त्रितमाद्युदात्तं तत्र पूर्ववद् द्वावुदात्तौ, शेषमनुदात्तम्। एवं गौतमब्रुवाणेति द्वावुदात्तौ, शेषमनुदात्तम्। श्वः सुत्यामागच्छ मघवन्निति श्वःशब्द उदात्तः सुत्यामित्यन्तोदात्तः। 'संज्ञायां समजनिषद०' (३.३.९९) इति क्यपो विधान उदात्त इति वर्तते। आगच्छेति द्वावुदात्तौ। अन्त्योऽनुदात्तः। मघवन्निति पदात् परमामन्त्रितं निहन्यते॥

## देवब्रह्मणोरनुदात्तः ॥ ३८ ॥

सुब्रह्मण्यायामेव देवा ब्रह्माण इति पठ्यते, तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते। देवब्रह्मणोः स्वरितस्यानुदात्त आदेशो भवति। देवा ब्रह्माण आगच्छत (श० ब्रा० ३.३.४.२०)। द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्य स्वरितः कृतस्तस्यानुदात्तो भवति॥

## स्वरितात् संहितायामनुदात्तानाम् ॥ ३९ ॥

एकश्रुतिरिति वर्तते। संहितायां विषये स्वरितात् परेषामनुदात्तानामेकश्रुतिर्भवति। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि (ऋ० १०.७५.५)। माणवक जटिलकाध्यापक क्व गमिष्यसि। इममित्यन्तोदात्तम्, मे इत्यनुदात्तम्, विधिकाल एव निघातविधानात्। तत्पुनर्

'उदात्तादनुदात्तस्य स्वरितः' ( ८.४.६६ ) इति स्वरितं संपद्यते। तस्मात् स्वरितात् परेषामनुदात्तानां गङ्गेप्रभृतीनामेकश्रुतिर्भवति। सर्व एत आमन्त्रितनिघातेनानुदात्ताः। माणवक जटिलकेति प्रथममामन्त्रितमाद्युदात्तं तस्य द्वितीयमक्षरं स्वरितम्, ततः परेषामनुदात्तानामेकश्रुतिर्भवति। संहिताग्रहणं किम् ? अवग्रहे मा भूत्—इमं। मे। गङ्गे। यमुने। सुरस्वति ( ऋ० १०.७५.५ )।

## उदात्तस्वरितपरस्य सन्नतरः ॥ ४० ॥

अनुदात्तग्रहणमनुवर्तते। उदात्तः परो यस्मात् स उदात्तपरः, स्वरितः परो यस्मात् स स्वरितपरः। उदात्तपरस्य स्वरितपरस्य चानुदात्तस्य सन्नतर आदेशो भवति। अनुदात्ततर इत्यर्थः। देवा मरुतः पृश्निमातरोऽपः ( पै० सं० ३.३१.१ )। मातर इत्यनुदात्तः। अप इत्यन्तोदात्तः, 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' ( ६.१.१७१ ) इति। तत्रानुदात्तयोरेकादेश ओकारोऽनुदात्तः। तस्योदात्ते परभूते सन्नतर आदेशो भवति। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि ( ऋ० १०.७५.५ )। इकारोऽनुदात्तः। शुतुद्रि इत्येतदामन्त्रितं पादादौ, तस्माद् न निहन्यते, 'अनुदात्तं सर्वमपादादौ' ( ८.१.१८ ) इति, तस्य प्रथममक्षरमुदात्तं तस्मिन् परभूते पूर्वस्य सरस्वतीतीकारस्य सन्नतर आदेशो भवति। माणवक जटिलकाध्यापक क्व गमिष्यसि। क्व इति स्वरितस्तस्मिन् परभूते क इत्यनुदात्तस्तस्य सन्नतर आदेशो भवति॥

## अपृक्त एकाल्प्रत्ययः ॥ ४१ ॥

अपृक्त इतीयं संज्ञा भवति एकाल् यः प्रत्ययस्तस्य। असहायवाची एकशब्दः। 'स्पृशोऽनुदके क्विन्' ( ३.२.५८ )—घृतस्पृक्। 'भजो ण्विः' ( ३.२.६२ )—अर्धभाक्। पादभाक्। एकालिति किम्? दर्विः। जागृविः। प्रत्यय इति किम् ? सुराः। अपृक्तप्रदेशाः—'वेरपृक्तस्य' ( ६.१.६७ ) इत्येवमादयः॥

## तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ ४२ ॥

'तत्पुरुषः' ( २.१.२२ ) इति समासविशेषस्य संज्ञां वक्ष्यति। स तत्पुरुषः समानाधिकरणपदः कर्मधारयसंज्ञो भवति। अधिकरणशब्दोऽभिधेयवाची। समानाधिकरणः समानाभिधेयः। परमराज्यम्। उत्तमराज्यम्। 'अकर्मधारये राज्यम्' ( ६.२.१३० ) इत्युत्तरपदाद्युदात्तं न भवति। पाचकवृन्दारिका। तत्पुरुष इति किम्? पाचिकाभार्यः। समानाधिकरण इति किम्? ब्राह्मणराज्यम्। कर्मधारयप्रदेशाः—'कर्मधारयेऽनिष्ठा' ( ६.२.४६ ) इत्येवमादयः[1]॥

---

१ - 'कर्मधारयप्रदेशाः—'पुंवत् कर्मधारयजातीयदेशीयेषु' ( ६.३.४२ ) इत्येवमादयः' इति पाठान्तरम्।

## प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ ४३ ॥

प्रथमया विभक्त्या यद् निर्दिश्यते समासशास्त्रे तदुपसर्जनसंज्ञं भवति। समास इति समासविधायि शास्त्रं गृह्यते। वक्ष्यति—'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (२.१.२४) इति द्वितीयासमासे द्वितीयेत्येतत् प्रथमानिर्दिष्टम्, तृतीयासमासे तृतीयेति, चतुर्थीसमासे चतुर्थीति, पञ्चमीसमासे पञ्चमीति, षष्ठीसमासे षष्ठीति, सप्तमीसमासे सप्तमीति। कष्टश्रितः। शङ्कुलाखण्डः। यूपदारु। वृकभयम्। राजपुरुषः। अक्षशौण्डः। उपसर्जनप्रदेशाः—'उपसर्जनं पूर्वम्' (२.२.३०) इत्येवमादयः॥

## एकविभक्ति चापूर्वनिपाते ॥ ४४ ॥

एका विभक्तिर्यस्य तदिदमेकविभक्ति। समासे विधीयमाने यद् नियतविभक्तिकं द्वितीये संबन्धिनि बहुभिर्विभक्तिभिर्युज्यमानेऽप्येकयैव विभक्त्या युज्यते तदुपसर्जनसंज्ञं भवत्यपूर्वनिपाते, पूर्वनिपातं पूर्वनिपाताख्यमुपसर्जनकार्यं वर्जयित्वा। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' (२.२.१८ वा०)। पूर्वपदे नानाविभक्तिकेऽप्युत्तरपदं तु पञ्चम्यन्तमेव भवति। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। निष्क्रान्तं कौशाम्ब्या निष्कौशाम्बिम्। निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना। निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये। निष्क्रान्तात् कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्तस्य कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ। एवं निर्वाराणसिः। एकविभक्तीति किम्? राजकुमारी। अपूर्वनिपात इति किम्? न हि भवति कौशाम्बीनिरिति॥

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ ४५ ॥

अभिधेयवचनोऽर्थशब्दः। अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति धातुप्रत्ययौ वर्जयित्वा। डित्थः। कपित्थः। कुण्डम्। पीठम्। अर्थवदिति किम्? वनम्, धनमिति नान्तस्यावधेर्मा भूत्। नलोपो हि स्यात्। अधातुरिति किम्? हन्तेर्लङ्—अहन्। नलोपः स्यात्। अप्रत्यय इति किम्? काण्डे। कुड्ये। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७) इति ह्रस्वः स्यात्। अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते। अध्यागच्छति। प्रलम्बते[1]। प्रातिपदिकप्रदेशाः—'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७) इत्येवमादयः॥

## कृत्तद्धितसमासाश्च ॥ ४६ ॥

कृतस्तद्धिताः समासाश्च प्रातिपदिकसंज्ञा भवन्ति। अप्रत्यय इति पूर्वसूत्रे पर्युदासात्

---

१ – अनर्थकस्येत्यारभ्य प्रलम्बत इत्यन्तः पाठो न सार्वत्रिकः।

कृदन्तस्य तद्धितान्तस्य चानेन प्रातिपदिकसंज्ञा विधीयते। अर्थवत्समुदायानां समासग्रहणं नियमार्थम्। कृत्—कारकः। हारकः। कर्ता। हर्ता। तद्धितः—औपगवः। कापटवः। समासः—राजपुरुषः। ब्राह्मणकम्बलः। समासग्रहणस्य नियमार्थत्वाद् वाक्यस्यार्थवतः संज्ञा न भवति॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ ४७ ॥

नपुंसकलिङ्गेऽर्थे यत् प्रातिपदिकं वर्तते, तस्य ह्रस्वो भवत्यादेशोऽलोऽन्त्यस्याचः। अतिरि कुलम्। अतिनु कुलम्। नपुंसक इति किम्? ग्रामणीः। सेनानीः। प्रातिपदिकस्येति किम्? काण्डे तिष्ठतः। कुड्ये तिष्ठतः। प्रातिपदिकग्रहणसामर्थ्यादेकादेशः पूर्वस्यान्तवद् न भवति॥

## गोस्त्रियोरुपसर्जनस्य ॥ ४८ ॥

प्रातिपदिकस्येति वर्तते। गो इति स्वरूपग्रहणम्, स्त्रीति प्रत्ययग्रहणं स्वरितत्वात्। उपसर्जनग्रहणं तयोर्विशेषणम्, गोरुपसर्जनस्य स्त्रीप्रत्ययान्तस्योपसर्जनस्येति। ताभ्यां प्रातिपदिकस्य तदन्तविधिः। उपसर्जनगोशब्दान्तस्य उपसर्जनस्त्रीप्रत्ययान्तान्तस्य च प्रातिपदिकस्य ह्रस्वो भवति। चित्रगुः। शबलगुः। स्त्रियाः—निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः। उपसर्जनस्येति किम्? राजकुमारी। स्वरितत्वं किम्? अतितन्त्रीः। अतिलक्ष्मीः। अतिश्रीः ॥ ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः॥ बहुश्रेयसी। विद्यमानश्रेयसी॥

## लुक् तद्धितलुकि ॥ ४९ ॥

स्त्रीग्रहणमनुवर्तत उपसर्जनस्येति च। पूर्वेण ह्रस्वत्वे प्राप्ते लुग् विधीयते। तद्धितलुकि सति स्त्रीप्रत्ययस्योपसर्जनस्य लुग् भवति। पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः। दशेन्द्रः। पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलः। आमलक्याः फलमामलकम्। बदरम्। कुवलम्। तद्धितग्रहणं किम्? गार्ग्याः कुलं गार्गीकुलम्। लुकीति किम्? गार्गीत्वम्। उपसर्जनस्येत्येव—अवन्ती। कुन्ती। कुरूः॥

## इद् गोण्याः ॥ ५० ॥

पूर्वेण लुकि प्राप्त इकारो विधीयते। गोण्यास्तद्धितलुकि सतीकारादेशो भवति। पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः। दशगोणिः। इदिति योगविभागः। पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिः। दशसूचिः। स च एवंविषय एव॥

## लुपि युक्तवद् व्यक्तिवचने ॥ ५१ ॥

लुपीति लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थ उच्यते। तत्र लुपि युक्तवद् व्यक्तिवचने भवतः। युक्तवदिति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यते। स हि प्रत्ययार्थमात्मना युनक्ति। तस्य युक्तवतो व्यक्तिवचने लुबर्थे विधीयेते। अथवा युक्तः प्रकृत्यर्थः प्रत्ययार्थेन संबद्धस्तस्मिन्निव व्यक्तिवचने लुबर्थे भवतः। सप्तम्यर्थे व्रतिः। व्यक्तिवचने इति च लिङ्गसंख्ययोः पूर्वाचार्यनिर्देशः, तदीयमेवेदं सूत्रम्। तथा चास्य प्रत्याख्यानं भविष्यति— 'तदशिष्यं संज्ञाप्रमाणत्वाद्' (१.२.५३) इति। व्यक्तिः स्त्रीपुंनपुंसकानि, वचनमेकत्व-द्वित्वबहुत्वानि। पञ्चालाः क्षत्रियाः पुँल्लिङ्गाः बहुवचनविषयाः। तेषां निवासो जनपदः, यथा तेषु क्षत्रियेषु व्यक्तिवचने, तद्वज्जनपदे भवतः। पञ्चालाः। कुरवः। मगधाः। मत्स्याः। अङ्गाः। वङ्गाः। सुह्माः। पुण्ड्राः। लुपीति किम्? लुकि मा भूत्—लवणः सूपः। लवणा यवागूः। लवणं शाकम्। व्यक्तिवचने इति किम्? शिरीषाणामदूरभवो ग्रामः शिरीषास्तस्य वनं शिरीषवनम्। 'विभाषौषधिवनस्पतिभ्यः' (८.४.६) इति णत्वं न भवति ॥ हरीतक्यादिषु व्यक्तिः ॥ हरीतक्याः फलानि, हरीतक्यः फलानि ॥ खलतिकादिषु वचनम् ॥ खलतिकस्य पर्वतस्यादूरभवानि वनानि, खलतिकं वनानि ॥

## विशेषणानां चाजातेः ॥ ५२ ॥

लुपीति वर्तते। लुबर्थस्य यानि विशेषणानि तेषामपि च युक्तवद् व्यक्तिवचने भवतो जातिं वर्जयित्वा। पञ्चालाः रमणीयाः बह्वन्नाः बहुक्षीरघृताः बहुमाल्यफलाः। गोदौ रमणीयौ बह्वन्नौ बहुक्षीरघृतौ बहुमाल्यफलौ। अजातेरिति किम्? पञ्चालाः जनपदः। गोदौ ग्रामः। जात्यर्थस्य चायं युक्तवद्भावप्रतिषेधः। तेन जातिद्वारेण यानि विशेषणानि तेषामपि युक्तवद्भावो न भवति। पञ्चालाः जनपदो रमणीयो बह्वन्नः। गोदौ ग्रामो रमणीयो बह्वन्न इति ॥ मनुष्यलुपि प्रतिषेधो वक्तव्यः ॥ चञ्चाभिरूपः। वर्ध्रिका दर्शनीयः ॥

## तदशिष्यं संज्ञाप्रमाणत्वात् ॥ ५३ ॥

तदिति प्रकृतं युक्तवद्भावलक्षणं निर्दिश्यते। तदशिष्यम्, न वक्तव्यम्। कस्मात्? संज्ञाप्रमाणत्वात्। संज्ञाशब्दा हि नानालिङ्गसंख्याः प्रमाणम्। पञ्चाला वरणा इति च। नैते योगशब्दाः। किं तर्हि? जनपदादीनां संज्ञा एताः। तत्र लिङ्गं वचनं च स्वभावसिद्धमेव न यत्नप्रतिपाद्यम्। यथा—आपो दाराः गृहाः सिकता वर्षा इति ॥

## लुब् योगाप्रख्यानात् ॥ ५४ ॥

लुबप्यशिष्यः। योऽयं 'जनपदे लुप्' (४.२.८१) 'वरणादिभ्यश्च' (४.२.८२) इति लुबुच्यते, अयं न वक्तव्यः। किं कारणम् ? योगाप्रख्यानात्। न हि पञ्चाला वरणा इति योगः संबन्धः प्रख्यायते। नैतदुपलभामहे वृक्षयोगाद् नगरे वरणा इति। किं तर्हि? संज्ञा एताः। तस्मादत्र 'तस्य निवासः' (४.२.६९) 'अदूरभवश्च' (४.२.७०) इति तद्धितो नैवोत्पद्यते, किं लुपो विधानेन॥

## योगप्रमाणे च तदभावेऽदर्शनं स्यात् ॥ ५५ ॥

पञ्चालादयः संज्ञाशब्दाः, न योगनिमित्ता इत्युक्तम्, तच्चावश्यमेवाभ्युपगन्तव्यम्। योगप्रमाणे हि तदभावेऽदर्शनं स्यात्। यदि पञ्चालादिशब्दो योगस्य प्रमाणं योगस्य वाचकः स्यात्, ततस्तदभावेऽदर्शनमप्रयोगः स्यात्। दृश्यते च संप्रति विनैव क्षत्रियसंबन्धेन जनपदेषु पञ्चालादिशब्दः, ततोऽवसीयते नायं योगनिमित्तकः। किं तर्हि? रूढिरूपेणैव तत्र प्रवृत्त इति॥

## प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ ५६ ॥

अशिष्यमिति वर्तते। प्रधानं समासे किंचित् पदम्, प्रत्ययस्तव्यदादिः, ताभ्यामर्थवचनमर्थाभिधानमनेन प्रकारेण भवतीति पूर्वाचार्यैः परिभाषितम्—प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः, प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति। तत् पाणिनिराचार्यः प्रत्याचष्टे। अशिष्यमेतत्, अर्थस्यान्यप्रमाणत्वादिति। अन्य इति शास्त्रापेक्षया लोको व्यपदिश्यते। शब्दैरर्थाभिधानं स्वाभाविकं न पारिभाषिकम्, अशक्यत्वात्, लोकत एवार्थावगतेः। यैरपि व्याकरणं न श्रुतं तेऽपि राजपुरुषमानयेत्युक्ते राजविशिष्टं पुरुषमानयन्ति, न राजानं नापि पुरुषमात्रम्। औपगवमानयेत्युक्त उपगुविशिष्टमपत्यमानयन्ति, नोपगुं नाप्यपत्यमात्रं नोभौ। यश्च लोकतोऽर्थः सिद्धः किं तत्र यत्नेन॥

## कालोपसर्जने च तुल्यम् ॥ ५७ ॥

अशिष्यमिति वर्तते। कालोपसर्जने चाशिष्ये। कस्मात्? अर्थस्यान्यप्रमाणत्वात्। तुल्यशब्दो हेत्वनुकर्षणार्थः। अशिष्यविशेषणं चैतत्। कालोपसर्जने च तुल्यमशिष्ये भवतः। इहान्ये वैयाकरणाः कालोपसर्जनयोः परिभाषां कुर्वन्ति—आ न्याय्यादुत्थानादा न्याय्याच्च संवेशनात्—एषोऽद्यतनः कालः। अपरे पुनराहुः—अहरुभयतोऽर्धरात्रम्—एषोऽद्यतनः काल इति। तथोपसर्जनपरिभाषां कुर्वन्ति—अप्रधानमुपसर्जनमिति। तत् पाणिनिराचार्यः प्रत्याचष्टे लोकतोऽर्थावगतेः। यैरपि व्याकरणं न श्रुतम्, तेऽप्याहुः—इदमस्माभिरद्य कर्तव्यमिदं श्वः कर्तव्यमिदं ह्यः कृतमिति। नैवं व्युत्पाद्यन्ते। तथोपसर्जनं वयमत्र गृहे ग्रामे वा। उपसर्जनमप्रधानमिति गम्यते। यश्च लोकतोऽर्थः सिद्धः किं तत्र

यत्नेन। यद्येवं पूर्वसूत्र एव कालोपसर्जनग्रहणं कस्माद् न क्रियते ? किमर्थो योगविभागः? प्रदर्शनार्थः। अन्यदप्येवंजातीयकमशिष्यमिति। तथा च पूर्वाचार्याः परिभाषन्ते—मत्वर्थे बहुव्रीहिः, पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, उभयपदार्थप्रधानो द्वन्द्व इत्येवमादि, तदशिष्यमिति॥

## जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ॥ ५८ ॥

अशिष्यमिति निवृत्तम्। जातिर्नामायमेकोऽर्थः, तदभिधान एकवचनमेव प्राप्तम्, अत इदमुच्यते। जातेराख्या जात्याख्या जात्याख्यायामेकस्मिन्नर्थे बहुवचनमन्यतरस्यां भवति। जात्यर्थो बहुवद् भवतीति यावत्। तेन तद्विशेषणानामजातिशब्दानामपि संपन्नादीनां बहुवचनमुपपद्यते। संपन्नो यवः। संपन्ना यवाः। संपन्नो व्रीहिः। संपन्ना व्रीहयः। पूर्ववया ब्राह्मणः प्रत्युत्थेयः। पूर्ववयसो ब्राह्मणाः प्रत्युत्थेयाः। जातिग्रहणं किम्? देवदत्तः। यज्ञदत्तः। आख्यायामिति किम्? काश्यपप्रतिकृतिः काश्यपः। भवत्ययं जातिशब्दो न त्वनेन जातिराख्यायते। किं तर्हि ? प्रतिकृतिः। एकस्मिन्निति किम्? व्रीहियवौ ॥संख्याप्रयोगे प्रतिषेधो वक्तव्यः॥ एको व्रीहिः संपन्नः सुभिक्षं करोति॥

## अस्मदो द्वयोश्च ॥ ५९ ॥

अस्मदो योऽर्थस्तस्यैकत्वे द्वित्वे च बहुवचनमन्यतरस्यां भवति। अहं ब्रवीमि, वयं ब्रूमः। आवां ब्रूवः, वयं ब्रूमः ॥ सविशेषणस्य प्रतिषेधो वक्तव्यः॥ अहं देवदत्तो ब्रवीमि। अहं गार्ग्यो ब्रवीमि। अहं पटुर्ब्रवीमि ॥ युष्मदि गुरावेकेषाम्॥ त्वं मे गुरुः। यूयं मे गुरवः॥

## फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ ६० ॥

चकारो द्वयोरित्यनुकर्षणार्थः। फल्गुन्योर्द्वयोः प्रोष्ठपदयोश्च द्वयोर्नक्षत्रयोर्बहुवचनमन्यतरस्यां भवति। कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः। कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः। नक्षत्र इति किम्? फल्गुन्यौ माणविके॥

## छन्दसि पुनर्वस्वोरेकवचनम् ॥ ६१ ॥

अन्यतरस्यामित्यनुवर्तते। द्वयोर्द्विवचने प्राप्ते पुनर्वस्वोश्छन्दसि विषय एकवचनमन्यतरस्यां भवति। पुंनर्वसुर्नक्षत्रमदितिर्देवता ( मै० सं० २.१३.२० )। पुनर्वसू नक्षत्रमदितिर्देवता ( तै० सं० ४.४.१०.१ )। नक्षत्र इत्येव—पुनर्वसू माणवकौ। छन्दसीति

किम्? पुनर्वसू इति॥

## विशाखयोश्च ॥ ६२ ॥

छन्दसीति वर्तते, द्विवचने प्राप्ते छन्दसि विषये विशाखयोरेकवचनमन्यतरस्यां भवति। विशाखा[1] नक्षत्रमिन्द्राग्नी देवता ( मै० सं० २.१३.२० )। विशाखे नक्षत्रमिन्द्राग्नी देवता ( तै० सं० ४.४.१०.२ )॥

## तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ ६३ ॥

छन्दसीति निवृत्तम्। तिष्य एकः पुनर्वसू द्वौ, तेषां द्वन्द्वो बह्वर्थः। तत्र बहुवचने प्राप्ते द्विवचनं विधीयते। तिष्यपुनर्वस्वोर्नक्षत्रविषये द्वन्द्वे बहुवचनप्रसङ्गे नित्यं द्विवचनं भवति। उदितौ तिष्यपुनर्वसू दृश्येते। तिष्यपुनर्वस्वोरिति किम्? विशाखानुराधाः। नक्षत्र इति किम्? तिष्यश्च माणवकः पुनर्वसू माणवकौ तिष्यपुनर्वसवो माणवकाः। ननु च प्रकृतमेव नक्षत्रग्रहणं किमर्थं पुनरुच्यते? पर्यायाणामपि यथा स्यात्। तिष्यपुनर्वसू। पुष्यपुनर्वसू। सिद्ध्यपुनर्वसू। द्वन्द्व इति किम्? यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसवः। उन्मुग्धास्तिष्यादय एव विपर्ययेण दृश्यमाना बहुव्रीहिणोच्यन्ते। तेन नक्षत्रसमास एवायम्। बहुवचनस्येति किम्? एकवचनस्य मा भूत्, तिष्यपुनर्वसु इदमिति। 'सर्वो द्वन्द्वो विभाषैकवद् भवति' ( परि० ३४ ) इत्यस्यैतदेव ज्ञापकम्। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्॥

## सरूपाणामेकशेष एकविभक्तौ ॥ ६४ ॥

समानं रूपमेषामिति सरूपाः। सरूपाणां शब्दानामेकविभक्तौ परत एकशेषो भवति। एकः शिष्यते, इतरे निवर्तन्ते। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः। प्रत्यर्थं शब्दनिवेशाद् नैकेनानेकस्याभिधानम्, तत्रानेकार्थाभिधानेऽनेकशब्दत्वं प्राप्तम्, तस्मादेकशेषः। सरूपाणामिति किम्? प्लक्षन्यग्रोधाः। रूपग्रहणं किम्? भिन्नेऽप्यर्थे यथा स्यात्—अक्षाः। पादाः। माषाः। एकग्रहणं किम्? द्विबह्वोः शेषो मा भूत्। शेषग्रहणं किम्? आदेशो मा भूत्। एकविभक्ताविति किम्? पयः पयो जरयति। ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहि॥

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥ ६५ ॥

शेष इति वर्तते। यूनेति सहयोगे तृतीया। वृद्धो यूना सहवचने शिष्यते युवा

---

१ – 'विंशाखम्' इति संहितापाठः।

निवर्तते। वृद्धशब्दः पूर्वाचार्यसंज्ञा गोत्रस्य—अपत्यमन्तर्हितं वृद्धमिति। वृद्धयूनोः सहवचने वृद्धः शिष्यते तल्लक्षणश्चेदेव विशेषः। तदिति वृद्धयूनोर्निर्देशः। लक्षणशब्दो निमित्तपर्यायः। चेच्छब्दो यद्यर्थे। एवकारोऽवधारणे। विशेषो वैरूप्यम्। वृद्धयुवनिमित्तकमेव यदि वैरूप्यं भवति, ततो वृद्धः शिष्यते युवा निवर्तते। समानायामाकृतौ वृद्धयुवप्रत्ययौ भिद्येते। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वात्स्यश्च वात्स्यायनश्च वात्स्यौ। वृद्ध इति किम्? गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ। यूनेति किम्? गार्ग्यश्च गर्गश्च गार्ग्यगर्गौ। तल्लक्षण इति किम्? गार्ग्यवात्स्यायनौ। एवकारः किमर्थः? भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ। कुत्सा सौवीरत्वं च भागवित्तिकस्यापरो विशेषो विद्यते॥

## स्त्री पुंवच्च ॥ ६६ ॥

शेष इति वर्तते, वृद्धो यूनेति च सर्वम्। स्त्री वृद्धा यूना सहवचने शिष्यते, तल्लक्षणश्चेदेव विशेषो भवति। पुंस इवास्याः कार्यं भवति। स्त्र्यर्थः पुमर्थवद् भवति। गार्गी च गार्ग्यायणश्च गार्ग्यौ। वात्सी च वात्स्यायनश्च वात्स्यौ। दाक्षी च दाक्षायणश्च दाक्षी॥

## पुमान् स्त्रिया ॥ ६७ ॥

तल्लक्षणश्चेदेव विशेष इति वर्तते। वृद्धो यूनेति निवृत्तम्। स्त्रिया सहवचने पुमान् शिष्यते स्त्री निवर्तते, स्त्रीपुंसलक्षणश्चेदेव विशेषो भवति। ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ। कुक्कुटश्च कुक्कुटी च कुक्कुटौ। तल्लक्षणश्चेदेव विशेष इत्येव—कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ। एवकारः किमर्थः? इन्द्रश्चेन्द्राणी चेन्द्रेन्द्राण्यौ। 'पुंयोगादाख्यायाम्' (४.१.४८) इत्यपरो विशेषः। पुमानिति किम्? प्राक् च प्राची च प्राक्प्राच्यौ। प्रागित्यव्ययमलिङ्गम्॥

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥

यथासंख्यं भ्रातृपुत्रशब्दौ शिष्येते सहवचने स्वसृदुहितृभ्याम्। स्वस्रा सहवचने भ्रातृशब्दः शिष्यते। भ्राता च स्वसा च भ्रातरौ। दुहित्रा सहवचने पुत्रशब्दः शिष्यते। पुत्रश्च दुहिता च पुत्रौ॥

## नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ६९ ॥

तल्लक्षणश्चेदेव विशेष इति वर्तते। नपुंसकानपुंसकमात्रकृते विशेषेऽनपुंसकेन सहवचने नपुंसकं शिष्यते, एकवच्चास्य कार्यं भवत्यन्यतरस्याम्। शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्लम्। तानीमानि शुक्लानि। अनपुंसकेनेति

किम् ? शुक्लं च शुक्लं च शुक्लं च शुक्लानि। एकवच्चेति न भवति॥

## पिता मात्रा ॥ ७० ॥

अन्यतरस्यामिति वर्तते नैकवदिति। मात्रा सहवचने पितृशब्दः शिष्यतेऽन्यतरस्याम्। माता च पिता च पितरौ, मातापितराविति वा॥

## श्वशुरः श्वश्र्वा ॥ ७१ ॥

अन्यतरस्यामिति वर्तते। श्वश्र्वा सहवचने श्वशुरशब्दः शिष्यतेऽन्यतरस्याम्। श्वशुरश्च श्वश्रूश्च श्वशुरौ, श्वश्रूश्वशुराविति वा॥

## त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥

त्यदादीनि शब्दरूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते, त्यदादिभिरन्यैश्च। सर्वग्रहणं साकल्यार्थम्। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। स च देवदत्तश्च तौ। यश्च देवदत्तश्च यौ ॥त्यदादीनां मिथो यद् यत् परं तत् तच्छिष्यते॥ स च यश्च यौ। यश्च कश्च कौ॥

## ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥ ७३ ॥

ग्राम्याणां पशूनां सङ्घा ग्राम्यपशुसङ्घाः। एतेषु सह विवक्षायां स्त्री शिष्यते। 'पुमान् स्त्रिया' (१.२.६७) इति पुंसः शेषे प्राप्ते स्त्रीशेषो विधीयते। अतरुणग्रहणं सामर्थ्यात् पशुविशेषणम्। गाव इमाः। अजा इमाः। ग्राम्यग्रहणं किम्? रुरव इमे। पृषता इमे। पशुष्विति किम्? ब्राह्मणाः। क्षत्रियाः। सङ्घेष्विति किम्? एतौ गावौ चरतः। अतरुणेष्विति किम्? वत्सा इमे। बर्करा इमे ॥ अनेकशफेष्विति वक्तव्यम्॥ इह मा भूत्—अश्वा इमे॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य द्वितीयः पादः॥



# ॥ प्रथमाध्यायस्य तृतीयः पादः ॥

## भूवादयो धातवः ॥ १ ॥

भू इत्येवमादयः शब्दाः क्रियावचना[1] धातुसंज्ञका भवन्ति। भू—भवति। एध—एधते। स्पर्ध—स्पर्धते। धातुशब्दः पूर्वाचार्यसंज्ञा। ते च क्रियावचनानां संज्ञां कृतवन्तः। तदिहापि पूर्वाचार्यसंज्ञाश्रयणात् क्रियावाचिनामेव भूवादीनां धातुसंज्ञा विधीयते।

भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते।
भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः॥

धातुप्रदेशाः—'धातोः' (३.१.९१) इत्येवमादयः॥

## उपदेशेऽजनुनासिक इत् ॥ २ ॥

उपदिश्यतेऽनेनेत्युपदेशः शास्त्रवाक्यानि, सूत्रपाठः खिलपाठश्च। तत्र योऽच् अनुनासिकः स इत्संज्ञो भवति। एध। स्पर्द्ध। 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' (व्या० प० १२१)। उपदेश इति किम्? अभ्र आँ अपः (ऋ० ५.४८.१)। अजिति किम्? 'आतो मनिन्क्वनिब्वनिपश्च' (३.२.७४)। अनुनासिक इति किम्? सर्वस्याचो मा भूत्। इत्प्रदेशाः—'आदितश्च' (७.२.१६) इत्येवमादयः॥

## हलन्त्यम् ॥ ३ ॥

उपदेश इति वर्तते। अन्ते भवमन्त्यम्। धात्वादेः समुदायस्य यदन्त्यं हल्, तदित्संज्ञं भवति। अइउण्—णकारः। ऋऌक्—ककारः। एओङ्—ङकारः। ऐऔच्—चकारः। उपदेश इत्येव—अग्निचित्। सोमसुत्। हस्य ल् हलिति[2] द्वितीयमत्र हल्ग्रहणं तन्त्रेणोपात्तं द्रष्टव्यम्। तेन प्रत्याहारपाठे हलित्यत्र लकारस्येत्संज्ञा क्रियते। तथा च सति हलन्त्यमित्यत्र प्रत्याहारे नेतरेतराश्रयदोषो भवति॥

## न विभक्तौ तुस्माः ॥ ४ ॥

पूर्वेण प्राप्तायामित्संज्ञायां विभक्तौ वर्तमानानां तवर्गसकारमकाराणां प्रतिषेध उच्यते। तवर्ग—'टाङसिङसामिनात्स्याः' (७.१.१२)—वृक्षात्। प्लक्षात्। सकार—जस्—ब्राह्मणाः। तस्, थस्—पचतः, पचथः। मकार—अपचताम्। अपचतम्। विभक्ताविति किम्? 'अचो यत्' (३.१.९७)। 'ऊर्णाया युस्' (५.२.१२३)। 'रुधादिभ्यः श्नम्'

---

१ - 'क्रियावचना' इति नास्ति न्यासे। २ - 'हलूहलिति' पाठान्तरम्।

(३.१.७८)। 'किमोऽत्' (५.३.१२), 'इटोऽत्' (३.४.१०६) इत्यत्र प्रतिषेधो न भवति, अनित्यत्वादस्य प्रतिषेधस्य। 'इदमस्थमुः' (५.३.२४) इत्युकारानुबन्धनिर्देशादनित्यत्वमुपलक्ष्यते ॥

## आदिर्ञिटुडवः ॥ ५ ॥

इदिति वर्तते। आदिशब्दः प्रत्येकमभिसंबध्यते। ञि टु डु इत्येतेषां समुदायानामादितो वर्तमानानामित्संज्ञा भवति। ञिमिदा—मिन्नः। ञिधृषा—धृष्टः। ञिक्ष्विदा—क्ष्विण्णः[1]। ञिइन्धी—इद्धः। टुवेपृ—वेपथुः। टुओश्वि—श्वयथुः। डुपचष्—पक्त्रिमम्। डुवप्—उप्त्रिमम्। डुकृञ्—कृत्रिमम्। आदिरिति किम्? पटूयति। कण्डूयति। उपदेश इत्येव—ञिकारीयति ॥

## षः प्रत्ययस्य ॥ ६ ॥

षकारः प्रत्ययस्यादिरित्संज्ञो भवति। 'शिल्पिनि ष्वुन्' (३.१.१४५)—नर्तकी। रजकी। प्रत्ययस्येति किम्? षोडः। षण्डः। षडिकः। आदिरित्येव—'अविमह्योष्टिषच्' (प० उ० १.४५)—अविषः। महिषः ॥

## चुटू ॥ ७ ॥

चवर्गटवर्गौ प्रत्ययस्यादी इत्संज्ञौ भवतः। 'गोत्रे कुञ्जादिभ्यश्च्फञ्' (४.१.९८)—कौञ्जायन्यः। छस्येयादेशं वक्ष्यति। जस्—ब्राह्मणाः। झस्यान्तादेशं वक्ष्यति। 'शण्डिकादिभ्यो ञ्यः' (४.३.९२)—शाण्डिक्यः। टवर्गः—'चरेष्टः' (३.२.१६)—कुरुचरी। मद्रचरी। ठस्येकादेशं वक्ष्यति। 'सप्तम्यां जनेर्डः' (३.२.९७)—उपसरजः। मन्दुरजः। ढस्यैयादेशं वक्ष्यति। 'अन्नाण्णः' (४.४.८५)—आन्नः। पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थम्। 'तेन वित्तश्चुञ्चुप्चणपौ' (५.२.२६)—केशचुञ्चुः। केशचणः। 'अवात् कुटारच्च' (५.२.३०)—'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' (५.२.३१)—अवटीटः। आदिरित्येव—'कर्मणि घटोऽठच्' (५.२.३५)—कर्मठः ॥

## लशक्वतद्धिते ॥ ८ ॥

तद्धितवर्जितस्य प्रत्ययस्यादितो वर्तमाना लकारशकारकवर्गा इत्संज्ञा भवन्ति। लकार—'ल्युट् च' (३.३.११५)—चयनम्। जयनम्। शकार—'कर्तरि शप्' (३.१.६८)—भवति। पचति। कवर्ग—'क्तक्तवतू निष्ठा' (१.१.२६)—भुक्तः, भुक्तवान्। 'प्रियवशे वदः खच्' (३.२.३८)—प्रियंवदः। वशंवदः। 'ग्लाजिस्थश्च ग्स्नुः'

१ - 'ञिष्विदा—स्विन्नः' इति पाठान्तरम्।

(३.२.१३९)—ग्लास्नुः। जिष्णुः। भूष्णुः। 'भञ्जभासमिदो घुरच्' (३.२.१६१)—भङ्गुरम्। 'टाङसिङसामिनात्स्याः' (७.१.१२)—वृक्षात्। वृक्षस्य। अतद्धित इति किम्? चूडालः। लोमशः। कर्णिका॥

## तस्य लोपः ॥ ९ ॥

तस्येत्संज्ञकस्य लोपो भवति। तथा चैवोदाहृतम्। तस्यग्रहणं सर्वलोपार्थम्। अलोऽन्त्यस्य मा भूत्—'आदिर्ञिटुडवः' (१.३.५) इति॥

## यथासंख्यमनुदेशः समानाम् ॥ १० ॥

संख्याशब्देनात्र क्रमो लक्ष्यते। यथासंख्यं यथाक्रममनुदेशो भवति। अनुदिश्यत इत्यनुदेशः। पश्चादुच्चार्यत इत्यर्थः। समानां समसंख्यानां समपरिपठितानाम्[1] उद्देशिनामनुदेशिनां च यथाक्रममुद्देशिभिरनुदेशिनः संबध्यन्ते। 'तूदीशलातुरवर्मतीकूचवाराड् ढक्छण्ढञ्यकः' (४.३.९४)। प्रथमात् प्रथमः, द्वितीयाद् द्वितीय इत्यादि। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः। समानामिति किम्? 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' (१.४.९०)। लक्षणादयश्चत्वारोऽर्थाः, प्रत्यादयस्त्रयः। सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा भवति। इह कस्माद् न भवति—'वेशोयशआदेर्भगाद् यल्' (४.४.१३१), 'ख च' (४.४.१३२) इति? स्वरितेन लिङ्गेन यथासंख्यम्, यत्र नेष्यते तत्र स्वरितत्वं न प्रतिज्ञायते। 'स्वरितेनाधिकारः' (१.३.११) इति स्वरितग्रहणं पूर्वेणापि संबध्यते॥

## स्वरितेनाधिकारः ॥ ११ ॥

स्वरितेनेतीत्थंभूतलक्षणे (२.३.२१) तृतीया। स्वरितो नाम स्वरदोषो[2] वर्णधर्मः। तेन चिह्नेनाधिकारो वेदितव्यः। अधिकारो विनियोगः। स्वरितगुणयुक्तं शब्दरूपमधिकृतत्वादुत्तरत्रोपतिष्ठते। 'प्रतिज्ञास्वरिताः पाणिनीयाः' (व्या० प० १२२)। 'प्रत्ययः' (३.१.१)। 'धातोः' (३.१.९१)। 'ङ्याप्प्रातिपदिकात्' (४.१.१)। 'अङ्गस्य' (६.४.१)। 'भस्य' (६.४.१२९)। 'पदस्य' (८.१.१६)॥

## अनुदात्तङित आत्मनेपदम् ॥ १२ ॥

अविशेषेण धातोरात्मनेपदं परस्मैपदं च विधास्यते, तत्रायं नियमः क्रियते। अनुदात्तेतो ये धातवो ङितश्च तेभ्य एवात्मनेपदं भवति नान्येभ्यः। अनुदात्तेद्भ्यः—आस्—आस्ते। वस्—वस्ते। ङिद्भ्यः खल्वपि—षूङ्—सूते। शीङ्—शेते॥

---

१ - 'समगणनपरिपठितानाम्' इति न्यासः। २ - 'स्वरविशेषो' इति मुद्रितेषु।

## भावकर्मणोः ॥ १३ ॥

'लः कर्मणि च भावे चाकर्मकेभ्यः' ( ३.४.६९ ) इति भावकर्मणोर्विहितस्य लस्य तिबादयः सामान्येन वक्ष्यन्ते, तत्रेदमुच्यते, भावे कर्मणि चात्मनेपदं भवति। भावे— ग्लायते भवता। सुप्यते भवता। आस्यते भवता। कर्मणि—क्रियते कटः। ह्रियते भारः। कर्मकर्तरि—लूयते केदारः स्वयमेवेति परस्मैपदं न भवति। तस्य विधाने द्वितीयं कर्तृग्रहणमनुवर्तते। तेन कर्तैव यः कर्ता तत्र परस्मैपदं भवति॥

## कर्तरि कर्मव्यतिहारे ॥ १४ ॥

कर्मशब्दः क्रियावाची। व्यतिहारो विनिमयः। यत्रान्यसंबन्धिनीं क्रियामन्यः करोति, इतरसंबन्धिनीं चेतरः, स कर्मव्यतिहारः। तद्विशिष्टक्रियावचनाद् धातोरात्मनेपदं भवति। व्यतिलुनते। व्यतिपुनते। कर्मव्यतिहार इति किम्? लुनन्ति। कर्तृग्रहणमुत्तरार्थं 'शेषात् कर्तरि परस्मैपदम्' ( १.३.७८ ) इति॥

## न गतिहिंसार्थेभ्यः ॥ १५ ॥

पूर्वेणात्मनेपदं प्राप्तं प्रतिषिध्यते। गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्मव्यतिहार आत्मनेपदं न भवति। व्यतिगच्छन्ति। व्यतिसर्पन्ति। हिंसार्थेभ्यः—व्यतिहिंसन्ति। व्यतिघ्नन्ति ॥प्रतिषेधे हसादीनामुपसंख्यानम्॥ व्यतिहसन्ति। व्यतिजल्पन्ति। व्यतिपठन्ति ॥ हरतेरप्रतिषेधः॥ संप्रहरन्ते राजानः॥

## इतरेतरान्योऽन्योपपदाच्च ॥ १६ ॥

इतरेतरोऽन्योन्य इत्येवमुपपदाद् धातोः कर्मव्यतिहार आत्मनेपदं न भवति। इतरेतरस्य व्यतिलुनन्ति। अन्योऽन्यस्य व्यतिलुनन्ति ॥ परस्परोपपदाच्चेति वक्तव्यम्॥ परस्परस्य व्यतिलुनन्ति॥

## नेर्विशः ॥ १७ ॥

'शेषात् कर्तरि०' ( १.३.७८ ) इति परस्मैपदे प्राप्ते निपूर्वाद् विश आत्मनेपदं विधीयते। नेः परस्माद् विश आत्मनेपदं भवति। निविशते। निविशन्ते। नेरिति किम्? प्रविशति। 'यदागमास्तद्ग्रहणेन गृह्यन्ते' ( परि० ११ ), तेनाटा नास्ति व्यवधानम्। न्यविशत। नेरुपसर्गस्य ग्रहणम् 'अर्थवद्ग्रहणे नानर्थकस्य' ( परि० १४ ) इति। तस्मादिह न भवति—मधुनि विशन्ति भ्रमराः॥

## परिव्यवेभ्यः क्रियः ॥ १८ ॥

'डुक्रीञ् द्रव्यविनिमये' (क्र्या० १) ञित्त्वात् कर्त्रभिप्राये क्रियाफले सिद्धमात्मनेपदम्, अकर्त्रभिप्रायार्थोऽयमारम्भः। परिव्यवेभ्य उत्तरस्मात् क्रीणातेरात्मनेपदं भवति। परिक्रीणीते। विक्रीणीते। अवक्रीणीते। पर्यादय उपसर्गा गृह्यन्ते। तेनेह न भवति—बहुवि क्रीणाति वनम् ॥

## विपराभ्यां जेः ॥ १९ ॥

'शेषात् कर्तरि परस्मैपदम्' (१.३.७८) इत्यस्यापवादः। विपरापूर्वाज् जयतेर्धातोरात्मनेपदं भवति। विजयते। पराजयते। विपराशब्दावुपसर्गौ गृह्येते, साहचर्यात्। तेनेह न भवति—बहुवि जयति वनम्। परा जयति सेनेति ॥

## आङो दोऽनास्यविहरणे ॥ २० ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः। आङ्पूर्वाद् ददातेरनास्यविहरणे वर्तमानादात्मनेपदं भवति। विद्यामादत्ते। अनास्यविहरण इति किम्? आस्यं व्याददाति ॥ आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः॥ विपादिकां व्याददाति। कूलं व्याददाति ॥ स्वाङ्गकर्मकाच्चेति वक्तव्यम् ॥ इह मा भूत्—व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥

## क्रीडोऽनुसंपरिभ्यश्च ॥ २१ ॥

'क्रीडृ विहारे' (भ्वा० २४१) एतस्माद् अनु सम् परीत्येवंपूर्वाद् आङ्पूर्वाच्चात्मनेपदं भवति। अनुक्रीडते। संक्रीडते। परिक्रीडते। आङः खल्वपि—आक्रीडते। समा साहचर्याद् अन्वादिरुपसर्गो गृह्यते, तेनेह कर्मप्रवचनीयप्रयोगे न भवति—माणवकमनु क्रीडति ॥समोऽकूजन इति वक्तव्यम्॥ संक्रीडन्ति शकटानि ॥ आगमेः क्षमायामात्मनेपदं वक्तव्यम्॥ क्षमोपेक्षा कालहरणमिति यावत्। आगमयस्व तावन्माणवकम् ॥शिक्षेर्जिज्ञासायाम् ॥ विद्यासु शिक्षते ॥आशिषि नाथः॥ सर्पिषो नाथते। मधुनो नाथते। आशिषीति किम्? माणवकमनुनाथति ॥ हरतेर्गतिताच्छील्ये[१] ॥ पैतृकमश्वा अनुहरन्ते। मातृकं गावोऽनुहरन्ते। गतिताच्छील्य[१] इति किम्? मातुरनुहरति, पितुरनुहरति ॥ किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्॥ अपस्किरते वृषभो हृष्टः। जीविकायाम्—अपस्किरते कुक्कुटो भक्षार्थी। कुलायकरणे—अपस्किरते श्वाश्रयार्थी। हर्षादिष्विति किम्? अपकिरति कुसुमम् ॥ आङि नुप्रच्छ्योरुपसंख्यानम्॥ आनुते शृगालः।

---

१ – 'गतताच्छील्ये' इति मुद्रितेषु।

आपृच्छते गुरुम् ॥ शप उपलम्भन इति वक्तव्यम् ॥ वाचा शरीरस्पर्शनमुपलम्भनम्। देवदत्ताय शपते। यज्ञदत्ताय शपते। उपलम्भन इति किम्? शपति ॥

## समवप्रविभ्यः स्थः ॥ २२ ॥

सम् अव प्र वि इत्येवंपूर्वात् तिष्ठतेरात्मनेपदं भवति। संतिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते ॥आङः स्थः प्रतिज्ञान इति वक्तव्यम् ॥ अस्तिं सकारमातिष्ठते। आगमौ गुणवृद्धी आतिष्ठते ॥

## प्रकाशनस्थेयाख्ययोश्च ॥ २३ ॥

स्वाभिप्रायकथनं प्रकाशनम्। स्थेयस्याख्या स्थेयाख्या। तिष्ठन्त्यस्मिन्निति स्थेयः। विवादपदनिर्णेता लोके स्थेय इति प्रसिद्धः, तस्य प्रतिपत्त्यर्थमाख्याग्रहणम्। प्रकाशने स्थेयाख्यायां च तिष्ठतेरात्मनेपदं भवति। प्रकाशने तावत्—तिष्ठते कन्या छात्रेभ्यः। तिष्ठते वृषली ग्रामपुत्रेभ्यः। प्रकाशयत्यात्मानमित्यर्थः। स्थेयाख्यायाम्—त्वयि तिष्ठते। मयि तिष्ठते। संशय्य कर्णादिषु तिष्ठते यः ( कि० ३.१४ ) ॥

## उदोऽनूर्ध्वकर्मणि ॥ २४ ॥

उत्पूर्वात् तिष्ठतेरनूर्ध्वकर्मणि वर्तमानादात्मनेपदं भवति। कर्मशब्दः क्रियावाची। अनूर्ध्वकर्मविशिष्टात् क्रियावचनात्[1] तिष्ठतेरात्मनेपदं भवति। गेह उत्तिष्ठते। कुटुम्ब उत्तिष्ठते। तदर्थं यतत इत्यर्थः ॥उद ईहायामिति वक्तव्यम् ॥ इह मा भूत्—अस्माद् ग्रामात् शतमुत्तिष्ठति। शतमुत्पद्यत इत्यर्थः। ईहाग्रहणमनूर्ध्वकर्मण एव विशेषणम्, नापवादः। अनूर्ध्वकर्मणीति किम्? आसनादुत्तिष्ठति ॥

## उपान्मन्त्रकरणे ॥ २५ ॥

उपपूर्वात् तिष्ठतेर्मन्त्रकरणेऽर्थे वर्तमानादात्मनेपदं भवति। ऐन्द्र्या गार्हपत्यमुपतिष्ठते। आग्नेय्याग्नीध्रमुपतिष्ठते। मन्त्रकरण इति किम्? भर्तारमुपतिष्ठति यौवनेन ॥उपाद् देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम् ॥ देवपूजायाम्—आदित्यमुपतिष्ठते। संगतिकरणे—रथिकानुपतिष्ठते। मित्रकरणे—महामात्रानुपतिष्ठते। मित्रकरणसंगतिकरणयोः को विशेषः? संगतिकरणमुपश्लेषः, तद्यथा—गङ्गा यमुनामुपतिष्ठते। मित्रकरणं तु विनाप्युपश्लेषेण मैत्रीसंबन्धः। पथि—अयं पन्थाः स्रुघ्नमुपतिष्ठते ॥वा लिप्सायामिति वक्तव्यम् ॥ भिक्षुको ब्राह्मणकुलमुपतिष्ठते, उपतिष्ठतीति वा ॥

---

१ – ' अनूर्ध्वताविशिष्टक्रिया० ' इति मुद्रितेषु।

## अकर्मकाच्च ॥ २६ ॥

उपादिति वर्तते। उपपूर्वात् तिष्ठतेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति। यावद्भुक्तमुपतिष्ठते। यावदोदनमुपतिष्ठते। भुक्तमिति भावे क्तप्रत्ययः। भोजनेभोजने सन्निधीयत इत्यर्थः। अकर्मकादिति किम् ? राजानमुपतिष्ठति॥

## उद्विभ्यां तपः ॥ २७ ॥

अकर्मकादिति वर्तते। उद् वि इत्येवंपूर्वात् तपतेरकर्मकक्रियावचनादात्मनेपदं भवति। उत्तपते। वितपते। दीप्यत इत्यर्थः। अकर्मकादित्येव—उत्तपति सुवर्णं सुवर्णकारः। वितपति पृष्ठं सविता ॥स्वाङ्गकर्मकाच्चेति वक्तव्यम् ॥ उत्तपते पाणिम्। उत्तपते पृष्ठम्। वितपते पाणिम्। वितपते पृष्ठम्। स्वाङ्गं चेह न पारिभाषिकं गृह्यते 'अद्रवं मूर्त्तिमत् स्वाङ्गम्' ( काशिका ४.१.५४ ) इति। किं तर्हि? स्वमङ्गं स्वाङ्गम् । तेनेह न भवति—देवदत्तो यज्ञदत्तस्य पृष्ठमुत्तपतीति। उद्विभ्यामिति किम् ? निष्टपति ॥

## आङो यमहनः ॥ २८ ॥

अकर्मकादिति वर्तते। 'यम उपरमे' ( भ्वा० ७१० ), 'हन हिंसागत्योः' ( अदा० २ ) इति परस्मैपदिनौ। ताभ्यामकर्मकक्रियावचनाभ्यामाङ्पूर्वाभ्यामात्मनेपदं भवति। आयच्छते, आयच्छेते, आयच्छन्ते। हनः खल्वपि—आहते, आघ्नाते, आघ्नते। अकर्मकादित्येव—आयच्छति कूपाद् रज्जुम्। आहन्ति वृषलं पादेन ॥ स्वाङ्गकर्मकाच्चेति वक्तव्यम्॥ आयच्छते पाणिम्। आहते शिरः। स्वाङ्गं चेह न पारिभाषिकं गृह्यते। किं तर्हि? स्वमङ्गं स्वाङ्गम्, तेनेह न भवति—आहन्ति शिरः परकीयमिति॥

## समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥ २९ ॥

अकर्मकादिति वर्तते। शेषात् कर्तरि परस्मैपदे प्राप्ते संपूर्वेभ्यो गमि ऋच्छि प्रच्छि स्वरति अर्ति श्रु विदि इत्येतेभ्योऽकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति। संगच्छते। समृच्छते। संपृच्छते। संस्वरते। संकल्पा अस्य समरन्त। अर्तेर्लुङि च्लेः 'सर्तिशास्त्यर्तिभ्यश्च' ( ३.१.५६ ) इत्यङादेशः। तत्र परस्मैपदेष्वित्येतद् नाश्रीयते। 'बहुलं छन्दस्यमाङ्योगेऽपि' ( ६.४.७५ ) इत्याट् प्रतिषिध्यते। 'ऋदृशोऽङि गुणः' ( ७.४.१६ ) इति गुणः—समरन्त। संशृणुते। संवित्ते। ऋच्छेरनादेशस्य ग्रहणम्—समृच्छिष्यते। अर्त्यादेशस्य त्वर्तीत्येव सिद्धमात्मनेपदम्। अर्तिरुभयत्र पठ्यते, 'ऋ गतिप्रापणयोः' ( भ्वा० ६७० ) इति भ्वादौ, 'ऋ सृ गतौ' ( जु० १६ ) इति जुहोत्यादौ, विशेषाभावाद् द्वयोरपि ग्रहणम्। विदेर्ज्ञानार्थस्य ग्रहणम्, परस्मैपदिभिर्गमादिभिः साहचर्यात्, न लाभार्थस्य स्वरितेत्त्वादु-

भयतोभाषस्य ॥ दृशेश्चेति वक्तव्यम् ॥ संपश्यते। अकर्मकादित्येव—ग्रामं संपश्यति ॥

## निसमुपविभ्यो ह्वः ॥ ३० ॥

अकर्मकादिति निवृत्तम्। अतः परं सामान्येनात्मनेपदविधानं प्रतिपत्तव्यम्। नि सम् उप वि इत्येवंपूर्वाद् ह्वयतेर्धातोरात्मनेपदं भवति। निह्वयते। संह्वयते। उपह्वयते। विह्वयते। अकर्त्रभिप्रायार्थोऽयमारम्भः। अन्यत्र हि ञित्त्वात् सिद्धमेवात्मनेपदम् ॥ उपसर्गादस्यत्यूह्योर्वा वचनम् ॥ निरस्यति, निरस्यते। समूहति, समूहते ॥

## स्पर्धायामाङः ॥ ३१ ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः। स्पर्धायां विषय आङ्पूर्वाद् ह्वयतेरात्मनेपदं भवति। स्पर्धा संघर्षः, पराभिभवेच्छा, स विषयो धात्वर्थस्य। धातुस्तु शब्दक्रिय एव। मल्लो मल्लमाह्वयते। छात्रश्छात्रमाह्वयते। स्पर्धमानस्तस्याह्वानं करोतीत्यर्थः। स्पर्धायामिति किम्? गामाह्वयति गोपालः॥

## गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३२ ॥

कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। गन्धनादिष्वर्थेषु वर्तमानात् करोतेरात्मनेपदं भवति। गन्धनमपकारप्रयुक्तं हिंसात्मकं सूचनम्। तथाहि—'बस्त गन्ध अर्दने' (चु० १५२), 'अर्द हिंसायाम्' (चु० २५५) इति चुरादौ पठ्यते। अवक्षेपणं भर्त्सनम्। सेवनमनुवृत्तिः। साहसिक्यं साहसं[1] कर्म। प्रतियत्नः सतो गुणान्तराधानम्। प्रकथनं प्रकर्षेण कथनम्। उपयोगो धर्मादिप्रयोजनो विनियोगः। गन्धने तावत्—उत्कुरुते। उदाकुरुते। सूचयतीत्यर्थः। अवक्षेपणे—श्येनो वर्तिकामुदाकुरुते। भर्त्सयतीत्यर्थः। सेवने—गणकानुपकुरुते। महामात्रानुपकुरुते। सेवत इत्यर्थः। साहसिक्ये—परदारान् प्रकुरुते। तेषु सहसा प्रवर्तत इत्यर्थः। प्रतियत्ने—एधोदकस्योपस्कुरुते। काण्डं गुडस्योपस्कुरुते। तस्य सतो गुणान्तराधानं करोतीत्यर्थः। षष्ठीसुटौ करोतेः प्रतियत्न एव विधीयेते[2]। प्रकथने—गाथाः प्रकुरुते। जनापवादान् प्रकुरुते। प्रकर्षेण कथयतीत्यर्थः। उपयोगे—शतं प्रकुरुते। सहस्रं प्रकुरुते। धर्मार्थं शतं विनियुङ्क्त इत्यर्थः। एतेष्विति किम्? कटं करोति॥

## अधेः प्रसहने ॥ ३३ ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः। अधिपूर्वात् करोतेः प्रसहने वर्तमानादात्मनेपदं भवति।

---

१ – 'साहसिकम्' इति मुद्रितेषु। २ – 'कृञः प्रतियत्न इति षष्ठी। उपात् प्रतियत्नेति सुट्' इति क्वाचित्कः पाठः।

प्रसहनमभिभवः, अपराजयो वा। तमधिचक्रे। तमभिबभूव, न तेन पराजित इति वा। प्रसहन इति किम् ? अर्थमधिकरोति। पृथग्योगकरणमुपसर्गविशेषणार्थम्॥

## वेः शब्दकर्मणः ॥ ३४ ॥

कृञ इत्यनुवर्तते। विपूर्वात् करोतेरकर्त्रभिप्राये क्रियाफले शब्दकर्मण आत्मनेपदं भवति। कर्मशब्द इह कारकाभिधायी न क्रियावचनः। क्रोष्टा विकुरुते स्वरान्। ध्वाङ्क्षो विकुरुते स्वरान्। शब्दकर्मण इति किम् ? विकरोति पयः॥

## अकर्मकाच्च ॥ ३५ ॥

वेः कृञ इत्यनुवर्तते। विपूर्वात् करोतेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति। विकुर्वते सैन्धवाः। साधुदान्ताः शोभनं वल्गन्तीत्यर्थः। ओदनस्य पूर्णाश्छात्रा विकुर्वते। निष्फलं चेष्टन्त इत्यर्थः। अकर्मकादिति किम् ? कटं विकरोति[1] ॥

## संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ३६ ॥

'णीञ् प्रापणे' (भ्वा० ६४२) अस्मात् कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। णीञ् प्रापणे इत्येतस्माद् धातोरात्मनेपदं भवति सम्माननादिषु विशेषणेषु सत्सु। संमाननं पूजनम्—नयते चार्वी लोकायते। चार्वी बुद्धिः तत्संबन्धादाचार्योऽपि चार्वी, स लोकायते शास्त्रे पदार्थान्नयते, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति, ते युक्तिभिः स्थाप्यमानाः संमानिताः पूजिता भवन्ति। उत्सञ्जनमुत्क्षेपणम्—माणवकमुदानयते। उत्क्षिपतीत्यर्थः। आचार्यकरणमाचार्यक्रिया, माणवकमीदृशेन विधिनात्मसमीपं प्रापयति यथा स उपनेता स्वयमाचार्यः संपद्यते। माणवकमुपनयते। आत्मानमाचार्यीकुर्वन् माणवकमात्मसमीपं प्रापयतीत्यर्थः। ज्ञानं प्रमेयनिश्चयः—नयते चार्वी लोकायते। तत्र प्रमेयं निश्चिनोतीत्यर्थः। भृतिर्वेतनम्—कर्मकरानुपनयते। भृतिदानेन समीपं करोतीत्यर्थः। विगणनमृणादेर्निर्यातनम्—मद्राः करं विनयन्ते। निर्यातयन्तीत्यर्थः। व्ययो धर्मादिषु विनियोगः—शतं विनयते। सहस्रं विनयते। धर्माद्यर्थं शतं विनियुङ्क्त इत्यर्थः। एतेष्विति किम् ? अजां नयति ग्रामम्॥

## कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥

नयतेः कर्ता देवदत्तादिर्लकारवाच्यः। कर्तृस्थे कर्मण्यशरीरे सति नयतेरात्मनेपदं भवति। शरीरं प्राणिकायः, तदेकदेशोऽपि शरीरम्। क्रोधं विनयते। मन्युं विनयते।

---

१ – 'अकर्म ..............विकरोति' इति मुद्रितेषु नास्ति।

कर्तृस्थ इति किम् ? देवदत्तो यज्ञदत्तस्य क्रोधं विनयति। अशरीर इति किम्? गडुं विनयति। घाटां विनयति। कर्मणीति किम्? बुद्ध्या विनयति। प्रज्ञया विनयति॥

## वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥

शेषात् कर्तरि परस्मैपदे प्राप्ते वृत्त्यादिष्वर्थेषु क्रमेर्धातोरात्मनेपदं भवति। वृत्तिर-प्रतिबन्धः। सर्ग उत्साहः। तायनं स्फीतता। वृत्तौ तावत्—ऋक्ष्वस्य क्रमते बुद्धिः। न प्रतिहन्यत इत्यर्थः। यजुःष्वस्य क्रमते बुद्धिः। सर्गे—व्याकरणाध्ययनाय क्रमते। उत्सहत इत्यर्थः। तायने—अस्मिन् शास्त्राणि क्रमन्ते। स्फीतीभवन्तीत्यर्थः[१]॥

## उपपराभ्याम् ॥ ३९ ॥

वृत्तिसर्गतायनेष्विति वर्तते। उपपरापूर्वात् क्रमतेर्वृत्त्यादिष्वर्थेषु वर्तमाना-दात्मनेपदं भवति। किमर्थं तर्हीदमुच्यते? उपसर्गनियमार्थम्। सोपसर्गादुपपरा-पूर्वादेव, नान्यपूर्वादिति। उपक्रमते। पराक्रमते। उपपराभ्यामिति किम् ? संक्रामति। वृत्त्यादिष्वित्येव—उपक्रामति। पराक्रामति॥

## आङ उद्गमने ॥ ४० ॥

आङ्पूर्वात् क्रमतेरुद्गमने वर्तमानादात्मनेपदं भवति। आक्रमत आदित्यः। आक्रमते चन्द्रमाः। आक्रमन्ते ज्योतींषि। उद्गमन इति किम् ? आक्रामति माणवकः कुतपम्[२] ॥ ज्योतिरुद्गमन इति वक्तव्यम्॥ इह मा भूत्—आक्रामति धूमो हर्म्यतलात्॥

## वेः पादविहरणे ॥ ४१ ॥

विपूर्वात् क्रमतेः पादविहरणेऽर्थे वर्तमानादात्मनेपदं भवति। विहरणं विक्षेपः। सुष्ठु विक्रमते। साधु विक्रमते। अश्वादीनां गतिविशेषो विक्रमणमुच्यते। यद्यपि क्रमिः पादविहरण एव पठ्यते 'क्रमु पादविक्षेपे' (भ्वा० ३१९) इति, तथाप्यनेकार्थत्वाद् धातूनामेवमुक्तम्। पादविहरण इति किम् ? विक्रामत्यजिनसन्धिः॥

## प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥

प्र उप इत्येताभ्यामुपसर्गाभ्यां[३] परस्मात् क्रमतेरात्मनेपदं भवति, तौ चेत् प्रोपौ समर्थौ तुल्यार्थौ भवतः। क्व चानयोस्तुल्यार्थता ? आदिकर्मणि। प्रक्रमते भोक्तुम्। उपक्रमते भोक्तुम्। समर्थाभ्यामिति किम् ? पूर्वेद्युः प्रक्रामति। गच्छतीत्यर्थः। अपरेद्युरुपक्रामति।

---

१ – ' एतेष्विति किम्? अपक्रामति ' इत्यधिकं मुद्रितेष्वपपाठः।

२ – ' कुतुपम् ' इति पाठान्तरम्। ३ – ' उपसर्गाभ्याम् ' इति न सार्वत्रिकः।

आगच्छतीत्यर्थः। अथ 'उपपराभ्याम्' (१.३.३९) इत्यनेनात्मनेपदमत्र कस्माद् न भवति ? वृत्त्यादिग्रहणं तत्रानुवर्तते, ततोऽन्यत्रेदं प्रत्युदाहरणम्॥

## अनुपसर्गाद्वा ॥ ४३ ॥

क्रम इति वर्तते। अप्राप्तविभाषेयम्। उपसर्गवियुक्तात् क्रमतेरात्मनेपदं वा भवति। क्रमते। क्रामति। अनुपसर्गादिति किम् ? संक्रामति॥

## अपह्नवे ज्ञः ॥ ४४ ॥

शेषात् कर्तरि परस्मैपदे प्राप्ते जानातेरपह्नवे वर्तमानादात्मनेपदं भवति। अपह्नवोऽपह्नुतिरपलापः। सोपसर्गश्चायमपह्नवे वर्तते, न केवलः। शतमपजानीते। सहस्रमपजानीते। अपलपतीत्यर्थः। अपह्नव इति किम्? न त्वं किंचिदपि जानासि॥

## अकर्मकाच्च ॥ ४५ ॥

अकर्त्रभिप्रायार्थमिदम्। कर्त्रभिप्राये हि 'अनुपसर्गाज्ज्ञः' (१.३.७६) इति वक्ष्यति। जानातेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति। सर्पिषो जानीते। मधुनो जानीते। कथं चायमकर्मकः? नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्। किं तर्हि? ज्ञानपूर्विकायां प्रवृत्तौ करणत्वेन। तथा च 'ज्ञोऽविदर्थस्य करणे' (२.३.५१) इति षष्ठी विधीयते— सर्पिषो जानीते, मधुनो जानीते। सर्पिषा उपायेन प्रवर्तत इत्यर्थः। अकर्मकादिति किम्? स्वरेण पुत्रं जानाति॥

## संप्रतिभ्यामनाध्याने ॥ ४६ ॥

ज्ञ इति वर्तते। सकर्मकार्थमिदम्। सं प्रति इत्येवंपूर्वाद् जानातेरनाध्याने वर्तमानादात्मनेपदं भवति। आध्यानमुत्कण्ठास्मरणम्। शतं संजानीते। सहस्रं संजानीते। शतं प्रतिजानीते। सहस्रं प्रतिजानीते। अनाध्यान इति किम् ? मातुः संजानाति। पितुः संजानाति। उत्कण्ठत इत्यर्थः॥

## भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥

शेषात् कर्तरि परस्मैपदे (१.३.७८) प्राप्ते भासनादिषु विशेषणेषु सत्सु वदतेरात्मनेपदं भवति। भासनं दीप्तिः—वदते चार्वी लोकायते। भासमानो दीप्यमानः, तत्र पदार्थान् व्यक्तीकरोतीत्यर्थः। उपसंभाषोपसान्त्वनम्—कर्मकरानुपवदते। उपसान्त्वयतीत्यर्थः। ज्ञानं सम्यगवबोधः—वदते चार्वी लोकायते। जानाति वदितुमित्यर्थः। यत्न उत्साहः—क्षेत्रे वदते। गेहे वदते। तद्विषयमुत्साहमाविष्करोतीत्यर्थः। विमतिर्नानामतिः—क्षेत्रे विवदन्ते।

गेहे विवदन्ते। विमतिपतिता विचित्रं भाषन्त इत्यर्थः। उपमन्त्रणं रहस्युपच्छन्दनम्—कुलभार्यामुपवदते। परदारानुपवदते। उपच्छन्दयतीत्यर्थः। एतेष्विति किम्? यत्किंचिद् वदति॥

## व्यक्तवाचां समुच्चारणे ॥ ४८ ॥

वद इति वर्तते। व्यक्तवाचां समुच्चारणं सहोच्चारणम्, तत्र वर्तमानाद् वदतेरात्मनेपदं भवति। ननु 'वद व्यक्तायां वाचि' (भ्वा० ७३५) इत्येव पठ्यते तत्र किं व्यक्तवाचामिति विशेषणेन? प्रसिद्ध्युपसंग्रहार्थमेतत्। व्यक्तवाच इति हि मनुष्याः प्रसिद्धाः, तेषां समुच्चारणे यथा स्यात्। संप्रवदन्ते ब्राह्मणाः। संप्रवदन्ते क्षत्रियाः। व्यक्तवाचामिति किम्? संप्रवदन्ति कुक्कुटाः। समुच्चारण इति किम्? ब्राह्मणो वदति। क्षत्रियो वदति॥

## अनोरकर्मकात् ॥ ४९ ॥

वद इति व्यक्तवाचामिति च वर्तते। अनुपूर्वाद् वदतेरकर्मकाद् व्यक्तवाग्विषयादात्मनेपदं भवति। अनुवदते कठः कलापस्य। अनुवदते मौद्गः पैप्पलादस्य। अनुः सादृश्ये। यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः। अकर्मकादिति किम्? पूर्वमेव यजुरुदितमनुवदति। व्यक्तवाचामित्येव—अनुवदति वीणा॥

## विभाषा विप्रलापे ॥ ५० ॥

वद इति वर्तते, व्यक्तवाचां समुच्चारण इति च। विप्रलापात्मके व्यक्तवाचां समुच्चारणे वर्तमानाद् वदतेरात्मनेपदं भवति विभाषा। प्राप्तविभाषेयम्। विप्रवदन्ते सांवत्सराः, विप्रवदन्ति सांवत्सराः। विप्रवदन्ते मौहूर्ताः, विप्रवदन्ति मौहूर्ताः। युगपत् परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः। विप्रलाप इति किम्? संप्रवदन्ते ब्राह्मणाः। व्यक्तवाचामित्येव—विप्रवदन्ति शकुनयः। समुच्चारण इत्येव—क्रमेण मौहूर्ता मौहूर्तेन सह विप्रवदन्ति॥

## अवाद् ग्रः ॥ ५१ ॥

'गॄ निगरणे' (तुदा० ११९) इति तुदादौ पठ्यते, तस्येदं ग्रहणम्, न तु 'गॄ शब्दे' (क्र्या० २९) इति क्र्यादिपठितस्य। तस्य ह्यवपूर्वस्य प्रयोग एव नास्ति। 'शेषात्०' (१.३.७८) इति परस्मैपदे प्राप्ते, अवपूर्वाद् गिरतेरात्मनेपदं भवति। अवगिरते, अवगिरेते, अवगिरन्ते। अवादिति किम्? गिरति॥

## समः प्रतिज्ञाने ॥ ५२ ॥

ग्र इति वर्तते। संपूर्वाद् गिरतेः प्रतिज्ञाने वर्तमानादात्मनेपदं भवति। प्रतिज्ञानमभ्युपगमः। शतं संगिरते। नित्यं शब्दं संगिरते। प्रतिज्ञान इति किम्? संगिरति ग्रासम्॥

## उदश्चरः सकर्मकात् ॥ ५३ ॥

शेषात् कर्तरि परस्मैपदे प्राप्ते, उत्पूर्वाच् चरतेः सकर्मकक्रियावचनादात्मनेपदं भवति। गेहमुच्चरते। कुटुम्बमुच्चरते। गुरुवचनमुच्चरते। उत्क्रम्य गच्छतीत्यर्थः। सकर्मकादिति किम्? बाष्पमुच्चरति॥

## समस्तृतीयायुक्तात् ॥ ५४ ॥

संपूर्वाच्चरतेस्तृतीयायुक्तादात्मनेपदं भवति। तृतीयेति तृतीया विभक्तिर्गृह्यते, तया चरतेरर्थद्वारको योगः। अश्वेन संचरते। तृतीयायुक्तादिति किम्? उभौ लोकौ संचरसि इमं चामुं च देवल। यद्यप्यत्र तदर्थयोगः संभवति, तृतीया तु न श्रूयत इति प्रत्युदाहरणं भवति॥

## दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥

'दाण् दाने' (भ्वा० ६६४) परस्मैपदी। ततः संपूर्वात् तृतीयायुक्तादात्मनेपदं भवति, सा चेत् तृतीया चतुर्थ्यर्थे भवति। कथं पुनस्तृतीया चतुर्थ्यर्थे स्यात्? वक्तव्यमेवैतत् ॥अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम्॥ दास्या संप्रयच्छते[1]। वृषल्या संप्रयच्छते[2]। कामुकः सन् दास्यै ददातीत्यर्थः। चतुर्थ्यर्थ इति किम्? पाणिना संप्रयच्छति। समः प्रशब्देन व्यवधाने कथमात्मनेपदं भवति? सम इति विशेषणे षष्ठी, न पञ्चमी॥

## उपाद् यमः स्वकरणे ॥ ५६ ॥

शेषात् कर्तरि परस्मैपदे प्राप्ते, उपपूर्वाद् यमः स्वकरणे वर्तमानादात्मनेपदं भवति। पाणिग्रहणविशिष्टमिह स्वकरणं गृह्यते, न स्वकरणमात्रम्। भार्यामुपयच्छते। स्वकरण इति किम्? देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति॥

## ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥

---

१ - 'मालाम्' इत्यधिकं न्यासे। २ - न्यासपदमञ्जर्योर्नास्तीदमुदाहरणम्।

ज्ञा श्रु स्मृ दृश् इत्येतेषां सन्नन्तानामात्मनेपदं भवति। तत्र जानातेः 'अपह्नवे ज्ञः' (१.३.४४) इति त्रिभिः सूत्रैरात्मनेपदं विहितम्, श्रुदृशोरपि 'समो गम्यृच्छि०' (१.३.२९) इत्यत्र विहितम्। तस्मिन् विषये 'पूर्ववत् सनः' (१.३.६२) इत्येव सिद्धमात्मनेपदम्, ततोऽन्यत्रानेन विधीयते। स्मरतेः पुनरप्राप्त एव विधानम्। धर्मं जिज्ञासते। गुरुं शुश्रूषते। नष्टं सुस्मूर्षते। नृपं दिदृक्षते। सन इति किम्? जानाति। शृणोति। स्मरति। पश्यति॥

## नानोर्ज्ञः ॥ ५८ ॥

पूर्वेण योगेन प्राप्तमात्मनेपदं प्रतिषिध्यते। अनुपूर्वाज् जानातेः सन्नन्तादात्मनेपदं न भवति। तथा च सति सकर्मकस्यैवायं प्रतिषेधः संपद्यते। पुत्रमनुजिज्ञासति। अनोरिति किम्? धर्मं जिज्ञासते॥

## प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥

प्रति आङ् इत्येवंपूर्वाच्छृणोतेः सन्नन्तादात्मनेपदं न भवति। प्रतिशुश्रूषति। आशुश्रूषति। उपसर्गग्रहणं चेदम्, तस्मादिह प्रतिषेधो न भवति—देवदत्तं प्रति शुश्रूषते॥

## शदेः शितः ॥ ६० ॥

'शद्लृ शातने' (भ्वा० ५९४) परस्मैपदी, तस्मादात्मनेपदं विधीयते। शदिर्यः शित्, शिद्भावी शितो वा संबन्धी, तस्मादात्मनेपदं भवति। शीयते, शीयेते, शीयन्ते। शित इति किम्? अशत्स्यत्। शत्स्यति। शिशत्सति॥

## म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥

'मृङ् प्राणत्यागे' (तुदा० ११३)। ङित्त्वादात्मनेपदमत्र सिद्धमेवेति[1] नियमार्थमिदं वचनम्। म्रियतेर्लुङ्लिङोः शितश्चात्मनेपदं भवति, अन्यत्र न भवति। अमृत। मृषीष्ट। शितः खल्वपि—म्रियते, म्रियेते, म्रियन्ते। नियमः किमर्थः? मरिष्यति। अमरिष्यत्॥

## पूर्ववत् सनः ॥ ६२ ॥

सनः पूर्वो यो धातुरात्मनेपदी, तद्वत् सन्नन्तादात्मनेपदं भवति। येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते, तेनैव सन्नन्तादपि भवति। 'अनुदात्तङित आत्मनेपदम्' (१.३.१२)—आस्ते। शेते। सन्नन्तादपि तदेव निमित्तम्। आसिसिषते। शिशयिषते।

---

१ - 'इति' इति नास्ति है० ।

'नेर्विशः' (१.३.१७)—निविशते। निविविक्षते। 'आङ उद्गमने' (१.३.४०)—आक्रमते। आचिक्रंसते। इह न भवति—शिशत्सति। मुमूर्षति। न हि शदिम्रियतिमात्रमात्मनेपदनिमित्तम्। किं तर्हि? शिदाद्यपि, तच्चेह नास्ति। यस्य च पूर्वत्रैव निमित्तभावः प्रतिषिध्यते, तत् सन्नन्तेष्वप्यनिमित्तम्। अनुचिकीर्षति। पराचिकीर्षति। इह जुगुप्सते मीमांसत इति अनुदात्तेत[1] इत्येव सिद्धमात्मनेपदम्—'अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति' (महाभाष्य १.२८९) इति॥

## आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ॥ ६३ ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः। आम् प्रत्ययो यस्मात् सोऽयमाम्प्रत्ययः। आम्प्रत्ययस्येव धातोः कृञोऽनुप्रयोगस्यात्मनेपदं भवति। ईक्षांचक्रे। ईहांचक्रे। यदि विध्यर्थमेतत्, तर्हि उदुब्जांचकार उदुम्भांचकारेति कर्त्रभिप्राये क्रियाफल आत्मनेपदं प्राप्नोति। नैष दोषः। उभयमनेन क्रियते। विधिर्नियमश्च। कथम्? पूर्ववदिति वर्तते। स द्वितीयो यत्नो नियमार्थो भविष्यति। कृञ इति किम्? ईक्षामास। ईक्षांबभूव। कथं पुनरस्यानुप्रयोगो यावता 'कृञ्चानुप्रयुज्यते लिटि' (३.१.४०) इत्युच्यते? कृञिति प्रत्याहारग्रहणं तत्र विज्ञायते। क्व संनिविष्टानां प्रत्याहारः? 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः' (५.४.५०) इति कृशब्दादारभ्य यावत् 'कृञो द्वितीयतृतीय०' (५.४.५८) इति ञकारम्॥

## प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६४ ॥

'युजिर् योगे' (रुधा० ७) स्वरितेत्। तस्य कर्त्रभिप्रायें क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। प्र उप इत्येवंपूर्वाद् युजेरयज्ञपात्रप्रयोगविषयादात्मनेपदं भवति। प्रयुङ्क्ते। उपयुङ्क्ते। अयज्ञपात्रेष्विति किम्? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति (आप० गृ० १.१.१६)॥ स्वराद्यन्तोपसृष्टादिति वक्तव्यम्॥ उद्युङ्क्ते। नियुङ्क्ते। स्वराद्यन्तोपसृष्टादिति किम्? संयुनक्ति॥

## समः क्ष्णुवः ॥ ६५ ॥

'क्ष्णु तेजने' (अदा० ३०) परस्मैपदी। ततः संपूर्वादात्मनेपदं भवति। 'समो गम्यृच्छि०' (१.३.२९) इत्यत्रैव कस्मान्न पठितः? अकर्मकादिति तत्र वर्तते। संक्ष्णुते शस्त्रम्, संक्ष्णुवाते, संक्ष्णुवते॥

## भुजोऽनवने ॥ ६६ ॥

---

१ - 'अनुदात्तङित' इति है०।

'भुज पालनाभ्यवहारयोः' (रुधा० १७) इति रुधादौ पठ्यते। तस्मादनवनेऽपालने वर्तमानादात्मनेपदं भवति। भुङ्क्ते, भुञ्जाते, भुञ्जते। अनवन इति किम्? भुनक्त्येनमग्निराहितः। अवनप्रतिषेधेन[1] रौधादिकस्यैव ग्रहणं विज्ञायते, न तौदादिकस्य 'भुजो कौटिल्ये' (तुदा० १२७) इत्यस्य। तेनेह न भवति—विभुजति पाणिम्॥

## णेरणौ यत्कर्म णौ चेत् स कर्तानाध्याने ॥ ६७ ॥

'णिचश्च' (१.३.७४) इति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्र-भिप्रायार्थोऽयमारम्भः। ण्यन्तादात्मनेपदं भवति। कथम्? अणौ यत् कर्म णौ चेत् तदेव कर्म, स एव कर्ता भवति, अनाध्यान आध्यानं वर्जयित्वा। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयते हस्ती स्वयमेव। उपसिञ्चन्ति[2] हस्तिनं हस्तिपकाः। उपसेचयते हस्ती स्वयमेव। पश्यन्ति भृत्या राजानम्। दर्शयते राजा स्वयमेव। णेरिति किम्? आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयमाणो हस्ती साध्वारोहति। अणाविति किम्? गणयति गणं गोपालकः। गणयति गणः स्वयमेव। कर्मग्रहणं किम्? लुनाति दात्रेण। लावयति दात्रं स्वयमेव। णौ चेद् ग्रहणं समानक्रियार्थम्। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेण। यत्सग्रहणमनन्यकर्मार्थम्। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान्। कर्तेति किम्? आरोहन्ति हस्तिनं हस्तिपकाः। तानारोहयति महामात्रः। अनाध्यान इति किम्? स्मरति वनगुल्मस्य कोकिलः। स्मरयत्येनं वनगुल्मः स्वयमेव। ननु चात्र कर्मकर्तरि मूलोदाहरणानि, तत्र कर्मवद्भावेनैव सिद्धमात्मनेपदम्, किमर्थमिदमुच्यते? कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्मवदतिदेशो विज्ञायते। कर्तृस्थार्थोऽयमारम्भः। तथा च रुहिः कर्तृस्थक्रियः, दृशिः कर्तृस्थभावक उदाहृतः॥

## भीस्म्योर्हेतुभये ॥ ६८ ॥

णेरिति वर्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं भवति हेतुभये। हेतुः प्रयोजकः कर्ता लकारवाच्यः, ततश्चेद् भयं भवति। भयग्रहणमुप-लक्षणार्थम्। विस्मयोऽपि तत एव। जटिलो भीषयते। मुण्डो भीषयते। जटिलो विस्मापयते। मुण्डो विस्मापयते। हेतुभय इति किम्? कुञ्चिकयैनं भाययति। रूपेण विस्माययति। अत्र कुञ्चिका भयस्य करणम्, न हेतुः॥

---

१ - यथान्यासं पाठः। 'अनवनप्रतिषेधेन' इति बाल०, 'अनवन इति प्रतिषेधेन' इति है०।
२ - 'उप' इति नास्ति न्यासपद०।

## गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥

णेरिति वर्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। 'गृधु अभिकाङ्क्षायाम्' (दिवा० १३२), 'वञ्चु गतौ' (भ्वा० ११६) इत्येतयोर्ण्यन्तयोः प्रलम्भने वर्तमानयोरात्मनेपदं भवति। प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम्। माणवकं गर्धयते। माणवकं वञ्चयते। प्रलम्भन इति किम्? श्वानं गर्धयति। गर्धनमस्योत्पादयतीत्यर्थः। अहिं वञ्चयति। परिहरतीत्यर्थः॥

## लियः संमाननशालीनीकरणयोश्च ॥ ७० ॥

णेरिति वर्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। 'लीङ् श्लेषणे' (दिवा० २९) इति दिवादौ पठ्यते, 'ली श्लेषणे' (क्र्या० ३३) इति च क्र्यादौ। विशेषाभावाद् द्वयोरपि ग्रहणम्। लियो ण्यन्तात् संमानने शालीनीकरणे च वर्तमानादात्मनेपदं भवति, चशब्दात् प्रलम्भने च। संमाननं पूजनम्। शालीनीकरणं न्यग्भावनम्। जटाभिरालापयते। पूजां समधिगच्छतीत्यर्थः। श्येनो वर्तिकामुल्लापयते। न्यक्करोतीत्यर्थः। प्रलम्भने—कस्त्वामुल्लापयते। विसंवादयतीत्यर्थः। 'विभाषा लीयतेः' (६.१.५१) इति वात्वं विधीयते। तदस्मिन् विषये नित्यमन्यत्र विकल्पः। व्यवस्थितविभाषा हि सा। संमाननादिष्विति किम्? बालकमुल्लापयति॥

## मिथ्योपपदात् कृञोऽभ्यासे ॥ ७१ ॥

णेरिति वर्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। ण्यन्तात् करोतेर्मिथ्योपपदादात्मनेपदं भवत्यभ्यासे। अभ्यासः पुनः पुनः करणम्, आवृत्तिः। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। मिथ्योपपदादिति किम्? पदं सुष्ठु कारयति। कृञ इति किम्? पदं मिथ्या वाचयति। अभ्यास इति किम्? पदं मिथ्या कारयति। सकृदुच्चारयति॥

## स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ ७२ ॥

णेरिति निवृत्तम्। शेषात् कर्तरि परस्मैपदे प्राप्ते, स्वरितेतो ये धातवो ञितश्च तेभ्य आत्मनेपदं भवति, कर्तारं चेत् क्रियाफलमभिप्रैति। क्रियायाः फलं क्रियाफलं प्रधानभूतम्, यदर्थमसौ क्रियारभ्यते तच्चेत् कर्तुर्लकारवाच्यस्य भवति। यजते। पचते। ञितः खल्वपि—सुनुते। कुरुते। स्वर्गादि प्रधानफलमिह कर्तारमभिप्रैति। कर्त्रभिप्राय इति किम्? यजन्ति याजकाः। पचन्ति पाचकाः। कुर्वन्ति कर्मकराः। यद्यपि दक्षिणा भृतिश्च कर्तुः फलमिहास्ति, तथापि न तदर्थः क्रियारम्भः॥

## अपाद्वदः ॥ ७३ ॥

कर्त्रभिप्राय इति वर्तते। अपपूर्वाद् वदतेः कर्त्रभिप्राये क्रियाफल आत्मनेपदं भवति। धनकामो न्यायमपवदते। न्यायापवादेन धनमर्जयिष्यामीति मन्यते। कर्त्रभिप्राये क्रियाफल इत्येव—अपवदति॥

## णिचश्च ॥ ७४ ॥

कर्त्रभिप्राये क्रियाफल इति वर्तते। णिजन्तादात्मनेपदं भवति कर्त्रभिप्राये क्रियाफले। कटं कारयते। ओदनं पाचयते। कर्त्रभिप्राय इत्येव—कटं कारयति परस्य॥

## समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७५ ॥

कर्त्रभिप्राय इति वर्तते। सम् उद् आङ् इत्येवंपूर्वाद् यमेः कर्त्रभिप्राये क्रियाफल आत्मनेपदं भवति, ग्रन्थविषयश्चेत् प्रयोगो न भवति। व्रीहीन् संयच्छते। भारमुद्यच्छते। वस्त्रमायच्छते। आङ्पूर्वादकर्मकाद् 'आङो यमहनः' (१.३.२८) इति सिद्धमेवात्मनेपदम्, सकर्मकार्थमिदं पुनर्ग्रहणम्। अग्रन्थ इति किम्? उद्यच्छति चिकित्सां वैद्यः। कर्त्रभिप्राय इत्येव—संयच्छति। उद्यच्छति। आयच्छति॥

## अनुपसर्गाज्ज्ञः ॥ ७६ ॥

कर्त्रभिप्राय इति वर्तते। अनुपसर्गाज् जानातेः कर्त्रभिप्राये क्रियाफल आत्मनेपदं भवति। गां जानीते। अश्वं जानीते। अनुपसर्गादिति किम्? स्वर्गं लोकं न प्रजानाति मूढः। कर्त्रभिप्राय इत्येव—देवदत्तस्य गां जानाति॥

## विभाषोपपदेन प्रतीयमाने ॥ ७७ ॥

'स्वरितञितः०' (१.३.७२) इति पञ्चभिः सूत्रैरात्मनेपदं कर्त्रभिप्राये क्रियाफले द्योतिते विहितम्, तदुपपदेन द्योतिते न प्राप्नोतीति वचनमारभ्यते। समीपे श्रूयमाणं शब्दान्तरमुपपदम्, तेन प्रतीयमाने कर्त्रभिप्राये क्रियाफले विभाषात्मनेपदं भवति। स्वं यज्ञं यजति, स्वं यज्ञं यजते। स्वं कटं करोति, स्वं कटं कुरुते। स्वं पुत्रमपवदति, स्वं पुत्रमपवदते। एवं पञ्चसूत्र्यामुदाहार्यम्॥

## शेषात् कर्तरि परस्मैपदम् ॥ ७८ ॥

पूर्वेण प्रकरणेनात्मनेपदनियमः कृतः, न परस्मैपदनियमः। तत् सर्वतः प्राप्नोति, तदर्थमिदमुच्यते। येभ्यो धातुभ्यो येन विशेषणेनात्मनेपदमुक्तं ततो यदन्यत् स शेषः। शेषात् कर्तरि परस्मैपदं भवति, शेषादेव नान्यस्मात्। अनुदात्तङित आत्मनेपदमुक्तम्—आस्ते। शेते। ततोऽन्यत्र परस्मैपदं भवति—याति। वाति। नेर्विश आत्मनेपदमुक्तम्—

निविशते। ततोऽन्यत्र परस्मैपदम्—आविशति। प्रविशति। कर्तरीति किम्? पच्यते। गम्यते। कर्मकर्तरि कस्मात् परस्मैपदं न भवति—पच्यत ओदनः स्वयमेव? कर्तरि कर्मव्यतिहार इति द्वितीयं कर्तृग्रहणमनुवर्तते। तेन कर्तैव यः कर्ता, तत्र परस्मैपदम्, कर्मकर्तरि न भवति॥

## अनुपराभ्यां कृञः ॥ ७९ ॥

कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितम्, तदपवादः परस्मैपदं विधीयते। अनु परा इत्येवंपूर्वात् करोतेः परस्मैपदं भवति। अनुकरोति। पराकरोति॥

## अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥

'क्षिप प्रेरणे' ( तुदा० ५ ) स्वरितेत्। ततः कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते। अभि प्रति अति इत्येवंपूर्वात् क्षिपः परस्मैपदं भवति। अभिक्षिपति। प्रतिक्षिपति। अतिक्षिपति। अभिप्रत्यतिभ्य इति किम्? आक्षिपते। द्वितीयमपि कर्तृग्रहणमनुवर्तते। तेनेह न भवति—अभिक्षिप्यते स्वयमेव॥

## प्राद्वहः ॥ ८१ ॥

'वह प्रापणे' ( भ्वा० ७३० ) स्वरितेत्। तत्र कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते। प्रपूर्वाद् वहतेः परस्मैपदं भवति। प्रवहति, प्रवहतः, प्रवहन्ति। प्रादिति किम्? आवहते॥

## परेर्मृषः ॥ ८२ ॥

'मृष तितिक्षायाम्' ( दिवा० ५३ ) स्वरितेत्। ततस्तथैवात्मनेपदे प्राप्ते परस्मैपदं विधीयते। परिपूर्वाद् मृष्यतेः परस्मैपदं भवति। परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति। परेरिति किम्? आमृष्यते। वहतिमपि केचिदत्रानुवर्तयन्ति—परिवहति॥

## व्याङ्परिभ्यो रमः ॥ ८३ ॥

'रमु क्रीडायाम्' ( भ्वा० ५९२ )। अनुदात्तेत्त्वादात्मनेपदे प्राप्ते परस्मैपदं विधीयते। वि आङ् परि इत्येवंपूर्वाद् रमतेः परस्मैपदं भवति। विरमति। आरमति। परिरमति। एतेभ्य इति किम्? अभिरमते॥

## उपाच्च ॥ ८४ ॥

रम इत्येव। उपपूर्वाद् रमतेः परस्मैपदं भवति। देवदत्तमुपरमति। यज्ञदत्तमुपरमति। उपरमयतीति यावत्। अन्तर्भावितण्यर्थोऽत्र रमिः। पृथग्योगकरणमुत्तरार्थम्। अकर्मकाद् विभाषां वक्ष्यति सा उपपूर्वादेव यथा स्यात्॥

## विभाषाकर्मकात् ॥ ८५ ॥

रम उपादिति च वर्तते। पूर्वेण नित्ये परस्मैपदे प्राप्ते विकल्प आरभ्यते। उपपूर्वाद् रमतेरकर्मकाद् विभाषा परस्मैपदं भवति। यावद्भुक्तमुपरमति, यावद्भुक्तमुपरमते। निवर्तत इत्यर्थः॥

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥

'णिचश्च' (१.३.७४) इति कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते। बुध युध नश जन इङ् प्रु द्रु स्रु इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं भवति। बोधयति। योधयति। नाशयति। जनयति। अध्यापयति। प्रावयति। द्रावयति। स्रावयति। येऽत्राकर्मकास्तेषाम् 'अणावकर्मकाच्चित्तवत्कर्तृकात्' (१.३.८८) इत्येवं सिद्धे वचनमिदमचित्तवत्कर्तृकार्थम्। बोधयति पद्मम्। योधयन्ति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। येऽत्र चलनार्था अपि तेषां 'निगरणचलनार्थेभ्यश्च' (१.३.८७) इति सिद्धे यदा न चलनार्थास्तदर्थं वचनम्। प्रवते। प्राप्नोतीति गम्यते। अयो द्रवति। विलीयत इत्यर्थः। कुण्डिका स्रवति। स्यन्दत इत्यर्थः। एतद्विषयाण्युदाहरणानि॥

## निगरणचलनार्थेभ्यश्च ॥ ८७ ॥

णेरिति वर्तते। कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते। निगरणमभ्यवहारः। चलनं कम्पनम्। निगरणार्थेभ्यश्चलनार्थेभ्यश्च धातुभ्यो ण्यन्तेभ्यः परस्मैपदं भवति। निगारयति। आशयति। भोजयति। चलनार्थेभ्यः—चलयति। चोपयति। कम्पयति। अयमपि योगः सकर्मकार्थः, अचित्तवत्कर्तृकार्थश्च ॥ अदेः प्रतिषेधो वक्तव्यः॥ अत्ति देवदत्तः। आदयते देवदत्तेन॥

## अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥

णेरिति वर्तते। कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते। अण्यन्तो यो धातुरकर्मकश्चित्तवत्कर्तृकश्च, तस्माद् ण्यन्तात् परस्मैपदं भवति। आस्ते देवदत्तः। आसयति देवदत्तम्। शेते देवदत्तः। शाययति देवदत्तम्। अणाविति किम्? चेतयमानं प्रयोजयति चेतयत इति केचित् प्रत्युदाहरन्ति, तदयुक्तम्। हेतुमण्णिचो विधिः,

प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः। तस्मादिह चेतयतीति परस्मैपदेनैव भवितव्यम्। इदं तु प्रत्युदाहरणम्—आरोहयमाणं प्रयुङ्क्ते, आरोहयते। अकर्मकादिति किम्? कटं कुर्वाणं प्रयुङ्क्ते, कारयते। चित्तवत्कर्तृकादिति किम्? शुष्यन्ति व्रीहयः। शोषयते व्रीहीनातपः॥

## न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ८९ ॥

पूर्वेण योगद्वयेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विहितम्, तस्य प्रतिषेधोऽयमुच्यते। यत्तु कर्त्रभिप्रायविषयमात्मनेपदम्, तदवस्थितमेव, न प्रतिषिध्यते। पा दमि आङ्यम आङ्यस परिमुह रुचि नृति वद वस इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं न भवति। 'णिचश्च' (१.३.७४) इत्यात्मनेपदं भवति। तत्र पिबतिर्निगरणार्थः। दमिप्रभृतयश्चित्तवत्कर्तृकाः। नृतिश्चलनार्थोऽपि। एषां परस्मैपदं न भवति। पा—पाययते। दमि—दमयते। आङ्यम—आयामयते। 'यमोऽपरिवेषणे' (भ्वा० ५६५) इति मित्संज्ञा प्रतिषिध्यते। आङ्यस—आयासयते। परिमुह—परिमोहयते। रुचि—रोचयते। नृति—नर्तयते। वद—वादयते। वस—वासयते॥ पादिषु धेट उपसंख्यानम्॥ धापयेते शिशुमेकं समीची (ऋ० १.९६.५)॥

## वा क्यषः ॥ ९० ॥

'लोहितादिडाज्भ्यः क्यष्' (३.१.१३) इति वक्ष्यति। तदन्ताद् धातोर्वा परस्मैपदं भवति। लोहितायति, लोहितायते। पटपटायति, पटपटायते[1]। अथात्र परस्मैपदेन मुक्ते कथमात्मनेपदं लभ्यते, यावता 'अनुदात्तङित०' (१.३.१२) इत्येवमादिना प्रकरणेन तन्नियतम्? एवं तर्हि आत्मनेपदमेवात्र विकल्पितं विधीयते, तच्चानन्तरं परस्मैपदप्रतिषेधेन सन्निधापितमिह संबध्यते। तेन मुक्ते 'शेषात् कर्तरि परस्मैपदम्' (१.३.७८) भवति॥

## द्युद्भ्यो लुङि ॥ ९१ ॥

वेत्येव। 'द्युत दीप्तौ' (भ्वा० ४९३) तत्साहचर्याद् लुठादयोऽपि कृपूपर्यन्तास्तथैव व्यपदिश्यन्ते। बहुवचननिर्देशादाद्यर्थो भवति। अनुदात्तेत्त्वान्नित्यमेवात्मनेपदे प्राप्ते, द्युतादिभ्यो लुङि वा परस्मैपदं भवति। व्यद्युतत्, व्यद्योतिष्ट। अलुठत्, अलोठिष्ट। लुङीति किम्? द्योतते॥

## वृद्भ्यः स्यसनोः ॥ ९२ ॥

---

१ - 'शेषादिति नित्ये प्राप्ते विकल्पार्थं वचनम्' इत्यधिकं क्वचित्।

द्युतादिष्वेव वृतादयः पठ्यन्ते। 'वृतु वर्तने' ( भ्वा० ५०८ ), 'वृधु वृद्धौ' ( भ्वा० ५०९ ), 'शृधु शब्दकुत्सायाम्' ( भ्वा० ५१० ), 'स्यन्दू प्रस्रवणे' ( भ्वा० ५११ ), 'कृपू सामर्थ्ये' ( भ्वा० ५१२ ) एतेभ्यो धातुभ्यः स्ये सनि च परतो वा परस्मैपदं भवति। वृतू—वर्त्स्यति, अवर्त्स्यत्, विवृत्सति, वर्तिष्यते, अवर्तिष्यत, विवर्तिषते। वृधू—वर्त्स्यति, अवर्त्स्यत्, विवृत्सति, वर्धिष्यते, अवर्धिष्यत, विवर्धिषते। स्यसनोरिति किम्? वर्तते॥

## लुटि च क्लृपः ॥ ९३ ॥

वृतादित्वादेव स्यसनोर्विकल्पः सिद्धः, लुटि विधीयते। चकारस्तर्हि स्यसनोरनुकर्षणार्थो न वक्तव्यः। एवं तर्हीयं प्राप्तिः पूर्वां प्राप्तिं बाधेत। तस्माच्चकारः स्यसनोरनुकर्षणार्थः क्रियते। लुटि च स्यसनोश्च कृपेः परस्मैपदं वा भवति। कल्प्ता, कल्प्तारौ, कल्प्तारः। कल्प्स्यति। अकल्प्स्यत्। चिक्लृप्सति। कल्पिता। कल्पिष्यते। अकल्पिष्यत। चिकल्पिषते[1]॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य तृतीयः पादः॥



# ॥ प्रथमाध्यायस्य चतुर्थः पादः ॥

## आ कडारादेका संज्ञा ॥ १ ॥

'कडाराः कर्मधारये' ( २.२.३८ ) इति वक्ष्यति। आ एतस्मात् सूत्रावधेर्यदित ऊर्ध्वमनुक्रमिष्यामः, तत्र एका संज्ञा भवतीति वेदितव्यम्। का पुनरसौ ? या परानवकाशा च। अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम्, एकैव संज्ञा भवतीति। वक्ष्यति—'ह्रस्वं लघु' ( १.४.१० )। भिदि, छिदि—भेत्ता। छेत्ता। 'संयोगे गुरु' ( १.४.११ )। शिक्षि, भिक्षि—शिक्षा। भिक्षा। संयोगपरस्य ह्रस्वस्य लघुसंज्ञा प्राप्नोति गुरुसंज्ञा च। एका संज्ञेति वचनाद् गुरुसंज्ञैव भवति। अततक्षत्। अररक्षत्। 'सन्वल्लघुनि०' ( ७.४.९३ ) इत्येष विधिर्न भवति॥

---

१ - 'यत्र परस्मैपदं तत्र तासि च क्लृप इतीट्प्रतिषेधः। यत्रात्मनेपदं तत्रेड् भवत्येव' इत्यधिकं क्वचित्।

## विप्रतिषेधे परं कार्यम् ॥ २ ॥

तुल्यबलविरोधो[1] विप्रतिषेधः। यत्र द्वौ प्रसङ्गावन्यार्थावेकस्मिन् युगपत् प्राप्नुतः स तुल्यबलविरोधो विप्रतिषेधः। तस्मिन् विप्रतिषेधे परं कार्यं भवति। उत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गेषु तुल्यबलता नास्तीति नायमस्य योगस्य विषयः। बलवतैव तत्र भवितव्यम्। अप्रवृत्तौ पर्यायेण वा प्रवृत्तौ प्राप्तायां वचनमारभ्यते। 'अतो दीर्घो यञि' (७.३.१०१) 'सुपि च' (७.३.१०२) इत्यस्यावकाशः—वृक्षाभ्याम्। प्लक्षाभ्याम्। 'बहुवचने झल्येत्' (७.३.१०३) इत्यस्यावकाशः—वृक्षेषु। प्लक्षेषु। इहोभयं प्राप्नोति—वृक्षेभ्यः, प्लक्षेभ्य इति। परं भवति विप्रतिषेधेन॥

## यू स्त्र्याख्यौ नदी ॥ ३ ॥

ई च ऊ च यू। अविभक्तिकोऽयं[2] निर्देशः। स्त्रियमाचक्षाते स्त्र्याख्यौ। मूलविभुजादिदर्शनात् (३.२.५ वा०) कप्रत्ययः। ईकारान्तमूकारान्तं च स्त्र्याख्यं शब्दरूपं नदीसंज्ञं भवति। ईकारान्तम्—कुमारी। गौरी। लक्ष्मीः। शार्ङ्गरवी। ऊकारान्तम्—ब्रह्मबन्धूः। यवागूः। यू इति किम्? मात्रे। दुहित्रे। स्त्र्याख्याविति किम्? ग्रामणीः। सेनानीः। खलपूः। आख्याग्रहणं किम्? शब्दार्थे स्त्रीत्व एव यथा स्यात् पदान्तराख्ये मा भूत्। ग्रामण्ये स्त्रियै। खलप्वे स्त्रियै। नदीप्रदेशाः—'आण् नद्याः' (७.३.११२) इत्येवमादयः॥

## नेयङुवङ्स्थानावस्त्री ॥ ४ ॥

पूर्वेणातिप्रसक्ता नदीसंज्ञा प्रतिषिध्यते। स्थितिः स्थानम्। इयङुवङोः स्थानमनयोरितीयङुवङ्स्थानौ, तौ यू नदीसंज्ञौ न भवतः, स्त्रीशब्दं वर्जयित्वा। हे श्रीः। हे भ्रूः। अस्त्रीति किम्? हे स्त्रि॥

## वामि ॥ ५ ॥

पूर्वेण नित्ये प्रतिषेधे प्राप्त आमि विकल्पः क्रियते। इयङुवङ्स्थानौ यू आमि परतो वा नदीसंज्ञौ न भवतः। श्रियाम्, श्रीणाम्। भ्रुवाम्, भ्रूणाम्। अस्त्रीत्येव—स्त्रीणाम्॥

## ङिति ह्रस्वश्च ॥ ६ ॥

दीर्घस्य नदीसंज्ञा विहिता ह्रस्वस्य न प्राप्नोति, इयङुवङ्स्थानयोश्च प्रतिषिद्धा। तस्मान् ङिति वा विधीयते। ङिति परतो ह्रस्वश्च य्वोः संबन्धी यः स्त्र्याख्यः, स्त्र्याख्या-

---

१ - 'विरोधः' इत्येव न्यासे। २ - 'अयम्' इति नास्ति मुद्रितेपु।

वियङुवङ्स्थानौ च यू वा नदीसंज्ञौ भवतः। कृत्यै, कृतये। धेन्वै, धेनवे। श्रियै, श्रिये। भ्रुवै, भ्रुवे। अस्त्रीत्येव—स्त्रियै। स्त्र्याख्यावित्येव—अग्नये। वायवे। भानवे॥

## शेषो घ्यसखि ॥ ७ ॥

ह्रस्व इति वर्तते। शेषोऽत्र घिसंज्ञो भवति, सखिशब्दं वर्जयित्वा। कश्च शेषः? ह्रस्वमिवर्णोवर्णान्तं यन्न स्त्र्याख्यम्, स्त्र्याख्यं च यन्न नदीसंज्ञकं स शेषः। अग्नये। वायवे। कृतये। धेनवे। असखीति किम्? सख्या। सख्ये। सख्युः। सख्यौ। घिप्रदेशाः—'द्वन्द्वे घि' ( २.२.३२ ) इत्येवमादयः॥

## पतिः समास एव ॥ ८ ॥

पतिशब्दस्य घिसंज्ञायां सिद्धायामयं नियमः क्रियते। पतिशब्दः समास एव घिसंज्ञो भवति। प्रजापतिना। प्रजापतये। समास इति किम् ? पत्या। पत्ये। एवकार[१] इष्टतोऽवधारणार्थः। दृढमुष्टिना। दृढमुष्टये॥

## षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥

पतिरिति वर्तते। पूर्वेण नियमेनासमासे न प्राप्नोतीति वचनमारभ्यते। षष्ठ्यन्तेन युक्तः पतिशब्दः छन्दसि विषये वा घिसंज्ञो भवति। कुलुञ्चानां पतये नमः ( तै० सं० ४.५.३.१ )। कुलुञ्चानां पत्ये नमः[२]। षष्ठीग्रहणं किम्? मया पत्यां जरदष्टिर्यथासः ( ऋ० १०.८५.३६ )। छन्दसीति किम् ? ग्रामस्य पत्ये॥

## ह्रस्वं लघु ॥ १० ॥

मात्रिकस्य ह्रस्वसंज्ञा कृता, तस्यानेन लघुसंज्ञा विधीयते। ह्रस्वमक्षरं लघुसंज्ञं भवति। भेत्ता। छेत्ता। अचीकरत्। अजीहरत्। लघुप्रदेशाः—'पुगन्तलघूपधस्य च' ( ७.३.८६ ) इत्येवमादयः॥

## संयोगे गुरु ॥ ११ ॥

ह्रस्वमिति वर्तते। पूर्वेण लघुसंज्ञायां प्राप्तायां गुरुसंज्ञा विधीयते। संयोगे परतो ह्रस्वमक्षरं गुरुसंज्ञं भवति। कुण्डा। हुण्डा। शिक्षा। भिक्षा। गुरुप्रदेशाः—'गुरोश्च हलः' ( ३.३.१०३ ) इत्येवमादयः॥

---

१ - 'एवकारकरणम्' इति न्यासे। २ - 'क्षेत्रस्य पतये नमः। क्षेत्रस्य पत्ये नमः' इत्यधिकं क्वचित्।

## दीर्घं च ॥ १२ ॥

संयोग इति नानुवर्तते। सामान्येन संज्ञाविधानम्। दीर्घं चाक्षरं गुरुसंज्ञं भवति। ईहांचक्रे। ईक्षांचक्रे[1]॥

## यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥ १३ ॥

यस्मात् प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद् वा तदादि शब्दरूपं प्रत्यये परतोऽङ्गसंज्ञं भवति। कर्ता। हर्ता। करिष्यति। हरिष्यति। अकरिष्यत्। औपगवः। कापटवः। यस्मादिति संज्ञिनिर्देशार्थम्, तदादीति संबन्धात्। प्रत्ययग्रहणं किम्? न्यविशत। व्यक्रीणीत। 'नेर्विशः' ( १.३.१७ ) इत्युपसर्गाद् विधिरस्ति, तदादेरङ्गसंज्ञा स्यात्। विधिग्रहणं किम्? प्रत्ययंपरत्वमात्रे मा भूत्। स्त्री इयती ॥ तदादिवचनं स्यादिनुमर्थम् ॥ करिष्यावः, करिष्यामः। कुण्डानि। पुनः प्रत्ययग्रहणं किमर्थम्? लुप्तप्रत्यये मा भूत्। श्र्यर्थम्। भ्र्वर्थम्। अङ्गप्रदेशाः—'अङ्गस्य' ( ६.४.१ ) इत्येवमादयः॥

## सुप्तिङन्तं पदम् ॥ १४ ॥

सुप्तिङिति प्रत्याहारग्रहणम्। सुबन्तं तिङन्तं च शब्दरूपं पदसंज्ञं भवति। ब्राह्मणाः पठन्ति[2]। पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधार्थम् ( परि० २७ )। गौरी ब्राह्मणितरा। पदप्रदेशाः—'पदस्य' ( ८.१.१६ ) 'पदात्' ( ८.१.१७ ) इत्येवमादयः॥

## नः क्ये ॥ १५ ॥

क्य इति क्यच्क्यङ्क्यषां सामान्यग्रहणम्। नान्तं शब्दरूपं क्ये परतः पदसंज्ञं भवति। क्यच्—राजीयति। क्यङ्—राजायते। क्यष्—वर्मायति, वर्मायते। सिद्धे सत्यारम्भो नियमार्थः। नान्तमेव क्ये परतः पदसंज्ञं भवति नान्यत्। वाच्यति। स्रुच्यति॥

## सिति च ॥ १६ ॥

'यचि भम्' ( १.४.१८ ) इति वक्ष्यति, तस्यायं पुरस्तादपवादः। सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति। 'भवतष्ठक्छसौ' ( ४.२.११५ )—भवदीयः। 'ऊर्णाया युस्' ( ५.२.१२३ )—ऊर्णायुः। 'ऋतोरण्' ( ५.१.१०५ ), 'छन्दसि घस्' ( ५.१.१०६ )—ऋत्वियः॥

---

१ - 'ऊहाञ्चक्रे' इति न्यासे। २ - 'पचन्ति' इति क्वाचित्कः।

## स्वादिष्वसर्वनामस्थाने ॥ १७ ॥

स्वादिष्विति सुशब्दादेकवचनाद् ( ४.१.२ ) आरभ्य आ कपः ( ५.४.१५१ ) प्रत्यया गृह्यन्ते। स्वादिषु प्रत्ययेषु परतः सर्वनामस्थानवर्जितेषु पूर्वं पदसंज्ञं भवति। राजभ्याम्, राजभिः। राजत्वम्। राजता। राजतरः। राजतमः। असर्वनामस्थान इति किम्? राजानौ, राजानः॥

## यचि भम् ॥ १८ ॥

स्वादिष्वसर्वनामस्थान इति वर्तते। पूर्वेण पदसंज्ञायां प्राप्तायां तदपवादो भसंज्ञा विधीयते। यकारादावजादौ च स्वादौ सर्वनामस्थानवर्जिते प्रत्यये परतः पूर्वं भसंज्ञं भवति। यकारादौ—गार्ग्यः। वात्स्यः। अजादौ—दाक्षिः। प्लाक्षिः॥ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्॥ नभ इव नभस्वत्। अङ्गिरा इव अङ्गिरस्वत्। मनुरिव मनुष्वत् ॥ वृषण्वस्वश्वयोः॥ वृषन्नित्येतत् वस्वश्वयोः परतो भसंज्ञं भवति छन्दसि विषये। वृषण्वसुः ( ऋ० १.१११.१ )। वृषणश्वस्य मेने ( श० ब्रा० ३.३.४.१८ )। भप्रदेशाः—'भस्य' ( ६.४.१२९ ) इत्येवमादयः॥

## तसौ मत्वर्थे ॥ १९ ॥

भमिति वर्तते। तकारान्तं सकारान्तं शब्दरूपं मत्वर्थे प्रत्यये परतो भसंज्ञं भवति। उदश्वित्वान् घोषः। विद्युत्वान् बलाहकः। सकारान्तम्—यशस्वी। पयस्वी। तसाविति किम्? तक्षवान् ग्रामः॥

## अयस्मयादीनिच्छन्दसि ॥ २० ॥

अयस्मयादीनि शब्दरूपाणि छन्दसि विषये साधूनि भवन्ति। भपदसंज्ञाधिकारे विधानात् तेन मुखेन साधुत्वमयस्मयादीनां विधीयते। अयस्मयं वर्म ( पै० सं० १.३७.५ )। अयस्मयानि ( कौ० सू० ८१.१८ ) पात्राणि। क्वचिदुभयमपि भवति। स सुष्टुभा स ऋक्वंता गणेनं ( ऋ० ४.५०.५ )। पदत्वात् कुत्वं भत्वाज् जश्त्वं न भवति। छन्दसीति किम्? अयोमयं वर्म। आकृतिगणोऽयम्[1]॥

## बहुषु बहुवचनम् ॥ २१ ॥

ङ्याप्प्रातिपदिकात् स्वादयः, लस्य तिबादय इति सामान्येन बहुवचनं विहितम्,

---

१ – 'आकृतिगणोऽयम्' इति नास्ति बाल०।

तस्यानेन बहुत्वसंख्या वाच्यत्वेन विधीयते। बहुषु बहुवचनं भवति। बहुत्वमस्य वाच्यं भवतीति यावत्। कर्मादयोऽप्यपरे विभक्तीनामर्था वाच्याः, तदीये बहुत्वे बहुवचनम्। कर्मादिषु बहुषु बहुवचनमित्यर्थः। ब्राह्मणाः पठन्ति। यत्र च संख्या संभवति तत्रायमुपदेशः। अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव॥

## द्व्येकयोर्द्विवचनैकवचने ॥ २२ ॥

द्वित्वैकत्वयोरर्थयोर्द्विवचनैकवचने भवतः। एतदपि सामान्यविहितयोर्द्विवचनैकवचनयोरर्थाभिधानम्। द्वित्वे द्विवचनं भवति, एकत्व एकवचनं भवति। ब्राह्मणौ पठतः[1]। ब्राह्मणः पठति॥

## कारके ॥ २३ ॥

कारक इति विशेषणमपादानादिसंज्ञाविषयमधिक्रियते। कारक इत्यधिकारो वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामः कारक इत्येवं तद् वेदितव्यम्। कारकशब्दश्च निमित्तपर्यायः। कारकं हेतुरित्यनर्थान्तरम्। कस्य हेतुः? क्रियायाः। वक्ष्यति—'ध्रुवमपायेऽपादानम्' (१.४.२४)—ग्रामादागच्छति। पर्वतादवरोहति। कारक इति किम्? वृक्षस्य पर्णं पतति। कुड्यस्य पिण्डः पतति। 'अकथितं च' (१.४.५१)—अकथितं च कारकं कर्मसंज्ञं भवति। माणवकं पन्थानं पृच्छति। कारक इति किम्? माणवकस्य पितरं पन्थानं पृच्छति। कारकसंशब्दनेषु चानेनैव विशेषणेन व्यवहारो विज्ञायते॥

## ध्रुवमपायेऽपादानम् ॥ २४ ॥

ध्रुवं यदपाययुक्तमपाये साध्ये यदवधिभूतं तत् कारकमपादानसंज्ञं भवति। ग्रामादागच्छति। पर्वतादवरोहति। सार्थाद् धीनः। रथात् पतितः॥ जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्॥ अधर्माज् जुगुप्सते। अधर्माद् विरमति। धर्मात् प्रमाद्यति। अपादानप्रदेशाः—'अपादाने पञ्चमी' (२.३.२८) इत्येवमादयः॥

## भीत्रार्थानां भयहेतुः ॥ २५ ॥

बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर्यस्तत् कारकमपादानसंज्ञं भवति। चौरेभ्यो बिभेति। चौरेभ्य उद्विजते। त्रायत्यर्थानाम्—चौरेभ्यस्त्रायते। चौरेभ्यो रक्षति। भयहेतुरिति किम्? अरण्ये बिभेति। अरण्ये त्रायते॥

## पराजेरसोढः ॥ २६ ॥

१ - 'पचतः ......... पचति' इति बाल०।

परापूर्वस्य जयतेः प्रयोगेऽसोढो योऽर्थः, सोढुं न शक्यते, तत् कारकमपादानसंज्ञं भवति। अध्ययनात् पराजयते। असोढ इति किम्? शत्रून् पराजयते॥

## वारणार्थानामीप्सितः ॥ २७ ॥

वारणार्थानां धातूनां प्रयोगे य ईप्सितोऽर्थः, तत् कारकमपादानसंज्ञं भवति। प्रवृत्तिविघातो वारणम्। यवेभ्यो गा वारयति। यवेभ्यो गा निवर्तयति। ईप्सित इति किम्? यवेभ्यो गा वारयति क्षेत्रे॥

## अन्तर्धौ येनादर्शनमिच्छति ॥ २८ ॥

व्यवधानमन्तर्धिः। अन्तर्धिनिमित्तं येनादर्शनमात्मन इच्छति, तत् कारकमपादानसंज्ञं भवति। उपाध्यायाद् अन्तर्धत्ते। उपाध्यायाद् निलीयते। मा मामुपाध्यायो द्राक्षीदिति निलीयते। अन्तर्धाविति किम्? चौरान् न दिदृक्षते। इच्छतिग्रहणं किम्? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्॥

## आख्यातोपयोगे ॥ २९ ॥

आख्याता प्रतिपादयिता। उपयोगो नियमपूर्वकं विद्याग्रहणम्। उपयोगे साध्ये य आख्याता, तत् कारकमपादानसंज्ञं भवति। उपाध्यायादधीते। उपाध्यायादागमयति। उपयोग इति किम्? नटस्य गाथां[1] शृणोति ॥

## जनिकर्तुः प्रकृतिः ॥ ३० ॥

जनेः कर्ता जनिकर्ता। जन्यर्थस्य जन्मनः कर्ता जायमानः, तस्य या प्रकृतिः कारणं हेतुः, तत् कारकमपादानसंज्ञं भवति। शृङ्गाच्छरो जायते। गोमयाद् वृश्चिको जायते॥

## भुवः प्रभवः ॥ ३१ ॥

कर्तुरिति वर्तते। भवनं भूः। प्रभवत्यस्मादिति प्रभवः। भूकर्तुः प्रभवो यः, तत् कारकमपादानसंज्ञं भवति। हिमवतो गङ्गा प्रभवति। काश्मीरेभ्यो वितस्ता प्रभवति। प्रथमत उपलभ्यत इत्यर्थः॥

---

१ – 'गाथाम्' इति यथान्यासम्।

## कर्मणा यमभिप्रैति स सम्प्रदानम् ॥ ३२ ॥

कर्मणा करणभूतेन कर्ता यमभिप्रैति, तत् कारकं संप्रदानसंज्ञं भवति। अन्वर्थसंज्ञा-विज्ञानाद् ददातिकर्मणेति विज्ञायते। उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति ॥ क्रियाग्रहणमपि कर्तव्यम् ॥ क्रिययापि यमभिप्रैति स संप्रदानम्। श्राद्धाय निगर्हते। युद्धाय संनह्यते। पत्ये शेते। संप्रदानप्रदेशाः—'चतुर्थी संप्रदाने' ( २.३.१३ ) इत्येवमादयः ॥ कर्मणः करणसंज्ञा वक्तव्या संप्रदानस्य च कर्मसंज्ञा ॥ पशुना रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः ॥

## रुच्यर्थानां प्रीयमाणः ॥ ३३ ॥

रुचिना समानार्था रुच्यर्थाः। अन्यकर्तृकोऽभिलाषो रुचिः। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थः, तत् कारकं संप्रदानसंज्ञं भवति। देवदत्ताय रोचते मोदकः। यज्ञदत्ताय स्वदतेऽपूपः। देवदत्तस्थस्याभिलाषस्य मोदकः कर्ता। प्रीयमाण इति किम्? देवदत्ताय रोचते मोदकः पथि ॥

## श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ ३४ ॥

श्लाघ, ह्नुङ्, स्था, शप् इत्येतेषां ज्ञीप्स्यमानो योऽर्थः, तत् कारकं संप्रदानसंज्ञं भवति। ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाणो बोधयितुमभिप्रेतः। देवदत्ताय श्लाघते। देवदत्तं श्लाघमानस्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थः। एवं देवदत्ताय ह्नुते। यज्ञदत्ताय ह्नुते। देवदत्ताय तिष्ठते। यज्ञदत्ताय तिष्ठते। देवदत्ताय शपते। यज्ञदत्ताय शपते। ज्ञीप्स्यमान इति किम् ? देवदत्तः श्लाघते ॥

## धारेरुत्तमर्णः ॥ ३५ ॥

धारयतेः प्रयोग उत्तमर्णो योऽर्थः, तत् कारकं संप्रदानसंज्ञं भवति। उत्तममृणं यस्य स उत्तमर्णः। कस्य चोत्तममृणम् ? यदीयं धनम्, धनस्वामी प्रयोक्ता उत्तमर्णः, स संप्रदानसंज्ञो भवति। देवदत्ताय शतं धारयति। यज्ञदत्ताय शतं धारयति। उत्तमर्ण इति किम्? देवदत्ताय शतं धारयति ग्रामे ॥

## स्पृहेरीप्सितः ॥ ३६ ॥

'स्पृह ईप्सायाम्' ( चु० २९४ ) चुरादावदन्तः पठ्यते। तस्येप्सितो योऽर्थः, तत् कारकं संप्रदानसंज्ञं भवति। ईप्सित इत्यभिप्रेत उच्यते। पुष्पेभ्यः स्पृहयति। फलेभ्यः

स्पृहयति। ईप्सित इति किम्? पुष्पेभ्यो वने स्पृहयति॥

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ ३७ ॥

अमर्षः क्रोधः। अपकारो द्रोहः। अक्षमेर्ष्या। गुणेषु दोषाविष्करणमसूया। क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः, तत् कारकं संप्रदानसंज्ञं भवति। क्रोधस्तावत् कोप एव, द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते। तस्मात् सामान्येन विशेषणं 'यं प्रति कोप' इति। देवदत्ताय क्रुध्यति। देवदत्ताय द्रुह्यति। देवदत्तायेर्ष्यति। देवदत्तायासूयति। यं प्रति कोप इति किम्? भार्यामीर्ष्यति, मैनामन्यो द्राक्षीदिति॥

## क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ३८ ॥

पूर्वेण संप्रदानसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते। क्रुधद्रुहोरुपसृष्टयोरुपसर्ग-संबद्धयोर्यं प्रति कोपः, तत् कारकं कर्मसंज्ञं भवति। देवदत्तमभिक्रुध्यति। देवदत्तमभिद्रुह्यति। उपसृष्टयोरिति किम्? देवदत्ताय क्रुध्यति। यज्ञदत्ताय द्रुह्यति॥

## राधीक्ष्योर्यस्य विप्रश्नः ॥ ३९ ॥

राधेरीक्षेश्च कारकं संप्रदानसंज्ञं भवति। कीदृशम्? यस्य विप्रश्नः, विविधः प्रश्नः विप्रश्नः। स कस्य भवति? यस्य[1] शुभाशुभं पृच्छ्यते। देवदत्ताय राध्यति। देवदत्तायेक्षते। नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः॥

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ ४० ॥

प्रति आङ् इत्येवंपूर्वस्य शृणोतेः कारकं संप्रदानसंज्ञं भवति। कीदृशम्? पूर्वस्य कर्ता। प्रतिपूर्व आङ्पूर्वश्च शृणोतिरभ्युपगमे प्रतिज्ञाने वर्तते। स चाभ्युपगमः परेण प्रयुक्तस्य सतो भवति। तत्र प्रयोक्ता पूर्वस्याः क्रियायाः कर्ता संप्रदानसंज्ञो भवति। देवदत्ताय गां प्रतिशृणोति। देवदत्ताय गामाशृणोति। प्रतिजानीत इत्यर्थः॥

## अनुप्रतिगृणश्च ॥ ४१ ॥

पूर्वस्य कर्तेति वर्तते। अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानसंज्ञं भवति। होत्रेऽनुगृणाति। होत्रे प्रतिगृणाति[2]। होता प्रथमं शंसति, तमन्यः प्रोत्साहयति। अनुगरः प्रतिगर इति हि शंसितुः प्रोत्साहने वर्तते। होत्रेऽनुगृणाति। होतारं शंसन्तं प्रोत्साहयतीत्यर्थः॥

१ - 'यत्संबन्धि' इति पद०। २ - अपेक्षितमपीदमुदाहरणं न सार्वत्रिकम्।

## साधकतमं करणम् ॥ ४२ ॥

क्रियासिद्धौ यत् प्रकृष्टोपकारकं विवक्षितम्, तत् साधकतमं कारकं करणसंज्ञं भवति। दात्रेण लुनाति। परशुना छिनत्ति। तमब्ग्रहणं किम्? गङ्गायां घोषः। कूपे गर्गकुलम्। करणप्रदेशाः—'कर्तृकरणयोस्तृतीया' ( २.३.१८ ) इत्येवमादयः॥

## दिवः कर्म च ॥ ४३ ॥

पूर्वेण करणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते। दिवः साधकतमं यत् कारकम्, तत् कर्मसंज्ञं भवति चकारात् करणसंज्ञं च। अक्षान् दीव्यति। अक्षैर्दीव्यति॥

## परिक्रयणे सम्प्रदानमन्यतरस्याम् ॥ ४४ ॥

साधकतममिति वर्तते। पूर्वेण करणसंज्ञायां प्राप्तायां संप्रदानसंज्ञा पक्षे विधीयते। परिक्रयणे साधकतमं कारकमन्यतरस्यां संप्रदानसंज्ञं भवति। परिक्रयणं नियतकालं वेतनादिना स्वीकरणम्, नात्यन्तिकः क्रय एव। शतेन परिक्रीतोऽनुब्रूहि। शताय परिक्रीतोऽनुब्रूहि। सहस्रेण परिक्रीतोऽनुब्रूहि। सहस्राय परिक्रीतोऽनुब्रूहि॥

## आधारोऽधिकरणम् ॥ ४५ ॥

आध्रियन्तेऽस्मिन् क्रिया इत्याधारः। कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति य आधारः, तत् कारकमधिकरणसंज्ञं भवति। कट आस्ते। कटे शेते। स्थाल्यां पचति। अधिकरणप्रदेशाः—'सप्तम्यधिकरणे च' ( २.३.३६ ) इत्येवमादयः॥

## अधिशीङ्स्थासां कर्म ॥ ४६ ॥

पूर्वेणाधिकरणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते। अधिपूर्वाणां शीङ् स्था आस् इत्येतेषामाधारो यः, तत् कारकं कर्मसंज्ञं भवति। ग्राममधिशेते। ग्राममधितिष्ठति। पर्वतमध्यास्ते॥

## अभिनिविशश्च ॥ ४७ ॥

अभिनिपूर्वस्य विशतेराधारो यः, तत् कारकं कर्मसंज्ञं भवति। ग्राममभिनिविशते। कथं कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः, या या संज्ञा यस्मिन् यस्मिन् संज्ञिन्यभिनिविशत इति? अन्यतरस्यामिति वर्तते, 'परिक्रयणे संप्रदानमन्यतरस्याम्' ( १.४.४४ ) इत्यतः। सा च व्यवस्थितविभाषा विज्ञायते॥

## उपान्वध्याङ्वसः ॥ ४८ ॥

उप अनु अधि आङ् इत्येवंपूर्वस्य वसतेराधारो यः, तत् कारकं कर्मसंज्ञं भवति। ग्राममुपवसति सेना। पर्वतमुपवसति। ग्राममनुवसति। ग्राममधिवसति। ग्राममावसति॥ वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः॥ ग्राम उपवसति। भोजननिवृत्तिं करोतीत्यर्थः॥

## कर्तुरीप्सिततमं कर्म ॥ ४९ ॥

कर्तुः क्रियया यदाप्तुमिष्टतमम्, तत् कारकं कर्मसंज्ञं भवति। कटं करोति। ग्रामं गच्छति। कर्तुरिति किम्? माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषा न कर्तुः। तमब्ग्रहणं किम्? पयसौदनं भुङ्क्ते। कर्मेत्यनुवर्तमाने पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। इतरथाधारस्यैव हि स्यात्। गेहं प्रविशतीति। ओदनं पचति सक्तून् पिबतीत्यादिषु न स्यात्। पुनः कर्मग्रहणात् सर्वत्र सिद्धं भवति। कर्मप्रदेशाः—'कर्मणि द्वितीया' (२.३.२) इत्येवमादयः॥

## तथायुक्तं चानीप्सितम् ॥ ५० ॥

येन प्रकारेण कर्तुरीप्सिततमं क्रियया युज्यते, तेनैव चेत् प्रकारेण यदनीप्सितं युक्तं भवति, तस्य कर्मसंज्ञा विधीयते। ईप्सितादन्यत् सर्वमनीप्सितं द्वेष्यमितरच्च। विषं भक्षयति। चौरान् पश्यति। ग्रामं गच्छन् वृक्षमूलान्युपसर्पति॥

## अकथितं च ॥ ५१ ॥

अकथितं च यत् कारकम्, तत् कर्मसंज्ञं भवति। केनाकथितम्? अपादानादिभिर्विशेषकथाभिः। परिगणनं कर्तव्यम् —

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना॥

उपयुज्यत इत्युपयोगः पयःप्रभृति, तस्य निमित्तं गवादि, तस्योपयुज्यमानपयःप्रभृतिनिमित्तस्य गवादेः कर्मसंज्ञा विधीयते। पाणिना कांस्यपात्र्यां गां दोग्धि पयः। पाण्यादिकमप्युपयोगनिमित्तम्, तस्य कस्माद् न भवति? नैतदस्ति। विहिता हि तत्र करणादिसंज्ञा। तदर्थमाह—अपूर्वविधाविति। ब्रुविशासिगुणेन च यत् सचते। ब्रुविशास्योर्गुणः साधनं प्रधानं कर्म धर्मादिकम्, तेन यत् संबध्यते, तदकीर्तितमाचरितं कविना, तदकथितमुक्तं सूत्रकारेण। दुहि—गां दोग्धि पयः। याचि—पौरवं गां याचते। रुधि—गामवरुणद्धि व्रजम्। प्रच्छि—माणवकं पन्थानं पृच्छति। भिक्षि—पौरवं गां भिक्षते। चिञ्—वृक्षमवचिनोति फलानि।

ब्रुवि—माणवकं धर्मं ब्रूते। शासि—माणवकं धर्ममनुशास्ति॥

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥५२ ॥

अर्थशब्दः प्रत्येकमभिसंबध्यते। गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां च धातूनां तथा शब्दकर्मकाणामकर्मकाणां चाण्यन्तानां यः कर्ता, स ण्यन्तानां कर्मसंज्ञो भवति। गच्छति माणवको ग्रामम्। गमयति माणवकं ग्रामम्। याति माणवको ग्रामम्। यापयति माणवकं ग्रामम् ॥गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः॥ नयति भारं देवदत्तः। नाययति भारं देवदत्तेन। वहति भारं देवदत्तः। वाहयति भारं देवदत्तेन ॥ वहेरनियन्तृकर्तृकस्येति वक्तव्यम्॥ इह प्रतिषेधो मा भूत्—वहन्ति यवान् बलीवर्दाः। वाहयति यवान् बलीवर्दानिति। बुद्धि—बुध्यते माणवको धर्मम्। बोधयति माणवकं धर्मम्। वेत्ति माणवको धर्मम्। वेदयति माणवकं धर्मम्। प्रत्यवसानमभ्यवहारः—भुङ्क्ते माणवक ओदनम्। भोजयति माणवकमोदनम्। अश्नाति माणवक ओदनम्। आशयति माणवकमोदनम् ॥ आदिखाद्योः प्रतिषेधो वक्तव्यः॥ अत्ति माणवक ओदनम्। आदयते माणवकेनौदनम्। खादति माणवकः। खादयति माणवकेन॥भक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः॥ भक्षयति पिण्डीं देवदत्तः। भक्षयति पिण्डीं देवदत्तेनेति। अहिंसार्थस्येति किम्? भक्षयन्ति बलीवर्दाः सस्यम्, भक्षयन्ति[1] बलीवर्दान् सस्यम्। शब्दकर्मणाम्—अधीते माणवको वेदम्। अध्यापयति माणवकं वेदम्। पठति माणवको वेदम्। पाठयति माणवकं वेदम्। अकर्मकाणाम्—आस्ते देवदत्तः। आसयति देवदत्तम्। शेते देवदत्तः। शाययति देवदत्तम्। एतेषामिति किम्? पचत्योदनं देवदत्तः। पाचयत्योदनं देवदत्तेनेति। अण्यन्तानामिति किम्? गमयति देवदत्तो यज्ञदत्तम्, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः॥

## हृक्रोरन्यतरस्याम् ॥५३ ॥

अणि कर्ता स णाविति वर्तते। हरतेः करोतेश्चाण्यन्तयोर्यः कर्ता, स ण्यन्तयोरन्यतरस्यां कर्मसंज्ञो भवति। हरति भारं माणवकः। हारयति भारं माणवकम् , माणवकेनेति वा। करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, देवदत्तेनेति वा ॥अभिवादिदृशोरात्मनेपद उपसंख्यानम्॥ अभिवदति गुरुं देवदत्तः। अभिवादयते गुरुं देवदत्तम्, देवदत्तेनेति वा। पश्यन्ति भृत्या राजानम्। दर्शयते भृत्यान् राजा,[2] भृत्यैरिति वा। आत्मनेपद इति किम्? दर्शयति चैत्रं मैत्रमपरः। प्राप्तविकल्पत्वाद् द्वितीयैव। अभिवादयति गुरुं माणवकेन पिता। अप्राप्तविकल्पत्वात्तृतीयैव॥

---

१ - 'भक्षयति' इति न्यास-पद०। २ - यथामहाभाष्यम् । 'राजानम्' इति मुद्रितेषु ।

## स्वतन्त्रः कर्ता ॥ ५४ ॥

स्वतन्त्र इति प्रधानभूत उच्यते, अगुणभूतः। यः क्रियासिद्धौ स्वातन्त्र्येण विवक्ष्यते, तत् कारकं कर्तृसंज्ञं भवति। देवदत्तः पचति। स्थाली पचति। कर्तृप्रदेशाः— 'कर्तृकरणयोस्तृतीया' ( २.३.१८ ) इत्येवमादयः॥

## तत्प्रयोजको हेतुश्च ॥ ५५ ॥

तदित्यनन्तरः कर्ता परामृश्यते। तस्य प्रयोजकः तत्प्रयोजकः। निपातनात् समासः। स्वतन्त्रस्य प्रयोजको योऽर्थः, तत् कारकं हेतुसंज्ञं भवति चकारात् कर्तृसंज्ञं च। संज्ञासमावेशार्थश्चकारः। कुर्वाणं प्रयुङ्क्ते, कारयति। हारयति। हेतुत्वाद् णिचो निमित्तं कर्तृत्वाच्च कर्तृप्रत्ययेनोच्यते। हेतुप्रदेशाः—'हेतुमति च' ( ३.१.२६ ) इत्येवमादयः॥

## प्राग्रीश्वरान्निपाताः ॥ ५६ ॥

'अधिरीश्वरे' ( १.४.९७ ) इति वक्ष्यति। प्रागेतस्मादवधेर्यानित ऊर्ध्वमनुक्रमिष्यामः निपातसंज्ञास्ते वेदितव्याः। वक्ष्यति 'चादयोऽसत्त्वे' ( १.४.५७ ) च वा ह अह। प्राग्वचनं संज्ञासमावेशार्थम्। गत्युपसर्गकर्मप्रवचनीयसंज्ञाभिस्सह निपातसंज्ञा समाविशति। रेफोच्चारणम् 'ईश्वरे तोसुन्कसुनौ' ( ३.४.१३ ) इत्ययमवधिर्मा विज्ञायीति॥

रीश्वराद् वीश्वरान् मा भूत् कृन्मेजन्तः परोऽपि सः।
समासेष्वव्ययीभावो लौकिकं चातिवर्तते ॥

## चादयोऽसत्त्वे ॥ ५७ ॥

चादयो निपातसंज्ञा भवन्ति न चेत् सत्त्वे वर्तन्ते। प्रसज्यप्रतिषेधोऽयम्, सत्त्वमिति च[1] द्रव्यमुच्यते। च। वा। ह। अह। एव। एवम्। नूनम्। शश्वत्। युगपत्। सूपत्। कूपत्। कुवित्। नेत्। चेत्। चण्। कच्चित्। यत्र। नह। हन्त। माकिम्। नकिम्। माङ्। माङो ङकारो विशेषणार्थो 'माङि लुङ्' ( ३.३.१७५ ) इति। इह न भवति—मा भवतु, मा भविष्यति। नञ्। यावत्। तावत्। त्वा। त्वै। द्वै। रै। श्रौषट्। वौषट्। स्वाहा। वषट्। स्वधा। ओम्। किल। तथा। अथ। सु। स्म। अस्मि। अ। इ। उ। ऋ। लृ। ए। ऐ। ओ। औ। अम्। तक्। उञ्। उकञ्। वेलायाम्। मात्रायाम्। यथा। यत्। यम्। तत्। किम्। पुरा। अद्धा। धिक्। हाहा। हे। है। प्याट्। पाट्। थाट्। अहो। उताहो। हो। तुम्। तथाहि। खलु। आम्। आहो। अथो। ननु। मन्ये। मिथ्या। असि। ब्रूहि। तु। नु। इति। इव। वत्। चन। बत। इहं[2]। शम्।

---

१ – 'च' इति यथान्यासपद०। मुद्रितेषु नास्ति। २ – 'आम्' इत्यधिकं बालादि०।

कम्। अनुकम्। नहिकम्। हिकम्। सुकम्। सत्यम्। ऋतम्[१]। श्रद्धा। इद्धा। मुधा। नोचेत्। नचेत्। नहि। जातु। कथम्। कुतः। कुत्र। अव। अनु। हाहौ। हैहा। ईहा। आहोस्वित्। छम्बट्। खम्। दिष्ट्या। पशु। वट्। सह। आनुषक्। अङ्ग। फट्। ताजक्। अये। अरे। चटु। बाट्। कुम्। खुम्। घुम्। हुम्। आईम्। शीम्। सीम्। वै[२]। उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः ( ग० सू० १६ )। उपसर्गप्रतिरूपकाः —

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥

'अच उपसर्गात् तः' ( ७.४.४७ ) इति तत्वं न भवति। दुर्नीतम्। दुर्नयः। दुर्निर्णयः। 'उपसर्गाद०' ( ८.४.१४ ) इति णत्वं न भवति। असत्त्व इति किम् ? पशुर्वै पुरुषः[३]। पशुः पुरोडाशः। निपातप्रदेशाः—'स्वरादिनिपातमव्ययम्' ( १.१.३७ ) इत्येवमादयः॥

## प्रादयः ॥ ५८ ॥

प्रादयोऽसत्त्वे निपातसंज्ञा भवन्ति। प्र। परा। अप। सम्। अनु। अव। निस्। निर्। दुस्। दुर्। वि। आङ्। नि। अधि। अपि। अति। सु। उत्। अभि। प्रति। परि। उप। पृथग्योगकरणमुत्तरसंज्ञाविशेषणार्थम्। 'उपसर्गाः क्रियायोगे' ( १.४.५९ ) इति चादीनामुपसर्गसंज्ञा मा भूत्। असत्त्व इत्येव—परा जयन्ति सेनाः[४]॥

## उपसर्गाः क्रियायोगे ॥ ५९ ॥

प्रादयः क्रियायोग उपसर्गसंज्ञा भवन्ति। प्रणयति। परिणयति। प्रणायकः। परिणायकः। क्रियायोग इति किम् ? प्रगतो नायकोऽस्माद् देशात् प्रनायको देशः॥ मरुच्छब्दस्य चोपसंख्यानं कर्तव्यम्॥ मरुद्भिर्दत्तो मरुत्तः। संज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि 'अच उपसर्गात् तः' (७.४.४७) इति तत्वं भवति॥ श्रच्छब्दस्योपसंख्यानम्॥ 'आतश्चोपसर्गे' ( ३.३.१०६ ) इत्यङ् भवति। श्रद्धा। उपसर्गप्रदेशाः—'उपसर्गे घोः किः' ( ३.३.९२ ) इत्येवमादयः॥

## गतिश्च ॥ ६० ॥

---

१ - अत उत्तरम् - " वाकिर् , नकिर् , आङ् , ' अ, मा, नो, ना प्रतिषेधे', उत, दह " इत्यधिकं क्वचित्।

२ - अत उत्तरम् - 'त्वै, तुवै, नुन्वै, अध, अधस्, स्मि, अच्छ, अदल, दह, हेहे, हैहै, नौ, म, आस्, शस्, शुकम्, सम्, वव, वात्, ङिकम्, हिनुक्, वशम्, शिकम्, श्वकम्, सनुकम्, नुकम्, अन्त, द्यौ, सुक्, भाजक्, अले, वट्, वाट्, कीम्' इत्यधिकं क्वचित्।

३ - पुरुषो वै पशुः। जै० ब्रा० २.४२ ।

४ - मुद्रितेषु एकवचनम्।





गतिसंज्ञकाश्च प्रादयो भवन्ति क्रियायोगे। प्रकृत्य। प्रकृतम्। यत् प्रकरोति। योगविभाग उत्तरार्थः। उत्तरत्र गतिसंज्ञैव यथा स्यात्, उपसर्गसंज्ञा मा भूत्। ऊरीस्यादित्यत्र 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (८.३.८७) इति षत्वं प्रसज्येत। चकारः संज्ञासमावेशार्थः। प्रणीतम्। अभिषिक्तम्। 'गतिरनन्तरः' (६.२.४९) इति स्वरः, 'उपसर्गाद्०' (८.४.१४, ८.३.६५) इति णत्वषत्वे च भवतः॥ कारिकाशब्दस्योपसंख्यानम्॥ कारिकाकृत्य। कारिकाकृतम्। यत् कारिकाकरोति॥ पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम्॥ पुनरुत्स्यूतं वासो देयम् (मै० सं० १.७.२)। 'गतिर्गतौ' (८.१.७०) इति निघातो भवति। (उशिग्दूतः) चनो हितः (ऋ० ३.११.२)। 'गतिरनन्तरः' (६.२.४९) इति स्वरः। गतिप्रदेशाः—'कुगतिप्रादयः' (२.२.१८) इत्येवमादयः॥

## ऊर्यादिच्विडाचश्च ॥ ६१ ॥

ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति। च्विडाचोः कृभ्वस्तियोगे विधानम्। तत्साहचर्यादूर्यादीनामपि तैरेव योगे गतिसंज्ञा विधीयते। ऊरीउररी-शब्दावङ्गीकरणे विस्तारे च। ऊरीकृत्य। ऊरीकृतम्। यदूरीकरोति। उररीकृत्य। उररीकृतम्। यदुररीकरोति। पापी। ताली। आताली। वेताली। धूसी। शकला। संशकला। ध्वंसकला। भ्रंशकला। एते शकलादयो हिंसायाम्। शकलाकृत्य। संशकलाकृत्य। ध्वंसकलाकृत्य। भ्रंशकलाकृत्य। गुलगुधा पीडार्थे। गुलगुधाकृत्य। सजूः सहार्थे। सजूःकृत्य। फलू, फली, विक्ली, आक्ली इति विकारे। फलूकृत्य। फलीकृत्य। विक्लीकृत्य। आक्लीकृत्य[1]। आलोष्टी, कराली, केवाली, शेवाली, वर्षाली, मस्मसा, मसमसा। एते हिंसायाम्। वषट्। वौषट्। श्रौषट्। स्वाहा। स्वधा। बन्धा। प्रादुस्। श्रुत्। आविस्। च्व्यन्ताः खल्वपि—शुक्लीकृत्य। शुक्लीकृतम्। यत् शुक्लीकरोति। डाच्—पटपटाकृत्य। पटपटाकृतम्। यत् पटपटाकरोति॥

## अनुकरणं चानितिपरम् ॥ ६२ ॥

इतिः परो यस्मादिति बहुव्रीहिः। अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं भवति। खाट्कृत्य। खाट्कृतम्। यत् खाट्करोति। अनितिपरमिति किम्? खाडिति कृत्वा निरष्ठीवत्॥

## आदरानादरयोः सदसती ॥ ६३ ॥

प्रीतिसंभ्रमः[2] आदरः। परिभवौदासीन्यमनादरः। आदरानादरयोर्यथाक्रमं सदसच्छब्दौ

१ – 'आक्लीकृत्य' इति नास्ति हैं०। २ – 'प्रीत्यतिशयः' इति बाल०।

गतिसंज्ञौ भवतः। सत्कृत्य। सत्कृतम्। यत् सत्करोति। असत्कृत्य। असत्कृतम्। यदसत्करोति। आदरानादरयोरिति किम् ? सत् कृत्वा काण्डं गतः। असत् कृत्वा काण्डं गतः॥

## भूषणेऽलम् ॥ ६४ ॥

अलमिति प्रतिषेधे, सामर्थ्ये, पर्याप्तौ, भूषणे चेति विशेषणमुपादीयते। भूषणे योऽलंशब्दः स गतिसंज्ञो भवति। अलंकृत्य। अलंकृतम्। यदलंकरोति। भूषण इति किम्? अलं भुक्त्वौदनं गतः॥

## अन्तरपरिग्रहे ॥ ६५ ॥

अन्तःशब्दोऽपरिग्रहेऽर्थे गतिसंज्ञो भवति। परिग्रहः स्वीकरणं तदभावे गतिसंज्ञा विधीयते। अन्तर्हत्य। अन्तर्हतम्। यदन्तर्हन्ति। अपरिग्रह इति किम्? अन्तर्हत्वा मूषिकां श्येनो गतः। परिगृह्य गत इत्यर्थः ॥ अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या॥ अन्तर्धा। अन्तर्धिः। अन्तर्णयति॥

## कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥

कणेशब्दो मनस्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः। कणेहत्य पयः पिबति। मनोहत्य पयः पिबति। तावत् पिबति यावदस्याभिलाषो निवृत्तः। श्रद्धा प्रतिहतेत्यर्थः। श्रद्धाप्रतीघात इति किम्? कणे हत्वा गतः। मनो हत्वा गतः॥

## पुरोऽव्ययम् ॥ ६७ ॥

असिप्रत्ययान्तः पुरः शब्दोऽव्ययम्, स गतिसंज्ञो भवति। समासस्वरोपचाराः प्रयोजनम्। पुरस्कृत्य। पुरस्कृतम्। यत् पुरस्करोति। अव्ययमिति किम् ? पूः, पुरौ। पुरः कृत्वा[१] गतः॥

## अस्तं च ॥ ६८ ॥

अस्तंशब्दो मकारान्तोऽव्ययमनुपलब्धौ वर्तते, स गतिसंज्ञो भवति। अस्तंगत्य सविता पुनरुदेति। अस्तंगतानि धनानि। यदस्तंगच्छति। अव्ययमित्येव—अस्तं कृत्वा काण्डं गतः। क्षिप्तमित्यर्थः॥

## अच्छ गत्यर्थवदेषु ॥ ६९ ॥

१ - 'काण्डम्' इत्यधिकं मुद्रितेषु।

अच्छशब्दोऽव्ययमभिशब्दस्यार्थे वर्तते। स गत्यर्थेषु धातुषु वदतौ च गतिसंज्ञो भवति। अच्छगत्य। अच्छंगतम्। यदंच्छुगच्छंति। वदतौ—अच्छोद्य। अच्छोंदितम्। यदंच्छुवदंति। अव्ययमित्येव—उदकमच्छं गच्छति॥

## अदोऽनुपदेशे ॥ ७० ॥

अदः शब्दस्त्यदादिषु पठ्यते, सोऽनुपदेशे गतिसंज्ञो भवति। उपदेशः परार्थः प्रयोगः। स्वयमेव तु यदा बुद्ध्या परामृशति तदा नास्त्युपदेश इति सोऽस्य विषयः। अदःकृत्य। अदःकृंतम्। यदंदःकुरोतिं। अनुपदेश इति किम्? अदः कृत्वा काण्डं गत इति परस्य कथयति॥

## तिरोऽन्तर्धौ ॥ ७१ ॥

अन्तर्धिर्व्यवधानम्। तत्र तिरःशब्दो गतिसंज्ञो भवति। तिरोभूय। तिरोंभूतम्। यत् तिंरोभवंति। अन्तर्धाविति किम्? तिरो भूत्वा स्थितः। पार्श्वतो भूत्वेत्यर्थः॥

## विभाषा कृञि ॥ ७२ ॥

अन्तर्धाविति वर्तते। प्राप्तविभाषेयम्। तिरःशब्दः करोतौ परतो विभाषा गतिसंज्ञो भवति। तिरःकृत्य। तिरस्कृत्य। तिरंस्कृतम्। यत् तिंरस्कुरोतिं। तिरः कृत्वा। तिरस्कृत्वा। अन्तर्धावित्येव—तिरः कृत्वा काष्ठं तिष्ठति॥

## उपाजेऽन्वाजे ॥ ७३ ॥

विभाषा कृञीति वर्तते। उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते, तौ कृञि विभाषा गतिसंज्ञौ भवतः। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजेकृत्य, अन्वाजे कृत्वा॥

## साक्षात्प्रभृतीनि च ॥ ७४ ॥

विभाषा कृञीति वर्तते। साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि भवन्ति ॥ साक्षात्प्रभृतिषु च्व्यर्थवचनम् ॥ साक्षात्कृत्य, साक्षात्कृत्वा। मिथ्याकृत्य, मिथ्या कृत्वा॥ साक्षात्। मिथ्या। चिन्ता। भद्रा। लोचना। विभाषा। संपत्का। आस्था। अमा। श्रद्धा। प्राजर्या। प्राजरुहा। वीजर्या। वीजरुहा। संसर्या। अर्थे। लवणम्। उष्णम्। शीतम्। उदकम्। आर्द्रम्। गतिसंज्ञासंनियोगेन लवणादीनां मकारान्तत्वं निपात्यते। अग्नौ। वशे। विकम्पने। विहसने। प्रहसने। प्रतपने।

प्रादुस्। नमस्। आविस्॥

## अनत्याधान उरसिमनसी ॥ ७५ ॥

विभाषा कृञीति वर्तते। अत्याधानमुपश्लेषणम्, तदभावेऽनत्याधान उरसिमनसी शब्दौ विभाषा कृञि गतिसंज्ञौ भवतः। उरसिकृत्य, उरसि कृत्वा। मनसिकृत्य, मनसि कृत्वा। अनत्याधान इति किम्? उरसि कृत्वा पाणिं शेते॥

## मध्येपदेनिवचने च ॥ ७६ ॥

विभाषा कृञीति वर्तते चकारादनत्याधान इति च। मध्ये पदे निवचने इत्येते शब्दा अनत्याधाने विभाषा कृञि गतिसंज्ञा भवन्ति। मध्येकृत्य, मध्ये कृत्वा। पदेकृत्य, पदे कृत्वा। निवचनं वचनाभावः। निवचनेकृत्य, निवचने कृत्वा। वाचं नियम्येत्यर्थः। अनत्याधान इत्येव—हस्तिनः पदे कृत्वा शिरः शेते॥

## नित्यं हस्ते पाणावुपयमने ॥ ७७ ॥

कृञीति वर्तते। हस्ते पाणौ इत्येतौ शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमने। उपयमनं दारकर्म। पाणौकृत्य। हस्तेकृत्य। दारकर्म कृत्वेत्यर्थः। उपयमन इति किम्? हस्ते कृत्वा कार्षापणं गतः॥

## प्राध्वं बन्धने ॥ ७८ ॥

कृञीति वर्तते। प्राध्वमिति मकारान्तमव्ययमानुकूल्ये वर्तते, तदानुकूल्यं बन्धनहेतुकं यदा भवति तदा प्राध्वंशब्दः कृञि नित्यं गतिसंज्ञो भवति। प्राध्वंकृत्य। बन्धन इति किम्? प्राध्वं कृत्वा शकटं गतः॥

## जीविकोपनिषदावौपम्ये ॥ ७९ ॥

कृञीति वर्तते। जीविका उपनिषदित्येतौ शब्दावौपम्ये विषये कृञि गतिसंज्ञौ भवतः। जीविकाकृत्य। उपनिषत्कृत्य। औपम्य इति किम्? जीविकां कृत्वा गतः॥

## ते प्राग् धातोः ॥ ८० ॥

ते गत्युपसर्गसंज्ञकाः धातोः प्राक् प्रयोक्तव्याः। तथा चैवोदाहृताः। तेग्रहणमुपसर्गार्थम्। गतयो ह्यनन्तराः॥

## छन्दसि परेऽपि ॥ ८१ ॥

प्राक् प्रयोगे प्राप्ते छन्दसि परेऽप्यभ्यनुज्ञायन्ते। छन्दसि विषये गत्युपसर्गसंज्ञकाः परेऽपि पूर्वेऽपि प्रयोक्तव्याः। न च परेषां प्रयुज्यमानानां संज्ञाकार्यं किञ्चिदस्ति। केवलं परप्रयोगेऽपि क्रियायोग एषामस्तीति ज्ञाप्यते। याति नि हस्तिना, नियाति हस्तिना। हन्ति नि मुष्टिना, निहन्ति मुष्टिना॥

## व्यवहिताश्च ॥ ८२ ॥

व्यवहिताश्च गत्युपसर्गसंज्ञकाः छन्दसि दृश्यन्ते। आ मुन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ( ऋ० ३.४५.१ )। आ याहि ( ऋ० ६.१६.१० )॥

## कर्मप्रवचनीयाः ॥ ८३ ॥

कर्मप्रवचनीया इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामः कर्मप्रवचनीयसंज्ञास्ते वेदितव्याः। 'अधिरीश्वरे' ( १.४.९७ ) इति यावद् वक्ष्यति[1]। कर्मप्रवचनीयप्रदेशाः— 'कर्मप्रवचनीययुक्ते द्वितीया' ( २.३.८ ) इत्येवमादयः॥

## अनुर्लक्षणे ॥ ८४ ॥

अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। शाकल्यस्य संहितामनु प्रावर्षत्। अनड्वाह्यज्ञम् ( मा० गृ० २.१०.७ ) अन्वसिञ्चत्। अगस्त्यमन्वसिञ्चन् प्रजाः। किमर्थमिदमुच्यते, यावता 'लक्षणेत्थंभूताख्यान०' ( १.४.९० ) इति सिद्धैवानोः कर्मप्रवचनीयसंज्ञा? हेत्वर्थं तु वचनं हेतुतृतीयां [2]बाधित्वा द्वितीयैव यथा स्यात्॥

## तृतीयार्थे ॥ ८५ ॥

अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। नदीमन्ववसिता सेना। पर्वतमन्ववसिता सेना। पर्वतेन संबद्धेत्यर्थः॥

## हीने ॥ ८६ ॥

हीन इति न्यून उच्यते स च उत्कृष्टापेक्षः। तेनेयं हीनोत्कृष्टसंबन्धे संज्ञा विज्ञायते। हीने द्योत्येऽयमनुः कर्मप्रवचनीयसंज्ञो भवति। अनु शाकटायनं वैयाकरणाः। अन्वर्जुनं योद्धारः॥

---

१ – अत्र ग्रन्थशैल्या ' वेदितव्या अधिरीश्वर इति यावत्। वक्ष्यति ' अनुर्लक्षणे ' ( १.४.८४ ) शाकल्यस्य संहितामनु प्रावर्षत् ' इति पाठो युक्ततरकः स्यात्। २ – ' हेतौ तृतीयां ' इति न्यासः।

## उपोऽधिके च ॥ ८७ ॥

उपशब्दोऽधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। उप खार्यां द्रोणः। उप निष्के कार्षापणम्। हीने—उप शाकटायनं वैयाकरणाः॥

## अपपरी वर्जने ॥ ८८ ॥

अपपरी शब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः। प्रकृतेन संबन्धिना कस्यचिदनभिसंबन्धो वर्जनम्। अप त्रिगर्तेभ्यो वृष्टो देवः। परिपरि त्रिगर्तेभ्यो वृष्टो देवः। वर्जन इति किम्? ओदनं परिषिञ्चति॥

## आङ् मर्यादावचने ॥ ८९ ॥

आङित्येष शब्दो मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति। अवधिर्मर्यादा। वचनग्रहणादभिविधिरपि गृह्यते। आ पाटलिपुत्राद् वृष्टो देवः। आ कुमारं यशः पाणिनेः। आ सांकाश्यात्। आ मथुरायाः। मर्यादावचन इति किम्? ईषदर्थे क्रियायोगे च मा भूत्॥

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९० ॥

लक्षण इत्थंभूताख्याने भागे वीप्सायां च विषयभूतायां प्रति परि अनु इत्येते कर्मप्रवचनीयसंज्ञा भवन्ति। लक्षणे तावत्—वृक्षं प्रति विद्योतते विद्युत्। वृक्षं परि। वृक्षमनु। इत्थंभूताख्याने—साधुर्देवदत्तो मातरं प्रति। मातरं परि। मातरमनु। भागे—यदत्र मां प्रति स्यात्। मां परि स्यात्। मामनु स्यात्। वीप्सायाम्—वृक्षंवृक्षं प्रति सिञ्चति। परि सिञ्चति। अनु सिञ्चति। लक्षणादिष्विति किम्? ओदनं परिषिञ्चति। अथ परिशब्दयोगे पञ्चमी कस्माद् न भवति 'पञ्चम्यपाङ्परिभिः' (२.३.१०) इति? वर्जनविषये सा विधीयते, अपशब्दसाहचर्यात्॥

## अभिरभागे ॥ ९१ ॥

लक्षणादिष्वेव भागवर्जितेष्वभिः कर्मप्रवचनीयसंज्ञो भवति। वृक्षमभि विद्योतते। साधुर्देवदत्तो मातरमभि। वृक्षंवृक्षमभि सिञ्चति। अभाग इति किम्? भागः स्वीक्रियमाणोंऽशः। यदत्र ममाभिष्यात् तद् दीयताम्। यदत्र मम भवति तद् दीयतामित्यर्थः॥

## प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९२ ॥

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। प्रतिनिधिविषये प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति। अभिमन्युरर्जुनतः प्रति। माषानस्मै

तिलेभ्यः प्रति यच्छति ॥

## अधिपरी अनर्थकौ ॥ ९३ ॥

अधिपरी शब्दावनर्थकावनर्थान्तरवाचिनौ कर्मप्रवचनीयसंज्ञौ भवतः। कुतोऽध्यागच्छति? कुतः पर्यागच्छति? गत्युपसर्गसंज्ञाबाधनार्था कर्मप्रवचनीयसंज्ञा विधीयते ॥

## सुः पूजायाम् ॥ ९४ ॥

सुशब्दः पूजायामर्थे कर्मप्रवचनीयसंज्ञो भवति। सु सिक्तं भवता। सु स्तुतं भवता। धात्वर्थः स्तूयते। उपसर्गसंज्ञाश्रयं षत्वं न भवति। पूजायामिति किम्? सुषिक्तं किं तवात्र ॥

## अतिरतिक्रमणे च ॥ ९५ ॥

अतिशब्दोऽतिक्रमणे चकारात् पूजायां च कर्मप्रवचनीयसंज्ञो भवति। निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिरतिक्रमणम्। अति सिक्तमेव भवता। अति स्तुतमेव भवता। पूजायाम्—अति सिक्तं भवता। अति स्तुतं भवता। शोभनं कृतमित्यर्थः ॥

## अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ ९६ ॥

पदार्थे संभावनेऽन्ववसर्गे गर्हायां समुच्चये च वर्तमानोऽपिः कर्मप्रवचनीयसंज्ञो भवति। पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः—सर्पिषोऽपि स्यात्। मधुनोऽपि स्यात्। मात्रा बिन्दुः स्तोकमित्यस्यार्थेऽपिशब्दो वर्तते। संभावनमधिकार्थवचनेन शक्तेरप्रतिघाताविष्करणम्—अपि सिञ्चेन् मूलकसहस्रम्। अपि स्तुयाद् राजानम्। अन्ववसर्गः कामचाराभ्यनुज्ञानम्—अपि सिञ्च। अपि स्तुहि। गर्हा निन्दा—धिग् जाल्मं देवदत्तम्, अपि सिञ्चेत् पलाण्डुम्। अपि स्तुयाद् वृषलम्। समुच्चये—अपि सिञ्च, अपि स्तुहि। सिञ्च च स्तुहि च। उपसर्गसंज्ञाबाधनात् षत्वं न भवति ॥

## अधिरीश्वरे ॥ ९७ ॥

ईश्वरः स्वामी, स च स्वमपेक्षते। तदयं स्वस्वामिसम्बन्धे[1] कर्मप्रवचनीयसंज्ञो भवति। तत्र कदाचित् स्वामिनः कर्मप्रवचनीयविभक्तिः सप्तमी भवति, कदाचित् स्वात्। अधि ब्रह्मदत्ते पञ्चालाः। अधि पञ्चालेषु ब्रह्मदत्तः ॥

---

१ – 'अधिः' इत्यधिकं है०।

## विभाषा कृञि ॥ ९८ ॥

अधिः करोतौ विभाषा कर्मप्रवचनीयसंज्ञो भवति। यदत्र मामधिंकरिष्यतिं। कर्म-प्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात् 'तिङि चोदात्तवति' ( ८.१.७१ ) इति निघातो न भवति॥

## लः परस्मैपदम् ॥ ९९ ॥

ल इति षष्ठ्यादेशापेक्षा। लादेशाः परस्मैपदसंज्ञा भवन्ति। तिप्, तस्, झि। सिप्, थस्, थ। मिप्, वस्, मस्। शतृक्वसू च। परस्मैपदप्रदेशाः—'सिचि वृद्धिः परस्मैपदेषु' ( ७.२.१ ) इत्येवमादयः॥

## तङानावात्मनेपदम् ॥ १०० ॥

तङिति प्रत्याहारो नवानां वचनानाम्। आन इति शानच्कानचोर्ग्रहणम्। पूर्वेण परस्मैपदसंज्ञायां प्राप्तायां तङानयोरात्मनेपदसंज्ञा विधीयते। त, आताम्, झ। थास्, आथाम्, ध्वम्। इट्, वहि, महिङ्। आनः खल्वपि—शानच्कानचौ। ल इत्येव—कतीह निघ्नानाः। आत्मनेपदप्रदेशाः—'अनुदात्तङित आत्मनेपदम्' ( १.३.१२ ) इत्येवमादयः॥

## तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०१ ॥

तिङोऽष्टादश प्रत्ययाः। नव परस्मैपदसंज्ञकाः नवात्मनेपदसंज्ञकाः। तत्र परस्मैपदेषु त्रयस्त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति। आत्मनेपदेष्वपि त्रयस्त्रिकाः प्रथममध्यमोत्तमसंज्ञा भवन्ति[1]। तिप्, तस्, झि इति प्रथमः। सिप्, थस्, थ इति मध्यमः। मिप्, वस्, मस् इत्युत्तमः। आत्मनेपदेषु—त, आताम्, झ इति प्रथमः। थास्, आथाम्, ध्वम् इति मध्यमः। इट्, वहि, महिङ् इत्युत्तमः। प्रथममध्यमोत्तमप्रदेशाः—'शेषे प्रथमः' ( १.४.१०८ ) इत्येवमादयः॥

## तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०२ ॥

तानि[2] एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति। एकश एकैकं पदम्। तिबित्येकवचनम्। तसिति द्विवचनम्। झीति बहुवचनम्। एवं सर्वत्र। एकवचनद्विवचनबहुवचनप्रदेशाः—'बहुषु बहुवचनम्' ( १.४.२१ ) इत्येवमादयः॥

---

१ - इदं वाक्यं नास्ति है०।

२ - ' तिङस्त्रीणि त्रीणि पदानि भूत्वा ' इत्यधिकं क्वचित्।

## सुपः ॥ १०३ ॥

तिङां त्रिकेष्वेकवचनादिसंज्ञा विहिताः, संप्रति सुपां त्रिकेषु विधीयन्ते। सुपश्च त्रीणि त्रीणि पदान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति। सु इत्येकवचनम्। औ इति द्विवचनम्। जसिति बहुवचनम्। एवं सर्वत्र॥

## विभक्तिश्च ॥ १०४ ॥

त्रीणित्रीणीत्यनुवर्तते। त्रीणित्रीणि विभक्तिसंज्ञाश्च भवन्ति सुपस्तिङश्च। विभक्ति-प्रदेशाः—'अष्टन आ विभक्तौ' ( ७.२.८४ ) इत्येवमादयः॥

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥

'लस्य' ( ३.४.७७ ) इत्यधिकृत्य सामान्येन तिबादयो विहिताः, तेषामयं पुरुषनियमः क्रियते। युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति। त्वं पचसि। युवां पचथः। यूयं पचथ। अप्रयुज्यमानेऽपि—पचसि। पचथः। पचथ॥

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥

प्रहासः परिहासः क्रीडा। प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः, स चैकवद् भवति। एहि मन्य ओदनं भोक्ष्यस इति, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एहि मन्ये रथेन यास्यसि, नहि यास्यसि, यातस्तेन ते पिता। मध्यमोत्तमयोः प्राप्तयोरुत्तममध्यमौ विधीयेते। प्रहास इति किम् ? एहि मन्यस ओदनं भोक्ष्य इति। सुष्ठु मन्यसे, साधु मन्यसे॥

## अस्मद्युत्तमः ॥ १०७ ॥

उत्तमपुरुषो नियम्यते। अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमाने-ऽप्युत्तमपुरुषो भवति। अहं पचामि। आवां पचावः। वयं पचामः। अप्रयुज्यमानेऽपि—पचामि। पचावः। पचामः॥

## शेषे प्रथमः ॥ १०८ ॥

शेष इति मध्यमोत्तमविषयादन्य उच्यते। यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति। पचति। पचतः। पचन्ति॥

## परः संनिकर्षः संहिता ॥ १०९ ॥

परशब्दोऽतिशये वर्तते। संनिकर्षः प्रत्यासत्तिः। परो यः संनिकर्षो वर्णानामर्धमात्राकालव्यवधानं स संहितासंज्ञो भवति। दध्यत्र। मध्वत्र। संहिताप्रदेशाः—'संहितायाम्' (६.१.७२) इत्येवमादयः॥

## विरामोऽवसानम् ॥ ११० ॥

विरतिर्विरामः। विरम्यतेऽनेनेति वा विरामः। सोऽवसानसंज्ञो भवति। दधिँ। मधुँ। वृक्षः। प्लक्षः। अवसानप्रदेशाः—'खरवसानयोर्विसर्जनीयः' (८.३.१५) इत्येवमादयः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य चतुर्थः पादः॥



# ॥ द्वितीयाध्यायस्य प्रथमः पादः ॥

## समर्थः पदविधिः ॥ १ ॥

परिभाषेयम्। यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स सर्वः समर्थो वेदितव्यः। विधीयत इति विधिः। पदानां विधिः पदविधिः। स पुनः समासादिः। समर्थः शक्तः, विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः। अथ वा समर्थपदाश्रयत्वात् समर्थः। समर्थानां पदानां सम्बद्धार्थानां संसृष्टार्थानां विधिर्वेदितव्यः। वक्ष्यति—'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' ( २.१.२४ )—कष्टं श्रितः, कष्टश्रितः। समर्थग्रहणं किम् ? पश्य देवदत्त कष्टम्, श्रितो विष्णुमित्रो गुरुकुलम्। 'तृतीया तत्कृतार्थेन गुणवचनेन' ( २.१.३० )—शङ्कुलया खण्डः, शङ्कुलाखण्डः। समर्थग्रहणं किम् ? किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन। 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' ( २.१.३६)—यूपाय दारु, यूपदारु। समर्थग्रहणं किम् ? गच्छ त्वं यूपाय, दारु देवदत्तस्य गेहे। 'पञ्चमी भयेन' ( २.१.३७ )—वृकेभ्यो भयम्, वृकभयम्। समर्थग्रहणं किम् ? गच्छ त्वं मा वृकेभ्यः, भयं देवदत्तस्य यज्ञदत्तात्। 'षष्ठी' ( २.२.८ )—राज्ञः पुरुषः, राजपुरुषः। समर्थग्रहणं किम् ? भार्या राज्ञः, पुरुषो देवदत्तस्य। 'सप्तमी शौण्डैः' ( २.१.४० )—अक्षेषु शौण्डः, अक्षशौण्डः। समर्थग्रहणं किम् ? शक्तस्त्वमक्षेषु, शौण्डः पिबति पानागारे। पदग्रहणं किम् ? वर्णविधौ समर्थपरिभाषा मा भूत्। तिष्ठतु दध्यशान त्वं शाकेन। तिष्ठतु कुमारीच्छत्रं हर देवदत्तात्। यणादेशो नित्यश्च तुग् भवति ॥

## सुबामन्त्रिते पराङ्गवत् स्वरे ॥ २ ॥

सुबन्तमामन्त्रिते परतः परस्याङ्गवद् भवति, स्वरे स्वरलक्षणे कर्तव्ये। तादात्म्यातिदेशोऽयम्। सुबन्तमामन्त्रितमनुप्रविशति। वक्ष्यति—'आमन्त्रितस्य च' ( ६.१.१९८ )। आमन्त्रितस्यादिरुदात्तो भवति। स ससुप्कस्यापि यथा स्यात्। कुण्डेनाटन्। परशुना वृश्चन्। मद्राणां राजन्। कश्मीराणां राजन्। सुबिति किम् ? पीड्ये पीड्यमान। आमन्त्रित इति किम् ? गेहे गार्ग्यः। परग्रहणं किम् ? पूर्वस्य मा भूत्। देवदत्त कुण्डेनाटन्। अङ्गग्रहणं किम्? यथा मृत्पिण्डीभूतः स्वरं लभेत। उभयोराद्युदात्तत्वं मा भूत्। वत्करणं किम् ? स्वाश्रयमपि कार्यं यथा स्यात्। आं कुण्डेनाटन्। 'आम एकान्तरमामन्त्रितमनन्तिके' ( ८.१.५५ ) इत्येकान्तरता भवति। स्वर इति किम् ? कूपे सिञ्चन्। चर्म नमन्। षत्वणत्वे ( ८.३.५९; ८.४.२ ) प्रति पराङ्गवद् न भवति ॥ सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमननन्तरत्वात् ॥ तीक्ष्णया सूच्या सीव्यन्। तीक्ष्णेन परशुना वृश्चन् ॥ अव्ययानां प्रतिषेधो वक्तव्यः॥

उच्चैरधीयान। नीचैरधीयान॥

## प्राक् कडारात् समासः ॥ ३ ॥

कडारसंशब्दनात् प्राग् यानित ऊर्ध्वमनुक्रमिष्यामः, ते समाससंज्ञा वेदितव्याः। वक्ष्यति—'यथासादृश्ये' (२.१.७)—यथावृद्धं ब्राह्मणानामन्त्रयस्व। प्राग्वचनं संज्ञासमावेशार्थम्। समासप्रदेशाः—'तृतीयासमासे' (१.१.३०) इत्येवमादयः॥

## सह सुपा ॥ ४ ॥

सुबिति वर्तते। सुबिति सहेति सुपेति च त्रयमप्यधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्यामः, तत्रेदमुपस्थितं द्रष्टव्यम्। वक्ष्यति—'द्वितीया श्रिता०' (२.१.२४) इति। द्वितीयान्तं श्रितादिभिः सह समस्यते। कष्टं श्रितः, कष्टश्रितः। सहग्रहणं योगविभागार्थम्, तिङापि सह यथा स्यात्। अनुव्यचलत्। अनुप्रावर्षत्॥

## अव्ययीभावः ॥ ५ ॥

अव्ययीभाव इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामः, अव्ययीभावसंज्ञास्ते वेदितव्याः। वक्ष्यति—'यथासादृश्ये' (२.१.७)—यथावृद्धं ब्राह्मणानामन्त्रयस्व। अन्वर्थसंज्ञा चेयं महती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति। अव्ययीभावप्रदेशाः—'अव्ययीभावश्च' (२.४.१८) इत्येवमादयः॥

## अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ ६ ॥

सुप् सुपेति च वर्तते। विभक्त्यादिष्वर्थेषु यदव्ययं वर्तते, तत् समर्थेन सुबन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति। वचनग्रहणं प्रत्येकं संबध्यते। विभक्तिवचने तावत्—स्त्रीष्वधिकृत्य कथा प्रवर्तते, अधिस्त्रि। अधिकुमारि। सप्तम्यर्थे यदव्ययं तद् विभक्तिवचनम्। समीपवचने—कुम्भस्य समीपम्, उपकुम्भम्। उपमणिकम्। समृद्धिर्ऋद्धेराधिक्यम्। समृद्धिर्मद्राणाम्, सुमद्रम्, सुमगधं वर्तते। व्यृद्धिर्ऋद्धेरभावः। गवदिकानामृद्धेरभावः, दुर्गवदिकम्,[1] दुर्यवनं वर्तते। अर्थाभावो वस्तुनोऽभावः। अभावो मक्षिकाणाम्, निर्मक्षिकम्, निर्मशकं वर्तते। अत्ययो भूतत्वमतिक्रमः। अतीतानि हिमानि अतिहिमम्, निर्हिमम्, निःशीतं वर्तते। असंप्रति—उपभोगस्य वर्तमानकालप्रतिषेधः। अतितैसृकम्। तैसृकमाच्छादनम्, तस्यायमुपभोगकालो न भवतीत्यर्थः। शब्दप्रादुर्भावः प्रकाशता शब्दस्य।

---

१ – 'दुःशकम्' इति पद०।

इतिपाणिनि। तत्पाणिनि। पाणिनिशब्दो लोके प्रकाशत इत्यर्थः। पश्चात्—अनुरथं पादातम्। रथानां पश्चादित्यर्थः। यथा—यथार्थे यदव्ययं वर्तते तत् समस्यते। योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः। योग्यतायाम्—अनुरूपम्। रूपयोग्यं भवतीत्यर्थः। वीप्सायाम्—अर्थमर्थं प्रति प्रत्यर्थम्। पदार्थानतिवृत्तौ—यथाशक्ति[1]। आनुपूर्व्यमनुक्रमः—अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुपूर्व्येण भवन्तः प्रविशन्त्वित्यर्थः। यौगपद्यमेककालता—सचक्रं धेहि। युगपच्चक्रं धेहीत्यर्थः। सादृश्यं तुल्यता। किमर्थमिदमुच्यते, यथार्थ इत्येव सिद्धम् ? गुणभूतेऽपि सादृश्ये यथा स्यात्। सदृशः किख्या सकिखि[2]। संपत्तिरनुरूप आत्मभावः समृद्धेरन्यः—सब्रह्म बाभ्रवाणाम्। सक्षत्रं शालङ्कायनानाम्। साकल्यमशेषता—सतृणमभ्यवहरति। सबुसम्। न किंचिदभ्यवहार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते। अन्तवचने—अन्त इति परिग्रहापेक्षया समाप्तिरुच्यते। साग्नि अधीते। सेष्टि, सपशुबन्धम्। पशुबन्धान्तमधीत इत्यर्थः। इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात् पृथगुच्यते॥

## यथासादृश्ये ॥ ७ ॥

यथेत्येतदव्ययमसादृश्ये वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। यथावृद्धं ब्राह्मणानामन्त्रयस्व। येये वृद्धाः, यथावृद्धम्। यथाध्यापकम्। असादृश्य इति किम् ? यथा देवदत्तस्तथा यज्ञदत्तः। यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे वचनमिदं सादृश्यप्रतिषेधार्थम्॥

## यावदवधारणे ॥ ८ ॥

यावदित्येतदव्ययमवधारणे वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। अवधारणमियत्तापरिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्रयस्व। यावन्ति पात्राणि संभवन्ति पञ्च षड् वा तावत आमन्त्रयस्व। अवधारण इति किम् ? यावद् दत्तं तावद् भुक्तम्। नावधारयामि कियद् मया भुक्तमिति॥

## सुप् प्रतिना मात्रार्थे ॥ ९ ॥

मात्रा बिन्दुः, स्तोकम्, अल्पमिति पर्यायाः। मात्रार्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति। अस्त्यत्र किंचित् शाकम्, शाकप्रति। सूपप्रति। मात्रार्थ इति किम् ? वृक्षं प्रति विद्योतते विद्युत्। सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम्॥

---

१ - सादृश्योदाहरणानि नोपलभ्यन्ते। 'वीणावत् सवीणं ध्वनति, सहंसं गच्छति' इति पुरुषोत्तमदेव उदाजहार भाषावृत्तौ। २ - 'सदृशः सख्या ससखि' इति पाठान्तरम्।

## अक्षशलाकासंख्याः परिणा ॥ १० ॥

अक्षशब्दः शलाकाशब्दः संख्याशब्दश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति। कितवव्यवहारे समासोऽयमिष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति, तत्र यदा सर्व उत्तानाः पतन्त्यवाञ्चो वा तदा पातयिता जयति, तस्यैवैतस्य विपातो[1]ऽन्यथापाते सति जायते। अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये, अक्षपरि। शलाकापरि। एकपरि। द्विपरि। त्रिपरि। परमेण[2] चतुष्परि। पञ्चसु त्वेकरूपासु जय एव भविष्यति।

अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ॥

## विभाषा ॥ ११ ॥

विभाषेत्ययमधिकारो वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामः, तद् विभाषा भवति। वक्ष्यति—'अपपरिबहिरञ्चवः पञ्चम्या' ( २.१.१२ )—अपत्रिगर्तं वृष्टो देवः। अप त्रिगर्तेभ्यः ॥

## अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥

अप परि बहिस् अञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति। अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः। परित्रिगर्तम्, परि त्रिगर्तेभ्यः। बहिर्ग्रामम्, बहिर्ग्रामात्। प्राग्ग्रामम्, प्राग् ग्रामात्। बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम् ॥

## आङ् मर्यादाभिविध्योः ॥ १३ ॥

आङित्येतद् मर्यादायामभिविधौ च वर्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात्। अभिविधौ—आकुमारं यशः पाणिनेः, आ कुमारेभ्यः ॥

## लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥

लक्षणं चिह्नम्, तद्वाचिना सुबन्तेन सहाभिप्रती शब्दावाभिमुख्ये वर्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति। अभ्यग्नि शलभाः पतन्ति, अग्निमभि।

---

१ - 'विघातो' इति मुद्रितेषु। २ - 'परेण' इति न्यासे।

प्रत्यग्नि, अग्निं प्रति। अग्निं लक्ष्यीकृत्य अभिमुखं पतन्तीत्यर्थः। लक्षणेनेति किम् ? स्रुघ्नं प्रतिगतः। प्रतिनिवृत्त्य स्रुघ्नमेवाभिमुखं गतः। अभिप्रती इति किम् ? येनाग्निस्तेन गतः। आभिमुख्य इति किम् ? अभ्यङ्का गावः। प्रत्यङ्का गावः। नवाङ्का इत्यर्थः॥

## अनुर्यत्समया ॥ १५ ॥

समया समीपम्। अनुर्यस्य समीपवाची[1], तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुवनमशनिर्गतः। अनुरिति किम् ? वनं समया। यत्समयेति किम् ? वृक्षमनु विद्योतते विद्युत्। 'अव्ययं विभक्तिसमीप०' ( २.१.६ ) इत्येव सिद्धे पुनर्वचनं विभाषार्थम्॥

## यस्य चायामः ॥ १६ ॥

लक्षेणेनेति वर्तते। आयामो दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुगङ्गं वाराणसी। अनुयमुनं मथुरा। यमुनायामेन मथुरायामो लक्ष्यते। आयाम इति किम् ? वृक्षमनु विद्योतते विद्युत्॥

## तिष्ठद्गुप्रभृतीनि च ॥ १७ ॥

तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्दरूपाण्यव्ययीभावसंज्ञकानि भवन्ति। तिष्ठद्गु कालविशेषः। तिष्ठन्ति गावो यस्मिन् काले दोहनाय स तिष्ठद्गु कालः। खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण नैव संबध्यन्तेऽन्यपदार्थे च काले वर्तन्ते। चकारोऽवधारणार्थः। अपरः समासो न भवति परमतिष्ठद्ग्विति॥ तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेयवम्। खलेबुसम्। लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः। समभूमि। समपदाति। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। अपरसमम्। आयतीसमम्। प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। अपरदक्षिणम्। संप्रति। असंप्रति। पापसमम्। पुण्यसमम्। इच् कर्मव्यतिहारे ( ग० सू० १७ )— दण्डादण्डि। मुसलामुसलि॥

## पारे मध्ये षष्ठ्या वा ॥ १८ ॥

षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते। वावचनात् षष्ठीसमासोऽपि

---

१ - 'अनुर्यत्समया समयावाची' इति पद०। 'अनुर्यत्समया यस्य समीपवाची' इति न्यासः।

पक्षेऽभ्यनुज्ञायते। पारमध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति। तत्सन्नियोगेन चानयोरेकारान्तत्वं निपात्यते। पारं गङ्गायाः, पारेगङ्गम्। मध्यं गङ्गायाः, मध्येगङ्गम्। षष्ठीसमासपक्षे—गङ्गापारम्। गङ्गामध्यम्। महाविभाषया वाक्यविकल्पः क्रियते॥

## संख्या वंश्येन ॥ १९ ॥

विद्यया जन्मना वा प्राणिनामेकलक्षणसंतानो वंश इत्यभिधीयते। तत्र भवो वंश्यः। तद्वाचिना सुबन्तेन सह संख्या समस्यते, अव्ययीभावश्च समासो भवति। द्वौ मुनी व्याकरणस्य वंश्यौ, द्विमुनि व्याकरणस्य। त्रिमुनि व्याकरणस्य। यदा तु विद्यया तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति। द्विमुनि व्याकरणम्, त्रिमुनि व्याकरणमिति। जन्मना—एकविंशतिभारद्वाजम्॥

## नदीभिश्च ॥ २० ॥

संख्येत्यनुवर्तते। नदीवचनैः शब्दैः सह संख्या समस्यते, अव्ययीभावश्च समासो भवति। समाहारे चायमिष्यते। सप्तगङ्गम्। द्वियमुनम्। पञ्चनदम्। सप्तगोदावरम्॥

## अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥

संख्येति निवृत्तम्, नदीग्रहणमनुवर्तते। नदीभिः सह सुबन्तमन्यपदार्थे वर्तमानं संज्ञायां विषये समस्यते, अव्ययीभावश्च समासो भवति। विभाषाधिकारेऽपि नित्यसमास एवायम्। नहि वाक्येन संज्ञा गम्यते। उन्मत्तगङ्गं नाम देशः। लोहितगङ्गम्। कृष्णगङ्गम्। शनैर्गङ्गम्। अन्यपदार्थ इति किम्? कृष्णवेण्णा। संज्ञायामिति किम्? शीघ्रगङ्गो देशः॥

## तत्पुरुषः ॥ २२ ॥

तत्पुरुष इति संज्ञाधिक्रियते प्राग् बहुव्रीहेः (२.२.२३)। यानित ऊर्ध्वमनुक्रमिष्यामः, तत्पुरुषसंज्ञास्ते वेदितव्याः। वक्ष्यति—'द्वितीया श्रितातीतपतित०' (२.१.२४) इति—कष्टश्रितः। पूर्वाचार्यसंज्ञा चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम्—उत्तरपदार्थप्रधानस्तत्पुरुष इति। तत्पुरुषप्रदेशाः—'तत्पुरुषे कृति बहुलम्' (६.३.१४) इत्येवमादयः॥

## द्विगुश्च ॥ २३ ॥

द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति। द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम्।

पञ्चराजम्। दशराजम्[१]। द्व्यहः। त्र्यहः। पञ्चगवम्। दशगवम्॥

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥

सुप् सुपेति वर्तते, तस्य विशेषणमेतद् द्वितीया श्रितादयश्च[२]। द्वितीयान्तं सुबन्तं श्रितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। कष्टं श्रितः, कष्टश्रितः। नरकश्रितः। अतीत—कान्तारमतीतः, कान्तारातीतः। पतित—नरकं पतितः, नरकपतितः। गत— ग्रामं गतः, ग्रामगतः। अत्यस्त—तरङ्गानत्यस्तः, तरङ्गात्यस्तः। तुहिनात्यस्तः। प्राप्त— सुखं प्राप्तः, सुखप्राप्तः। आपन्न—सुखमापन्नः, सुखापन्नः। दुःखापन्नः ॥ श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् ॥ ग्रामं गमी, ग्रामगमी। ग्रामं गामी, ग्रामगामी। ओदनं बुभुक्षुः, ओदनबुभुक्षुः॥

## स्वयं क्तेन ॥ २५ ॥

स्वयमेतदव्ययमात्मनेत्यस्यार्थे वर्तते, तस्य द्वितीयया सह संबन्धो नोपपद्यत इति द्वितीयाग्रहणमुत्तरार्थमनुवर्तते। स्वयमित्येतत्सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। स्वयंधौतौ पादौ। स्वयंविलीनमाज्यम्। ऐकपद्यमैकस्वर्यं च समासत्वाद् भवति॥

## खट्वा क्षेपे ॥ २६ ॥

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति। क्षेपो निन्दा, स च समासार्थ एव, तेन विभाषाधिकारेऽपि नित्यसमास एवायम्, नहि वाक्येन क्षेपो गम्यते। खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम्। सर्व एवाविनीतः खट्वारूढ इत्युच्यते। खट्वारूढो जाल्मः। खट्वाप्लुतः। अपथप्रस्थित इत्यर्थः। क्षेप इति किम्? खट्वामारूढः॥

## सामि ॥ २७ ॥

सामीत्येतदव्ययमर्धशब्दपर्यायः, तस्यासत्त्ववाचित्वाद् द्वितीयया नास्ति संबन्धः। तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। सामिकृतम्। सामिपीतम्। सामिभुक्तम्। ऐकपद्यमैकस्वर्यं च समासत्वाद् भवति॥

---

१ - 'पञ्चराजी, दशराजी' इति न्याससम्मतः पाठः।

२ - 'श्रितादयश्च' इति नास्ति मुद्रितेषु।

## कालाः ॥ २८ ॥

द्वितीया क्तेनेति वर्तते। कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। अनत्यन्तसंयोगार्थं वचनम्। काला इति न स्वरूपविधिः। षण्मुहूर्ताश्चराचराः। ते कदाचिदहर्गच्छन्ति कदाचिद् रात्रिम्। अहरतिसृता मुहूर्ताः। अहस्संक्रान्ताः। रात्र्यतिसृता मुहूर्ताः। रात्रिसंक्रान्ताः। मासप्रमितश्चन्द्रमाः। मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमा इत्यर्थः॥

## अत्यन्तसंयोगे च ॥ २९ ॥

काला इति वर्तते, क्तेनेति निवृत्तम्। अत्यन्तसंयोगः कृत्स्नसंयोगः, कालस्य स्वेन संबन्धिना व्याप्तिः। कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। मुहूर्तं सुखम्, मुहूर्तसुखम्। सर्वरात्रकल्याणी। सर्वरात्रशोभना॥

## तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥

सुप् सुपेति वर्तते, तस्य विशेषणमेतत्। तृतीयान्तं सुबन्तं गुणवचनेनार्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति। कीदृशेन गुणवचनेन? तत्कृतेन तदर्थकृतेन, तृतीयान्तार्थकृतेनेति यावत्। शङ्कुलया खण्डः, शङ्कुलाखण्डः। किरिणा काणः, किरिकाणः। अर्थशब्देन—धान्येनार्थः, धान्यार्थः। तत्कृतेनेति किम्? अक्ष्णा काणः। गुणवचनेनेति किम्? गोभिर्वपावान्॥

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥

पूर्व सदृश सम ऊनार्थ कलह निपुण मिश्र श्लक्ष्ण इत्येतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च समासो भवति। अस्मादेव वचनात् पूर्वादिभिर्योगे तृतीया भवति, हेतौ वा द्रष्टव्या। मासेन पूर्वः, मासपूर्वः। संवत्सरपूर्वः। सदृश—मातृसदृशः। पितृसदृशः। सम—मातृसमः। पितृसमः। ऊनार्थ—माषोनम्। कार्षापणोनम्। माषविकलम्। कार्षापण-विकलम्। कलह—असिकलहः। वाक्कलहः। निपुण—वाग्निपुणः। आचारनिपुणः। मिश्र—गुडमिश्रः। तिलमिश्रः। श्लक्ष्ण—आचारश्लक्ष्णः॥ पूर्वादिष्ववरस्योपसंख्यानम्॥ मासेनावरः, मासावरः। संवत्सरावरः॥

## कर्तृकरणे कृता बहुलम् ॥ ३२ ॥

तृतीयेति वर्तते। कर्तरि करणे च या तृतीया, तदन्तं कृदन्तेन सह समस्यते

बहुलम्, तत्पुरुषश्च समासो भवति। सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम्। कर्तरि—अहिना हतः, अहिहतः। करणे—नखैर्निर्भिन्नः, नखनिर्भिन्नः। परशुना छिन्नः, परशुच्छिन्नः। कर्तृकरण इति किम् ? भिक्षाभिरुषितः। बहुलग्रहणं किम् ? दात्रेण धान्यं लूनवान्, परशुना छिन्नवान् इह समासो न भवति। पादहारकः, गलेचोपक इति च भवति॥

## कृत्यैरधिकार्थवचने ॥ ३३ ॥

स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम्। कर्तृकरणयोर्या तृतीया, तदन्तं सुबन्तं कृत्यैः सह समस्यतेऽधिकार्थवचने गम्यमाने विभाषा, तत्पुरुषश्च समासो भवति। कर्ता—काकपेया नदी। श्वलेह्यः कूपः। करणम्—बाष्पच्छेद्यानि तृणानि। कण्टकसंचेय ओदनः। पूर्वस्यैवायं प्रपञ्चः ॥ कृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्तव्यम्॥ इह मा भूत्—काकैः पातव्या इति॥

## अन्नेन व्यञ्जनम् ॥ ३४ ॥

तृतीयेति वर्तते। व्यञ्जनवाचि तृतीयान्तमन्नवाचिना सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। संस्कार्यमन्नम्, संस्कारकं व्यञ्जनम्। दध्ना उपसिक्त ओदनः, दध्योदनः। क्षीरौदनः। वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यम्॥

## भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। खरविशदमभ्यवहार्यं भक्ष्यम्, तस्य संस्कारकं मिश्रीकरणम्। गुडेन मिश्रा धानाः, गुडधानाः। गुडपृथुकाः। वृत्तौ क्रियाया अन्तर्भावात् पूर्वोत्तरपदयोः सामर्थ्यम्॥

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥

सुप् सुपेति वर्तते, तस्य विशेषणमेतत्। तदिति सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते। तस्मै इदं तदर्थम्। तदर्थ अर्थ बलि हित सुख रक्षित इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते। यूपाय दारु, यूपदारु। कुण्डलाय हिरण्यम्, कुण्डलहिरण्यम्। इह न भवति—रन्धनाय स्थाली, अवहननायोलूखलमिति। चतुर्थी चास्मादेव ज्ञापकात् तादर्थ्ये भवति ॥ अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या॥ ब्राह्मणार्थं पयः। ब्राह्मणार्था यवागूः। बलि—कुबेराय बलिः, कुबेरबलिः। महाराजबलिः। हित—गोहितम्। अश्वहितम्। सुख—गोसुखम्।

अश्वसुखम्। रक्षित—गोरक्षितम्। अश्वरक्षितम्॥

## पञ्चमी भयेन ॥ ३७ ॥

सुप् सुपेति वर्तते, तस्य विशेषणमेतत्। पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। वृकेभ्यो भयम्, वृकभयम्। चौरभयम्। दस्युभयम् ॥भयभीतभीतिभीभिरिति वक्तव्यम्॥ वृकेभ्यो भीतः, वृकभीतः। वृकभीतिः। वृकभीः। पूर्वस्यैवायं बहुलग्रहणस्य प्रपञ्चः। तथा च ग्रामनिर्गतः, अधर्मजुगुप्सुरित्येवमादि सिद्धं भवति॥

## अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥

अपेत अपोढ मुक्त पतित अपत्रस्त इत्येतैः सह पञ्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। अपेत—सुखापेतः। अपोढ—कल्पनापोढः। मुक्त—चक्रमुक्तः। पतित—स्वर्गपतितः। अपत्रस्त—तरङ्गापत्रस्तः। अल्पश इति समासस्याल्पविषयतामाचष्टे। अल्पा पञ्चमी समस्यते, न सर्वा। प्रासादात् पतितः, भोजनादपत्रस्त इत्येवमादौ न भवति। 'कर्तृकरणे कृता बहुलम्' ( २.१.३२ ) इत्यस्यैवायं प्रपञ्चः॥

## स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३९ ॥

स्तोक अन्तिक दूर इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। स्तोक—स्तोकान्मुक्तः। अन्तिक—अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः। कृच्छ्राल्लब्धः। 'पञ्चम्याः स्तोकादिभ्यः' ( ६.३.२ ) इत्यलुक् ॥ शतसहस्रौ परेणेति वक्तव्यम्॥ शतात् परे, परश्शताः। सहस्रात् परे परस्सहस्राः। राजदन्तादित्वात् परनिपातः। निपातनात् सुडागमः॥

## सप्तमी शौण्डैः ॥ ४० ॥

सप्तम्यन्तं शौण्डादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। अक्षेषु शौण्डः, अक्षशौण्डः। अक्षधूर्तः। अक्षकितवः॥ शौण्ड। धूर्त। कितव। व्याड। प्रवीण। संवीत। अन्तर्। अन्तश्शब्दस्त्वत्राधिकरणप्रधान एव पठ्यते। अधि। पटु। पण्डित। कुशल। चपल। निपुण। वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिष्वधिकरणे सप्तमी॥

## सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥

सप्तमीति वर्तते। सिद्ध शुष्क पक्व बन्ध इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। सांकाश्यसिद्धः। काम्पिल्यसिद्धः। शुष्क—आतपशुष्कः। छायाशुष्कः। पक्व—स्थालीपक्वः। कुम्भीपक्वः। बन्ध—चक्रबन्धः। बहुलग्रहणस्यैवायमुदाहरण-प्रपञ्चः॥

## ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

ध्वाङ्क्षेणेत्यर्थग्रहणम्। ध्वाङ्क्षवाचिना सुबन्तेन सह सप्तम्यन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति, क्षेपे गम्यमाने। तीर्थे ध्वाङ्क्ष इव, तीर्थध्वाङ्क्षः। अनवस्थित इत्यर्थः। तीर्थकाकः। तीर्थवायसः। क्षेप इति किम्? तीर्थे ध्वाङ्क्षस्तिष्ठति॥

## कृत्यैर्ऋणे ॥ ४३ ॥

सप्तमीति वर्तते। कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति, ऋणे गम्यमाने। यत्प्रत्ययान्तेनैव समास इष्यते। मासे देयमृणम्, मासदेयम्। संवत्सरदेयम्। त्र्यहदेयम्। ऋणग्रहणं नियोगोपलक्षणार्थम्। तेनेहापि समासो भवति—पूर्वाह्णे गेयं साम, पूर्वाह्णगेयम्। प्रातरध्येयोऽनुवाकः। ऋण इति किम्? मासे देया भिक्षा॥

## संज्ञायाम् ॥ ४४ ॥

संज्ञायां विषये सप्तम्यन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। संज्ञा समुदायोपाधिः। तेन नित्यसमास एवायम्, नहि वाक्येन संज्ञा गम्यते। अरण्येतिलकाः। अरण्येमाषाः। वनेकिंशुकाः। वनेबिल्वकाः। कूपेपिशाचकाः। 'हलदन्तात् सप्तम्याः संज्ञायाम्' (६.३.९) इत्यलुक्॥

## क्तेनाहोरात्रावयवाः ॥ ४५ ॥

अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वाह्णकृतम्। अपराह्णकृतम्। पूर्वरात्रकृतम्। अपररात्रकृतम्। अवयवग्रहणं किम्? एतत् तु ते दिवा वृत्तं रात्रौ वृत्तं च द्रक्ष्यसि[1]। अहनि भुक्तम्, रात्रौ वृत्तम्। बहुलग्रहणाद् रात्रिवृत्तम्, संध्यागर्जितमित्यादयः॥

---

१ – 'उलूखलैराभरणैः पिशाची यदभाषत' इति पूर्वार्धोऽपि क्वचित्।

## तत्र ॥ ४६ ॥

तत्रेत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। तत्रभुक्तम्। तत्रकृतम्। तत्रपीतम्। ऐकपद्यमैकस्वर्यं च समासत्वाद् भवति॥

## क्षेपे ॥ ४७ ॥

क्षेपो निन्दा। क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। अवतप्तेनकुलस्थितं तवैतत्। चापलमेतत् तव, अनवस्थितत्वं तवैतदित्यर्थः। उदकेविशीर्णम्। प्रवाहेमूत्रितम्। भस्मनिहुतम्। निष्फलं यत् क्रियते तदेवमुच्यते। 'तत्पुरुषे कृति बहुलम्' ( ६.३.१४ ) इत्यलुक्॥

## पात्रेसमितादयश्च ॥ ४८ ॥

समुदाया एव निपात्यन्ते। पात्रेसमितादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति क्षेपे गम्यमाने। ये चात्र क्तान्तेन सह समासाः, तेषां पूर्वेणैव सिद्धे पुनः पाठो युक्तारोह्यादिपरिग्रहार्थः, पूर्वपदाद्युदात्तत्वं यथा स्यादिति। युक्तारोह्यादिषु ( ६.२.८१ ) हि 'पात्रेसमितादयश्च' ( ग० सू० १७४ ) इति पठ्यते। पात्रेसमिताः। पात्रेबहुलाः। अवधारणेन क्षेपो गम्यते, पात्र एव समिताः, न पुनः क्वचित् कार्य इति। उदुम्बरमशकादिषूपमया क्षेपः। मातरिपुरुष इति प्रतिषिद्धसेवनेन। पिण्डीशूरादिषु निरीहतया। अव्यक्तत्वाच्चाकृतिगणोऽयम्॥ पात्रेसमिताः। पात्रेबहुलाः। उदुम्बरमशकाः। उदरक्रिमिः। कूपकच्छपः। कूपचूर्णकः। अवटकच्छपः। कूपमण्डूकः। कुम्भमण्डूकः। उदपानमण्डूकः। नगरकाकः। नगरवायसः। मातरिपुरुषः। पिण्डीशूरः। पितरिशूरः। गेहेशूरः। गेहेनर्दी। गेहेक्ष्वेडी। गेहेविजिती। गेहेव्याडः। गेहेमेही। गेहेदाही। गेहेदृप्तः। गेहेधृष्टः। गर्भेतृप्तः। आखनिकबकः। गोष्ठेशूरः। गोष्ठेविजिती। गोष्ठेक्ष्वेडी। गोष्ठेपटुः। गोष्ठेपण्डितः। गोष्ठेप्रगल्भः। कर्णेटिट्टिभः। कर्णेटिरिटिरा। कर्णेचुरचुरा। चकारोऽवधारणार्थः, तेन समासान्तरं न भवति—परमपात्रेसमिता इति ॥

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४९ ॥

सुप् सुपा इति वर्तते, तस्य विशेषणमेतत्। पूर्वकाल एक सर्व जरत् पुराण नव केवल इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। पूर्वकाल इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम्। पूर्वकालोऽपरकालेन समस्यते। स्नातानुलिप्तः। कृष्टसमीकृतम्। दग्धप्ररूढम्। एकशाटी। एकभिक्षा। सर्वदेवाः। सर्वमनुष्याः।

जरद्धस्ती। जरद्गृष्टिः। जरद्वृत्तिः। पुराणान्नम्। पुराणावसथम्। नवान्नम्। नवावसथम्। केवलान्नम्। समानाधिकरणेनेति किम्? एकस्याः शाटी॥

## दिक्संख्ये संज्ञायाम् ॥ ५० ॥

समानाधिकरणेन इत्या पादसमाप्तेरनुवर्तते। दिग्वाचिनः शब्दाः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति संज्ञायां विषये। पूर्वेषुकामशमी। अपरेषुकामशमी। संख्या—पञ्चाम्राः। सप्तर्षयः। संज्ञायामिति किम्? उत्तरा वृक्षाः। पञ्च ब्राह्मणाः॥

## तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥

दिक्संख्ये इत्यनुवर्तते। तद्धितार्थे विषय उत्तरपदे च परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। तद्धितार्थे तावत्—पूर्वस्यां शालायां भवः—'दिक्पूर्वपदादसंज्ञायां ञः' (४.२.१०७)—पौर्वशालः। आपरशालः। उत्तरपदे—पूर्वशालाप्रियः। अपरशालाप्रियः। समाहारे दिक्शब्दो न संभवति। संख्या तद्धितार्थे—पाञ्चनापितिः। पञ्चकपालः। उत्तरपदे—पञ्चगवधनः। दशगवधनः। समाहारे—पञ्चपूली। दशपूली। पञ्चकुमारि। दशकुमारि। 'स नपुंसकम्' (२.४.१७) इति नपुंसकत्वम्, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७) इति ह्रस्वत्वम्॥

## संख्यापूर्वो द्विगुः ॥ ५२ ॥

तद्धितार्थोत्तरपदसमाहारे चेत्यत्र यः संख्यापूर्वः समासः स द्विगुसंज्ञो भवति। तद्धितार्थे तावत्—पञ्चसु कपालेषु संस्कृतः, पञ्चकपालः, दशकपालः। 'संस्कृतं भक्षाः' (४.२.१६) इतीहाणु, तस्य 'द्विगोर्लुगनपत्ये' (४.१.८८) इति लुक्। उत्तरपदे—पञ्चनावप्रियः। 'नावो द्विगोः' (५.४.९९) इति समासान्तो भवति। समाहारे—पञ्चपूली। 'द्विगोः' (४.१.२१) इति ङीब् भवति। द्विगुप्रदेशाः—'द्विगोः' (४.१.२१) इत्येवमादयः॥

## कुत्सितानि कुत्सनैः ॥ ५३ ॥

कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते। 'विशेषणं विशेष्येण०' (२.१.५७) इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। वैयाकरणखसूचिः, निष्प्रतिभ इत्यर्थः। याज्ञिककितवः। अयाज्ययाजनतृष्णापर उच्यते। मीमांसकदुर्दुरूढो[1]

१ - '०दुर्दुरूटः' इति पद०।

नास्तिकः। कुत्सितानीति किम् ? वैयाकरणश्चौरः। नह्यत्र वैयाकरणत्वं कुत्स्यते। कुत्सनैरिति किम् ? कुत्सितो ब्राह्मणः॥

## पापाणके कुत्सितैः ॥ ५४ ॥

पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः, पूर्वनिपातार्थमिदमारभ्यते। पाप अणक एते सुबन्ते कुत्सितवचनैस्सह समस्येते, तत्पुरुषश्च समासो भवति। पापनापितः। पापकुलालः। अणकनापितः। अणककुलालः॥

## उपमानानि सामान्यवचनैः ॥ ५५ ॥

उपमीयतेऽनेनेत्युपमानम्। उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। उपमानोपमेययोः साधारणो धर्मः सामान्यम्, तद्विशिष्टोपमेयवचनैरयं समासः। शस्त्रीव श्यामा, शस्त्रीश्यामा देवदत्ता। कुमुदश्येनी। हंसगद्गदा। न्यग्रोधपरिमण्डला। उपमानानीति किम् ? देवदत्ता श्यामा। सामान्यवचनैरिति किम् ? फाला इव तण्डुलाः। पर्वता इव बलाहकाः॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५६ ॥

उपमेयमुपमितम्, तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्याद् उपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत् सामान्यवाची शब्दः प्रयुज्यते। 'विशेषणं विशेष्येण०' ( २.१.५७ ) इति परनिपाते[1] प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः। सामान्याप्रयोग इति किम् ? पुरुषोऽयं व्याघ्र इव शूरः॥ व्याघ्र। सिंह। ऋक्ष। ऋषभ। चन्दन। वृक्ष। वृष। वराह। हस्तिन्। कुञ्जर। रुरु। पृषत। पुण्डरीक। बलाहक। आकृतिगणश्चायम्, तेनेदमपि भवति—मुखपद्मम्। मुखकमलम्। करकिसलयम्। पार्थिवचन्द्र इत्येवमादि॥

## विशेषणं विशेष्येण बहुलम् ॥ ५७ ॥

भेदकं विशेषणम्, भेद्यं विशेष्यम्। विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति। नीलोत्पलम्। रक्तोत्पलम्। बहुलवचनं व्यवस्थार्थम्। क्वचिन्नित्यसमास एव। कृष्णसर्पः। लोहितशालिः। क्वचिन्न भवत्येव—रामो जामदग्न्यः। अर्जुनः कार्तवीर्यः। क्वचिद् विकल्पः—नीलमुत्पलम्, नीलोत्पलम्। विशेषणमिति किम् ? तक्षकः सर्पः। विशेष्येणेति किम् ? लोहितस्तक्षकः॥

---

१ - ' परनिपाते ' इति नास्ति न्यास-पद०।

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ ५८ ॥

पूर्व अपर प्रथम चरम जघन्य समान मध्य मध्यम वीर इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वपुरुषः। अपरपुरुषः। प्रथमपुरुषः। चरमपुरुषः। जघन्यपुरुषः। समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः। वीरपुरुषः। पूर्वस्यैवायं प्रपञ्चः॥

## श्रेण्यादयः कृतादिभिः ॥ ५९ ॥

श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति ॥ श्रेण्यादिषु च्व्यर्थवचनम् ॥ अश्रेणयः श्रेणयः कृताः, श्रेणिकृताः। एककृताः[1]। श्रेण्यादयः पठ्यन्ते। कृतादिराकृतिगणः। च्व्यन्तानां तु 'कुगतिप्रादयः' (२.२.१८) इत्यनेन नित्यसमासः। श्रेणीकृताः॥ श्रेणि। एक। पूग। कुण्ड। राशि। विशिख। निचय। निधान। इन्द्र। देव। मुण्ड। भूत। श्रवण। वदान्य। अध्यापक। अभिरूपक। ब्राह्मण। क्षत्रिय। पटु। पण्डित। कुशल। चपल। निपुण। कृपण इति श्रेण्यादिः॥ कृत। मित। मत। भूत। उक्त। समाज्ञात। समाम्नात। समाख्यात। संभावित। अवधारित। निराकृत। अवकल्पित। उपकृत। उपाकृत इति कृतादिः॥

## क्तेन नञ्विशिष्टेनानञ् ॥ ६० ॥

नञैव विशेषो यस्य सर्वमन्यत् प्रकृत्यादिकं तुल्यम्, तद् नञ्विशिष्टम्, तेन नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सहानञ् क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति। कृतं च तदकृतं च, कृताकृतम्। भुक्ताभुक्तम्। पीतापीतम्। उदितानुदितम्। नुडिटौ तद्भक्तत्वान्नैव भेदकौ। अशितानशितेन जीवति। क्लिष्टाक्लिशितेन वर्तते ॥ कृतापकृतादीनामुपसंख्यानम् ॥ कृतापकृतम्। भुक्तविभुक्तम्। पीतविपीतम्। गतप्रत्यागतम्। यातानुयातम्। क्रयाक्रयिका। पुटापुटिका। फलाफलिका। मानोन्मानिका ॥ समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च ॥ शाकप्रधानः पार्थिवः, शाकपार्थिवः। कुतपसौश्रुतः। अजातौल्वलिः॥

## सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६१ ॥

सत् महत् परम उत्तम उत्कृष्ट इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूज्यमानैरिति वचनात् पूजावचनाः सदादयो विज्ञायन्ते। सत्पुरुषः। महापुरुषः।

---

१ – 'पूगकृताः' इत्यधिकं क्वचित्।

परमपुरुषः। उत्तमपुरुषः। उत्कृष्टपुरुषः। पूज्यमानैरिति किम् ? उत्कृष्टो गौः कर्दमात् ॥

## वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥

वृन्दारक नाग कुञ्जर इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। पूज्यमानमिति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्ते। गोवृन्दारकः। अश्ववृन्दारकः। गोनागः। अश्वनागः। गोकुञ्जरः। अश्वकुञ्जरः। पूज्यमानमिति किम् ? सुषीमो[1] नागः॥

## कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥

कतरकतमौ जातिपरिप्रश्ने वर्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। कतरकठः। कतरकालापः। कतमकठः। कतमकालापः। ननु कतमशब्दस्तावज् जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात् तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन ? एवं तर्ह्येतज् ज्ञापयति—कतमशब्दोऽन्यत्रापि वर्तत इति। तथा च प्रत्युदाहरणम्, कतरो भवतोर्देवदत्तः। कतमो भवतां देवदत्तः॥

## किं क्षेपे ॥ ६४ ॥

किमित्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। किंराजा, यो न रक्षति। किंसखा, योऽभिद्रुह्यति। किंगौः, यो न वहति। 'किमः क्षेपे' (५.४.७०) इति समासान्तो न भवति। क्षेप इति किम् ? को राजा पाटलिपुत्रे॥

## पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६५ ॥

उभयव्यञ्जना पोटेत्यभिधीयते। गृष्टिरेकवारप्रसूता। धेनुः प्रत्यग्रप्रसूता। वशा वन्ध्या। वेहद् गर्भपातिनी। बष्कयणी तरुणवत्सा। पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। इभपोटा। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्। गोगृष्टिः। गोधेनुः। गोवशा। गोवेहत्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः। जातिरिति किम् ? देवदत्तः प्रवक्ता। धूर्तग्रहणमकुत्सार्थम्॥

## प्रशंसावचनैश्च ॥ ६६ ॥

जातिरिति वर्तते। जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च

---

१ - 'सुपीमः' इति उदाहरणदिग् इति न्यास-पद०। देवदत्तः, माणवक इति वा युक्तं स्यात्।

समासो भवति। रूढिशब्दाः प्रशंसावचना गृह्यन्ते मतल्लिकादयः। ते चाविष्टलिङ्ग-त्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति। गोप्रकाण्डम्। अश्वप्रकाण्डम्। गोमतल्लिका। अश्वमतल्लिका। गोमचर्चिका। अश्वमचर्चिका। जातिरिति किम्? कुमारी मतल्लिका॥

## युवा खलतिपलितवलिनजरतीभिः ॥ ६७ ॥

खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भवति। जरतीभिरिति स्त्रीलिङ्गनिर्देशः 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' (परि० ७१) इति ज्ञापनार्थः। युवा खलतिः, युवखलतिः। युवतिः खलती, युवखलती। युवा पलितः, युवपलितः। युवतिः पलिता, युवपलिता। युवा वलिनः, युववलिनः। युवतिर्वलिना, युववलिना। युवा जरन्, युवजरन्। युवतिर्जरती, युवजरती॥

## कृत्यतुल्याख्या अजात्या ॥ ६८ ॥

कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति। भोज्योष्णम्। भोज्यलवणम्। पानीयशीतम्। तुल्याख्याः—तुल्यश्वेतः। तुल्यमहान्। सदृशश्वेतः। सदृशमहान्। अजात्येति किम्? भोज्य ओदनः॥

## वर्णो वर्णेन ॥ ६९ ॥

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवति। कृष्णसारङ्गः। लोहितसारङ्गः। कृष्णशबलः। लोहितशबलः। अवयवद्वारेण कृष्णशब्दः समुदाये वर्तमानः समानाधिकरणो भवति॥

## कुमारः श्रमणादिभिः ॥ ७० ॥

कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। येऽत्र स्त्रीलिङ्गाः पठ्यन्ते श्रमणा, प्रव्रजिता, कुलटेत्येवमादयः, तैः सह स्त्रीलिङ्ग एव कुमारशब्दः[1] समस्यते। ये तु पुँल्लिङ्गा अध्यापकोऽभिरूपकः पण्डित इति, तैरुभयथा 'प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणम्' (परि० ७१) इति। कुमारी श्रमणा, कुमारश्रमणा॥ श्रमणा। प्रव्रजिता। कुलटा। गर्भिणी। तापसी। दासी। बन्धकी। अध्यापक। अभिरूपक। पण्डित। पटु। मृदु। कुशल। चपल। निपुण॥

---

१ - 'कुमारीशब्दः' इति न्यासः।

## चतुष्पादो गर्भिण्या ॥ ७१ ॥

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। गोगर्भिणी। अजगर्भिणी ॥ चतुष्पाज्जातिरिति वक्तव्यम् ॥ इह मा भूत्—कालाक्षी गर्भिणी। स्वस्तिमती गर्भिणी। चतुष्पाद इति किम् ? ब्राह्मणी गर्भिणी ॥

## मयूरव्यंसकादयश्च ॥ ७२ ॥

समुदाया एव निपात्यन्ते। मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति। चकारोऽवधारणार्थः, परममयूरव्यंसक इति समासान्तरं न भवति। मयूरव्यंसकः। छात्रव्यंसकः। काम्बोजमुण्डः। यवनमुण्डः। छन्दसि—हस्तेगृह्य। पादेगृह्य। लाङ्गलेगृह्य। पुनर्दाय। एहीडादयोऽन्यपदार्थे ( ग० सू० १८ )। एहीडम्, एहियवं वर्तते। एहिवाणिजा क्रिया। अपेहिवाणिजा। प्रेहिवाणिजा। एहिस्वागता। अपेहिस्वागता। प्रेहिस्वागता। एहिद्वितीया। अपेहिद्वितीया। इहवितर्का। प्रोहकटा। अपोहकटा। प्रोहकर्दमा। अपोहकर्दमा। उद्धरचूडा। आहरचेला। आहरवसना। आहरवनिता। कृन्तविचक्षणा। उद्धरोत्सृजा। उद्धमविधमा। उत्पचविपचा। उत्पतनिपता। उच्चावचम्। उच्चनीचम्। अचितोपचितम्। अवचितपराचितम्। निश्चप्रचम्। अकिंचनम्। स्नात्वाकालकः। पीत्वास्थिरकः। भुक्त्वासुहितः। प्रोष्यपापीयान्। उत्पत्यपाकला। निपत्यरोहिणी। निषण्णश्यामा। अपेहिप्रसवा। इहपञ्चमी। इहद्वितीया। जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति ( ग० सू० १९ )। जहिजोडः। उज्जहिजोडः। जहिस्तम्बः। उज्जहिस्तम्बः। आख्यातमाख्यातेन क्रियासातत्ये ( ग० सू० २० )। अश्नीतपिबता। पचतभृज्जता। खादतमोदता। खादतवमता। खादताचमता। आहरनिवपा। आवपनिष्किरा। उत्पचविपचा। भिन्धिलवणा। छिन्धिविचक्षणा। पचलवणा। पचप्रकूटा। अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः ॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः ॥



# ॥ द्वितीयाध्यायस्य द्वितीयः पादः ॥

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ १ ॥

एकदेशोऽस्यास्तीत्येकदेशी अवयवी। तद्वाचिना सुबन्तेन सह पूर्व अपर अधर उत्तर इत्येते शब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति। एकाधिकरणग्रहणमेकदेशिनो विशेषणम्। एकं चेदधिकरणमेकद्रव्यमेकदेशि भवति। षष्ठीसमासापवादोऽयं योगः। पूर्वं कायस्य, पूर्वकायः। अपरकायः। अधरकायः। उत्तरकायः। एकदेशिनेति किम् ? पूर्वं नाभेः कायस्य। एकाधिकरण इति किम् ? पूर्वं छात्राणामामन्त्रयस्व। कथं मध्याह्नः सायाह्न इति ? 'संख्याविसायपूर्वस्याह्नस्या०' (६.३.११०) इति ज्ञापकात् सर्वेणैकदेशशब्देनाह्नः समासो भवति॥

## अर्धं नपुंसकम् ॥ २ ॥

एकदेशिनैकाधिकरण इति वर्तते। समप्रविभागेऽर्धशब्दो नपुंसकमाविष्टलिङ्गः, तस्येदं ग्रहणम्। अर्धमित्येतद् नपुंसकमेकदेशिनैकाधिकरणेन समस्यते, तत्पुरुषश्च समासो भवति। षष्ठीसमासापवादोऽयं योगः। अर्धं पिप्पल्याः, अर्धपिप्पली। अर्धकोशातकी। नपुंसकमिति किम् ? ग्रामार्धः। नगरार्धः। एकदेशिनेत्येव—अर्धं पशोर्देवदत्तस्य। देवदत्तेन सह समासो न भवति। एकाधिकरण इत्येव—अर्धं पिप्पलीनाम्॥

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ ३ ॥

एकदेशिनैकाधिकरण इति वर्तते। षष्ठीसमासापवादोऽयं योगः। अन्यतरस्यांग्रहणात् सोऽपि षष्ठीसमासो भवति। 'पूरण०' (२.२.११) इति प्रतिषेधश्चात एवान्यतरस्यांग्रहणसामर्थ्याद् न प्रवर्तते। द्वितीयादीनि शब्दरूपाण्येकदेशिनैकाधिकरणेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। द्वितीयं भिक्षायाः, द्वितीयभिक्षा। षष्ठीसमासपक्षे भिक्षाद्वितीयं वा। तृतीयं भिक्षायाः, तृतीयभिक्षा। भिक्षातृतीयं वा। चतुर्थं भिक्षायाः, चतुर्थभिक्षा। भिक्षाचतुर्थं वा। तुर्यं भिक्षायाः, तुर्यभिक्षा। भिक्षातुर्यं वा। तुरीयशब्दस्यापीष्यते। तुरीयं भिक्षायाः, तुरीयभिक्षा। भिक्षातुरीयं वा। एकदेशिनेत्येव—द्वितीयं भिक्षाया भिक्षुकस्य। एकाधिकरण इत्येव—द्वितीयं भिक्षाणाम्॥

## प्राप्तापन्ने च द्वितीयया ॥ ४ ॥

एकदेशिनैकाधिकरण इति निवृत्तम्। द्वितीयासमासे प्राप्ते वचनमिदम्। समासविधानात् सोऽपि भवति। प्राप्त आपन्न इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च

समासो भवति। प्राप्तो जीविकाम्, प्राप्तजीविकः। जीविकाप्राप्त इति वा। आपन्नो जीविकाम्, आपन्नजीविकः। जीविकापन्न इति वा॥

## कालाः परिमाणिना ॥ ५ ॥

परिमाणमस्यास्तीति परिमाणी, तद्वाचिना सुबन्तेन सह सामर्थ्यात् परिमाणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति। षष्ठीसमासविषये योगारम्भः। मासो जातस्य, मासजातः। संवत्सरजातः। द्व्यहजातः। त्र्यहजातः॥

## नञ् ॥ ६ ॥

नञ् समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। न ब्राह्मणः, अब्राह्मणः। अवृषलः[१]॥

## ईषदकृता ॥ ७ ॥

ईषदित्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति ॥ईषद्गुण-वचनेनेति वक्तव्यम् ॥ ईषत्कडारः। ईषत्पिङ्गलः। ईषद्विकटः। ईषदुन्नतः। ईषत्पीतम्। ईषद्रक्तम्। गुणवचनेनेति किम् ? इह न भवति—ईषद् गार्ग्यः॥

## षष्ठी ॥ ८ ॥

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। राज्ञः पुरुषः, राजपुरुषः। ब्राह्मणकम्बलः ॥ कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् ॥ इध्मप्रव्रश्चनः। पलाशशातनः। किमर्थमिदमुच्यते ? 'प्रतिपदविधाना च षष्ठी न समस्यते' इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः॥

## याजकादिभिश्च ॥ ९ ॥

पूर्वेण समासः सिद्ध एव, तस्य 'कर्तरि च' ( २.२.१६ ) इति प्रतिषेधे प्राप्ते वचनमिदमारभ्यते प्रतिप्रसवार्थम्। याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति। ब्राह्मणयाजकः। क्षत्रिययाजकः॥ याजक। पूजक। परिचारक। परिषेचक। स्नातक। अध्यापक। उत्सादक। उद्वर्तक। होतृ। पोतृ। भर्तृ। रथगणक। पत्तिगणक ॥तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम्॥ चन्दनगन्धः। कपित्थरसः

---

१ - 'नञो नलोपस्तिङि क्षेपे। अपचसि त्वं जाल्म' इत्यधिकं क्वचित्।

॥ गुणात्तरेण तरलोपश्चेति वक्तव्यम् ॥ सर्वेषां श्वेततरः, सर्वश्वेतः। सर्वेषां महत्तरः, सर्वमहान्। 'न निर्धारणे' ( २.२.१० ) इति प्रतिषेधे प्राप्ते वचनमिदम्। सर्वशुक्ला गौः॥

## न निर्धारणे ॥ १० ॥

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते। निर्धारणे या षष्ठी सा न समस्यते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। क्षत्रियो मनुष्याणां शूरतमः। कृष्णा गवां संपन्नक्षीरतमा। धावन्नध्वगानां शीघ्रतमः ॥ प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम् ॥ सर्पिषो ज्ञानम्। मधुनो ज्ञानम् ॥

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥

पूरणगुणसुहितार्थ सद् अव्यय तव्य समानाधिकरण इत्येतैः सह षष्ठी न समस्यते। अर्थशब्दः प्रत्येकमभिसंबध्यते, तेन स्वरूपविधिर्न भवति। पूरणार्थे—छात्राणां पञ्चमः। छात्राणां दशमः। गुण—बलाकायाः शौक्ल्यम्। काकस्य कार्ष्ण्यम्। सुहितार्थास्तृप्त्यर्थाः—फलानां सुहितः। फलानां तृप्तः। सत्—ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः। अव्यय—ब्राह्मणस्य कृत्वा। ब्राह्मणस्य हृत्वा। तव्य—ब्राह्मणस्य कर्तव्यम्। तव्यता सानुबन्धकेन समासो भवत्येव—ब्राह्मणकर्तव्यम्। समानाधिकरण—शुकस्य माराविदस्य[1]। राज्ञः पाटलिपुत्रकस्य। पाणिनेः सूत्रकारस्य। किं च स्यात् ? पूर्वनिपातानियमः स्यात्। अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां 'विशेषणं विशेष्येण०' ( २.१.५७ ) इति भवत्येव समासः। पूर्वनिपातश्च तदा नियोगतो विशेषणस्यैव ॥

## क्तेन च पूजायाम् ॥ १२ ॥

'मतिबुद्धिपूजार्थेभ्यश्च' ( ३.२.१८८ ) इति वक्ष्यति तस्येदं ग्रहणम्। पूजाग्रहणमुपलक्षणार्थम्। क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। पूजायामिति किम् ? छात्रस्य हसितम्, छात्रहसितम् ॥

## अधिकरणवाचिना च ॥ १३ ॥

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' ( ३.४.७६ ) इति वक्ष्यति, तस्येदं ग्रहणम्। अधिकरणवाचिना क्तेन षष्ठी न समस्यते। इदमेषामासितम्। इदमेषां यातम्। इदमेषां भुक्तम् ॥

---

१ – 'माराविकस्य' इति पाठान्तरम्।

## कर्मणि च ॥ १४ ॥

क्तेनेति निवृत्तम्। कर्मग्रहणं षष्ठीविशेषणम्। कर्मणि च या षष्ठी सा न समस्यते। 'उभयप्राप्तौ कर्मणि' (२.३.६६) इति षष्ठ्या इदं ग्रहणम्। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते मे ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। विचित्रा सूत्रस्य कृतिः पाणिनिना॥

## तृजकाभ्यां कर्तरि ॥ १५ ॥

कर्तृग्रहणं षष्ठीविशेषणम्। कर्तरि या षष्ठी सा तृचाकेन च सह न समस्यते। भवतः शायिका। भवत आसिका। भवतोऽग्रगामिका। तृच् कर्तर्येव विधीयते, तत्प्रयोगे कर्तरि षष्ठी नास्ति। तस्मात् तृज्ग्रहणमुत्तरार्थम्। कर्तरीति किम् ? इक्षुभक्षिकां मे धारयसि॥

## कर्तरि च ॥ १६ ॥

कर्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते। सामर्थ्यादकस्य विशेषणार्थं कर्तृग्रहणम्, इतरत्र व्यभिचाराभावात्। अपां स्रष्टा। पुरां भेत्ता। वज्रस्य भर्ता। ननु च भर्तृशब्दो ह्ययं याजकादिषु पठ्यते ? संबन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहणम्। अकः खल्वपि—ओदनस्य भोजकः। सक्तूनां पायकः॥

## नित्यं क्रीडाजीविकयोः ॥ १७ ॥

नेति निवृत्तम्, न तृजकौ। नित्यं समासो विधीयते। क्रीडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समासो भवति। तृच् क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते। उद्दालकपुष्पभञ्जिका। वारणपुष्पप्रचायिका। जीविकायाम्—दन्तलेखकः। नखलेखकः। क्रीडाजीविकयोरिति किम् ? ओदनस्य भोजकः॥

## कुगतिप्रादयः ॥ १८ ॥

नित्यमिति वर्तते। कुशब्दोऽव्ययं परिगृह्यते, गत्यादिभिः साहचर्यात्, न द्रव्यवचनः। कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति। कुः पापार्थे—कुपुरुषः। गति—उररीकृतम्[1]। प्रादयः—दुर्निन्दायाम्—दुष्पुरुषः। स्वती पूजायाम्—सुपुरुषः। अतिपुरुषः। आङीषदर्थे—आपिङ्गलः। प्रायिकं चैतदुपाधिवचनम्। अन्यत्रापि हि समासो दृश्यते। कोष्णम्। कदुष्णम्। कवोष्णम्। दुष्कृतम्। सुष्टुतम्[2]।

---

१ - 'यदूरीकरोति' इत्यधिकः, स चापपाठो मुद्रितेषु। २ - 'सुष्टुतम्' इति नास्ति मुद्रितेषु।

अतिस्तुतम्। आबद्धमिति ॥ प्रादयो गताद्यर्थे प्रथमया ॥ प्रगत आचार्यः, प्राचार्यः। प्रान्तेवासी ॥ अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ अतिक्रान्तः खट्वाम्, अतिखट्वः। अतिमालः ॥ अवादयः क्रुष्टाद्यर्थे तृतीयया ॥ अवक्रुष्टः कोकिलया, अवकोकिलः ॥ पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥ परिग्लानोऽध्ययनाय, पर्यध्ययनः। अलं कुमार्यै, अलंकुमारिः ॥ निरादयः क्रान्ताद्यर्थे पञ्चम्या ॥ निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः। निर्वाराणसिः ॥ इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ॥ वासंसीइव। वस्त्रेइव ॥ प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः ॥ वृक्षं प्रति विद्योतते विद्युत्। साधुर्देवदत्तो मातरं प्रति ॥

## उपपदमतिङ् ॥ १९ ॥

नित्यमिति वर्तते। उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो भवति। कुम्भकारः। नगरकारः। अतिङिति किम्? एधानाहारको व्रजति। ननु च सुप् सुपेति वर्तते, तत्र कुतस्तिङन्तेन सह समासप्रसङ्गः? एवं तर्हि ज्ञापयत्येतयोर्योगयोः सुप् सुपेति न संबध्यत इति। तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (परि० ७५) इत्येतदुपपन्नं भवति। अश्वक्रीती। धनक्रीती ॥

## अमैवाव्ययेन ॥ २० ॥

पूर्वेणैव समासे सिद्धे नियमार्थं वचनम्। अव्ययेनोपपदस्य यः समासः सोऽमैव भवति, नान्येन। स्वादुंकारं भुङ्क्ते। संपन्नंकारं भुङ्क्ते। लवणंकारं भुङ्क्ते। अमैवेति किम्? 'कालसमयवेलासु तुमुन्' (३.३.१६७)—कालो भोक्तुम्। एवकारकरणमुपपदविशेषणार्थम्। अमैव यत्तुल्यविधानमुपपदं तस्य समासो यथा स्यात्, अमा चान्येन च यत्तुल्यविधानं तस्य मा भूत्—अग्रे भुक्त्वा। अग्रे भोजम् ॥

## तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २१ ॥

अमैवेत्यनुवर्तते। 'उपदंशस्तृतीयायाम्' (३.४.४७) इत्यतः प्रभृति यान्युपपदानि तान्यमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उभयत्रविभाषेयम्। यदमैव तुल्यविधानमुपपदं तस्य प्राप्ते, यथा 'उपदंशस्तृतीयायाम्' (३.४.४७) इति। यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (३.४.५९) इति। मूलकोपदंशं भुङ्क्ते। मूलकेनोपदंशं भुङ्क्ते। उच्चैःकारमाचष्टे। उच्चैः कारम्। अमैवेत्येव—'पर्याप्तिवचनेष्वलमर्थेषु' (३.४.६६)। पर्याप्तो भोक्तुम्। प्रभुर्भोक्तुम् ॥

## क्त्वा च ॥ २२ ॥

अमैवेति पूर्वयोगेऽनुवृत्तम्, तेनान्यत्र न प्राप्नोतीति वचनमारभ्यते। क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीन्युपपदान्यन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उच्चैःकृत्य। उच्चैः कृत्वा। 'अव्ययेऽयथाभिप्रेताख्याने०' ( ३.४.५९ ) इति क्त्वाप्रत्ययः। समासपक्षे ल्यबेव। तृतीयाप्रभृतीनीत्येव—अलं कृत्वा। खलु कृत्वा॥

## शेषो बहुव्रीहिः ॥ २३ ॥

उपयुक्तादन्यः शेषः। शेषः समासो बहुव्रीहिसंज्ञो भवति। कश्च शेषः? यत्रान्यः समासो नोक्तः। वक्ष्यति—'अनेकमन्यपदार्थे' ( २.२.२४ )—चित्रगुः। शबलगुः। कृष्णोत्तरासङ्गः। शेष इति किम्? उन्मत्तगङ्गम्। लोहितगङ्गम्। बहुव्रीहिप्रदेशाः—'न बहुव्रीहौ' ( १.१.२९ ) इत्येवमादयः॥

## अनेकमन्यपदार्थे ॥ २४ ॥

अनेकं सुबन्तमन्यपदार्थे वर्तमानं[1] सह समस्यते, बहुव्रीहिश्च समासो भवति। प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति। प्राप्तमुदकं यं ग्रामम्, प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। चित्रगुर्देवदत्तः। वीरपुरुषको ग्रामः। प्रथमार्थे तु न भवति। वृष्टे देवे गतः। अनेकग्रहणं किम्? बहूनामपि यथा स्यात्—

सुसूक्ष्मजटकेशेन सुगजाजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति[2]॥

॥ बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्॥ व्यधिकरणानां मा भूत्—पञ्चभिर्भुक्तमस्य॥ अव्ययानां च बहुव्रीहिर्वक्तव्यः॥ उच्चैर्मुखः। नीचैर्मुखः ॥ सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः॥ कण्ठे स्थितः कालोऽस्य, कण्ठेकालः। उरसिलोमा। उष्ट्रस्य मुखमिव मुखं यस्य सः, उष्ट्रमुखः। खरमुखः ॥ समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम्॥ केशानां सङ्घातः, केशसंघातः, केशसंघातश्चूडास्य केशचूडः। सुवर्णस्य विकारोऽलंकारोऽस्य सुवर्णालंकारः ॥ प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः॥ प्रपतितं पर्णमस्य, प्रपर्णः। प्रपतितपर्णः। प्रपतितं पलाशमस्य, प्रपलाशः। प्रपतितपलाशः ॥ नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः॥ अविद्यमानः पुत्रो यस्य, अपुत्रः। अविद्यमानपुत्रः। अभार्यः।

---

१ – 'सुपा' इत्यधिकं है०। २ – 'पुत्री पर्वतराजस्य कुतो हेतोर्विवाहिता' इत्युत्तरार्धो बाल०।

अविद्यमानभार्यः ॥ सुबधिकारेऽस्तिक्षीरादिवचनम्[१] ॥ अस्तिक्षीरा ब्राह्मणी। अस्त्यादयो निपाताः ॥

## संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥

संख्येये या संख्या वर्तते तया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते, बहुव्रीहिश्च समासो भवति। अव्यय—उपदशाः। उपविंशाः। आसन्नदशाः। आसन्नविंशाः। अदूरदशाः। अदूरविंशाः। अधिकदशाः। अधिकविंशाः। संख्या—द्वित्राः। त्रिचतुराः। द्विदशाः। संख्ययेति किम् ? पञ्च ब्राह्मणाः। अव्ययासन्नादूराधिकसंख्या इति किम् ? ब्राह्मणाः पञ्च। संख्येय इति किम् ? अधिका विंशतिर्गवाम् ॥

## दिङ्नामान्यन्तराले ॥ २६ ॥

दिशां नामानि दिङ्नामानि। दिङ्नामानि सुबन्तान्यन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति। दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालम्, दक्षिणपूर्वा दिक्। पूर्वोत्तरा। उत्तरपश्चिमा। पश्चिमदक्षिणा ॥ सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ॥ नामग्रहणं रूढ्यर्थम्। इह मा भूत्—ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति ॥

## तत्र तेनेदमिति सरूपे ॥ २७ ॥

तत्रेति सप्तम्यन्तं गृह्यते। तेनेति तृतीयान्तम्। सरूपग्रहणं प्रत्येकमभिसंबध्यते। तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासो भवति। इतिकरणश्चेह विवक्षार्थो लौकिकमर्थमनुसारयति। ततो ग्रहणम्, प्रहरणम्, कर्मव्यतिहारः, युद्धं च समासार्थ इति सर्वमितिकरणाल्लभ्यते। यत् तत्रेति निर्दिष्टं ग्रहणं चेत् तद् भवति, यत् तेनेति निर्दिष्टं प्रहरणं चेत् तद् भवति, यदिदमिति निर्दिष्टं युद्धं चेत् तद् भवति। केशेषु केशेषु च गृहीत्वेदं युद्धं प्रवृत्तम्, केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तम्, दण्डादण्डि। मुसलामुसलि। 'इच् कर्मव्यतिहारे' ( ५.४.१२७ ) इतीच् समासान्तः, स चाव्ययम्। 'अन्येषामपि दृश्यते' (६.३.१३७ ) इति पूर्वपदस्य दीर्घत्वम्। सरूपग्रहणं किम् ? हलैश्च मुसलैश्च प्रहृत्येदं युद्धं प्रवृत्तम् ॥

---

१ – 'क्षीरादीनां बहुव्रीहिर्वक्तव्यः' इति मुद्रितेषु। यथान्यासं तु समेषां वार्त्तिकानां पाठः—'अव्ययानां च, सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च, समुदायविकारषष्ठ्याश्च, प्रादिभ्यो धातुजस्य वा, नञोऽस्त्यर्थानां च, सुबधिकारेऽस्तिक्षीरादिवचनम्' इत्येवंरूपः स्यात्।

## तेन सहेति तुल्ययोगे ॥ २८ ॥

सहेत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेनेति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति। सह पुत्रेणागतः, सपुत्रः। सच्छात्रः। सकर्मकरः। तुल्ययोग इति किम्? सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। विद्यमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थः। कथं सकर्मकः सलोमकः सपक्षक इति, न ह्यत्र तुल्ययोगो गम्यते ? किं तर्हि ? विद्यमानता। प्रायिकं तुल्ययोग इति विशेषणम्। अन्यत्रापि समासो दृश्यते॥

## चार्थे द्वन्द्वः ॥ २९ ॥

अनेकमिति वर्तते। अनेकं सुबन्तं चार्थे वर्तमानं समस्यते, द्वन्द्वसंज्ञश्च समासो भवति। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र समुच्चयान्वाचययोरसामर्थ्याद् नास्ति समासः। इतरेतरयोगे समाहारे च समासो विधीयते। प्लक्षश्च न्यग्रोधश्च, प्लक्षन्यग्रोधौ। धवश्च खदिरश्च पलाशश्च, धवखदिरपलाशाः। वाक् च त्वक् च, वाक्त्वचम्। वाग्दृषदम्। द्वन्द्वप्रदेशाः—'द्वन्द्वे च' (१.१.३१) इत्येवमादयः॥

## उपसर्जनं पूर्वम् ॥ ३० ॥

समास इति वर्तते। उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम्। पूर्ववचनं परप्रयोग-निवृत्त्यर्थम्। अनियमो हि स्यात्। द्वितीया—कष्टश्रितः। तृतीया—शङ्कुलाखण्डः। चतुर्थी—यूपदारु। पञ्चमी—वृकभयम्। षष्ठी—राजपुरुषः। सप्तमी—अक्षशौण्डः॥

## राजदन्तादिषु परम् ॥ ३१ ॥

पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम्। राजदन्तादिषु उपसर्जनं परं प्रयोक्तव्यम्। न केवलमुपसर्जनस्य, अन्यस्यापि यथालक्षणं विहितस्य पूर्वनिपातस्यायमपवादः पर-निपातो विधीयते। दन्तानां राजा, राजदन्तः। वनस्याग्रे, अग्रेवणम्। निपातनादलुक्॥ राजदन्तः। अग्रेवणम्। लिप्तवासितम्। नग्नमुषितम्। सिक्तसंमृष्टम्। मृष्टलुञ्चितम्। अवक्लिन्नपक्वम्। अर्पितोप्तम्। उप्तगाढम्। पूर्वकालस्य परनिपातः। उलूखलमुसलम्। तण्डुलकिण्वम्। दृषदुपलम्[१]। आरग्वायनबन्धकी। चित्ररथबाह्लीकम्। आवन्त्यश्मकम्। शूद्रार्यम्। स्नातकराजानौ। विष्वक्सेनार्जुनौ। अक्षिभ्रुवम्। दारगवम्। शब्दार्थौ। धर्मार्थौ। कामार्थौ। अनियमश्चात्रेष्यते। अर्थशब्दौ। अर्थधर्मौ। अर्थकामौ। तत्कथम्? वक्तव्यमिदम्—धर्मादिषूभयमिति। वैकारिमतम्। गजवाजम्। गोपालधानीपूलासम्। पूलासककरण्डम्। स्थूलपूलासम्[१]। उशीरबीजम्। सिञ्जास्थम्। चित्रास्वाती। भार्यापती।

१ – 'दृषदुपलम्' 'स्थूलपूलासम्' इति प्रमादपाठ इति न्यां०पद०।

जायापती। जम्पती। दम्पती। जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते। पुत्रपती। पुत्रपशू। केशश्मश्रू। श्मश्रुकेशौ। शिरोबीजम्। सर्पिर्मधुनी। मधुसर्पिषी। आद्यन्तौ। अन्तादी। गुणवृद्धी। वृद्धिगुणौ॥

## द्वन्द्वे घि ॥ ३२ ॥

पूर्वमिति वर्तते। द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम्। पटुगुप्तौ। मृदुगुप्तौ। अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः। पटुमृदुशुक्लाः। पटुशुक्लमृदवः। द्वन्द्व इति किम्? विस्पष्टपटुः॥

## अजाद्यदन्तम् ॥ ३३ ॥

द्वन्द्व इति वर्तते। अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। उष्ट्रखरम्। उष्ट्रशशकम् ॥ बहुष्वनियमः॥ अश्वरथेन्द्राः। इन्द्ररथाश्वाः ॥ द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन॥ इन्द्राग्नी। इन्द्रवायू। तपरकरणं किम्? अश्वावृषौ, वृषाश्व इति वा॥

## अल्पाच्तरम् ॥ ३४ ॥

द्वन्द्व इति वर्तते। अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। प्लक्षश्च न्यग्रोधश्च, प्लक्षन्यग्रोधौ। धवखदिरपलाशाः। बहुष्वनियमः—शङ्खदुन्दुभिवीणाः, वीणा-शङ्खदुन्दुभयः ॥ ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः॥ हेमन्त-शिशिरवसन्ताः। चित्रास्वाती। कृत्तिकारोहिण्यौ। समानाक्षराणामिति किम्? ग्रीष्मवसन्तौ ॥ लघ्वक्षरं पूर्वं निपततीति वक्तव्यम्॥ कुशकाशम्। शरशादम् ॥ अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम्॥ मातापितरौ। श्रद्धामेधे। दीक्षातपसी ॥ वर्णानामानुपूर्व्येण पूर्वनिपातः॥ ब्राह्मणक्षत्रियविट्शूद्राः। समानाक्षराणामित्यत्र नास्ति ॥ भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः॥ युधिष्ठिरार्जुनौ ॥ संख्याया अल्पीयस्याः पूर्वनिपातो वक्तव्यः॥ द्वित्राः। त्रिचतुराः। नवतिशतम्॥

## सप्तमीविशेषणे बहुव्रीहौ ॥ ३५ ॥

सर्वोपसर्जनत्वाद् बहुव्रीहेरनियमे प्राप्ते नियमार्थं वचनम्। सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कण्ठेकालः। उरसिलोमा। विशेषणम्—चित्रगुः। शबलगुः ॥ सर्वनामसंख्ययोरुपसंख्यानम्॥ सर्वश्वेतः। सर्वकृष्णः। द्विशुक्लः। द्विकृष्णः। अनयोरेव मिथः संप्रधारणायां परत्वात् संख्यायाः पूर्वनिपातः। द्व्यन्यः। त्र्यन्यः ॥ वा प्रियस्य पूर्वनिपातः॥ गुडप्रियः। प्रियगुडः ॥ सप्तम्याः पूर्वनिपाते

प्राप्ते गड्वादिभ्यः सप्तम्यन्तं परम्॥ गडुकण्ठः। गडुशिराः। कथं वहेगडुः ? प्राप्तस्य चाबाधा व्याख्येया॥

## निष्ठा ॥ ३६ ॥

निष्ठान्तं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कृतकटः। भिक्षितभिक्षः[1]। अवमुक्तोपानत्कः। आहूतसुब्रह्मण्यः। ननु च विशेषणमेवात्र निष्ठा ? नैष नियमः, विशेषणविशेष्यभावस्य विवक्षानिबन्धनत्वात्—कटे[2] कृतमनेनेति विग्रहीतव्यम् ॥ निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्॥ शार्ङ्गजग्धी। पलाण्डुभक्षिती। मासजातः। संवत्सरजातः। सुखजातः। दुःखजातः। कथं कृतकटः, भुक्तौदनः ? प्राप्तस्य चाबाधा व्याख्येया ॥ प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्॥ अस्युद्यतः। दण्डपाणिः। कथमुद्यतगदः, उद्यतासिः ? प्राप्तस्य चाबाधा व्याख्येया॥

## वाहिताग्न्यादिषु ॥ ३७ ॥

निष्ठेति पूर्वनिपाते प्राप्ते विकल्प उच्यते। आहिताग्न्यादिषु निष्ठान्तं पूर्वं वा प्रयोक्तव्यम्। अग्न्याहितः। आहिताग्निः। जातपुत्रः। पुत्रजातः। जातदन्तः। जातश्मश्रुः। तैलपीतः। घृतपीतः। ऊढभार्यः। गतार्थः। आकृतिगणश्चायम्। तेन गडुकण्ठप्रभृतय इहैव द्रष्टव्याः॥

## कडाराः कर्मधारये ॥ ३८ ॥

गुणशब्दानां विशेषणत्वात् पूर्वनिपाते प्राप्ते विकल्प उच्यते। कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः। कडारजैमिनिः। जैमिनिकडारः॥ कडार। गडुल। काण। खञ्ज। कुण्ठ। खञ्जर। खलति। गौर। वृद्ध। भिक्षुक। पिङ्गल। तनु। वटर। कर्मधारय इति किम् ? कडारपुरुषो ग्रामः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य द्वितीयः पादः॥



१ - 'भिक्षितभिक्षिः' इति है०। 'भक्षितभिक्षः' इति पाठान्तरम्॥ २ - 'कटेन वा' इति पद०।

# ॥ द्वितीयाध्यायस्य तृतीयः पादः ॥

## अनभिहिते ॥ १ ॥

अनभिहित इत्यधिकारोऽयं वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामोऽनभिहित इत्येवं तद् वेदितव्यम्। अनभिहितेऽनुक्तेऽनिर्दिष्टे कर्मादौ विभक्तिर्भवति। केनानभिहिते ? तिङ्कृत्तद्धितसमासैः परिसंख्यानम्। वक्ष्यति—'कर्मणि द्वितीया' (२.३.२)—कटं करोति। ग्रामं गच्छति। अनभिहित इति किम् ? तिङ्—क्रियते कटः। कृत्—कृतः कटः। तद्धित—शत्यः। शतिकः। समास—प्राप्तमुदकं यं ग्रामम्, प्राप्तोदको ग्रामः। परिसंख्यानं किम् ? कटं करोति भीष्ममुदारं दर्शनीयम्। 'बहुषु बहुवचनम्' (१.४.२१) इत्येवमादिना संख्या वाच्यत्वेन विभक्तीनामुपदिष्टा, तत्र विशेषणार्थमिदमारभ्यते—अनभिहित-कर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्या इति ॥

## कर्मणि द्वितीया ॥ २ ॥

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते, तैरेवात्र व्यवहारः। कर्मणि कारके या संख्या तत्र द्वितीया विभक्तिर्भवति। कटं करोति। ग्रामं गच्छति।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥

उभयतो ग्रामम्। सर्वतो ग्रामम्। धिग् देवदत्तम्। उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधोऽधो ग्रामम् ॥ अभितःपरितःसमयानिकषाहाप्रतियोगेषु च दृश्यते ॥ अभितो ग्रामम्। परितो ग्रामम्। समया ग्रामम्। निकषा ग्रामम्। हा देवदत्तम्। बुभुक्षितं न प्रति भाति किञ्चित् ॥

## तृतीया च होश्छन्दसि ॥ ३ ॥

कर्मणीति वर्तते। द्वितीयायां प्राप्तायां तृतीया विधीयते, चशब्दात् सा च भवति। छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभक्तिर्भवति, द्वितीया च । यवाग्वाग्निहोत्रं जुहोति। यवागूमग्निहोत्रं जुहोति (शां० श्रौ० ३.१२.१५,१६)। छन्दसीति किम् ? यवागूमग्निहोत्रं जुहोति ॥

## अन्तरान्तरेण युक्ते ॥ ४ ॥

द्वितीया स्वर्यते, न तृतीया। अन्तरान्तरेणशब्दौ निपातौ साहचर्याद् गृह्येते। आभ्यां योगे द्वितीया विभक्तिर्भवति। षष्ठ्यपवादोऽयं योगः। तत्रान्तरांशब्दो मध्यमाधेय-

प्रधानमाचष्टे। अन्तरेणशब्दस्तु तच्च विनार्थं च। अन्तरा त्वां च मां च कमण्डलुः। अन्तरेण त्वां च मां च कमण्डलुः। अन्तरेण पुरुषकारं न किंचिल्लभ्यते। युक्तग्रहणं किम्? अन्तरा तक्षशिलां च पाटलिपुत्रं च स्रुघ्नस्य प्राकारः॥

## कालाध्वनोरत्यन्तसंयोगे ॥ ५ ॥

कालशब्देभ्योऽध्वशब्देभ्यश्च द्वितीया विभक्तिर्भवत्यत्यन्तसंयोगे गम्यमाने। क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः संबन्धोऽत्यन्तसंयोगः। मासमधीते। संवत्सरमधीते। मासं कल्याणी। संवत्सरं कल्याणी। मासं गुडधानाः। संवत्सरं गुडधानाः। अध्वनः खल्वपि—क्रोशमधीते। योजनमधीते। क्रोशं कुटिला नदी। योजनं कुटिला नदी। क्रोशं पर्वतः। योजनं पर्वतः। अत्यन्तसंयोग इति किम्? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः[1]॥

## अपवर्गे तृतीया ॥ ६ ॥

कालाध्वनोरत्यन्तसंयोग इति वर्तते। अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः। अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति। मासेनानुवाकोऽधीतः। संवत्सरेणानुवाकोऽधीतः। अध्वनः—क्रोशेनानुवाकोऽधीतः। योजनेनानुवाकोऽधीतः। अपवर्ग इति किम्? क्रोशमधीतोऽनुवाकः। मासमधीतः। कर्तृव्यावृत्तौ फलसिद्धेरभावात् तृतीया न भवति। मासमधीतोऽनुवाकः, न चानेन गृहीतः॥

## सप्तमीपञ्चम्यौ कारकमध्ये ॥ ७ ॥

कालाध्वनोरिति वर्तते। कारकयोर्मध्ये यौ कालाध्वानौ, ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः। अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता, द्व्यहाद् वा भोक्ता। त्र्यहे त्र्यहाद् वा भोक्ता। कर्तृशक्त्योर्मध्ये कालः। इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विध्यति, क्रोशाल्लक्ष्यं विध्यति। कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर्वा मध्ये क्रोशः। संख्यातानुदेशो न भवति, अस्वरितत्वात्॥

## कर्मप्रवचनीययुक्ते द्वितीया ॥ ८ ॥

कर्मप्रवचनीयैर्युक्ते द्वितीया विभक्तिर्भवति। 'अनुर्लक्षणे' (१.४.८४)—शाकल्यस्य संहितामनु प्रावर्षत्। अगस्त्यमन्वसिञ्चन् प्रजाः॥

---

१ – 'योजनस्यैकदेशे पर्वतः' इत्यधिकं न्यासे।

## यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥

कर्मप्रवचनीययुक्त इति वर्तते। यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी विभक्तिर्भवति। उप खार्यां द्रोणः। उप निष्के कार्षापणम्। यस्य चेश्वरवचनमिति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति। अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्त इति। द्वितीयापवादो योगः॥

## पञ्चम्यपाङ्परिभिः ॥ १० ॥

अप आङ् परि इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी विभक्तिर्भवति। अप त्रिगर्तेभ्यो वृष्टो देवः। आ पाटलिपुत्राद् वृष्टो देवः। परिपरि[1] त्रिगर्तेभ्यो वृष्टो देवः। अपेन साहचर्यात् परेर्वर्जनार्थस्य ग्रहणम्। तेनेह न भवति—वृक्षं परि विद्योतते विद्युत्॥

## प्रतिनिधिप्रतिदाने च यस्मात् ॥ ११ ॥

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। यस्मात् प्रतिनिधिर्यतश्च प्रतिदानम्, तत्र कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर्भवति। अभिमन्युरर्जुनतः प्रति। प्रद्युम्नो वासुदेवतः प्रति। माषानस्मै तिलेभ्यः प्रति यच्छति। ननु च प्रतिनिधिप्रतिदाने कर्मप्रवचनीययुक्ते, न तु यतः प्रतिनिधिप्रतिदाने ? नैष दोषः, संबन्धसंबन्धात् तस्यापि योगोऽस्त्येव॥

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥

गत्यर्थानां धातूनां चेष्टाक्रियाणां परिस्पन्दक्रियाणां कर्मणि कारकेऽध्ववर्जिते द्वितीया-चतुर्थ्यौ भवतः। ग्रामं गच्छति। ग्रामाय गच्छति। ग्रामं व्रजति। ग्रामाय व्रजति। गत्यर्थग्रहणं किम् ? ओदनं पचति। कर्मणीति किम् ? अश्वेन व्रजति। चेष्टाया-मिति किम् ? मनसा पाटलिपुत्रं गच्छति। अनध्वनीति किम् ? अध्वानं गच्छति ॥ अध्वनीत्यर्थग्रहणम् ॥ पन्थानं गच्छति। मार्गं गच्छति ॥ आस्थितप्रतिषेधश्चायं विज्ञेयः॥ आस्थितः संप्राप्तः, आक्रान्त उच्यते। यत्र तूत्पथेन पन्थानं गच्छति, तत्र भवितव्यमेव चतुर्थ्या—पथे गच्छतीति। द्वितीयाग्रहणं किम्, न चतुर्थ्येव विकल्प्येत ? अपवादविषयेऽपि यथा स्यात्। ग्रामं गन्ता। ग्रामाय गन्ता। कृद्योगलक्षणा षष्ठी न भवति॥

---

१ - 'परि' इत्यकृतद्विर्वचनो है०।

## चतुर्थी संप्रदाने ॥ १३ ॥

संप्रदाने कारके चतुर्थी विभक्तिर्भवति। उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति। देवदत्ताय रोचते। पुष्पेभ्यः स्पृहयतीत्यादि ॥ चतुर्थीविधाने तादर्थ्य उपसंख्यानम् ॥ यूपाय दारु। कुण्डलाय हिरण्यम्। रन्धनाय स्थाली। अवहननायोलूखलम् ॥ क्लृपिसंपद्यमाने चतुर्थी वक्तव्या ॥ मूत्राय कल्पते यवागूः। उच्चाराय कल्पते यवागूः ॥ क्लृपीत्यर्थनिर्देशः ॥ मूत्राय संपद्यते यवागूः। मूत्राय जायते यवागूः ॥ उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या ॥

वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥

॥ हितयोगे चतुर्थी वक्तव्या ॥ गोभ्यो हितम्। अरोचकिने हितम् ॥

## क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥ १४ ॥

क्रियार्था क्रियोपपदं यस्य, सोऽयं क्रियार्थोपपदः। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' ( ३.३.१० ) इत्येष विषयो लक्ष्यते। क्रियार्थोपपदस्य च स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति। द्वितीयापवादो योगः। एधेभ्यो व्रजति। पुष्पेभ्यो व्रजति। क्रियार्थोपपदस्येति किम् ? प्रविश पिण्डीम्। प्रविश तर्पणम्। भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः। कर्मणीति किम् ? एधेभ्यो व्रजति शकटेन। स्थानिन इति किम् ? एधानाहर्तुं व्रजति ॥

## तुमर्थाच्च भाववचनात् ॥ १५ ॥

तुमुना समानार्थस्तुमर्थः। तुमर्थभाववचनप्रत्ययान्तात् प्रातिपदिकाच् चतुर्थी विभक्तिर्भवति। 'भाववचनाश्च' ( ३.३.११ ) इति वक्ष्यति, तस्येदं ग्रहणम्। पाकाय व्रजति। त्यागाय व्रजति। भूतये व्रजति। संपत्तये व्रजति। तुमर्थादिति किम् ? पाकः। त्यागः। रागः। भाववचनादिति किम् ? कारको व्रजति ॥

## नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥ १६ ॥

नमः स्वस्ति स्वाहा स्वधा अलं वषट् इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। नमो देवेभ्यः ( मै० सं० १.२.१३ )। स्वस्ति प्रजाभ्यः। स्वाहा अग्नये ( तै० सं० १.८.१३.३ )। स्वधा पितृभ्यः ( मै० सं० १.२.१३ )। अलं मल्लो मल्लाय। अलमिति पर्याप्त्यर्थग्रहणम्। प्रभुर्मल्लो मल्लाय। शक्तो मल्लो मल्लाय। वषडग्नये। वषडिन्द्राय। चकारः पुनरस्यैव समुच्चयार्थः। तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति।

स्वस्ति गोभ्यो भूयात्। स्वस्ति ब्राह्मणेभ्यः॥

## मन्यकर्मण्यनादरे विभाषाप्राणिषु ॥ १७ ॥

मन्यतेः कर्म मन्यकर्म तस्मिन्[1]। मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवत्यनादरे गम्यमाने। अनादरस्तिरस्कारः। न त्वा तृणं मन्ये, न त्वा तृणाय मन्ये। न त्वा बुसं मन्ये, न त्वा बुसाय मन्ये। मन्यतिग्रहणं किम् ? न त्वा तृणं चिन्तयामि। विकरणनिर्देशः किमर्थः ? न त्वा तृणं मन्वे। अनादर इति किम् ?

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् ।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति ॥

अप्राणिष्विति किम् ? न त्वा शृगालं मन्ये ॥ यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यम् ॥ व्यवस्थितविभाषा च ज्ञेया। न त्वा नावं मन्ये यावदुत्तीर्णं न नाव्यम्। न त्वान्नं मन्ये यावद् न भुक्तं श्राद्धम्। प्राणिषु तूभयम्। न त्वा काकं मन्ये। न त्वा शृगालं मन्ये। इह चतुर्थी द्वितीया च भवतः—न त्वा श्वानं मन्ये, न त्वा शुने मन्ये। युष्मदः कस्माद् न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म ? व्यवस्थितविभाषाविज्ञानादेव न भवति ॥

## कर्तृकरणयोस्तृतीया ॥ १८ ॥

कर्तरि करणे च कारके तृतीया विभक्तिर्भवति। देवदत्तेन कृतम्। यज्ञदत्तेन भुक्तम्। करणे—दात्रेण लुनाति। परशुना छिनत्ति ॥ तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम् ॥ प्रकृत्याभिरूपः। प्रकृत्या दर्शनीयः। प्रायेण याज्ञिकः। प्रायेण वैयाकरणः। गार्ग्योऽस्मि गोत्रेण। समेन धावति। विषमेण धावति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून् क्रीणाति। साहस्रेणाश्वान् क्रीणाति ॥

## सहयुक्तेऽप्रधाने ॥ १९ ॥

सहार्थेन युक्तेऽप्रधाने तृतीया विभक्तिर्भवति। पुत्रेण सहागतः पिता। पुत्रेण सह गोमान्। पितुरत्र क्रियादिसंबन्धः शब्देनोच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम्। सहार्थेन योगे तृतीयाविधानात् पर्यायप्रयोगेऽपि भवति। पुत्रेण सार्धमिति। विनापि सहशब्देन भवति। 'वृद्धो यूना०' ( १.२.६५ ) इति निदर्शनात्। अप्रधान इति किम्? शिष्येण सहोपाध्यायस्य गौः॥

---

१ - ' मन्यतेः कर्मणि मन्यकर्मणि ' इति मुद्रितेषु ।

## येनाङ्गविकारः ॥ २० ॥

अङ्गशब्दोऽत्राङ्गसमुदाये शरीरे वर्तते, येनेति च तदवयवो हेतुत्वेन निर्दिश्यते। येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते, ततस्तृतीयाविभक्तिर्भवति। अक्ष्णा काणः। पादेन खञ्जः। पाणिना कुण्ठः। अवयवधर्मेण समुदायो व्यपदिश्यते। अङ्गविकार इति किम्? अक्षि काणमस्य॥

## इत्थंभूतलक्षणे ॥ २१ ॥

कञ्चित् प्रकारं प्राप्त इत्थंभूतः, तस्य लक्षणमित्थंभूतलक्षणम्। ततस्तृतीया विभक्तिर्भवति। अपि भवान् कमण्डलुना छात्रमद्राक्षीत्। छात्रेणोपाध्यायम्। शिखया परिव्राजकम्। इह न भवति—कमण्डलुपाणिश्छात्र इति, लक्षणस्य समासेऽन्तर्भूतत्वात्। इत्थंभूत इति किम्? वृक्षं प्रति विद्योतनम्[1]॥

## संज्ञोऽन्यतरस्यां कर्मणि ॥ २२ ॥

संपूर्वस्य जानातेः कर्मणि कारके द्वितीयायां प्राप्तायामन्यतरस्यां तृतीया विभक्तिर्भवति। पित्रा संजानीते, पितरं संजानीते। मात्रा संजानीते, मातरं संजानीते॥

## हेतौ ॥ २३ ॥

फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते। तद्वाचिनस्तृतीया विभक्तिर्भवति। धनेन कुलम्। कन्यया शोकः। विद्यया यशः॥

## अकर्तर्यृणे पञ्चमी ॥ २४ ॥

हेताविति वर्तते। कर्तृवर्जितं यदृणं हेतुः, ततः पञ्चमी विभक्तिर्भवति। तृतीयापवादो योगः। शताद् बद्धः। सहस्राद् बद्धः। अकर्तरीति किम्? शतेन बन्धितः। शतमृणं च भवति, प्रयोजकत्वाच्च कर्तृसंज्ञकम्॥

## विभाषा गुणेऽस्त्रियाम् ॥ २५ ॥

हेताविति वर्तते। गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति। जाड्याद् बद्धः, जाड्येन बद्धः। पाण्डित्याद् मुक्तः, पाण्डित्येन मुक्तः। गुणग्रहणं किम्? धनेन कुलम्। अस्त्रियामिति किम्? बुद्ध्या मुक्तः। प्रज्ञया मुक्तः॥

---

१ – 'इत्थंभूत........ विद्योतनम्' इति यथान्यासं न स्यात्।

## षष्ठी हेतुप्रयोगे ॥ २६ ॥

हेतोः प्रयोगो हेतुप्रयोगः। हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर्भवति। अन्नस्य हेतोर्वसति ॥

## सर्वनाम्नस्तृतीया च ॥ २७ ॥

सर्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति, षष्ठी च। पूर्वेण षष्ठ्यामेव प्राप्तायामिदमुच्यते। कस्य हेतोर्वसति, केन हेतुना वसति। यस्य हेतोर्वसति, येन हेतुना वसति ॥ निमित्तकारणहेतुषु सर्वासां[1] प्रायदर्शनम् ॥ किं निमित्तं वसति। केन निमित्तेन वसति। कस्मै निमित्ताय वसति। कस्मान्निमित्ताद् वसति। कस्य निमित्तस्य वसति। कस्मिन्निमित्ते वसति। एवं कारणहेत्वोरप्युदाहार्यम्। अर्थग्रहणं चैतत्। पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायीति। तेनेहापि भवति—किं प्रयोजनं वसति। केन प्रयोजनेन वसति। कस्मै प्रयोजनाय वसति। कस्मात् प्रयोजनाद् वसति। कस्य प्रयोजनस्य वसति। कस्मिन् प्रयोजने वसति ॥

## अपादाने पञ्चमी ॥ २८ ॥

अपादाने कारके पञ्चमी विभक्तिर्भवति। ग्रामादागच्छति। पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात् पराजयते ॥ पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् ॥ प्रासादमारुह्य प्रेक्षते, प्रासादात् प्रेक्षते ॥ अधिकरणे चोपसंख्यानम् ॥ आसन उपविश्य प्रेक्षते, आसनात् प्रेक्षते। शयनात् प्रेक्षते ॥ प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या ॥ कुतो भवान् ? पाटलिपुत्रात् ॥ यतश्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्या ॥ गवीधुमतः सांकाश्यं चत्वारि योजनानि। कार्त्तिक्या आग्रहायणी मासे ॥ तद्युक्तात् काले सप्तमी वक्तव्या ॥ कार्त्तिक्या आग्रहायणी मासे ॥ अध्वनः प्रथमा सप्तमी च वक्तव्या ॥ गवीधुमतः सांकाश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा ॥

## अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते ॥ २९ ॥

अन्य आरात् इतर ऋते दिक्छब्द अञ्चूत्तरपद आच् आहि इत्येतैर्योगे पञ्चमी विभक्तिर्भवति। अन्य इत्यर्थग्रहणम्। तेन पर्यायप्रयोगेऽपि भवति। अन्यो देवदत्तात्। भिन्नो देवदत्तात्। अर्थान्तरं देवदत्तात्। विलक्षणो देवदत्तात्। आराच्छब्दो दूरान्तिकार्थे वर्तते। तत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' ( २.३.३४ ) इति प्राप्ते पञ्चमी विधीयते।

---

१ - 'विभक्तीनाम्' इत्यधिकं न्यासे।

आराद् देवदत्तात्। आराद् यज्ञदत्तात्। इतर इति निर्दिश्यमानस्य प्रतियोगी पदार्थ उच्यते। इतरो देवदत्तात्। ऋत इत्यव्ययं वर्जनार्थे। ऋते देवदत्तात्। ऋते यज्ञदत्तात्। दिक्शब्दः—पूर्वो ग्रामात् पर्वतः। उत्तरो ग्रामात्। पूर्वो ग्रीष्माद् वसन्तः। उत्तरो ग्रीष्मो वसन्तात्। दिक्छब्द इत्यत्र शब्दग्रहणं देशकालवृत्तिनापि दिक्छब्देन योगे यथा स्यात्, इतरथा हि दिग्वृत्तिनैव योगे स्यात्—इयमस्याः पूर्वेति। इह तु न स्यात्—अयमस्मात् पूर्वः काल इति। अञ्चूत्तरपद—प्राग् ग्रामात्। प्रत्यग् ग्रामात्। ननु चायमपि दिक्शब्द एव ? 'षष्ठ्यतसर्थप्रत्ययेन' ( २.३.३० ) इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः। आच्—दक्षिणा ग्रामात्। उत्तरा ग्रामात्। आहि—दक्षिणाहि ग्रामात्। उत्तराहि ग्रामात्॥

## षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥

'दक्षिणोत्तराभ्यामतसुच्' ( ५.३.२८ ) इति वक्ष्यति, तस्येदं ग्रहणम्। अतसर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य[1]। पुरस्ताद् ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद् ग्रामस्य॥

## एनपा द्वितीया ॥ ३१ ॥

'एनबन्यतरस्यामदूरेऽपञ्चम्याः' ( ५.३.३५ ) इति वक्ष्यति। तेन युक्ते द्वितीया विभक्तिर्भवति। पूर्वेण षष्ठ्यां प्राप्तायामिदं वचनम्। दक्षिणेन ग्रामम्। उत्तरेण ग्रामम्। षष्ठ्यपीष्यते। दक्षिणेन ग्रामस्य। उत्तरेण ग्रामस्य। तदर्थं योगविभागः कर्तव्यः॥

## पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ॥ ३२ ॥

पञ्चमीग्रहणमनुवर्तते। पृथग् विना नाना इत्येतैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम्, पञ्चमी च। पृथग् देवदत्तेन, पृथग् देवदत्तात्। विना देवदत्तेन, विना देवदत्तात्। नाना देवदत्तेन, नाना देवदत्तात्। पृथग्विनानानाभिरिति योगविभागो द्वितीयार्थः।

विना वातं विना वर्षं विद्युत्प्रपतनं विना।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ॥ हरि० पु० ७. २९॥

## करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ ३३ ॥

स्तोक अल्प कृच्छ्र कतिपय इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारकेऽन्यतरस्यां तृतीया भवति। पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करण इत्येव सिद्धा। यदा तु धर्ममात्रं

---

१ - 'पुरो ग्रामस्य' इत्यधिकं न्यासे।

करणतया विवक्ष्यते न द्रव्यम् , तदा स्तोकादीनामसत्त्ववचनता। स्तोकाद् मुक्तः, स्तोकेन मुक्तः। अल्पाद् मुक्तः, अल्पेन मुक्तः। कृच्छ्राद् मुक्तः, कृच्छ्रेण मुक्तः। कतिपयाद् मुक्तः, कतिपयेन मुक्तः। असत्त्ववचनस्येति किम् ? स्तोकेन विषेण हतः। अल्पेन मधुना मत्तः। करण इति किम् ? क्रियाविशेषणे कर्मणि मा भूत्—स्तोकं मुञ्चति ॥

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥ ३४ ॥

पञ्चम्यनुवर्तते। दूरान्तिकार्थैः शब्दैर्योगे षष्ठी विभक्तिर्भवत्यन्यतरस्याम्, पञ्चमी च। दूरं ग्रामस्य, दूरं ग्रामात्। विप्रकृष्टं ग्रामस्य, विप्रकृष्टं ग्रामात्। अन्तिकं ग्रामस्य, अन्तिकं ग्रामात्। अभ्याशं ग्रामस्य, अभ्याशं ग्रामात्। अन्यतरस्यांग्रहणं पञ्चम्यर्थम्। इतरथा हि तृतीया पक्षे स्यात् ॥

## दूरान्तिकार्थेभ्यो द्वितीया च ॥ ३५ ॥

पञ्चम्यनुवर्तते। दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति, चकारात् पञ्चमी, तृतीयापि समुच्चीयते। दूरं ग्रामस्य, दूराद् ग्रामस्य, दूरेण ग्रामस्य। अन्तिकं ग्रामस्य, अन्तिकाद् ग्रामस्य, अन्तिकेन ग्रामस्य। प्रातिपदिकार्थे विधानम्। असत्त्ववचनग्रहणं चानुवर्तते। सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति। दूरः पन्थाः। दूराय पथे देहि। दूरस्य पथः स्वम् ॥

## सप्तम्यधिकरणे च ॥ ३६ ॥

सप्तमी विभक्तिर्भवत्यधिकरणे कारके, चकाराद् दूरान्तिकार्थेभ्यश्च। कटे आस्ते। शकटे आस्ते। स्थाल्यां पचति। दूरान्तिकार्थेभ्यः खल्वपि—दूरे ग्रामस्य। अन्तिके ग्रामस्य। अभ्याशे ग्रामस्य। दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति—द्वितीयातृतीया-पञ्चमीसप्तम्यः ॥ सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ॥ अधीती व्याकरणे। परिगणिती याज्ञिके। आम्नाती छन्दसि ॥ साध्वसाधुप्रयोगे च सप्तमी वक्तव्या ॥ साधुर्देवदत्तो मातरि। असाधुः पितरि ॥ कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या ॥ ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते ॥ अकारकार्हाणां चाकारकत्वे सप्तमी वक्तव्या ॥ दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति ॥ तद्विपर्यासे च सप्तमी वक्तव्या ॥ ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति ॥ निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या ॥

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

## यस्य च भावेन भावलक्षणम् ॥ ३७ ॥

सप्तमीति वर्तते। भावः क्रिया। यस्य च भावेन यस्य च क्रियया क्रियान्तरं लक्ष्यते, ततो भाववतः सप्तमी विभक्तिर्भवति। प्रसिद्धा च क्रिया क्रियान्तरं लक्षयति। गोषु दुह्यमानासु गतः। दुग्धास्वागतः। अग्निषु हूयमानेषु गतः। हुतेष्वागतः। भावेनेति किम् ? यो जटाभिः, स भुङ्क्ते। पुनर्भावग्रहणं किम् ? यो भुङ्क्ते, स देवदत्तः॥

## षष्ठी चानादरे ॥ ३८ ॥

पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते, चकारात् सापि भवति। अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः। रुदतः प्राव्राजीत्। रुदति प्राव्राजीत्। क्रोशतः प्राव्राजीत्। क्रोशति प्राव्राजीत्। क्रोशन्तमनादृत्य प्रव्रजित इत्यर्थः॥

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ३९ ॥

षष्ठीसप्तम्यौ वर्तेते। स्वामिन् ईश्वर अधिपति दायाद साक्षिन् प्रतिभू प्रसूत इत्येतैर्योगे षष्ठीसप्तम्यौ विभक्ती भवतः। गवां स्वामी, गोषु स्वामी। गवामीश्वरः, गोष्वीश्वरः। गवामधिपतिः, गोष्वधिपतिः। गवां दायादः, गोषु दायादः। गवां साक्षी, गोषु साक्षी। गवां प्रतिभूः, गोषु प्रतिभूः। गवां प्रसूतः, गोषु प्रसूतः। षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थं वचनम्॥

## आयुक्तकुशलाभ्यां चासेवायाम् ॥ ४० ॥

षष्ठीसप्तम्यौ वर्तेते। आयुक्तो व्यापारितः, कुशलो निपुणः, ताभ्यां योग आसेवायां गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः। आसेवा तात्पर्यम्। आयुक्तः कटकरणस्य, आयुक्तः कटकरणे। कुशलः कटकरणस्य, कुशलः कटकरणे। आसेवायामिति किम् ? आयुक्तो गौः शकटे[१]। तत्र सप्तम्येवाधिकरणे भवति॥

## यतश्च निर्धारणम् ॥ ४१ ॥

षष्ठीसप्तम्यौ वर्तेते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। यतो निर्धारणम्, ततः षष्ठीसप्तम्यौ विभक्ती भवतः। मनुष्याणां क्षत्रियः शूरतमः, मनुष्येषु क्षत्रियः शूरतमः। गवां कृष्णा संपन्नक्षीरतमा, गोषु कृष्णा संपन्नक्षीरतमा। अध्वगानां धावन्तः शीघ्रतमाः, अध्वगेषु धावन्तः शीघ्रतमाः॥

---

१ – 'ईषद्युक्त इत्यर्थः' इत्यधिकं बाल०।

## पञ्चमी विभक्ते ॥ ४२ ॥

यतश्च निर्धारणमिति वर्तते। षष्ठीसप्तम्यपवादो योगः। विभागो विभक्तम्। यस्मिन् निर्धारणाश्रये विभक्तमस्यास्ति, ततः पञ्चमी विभक्तिर्भवति। माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः, आढ्यतराः॥

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ ४३ ॥

साधु निपुण इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति, न चेत् प्रतिः प्रयुज्यते। मातरि साधुः। पितरि साधुः। मातरि निपुणः। पितरि निपुणः। अर्चायामिति किम् ? साधुर्भृत्यो राज्ञः। तत्त्वकथने न भवति। अप्रतेरिति किम् ? साधुर्देवदत्तो मातरं प्रति ॥ अप्रत्यादिभिरिति वक्तव्यम्॥ साधुर्देवदत्तो मातरं परि, मातरमनु॥

## प्रसितोत्सुकाभ्यां तृतीया च ॥ ४४ ॥

प्रसित उत्सुक इत्येताभ्यां योगे तृतीया विभक्तिर्भवति, चकारात् सप्तमी च। प्रसितः प्रसक्तः, यस्तत्र नित्यमेवावबद्धः, स प्रसितशब्देनोच्यते। केशैः प्रसितः, केशेषु प्रसितः। केशैरुत्सुकः, केशेषूत्सुकः॥

## नक्षत्रे च लुपि ॥ ४५ ॥

तृतीयासप्तम्यावनुवर्तेते। लुबन्ताद् नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भवतः। पुष्येण पायसमश्नीयात्, पुष्ये पायसमश्नीयात्। मघाभिः पललौदनम्, मघासु पललौदनम्। नक्षत्र इति किम् ? पञ्चालेषु वसति। लुपीति किम् ? मघासु ग्रहः। इह कस्माद् न भवति—अद्य पुष्यः, अद्य कृत्तिका। अधिकरण इति वर्तते। वचनं तु पक्षे तृतीयाविधानार्थम्॥

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४६ ॥

प्रातिपदिकार्थः सत्ता। लिङ्गं—स्त्रीलिङ्गपुँल्लिङ्गनपुंसकानि। परिमाणं—द्रोणः, खारी, आढकम्। वचनम्—एकत्वद्वित्वबहुत्वानि। मात्रशब्दः प्रत्येकमभिसंबध्यते। प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, परिमाणमात्रे, वचनमात्रे प्रथमा विभक्तिर्भवति। प्रातिपदिकार्थमात्रे—उच्चैः। नीचैः। लिङ्गग्रहणं किम् ? कुमारी, वृक्षः, कुण्डमित्यत्रापि यथा स्यात्। परिमाणग्रहणं किम् ? द्रोणः, खारी, आढकमित्यत्रापि यथा स्यात्। वचनग्रहणं किम् ? एकत्वादिषूक्तेष्वपि यथा स्याद्। एकः, द्वौ, बहवः। प्रातिपदिकग्रहणं किम् ? निपातस्यानर्थकस्य प्रातिपदिकत्वमुक्तम् ( १.२.४५ ), ततोऽपि यथा स्यात्। प्रलम्बते। अध्यागच्छति॥

## संबोधने च ॥ ४७ ॥

आभिमुख्यकरणं संबोधनम्, तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोतीति वचनमारभ्यते। संबोधने च प्रथमा विभक्तिर्भवति। हे देवदत्त। हे देवदत्तौ। हे देवदत्ताः॥

## सामन्त्रितम् ॥ ४८ ॥

संबोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं भवति। तथा चैवोदाहृतम्। आमन्त्रितप्रदेशाः—'आमन्त्रितं पूर्वमविद्यमानवत्' ( ८.१.७२ ) इत्येवमादयः॥

## एकवचनं संबुद्धिः ॥ ४९ ॥

आमन्त्रितप्रथमाया यदेकवचनं तत् संबुद्धिसंज्ञं भवति। हे पटो। हे देवदत्त। संबुद्धिप्रदेशाः—'एङ्ह्रस्वात् संबुद्धेः' ( ६.१.६९ ) इत्येवमादयः॥

## षष्ठी शेषे ॥ ५० ॥

कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषः, तत्र षष्ठी विभक्तिर्भवति। राज्ञः पुरुषः। पशोः पादः। पितुः पुत्रः॥

## ज्ञोऽविदर्थस्य करणे ॥ ५१ ॥

जानातेरविदर्थस्याज्ञानार्थस्य करणे कारके षष्ठी विभक्तिर्भवति। सर्पिषो जानीते। मधुनो जानीते। सर्पिषा करणेन प्रवर्तत इत्यर्थः। प्रवृत्तिवचनो जानातिरविदर्थः। अथ वा मिथ्याज्ञानवचनः। सर्पिषि रक्तः प्रतिहतो वा चित्तभ्रान्त्या तदात्मना सर्वमेव ग्राह्यं प्रतिपद्यते। मिथ्याज्ञानमज्ञानमेव। अविदर्थस्येति किम् ? स्वरेण पुत्रं जानाति॥

## अधीगर्थदयेशां कर्मणि ॥ ५२ ॥

शेष इति वर्तते। अधीगर्थाः स्मरणार्थाः। 'दय दानगतिरक्षणेषु' ( भ्वा० ३२२)। 'ईश ऐश्वर्ये' ( अदा० १० )। एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। मातुरध्येति। मातुः स्मरति। सर्पिषो दयते। सर्पिष ईष्टे। मधुन ईष्टे। कर्मणीति किम्? मातुर्गुणैः स्मरति। शेष इत्येव[1]—मातरं स्मरति॥

## कृञः प्रतियत्ने ॥ ५३ ॥

---

१ – 'इति किम् ' इति मुद्रितेषु।

सतो गुणान्तराधानं प्रतियत्नः। करोतेः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति। एधोदकस्योपस्कुरुते। शस्त्रपत्रस्योपस्कुरुते। प्रतियत्न इति किम् ? कटं करोति। कर्मणीति किम् ? एधोदकस्योपस्कुरुते प्रज्ञया। शेष इत्येव—एधोदकमुपस्कुरुते॥

## रुजार्थानां भाववचनानामज्वरेः ॥ ५४ ॥

रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। चौरस्य रुजति रोगः। चौरस्यामयत्यामयः। रुजार्थानामिति किम् ?

एति जीवन्तमानन्दो नरं वर्षशतादपि।
जीव पुत्रक मा मैवं तपः साहसमाचर[१]॥

भाववचनानामिति किम् ? नदी कूलानि रुजति। अज्वरेरिति किम् ? चौरं ज्वरयति ज्वरः ॥ अज्वरिसंताप्योरिति वक्तव्यम्॥ चौरं संतापयति तापः। शेष इत्येव—चौरं रुजति रोगः॥

## आशिषि नाथः ॥ ५५ ॥

'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' ( भ्वा० ६ ) पठ्यते, तस्याशीःक्रियस्य कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। सर्पिषो नाथते। मधुनो नाथते। आशिषीति किम् ? माणवकमुपनाथति, अङ्ग पुत्रकाधीष्व॥

## जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ५६ ॥

जासि निप्रहण नाट क्राथ पिष् इत्येतेषां धातूनां हिंसाक्रियाणां कर्मणि कारके षष्ठी विभक्तिर्भवति। 'जसु हिंसायाम्' ( चु० १३८ ) 'जसु ताडने' ( चु० १८७ ) इति च चुरादौ पठ्यते, तस्येदं ग्रहणम्, न दैवादिकस्य 'जसु मोक्षणे' ( दिवा० १०१) इत्यस्य। चौरस्योज्जासयति। वृषलस्योज्जासयति। निप्रहण इति सङ्घातविगृहीतविपर्यस्तस्य ग्रहणम्। चौरस्य निप्रहन्ति। चौरस्य निहन्ति। चौरस्य प्रहन्ति। चौरस्य प्रणिहन्ति। चौरस्योन्नाटयति। वृषलस्योन्नाटयति। चौरस्योत्क्राथयति। वृषलस्य क्राथयति। निपातनाद् वृद्धिः। अयं हि घटादौ पठ्यते, 'श्रथ क्नथ क्रथ क्लथ हिंसार्थाः' ( भ्वा० ५४२ ) इति। तत्र 'घटादयो मितः' ( भ्वा० ५५९ ) इति मित्संज्ञायां 'मितां ह्रस्वः' ( ६.४.९२ ) इति ह्रस्वत्वं स्यात्। चौरस्य पिनष्टि। वृषलस्य पिनष्टि। हिंसायामिति किम् ? धानाः

१ - ' कल्याणी खलु गाथेयं लौकिकी प्रतिभाति मे। एति जीवन्तमानन्दो नरं वर्षशतादपि॥ ' इति पाठान्तरम्।

पिनष्टि। शेष इत्येव—चौरमुज्जासयति। एषामिति किम् ? चौरं हिनस्ति। निप्रहण इति किम् ? चौरं विहन्ति॥

## व्यवहृपणोः समर्थयोः ॥ ५७ ॥

व्यवहृ पण इत्येतयोः समर्थयोः समानार्थयोः कर्मणि कारके षष्ठी विभक्तिर्भवति। द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः। शतस्य व्यवहरति। सहस्रस्य व्यवहरति। शतस्य पणते। सहस्रस्य पणते। आयप्रत्ययः कस्माद् न भवति ? स्तुत्यर्थस्य पणतेरायप्रत्यय इष्यते। समर्थयोरिति किम् ? शलाकां व्यवहरति। परिगण..तीत्यर्थः[१]। ब्राह्मणान् पणायति[२]। स्तौतीत्यर्थः। शेष इत्येव—शतं पणते॥

## दिवस्तदर्थस्य ॥ ५८ ॥

व्यवहृपणिसमानार्थस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर्भवति। शतस्य दीव्यति। सहस्रस्य दीव्यति। तदर्थस्येति किम् ? ब्राह्मणं दीव्यति। योगविभाग उत्तरार्थः॥

## विभाषोपसर्गे ॥ ५९ ॥

'दिवस्तदर्थस्य' ( २.३.५८ ) इति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते। उपसर्गे सति दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठी विभक्तिर्भवति। शतस्य प्रतिदीव्यति। सहस्रस्य प्रतिदीव्यति। शतं प्रतिदीव्यति। सहस्रं प्रतिदीव्यति। उपसर्ग इति किम् ? शतस्य दीव्यति। तदर्थस्येत्येव—शलाकां प्रतिदीव्यति॥

## द्वितीया ब्राह्मणे ॥ ६० ॥

ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति। गामस्य तदहः सभायां दीव्येयुः ( मै० सं० १.६.११ )। अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम्। सोपसर्गस्य तु छन्दसि व्यवस्थितविभाषयापि सिध्यति॥

## प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ ६१ ॥

प्रेष्य इति इष्यतेर्दैवादिकस्य लोण्मध्यमपुरुषस्यैकवचनम्, तत्साहचर्याद् ब्रुविरपि तद्विषय एव गृह्यते। प्रेष्यब्रुवोर्हविषः कर्मणः षष्ठी विभक्तिर्भवति देवतासंप्रदाने सति। अग्नये छागस्य हविषो वपाया मेदसः प्रे३ष्य ( का० श्रौ० ६.६.२४ )। अग्नये छागस्य हविषो वपायै मेदसोऽनुब्रू३हि ( का० श्रौ० ६.६.२२ )। प्रेष्यब्रुवोरिति किम् ? अग्नये

---

१ – 'विक्षिपतीत्यर्थः' इति पाठान्तरम्। २ – 'पणायते' इति मुद्रितेष्वपपाठः।

छागं हविर्वपां मेदो जुहुधि। हविष इति किम् ? अग्नये गोमयानि प्रेष्य। देवतासंप्रदान इति किम् ? माणवकाय पुरोडाशं प्रेष्य ॥ हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः॥ इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रे३ष्य ( का० श्रौ० ६.६.२५ )॥

## चतुर्थ्यर्थे बहुलं छन्दसि॥ ६२ ॥

छन्दसि विषये चतुर्थ्यर्थे षष्ठी विभक्तिर्भवति बहुलम्। पुरुषमृगश्चन्द्रमसः ( मा० सं० २४.३५ )। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम् ( मा० सं० २४.३५ )। ते वनस्पतिभ्यः। बहुलग्रहणं किम् ? कृष्णो रात्र्यै ( मा० सं० २४.३६ )। हिमवते हस्ती ( मा० सं० २४.३० ) ॥ षष्ठ्यर्थे चतुर्थी वक्तव्या॥ या खर्वेण पिबति तस्यै खर्वो जायते। या दतो धावते तस्यै श्यावदन्। या नखानि निकृन्तते तस्यै कुनखी। याऽङ्क्ते तस्यै काणः। याऽभ्यङ्क्ते तस्यै दुश्चर्मा। या केशान् प्रलिखते तस्यै खलतिः ( तै० सं० २.५.१.७ )। अहल्यायै जार ( श० ब्रा० ३.३.४.१८ )॥

## यजेश्च करणे ॥ ६३ ॥

यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठी विभक्तिर्भवति। घृतस्य यजते (तु०—श० ब्रा० ४.४.२.४ )। घृतेन यजते। सौम्यस्य यजते ( तु०—श० ब्रा० ४.४.२.५ )। सोमेन यजते॥

## कृत्वोऽर्थप्रयोगे कालेऽधिकरणे॥ ६४ ॥

छन्दसि बहुलमिति निवृत्तम्। कृत्वोऽर्थानां प्रत्ययानां प्रयोगे कालेऽधिकरणे षष्ठी विभक्तिर्भवति। पञ्चकृत्वोऽह्नो भुङ्क्ते। द्विरह्नोऽधीते। कृत्वोऽर्थग्रहणं किम् ? अह्नि शेते। रात्रौ शेते। प्रयोगग्रहणं किम् ? अहनि भुक्तम्। गम्यते हि द्विस्त्रिश्चतुर्वेति, न त्वप्रयुज्यमाने भवति। कालग्रहणं किम् ? द्विः कांस्यपात्र्यां भुङ्क्ते। अधिकरण इति किम् ? द्विरह्ना[1] भुङ्क्ते। शेष इत्येव—द्विरहन्यधीते॥

## कर्तृकर्मणोः कृति॥ ६५ ॥

कृत्प्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवति। भवतः शायिका। भवत आसिका। कर्मणि—अपां स्रष्टा। पुरां भेत्ता ( तु०—ऋ० ८.१७.१४ )। वज्रस्य भर्त्ता ( तै० सं० १.४.२८.१ )। कर्तृकर्मणोरिति किम् ? शस्त्रेण भेत्ता। कृतीति किम् ? तद्धितप्रयोगे मा भूत्। कृतपूर्वी कटम्। भुक्तपूर्वी ओदनम्। शेष इति निवृत्तम्, पुनः कर्मग्रहणात्। इतरथा हि कर्तरि च कृतीत्येवं ब्रूयात्॥

---

१ - 'अह्नः' इत्यपपाठो मुद्रितेषु।

## उभयप्राप्तौ कर्मणि ॥ ६६ ॥

पूर्वेण षष्ठी प्राप्ता नियम्यते। उभयप्राप्ताविति बहुव्रीहिः। उभयोः प्राप्तिर्यस्मिन् कृति सोऽयमुभयप्राप्तिः, तत्र कर्मण्येव षष्ठी विभक्तिर्भवति, न कर्तरि। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते म ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं यज्ञदत्तेन। बहुव्रीहिविज्ञानादिह नियमो न भवति—आश्चर्यमिदम्, ओदनस्य नाम पाको ब्राह्मणानां च प्रादुर्भाव इति ॥ अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम् ॥ भेदिका देवदत्तस्य काष्ठानाम्। चिकीर्षा देवदत्तस्य कटस्य ॥ शेषे विभाषा ॥ अकाकारयोः स्त्रीप्रत्यययोर्ग्रहणात् तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते। विचित्रा[1] हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा। केचिदविशेषेणैव विभाषामिच्छन्ति। शब्दानामनुशासनमाचार्येण, आचार्यस्येति वा ॥

## क्तस्य च वर्तमाने ॥ ६७ ॥

'न लोकाव्ययनिष्ठा०' ( २.३.६९ ) इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते। क्तस्य वर्तमानकालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। क्तस्येति किम् ? ओदनं पचमानः। वर्तमान इति किम् ? ग्रामं गतः ॥ नपुंसके भाव उपसंख्यानम् ॥ छात्रस्य हसितम्। मयूरस्य नृत्तम्। कोकिलस्य व्याहृतम् ॥ शेषविज्ञानात् सिद्धम् ॥ तथा च कर्तृविवक्षायां तृतीयापि भवति, छात्रेण हसितमिति ॥

## अधिकरणवाचिनश्च ॥ ६८ ॥

'क्तोऽधिकरणे च०' ( ३.४.७६ ) इति वक्ष्यति। तस्य प्रयोगे षष्ठी विभक्तिर्भवति। अयमपि प्रतिषेधापवादो योगः। इदमेषामासितम्। इदमेषां शयितम्। इदमहेः सृप्तम्। इदं वनकपेर्यातम्। इदमेषां भुक्तम्। इदमेषामशितम्। द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठी द्वितीयावत्। नेताश्वस्य ग्रामस्य चैत्रः। अन्ये प्रधाने कर्मण्याहुः। तदा, नेताश्वस्य ग्रामं चैत्रः ॥

## न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ ६९ ॥

'कर्तृकर्मणोः कृति' ( २.३.६५ ) इति षष्ठी प्राप्ता प्रतिषिध्यते। ल उ उक अव्यय निष्ठा खलर्थ तृन् इत्येतेषां प्रयोगे षष्ठी विभक्तिर्न भवति। ल इति शतृशानचौ

---

१ - 'शोभना' इति है०।

कानच्क्वसू किकिनौ च गृह्यन्ते। ओदनं पचन्। ओदनं पचमानः। ओदनं पेचानः। ओदनं पेचिवान्। पपिः सोमं ददिर्गाः ( ऋ० ६.२३.४ )। उ—कटं चिकीर्षुः। ओदनं बुभुक्षुः। कन्यामलंकरिष्णुः। इष्णुचोऽपि प्रयोगे निषेधः। उक—आगामुकं वाराणसीं रक्ष आहुः ॥ उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः ॥ दास्याः कामुकः। अव्यय—कटं कृत्वा। ओदनं भुक्त्वा ॥ अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ॥ पुरा सूर्यस्योदेतो-राधेयः ( काठ० सं० ८.३ )। पुरा क्रूरस्य विसृपो विरप्शिन् ( तै० सं० १.१.९.३ )। निष्ठा—ओदनं भुक्तवान्। देवदत्तेन कृतम्। खलर्थ—ईषत्करः कटो भवता। ईषत्पानः सोमो भवता। तृन् इति प्रत्याहारग्रहणम्, 'लटः शतृशानचा०' ( ३.२.१२४ ) इत्यारभ्य आ तृनो ( ३.२.१३५ ) नकारात्। तेन शानन्चानश्शतृतृनामपि प्रतिषेधो भवति। सोमं पवमानः। नडमाघ्नानः। अधीयन् पारायणम्। कर्ता कटान्। वदिता जनापवादान् ॥ द्विषः शतुर्वावचनम् ॥ चौरं द्विषन्, चौरस्य द्विषन् ॥

## अकेनोर्भविष्यदाधमर्ण्ययोः ॥ ७० ॥

अकस्य भविष्यति काले विहितस्य, इनस्तु भविष्यति चाधमर्ण्ये च विहितस्य प्रयोगे षष्ठी विभक्तिर्न भवति। कटं कारको व्रजति। ओदनं भोजको व्रजति। इनः खल्वपि—ग्रामं गमी। ग्रामं गामी। आधमर्ण्ये—शतं दायी। सहस्रं दायी। भविष्यदा-धमर्ण्ययोरिति किम् ? यवानां लावकः। सक्तूनां पायकः। अवश्यंकारी कटस्य। इह कस्माद् न भवति—वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शक इति ? भविष्यदधिकारे विहितस्या-कस्येदं ग्रहणम् ॥

## कृत्यानां कर्तरि वा ॥ ७१ ॥

'कर्तृकर्मणोः कृति' ( २.३.६५ ) इति नित्यं षष्ठी प्राप्ता कर्तरि विकल्प्यते। कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति, न कर्मणि। भवता कटः कर्तव्यः, भवतः कटः कर्तव्यः। कर्तरीति किम् ? गेयो माणवकः साम्नाम् ॥ उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः ॥ क्रष्टव्या ग्रामं शाखा देवदत्तेन। नेतव्या ग्राममजा देवदत्तेन ॥

## तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ॥ ७२ ॥

तुल्यार्थैः शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम्, पक्षे षष्ठी च, तुलोपमाशब्दौ वर्जयित्वा। शेषे विषये तृतीयाविधानात् तया मुक्ते षष्ठ्येव भवति। तुल्यो देवदत्तेन, तुल्यो देवदत्तस्य। सदृशो देवदत्तेन, सदृशो देवदत्तस्य। अतुलोपमाभ्यामिति किम् ? तुला देवदत्तस्य नास्ति। उपमा कृष्णस्य न विद्यते। वेति वर्तमानेऽन्यतरस्यांग्रहण-मुत्तरसूत्रे तस्य चकारेणानुकर्षणार्थम्। इतरथा हि तृतीयानुकृष्येत ॥

## चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ ७३ ॥

आशिषि गम्यमानायाम् आयुष्य मद्र भद्र कुशल सुख अर्थ हित इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। चकारो विकल्पानुकर्षणार्थः। शेषे चतुर्थीविधानात् तया मुक्ते षष्ठी विभक्तिर्भवति ॥ अत्रायुष्यादीनां पर्यायग्रहणं कर्तव्यम् ॥ आयुष्यं देवदत्ताय भूयात्, आयुष्यं देवदत्तस्य भूयात्। चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात्। मद्रं देवदत्ताय देवदत्तस्य वा भूयात्। भद्रं देवदत्ताय, भद्रं देवदत्तस्य। कुशलं देवदत्ताय, कुशलं देवदत्तस्य। निरामयं देवदत्ताय, निरामयं देवदत्तस्य। सुखं देवदत्ताय, सुखं देवदत्तस्य। शं देवदत्ताय, शं देवदत्तस्य। अर्थो देवदत्ताय, अर्थो देवदत्तस्य। प्रयोजनं देवदत्ताय, प्रयोजनं देवदत्तस्य। हितं देवदत्ताय, हितं देवदत्तस्य। पथ्यं देवदत्ताय, पथ्यं देवदत्तस्य। आशिषीति किम्? आयुष्यं देवदत्तस्य तपः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य तृतीयः पादः ॥



# ॥ द्वितीयाध्यायस्य चतुर्थः पादः ॥

## द्विगुरेकवचनम् ॥ १ ॥

द्विगुः समास एकवचनं भवति। एकस्य वचनमेकवचनम्। एकस्यार्थस्य वाचको भवतीत्यर्थः। तदनेन प्रकारेण द्विग्वर्थस्यैकवद्भावो विधीयते, द्विग्वर्थ एकवद् भवतीति। समाहारद्विगोश्चेदं ग्रहणम्, नान्यस्य। पञ्च पूलाः समाहृताः पञ्चपूली। दशपूली। द्विग्वर्थस्यैकत्वादनुप्रयोगेऽप्येकवचनं भवति—पञ्चपूलीयं शोभनेति॥

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २ ॥

एकवचनमिति वर्तते। अङ्गशब्दस्य प्रत्येकं वाक्यपरिसमाप्त्या त्रीणि वाक्यानि संपद्यन्ते। प्राण्यङ्गानां द्वन्द्व एकवद् भवति, तथा तूर्याङ्गानां सेनाङ्गानां च। प्राण्यङ्गानां तावत्—पाणिपादम्। शिरोग्रीवम्। तूर्याङ्गानाम्—मार्दङ्गिकपाणविकम्। वीणावादकपरिवादकम्। सेनाङ्गानाम्—रथिकाश्वारोहम्। रथिकपादातम्। हस्त्यश्वादिषु परत्वात्

पशुद्वन्द्वे विभाषयैकवद् भवति। इतरेतरयोगे समाहारे च द्वन्द्वो विहितः। तत्र समाहारस्यै-कत्वात् सिद्धमेवैकवचनम्। इदं तु प्रकरणं विषयविभागार्थम्। प्राण्यङ्गादीनां समाहार एव द्वन्द्वः। दधिपयआदीनामितरेतरयोग एव। वृक्षमृगादीनामुभयत्रेति॥

## अनुवादे चरणानाम् ॥ ३ ॥

चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्तते। चरणानां द्वन्द्व एकवद् भवति, अनुवादे गम्यमाने। प्रमाणान्तरावगतस्यार्थस्य शब्देन संकीर्तनमात्रमनुवादः। उदगात् कठकालापम्। प्रत्यष्ठात् कठकौथुमम्। कठकालापादीनामुदयप्रतिष्ठे प्रमाणान्तरावगते यदा पुनः शब्देनानूद्येते तदैवमुदाहरणम्। यदा तु प्रथमत एवोपदेशस्तदा प्रत्युदाहरणम्। अनुवाद इति किम्? उदगुः कठकालापाः। प्रत्यष्ठुः कठकौथुमाः॥ स्थेणोरद्यतन्यां चेति वक्तव्यम्॥ स्थेणोरिति किम्? अनन्दिषुः कठकालापाः। अद्यतन्यामिति किम्? उद्यन्ति कठकालापाः॥

## अध्वर्युक्रतुरनपुंसकम् ॥ ४ ॥

अध्वर्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्युक्रतुः। अध्वर्युक्रतुवाचिनां शब्दानाम-नपुंसकलिङ्गानां द्वन्द्व एकवद् भवति। अध्वर्युक्रतुरनपुंसकं द्वन्द्व इति गौणो निर्देशः। अर्काश्वमेधम्। सायाह्नातिरात्रम्। अध्वर्युक्रतुरिति किम्? इषुवज्रौ। उद्भिद्बलभिदौ। अनपुंसकमिति किम्? राजसूयवाजपेये। इह कस्माद् न भवति—दर्शपौर्णमासौ? क्रतुशब्दः सोमयागेषु रूढः॥

## अध्ययनतोऽविप्रकृष्टाख्यानाम् ॥ ५ ॥

अध्ययनेन निमित्तेन येषामविप्रकृष्टा प्रत्यासन्ना आख्या, तेषां द्वन्द्व एकवद् भवति। पदकक्रमकम्। क्रमकवार्त्तिकम्। संपाठः पदानां क्रमस्य च प्रत्यासन्नः। अध्ययनत इति किम्? पितापुत्रौ। अविप्रकृष्टाख्यानामिति किम्? याज्ञिकवैयाकरणौ॥

## जातिरप्राणिनाम् ॥ ६ ॥

जातिवाचिनां शब्दानां द्वन्द्व एकवद् भवति, प्राणिनो वर्जयित्वा। आराशस्त्रि। धानाशष्कुलि। जातिरिति किम्? नन्दकपाञ्चजन्यौ। अप्राणिनामिति किम्? ब्राह्मणक्षत्रियविट्शूद्राः। नञिवयुक्तन्यायेन (परि० ७४) द्रव्यजातीनामयमेकवद्भावः, न गुणक्रियाजातीनाम्। रूपरसगन्धस्पर्शाः। गमनाकुञ्चनप्रसारणानि। जातिपरत्वे च जातिशब्दानामयमेकवद्भावो विधीयते, न नियतद्रव्यविवक्षायाम्—इह कुण्डे बदरामलकानि तिष्ठन्तीति॥

## विशिष्टलिङ्गो नदी देशोऽग्रामाः ॥ ७ ॥

विशिष्टलिङ्गानां भिन्नलिङ्गानां नदीवाचिनां शब्दानां देशवाचिनां च ग्रामवर्जितानां द्वन्द्व एकवद् भवति। नद्यवयवो द्वन्द्वो नदीत्युच्यते, देशावयवश्च देशः। नदी देश इत्यसमासनिर्देश एवायम्। उद्ध्यश्चेरावती च, उद्ध्येरावति। गङ्गाशोणम्। देशः खल्वपि—कुरवश्च कुरुक्षेत्रं च, कुरुकुरुक्षेत्रम्। कुरुकुरुजाङ्गलम्। विशिष्टलिङ्ग इति किम्? गङ्गायमुने। मद्रकेकयाः। नदी देश इति किम्? कुक्कुटमयूर्यौ। अग्रामा इति किम्? जाम्बवश्च शालूकिनी च, जाम्बवशालूकिन्यौ। नदीग्रहणमदेशत्वात्। जनपदो हि देशः। तथा च पर्वतानां ग्रहणं न भवति। कैलासश्च गन्धमादनं च, कैलासगन्धमादने ॥ अग्रामा इत्यत्र नगराणां प्रतिषेधो वक्तव्यः॥ इह मा भूत्—मथुरा च पाटलिपुत्रं च, मथुरापाटलिपुत्रम् ॥ उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः॥ सौर्यं च नगरम्, केतवतं च ग्रामः, सौर्यकेतवते ॥

## क्षुद्रजन्तवः ॥ ८ ॥

अपचितपरिमाणः क्षुद्रः। क्षुद्रजन्तुवाचिनां द्वन्द्व एकवद् भवति। दंशमशकम्। यूकालिक्षम्। क्षुद्रजन्तव इति किम्? ब्राह्मणक्षत्रियौ।

क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव यः।
शतं वा प्रसृतौ येषां केचिदा नकुलादपि ॥

आ नकुलादपीतीयमेव स्मृतिः प्रमाणम्, इतरासां तद्विरोधात् ॥

## येषां च विरोधः शाश्वतिकः ॥ ९ ॥

विरोधो वैरम्, शाश्वतिको नित्यः। येषां शाश्वतिको विरोधः, तद्वाचिनां शब्दानां द्वन्द्व एकवद् भवति। मार्जारमूषकम्। अहिनकुलम्। शाश्वतिक इति किम्? गौपालिशालङ्कायनाः कलहायन्ते। चकारः पुनरस्यैव समुच्चयार्थः। तेन पशुशकुनिद्वन्द्वे विरोधिनामनेन नित्यमेकवद्भावो भवति—अश्वमहिषम्[1]। काकोलूकम् ॥

## शूद्राणामनिरवसितानाम् ॥ १० ॥

निरवसानम्, बहिष्करणम्। कुतो बहिष्करणम्? पात्रात्। यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति, ते निरवसिताः। न निरवसिताः, अनिरवसिताः। अनिरवसितशूद्रवाचिनां शब्दानां द्वन्द्व एकवद् भवति। तक्षायस्कारम्। रजकतन्तुवायम्। अनिरवसितानामिति किम्? चण्डालमृतपाः ॥

---

१ - 'श्वशृगालम्' इत्यधिकं है०।

## गवाश्वप्रभृतीनि च ॥ ११ ॥

गवाश्वप्रभृतीनि च कृतैकवद्भावानि द्वन्द्वरूपाणि साधूनि भवन्ति। गवाश्वम्। गवाविकम्। गवैडकम्। अजाविकम्। अजैडकम्। कुब्जवामनम्। कुब्जकैरातकम्। पुत्रपौत्रम्। श्वचण्डालम्। स्त्रीकुमारम्। दासीमाणवकम्। शाटीपिच्छकम्। उष्ट्रखरम्। उष्ट्रशशम्। मूत्रशकृत्। मूत्रपुरीषम्। यकृन्मेदः। मांसशोणितम्। दर्भशरम्। दर्भपूतीकम्। अर्जुनशिरीषम्। तृणोलपम्। दासीदासम्। कुटीकुटम्। भागवतीभागवतम्। गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम्, रूपान्तरे तु नायं विधिर्भवति। गोऽश्वम्। गोऽश्वौ। पशुद्वन्द्वविभाषैव भवति॥

## विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥ १२ ॥

वृक्ष मृग तृण धान्य व्यञ्जन पशु शकुनि अश्ववडव पूर्वापर अधरोत्तर इत्येतेषां द्वन्द्वो विभाषैकवद् भवति। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे ॥ बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम् ॥ एषां बहुप्रकृतिरेव द्वन्द्व एकवद् भवति, न द्विप्रकृतिः। बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ। रुरुपृषतौ। हंसचक्रवाकौ। यूकालिक्षे। व्रीहियवौ। कुशकाशौ॥

## विप्रतिषिद्धं चानधिकरणवाचि ॥ १३ ॥

परस्परविरुद्धं विप्रतिषिद्धम्। विप्रतिषिद्धार्थानां शब्दानामनधिकरणवाचिनामद्रव्यवाचिनां द्वन्द्व एकवद् भवति। विभाषानुकर्षणार्थश्चकारः। शीतोष्णम्, शीतोष्णे। सुखदुःखम्, सुखदुःखे। जीवितमरणम्, जीवितमरणे। विप्रतिषिद्धमिति किम्? कामक्रोधौ। अनधिकरणवाचीति किम्? शीतोष्णे उदके॥

## न दधिपयआदीनि ॥ १४ ॥

यथायथमेकवद्भावे प्राप्ते प्रतिषेध आरभ्यते। दधिपयआदीनि शब्दरूपाणि नैकवद् भवन्ति। दधिपयसी। सर्पिर्मधुनी। मधुसर्पिषी। ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। परिव्राट्कौशिकौ। प्रवर्ग्योपसदौ। शुक्लकृष्णौ। इध्माबर्हिषी। निपातनाद् दीर्घः। दीक्षातपसी। श्रद्धातपसी। मेधातपसी। अध्ययनतपसी। उलूखलमुसले।

आद्यावसाने। श्रद्धामेधे। ऋक्सामे। वाङ्मनसे॥

## अधिकरणैतावत्त्वे च ॥ १५ ॥

नेति वर्तते। अधिकरणं वर्त्तिपदार्थः। स हि समासस्यार्थस्याधारः। तस्यैतावत्त्वे परिमाणे गम्यमाने द्वन्द्वो नैकवद् भवति। यथायथमेकवद्भावः प्राप्तः प्रतिषिध्यते। दश दन्तोष्ठाः। दश मार्दङ्गिकपाणविकाः॥

## विभाषा समीपे ॥ १६ ॥

अधिकरणैतावत्त्वस्य समीपे विभाषा द्वन्द्व एकवद् भवति। उपदशं दन्तोष्ठम्, उपदशा दन्तोष्ठाः। उपदशं मार्दङ्गिकपाणविकम्, उपदशा मार्दङ्गिकपाणविकाः। अव्ययस्य संख्ययाव्ययीभावोऽपि विहितो बहुव्रीहिरपि, तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यते, इतरत्र बहुव्रीहिः॥

## स नपुंसकम् ॥ १७ ॥

यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवति द्विगुर्द्वन्द्वश्च। पञ्चगवम्। दशगवम्। द्वन्द्वः खल्वपि—पाणिपादम्। शिरोग्रीवम्। परवल्लिङ्गतापवादो योगः॥ अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते॥ पञ्चपूली। दशरथी ॥ वाबन्तः स्त्रियामिष्टः॥ पञ्चखट्वम्, पञ्चखट्वी ॥ अनो नलोपश्च वा च द्विगुः स्त्रियाम्॥ पञ्चतक्षम्, पञ्चतक्षी ॥ पात्रादिभ्यः प्रतिषेधो वक्तव्यः॥ पञ्चपात्रम्। चतुर्युगम्। त्रिभुवनम्॥

## अव्ययीभावश्च ॥ १८ ॥

अव्ययीभावश्च समासो नपुंसकलिङ्गो भवति। अधिस्त्रि। उपकुमारि। उन्मत्तगङ्गम्। लोहितगङ्गम्। पूर्वपदार्थप्रधानस्यालिङ्गतैव प्राप्ता, अन्यपदार्थप्रधानस्याभिधेयवल्लिङ्गता, अत इदमुच्यते। अनुक्तसमुच्चयार्थश्चकारः ॥ पुण्यसुदिनाभ्यामह्नः क्लीबतेष्यते॥ पुण्याहम्। सुदिनाहम् ॥ पथः संख्याव्ययादेः क्लीबतेष्यते॥ त्रिपथम्। चतुष्पथम्। विपथम्। सुपथम् ॥ क्रियाविशेषणानां[1] च क्लीबतेष्यते॥ मृदु पचति। शोभनं पचति॥

## तत्पुरुषोऽनञ्कर्मधारयः ॥ १९ ॥

---

१ - 'कर्मत्वम्' इत्यधिकं क्वचित्।

अधिकारोऽयमुत्तरसूत्रेषूपतिष्ठते। नञ्समासं कर्मधारयं च वर्जयित्वान्यस्तत्पुरुषो नपुंसकलिङ्गो भवतीत्येतदधिकृतं वेदितव्यं यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र। वक्ष्यति—'विभाषा सेनासुरा०' ( २.४.२५ ) इति—ब्राह्मणसेनम्, ब्राह्मणसेना। तत्पुरुष इति किम्? दृढसेनो राजा। अनञिति किम् ? असेना। अकर्मधारय इति किम् ? परमसेना॥

## संज्ञायां कन्थोशीनरेषु ॥ २० ॥

संज्ञायां विषये कन्थान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् कन्था उशीनरेषु भवति। सौशमिकन्थम्। आह्वरकन्थम्[1]। संज्ञायामिति किम् ? वीरणकन्था। उशीनरेष्विति किम् ? दाक्षिकन्था। परवल्लिङ्गतापवाद इदं प्रकरणम्॥

## उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥ २१ ॥

उपज्ञायत इत्युपज्ञा, उपक्रम्यत इत्युपक्रमः। उपज्ञा चोपक्रमश्च, उपज्ञोपक्रमम्। तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति तदाद्याचिख्यासायाम्, तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायाम्। आख्यातुमिच्छा आचिख्यासा। यद्युपज्ञेयस्योपक्रम्यस्य चार्थस्यादिराख्यातुमिष्यते, तत एतद् भवति। पाणिन्युपज्ञमकालकं व्याकरणम्। पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकं व्याकरणम्। व्याड्युपज्ञं दुष्करणम्[2]। आढ्योपक्रमं[3] प्रासादः। नन्दोपक्रमाणि मानानि। दर्शनीयोपक्रमम्। सुकुमारोपक्रमम्[4]। उपज्ञोपक्रममिति किम् ? वाल्मीकिश्लोकाः। तदाद्याचिख्यासायामिति किम् ? देवदत्तोपज्ञो रथः। यज्ञदत्तोपक्रमो रथः॥

## छाया बाहुल्ये ॥ २२ ॥

'विभाषा सेनासुराच्छाया०' ( २.४.२५ ) इति विभाषां वक्ष्यति, नित्यार्थमिदं वचनम्। छायान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति बाहुल्ये गम्यमाने। पूर्वपदार्थधर्मो बाहुल्यम्। शलभादीनां हि बहुत्वं गम्यते। शलभच्छायम्। इक्षुच्छायम्। बाहुल्य इति किम् ? कुड्यच्छाया॥

## सभा राजामनुष्यपूर्वा ॥ २३ ॥

सभान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् सभा राजपूर्वा अमनुष्यपूर्वा च

---

१ - अन्यत्र ( ६.२.१२४ ) 'आह्वकन्थम्' इति पाठः। २ - 'दशहुष्करणम्' इति है०।
३ - 'आद्योपक्रमम्' इति पाठान्तरम्। ४ - 'सुकुमारम्' इति मुद्रितपाठः। यथोत्तरग्रन्थं ( ६.२.१४ ) शोधः।

भवति। इनसभम्। ईश्वरसभम्। इह कस्माद् न भवति—राजसभा ? पर्यायवचनस्यैवेष्यते। तदुक्तम्—'जित् पर्यायस्यैव राजाद्यर्थम्' ( १.१.६८ वा० ) इति। अमनुष्यपूर्वा—रक्षःसभम्। पिशाचसभम्। इह कस्माद् न भवति—काष्ठसभा ? अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव वर्तते। राजामनुष्यपूर्वेति किम् ? देवदत्तसभा॥

## अशाला च ॥ २४ ॥

अशाला च या सभा तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति। सङ्घातवचनोऽत्र सभाशब्दो गृह्यते। स्त्रीसभम्। दासीसभम्। दासीसङ्घात इत्यर्थः। अशालेति किम् ? अनाथसभा। अनाथकुटीत्यर्थः॥

## विभाषा सेनासुराच्छायाशालानिशानाम् ॥ २५ ॥

सेना सुरा छाया शाला निशा इत्येवमन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति विभाषा। ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छाया। गोशालम्, गोशाला। श्वनिशम्, श्वनिशा॥

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २६ ॥

समाहारद्वन्द्वे नपुंसकलिङ्गस्य विहितत्वाद् इतरेतरयोगद्वन्द्वस्येदं ग्रहणम्। परस्य यल्लिङ्गं तद् भवति द्वन्द्वस्य तत्पुरुषस्य च। उत्तरपदलिङ्गं द्वन्द्वतत्पुरुषयोर्विधीयते। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तत्पुरुषस्य—अर्धं पिप्पल्याः, अर्धपिप्पली। अर्धकोशातकी। अर्धनखरञ्जनी ॥ द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः॥ द्विगुः—पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। प्राप्तो जीविकाम्, प्राप्तजीविकः। आपन्नो जीविकाम्, आपन्नजीविकः। अलं जीविकायै, अलंजीविकः। गतिसमासः—निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः॥

## पूर्ववदश्ववडवौ ॥ २७ ॥

अश्ववडवयोर्विभाषैकवद्भाव उक्तः, तत्रैकवद्भावादन्यत्र परवल्लिङ्गतायां प्राप्तायामिदमारभ्यते। अश्ववडवयोः पूर्ववल्लिङ्गं भवति। अश्वश्च वडवा चाश्ववडवौ। अर्थातिदेशश्चायम्, न निपातनम्। तत्र द्विवचनमतन्त्रम्, वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति—अश्ववडवान्, अश्ववडवैरिति॥

## हेमन्तशिशिरावहोरात्रे चच्छन्दसि ॥ २८ ॥

पूर्ववदिति वर्तते। हेमन्तशिशिरौ अहोरात्रे इत्येतयोश्छन्दसि विषये पूर्ववल्लिङ्गं भवति। हेमन्तशिशिरावृतूनां प्रीणामि (तै० सं० १.६.२.३)। अहोरात्रे इदं ब्रूमः (शौ० सं० ११.६.५)। परवल्लिङ्गतापवादो योगः। अर्थातिदेशश्चायम्, न निपातनम्। तेन द्विवचनमतन्त्रम्, वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति। पूर्वपक्षाश्चितयः, अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः (तै० ब्रा० ३.११.१०.४)। छन्दसीति किम्? दुःखे हेमन्तशिशिरे। अहोरात्राविमौ पुण्यौ। छन्दसि लिङ्गव्यत्यय उक्तः, तस्यैवायं प्रपञ्चः॥

## रात्राह्नाहाः पुंसि ॥ २९ ॥

कृतसमासान्तानां निर्देशः। रात्र अह्न अह इत्येते पुंसि भाष्यन्ते। परवल्लिङ्गतया स्त्रीनपुंसकयोः प्राप्तयोरिदं वचनम्। द्विरात्रः। त्रिरात्रः। चतूरात्रः। पूर्वाह्णः। अपराह्णः। मध्याह्नः। द्व्यहः। त्र्यहः॥ अनुवाकादयः पुंसीति वक्तव्यम्॥ अनुवाकः। शंयुवाकः। सूक्तवाकः॥

## अपथं नपुंसकम् ॥ ३० ॥

अपथशब्दो नपुंसकलिङ्गो भवति। अपथमिदम्। अपथानि गाहते मूढः। इह कस्माद् न भवति—अपथो देशः, अपथा नगरी? तत्पुरुष इति वर्तते॥

## अर्धर्चाः पुंसि च ॥ ३१ ॥

अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते। अर्धर्चः। अर्धर्चम्। गोमयः। गोमयम्। शब्दरूपाश्रया चेयं द्विलिङ्गता क्वचिदर्थभेदेनापि व्यवतिष्ठते। यथा पद्मशङ्खशब्दौ निधिवचनौ पुँल्लिङ्गौ, जलजे उभयलिङ्गौ। भूतशब्दः पिशाचे उभयलिङ्गः, क्रियाशब्दस्याभिधेयवल्लिङ्गम्। सैन्धवशब्दो लवण उभयलिङ्गः, यौगिकस्याभिधेयवल्लिङ्गम्। सारशब्द उत्कर्षे पुँल्लिङ्गः, न्यायादनपेते नपुंसकम्, नैतत् सारमिति। धर्म इत्यपूर्वे पुँल्लिङ्गः, तत्साधने नपुंसकम्। तानि धर्माणि प्रथमान्यासन् (ऋ० १.१६४.५०)॥ अर्धर्च। गोमय। कषाय। कार्षापण। कुतप। कपाट। शङ्ख। चक्र। गूथ। यूथ। ध्वज। कबन्ध। पद्म। गृह। सरक। कंस। दिवस। यूष। अन्धकार। दण्ड। कमण्डलु। मण्ड। भूत। द्वीप। द्यूत। चक्र। धर्म। कर्मन्। मोदक। शतमान। यान। नख। नखर। चरण। पुच्छ। दाडिम। हिम। रजत। सक्तु। पिधान। सार। पात्र। घृत। सैन्धव। औषध। आढक। चषक। द्रोण। खलीन। पात्रीव। षष्टिक। वार। बाण। प्रोथ। कपित्थ। शुष्क। शील। शुल्ब। सीधु। कवच। रेणु। कपट। सीकर। मुसल। सुवर्ण। यूप। चमस। वर्ण। क्षीर। कर्ष। आकाश। अष्टापद। मङ्गल। निधन। निर्यास। जृम्भ। वृत्त। पुस्त। क्ष्वेडित। शृङ्ग। शृङ्खल। मधु। मूल। मूलक।

शराव। शाल। वप्र। विमान। मुख। प्रग्रीव। शूल। वज्र। कर्पट। शिखर। कल्क। नाट। मस्तक। वलय। कुसुम। तृण। पङ्क। कुण्डल। किरीट। अर्बुद। अङ्कुश। तिमिर। आश्रम। भूषण। इल्कस[1]। मुकुल। वसन्त। तडाग। पिटक। विटङ्क। माष। कोश। फलक। दिन। दैवत। पिनाक। समर। स्थाणु। अनीक। उपवास। शाक। कर्पास। चषाल। खण्ड। दर। विटप। रण। बल। मल। मृणाल। हस्त। सूत्र। ताण्डव। गाण्डीव। मण्डप। पटह। सौध। पार्श्व। शरीर। फल। छल। पुर। राष्ट्र। विश्व। अम्बर। कुट्टिम। मण्डल। ककुद। तोमर। तोरण। मञ्चक। पुङ्ख। मध्य। बाल। वल्मीक। वर्ष। वस्त्र। देह। उद्यान। उद्योग। स्नेह। स्वर। संगम। निष्क। क्षेम। शूक। छत्र। पवित्र। यौवन। पानक। मूषिक। वल्कल। कुञ्ज। विहार। लोहित। विषाण। भवन। अरण्य। पुलिन। दृढ। आसन। ऐरावत। शूर्प। तीर्थ। लोमश। तमाल। लोह। दण्डक। शपथ। प्रतिसर। दारु। धनुस्। मान। तङ्क। वितङ्क। मव। सहस्र। ओदन। प्रवाल। शकट। अपराह्ण। नीड। शकल। अर्धर्चादिः॥

## इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ ३२ ॥

आदेशः कथनम्, अन्वादेशोऽनुकथनम्। इदमोऽन्वादेशविषयस्याशादेशो भवत्यनुदात्तस्तृतीयादौ विभक्तौ परतः। आभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। अस्मै छात्राय कम्बलं देहि, अथोऽस्मै शाटकमपि देहि। अस्य छात्रस्य शोभनं शीलम्, अथोऽस्य प्रभूतं स्वम्। अशादेशवचनं साकच्कार्थम्। इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। नेह पश्चादुच्चारणमात्रमन्वादेशः। किं तर्हि ? एकस्यैवाभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशः। तेनेह न भवति—देवदत्तं भोजय, इमं च यज्ञदत्तमिति॥

## एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ ३३ ॥

अन्वादेश अनुदात्त इति वर्तते। एतदोऽन्वादेशविषयस्याशादेशो भवत्यनुदात्तस्त्रतसोः परतः। तौ चापि त्रतसावनुदात्तौ भवतः। एतस्मिन् ग्रामे सुखं वसामः, अथोऽत्र युक्ता अधीमहे। एतस्माच्छात्राच्छन्दोऽधीष्व, अथोऽतो व्याकरणमप्यधीष्व। सर्वानुदात्तं पदं भवति। 'एतदोऽश्' (५.३.५) इत्यशादेशे[2] लब्धे पुनर्वचनमनुदात्तार्थम्॥

## द्वितीयाटौस्स्वेनः ॥ ३४ ॥

१ - 'इल्वस' इति है०। २ - 'इत्यादेशे' इति है०।

अन्वादेश अनुदात्त इति वर्तते। द्वितीया टा ओस् इत्येतेषु परत इदमेतदोरन्वादेशविषययोरेनशब्द आदेशो भवत्यनुदात्तः। इदमो मण्डूकप्लुतिन्यायेनानुवृत्तिः। इमं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय। अनेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम्। अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्। एतदः खल्वपि—एतं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमप्यध्यापय। एतेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम्। एतयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम् ॥ एनदिति नपुंसकैकवचने वक्तव्यम् ॥ प्रक्षालयैनत्। परिवर्तयैनत्। इह कस्माद् न भवति—अयं दण्डो हरानेन, एतमातं ङितं विद्यादिति ? यत्र किञ्चिद् विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सोऽन्वादेशः। इह तु वस्तुनिर्देशमात्रं कृत्वैकमेव विधानम् ॥

## आर्धधातुके ॥ ३५ ॥

आर्धधातुक इत्यधिकारोऽयम्, 'ण्यक्षत्रियार्षञितः०' ( २.४.५८ ) इति यावत्। यदित ऊर्ध्वमनुक्रमिष्यामस्तदार्धधातुके वेदितव्यम्। वक्ष्यति—'हनो वध लिङि' ( २.४.४२ )—वध्यात्। आर्धधातुक इति किम् ? हन्यात्। विषयसप्तमी चेयं न परसप्तमी। तेनार्धधातुकविवक्षायामादेशेषु कृतेषु पश्चाद् यथाप्राप्तं प्रत्यया भवन्ति। भव्यम्। प्रवेयम्। आख्येयम् ॥

## अदो जग्धिर्ल्यप्ति किति ॥ ३६ ॥

अदो जग्धिरादेशो भवति ल्यपि परतः, तकारादौ च किति प्रत्यये। प्रजग्ध्य। विजग्ध्य। जग्धः। जग्धवान्। इकार उच्चारणार्थः, नानुबन्धः। तेन नुम् न भवति। एवं वच्यादीनामपि। इह कस्माद् न भवति—अन्नम् ? 'अन्नाण्णः' ( ४.४.८५ ) इति निपातनात्।

जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥

तीति किम् ? अद्यते। कितीति किम् ? अत्तव्यम् ॥

## लुङ्सनोर्घस्लृ ॥ ३७ ॥

लुङि सनि च परतोऽदो घस्लादेशो भवति। लृदित्करणमङर्थम्। लुङि—अघसत्, अघसताम्, अघसन्। सनि—जिघत्सति, जिघत्सतः, जिघत्सन्ति ॥ घस्लृभावेऽच्युपसंख्यानम् ॥ प्रात्तीति प्रघसः ॥

## घञपोश्च ॥ ३८ ॥

घञि अपि च परतोऽदो घस्लादेशो भवति। घासः। प्रघसः। 'उपसर्गेऽदः' ( ३.३.५९ ) इत्यप् ॥

## बहुलं छन्दसि ॥ ३९ ॥

छन्दसि विषये बहुलमदो घस्लादेशो भवति। घस्तां नूनम् ( मा० सं० २१.४३ )। सग्धिश्च मे ( मा० सं० १८.९ )। न च भवति—आत्तामद्य मध्यतो मेद उद्भृतम् ( मा० सं० २१.४३ )। अन्यतरस्यांग्रहणमेव कस्माद् न क्रियते, तदेवोत्तरार्थमपि भविष्यति? कार्यान्तरार्थं बहुलग्रहणम्। घस्तामित्यत्रोपधालोपो न भवति ॥

## लिट्यन्यतरस्याम् ॥ ४० ॥

लिटि परतोऽदोऽन्यतरस्यां घस्लादेशो भवति। जघास, जक्षतुः, जक्षुः। आद, आदतुः, आदुः ॥

## वेञो वयिः ॥ ४१ ॥

'लिट्यन्यतरस्याम्' ( २.४.४० ) इति वर्तते। वेञो वयिरादेशो भवत्यन्यतरस्यां लिटि परतः। इकार उच्चारणार्थः। उवाय, ऊयतुः, ऊयुः। पक्षे—ऊवतुः, ऊवुः। 'लिटि वयो यः' ( ६.१.३८ ) इति यकारस्य संप्रसारणं प्रतिषिध्यते। 'वश्चास्यान्यतरस्यां किति' ( ६.१.३९ ) इति वकारो विधीयते। ववौ, ववतुः, ववुः। 'वेञः' ( ६.१.४० ) इति संप्रसारणं न भवति ॥

## हनो वध लिङि ॥ ४२ ॥

हन्तेर्धातोर्वध इत्ययमादेशो भवति लिङि परत आर्धधातुके। वध्यात्, वध्यास्ताम्, वध्यासुः। अकारान्तश्चायमादेशः। तत्राकारस्य लोपो भवति। तस्य स्थानिवद्भावाद-वधीदिति हलन्तलक्षणा ( ७.२.७ ) वृद्धिः[1] न भवति ॥

## लुङि च ॥ ४३ ॥

लुङि च परतो हनो वध इत्ययमादेशो भवति। अवधीत्, अवधिष्टाम्, अवधिषुः। योगविभाग उत्तरार्थः। आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लिङि मा भूत्[2]॥

---

१ - 'अतो हलादेर्लघोरिति' इत्यधिकं बाल०। २ - 'आत्मनेपदेषु लिङि विकल्पो मा भूत्' इति बाल०।

## आत्मनेपदेष्वन्यतरस्याम् ॥ ४४ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। आत्मनेपदेषु परतो हनो लुङ्यन्यतरस्यां वध इत्ययमादेशो भवति। आवधिष्ट, आवधिषाताम्, आवधिषत। न च भवति—आहत, आहसाताम्, आहसत॥

## इणो गा लुङि ॥ ४५ ॥

इणो गा इत्ययमादेशो भवति लुङि परतः। अगात्, अगाताम्, अगुः। लुङीति वर्तमाने पुनर्लुङ्ग्रहणम् 'आत्मनेपदेष्वन्यतरस्याम्' ( २.४.४४ ) इत्येतद् मा भूत्। इह त्वविशेषेण नित्यं च भवति। अगात्। अगायि भवता ॥ इण्वदिक इति वक्तव्यम्॥ अध्यगात्, अध्यगाताम्, अध्यगुः॥

## णौ गमिरबोधने ॥ ४६ ॥

णौ परत इणोऽबोधनार्थस्य गमिरादेशो भवति। इकार उच्चारणार्थः। गमयति, गमयतः, गमयन्ति। अबोधन इति किम् ? प्रत्याययति। इण्वदिक इत्येव—अधिगमयति॥

## सनि च ॥ ४७ ॥

सनि परत इणोऽबोधनार्थस्य गमिरादेशो भवति। जिगमिषति, जिगमिषतः, जिगमिषन्ति। अबोधन इत्येव—अर्थान् प्रतीषिषति। इण्वदिक इत्येव—अधिजिगमिषति। योगविभाग उत्तरार्थः। 'इङश्च' ( २.४.४८ ) इति सन्येव यथा स्यात्[1]॥

## इङश्च ॥ ४८ ॥

इङश्च सनि परतो गमिरादेशो भवति। अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते॥

## गाङ् लिटि ॥ ४९ ॥

गाङादेशो भवतीङो लिटि परतः। अधिजगे, अधिजगाते, अधिजगिरे। गाङोऽनुबन्धकरणं विशेषणार्थम्, 'गाङ्कुटादिभ्यः०' ( १.२.१ ) इत्यत्रास्य ग्रहणं यथा स्यात्। नहि स्थानिवद्भावेन गाङिति रूपं लभ्यते॥

---

१ - 'णौ मा भूत्' इत्यधिकं क्वचित्।

## विभाषा लुङ्लृङोः ॥ ५० ॥

लुङि लृङि च परत इङो विभाषा गाङादेशो भवति। आदेशपक्षे 'गाङ्कुटादिभ्यः०' (१.२.१) इति ङित्त्वम्, 'घुमास्थागापाजहातिसां हलि' (६.४.६६) इतीत्वम्। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। न च भवति—अध्यैष्ट, अध्यैषाताम्, अध्यैषत। लृङि खल्वपि—अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त। न च भवति—अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त॥

## णौ च संश्चङोः ॥ ५१ ॥

इङो गाङ् विभाषेति वर्तते। णावितीङपेक्षया परसप्तमी, संश्चङोरिति च ण्यपेक्षया। णौ सन्परे चङ्परे च परत इङो विभाषा गाङादेशो भवति। अधिजिगापयिषति। न च भवति—अध्यापिपयिषति। चङि खल्वपि—अध्यजीगपत्। न च भवति—अध्यापिपत्॥

## अस्तेर्भूः ॥ ५२ ॥

अस्तेर्धातोर्भू इत्ययमादेशो भवत्यार्धधातुके। भविता। भवितुम्। भवितव्यम्। इह कस्माद् न भवति—ईहामास, ईहामासतुः, ईहामासुः ? 'कृञ्चानुप्रयुज्यते लिटि' (३.१.४०) इति प्रत्याहारग्रहणेनास्तेर्ग्रहणसामर्थ्यात्। तथा चोच्यते—" अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्तुर्वचनान् मनीषिणः " (महाभाष्य ३.२१६) इति॥

## ब्रुवो वचिः ॥ ५३ ॥

ब्रुवो वचिरादेशो भवत्यार्धधातुकविषये। इकार उच्चारणार्थः। वक्ता। वक्तुम्। वक्तव्यम्। स्थानिवद्भावेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदं भवति। ऊचे। वक्ष्यते॥

## चक्षिङः ख्याञ् ॥ ५४ ॥

चक्षिङः ख्याञादेशो भवत्यार्धधातुके। आख्याता। आख्यातुम्। आख्यातव्यम्। स्थानिवद्भावेन नित्यमात्मनेपदं न भवति, ञकारानुबन्धकरणसामर्थ्यात्। आख्यास्यति। आख्यास्यते ॥ क्शादिरप्ययमादेश इष्यते॥ आक्शाता। आक्शातुम्। आक्शातव्यम् ॥ वर्जने प्रतिषेधो वक्तव्यः॥ दुर्जनाः संचक्ष्याः। वर्जनीया इत्यर्थः ॥ असनयोश्च प्रतिषेधो वक्तव्यः॥ नृचक्षा रक्षः (शौ० सं० ८.३.१०) हिंसार्थोऽत्र धातुः। अने खल्वपि—विचक्षणः पण्डितः ॥ बहुलं संज्ञाछन्दसोरिति वक्तव्यम्॥ अन्नवधकगात्रविचक्षणाजिराद्यर्थम्॥

## वा लिटि ॥ ५५ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। लिटि परतश्चक्षिङः ख्याञ् आदेशो वा भवति। आचख्यौ, आचख्यतुः, आचख्युः। न च भवति—आचचक्षे, आचचक्षाते, आचचक्षिरे॥

## अजेर्व्यघञपोः ॥ ५६ ॥

अजेर्धातोर्वीत्ययमादेशो भवत्यार्धधातुके परतो घञपौ वर्जयित्वा। प्रवायकः। प्रवयणीयः। अघञपोरिति किम् ? समाजः। उदाजः। अपि तु—समजः। उदजः। 'समुदोरजः पशुषु' ( ३.३.६९ ) इत्यप्। दीर्घोच्चारणं किम् ? प्रवीताः ॥ घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्तव्यम् ॥ समज्या ॥ वलादावार्धधातुके विकल्प इष्यते ॥ प्रवेता, प्राजिता। प्रवेतुम्, प्राजितुम् ॥

## वा यौ ॥ ५७ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। यु इति ल्युटो ग्रहणम्। यौ परभूते अजेर्वा वी इत्ययमादेशो भवति। प्रवयणो दण्डः। प्राजनो दण्डः। प्रवयणमानय। प्राजनमानय॥

## ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ ५८ ॥

ण्यादयो गोत्रप्रत्ययाः। ण्यान्तात् क्षत्रियगोत्राद् आर्षाद् ञितश्च परयोरणिञोर्यूनि लुग् भवति। ण्यान्तात् तावत्—'कुर्वादिभ्यो ण्यः' ( ४.१.१५१ ) तस्माद् यूनि इञ्, तस्य लुक्। कौरव्यः पिता। कौरव्यः पुत्रः। ननु च कौरव्यशब्दस्तिकादिषु पठ्यते, ततः फिञा भवितव्यम्, कौरव्यायणिरिति ? क्षत्रियगोत्रस्य तत्र ग्रहणं 'कुरुनादिभ्यो ण्यः' ( ४.१.१७२ ) इत्यनेन विहितस्य। इदं तु ब्राह्मणगोत्रम्। 'कुर्वादिभ्यो ण्यः' ( ४.१. १५१ ) इति ण्यः। क्षत्रिय—'ऋष्यन्धकवृष्णिकुरुभ्यश्च' ( ४.१.११४ ) इत्यण्। तस्माद् यूनि इञ्, तस्य लुक्। श्वाफल्कः पिता। श्वाफल्कः पुत्रः। आर्ष—'ऋष्यण्' ( ४.१. ११४ ), तस्माद् यूनीञ्, तस्य लुक्। वासिष्ठः पिता। वासिष्ठः पुत्रः। ञित्— 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' ( ४.१.१०४ ), तस्माद् यूनीञ्, तस्य लुक्। बैदः पिता। बैदः पुत्रः। अणः खल्वपि—'तिकादिभ्यः फिञ्' ( ४.१.१५४ ), तस्माद् यूनि 'प्राग् दीव्यतोऽण्' ( ४.१.८३ ), तस्य लुक्। तैकायनिः पिता। तैकायनिः पुत्रः। एतेभ्य इति किम् ? 'शिवादिभ्योऽण्' ( ४.१.११२ ), तस्माद् यूनि 'अत इञ्' ( ४.१.९५ ), तस्य न लुग् भवति। कौहडः पिता। कौहडिः पुत्रः। यूनीति किम् ? वामरथ्यस्य छात्रा वामरथाः। 'कुर्वादिभ्यो ण्यः' ( ४.१.१५१ ) इति ण्यः, तस्मात् 'कण्वादिभ्यो गोत्रे' ( ४.

२.१११ ) इति शैषिकोऽण्। तस्य लुग् न भवति। अणिञोरिति किम् ? दाक्षेरपत्यं युवा दाक्षायणः ॥ अब्राह्मणगोत्रमात्राद् युवप्रत्ययस्योपसंख्यानम् ॥ बौधिः पिता। बौधिः पुत्रः। जाबालिः पिता। जाबालिः पुत्रः। औदुम्बरिः पिता। औदुम्बरिः पुत्रः। भाण्डीजङ्घिः पिता। भाण्डीजङ्घिः पुत्रः। साल्वावयवलक्षण इञ्। तस्मात् फक्, तस्य लुक् ॥ पैलादिदर्शनात् सिद्धम् ॥

## पैलादिभ्यश्च ॥ ५९ ॥

पैल इत्येवमादिभ्यश्च युवप्रत्ययस्य लुग् भवति। 'पीलाया वा' ( ४.१.११८ ) इत्यण्। तस्माद् 'अणो द्व्यचः' ( ४.१.१५६ ) इति फिञ्, तस्य लुक्। पैलः पिता। पैलः पुत्रः। अन्ये पैलादय इञन्तास्तेभ्य 'इञः प्राचाम्' ( २.४.६० ) इति लुकि सिद्धेऽप्रागर्थः पाठः॥ पैल। शालङ्कि। सात्यकि। सात्यकामि। दैवि। औदमज्जि। औदव्रजि। औदमेघि। औदबुद्धि। दैवस्थानि। पैङ्गलायनि। राणायनि। रौहक्षिति। भौलिङ्गि। औद्गाहमानि। औज्जिहानि। तद्राजाच्चाणः ( ग० सू० २१ )। आकृतिगणोऽयम् ॥

## इञः प्राचाम् ॥ ६० ॥

गोत्रे य इञ् तदन्ताद् युवप्रत्ययस्य लुग् भवति। गोत्रविशेषणं प्राग्ग्रहणम्, न विकल्पार्थम्। पान्नागारेरपत्यं युवा। 'यञिञोश्च' ( ४.१.१०१ ) इति फक्, तस्य लुक्। पान्नागारिः पिता। पान्नागारिः पुत्रः। मान्थरैषणिः पिता। मान्थरैषणिः पुत्रः। प्राचामिति किम् ? दाक्षिः पिता। दाक्षायणः पुत्रः॥

## न तौल्वलिभ्यः ॥ ६१ ॥

अनन्तरेण प्राप्तो लुक् प्रतिषिध्यते। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुग् भवति। तौल्वलिः पिता। तौल्वलायनः पुत्रः॥ तौल्वलि। धारणि। रावणि। पारणि। दैलीपि। दैवलि। दैवमित्रि[1]। दैवयज्ञि। प्रावाहणि। मान्धातकि। आनुहारति। श्वाफल्कि। आनुमति। आहिंसि। आसुरि। आयुधि। नैमिषि। आसिबन्धकि। बैकि। आन्तरहाति। पौष्करसादि। वैरकि। वैलकि। वैहतिं। वैकर्णि। कारेणुपालि। कामालि ॥

## तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ ६२ ॥

'ते तद्राजाः' ( ४.१.१७४ ), 'ञ्यादयस्तद्राजाः' ( ५.३.११९ ) इति वक्ष्यति।

---

१ - 'दैवमति' इति है०।

तस्य तद्राजसंज्ञस्य प्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुग् भवति, तेनैव चेत् तद्राजेन कृतं बहुत्वं भवति। अङ्गाः। वङ्गाः। पुण्ड्राः। सुह्माः। मगधाः। लोहध्वजाः। व्रीहिमन्तः[1]। तद्राजस्येति किम् ? औपगवाः। बहुष्विति किम् ? आङ्गः। तेनैवग्रहणं किम् ? प्रियो वाङ्गो येषां त इमे प्रियवाङ्गाः। अस्त्रियामिति किम् ? आङ्ग्यः स्त्रियः॥

## यस्कादिभ्यो गोत्रे ॥ ६३ ॥

बहुषु तेनैवास्त्रियामिति सर्वमनुवर्तते। यस्क इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुग् भवति, तेनैव चेद् गोत्रप्रत्ययेन कृतं बहुत्वं भवति। प्रत्ययविधेश्चान्यत्र लौकिकस्य गोत्रस्य ग्रहणमित्यनन्तरापत्येऽपि लुग् भवत्येव। यस्काः। लभ्याः। बहुष्वित्येव—यास्कः। तेनैवेत्येव—प्रिययास्काः। अस्त्रियामित्येव—यास्क्यः स्त्रियः। गोत्र इति किम् ? यास्काश्छात्राः॥ यस्क। लभ्य। दुह्य। अयःस्थूण। तृणकर्ण। एते पञ्च शिवादिषु पठ्यन्ते। ततः परेभ्यः षड्भ्य इञ्। सदामत्त। कम्बलभार। बहिर्योग। कर्णाटक। पिण्डीजङ्घ। बकसक्थ। ततः परेभ्यश्चतुर्भ्यो 'गृष्ट्यादिभ्यश्च' (४.१.१३६) इति ढञ्। बस्ति। कुद्रि। अजबस्ति। मित्रयु। ततः परेभ्यो द्वादशभ्य इञ्। रक्षोमुख। जङ्घारथ। उत्कास। कटुकमन्थक। पुष्करसत्। विषपुट। उपरिमेखल। क्रोष्टुमान। क्रोष्टुपाद। क्रोष्टुमाय। शीर्षमाय। पुष्करसच्छब्दाद् बाह्वादिपाठादिञ्। खरपशब्दो नडादिषु पठ्यते। ततः फक्। पदक। वर्मक। एताभ्याम् 'अत इञ्' (४.१.९५)। भलन्दनशब्दात् 'शिवादिभ्योऽण्' (४.१.११२)। भडिल। भण्डिल। भडित। भण्डित। एतेभ्यश्चतुर्भ्यः 'अश्वादिभ्यः फञ्' (४.१.११०)॥

## यञञोश्च ॥ ६४ ॥

बहुषु तेनैवास्त्रियां गोत्र इति चानुवर्तते। यञोऽञश्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुग् भवति। 'गर्गादिभ्यो यञ्' (४.१.१०५)—गर्गाः। वत्साः। अञः खल्वपि—'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' (४.१.१०४)—बिदाः। उर्वाः। बहुष्वित्येव—गार्ग्यः। बैदः। तेनैवेत्येव—प्रियगार्ग्याः। प्रियबैदाः। अस्त्रियामित्येव—गार्ग्यः स्त्रियः। बैद्यः स्त्रियः। गोत्र इत्येव—'द्वीपादनुसमुद्रं यञ्' (४.३.१०)—द्वैप्याः। 'उत्सादिभ्योऽञ्' (४.१.८६)—औत्साश्छात्राः ॥ यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् ॥ गार्ग्यस्य कुलम्, गार्ग्यकुलम्, गर्गकुलं वा। गार्ग्ययोः कुलम्, गार्ग्यकुलम्, गर्गकुलं वा। एवं बैदस्य कुलम्, बैदकुलम्, बिदकुलं वा। बैदयोः कुलम्, बैदकुलम्, बिदकुलं वा। यञादीनामिति किम् ? आङ्गकुलम्। एकद्वयोरिति किम् ? गर्गाणां कुलम्, गर्गकुलम्। तत्पुरुष इति किम् ? गार्ग्यस्य समीपमुपगार्ग्यम्। षष्ठ्या इति किम् ? परमगार्ग्यः॥

१ – 'व्रीहिमताः' इति बाल०।

## अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥ ६५ ॥

अत्र्यादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवति। अत्रिशब्दाद् 'इतश्चानिञः' (४.१.१२२) इति ढक्। इतरेभ्य ऋष्यण् (४.१.११४)। अत्रयः। भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः। बहुष्वित्येव—आत्रेयः, भार्गवः। तेनैवेत्येव—प्रियात्रेयाः। प्रियभार्गवाः। अस्त्रियामिति किम् ? आत्रेय्यः स्त्रियः॥

## बह्वच इञः प्राच्यभरतेषु ॥ ६६ ॥

बह्वचः प्रातिपदिकाद् य इञ् विहितः प्राच्यगोत्रे भरतगोत्रे च वर्तते, तस्य बहुषु लुग् भवति। पन्नागाराः। मन्थरैषणाः। भरतेषु खल्वपि—युधिष्ठिराः। अर्जुनाः। बह्वच इति किम् ? बैकयः। पौष्पयः। प्राच्यभरतेष्विति किम् ? बालाकयः। हास्तिदासयः। भरताः प्राच्या एव, तेषां पुनर्ग्रहणं ज्ञापनार्थम्—अन्यत्र प्राग्ग्रहणे भरतग्रहणं न भवतीति। तेन 'इञः प्राचाम्' (२.४.६०) इति भरतानां युवप्रत्ययस्य लुग् न भवति। आर्जुनिः पिता। आर्जुनायनः पुत्रः॥

## न गोपवनादिभ्यः ॥ ६७ ॥

गोपवनादिभ्यः परस्य गोत्रप्रत्ययस्य लुग् न भवति। बिदाद्यन्तर्गणोऽयम्। ततोऽञो गोत्रप्रत्ययस्य 'यञञोश्च' (२.४.६४) इति लुक् प्राप्तः प्रतिषिध्यते। गौपवनाः। शैग्रवाः॥ गोपवन। शिग्रु। बिन्दु। भाजन। अश्व। अवतान। श्यामाक। श्वापर्ण। एतावन्त एवाष्टौ गोपवनादयः। परिशिष्टानां हरितादीनां प्रमादपाठः। ते हि चतुर्थे बिदादिषु पठ्यन्ते। तेभ्यश्च बहुषु लुग् भवत्येव, हरिताः। किंदासा इति॥

## तिककितवादिभ्यो द्वन्द्वे ॥ ६८ ॥

तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषु लुग् भवति। तैकायनयश्च कैतवायनयश्च। 'तिकादिभ्यः फिञ्' (४.१.१५४)। तस्य लुक्। तिककितवाः। वाङ्करयश्च भाण्डीरथयश्च। 'अत इञ्' (४.१.९५)। तस्य लुक्। वङ्करभण्डीरथाः। औपकायनाश्च लामकायनाश्च। 'नडादिभ्यः फक्' (४.१.९९)। तस्य लुक्। उपकलमकाः। पाफकयश्च नारकयश्च। 'अत इञ्' (४.१.९५)। तस्य लुक्। पफकनरकाः। बाकनखयश्च श्वागुदपरिणद्धयश्च। 'अत इञ्' (४.१.९५)। तस्य लुक्। बकनखश्वगुदपरिणद्धाः। उब्जशब्दाद् 'अत इञ्' (४.१.९५)। ककुभशब्दात् 'शिवादिभ्योऽण्' (४.१.११२)। तयोर्लुक्। औब्जयश्च काकुभाश्च उब्जककुभाः। लाङ्कयश्च शान्तमुखयश्च। 'अत

इञ्' ( ४.१.९५ )। तस्य लुक्। लङ्कशान्तमुखाः। उरसशब्दस्तिकादिषु पठ्यते, ततः फिञ्। लङ्कटशब्दादिञ्। तयोर्लुक्। औरसायनयश्च लाङ्कटयश्च, उरसलङ्कटाः। भ्राष्टकयश्च कापिष्ठलयश्च। 'अत इञ्' ( ४.१.९५ )। तस्य लुक्। भ्रष्टककपिष्ठलाः। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च। 'अत इञ्' ( ४.१.९५ )। तस्य लुक्। कृष्णाजिनकृष्णसुन्दराः। आग्निवेश्यश्च दासेरकयश्च। अग्निवेशशब्दाद् 'गर्गादिभ्यो यञ्' ( ४.१.१०५ )। दासेरकशब्दाद् 'अत इञ्' ( ४.१.९५ )। तयोर्लुक्। अग्निवेशदासेरकाः॥

## उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ ६९ ॥

उपक इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवत्यन्यतरस्यां द्वन्द्वे चाद्वन्द्वे च। अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्। एतेषां च मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते—उपकलमकाः, भ्रष्टककपिष्ठलाः, कृष्णाजिनकृष्णसुन्दरा इति। तेषां पूर्वेण नित्यमेव लुग् भवति। अद्वन्द्वे त्वनेन विकल्पः। उपकाः, औपकायनाः। लमकाः, लामकायनाः। भ्रष्टकाः, भ्राष्टकयः। कपिष्ठलाः, कापिष्ठलयः। कृष्णाजिनाः, कार्ष्णाजिनयः। कृष्णसुन्दराः, कार्ष्णसुन्दरय इति। परिशिष्टानां च द्वन्द्वेऽद्वन्द्वे च विकल्प इति। पण्डारक। अण्डारक। गडुक। सुपर्यक। सुपिष्ठ। मयूरकर्ण। खारीजङ्घ। शलावल। पतञ्जल। कठेरणि। कुषीतक। काशकृत्स्न। निदाघ। कलशीकण्ठ। दामकण्ठ। कृष्णपिङ्गल। कर्णक। पर्णक। जटिलक। बधिरक। जन्तुक। अनुलोम। अर्धपिङ्गलक। प्रतिलोम। प्रतान। अनभिहित॥

## आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ ७० ॥

आगस्त्यकौण्डिन्ययोर्गोत्रप्रत्यययोरणो यञश्च बहुषु लुग् भवति, परिशिष्टस्य च प्रकृतिभागस्य यथासंख्यमगस्ति कुण्डिनच् इत्येतावादेशौ भवतः। अगस्तयः। कुण्डिनाः। चकारः स्वरार्थः। मध्योदात्तो हि कुण्डिनीशब्दस्तदादेशोऽपि तथा स्यात्। अगस्त्यशब्दादृष्यण्। कुण्डिनीशब्दाद् गर्गादित्वाद् यञ्। तयोः 'गोत्रेऽलुगचि' ( ४.१.८९ ) इति लुकि प्रतिषिद्ध आगस्तीयाश्छात्रा इति वृद्धलक्षणश्छो भवति। कौण्डिन्ये त्वणैव भवितव्यं 'कण्वादिभ्यो गोत्रे' ( ४.२.१११ ) इति। तत्र विशेषो नास्ति। कौण्डिनाश्छात्राः॥

## सुपो धातुप्रातिपदिकयोः ॥ ७१ ॥

सुपो विभक्तेर्धातुसंज्ञायाः प्रातिपदिकसंज्ञायाश्च लुग् भवति। तदन्तर्गतास्तद्ग्रहणेन गृह्यन्ते ( परि० ८९ )। धातोस्तावत्—पुत्रीयति। घटीयति। प्रातिपदिकस्य—कष्टश्रितः। राजपुरुषः। धातुप्रातिपदिकयोरिति किम् ? वृक्षः। प्लक्षः॥

## अदिप्रभृतिभ्यः शपः ॥ ७२ ॥

अदिप्रभृतिभ्य उत्तरस्य शपो लुग् भवति। अत्ति। हन्ति। द्वेष्टि॥

## बहुलं छन्दसि ॥ ७३ ॥

छन्दसि विषये शपो बहुलं लुग् भवति। अदिप्रभृतिभ्य उक्तस्ततो न भवत्यपि। वृत्रं हनति (ऋ० ८.८९.३)। अहिः शयते (ऋ० १.३२.५)। अन्येभ्यश्च भवति— त्राध्वं नो देवाः (ऋ० २.२९.६)॥

## यङोऽचि च ॥ ७४ ॥

यङो लुग् भवत्यचि प्रत्यये परतः। चकारेण बहुलग्रहणमनुकृष्यते, न तु छन्दसीति। तेन छन्दसि भाषायां च यङो लुग् भवति। लोलुवः। पोपुवः। सनीस्रंसः। दनीध्वंसः। बहुलग्रहणादनच्यपि भवति। शाकुनिको लालपीति। दुन्दुभिर्वावदीति॥

## जुहोत्यादिभ्यः श्लुः ॥ ७५ ॥

शबनुवर्तते, न यङ्। जुहोत्यादिभ्य उत्तरस्य शपः श्लुर्भवति। लुकि प्रकृते श्लुविधानं द्विर्वचनार्थम्। जुहोति। बिभर्ति। नेनेक्ति॥

## बहुलं छन्दसि ॥ ७६ ॥

छन्दसि विषये बहुलं शपः श्लुर्भवति। यत्रोक्तं तत्र न भवति, अन्यत्रापि भवति। जुहोत्यादिभ्यस्तावद् न भवति। दातिं प्रियाणिं (ऋ० ४.८.३)। धाति देवम्[1] (ऋ० ७.९०.३)। अन्येभ्यश्च भवति। पूर्णां विवष्टि (ऋ० ७.१६.११)। जनिमा विवक्ति (ऋ० ९.९७.७)॥

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ ७७ ॥

लुगनुवर्तते, न श्लुः। गाति स्था घु पा भू इत्येतेभ्यः परस्य सिचो लुग् भवति परस्मैपदेषु परतः। अगात्। अस्थात्। अदात्। अधात्। अपात्। अभूत्॥ गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्॥ गायतेः पातेश्च न भवति। अगासीन् नटः। अपासीन् नृपः। परस्मैपदेष्विति किम्? अगासातां ग्रामौ देवदत्तेन॥

---

१ – 'प्रियाणि' इति बाल०।

## विभाषा घ्राधेट्शाच्छासः ॥ ७८ ॥

घ्रा धेट् शा छा सा इत्येतेभ्य उत्तरस्य सिचः परस्मैपदेषु विभाषा लुग् भवति। धेटः पूर्वेण नित्ये प्राप्ते विभाषार्थं वचनम्। परिशिष्टानामप्राप्ते। अघ्रात्, अघ्रासीत्। अधात्, अधासीत्। अशात् अशासीत्। अच्छात्, अच्छासीत्। असात्, असासीत्। परस्मैपदेष्वित्येव—अघ्रासातां सुमनसौ देवदत्तेन ॥

## तनादिभ्यस्तथासोः ॥ ७९ ॥

तनादिभ्य उत्तरस्य सिचस्तथासोः परतो विभाषा लुग् भवति। अतत। अतथाः। अतनिष्ट। अतनिष्ठाः। असात। असाथाः। असनिष्ट। असनिष्ठाः। 'जनसनखनाम्०' ( ६.४.४२ ) इत्यात्वम्। थासा साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणम्, परस्मैपदे न भवति—अतनिष्ट यूयम् ॥

## मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥ ८० ॥

मन्त्रविषये घस ह्वर णश वृ दह आत् वृच् कृ गमि जनि इत्येतेभ्य उत्तरस्य लेर्लुग् भवति। घस—अक्षन् पितरोऽमीमदन्त पितरः ( तै० सं० १.८.५.३ )। ह्वर इति 'ह्वृ कौटिल्ये' ( भ्वा० ६६५ )। मा ह्वार्मित्रस्य त्वा ( तै० सं० १.१.४.१ )। णश—धूर्तिः प्रणङ् मर्त्यस्य ( ऋ० १.१८.३ )। वृ इति वृङ्वृञोः सामान्येन ग्रहणम्। सुरुचो वेन आवः ( मा० सं० १३.३ )। दह—मा न आ धक् ( ऋ० ६.६१.१४ )। आदिति आकारान्तग्रहणम्। 'प्रा पूरणे' ( अदा० ५४ )—आप्रा द्यावापृथिवी अन्तरिक्षम् ( ऋ० १.११५.१ )। वृच्—मा नो अस्मिन् महाधने परा वर्क् ( ऋ० ८.७५.१२ )। कृ—अक्रन् कर्म कर्मकृतः ( तै० सं० १.८.३.५ )। गमि—अग्मन् ( ऋ० १.१२२.७ )। जनि—अज्ञत वा अस्य दन्ताः ( ऐ० ब्रा० ७.१४.८ )। ब्राह्मणे प्रयोगोऽयम्। मन्त्रग्रहणं तु छन्दस उपलक्षणार्थम् ॥

## आमः ॥ ८१ ॥

आमः परस्य लेर्लुग् भवति। ईहांचक्रे। ऊहांचक्रे। ईक्षांचक्रे ॥

## अव्ययादाप्सुपः ॥ ८२ ॥

अव्ययादुत्तरस्यापः सुपश्च लुग् भवति। तत्र शालायाम्। यत्र शालायाम्। सुपः

खल्वपि—कृत्वा। हृत्वा॥

## नाव्ययीभावादतोऽम् त्वपञ्चम्याः ॥ ८३ ॥

पूर्वेण लुक् प्राप्तः प्रतिषिध्यते। अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग् भवति, अमादेशस्तु तस्य सुपो भवत्यपञ्चम्याः। एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवति। उपकुम्भं तिष्ठति। उपकुम्भं पश्य। उपमणिकं तिष्ठति। उपमणिकं पश्य। अत इति किम् ? अधिस्त्रि। अधिकुमारि। अपञ्चम्या इति किम् ? उपकुम्भादानय॥

## तृतीयासप्तम्योर्बहुलम् ॥ ८४ ॥

पूर्वेण नित्यमम्भावे प्राप्ते वचनमिदम्। तृतीयासप्तम्योर्विभक्त्योर्बहुलमम्भावो भवत्यव्ययीभावे। उपकुम्भेन कृतम्। उपकुम्भं कृतम्। उपकुम्भे निधेहि। उपकुम्भं निधेहि ॥ सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यममिति वक्तव्यम्॥ सुमद्रम्। सुमगधम्। उन्मत्तगङ्गम्। लोहितगङ्गम्। एकविंशतिभारद्वाजम्। बहुलवचनात् सिद्धम्॥

## लुटः प्रथमस्य डारौरसः ॥ ८५ ॥

लुडादेशस्य प्रथमपुरुषस्य परस्मैपदस्यात्मनेपदस्य च यथाक्रमं डा रौ रस् इत्येत आदेशा भवन्ति। कर्ता, कर्तारौ, कर्तारः। आत्मनेपदस्य—अध्येता, अध्येतारौ, अध्येतारः। प्रथमस्येति किम् ? श्वः कर्तासि। श्वोऽध्येतासे॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः॥



# ॥ तृतीयाध्यायस्य प्रथमः पादः ॥

## प्रत्ययः ॥ १ ॥

अधिकारोऽयम्। प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते। आ पञ्चमाध्यायपरिसमाप्ते-र्यानित ऊर्ध्वमनुक्रमिष्यामः, प्रत्ययसंज्ञास्ते वेदितव्याः, प्रकृत्युपपदोपाधिविकारागमान् वर्जयित्वा। वक्ष्यति—'तव्यत्तव्यानीयरः' (३.१.९६)। कर्तव्यम्। करणीयम्[1]। प्रत्ययप्रदेशाः—'प्रत्ययलोपे प्रत्ययलक्षणम्' (१.१.६२) इत्येवमादयः॥

## परश्च ॥ २ ॥

अयमप्यधिकारो योगेयोग उपतिष्ठते, परिभाषा वा। परश्च स भवति धातोर्वा प्रातिपदिकाद् वा यः प्रत्ययसंज्ञः। कर्तव्यम्। तैत्तिरीयम्। चकारः पुनरस्यैव समुच्चयार्थः। तेनोणादिषु परत्वं न विकल्प्यते॥

## आद्युदात्तश्च ॥ ३ ॥

अयमप्यधिकारः परिभाषा वा। आद्युदात्तश्च स भवति यः प्रत्ययसंज्ञः। अनियतस्वर-प्रत्ययप्रसङ्गेऽनेकाक्षु च प्रत्ययेषु देशस्यानियमे सति वचनमिदमादेरुदात्तार्थम्। कर्तव्यम्। तैत्तिरीयम् ॥

## अनुदात्तौ सुप्पितौ ॥ ४ ॥

पूर्वस्यायमपवादः। सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति। दृषदौ। दृषदः। पितः खल्वपि—पचति। पठति॥

## गुप्तिज्किद्भ्यः सन् ॥ ५ ॥

'गुप गोपने' (भ्वा० ६९७), 'तिज निशाने' (भ्वा० ६९८), 'कित निवासे' (भ्वा० ७१९) एतेभ्यो धातुभ्यः सन् प्रत्ययो भवति। प्रत्ययसंज्ञा चाधिकृतैव। जुगुप्सते। तितिक्षते। चिकित्सति ॥ निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यतेऽन्यत्र यथाप्राप्तं प्रत्यया भवन्ति॥ गोपयति। तेजयति। सङ्केतयति। गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्॥

---

१ – 'तैत्तिरीयम्' इत्यधिकं बाल०।

## मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ६ ॥

'मान पूजायाम्' ( भ्वा० ६९९ ), 'बध बन्धने' ( भ्वा० ७०० ), 'दान अवखण्डने' ( भ्वा० ७२० ), 'शान अवतेजने' (भ्वा० ७२१ ) इत्येतेभ्यो धातुभ्यः सन् प्रत्ययो भवति, अभ्यासस्य चेकारस्य दीर्घादेशो भवति। मीमांसते। बीभत्सते। दीदांसते। शीशांसते। उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते, तेन क्वचिद् न भवत्यपि। मानयति। बाधयति। दानयति। निशानयति ॥ अत्रापि सन्नर्थविशेष इष्यते ॥ मानेर्जिज्ञासायाम्, बधेर्वैरूप्ये, दानेरार्जवे, शानेर्निशाने ॥

## धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥

इषिकर्म यो धातुरिषिणैव समानकर्तृकः, तस्मादिच्छायामर्थे वा सन् प्रत्ययो भवति। कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकम्। कर्तुमिच्छति, चिकीर्षति। जिहीर्षति। धातुग्रहणं किम् ? सोपसर्गादुत्पत्तिर्मा भूत्—प्रकर्तुमैच्छत् , प्राचिकीर्षत्। कर्मण इति किम् ? करणान् मा भूत्—गमनेनेच्छति। समानकर्तृकादिति किम् ? देवदत्तस्य भोजनमिच्छति यज्ञदत्तः। इच्छायामिति किम् ? कर्तुं जानाति। वावचनाद् वाक्यमपि भवति। धातोरिति विधानादत्र सन आर्धधातुकसंज्ञा भवति, न पूर्वत्र ॥ आशङ्कायामुपसंख्यानम् ॥ आशङ्के पतिष्यति कूलम्। पिपतिषति कूलम्। श्वा मुमूर्षति ॥ इच्छासन्नन्तात् प्रतिषेधो वक्तव्यः ॥ चिकीर्षितुमिच्छति। विशेषणं किम् ? जुगुप्सिषते। मीमांसिषते ॥

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥

## सुप आत्मनः क्यच् ॥ ८ ॥

कर्मण इच्छायां वेत्यनुवर्तते। इषिकर्मण एषितुरेवात्मसंबन्धिनः सुबन्ताद् इच्छायामर्थे वा क्यच् प्रत्ययो भवति। आत्मनः पुत्रमिच्छति पुत्रीयति। सुब्ग्रहणं किम् ? वाक्यान् मा भूत्—महान्तं पुत्रमिच्छति। आत्मन इति किम् ? राज्ञः पुत्रमिच्छति। ककारो 'नः क्ये' ( १.४.१५ ) इति सामान्यग्रहणार्थः। चकारस्तदविघातार्थः ॥ क्यचि मान्ताव्ययप्रतिषेधो वक्तव्यः ॥ इदमिच्छति। उच्चैरिच्छति। नीचैरिच्छति ॥ छन्दसि परेच्छायामिति वक्तव्यम् ॥ मा त्वा वृका अघायवो विदन् ( मा० सं० ४.३४ )॥

## काम्यच्च ॥ ९ ॥

सुबन्तात् कर्मण आत्मेच्छायां काम्यच् प्रत्ययो भवति। आत्मनः पुत्रमिच्छति,

पुत्रकाम्यति। वस्त्रकाम्यति। योगविभाग उत्तरत्र क्यचोऽनुवृत्त्यर्थः। ककारस्येत्संज्ञा प्रयोजनाभावान् न भवति। चकारादित्वाद् वा काम्यचः। उपयट्काम्यति॥

## उपमानादाचारे ॥ १० ॥

क्यजनुवर्तते, न काम्यच्। उपमानात् कर्मणः सुबन्तादाचारेऽर्थे वा क्यच् प्रत्ययो भवति। आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैवोपमानस्य कर्मता। पुत्रमिवाचरति, पुत्रीयति छात्रम्। प्रावारीयति कम्बलम् ॥ अधिकरणाच्चेति वक्तव्यम् ॥ प्रासादीयति कुट्याम्[1]। पर्यङ्कीयति मञ्चके॥

## कर्तुः क्यङ् सलोपश्च ॥ ११ ॥

आचार इत्यनुवर्तते। उपमानात् कर्तुः सुबन्तादाचारेऽर्थे वा क्यङ् प्रत्ययो भवति, सकारस्य च लोपो भवति। अन्वाचयशिष्टः सलोपः, तदभावेऽपि क्यङ् भवत्येव—श्येन इवाचरति काकः, श्येनायते। कुमुदं पुष्करायते। सलोपविधावपि वाग्रहणं संबध्यते, सा च व्यवस्थितविभाषा भवति।

ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया[2]। ( तु०—जैनेन्द्र सू० २.१.९ )। ओजायमानं यो अहिं जघान ( ऋ० २.१२.११ )। ओजायते। अप्सरायते। पयायते। पयस्यते। सलोपविधौ च कर्तुरिति स्थानषष्ठी संपद्यते, तत्रालोऽन्त्यनियमे सति, हंसायते सारसायत इति सलोपो न भवति ॥ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब् वा वक्तव्यः॥ अवगल्भते। अवगल्भायते। क्लीबते। क्लीबायते। होडते। होडायते ॥ सर्वप्रातिपदिकेभ्य इत्येके॥ अश्व इवाचरति, अश्वायते। अश्वति। गर्दभायते। गर्दभति॥

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ १२ ॥

भृश इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भुवि भवत्यर्थे क्यङ् प्रत्ययो भवति, हलन्तानां च लोपः। अच्वेरिति प्रत्येकमभिसंबध्यते। किमर्थं पुनरिदमुच्यते, यावता भवतियोगे च्विर्विधीयते, तेनोक्तार्थत्वाच् च्व्यन्तेभ्यो न क्यङ् भविष्यति ? तत्सदृश-प्रतिपत्त्यर्थं तर्हि च्विप्रतिषेधः क्रियते। अभूततद्भावविषयेभ्यो भृशादिभ्यः क्यङ् प्रत्ययः। अभृशो भृशो भवति, भृशायते। शीघ्रायते॥ भृश। शीघ्र। मन्द। चपल। पण्डित। उत्सुक। उन्मनस्। अभिमनस्। सुमनस्। दुर्मनस्। रहस्। रेहस्। शश्वत्। बृहत्। वेहत्। नृषत्। शुधि। अधर। ओजस्। वर्चस्। भृशादिः। अच्वेरिति किम् ? भृशीभवति॥

---

१ - 'कुड्ये' इति पद०, बाल०। २ - 'सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः' इत्युत्तरार्धमपि क्वचित्।

## लोहितादिडाज्भ्यः क्यष् ॥ १३ ॥

लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति। लोहितायति। लोहितायते। डाजन्तेभ्यः—पटपटायति। पटपटायते ॥ लोहितडाज्भ्यः क्यष्वचनम्, भृशादिष्वितराणि ॥ यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङेव, अपरिपठितेभ्यस्तु क्यषेव भवति। वर्मायति। वर्मायते। निद्रायति। निद्रायते। करुणायति। करुणायते। कृपायति। कृपायते। आकृतिगणश्चायम्। तथा च ककारः सामान्यग्रहणार्थोऽनुबध्यते 'नः क्ये' (१.४.१५) इति। नहि पठितानां मध्ये नकारान्तः शब्दोऽस्ति। कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्येतदेव वचनं ज्ञापकम्। अच्वेरित्यनुवृत्तेरभूततद्भावे क्यष् विज्ञायते ॥ लोहित। नील। हरित। पीत। मद्र। फेन। मन्द। लोहितादिः ॥

## कष्टाय क्रमणे ॥ १४ ॥

क्यङनुवर्तते, न क्यष्। कष्टशब्दाच् चतुर्थीसमर्थात् क्रमणेऽर्थेऽनार्जवे क्यङ् प्रत्ययो भवति। कष्टाय कर्मणे क्रामति, कष्टायते। अत्यल्पमिदमुच्यते ॥ सत्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ॥ कण्वचिकीर्षा पापचिकीर्षा, तस्यामेतेभ्यः क्यङ् प्रत्ययो भवति। सत्रायते। कष्टायते। कक्षायते। कृच्छ्रायते। गहनायते। कण्वचिकीर्षायामिति किम्? अजः कष्टं क्रामति ॥

## कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ १५ ॥

रोमन्थशब्दात् तपःशब्दाच्च कर्मणो यथाक्रमं वर्तिचरोरर्थयोः क्यङ् प्रत्ययो भवति। रोमन्थं वर्तयति, रोमन्थायते गौः ॥ हनुचलन इति वक्तव्यम् ॥ इह मा भूत्—कीटो रोमन्थं वर्तयति ॥ तपसः परस्मैपदं च ॥ तपश्चरति, तपस्यति ॥

## बाष्पोष्मभ्यामुद्वमने ॥ १६ ॥

कर्मण इति वर्तते। बाष्पशब्दादूष्मंशब्दाच्च कर्मण उद्वमनेऽर्थे क्यङ् प्रत्ययो भवति। बाष्पमुद्वमति, बाष्पायते। ऊष्मायते ॥ फेनाच्चेति वक्तव्यम् ॥ फेनमुद्वमति, फेनायते ॥

## शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ १७ ॥

शब्द वैर कलह अभ्र कण्व मेघ इत्येतेभ्यः करणे करोत्यर्थे क्यङ् प्रत्ययो भवति। शब्दं करोति, शब्दायते। वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते ॥ सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम् ॥ सुदिनायते। दुर्दिनायते। नीहारायते

॥ अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम् ॥ अटायते। अट्टायते। शीकायते। कोटायते। पोटायते। सोटायते। प्रुष्टायते। प्लुष्टायते ॥

## सुखादिभ्यः कर्तृवेदनायाम् ॥ १८ ॥

कर्मग्रहणमनुवर्तते। सुख इत्येवमादिभ्यः कर्मभ्यो वेदनायामर्थेऽनुभवे क्यङ् प्रत्ययो भवति, वेदयितुश्चेत् कर्तुः संबन्धीनि सुखादीनि भवन्ति। सुखं वेदयते, सुखायते। दुःखायते। कर्तृग्रहणं किम्? सुखं वेदयते[1] प्रसाधको देवदत्तस्य॥ सुख। दुःख। तृप्त। गहन। कृच्छ्र। अस्र। अलीक। प्रतीप। करुण। कृपण। सोढ। सुखादिः॥

## नमोवरिवश्चित्रङः क्यच् ॥ १९ ॥

करण इति वर्तते। नमस् वरिवस् चित्रङ् इत्येतेभ्यो वा क्यच् प्रत्ययो भवति, करणविशेषे पूजादौ। नमसः पूजायाम्—नमस्यति देवान्। वरिवसः परिचर्यायाम्—वरिवस्यति गुरून्। चित्रङ आश्चर्ये—चित्रीयते। ङकार आत्मनेपदार्थः॥

## पुच्छभाण्डचीवराण्णिङ् ॥ २० ॥

करण इति वर्तते। पुच्छ भाण्ड चीवर इत्येतेभ्यो णिङ् प्रत्ययो भवति, करणविशेषे ॥ पुच्छादुदसने पर्यसने वा॥ उत्पुच्छयते। परिपुच्छयते ॥ भाण्डात् समाचयने॥ संभाण्डयते ॥चीवरादर्जने परिधाने वा॥ संचीवरयते भिक्षुः। ङकार आत्मनेपदार्थः। णकारः सामान्यग्रहणार्थः 'णेरनिटि' ( ६.४.५१ ) इति॥

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ २१ ॥

मुण्ड मिश्र श्लक्ष्ण लवण व्रत वस्त्र हल कल कृत तूस्त इत्येतेभ्यः करणे णिच् प्रत्ययो भवति। मुण्डं करोति, मुण्डयति। मिश्रयति। श्लक्ष्णयति। लवणयति। व्रताद् भोजने तन्निवृत्तौ च—पयो व्रतयति। वृषलान्नं व्रतयति। वस्त्रात् समाच्छादने—संवस्त्रयति। हलिं गृह्णाति, हलयति। कलिं गृह्णाति, कलयति। हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्। अजहलत्। अचकलत्। कृतं गृह्णाति, कृतयति। तूस्तानि विहन्ति, वितूस्तयति केशान्। विशदीकरोतीत्यर्थः॥

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ २२ ॥

एकाज् यो धातुर्हलादिः क्रियासमभिहारे वर्तते, तस्माद् यङ् प्रत्ययो भवति।

---

१ - 'वेदयति' इति पाठः प्रामादिकः तारा०, बाल०।

पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः। पुनःपुनः पचति, पापच्यते। यायज्यते। भृशं ज्वलति, जाज्वल्यते। देदीप्यते। धातोरिति किम् ? सोपसर्गादुत्पत्तिर्मा भूत्—भृशं प्राटति। एकाच इति किम् ? भृशं जागर्ति। हलादेरिति किम् ? भृशमीक्षते ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं यङ्विधावनेकाजहलाद्यर्थम् ॥ सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते। अटाट्यते। अरार्यते। अशाश्यते। प्रोर्णोनूयते। भृशं शोभते, भृशं रोचत इत्यत्र नेष्यते, अनभिधानात् ॥

## नित्यं कौटिल्ये गतौ ॥ २३ ॥

गतिवचनाद् धातोः कौटिल्ये गम्यमाने नित्यं यङ् प्रत्ययो भवति। कुटिलं क्रामति, चङ्क्रम्यते। दन्द्रम्यते। नित्यग्रहणं विषयनियमार्थम्, गतिवचनान्नित्यं कौटिल्य एव भवति, न तु क्रियासमभिहारे। भृशं क्रामति ॥

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ॥ २४ ॥

लुप सद चर जप जभ दह दश गृ इत्येतेभ्यो भावगर्हायां धात्वर्थगर्हायां यङ् प्रत्ययो भवति। गर्हितं लुम्पति, लोलुप्यते। एवं सासद्यते। चञ्चूर्यते। जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। निजेगिल्यते। भावगर्हायामिति किम् ? साधु जपति। भावग्रहणं किम् ? साधनगर्हायां मा भूत्—मन्त्रं जपति वृषलः। नित्यग्रहणं विषयनियमार्थमनुवर्तते। एतेभ्यो नित्यं भावगर्हायामेव भवति, न तु क्रियासमभिहारे। भृशं लुम्पति ॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥ २५ ॥

सत्यादिभ्यश्चूर्णपर्यन्तेभ्यश्चुरादिभ्यश्च णिच् प्रत्ययो भवति। सत्यमाचष्टे, सत्यापयति ॥ अर्थवेदसत्यानामापुग् वक्तव्यः॥ अर्थमाचष्टे, अर्थापयति। वेदापयति। आपुग्वचनसामर्थ्याट्टिलोपो न भवति। पाशाद्विमोचने—विपाशयति। रूपाद् दर्शने—निरूपयति। वीणयोपगायति, उपवीणयति। तूलेनानुकुष्णाति, अनुतूलयति। श्लोकैरुपस्तौति, उपश्लोकयति। सेनयाभियाति, अभिषेणयति। लोमान्यनुमार्ष्टि, अनुलोमयति। त्वचं गृह्णाति, त्वचयति। अकारान्तस्त्वचशब्दः। वर्मणा संनह्यति, संवर्मयति। वर्णं गृह्णाति, वर्णयति। चूर्णैरवध्वंसयति, अवचूर्णयति। चुरादिभ्यः स्वार्थे—चोरयति। चिन्तयति। स्वाभाविकत्वादर्थाभिधानस्य यथायथं प्रत्ययार्था निर्दिश्यन्ते ॥

## हेतुमति च ॥ २६ ॥

हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः, तदीयो व्यापारः प्रेषणादिलक्षणो हेतुमान् , तस्मिन्नभिधेये धातोर्णिच् प्रत्ययो भवति। कटं कारयति। ओदनं पाचयति ॥ तत्करोतीत्युपसंख्यानं सूत्रयतीत्याद्यर्थम् ॥ सूत्रं करोति, सूत्रयति ॥ आख्यानात् कृतस्तदाचष्ट इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥ आख्यानात् कृदन्ताण्णिज् वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकं भवति। कंसवधमाचष्टे, कंसं घातयति। बलिबन्धमाचष्टे, बलिं बन्धयति। राजागमनमाचष्टे, राजानमागमयति ॥ आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥ आरात्रिविवासमाचष्टे, रात्रिं विवासयति ॥ चित्रीकरणे प्रापि ॥ उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते, सूर्यमुद्गमयति ॥ नक्षत्रयोगे ज्ञि ॥ पुष्ययोगं जानाति, पुष्येण योजयति। मघाभिर्योजयति ॥

## कण्ड्वादिभ्यो यक् ॥ २७ ॥

कण्डूञ् इत्येवमादिभ्यो यक् प्रत्ययो भवति। द्विविधाः कण्ड्वादयः, धातवः प्रातिपदिकानि च । तत्र धात्वधिकाराद् धातुभ्य एव प्रत्ययो विधीयते, न तु प्रातिपदिकेभ्यः। तथा च गुणप्रतिषेधार्थः ककारोऽनुबध्यते।

धातुप्रकरणाद् धातुः कस्य चासञ्जनादपि।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः॥

कण्डूञ्—कण्डूयति, कण्डूयते। ञित्त्वात् कर्त्रभिप्राये क्रियाफले ( १.३.७२ ) इत्यात्मनेपदम् ॥ कण्डूञ्। मन्तु। हृणीङ्। वल्गु। अस्मनस्। महीङ्। लेट्। लोट्। इरस्। इरज्। इरञ्। द्रवस्। मेधा। कुषुभ। मगध। तन्तस्। पम्पस्। सुख। दुःख। सपर। अरर। भिषज्। भिष्णज्। इषुध। चरण[1]। चुरण। तुरण। भुरण। गद्गद। एला। केला। खेला। लिट्। लोट्॥

## गुपूधूपविच्छिपणिपनिभ्य आयः ॥ २८ ॥

'गुपू रक्षणे' ( भ्वा० २७९ ), 'धूप सन्तापे' ( भ्वा० २८० ), 'विच्छ गतौ' ( तुदा० १३२ ), 'पण व्यवहारे स्तुतौ च' ( भ्वा० २९८ ), 'पन च' ( भ्वा० २९९ ) इत्येतेभ्यो धातुभ्य आयप्रत्ययो भवति। गोपायति। धूपायति। विच्छायति। पणायति। पनायति। स्तुत्यर्थेन पनिना साहचर्यात् तदर्थः पणिः प्रत्ययमुत्पादयति, न व्यवहारार्थः। शतस्य पणते। सहस्रस्य पणते। अनुबन्धश्च केवले चरितार्थः, तेनायप्रत्ययान्ताद् नात्मनेपदं भवति ॥

---

१ - ' चरण भुरण ' इति पद०।

## ऋतेरीयङ् ॥ २९ ॥

ऋतिः सौत्रो धातुर्घृणायां वर्तते, तत ईयङ् प्रत्ययो भवति। ङकार आत्मनेपदार्थः। ऋतीयते, ऋतीयेते, ऋतीयन्ते। ऋतेश्छङिति सिद्धे[1] ईयङ्वचनं ज्ञापनार्थम्—धातुविहितानां प्रत्ययानाम्[2] आयन्नादयो न भवन्तीति॥

## कमेर्णिङ् ॥ ३० ॥

कमेर्धातोर्णिङ् प्रत्ययो भवति। णकारो वृद्ध्यर्थः। ङकार आत्मनेपदार्थः। कामयते, कामयेते, कामयन्ते॥

## आयादय आर्धधातुके वा ॥ ३१ ॥

आर्धधातुकविषय आर्धधातुकविवक्षायामायादयः प्रत्यया वा भवन्ति। गोप्ता, गोपायिता। अर्तिता, ऋतीयिता। कमिता, कामयिता। नित्यं प्रत्ययप्रसङ्गे तदुत्पत्तिरार्ध-धातुकविषये विकल्प्यते, तत्र यथायथं प्रत्यया भवन्ति। गुप्तिः, गोपाया॥

## सनाद्यन्ता धातवः ॥ ३२ ॥

सन् आदिर्येषां ते सनादयः। सनादयोऽन्ते येषां ते सनाद्यन्ताः। सनाद्यन्ताः समुदाया धातुसंज्ञका भवन्ति। प्रत्ययग्रहणपरिभाषा ( परि० २३ ) एव पदसंज्ञायामन्त-वचनेन लिङ्गेन प्रतिषिद्धा ( परि० २७ ) सती पुनरिहान्तवचनेन प्रतिप्रसूयते। चिकीर्षति। पुत्रीयति। पुत्रकाम्यति॥

## स्यतासी लृलुटोः ॥ ३३ ॥

लृरूपमुत्सृष्टानुबन्धं सामान्यमेकमेव, तस्मिन् लुटि च परतो धातोर्यथासंख्यं स्यतासी प्रत्ययौ भवतः। करिष्यति। अकरिष्यत्। श्वः कर्ता। इदित्करणमनुनासिकलोपप्रति-बन्धार्थम्। मन्ता। संगन्ता॥

## सिब् बहुलं लेटि ॥ ३४ ॥

धातोः सिप् प्रत्ययो भवति बहुलं लेटि परतः। जोषिषत् ( ऋ० २.३५.१ )। तारिषत् ( ऋ० १.२५.१२ )। मन्दिषत्। न च भवति—पताति दिद्युत् ( ऋ० ७.२५.१ )। उदधिं च्यावयाति ( तै० सं० ३.५.५.२ )॥

---

१ – 'ऋतेश्छङिति सिद्धे ' इति पाठो न सार्वत्रिकः। २ – ' प्रत्ययानाम् ' इति नास्ति पद०।

## कास्प्रत्ययादाममन्त्रे लिटि ॥ ३५ ॥

'कासृ शब्दकुत्सायाम्' ( भ्वा० ४१४ ) ततः प्रत्ययान्तेभ्यश्च धातुभ्य आम् प्रत्ययो भवति लिटि परतोऽमन्त्रविषये। कासाञ्चक्रे। प्रत्ययान्तेभ्यः—लोलूयाञ्चक्रे। अमन्त्र इति किम् ? कृष्णो नोनाव ( ऋ० १.७९.२ ) ॥ कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम् ॥ चकासाञ्चकार। दरिद्राञ्चकार। चुलुम्पाञ्चकार।

आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा।
आस्कासोरांविधानाच्च च पररूपं कतन्तवत् ॥

## इजादेश्च गुरुमतोऽनृच्छः ॥ ३६ ॥

इजादिर्यो धातुर्गुरुमान् ऋच्छतिवर्जितः, तस्माच्च लिटि परत आम् प्रत्ययो भवति। 'ईह चेष्टायाम्' ( भ्वा० ४२१ ), 'ऊह वितर्के' ( भ्वा० ४३१ )। ईहाञ्चक्रे। ऊहाञ्चक्रे। इजादेरिति किम् ? ततक्ष। ररक्ष। गुरुमत इति किम् ? इयज। उवप। अनृच्छ इति किम् ? आनर्च्छ, आनर्च्छतुः, आनर्च्छुः ॥ ऊर्णोतेश्च प्रतिषेधो वक्तव्यः ॥ प्रोर्णुनाव। अथवा—

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थम् एकाचश्चेडुपग्रहात् ॥

## दयायासश्च ॥ ३७ ॥

'दय दानगतिरक्षणेषु' ( भ्वा० ३२२ ), 'अय गतौ' ( भ्वा० ३२० ), 'आस उपवेशने' ( अदा० ११ ) एतेभ्यश्च लिटि परत आम् प्रत्ययो भवति। दयाञ्चक्रे। पलायाञ्चक्रे। आसाञ्चक्रे ॥

## उषविदजागृभ्योऽन्यतरस्याम् ॥ ३८ ॥

'उष दाहे' ( भ्वा० ४६४ ), 'विद ज्ञाने' ( अदा० ५७ ), 'जागृ निद्राक्षये' ( अदा० ६५ ) एतेभ्यो लिटि परतोऽन्यतरस्यामाम् प्रत्ययो भवति। ओषाञ्चकार, उवोष। विदाञ्चकार, विवेद। जागराञ्चकार, जजागार। विदेरदन्तत्वप्रतिज्ञानाद् आमि गुणो न भवति ॥

## भीह्रीभृहुवां श्लुवच्च ॥ ३९ ॥

'ञिभी भये' ( जु० २ ), 'ह्री लज्जायाम्' ( जु० ३ ), 'डुभृञ् धारणपोषणयोः' ( जु० ५ ), 'हु दानादनयोः' ( जु० १ ) एतेभ्यो लिटि परत आम् प्रत्ययो भवत्यन्यतरस्याम्, श्लाविव चास्मिन् कार्यं भवति। किं पुनस्तत् ? द्वित्वमित्त्वं च। बिभयाञ्चकार, बिभाय। जिह्रयाञ्चकार, जिह्राय। बिभराञ्चकार, बभार। जुहवाञ्चकार, जुहाव ॥

## कृञ्चानुप्रयुज्यते लिटि ॥ ४० ॥

आम्प्रत्ययस्य पश्चात् कृञनुप्रयुज्यते लिटि परतः। कृञिति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते, तत्सामर्थ्यादस्तेर्भूभावो न भवति। पाचयाञ्चकार। पाचयाम्बभूव। पाचयामास॥

## विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥ ४१ ॥

विदाङ्कुर्वन्त्वित्येतदन्यतरस्यां निपात्यते। किं पुनरिह निपात्यते ? विदेर्लोटि आम्प्रत्ययः, गुणाभावः, लोटो लुक्, कृञश्च लोट्परस्यानुप्रयोगः। अत्र भवन्तो विदाङ्कुर्वन्तु, विदन्तु। इतिकरणः प्रदर्शनार्थः, न केवलं प्रथमपुरुषबहुवचनम्। किं तर्हि ? सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते। विदाङ्करोतु। विदाङ्कुरुतात्। विदाङ्कुरुताम्। विदाङ्कुरु। विदाङ्कुरुतमित्यादि॥

## अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निितिच्छन्दसि ॥ ४२ ॥

अभ्युत्सादयामित्येवमादयश्छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते। सदिजनिरमीणां ण्यन्तानां लुङ्याम् प्रत्ययो निपात्यते। चिनोतेरपि तत्रैवाम्प्रत्ययो द्विर्वचनं कुत्वं च। अकरिति चतुर्भिरपि प्रत्येकमनुप्रयोगः संबध्यते। पावयाङ्क्रियादिति पवतेः पुनातेर्वा ण्यन्तस्य लिङ्यां निपात्यते, क्रियादिति चास्यानुप्रयोगः। विदामक्रन्निति विदेर्लुङ्यां निपात्यते, गुणाभावश्च, अक्रन्निति चास्यानुप्रयोगः। अभ्युत्सादयांमकः ( मै० सं० १.६.५ )। अभ्युदसीषददिति भाषायाम्। प्रजनयांमकः ( मै० सं० १.६.१० )। प्राजीजनदिति भाषायाम्। चिकयामकः। अचैषीदिति भाषायाम्। रमयामकः ( काठ० सं० ७.७ )। अरीरमदिति भाषायाम्। पावयांङ्क्रियात् ( मै० सं० २.१.३ )। पाव्यादिति भाषायाम्। विदांमक्रन् ( मै० सं० १.४.७ )। अवेदिषुरिति भाषायाम्। इतिकरणः प्रयोगदर्शनार्थः॥

## च्लि लुङि ॥ ४३ ॥

धातोश्च्लिः प्रत्ययो भवति लुङि परतः। इकार उच्चारणार्थः, चकारः स्वरार्थः। अस्य सिजादीनादेशान् वक्ष्यति। तत्रैवोदाहरिष्यामः॥

## च्लेः सिच् ॥ ४४ ॥

च्लेः सिजादेशो भवति। इकार उच्चारणार्थः, चकारः स्वरार्थः। अकार्षीत्। अहार्षीत्। आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेतेति स्थानिन्यादेशे च

द्विश्चकारोऽनुबध्यते॥ स्पृशमृशकृषतृपदृपां सिज् वा वक्तव्यः॥ अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत्। अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्। अत्राप्सीत्, अतार्प्सीत्, अतृपत्। अद्राप्सीत्, अदार्प्सीत्, अदृपत्॥

## शल इगुपधादनिटः क्सः॥ ४५ ॥

शलन्तो यो धातुरिगुपधः, तस्मात् परस्य च्लेरनिटः क्स आदेशो भवति। दुह—अधुक्षत्। लिह—अलिक्षत्। शल इति किम् ? अभैत्सीत्। अच्छैत्सीत्। इगुपधादिति किम् ? अधाक्षीत्। अनिट इति किम् ? अकोषीत्। अमोषीत्॥

## श्लिष आलिङ्गने॥ ४६ ॥

श्लिषेर्धातोरालिङ्गनक्रियावचनात् परस्य च्लेः क्स आदेशो भवति। आलिङ्गनमुपगूहनं परिष्वङ्गः। अत्र नियमार्थमेतत्। आश्लिक्षत् कन्यां देवदत्तः। आलिङ्गन इति किम् ? समाश्लिषज्जतु काष्ठम्॥

## न दृशः ॥ ४७ ॥

पूर्वेण क्सः प्राप्तः प्रतिषिध्यते। दृशेर्धातोः परस्य च्लेः क्सादेशो न भवति। अस्मिन् प्रतिषिद्धे 'इरितो वा' ( ३.१.५७ ) इत्यङ्सिचौ भवतः। अदर्शत्। अद्राक्षीत्॥

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ्॥ ४८ ॥

सिजपवादश्चङ् विधीयते। ण्यन्तेभ्यो धातुभ्यः श्रि द्रु स्रु इत्येतेभ्यश्च परस्य च्लेश्चङादेशो भवति कर्तृवाचिनि लुङि परतः। ङकारो गुणवृद्धिप्रतिषेधार्थः, चकारः 'चङि' ( ६.१.११ ) इति विशेषणार्थः। अचीकरत्। अजीहरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। कर्तरीति किम् ? अकारयिषातां कटौ देवदत्तेन॥ कमेरुपसंख्यानम्॥ 'आयादय आर्धधातुके वा' ( ३.१.३१ ) इति यदा णिङ् नास्ति तदैतदुपसंख्यानम्। अचकमत। णिङ्पक्षे सन्वद्भावः। अचीकमत।

नाकमिष्टं सुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः॥

## विभाषा धेट्श्व्योः ॥ ४९ ॥

'धेट् पाने' ( भ्वा० ६४३ ), 'टुओश्वि गतिवृद्ध्योः' ( भ्वा० ७३६ ) एताभ्यामुत्तरस्य च्लेर्विभाषा चङादेशो भवति। धेटस्तावत्—अदधत्। सिच्पक्षे 'विभाषा घ्राधेट्०' ( २.

४.७८ ) इति लुक्। अधात्। अधासीत्। श्वयतेः खल्वपि—अशिश्वियत्। अङोऽप्यत्र विकल्प इष्यते। अश्वत्। अश्वयीत्। कर्तरीत्येव—अधिषातां गावौ वत्सेन॥

## गुपेश्छन्दसि॥ ५० ॥

गुपेः परस्य च्लेश्छन्दसि विषये विभाषा चङादेशो भवति। यत्र आयप्रत्ययो नास्ति, तत्रायं विधिः। इमान् मे मित्रावरुणौ गृहानजूगुपतं युवम् ( आश्व० श्रौ० २.५.१२ )। अगौप्तम्। अगोपिष्टम्। अगोपायिष्टमिति वा। भाषायां तु चङन्तं वर्जयित्वा शिष्टं रूपत्रयं भवति॥

## नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥ ५१ ॥

'ऊन परिहाणे' ( चु० ३१३ ), 'ध्वन शब्दे' ( भ्वा० ५७१ ), 'इल प्रेरणे' ( चु० १२९ ), 'अर्द गतौ याचने च' ( भ्वा० ४५ ) एतेभ्यो धातुभ्यो ण्यन्तेभ्यः पूर्वेण च्लेश्चङि प्राप्ते छन्दसि विषये न भवति। काममूनयीः ( ऋ० १.५३.३ )। औनिन इति भाषायाम्। मा त्वाग्निर्ध्वनयीत् ( ऋ० १.१६२.१५ )। अदिध्वनदिति भाषायाम्। काममैलयीत्। ऐलिलदिति भाषायाम्। मैनमर्दयीत्। आर्दिददिति भाषायाम्॥

## अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ५२ ॥

'असु क्षेपणे' ( दिवा० ९९ ), 'वच परिभाषणे' ( अदा० ५६ ), ब्रूञादेशो वा। 'ख्या प्रकथने' ( अदा० ५३ ) चक्षिङादेशो वा, एभ्यः परस्य च्लेरङादेशो भवति कर्तृवाचिनि लुङि परतः। अस्यतेः पुषादिपाठादेवाङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम्। पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त। वक्ति—अवोचत्, अवोचताम्, अवोचन्। ख्याति—आख्यत्, आख्यताम्, आख्यन्। कर्तरीति किम् ? पर्यासिषातां गावौ वत्सेन॥

## लिपिसिचिह्वश्च ॥ ५३ ॥

'लिप उपदेहे' ( तुदा० १४२ ), 'षिच क्षरणे' ( तुदा० १४३ ), 'ह्वेञ् स्पर्धायाम्' ( भ्वा० ७३४ ) एतेभ्यश्च परस्य च्लेरङादेशो भवति। अलिपत्। असिचत्। आह्वत्। पृथग्योग उत्तरार्थः॥

## आत्मनेपदेष्वन्यतरस्याम् ॥ ५४ ॥

पूर्वेण प्राप्ते विभाषारभ्यते। लिपिसिचिह्व आत्मनेपदेषु परतश्च्लेरङादेशो भवत्यन्यतरस्याम्। 'स्वरितञितः०' ( १.३.७२ ) इत्यात्मनेपदम्। अलिपत, अलिप्त। असिचत, असिक्त। अह्वत, अह्वास्त॥

## पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥ ५५ ॥

पुषादिभ्यो द्युतादिभ्य ऌदिद्भ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतोऽङादेशो भवति। पुषादिर्दिवाद्यन्तर्गणो गृह्यते, न भ्वादिक्र्याद्यन्तर्गणः। पुष—अपुषत्। द्युतादि—अद्युतत्। अश्वितत्। ऌदिद्भ्यः—गम्ॡ—अगमत्। शक्ॡ—अशकत्। परस्मैपदेष्विति किम्? व्यद्योतिष्ट। अलोटिष्ट॥

## सर्तिशास्त्यर्तिभ्यश्च ॥ ५६ ॥

'सृ गतौ' (जु० १६), 'शासु अनुशिष्टौ' (अदा० ६८), 'ऋ गतौ' (जु० १६) इत्येतेभ्यः परस्य च्लेरङादेशो भवति। सर्ति—असरत्। शास्ति—अशिषत्। अर्ति—आरत्। पृथग्योगकरणमात्मनेपदार्थम्। समरन्त (ऋ० ४.१९.९)। चकारः परस्मैपदेष्वित्यनुकर्षणार्थः। तच्चोत्तरत्रोपयोगं यास्यति॥

## इरितो वा ॥ ५७ ॥

इरितो धातोः परस्य च्लेरङादेशो वा भवति। भिदिर्—अभिदत्, अभैत्सीत्। छिदिर्—अच्छिदत्, अच्छैत्सीत्। परस्मैपदेष्वित्येव—अभित्त। अच्छित्त॥

## जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥

वेति वर्तते। 'जॄष् वयोहानौ' (दिवा० २१), स्तम्भुः सौत्रो धातुः, 'म्रुचु म्लुचु गत्यर्थौ' (भ्वा० ११६), 'ग्रुचु ग्लुचु स्तेयकरणे' (भ्वा० ११७), 'ग्लुञ्चु षस्ज गतौ' (भ्वा० ११८), 'टुओश्वि गतिवृद्ध्योः' (भ्वा० ७३६) एतेभ्यो धातुभ्यः परस्य च्लेर्वाङादेशो भवति। अजरत्, अजारीत्। अस्तभत्, अस्तम्भीत्। अम्रुचत्, अम्रोचीत्। अम्लुचत्, अम्लोचीत्। अग्रुचत्, अग्रोचीत्। अग्लुचत्, अग्लोचीत्। अग्लुचत्, अग्लुञ्चीत्। अश्वत्, अश्वयीत्, अशिश्वियत्। ग्लुचुग्लुञ्च्वोरन्यतरोपादानेऽपि रूपत्रयं सिद्ध्यत्यर्थभेदात् तु द्वयोरुपादानं कृतम्। केचित् तु वर्णयन्ति—द्वयोरुपादानसामर्थ्याद् ग्लुञ्चेरनुनासिकलोपो न भवति, अग्लुञ्चदिति॥

## कृमृदृरुहिभ्यश्छन्दसि ॥ ५९ ॥

कृ मृ दृ रुहि इत्येतेभ्यः परस्य च्लेश्छन्दसि विषयेऽङादेशो भवति। शकलाङ्गुष्ठकोऽकरत्। अथोऽमरत्। अदरदर्थान्। सानुमारुहत्[१] (ऋ० १.१०.२)। अन्तरिक्षाद् दिवमारुहम् (शौ० सं० ४.१४.३)। छन्दसीति किम्? अकार्षीत्। अमृत। अदारीत्। अरुक्षत्॥

---

१ - 'पर्वतमारुहत्' इति बाल० तारा० पाठः।

## चिण् ते पदः ॥ ६० ॥

'पद गतौ' ( दिवा० ५८ ) अस्माद् धातोः परस्य च्लेश्चिणादेशो भवति तशब्दे परतः। सामर्थ्यादात्मनेपदैकवचनं गृह्यते। उदपादि सस्यम्। समपादि भैक्षम्। त इति किम् ? उदपत्साताम्। उदपत्सत॥

## दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ६१ ॥

चिण् त इति वर्तते। 'दीपी दीप्तौ' ( दिवा० ४१ ), 'जनी प्रादुर्भावे' ( दिवा० ४०), 'बुध अवगमने' (दिवा० ६१ ), 'पूरी आप्यायने' (दिवा० ४२ ), 'तायृ संतानपालनयोः' ( भ्वा० ३२९ ), 'ओप्यायी वृद्धौ' ( भ्वा० ३२८ ) एतेभ्यः परस्य च्लेस्तशब्दे परतोऽन्यतरस्यां चिणादेशो भवति। अदीपि, अदीपिष्ट। अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट॥

## अचः कर्मकर्तरि ॥ ६२ ॥

अजन्ताद् धातोः परस्य च्लेः कर्मकर्तरि तशब्दे परतश्चिणादेशो भवति। प्राप्त-विभाषेयम्। अकारि कटः स्वयमेव, अकृत कटः स्वयमेव। अलावि केदारः स्वयमेव, अलविष्ट केदारः स्वयमेव। अच इति किम् ? अभेदि काष्ठं स्वयमेव। कर्मकर्तरीति किम् ? अकारि कटो देवदत्तेन॥

## दुहश्च ॥ ६३ ॥

'दुह प्रपूरणे' ( अदा० ४ ) अस्मात् परस्य च्लेश्चिणादेशो भवत्यन्यतरस्याम्। अदोहि गौः स्वयमेव, अदुग्ध गौः स्वयमेव। कर्मकर्तरीत्येव—अदोहि गौर्गोपालकेन॥

## न रुधः ॥ ६४ ॥

'रुधिर् आवरणे' (रुधा० १ ) अस्मात् परस्य च्लेः कर्मकर्तरि चिणादेशो न भवति। अन्ववारुद्ध गौः स्वयमेव। कर्मकर्तरीत्येव—अन्ववारोधि गौर्गोपालकेन॥

## तपोऽनुतापे च ॥ ६५ ॥

नेति वर्तते। 'तप सन्तापे' ( भ्वा० ७११ ) अस्मात् परस्य च्लेश्चिणादेशो न भवति कर्मकर्तरि अनुतापे च। अनुतापः पश्चात्तापः। तस्य ग्रहणमकर्मकर्त्रर्थम्, तत्र हि भावकर्मणोरपि प्रतिषेधो भवति। अतप्त तपस्तापसः। अन्ववातप्त पापेन कर्मणा॥

## चिण् भावकर्मणोः ॥ ६६ ॥

धातोः परस्य च्लेश्चिणादेशो भवति भावे कर्मणि तशब्दे परतः। भावे तावत्—अशायि भवता। कर्मणि खल्वपि—अकारि कटो देवदत्तेन। अहारि भारो यज्ञदत्तेन। चिण्ग्रहणं विस्पष्टार्थम्॥

## सार्वधातुके यक् ॥ ६७ ॥

भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक् प्रत्ययो भवति। आस्यते भवता। शय्यते भवता। कर्मणि—क्रियते कटः। गम्यते ग्रामः। ककारो गुणवृद्धिप्रतिषेधार्थः। यग्विधाने कर्मकर्तर्युपसंख्यानम्, विप्रतिषेधाद्धि यकः शपो बलीयस्त्वम्। क्रियते कटः स्वयमेव। पच्यत ओदनः स्वयमेव॥

## कर्तरि शप् ॥ ६८ ॥

कर्तृवाचिनि सार्वधातुके परतो धातोः शप् प्रत्ययो भवति। पकारः स्वरार्थः, शकारः सार्वधातुकसंज्ञार्थः[1]। भवति। पचति॥

## दिवादिभ्यः श्यन् ॥ ६९ ॥

दिव् इत्येवमादिभ्यो धातुभ्यः श्यन् प्रत्ययो भवति। शपोऽपवादः। नकारः स्वरार्थः, शकारः सार्वधातुकार्थः। दीव्यति। सीव्यति॥

## वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ७० ॥

उभयत्र विभाषेयम्। 'टुभ्राशृ टुभ्लाशृ दीप्तौ' ( भ्वा० ५७० ), 'भ्रमु अनवस्थाने' ( दिवा० ९५ ), 'भ्रमु चलने' ( भ्वा० ५८९ ), द्वयोरपि ग्रहणम्, 'क्रमु पादविक्षेपे' (भ्वा० ३१९ ), 'क्लमु ग्लानौ' ( दिवा० ९७ ), 'त्रसी उद्वेगे' ( दिवा० ११ ), 'त्रुटी छेदने' (तुदा० ८४ ), 'लष कान्तौ' ( भ्वा० ६२८ ) एतेभ्यो वा श्यन् प्रत्ययो भवति। भ्राश्यते, भ्राशते। भ्लाश्यते, भ्लाशते। भ्राम्यति, भ्रमति। क्राम्यति, क्रामति। क्लाम्यति, क्लामति। त्रस्यति, त्रसति। त्रुट्यति, त्रुटति। लष्यति, लषति ॥

## यसोऽनुपसर्गात् ॥ ७१ ॥

'यसु प्रयत्ने' ( दिवा० १०० ) दैवादिकः। तस्मान्नित्यं श्यनि प्राप्तेऽनुपसर्गाद् विकल्प उच्यते। यसोऽनुपसर्गाद् वा श्यन् प्रत्ययो भवति। यस्यति, यसति। अनुपसर्गादिति किम् ? आयस्यति। प्रयस्यति॥

---

१ – यथान्यासं पाठः।

## संयसश्च ॥ ७२ ॥

सोपसर्गार्थ आरम्भः। संपूर्वाच्च यसेर्वा श्यन् प्रत्ययो भवति। संयस्यति। संयसति ॥

## स्वादिभ्यः श्नुः ॥ ७३ ॥

'षुञ् अभिषवे' ( स्वा० १ ) इत्येवमादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति। शपोऽपवादः। सुनोति। सिनोति ॥

## श्रुवः शृ च ॥ ७४ ॥

श्रुवः श्नुप्रत्ययो भवति, तत्संनियोगेन श्रुवः शृ इत्ययमादेशो भवति। शृणोति, शृणुतः, शृण्वन्ति ॥

## अक्षोऽन्यतरस्याम् ॥ ७५ ॥

'अक्षू व्याप्तौ' ( भ्वा० ४३७ ) भौवादिकः, अस्मादन्यतरस्यां श्नुप्रत्ययो भवति। अक्ष्णोति। अक्षति ॥

## तनूकरणे तक्षः ॥ ७६ ॥

'तक्षू त्वक्षू तनूकरणे' ( भ्वा० ४३८ ) अस्मात् तनूकरणेऽर्थे वर्तमानादन्यतरस्यां श्नुप्रत्ययो भवति। अनेकार्थत्वाद् धातूनां विशेषणोपादानम्। तक्षति काष्ठम्, तक्ष्णोति काष्ठम्। तनूकरण इति किम् ? संतक्षति वाग्भिः ॥

## तुदादिभ्यः शः ॥ ७७ ॥

'तुद व्यथने' ( तुदा० १ ) इत्येवमादिभ्यो धातुभ्यः शप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। तुदति। नुदति ॥

## रुधादिभ्यः श्नम् ॥ ७८ ॥

'रुधिर् आवरणे' ( रुधा० १ ) इत्येवमादिभ्यो धातुभ्यः श्नम् प्रत्ययो भवति। शपोऽपवादः। मकारो देशविध्यर्थः। शकारः 'श्नान्नलोपः' ( ६.४.२३ ) इति विशेषणार्थः। रुणद्धि। भिनत्ति ॥

## तनादिकृञ्भ्य उः ॥ ७९ ॥

'तनु विस्तारे' ( तना० १ ) इत्येवमादिभ्यो धातुभ्यः कृञश्च उप्रत्ययो भवति।

शपोऽपवादः। तनोति। सनोति। क्षणोति। कृञः खल्वपि—करोति। तनादिपाठादेव उप्रत्यये सिद्धे करोतेरुपादानं नियमार्थम्, अन्यत् तनादिकार्यं मा भूदिति। 'तनादिभ्यस्तथासोः' ( २.४.७९ ) इति विभाषा सिचो लुङ् न भवति। अकृत। अकृथाः॥

## धिन्विकृण्व्योर च ॥ ८० ॥

'हिवि धिवि जिवि प्रीणनार्थाः' ( भ्वा० ३९२ ), 'कृवि हिंसाकरणयोश्च' ( भ्वा० ३९४ ) इत्येतयोर्धात्वोरुप्रत्ययो भवति, अकारश्चान्तादेशः। धिनोति। कृणोति। अतो लोपस्य स्थानिवद्भावाद् गुणो न भवति॥

## क्र्यादिभ्यः श्ना ॥ ८१ ॥

'डुक्रीञ् द्रव्यविनिमये' ( क्र्या० १ ) इत्येवमादिभ्यो धातुभ्यः श्नाप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। क्रीणाति। प्रीणाति॥

## स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ८२ ॥

आद्याश्चत्वारो धातवः सौत्राः, 'स्कुञ् आप्रवणे' ( क्र्या० ६ ) एतेभ्यः श्नाप्रत्ययो भवति श्नुश्च। स्तभ्नाति, स्तभ्नोति। स्तुभ्नाति, स्तुभ्नोति। स्कभ्नाति, स्कभ्नोति। स्कुभ्नाति, स्कुभ्नोति। स्कुनाति, स्कुनोति। उदित्त्वप्रतिज्ञानात् सौत्राणामपि धातूनां सर्वार्थत्वं विज्ञायते, नैतद्विकरणविषयत्वमेव॥

## हलः श्नः शानज्झौ ॥ ८३ ॥

हल उत्तरस्य श्नाप्रत्ययस्य शानजादेशो भवति हौ परतः। मुषाण। पुषाण। हल इति किम्? क्रीणीहि। हाविति किम्? मुष्णाति। श्न इति स्थानिनिर्देश आदेशसंप्रत्ययार्थः। इतरथा हि प्रत्ययान्तरमेव सर्वविषयं विज्ञायेत॥

## छन्दसि शायजपि ॥ ८४ ॥

छन्दसि विषये श्नः शायजादेशो भवति, शानजपि। गृभाय जिह्वया मधुं ( ऋ० ८.१७.५ )। शानचः खल्वपि—बधान देंव[1] ( मा० सं० १.२५ )॥

## व्यत्ययो बहुलम् ॥ ८५ ॥

यथायथं विकरणाः शबादयो विहिताः, तेषां छन्दसि विषये बहुलं व्यत्ययो भवति।

---

१ – ' पशुम् ' इति मुद्रितः पाठः।

व्यतिगमनं व्यत्ययो व्यतिहारः। विषयान्तरे विधानम्, क्वचिद् द्विविकरणता, क्वचित् त्रिविकरणता च। आण्डा शुष्णस्य भेदति ( ऋ० ८.४०.११ )। भिनत्तीति प्राप्ते। ताश्चिन्नु न मरन्ति[1] ( ऋ० १.१९१.१२ )। न म्रियन्त इति प्राप्ते। द्विविकरणता—इन्द्रो वस्तेन नेषतु। नयत्विति प्राप्ते। त्रिविकरणता—इन्द्रेण युजा तरुषेम वृत्रम् ( ऋ० ७.४८.२ )। तीर्यास्म[2] इति प्राप्ते। बहुलग्रहणं सर्वविधिव्यभिचारार्थम्।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च[3] सिध्यति बाहुलकेन ॥

## लिङ्याशिष्यङ् ॥ ८६ ॥

आशिषि विषये यो लिङ्, तस्मिन् परतश्छन्दसि विषयेऽङ् प्रत्ययो भवति। शपोऽपवादः। 'छन्दस्युभयथा' ( ३.४.११७ ) इति लिङः सार्वधातुकसंज्ञाप्यस्ति। स्थागागमिवचिविदिशकिरुहयः प्रयोजनम्। स्था—उपस्थेयं[4] वृषभं तुग्रियाणाम्। गा—सत्यमुपगेषम् ( तै० सं० १.२.१०.२ )। गमि—गृहं गमेम[5] ( ऋ० १०.४०.११ )। वचि—मन्त्रं वोचेमाग्नये ( ऋ० १.७४.१ )। विदि—विदेयमेना मनसि प्रविष्टाम् ( शौ० सं० १९.४.२ )। शकि—व्रतं चरिष्यामि तच्छकेयम् ( आश्व० श्रौ० ८.१४.६ )। रुहि—स्वर्गं लोकमारुहेयम्॥ दृशेरग् वक्तव्यः॥ पितरं च दृशेयं मातरं च ( ऋ० १.२४.१ )॥

## कर्मवत् कर्मणा तुल्यक्रियः ॥ ८७ ॥

कर्मणि क्रिया कर्म, कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद् भवति। यस्मिन् कर्मणि कर्तृभूतेऽपि तद्वत् क्रिया लक्ष्यते यथा कर्मणि, स कर्ता कर्मवद् भवति। कर्माश्रयाणि कार्याणि प्रतिपद्यते। 'कर्तरि शप्' ( ३.१.६८ ) इति कर्तृग्रहणमिहानुवृत्तं प्रथमया विपरिणम्यते। यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्। भिद्यते काष्ठं स्वयमेव। अभेदि काष्ठं स्वयमेव। कारिष्यते कटः स्वयमेव। वत्करणं स्वाश्रयमपि यथा स्यात्। भिद्यते कुसूलेनेति। अकर्मकाणां भावे लः सिद्धो भवति। 'लिङ्याशिष्यङ्' ( ३.१.८६ ) इति द्विलकारको निर्देशः। तत्र लानुवृत्तेर्लान्तस्य कर्ता कर्मवद् भवतीति कुसूलाद् द्वितीया न भवति। कर्मणेति किम् ? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत्—साध्वसिश्छिनत्ति। साधु स्थाली पचति। धात्वधिकारात् समाने धातौ कर्मवद्भावः। इह न भवति—पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेति। कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद् भवति, न कर्तृस्थभावकानां न वा[6] कर्तृस्थक्रियाणाम्।

---

१ - 'स च न मरति' इति न्या० पद०। २- 'तरेम' इति पद०।
३ - 'हि' इति बाल०। ४ - 'उपस्थेपम्' इति पाठान्तरम्।
५ - 'गमेम जानतो गृहान्' इति बाल०। ६ - 'वा' इति नास्ति बाल०।

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया ॥

## तपस्तपःकर्मकस्यैव ॥ ८८ ॥

'तप संतापे' ( भ्वा० ७११ ) अस्य कर्ता कर्मवद् भवति, स च तपःकर्मकस्यैव नान्यकर्मकस्य। क्रियाभेदाद् विध्यर्थमेतत्। उपवासादीनि तपांसि तापसं तपन्ति। दुःखयन्तीत्यर्थः। स तापसस्त्वगस्थिभूतः स्वर्गाय तपस्तप्यते। अर्जयतीत्यर्थः। पूर्वेणाप्राप्तः कर्मवद्भावो विधीयते। तप्यते तपस्तापसः। अतप्त तपस्तापसः। तपःकर्मकस्यैवेति किम् ? उत्तपति सुवर्णं सुवर्णकारः॥

## न दुहस्नुनमां यक्चिणौ ॥ ८९ ॥

दुह स्नु नम् इत्येतेषां कर्मकर्तरि यक्चिणौ कर्मवद्भावापदिष्टौ न भवतः। दुहेरनेन यक् प्रतिषिध्यते। चिण् तु 'दुहश्च' ( ३.१.६३ ) इति पूर्वमेव विभाषितः। दुग्धे गौः स्वयमेव। अदुग्ध गौः स्वयमेव। अदोहि गौः स्वयमेव। प्रस्नुते गौः स्वयमेव। प्रास्नोष्ट गौः स्वयमेव। नमते दण्डः स्वयमेव। अनंस्त दण्डः स्वयमेव॥ यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्॥ कारयति कटं देवदत्तः। कारयते कटः स्वयमेव। अचीकरत् कटं देवदत्तः। अचीकरत कटः स्वयमेव। उत्पुच्छयते गां गोपः। उत्पुच्छयते गौः स्वयमेव। उदपुपुच्छत गौः स्वयमेव। श्रथ्नाति ग्रन्थं देवदत्तः। श्रथ्नीते ग्रन्थः स्वयमेव। अश्रन्थिष्ट ग्रन्थः स्वयमेव। ग्रथ्नाति श्लोकं देवदत्तः। ग्रथ्नीते श्लोकः स्वयमेव। अग्रन्थिष्ट श्लोकः स्वयमेव। ब्रवीति श्लोकं देवदत्तः। ब्रूते श्लोकः स्वयमेव। अवोचच् छ्लोकं देवदत्तः। अवोचत श्लोकः स्वयमेव। आत्मनेपदाकर्मकाणाम्— आहते[१] माणवकः स्वयमेव। आवधिष्ट माणवकः स्वयमेव, आहतेति वा। विकुर्वते सैन्धवाः स्वयमेव। व्यकृषत सैन्धवाः स्वयमेव॥

## कुषिरजोः प्राचां श्यन् परस्मैपदं च ॥ ९० ॥

'कुष निष्कर्षे' ( क्र्या० ५० ), 'रञ्ज रागे' ( भ्वा० ७२५ ) अनयोर्धात्वोः कर्मकर्तरि प्राचामाचार्याणां मतेन श्यन् प्रत्ययो भवति, परस्मैपदं च। यगात्मनेपदयोरपवादौ। कुष्यति पादः स्वयमेव। रज्यति वस्त्रं स्वयमेव। प्राचांग्रहणं विकल्पार्थम्। कुष्यते। रज्यते। व्यवस्थितविभाषा चेयम्। तेन लिट्लिङोः स्यादिविषये च न भवतः। चुकुषे पादः स्वयमेव। ररञ्जे वस्त्रं स्वयमेव। कोषिषीष्ट पादः स्वयमेव। रङ्क्षीष्ट वस्त्रं

१ – अतः पूर्वम् ' आहन्ति माणवकं देवदत्तः ' इत्यपपाठो मुद्रितेषु।

स्वयमेव। कोषिष्यते पादः स्वयमेव। रङ्क्ष्यते वस्त्रं स्वयमेव। अकोषि पादः स्वयमेव। अरञ्जि वस्त्रं स्वयमेव॥

## धातोः ॥ ९१ ॥

धातोरित्ययमधिकारो वेदितव्यः। आ तृतीयाध्यायपरिसमाप्तेर्यदित ऊर्ध्वमनुक्रमिष्यामो धातोरित्येवं तद् वेदितव्यम्। वक्ष्यति—'तव्यत्तव्यानीयरः' ( ३.१.९६ ) इति। कर्तव्यम्। करणीयम्। धातुग्रहणमनर्थकम्, यङ्विधौ धात्वधिकारात्। कृदुपपदसंज्ञार्थं तर्हि। अस्मिन् धात्वधिकारे ते यथा स्याताम्, पूर्वत्र मा भूतामिति। आर्धधातुकसंज्ञार्थं च द्वितीयं धातुग्रहणं कर्तव्यम्। धातोरित्येवं विहितस्य यथा स्यात्। इह मा भूत्—लूभ्यां लूभिरिति॥

## तत्रोपपदं सप्तमीस्थम् ॥ ९२ ॥

तत्रैतस्मिन् धात्वधिकारे तृतीये यत् सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति। वक्ष्यति—'कर्मण्यण्' ( ३.२.१ )—कुम्भकारः। स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम्। इतरथा हि सप्तमी श्रूयते यत्र, तत्रैव स्यात्। स्तम्बेरमः, कर्णेजप इति। यत्र वा सप्तमीश्रुतिरस्ति 'सप्तम्यां जनेर्डः' ( ३.२.९७ ) इति। उपसरजः, मन्दुरज इति। स्थग्रहणात्तु सर्वत्र भवति। गुरुसंज्ञाकरणमन्वर्थसंज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारार्थम्। पश्य कुम्भम्, करोति कटमिति प्रत्ययो न भवति। उपपदप्रदेशाः—'उपपदमतिङ्' ( २.२.१९) इत्येवमादयः॥

## कृदतिङ् ॥ ९३ ॥

अस्मिन् धात्वधिकारे तिङ्वर्जितः प्रत्ययः कृत्संज्ञको भवति। कर्तव्यम्। करणीयम्। अतिङिति किम् ? चीयात्। स्तूयात्। कृत्प्रदेशाः—'कृत्तद्धितसमासाश्च' ( १.२.४६ ) इत्येवमादयः॥

## वासरूपोऽस्त्रियाम् ॥ ९४ ॥

अस्मिन् धात्वधिकारेऽसमानरूपोऽपवादप्रत्ययो वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा। 'ण्वुल्तृचौ' ( ३.१.१३३ ) इत्युत्सर्गौ, 'इगुपधज्ञाप्रीकिरः कः' ( ३.१.१३५ ) इत्यपवादः, तद्विषये 'ण्वुल्तृचौ' ( ३.१.१३३ ) अपि भवतः। विक्षेपकः। विक्षेप्ता। विक्षिपः। असरूप इति किम् ? 'कर्मण्यण्' ( ३.२.१ ) इत्युत्सर्गः, 'आतोऽनुपसर्गे कः' ( ३.२.३ ) इत्यपवादः, स नित्यं बाधको भवति। गोदः। कम्बलदः। 'नानुबन्धकृतमसारूप्यम्' ( परि० ८ )। अस्त्रियामिति किम् ? 'स्त्रियां क्तिन्' ( ३.३.९४ ) इत्युत्सर्गः, 'अ प्रत्ययात्' ( ३.३.१०२ ) इत्यपवादः, स बाधक एव भवति। चिकीर्षा। जिहीर्षा॥

## कृत्याः प्राङ् ण्वुलः ॥ ९५ ॥

'ण्वुल्तृचौ' ( ३.१.१३३ ) इति वक्ष्यति। प्रागेतस्माण् ण्वुल्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, कृत्यसंज्ञकास्ते वेदितव्याः। तत्रैवोदाहरिष्यामः। कृत्यप्रदेशाः— 'कृत्यैरधिकार्थवचने' ( २.१.३३ ), 'कृत्यानां कर्तरि वा' ( २.३.७१ ) इत्येवमादयः॥

## तव्यत्तव्यानीयरः ॥ ९६ ॥

धातोरिति वर्तते। धातोस्तव्यत् तव्य अनीयर् इत्येते प्रत्यया भवन्ति। तकाररेफौ स्वरार्थौ। कर्तव्यम्। कर्तव्यम्। करणीयम्॥ वसेस्तव्यत् कर्तरि णिच्च॥ वास्तव्यः॥ केलिमर उपसंख्यानम्॥ पचेलिमा माषाः। भिदेलिमानि काष्ठानि। कर्मकर्तरि चायमिष्यते॥

## अचो यत् ॥ ९७ ॥

अजन्ताद् धातोर्यत् प्रत्ययो भवति। तकारो 'यतोऽनावः' ( ६.१.२१३ ) इति स्वरार्थः। गेयम्। पेयम्। चेयम्। जेयम्। अज्ग्रहणं किं यावता हलन्ताण् ण्यतं वक्ष्यति? अजन्तभूतपूर्वादपि यथा स्यात्। दित्स्यम्। धित्स्यम्॥ तकिशसिचतियतिजनीना-मुपसंख्यानम्॥ तकि—तक्यम्। शसि—शस्यम्। चति—चत्यम्। यति—यत्यम्। जनि—जन्यम्॥ हनो वा वध च॥ वध्यम्। घात्यम्॥

## पोरदुपधात् ॥ ९८ ॥

पवर्गान्ताद् धातोरकारोपधाद् यत् प्रत्ययो भवति। ण्यतोऽपवादः। शप्—शप्यम्। लभ्—लभ्यम्। पोरिति किम् ? पाक्यम्। वाक्यम्। अदुपधादिति किम् ? कोप्यम्। गोप्यम्। तपरकरणं तत्कालार्थम्। आप्यम्॥

## शकिसहोश्च ॥ ९९ ॥

'शक्लृ शक्तौ' ( स्वा० १६ ), 'षह मर्षणे' ( भ्वा० ५९१ ) अनयोर्धात्वोर्यत् प्रत्ययो भवति। शक्यम्। सह्यम्॥

## गदमदचरयमश्चानुपसर्गे ॥ १०० ॥

'गद व्यक्तायां वाचि' ( भ्वा० ४२ ), 'मदी हर्षे' ( दिवा० ९८ ), 'चर गतिभक्षणयोः' ( भ्वा० ३७६ ), 'यम उपरमे' ( भ्वा० ७१० ) एतेभ्यश्चानुपसर्गेभ्यो यत् प्रत्ययो भवति। गद्यम्। मद्यम्। चर्यम्। यम्यम्। अनुपसर्ग इति किम् ? प्रगाद्यम्। प्रमाद्यम्। यमेः

पूर्वेणैव सिद्धेऽनुपसर्गनियमार्थं वचनम् ॥ चरेराङि चागुरौ ॥ आचर्यो देशः। अगुराविति किम् ? आचार्य उपनेता ॥

## अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ १०१ ॥

अवद्य पण्य वर्या इत्येते शब्दा निपात्यन्ते गर्ह्य पणितव्यानिरोध इत्येतेष्वर्थेषु यथासंख्यम्। अवद्यमिति निपात्यते गर्ह्यं चेत् तद् भवति। अवद्यं पापम्। अनुद्यमन्यत्। 'वदः सुपि क्यप् च' (३.१.१०६)। पण्यमिति निपात्यते पणितव्यं चेत् तद् भवति। पण्यः कम्बलः। पण्या गौः। पाण्यमन्यत्। वर्येति स्त्रियां निपात्यते अनिरोधश्चेद् भवति। अनिरोधोऽप्रतिबन्धः। शतेन वर्या। सहस्रेण वर्या। वृत्यान्या। स्त्रीलिङ्गनिर्देशः किमर्थः ? वार्या ऋत्विजः ॥

## वह्यं करणम् ॥ १०२ ॥

वहेर्धातोः करणे यत् प्रत्ययो निपात्यते। वहत्यनेनेति वह्यं शकटम्। करण इति किम् ? वाह्यमन्यत् ॥

## अर्यः स्वामिवैश्ययोः ॥ १०३ ॥

'ऋ गतौ' (भ्वा० ६७०) अस्माण् ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत् प्रत्ययो निपात्यते। अर्यः स्वामी। अर्यो वैश्यः। 'यतोऽनावः' (६.१.२१३) इत्याद्युदात्तत्वे प्राप्ते ॥ स्वामिन्यन्तोदात्तत्वं च वक्तव्यम् ॥ स्वामिवैश्ययोरिति किम् ? आर्यो ब्राह्मणः ॥

## उपसर्या काल्या प्रजने ॥ १०४ ॥

उपसर्येति निपात्यते काल्या चेत् प्रजने भवति। उपपूर्वात् सर्तेर्यत् प्रत्ययः। प्राप्तकाला काल्या। प्रजनः प्रजननम्, प्रथमगर्भग्रहणम्। गर्भग्रहणे प्राप्तकाला। उपसर्या गौः। उपसर्या वडवा। काल्या प्रजन इति किम् ? उपसार्या शरदि मधुरा ॥

## अजर्यं संगतम् ॥ १०५ ॥

अजर्यमिति निपात्यते, संगतं चेद् भवति। जीर्यतेर्नञ्पूर्वात् संगते संगमने कर्तरि यत् प्रत्ययो निपात्यते। न जीर्यतीत्यजर्यम्। अजर्यमार्यसंगतम्। अजर्यं नोऽस्तु संगतम्। संगतमिति किम् ? अजरिता कम्बलः ॥

## वदः सुपि क्यप् च ॥ १०६ ॥

अनुपसर्ग इति वर्तते, वदेर्धातोः सुबन्त उपपदेऽनुपसर्गे क्यप् प्रत्ययो भवति, चकाराद् यच्च। ब्रह्मोद्यम्, ब्रह्मवद्यम्। सत्योद्यम्, सत्यवद्यम्। सुपीति किम् ? वाद्यम्। अनुपसर्ग इत्येव—प्रवाद्यम्॥

## भुवो भावे ॥ १०७ ॥

सुप्यनुपसर्ग इत्यनुवर्तते। भवतेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति। यत् तु नानुवर्तते। ब्रह्मभूयं गतः। ब्रह्मत्वं गतः। देवभूयं गतः, देवत्वं गतः। भावग्रहणमुत्तरार्थम्। सुपीत्येव—भव्यम्। अनुपसर्ग इत्येव—प्रभव्यम्॥

## हनस्त च ॥ १०८ ॥

सुप्यनुपसर्ग इति वर्तते, भाव इति च। हन्तेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति, तकारश्चान्तादेशः। ब्रह्महत्या। अश्वहत्या। सुपीत्येव—घातः। ण्यत् तु भावे न भवत्यनभिधानात्। अनुपसर्ग इत्येव—प्रघातो वर्तते॥

## एतिस्तुशास्वृदृजुषः क्यप् ॥ १०९ ॥

सुप्यनुपसर्गे भाव इति निवृत्तम्। सामान्येन विधानमेतत्। एति स्तु शास् वृ दृ जुष् इत्येतेभ्यः क्यप् प्रत्ययो भवति। इत्यः। स्तुत्यः। शिष्यः। वृत्यः। आदृत्यः। जुष्यः। क्यबिति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम्। 'ओरावश्यके' ( ३.१.१२५ ) इति ण्यतं बाधित्वा क्यबेव भवति। अवश्यस्तुत्यः। वृग्रहणे वृञो ग्रहणमिष्यते, न वृङः। वार्या ऋत्विजः॥ शंसिदुहिगुहिभ्यो वेति वक्तव्यम्॥ शस्यम्, शंस्यम्। दुह्यम्, दोह्यम्। गुह्यम्, गोह्यम्॥ आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्॥ आज्यं घृतम्। कथमुपेयम् ? एरेतद्रूपम्, नेणः॥

## ऋदुपधाच्चाक्लृपिचृतेः ॥ ११० ॥

ऋकारोपधाच्च धातोः क्यप् प्रत्ययो भवति क्लृपिचृती वर्जयित्वा। वृतु—वृत्यम्। वृधु—वृध्यम्। अक्लृपिचृतेरिति किम् ? कल्प्यम्। चर्त्यम्। तपरकरणं किम् ? 'कॄत संशब्दने' ( चु० १२१ )। ण्यदेव भवति। कीर्त्यम्॥ पाणौ सृजेर्ण्यद् वक्तव्यः॥ पाणिसर्ग्या रज्जुः॥ समवपूर्वाच्च॥ समवसर्ग्या॥

## ई च खनः ॥ १११ ॥

खनेर्धातोः क्यप् प्रत्ययो भवति, ईकारश्चान्तादेशः। खेयम्। दीर्घनिर्देशः प्रश्लेषार्थः।

तत्र द्वितीय इकारो 'ये विभाषा' (६.४.४३) इत्यात्वबाधनार्थः॥

## भृञोऽसंज्ञायाम् ॥ ११२ ॥

भृञो धातोरसंज्ञायां विषये क्यप् प्रत्ययो भवति। भृत्याः कर्मकराः। भर्तव्या इत्यर्थः। असंज्ञायामिति किम्? भार्यो नाम क्षत्रियः॥ संपूर्वाद् विभाषा॥ संभृत्याः, संभार्याः॥

संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति॥

## मृजेर्विभाषा ॥ ११३ ॥

मृजेर्धातोर्विभाषा क्यप् प्रत्ययो भवति। ऋदुपधत्वात् प्राप्तविभाषेयम्। परिमृज्यः, परिमार्ग्यः॥

## राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ११४ ॥

राजसूय सूर्य मृषोद्य रुच्य कुप्य कृष्टपच्य अव्यथ्य इत्येते शब्दाः क्यपि निपात्यन्ते। राज्ञा सोतव्यः, राजा वेह सूयते राजसूयः क्रतुः। सूसर्तिभ्यां क्यप् सर्तेरुत्वं सुवतेर्वा रुडागमः। सरति सुवति वा सूर्यः। मृषापूर्वस्य वदतेः पक्षे यति प्राप्ते नित्यं क्यब् निपात्यते। मृषोद्यम्। रोचतेऽसौ रुच्यः। कर्तरि क्यप्। गुपेरादेः कत्वं च संज्ञायाम्। कुप्यम्। गोप्यमन्यत्। कृष्टे पच्यन्ते कृष्टपच्याः। कर्मकर्तरि निपातनम्। न व्यथते अव्यथ्यः॥

## भिद्योद्ध्यौ नदे ॥ ११५ ॥

भिदेरुज्झेश्च क्यब् निपात्यते नदेऽभिधेये। उज्झेर्धत्वं च। भिनत्ति कूलं भिद्यः। उज्झत्युदकम् उद्ध्यः। नद इति किम्? भेत्ता। उज्झिता॥

## पुष्यसिद्ध्यौ नक्षत्रे ॥ ११६ ॥

पुषेः सिधेश्चाधिकरणे क्यब् निपात्यते नक्षत्रेऽभिधेये। पुष्यन्त्यस्मिन्नर्था इति पुष्यः। सिध्यन्त्यस्मिन्निति सिद्ध्यः। नक्षत्र इति किम्? पोषणम्, सेधनम्॥

## विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ११७ ॥

विपूय विनीय जित्य इत्येते शब्दा निपात्यन्ते यथासंख्यं मुञ्ज कल्क हलि इत्येतेष्वर्थेषु

बोध्येषु। विपूर्वात् पवतेर्नयतेश्च तथा जयतेर्यति प्राप्ते कर्मणि क्यब् निपात्यते। विपूयो मुञ्जः। विपव्यमन्यत्। विनीयः कल्कः। विनेयमन्यत्। जित्यो हलिः। जेयमन्यत्॥

## प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ ११८ ॥

प्रति अपि इत्येवंपूर्वाद् ग्रहेः क्यप् प्रत्ययो भवति छन्दसि विषये। मत्तस्य न प्रतिगृह्यम् (काठ० सं० १४.५)। तस्मान् नापिगृह्यम् (काठ० सं० २७.३)। छन्दसीति किम्? प्रतिग्राह्यम्। अपिग्राह्यम्॥

## पदास्वैरिबाह्यापक्ष्येषु च ॥ ११९ ॥

पदेऽस्वैरिणि बाह्यायां पक्ष्ये चार्थे ग्रहेर्धातोः क्यप् प्रत्ययो भवति। पदे तावत्— प्रगृह्यं पदम्, यस्य प्रगृह्यसंज्ञा विहिता। अवगृह्यं पदम्, यस्यावग्रहः क्रियते। अस्वैरी परतन्त्रः। गृह्यका इमे। गृहीतका इत्यर्थः। बाह्यायाम्—ग्रामगृह्या सेना। नगरगृह्या सेना। ग्रामनगराभ्यां बहिर्भूतेत्यर्थः। स्त्रीलिङ्गनिर्देशादन्यत्र न भवति। पक्षे भवः पक्ष्यः। वासुदेवगृह्याः। अर्जुनगृह्याः। तत्पक्षाश्रिता इत्यर्थः॥

## विभाषा कृवृषोः ॥ १२० ॥

कृञो वृषश्च विभाषा क्यप् प्रत्ययो भवति। करोतेर्ण्यति प्राप्ते, वर्षतेर्ऋदुपधत्वाद् नित्ये क्यपि प्राप्ते विभाषारभ्यते। कृत्यम्, कार्यम् । वृष्यम्, वर्ष्यम्॥

## युग्यं च पत्रे ॥ १२१ ॥

युग्यमिति निपात्यते पत्रं चेत् तद् भवति। पतत्यनेनेति पत्रम्, वाहनमुच्यते। युग्यो गौः। युग्योऽश्वः। युग्यो हस्ती। युजेः क्यप् कुत्वं च निपात्यते। पत्र इति किम्? योग्यमन्यत्॥

## अमावस्यदन्यतरस्याम् ॥ १२२ ॥

अमाशब्दः सहार्थे वर्तते। तस्मिन्नुपपदे वसेर्धातोः कालेऽधिकरणे ण्यत् प्रत्ययो भवति, तत्रान्यतरस्यां वृद्ध्यभावो निपात्यते। सह वसतोऽस्मिन् काले सूर्यचन्द्रमसावित्यमावास्या, अमावस्या। एकदेशविकृतस्यानन्यत्वात् (परि० ३७) 'अमावास्याया वा' (४.३.३०) इत्यत्रामावस्याशब्दस्यापि ग्रहणं भवति।

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम्।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति॥

## छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥१२३ ॥

निष्टर्क्यादयः शब्दाश्छन्दसि विषये निपात्यन्ते। यदिह लक्षणेनानुपपन्नं तत् सर्वं निपातनात् सिद्धम्। निष्टर्क्य इति 'कृती छेदने' ( तुदा० १४४ ) इत्यस्माद् निस्पूर्वात् क्यपि प्राप्ते ण्यत्, आद्यन्तविपर्ययश्च, निसश्च षत्वं निपात्यते। निष्टर्क्यं ( ऐ० आ० ५.१.३ ) चिन्वीत पशुकामः। देवशब्द उपपदे ह्वयतेर्जुहोतेर्वा क्यप्, दीर्घस्तुगभावश्च। देवहूयः ( श० ब्रा० २.१.३.२ )। प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्वाच्छिषेः क्यप्। उच्छिष्यः ( मै० सं० ३.९.२ )। 'मृङ् प्राणत्यागे' ( तुदा० ११३ ), 'स्तृञ् आच्छादने' ( स्वा० ६ ), 'ध्वृ हूर्छने' ( भ्वा० ६७२ ) एतेभ्यो यत् प्रत्ययः। मर्यः ( तै० आ० १.३.२ )। स्तुर्या[1]। स्त्रियामेव निपातनम्। ध्वर्यः। खनेर्यत्। खन्यां ( तै० सं० ७.४.१३.१ )। एतस्मादेव ण्यत्। खान्यः। देवशब्द उपपदे यजेर्यः[2]। देवयज्या ( ऋ० १०.३०.१५ )। स्त्रीलिङ्गनिपातनम्। आङ्पूर्वात् पृच्छेः क्यप्। आपृच्छ्यः ( ऋ० १.६०.२ )। प्रतिपूर्वात् सीव्यतेः क्यप् षत्वं च। प्रतिषीव्यः। ब्रह्मण्युपपदे वदेर्ण्यत्। ब्रह्मवाद्यम् ( तै० सं० २.५.८.३ )। भवतेः स्तौतेश्च ण्यत्, आवादेशश्च भवति। भाव्यम् ( शौ० सं० १३.१.५४ ), स्ताव्यः। उपपूर्वस्य चिनोतेर्ण्यदायादेशौ। उपचाय्यपृडम् ( काठ० सं० ११.१ )। पृडे चोत्तरपदे निपातनमेतत् ॥ हिरण्य इति वक्तव्यम् ॥ हिरण्यादन्यत्र उपचेयपृडमेव।

निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात्।
ण्यदायादेश इत्येता उपचाय्ये निपातितौ ॥ १ ॥
ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ २ ॥

## ऋहलोर्ण्यत् ॥ १२४ ॥

पञ्चम्यर्थे षष्ठी, ऋवर्णान्ताद् धातोर्हलन्ताच्च ण्यत् प्रत्ययो भवति। कार्यम्। हार्यम्। धार्यम्। वाक्यम्। पाक्यम् ॥

## ओरावश्यके ॥ १२५ ॥

अवश्यंभाव आवश्यकम्। उवर्णान्ताद् धातोर्ण्यत् प्रत्ययो भवत्यावश्यके द्योत्ये। यतोऽपवादः। लाव्यम्। पाव्यम्। आवश्यक इति किम् ? लव्यम्। आवश्यके द्योत्य

---

१ - तु०—अस्तर्या ( मै० सं० १.५.१० ) अत्रायं शब्दः स्त्रियां वर्तते। शतपथब्राह्मणे ( २.२.२.१० ) तु पुंसि श्रूयते। २ - 'यजेर्यत्' इत्यपपाठो मुद्रितेषु।

इति चेत् स्वरसमासानुपपत्तिः, अवश्यलाव्यम् अवश्यपाव्यमिति। नैष दोषः। मयूरव्यंसकादित्वात् ( २.१.७२ ) समासः, उत्तरपदप्रकृतिस्वरे च यत्नः करिष्यते॥

## आसुयुवपिरपिलपित्रपिचमश्च ॥ १२६ ॥

आङ्पूर्वात् सुनोतेः यु वपि रपि लपि त्रपि चम् इत्येतेभ्यश्च ण्यत् प्रत्ययो भवति। यतोऽपवादः। आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्। अनुक्तसमुच्चयार्थश्चकारः। दभि—दाभ्यम्॥

## आनाय्योऽनित्ये ॥ १२७ ॥

आनाय्य इति निपात्यतेऽनित्येऽभिधेये। नयतेराङ्पूर्वाण् ण्यदायादेशौ निपात्येते। आनाय्यो दक्षिणाग्निः। रूढिरेषा। तस्मादनित्यविशेषे दक्षिणाग्नावेवावतिष्ठते। तस्य चानित्यत्वं नित्यमजागरणात्। यश्च गार्हपत्यादानीयते दक्षिणाग्निराहवनीयेन सहैकयोनिः, तत्रैतन्निपातनम्, न दक्षिणाग्निमात्रे। तस्य हि योनिर्विकल्प्यते—वैश्यकुलाद् वित्तवतो भ्राष्ट्राद् वा गार्हपत्याद् वा ( तु०—पार० गृ० १.२.३ ) इति।

आनाय्योऽनित्य इति चेद् दक्षिणाग्नौ कृतं भवेत्।
एकयोनौ च तं विद्यादानेयो ह्यन्यथा भवेत्॥

## प्रणाय्योऽसंमतौ ॥ १२८ ॥

अविद्यमाना संमतिरस्मिन्नित्यसंमतिः। संमननं संमतिः। संमतता पूजा। प्रणाय्य इति निपात्यतेऽसंमतावभिधेये। प्रणाय्यश्चोरः। असंमताविति किम्? प्रणेयोऽन्यः। यद्येवं कथमेतत्—'ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वा अन्तेवासिने नान्यस्मै कस्मैचन' ( छा० उप० ३.११.५,६ ) इति? संमतिरभिलाषोऽप्युच्यते। तदभावेन निष्कामतया असंमतिरन्तेवासी भवति। तस्मै निष्कामाय मोक्षार्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म प्रब्रूयादिति युज्यते॥

## पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ १२९ ॥

पाय्यादयः शब्दा निपात्यन्ते यथासंख्यं माने हविषि निवासे सामिधेन्यां चाभिधेयायाम्। पाय्य इति माङो ण्यत् प्रत्ययः, आदेः पत्वं च निपात्यते माने। पाय्यं मानम्। मेयमन्यत्। संपूर्वान्नयतेर्ण्यदायादेशावुपसर्गदीर्घत्वं च निपात्यते। सान्नाय्यं ( तै० सं० २.५.३.७ ) हविः। सन्नेयमन्यत्। रूढित्वाच्च हविर्विशेष एवावतिष्ठते। निपूर्वाच्चिनोतेर्ण्यदायादेशावादिकुत्वं च निपात्यते। निकाय्यो निवासः। निचेयमन्यत्। धाय्येति धाञो ण्यत् प्रत्ययो निपात्यते सामिधेनी चेत् सा भवति। धाय्या सामिधेनी। धेयमन्यत्।

सामिधेनीशब्द ऋग्विशेषस्य वाचकः। तत्र च धाय्येति न सर्वा सामिधेन्युच्यते। किं तर्हि? काचिदेव। रूढिशब्दो ह्ययम्। तथा चासामिधेन्यामपि दृश्यते — 'धाय्याः शंसत्यग्निर्नेता त्वं सोमक्रतुभिः' (ऐ० ब्रा० ३.१८; ५.१) इति॥

## क्रतौ कुण्डपाय्यसंचाय्यौ ॥ १३० ॥

कुण्डपाय्य संचाय्य इत्येतौ शब्दौ निपात्येते क्रतावभिधेये। कुण्डशब्दे तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत् प्रत्ययो निपात्यते युक् च। कुण्डेन पीयतेऽस्मिन् सोम इति कुण्डपाय्यः (ऋ० ८.१७.१३) क्रतुः। 'यतोऽनावः' (६.१.२१३) इति स्वरः। संपूर्वाच्चिनोतेर्ण्यदायादेशौ निपात्येते। संचीयतेऽस्मिन् सोम इति संचाय्यः क्रतुः। क्रताविति किम्? कुण्डपानम्। संचयः[1]॥

## अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३१ ॥

परिचाय्य उपचाय्य समूह्य इत्येते शब्दा निपात्यन्तेऽग्नावभिधेये। परिपूर्वाद् उपपूर्वाच्च चिनोतेर्ण्यदायादेशौ निपात्येते। परिचाय्यम् (तै० सं० ५.४.११.३)। उपचाय्यः (मै० सं० ३.४.७)। संपूर्वाद् वहेः संप्रसारणं दीर्घत्वं च निपात्यते। समूह्यं चिन्वीत पशुकामः (तै० सं० ५.४.११.२)। अग्नाविति किम्? परिचेयम्। उपचेयम्। संवाह्यम्॥

## चित्याग्निचित्ये च ॥ १३२ ॥

चित्यशब्दोऽग्निचित्याशब्दश्च निपात्येते। चीयतेऽसौ चित्योऽग्निः। अग्निचयनमेवाग्निचित्या (शा० ब्रा० १९.७)। भावे यकारप्रत्ययस्तुक् च। तेनान्तोदात्तत्वं भवति। अग्नावित्येव—चेयमन्यत्॥

## ण्वुल्तृचौ ॥ १३३ ॥

धातोरिति वर्तते। सर्वधातुभ्यो ण्वुल्तृचौ प्रत्ययौ भवतः। कारकः। कर्ता। हारकः। हर्ता। चकारः सामान्यग्रहणार्थः। 'तुश्छन्दसि' (५.३.५९), 'तुरिष्ठेमेयस्सु' (६.४.१५४) इति॥

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ १३४ ॥

आदिशब्दः प्रत्येकं संबध्यते। त्रिभ्यो गणेभ्यस्त्रयः प्रत्यया यथासंख्यं भवन्ति।

---

१ - 'संचेयः' इत्यपपाठो मुद्रितेषु।

नन्द्यादिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्योऽच्। नन्दिग्रहिपचादयश्च न धातुपाठतः संनिविष्टा गृह्यन्ते। किं तर्हि ? नन्दनरमणेत्येवमादिषु प्रातिपदिकगणेष्वपोद्धृत्य प्रकृतयो निर्दिश्यन्ते। नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् ( ग० सू० २२ )। नन्दनः। वाशनः। मदनः। दूषणः। साधनः। वर्धनः। शोभनः। रोचनः। सहितपिदमेः संज्ञायाम् ( ग० सू० २३ )। सहनः। तपनः। दमनः। जल्पनः। रमणः। दर्पणः। संक्रन्दनः। संकर्षणः। संहर्षणः। जनार्दनः। यवनः। मधुसूदनः। विभीषणः। लवणः। निपातनाण् णत्वम्। वित्तविनाशनः। कुलदमनः। शत्रुदमनः। इति नन्द्यादिः॥ ग्रह। उत्सह। उद्दस। उद्भास। स्था। मन्त्र। संमर्द। ग्राही। उत्साही। उद्दासी। उद्भासी। स्थायी। मन्त्री। संमर्दी। रक्षश्रुवसवपशां नौ ( ग० सू० २४ )। निरक्षी। निश्रावी। निवासी। निवापी। निशायी। याचिव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धा-नाम् ( ग० सू० २५ )। अयाची। अव्याहारी। असंव्याहारी। अव्राजी। अवादी। अवासी। अचामचित्तकर्तृकाणाम् ( ग० सू० २६ )। प्रतिषिद्धानामित्येव—अकारी। अहारी। अविनायी। अविशायी। विशयी विषयी देशे ( ग० सू० २७ )। विशयी, विषयी देशः। अभिभावी भूते ( ग० सू० २८ )। अभिभावी। अपराधी। उपरोधी। परिभावी। परिभवी। इति ग्रह्यादिः॥ पच। वच। वप। वद। चल। शल। तप। पत। नदट्। भषट्। वस। गरट्। प्लवट्। चरट्। तरट्। चोरट्। ग्राहट्। जर। मर। क्षर। क्षम। सूदट्। देवट्। मोदट्। सेव। मेष। कोप। मेधा। नर्त। व्रण। दर्श। दंश। दम्भ। जारभर। श्वपच। पचादिराकृतिगणः।

अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः।
अण्बाधनार्थमेव स्यात् सिध्यन्ति श्वपचादयः॥

## इगुपधज्ञाप्रीकिरः कः ॥ १३५ ॥

इगुपधेभ्यो जानातेः प्रीणातेः किरतेश्च कप्रत्ययो भवति। विक्षिपः। विलिखः। बुधः। कृशः। जानातीति ज्ञः। प्रीणातीति प्रियः। किरतीति किरः। देवसेवमेषादयः पचादौ पठितव्याः॥

## आतश्चोपसर्गे ॥ १३६ ॥

आकारान्तेभ्यो धातुभ्य उपसर्ग उपपदे कप्रत्ययो भवति। णस्यापवादः। प्रस्थः। सुग्लः। सुम्लः॥

## पाघ्राध्माधेट्दृशः शः ॥ १३७ ॥

पादिभ्यो धातुभ्य उपसर्ग उपपदे शप्रत्ययो भवति। उत्पिबः। विपिबः। उज्जिघ्रः।

विजिघ्रः। उद्धमः। विधमः। उद्धयः। विधयः। उत्पश्यः। विपश्यः। उपसर्ग इति केचिन्नानुवर्तयन्ति। पश्यतीति पश्यः ( छा० उप० ७.२६.२ )॥ जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यः॥ व्याघ्रः॥

## अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥१३८॥

अनुपसर्गेभ्यो लिम्पादिभ्यः शप्रत्ययो भवति। लिम्पतीति लिम्पः। विन्दतीति विन्दः। धारयतीति धारयः। पारयतीति पारयः। वेदयतीति वेदयः। उदेजयतीत्युदेजयः। चेतयतीति चेतयः। सातिः सौत्रो धातुः। सातयः। साहयः। अनुपसर्गादिति किम्? प्रलिपः॥ नौ लिम्पेरिति वक्तव्यम्॥ निलिम्पा नाम देवाः॥ गवादिषु विन्देः संज्ञायाम्॥ गोविन्दः। अरविन्दः॥

## ददातिदधात्योर्विभाषा ॥ १३९ ॥

दाञो धाञश्च विभाषा शप्रत्ययो भवति। णस्यापवादः। ददः, दायः। दधः, धायः। अनुपसर्गादित्येव—प्रदः। प्रधः॥

## ज्वलितिकसन्तेभ्यो णः ॥ १४० ॥

इतिशब्द आद्यर्थः। 'ज्वल दीप्तौ' ( भ्वा० ५७३ ) इत्येवमादिभ्यो धातुभ्यः 'कस गतौ' ( भ्वा० ५९९ ) इत्येवमन्तेभ्यो विभाषा णप्रत्ययो भवति। अचोऽपवादः। ज्वालः, ज्वलः। चालः, चलः। अनुपसर्गादित्येव—प्रज्वलः॥ तनोतेर्णस्योपसंख्यानं कर्तव्यम्॥ अवतनोतीत्यवतानः॥

## श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ॥ १४१ ॥

अनुपसर्गादिति, विभाषेति च निवृत्तम्। श्यैङ आकारान्तेभ्यश्च धातुभ्यः, व्यध, आस्रु, संस्रु, अतीण्, अवसा, अवहृ, लिह, श्लिष, श्वस् इत्येतेभ्यश्च णप्रत्ययो भवति। आकारान्तत्वादेव श्यायतेः प्रत्यये सिद्धे पुनर्वचनं बाधकबाधनार्थम्। उपसर्गे कं बाधित्वायमेव भवति। अवश्यायः। प्रतिश्यायः। दायः। धायः। व्याधः। आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः॥

## दुन्योरनुपसर्गे ॥ १४२ ॥

दुनोतेर्नयतेश्चानुपसर्गे णप्रत्ययो भवति। दुनोतीति दावः। नयतीति नायः। अनुपसर्ग इति किम्? प्रदवः। प्रणयः॥

## विभाषा ग्रहः ॥ १४३ ॥

विभाषा ग्रहेर्धातोर्णप्रत्ययो भवति। अचोऽपवादः। ग्राहः, ग्रहः। व्यवस्थित-विभाषा चेयम्। जलचरे नित्यं ग्राहः। ज्योतिषि नेष्यते, तत्र ग्रह एव॥ भवतेश्चेति वक्तव्यम्॥ भवतीति भावः, भवः॥

## गेहे कः ॥ १४४ ॥

ग्रहेर्धातोः कप्रत्ययो भवति गेहे कर्तरि। गृहं वेश्म। तात्स्थ्याद् दाराश्च। गृह्णन्तीति गृहा दाराः। गृहाणि वेश्मानि॥

## शिल्पिनि ष्वुन् ॥ १४५ ॥

धातोः ष्वुन् प्रत्ययो भवति शिल्पिनि कर्तरि॥ नृतिखनिरञ्जिभ्यः परिगणनं कर्तव्यम्॥ नर्तकः। खनकः। रजकः। नर्तकी। खनकी। रजकी। रञ्जेरनुनासिक-लोपश्च॥

## गस्थकन् ॥ १४६ ॥

गायतेस्थकन् प्रत्ययो भवति शिल्पिनि कर्तरि। गाथकः। गाथिका॥

## ण्युट् च ॥ १४७ ॥

चकारेण ग इत्यनुकृष्यते। गायतेर्ण्युट् प्रत्ययो भवति शिल्पिनि कर्तरि। गायनः। गायनी। योगविभाग उत्तरार्थः॥

## हश्च व्रीहिकालयोः ॥ १४८ ॥

चकारेण ण्युडनुकृष्यते। जहातेर्जिहातेश्च धातोर्ण्युट् प्रत्ययो भवति व्रीहौ काले च कर्तरि। हायना नाम व्रीहयः, जहत्युदकमिति कृत्वा। काले—हायनः संवत्सरः, जिहीते भावानिति कृत्वा॥

## प्रुसृल्वः समभिहारे वुन् ॥ १४९ ॥

प्रु सृ लू इत्येतेभ्यो धातुभ्यः समभिहारे वुन् प्रत्ययो भवति। प्रवकः। सरकः। लवकः। समभिहारग्रहणेनात्र साधुकारित्वं लक्ष्यते। साधुकारिणि वुन्विधानात् सकृदपि यः सुष्ठु करोति, तत्र भवति। बहुशो यो दुष्टं करोति, तत्र न भवति॥

## आशिषि च ॥ १५० ॥

आशिषि गम्यमानायां धातुमात्राद् वुन् प्रत्ययो भवति। जीवतात् जीवकः। नन्दतात् नन्दकः। आशीः प्रार्थनाविशेषः। स चेह क्रियाविषयः। अमुष्याः क्रियायाः कर्ता भवेदित्येवमाशास्यते ॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य प्रथमः पादः ॥



# ॥ तृतीयाध्यायस्य द्वितीयः पादः ॥

## कर्मण्यण् ॥ १ ॥

त्रिविधं कर्म—निर्वर्त्यम्, विकार्यम्, प्राप्यं चेति। सर्वत्र कर्मण्युपपदे धातोरण् प्रत्ययो भवति। निर्वर्त्यं तावत्—कुम्भकारः। नगरकारः। विकार्यम्—काण्डलावः। शरलावः। प्राप्यम्—वेदाध्यायः। चर्चापारः। ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोतीत्यत्र न भवति, अनभिधानात् ॥ शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ॥ मांसशीलः। मांसशीला। मांसकामः। मांसकामा। मांसभक्षः। मांसभक्षा। कल्याणाचारः। कल्याणाचारा ॥ ईक्षिक्षमिभ्यां चेति वक्तव्यम् ॥ सुखप्रतीक्षः। सुखप्रतीक्षा। बहुक्षमः। बहुक्षमा ॥

## ह्वावामश्च ॥ २ ॥

'ह्वेञ् स्पर्धायां शब्दे च' ( भ्वा० ७३४ ), 'वेञ् तन्तुसन्ताने' ( भ्वा० ७३२ ), 'माङ् माने' ( जु० ६ ) इत्येतेभ्यश्च कर्मण्युपपदेऽण् प्रत्ययो भवति। कप्रत्ययस्यापवादः। स्वर्गह्वायः। तन्तुवायः। धान्यमायः॥

## आतोऽनुपसर्गे कः ॥ ३ ॥

आकारान्तेभ्योऽनुपसर्गेभ्यः कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। गोदः। कम्बलदः। पार्ष्णित्रम्। अङ्गुलित्रम्। अनुपसर्ग इति किम्? गोसंदायः। वडवासंदायः॥

## सुपि स्थः ॥ ४ ॥

सुबन्त उपपदे तिष्ठतेः कप्रत्ययो भवति। समस्थः। विषमस्थः। अत्र योगविभागः कर्तव्यः, सुपीति। सुप्याकारान्तेभ्यः कप्रत्ययो भवति। द्वाभ्यां पिबतीति द्विपः। पादपः। कच्छपः। ततः स्थ इति। स्थश्च सुपि कप्रत्ययो भवति। किमर्थमिदम् ? कर्तरि पूर्वयोगः। अनेन भावेऽपि यथा स्यात्। आखूनामुत्त्थानम्, आखूत्त्थः। शलभोत्त्थः। इत उत्तरं कर्मणीति च सुपीति च द्वयमप्यनुवर्तते। तत्र सकर्मकेषु धातुषु कर्मणीत्येतदुपतिष्ठते, अन्यत्र सुपीति ॥

## तुन्दशोकयोः परिमृजापनुदोः ॥ ५ ॥

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोर्धात्वोः कप्रत्ययो भवति। तुन्दपरिमृज आस्ते। शोकापनुदः पुत्रो जातः॥ आलस्यसुखाहरणयोरिति वक्तव्यम् ॥ अलसस्तुन्दपरिमृज उच्यते। तुन्दपरिमार्ज एवान्यः। सुखस्याहर्ता शोकापनुदः। शोकापनोद एवान्यः॥ कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ॥ मूलानि विभुजतीति मूलविभुजो रथः। नखमुचानि धनूंषि। काकगुहास्तिलाः। कौ मोदते कुमुदम् ॥

## प्रे दाज्ञः ॥ ६ ॥

सोपसर्गार्थ आरम्भः। ददातेर्जानातेश्च धातोः प्रेणोपसृष्टात् कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। सर्वप्रदः। पथिप्रज्ञः। प्र इति किम् ? गोसंदायः॥

## समि ख्यः ॥ ७ ॥

सोपसर्गार्थ आरम्भः। संपूर्वात् ख्या इत्येतस्माद् धातोः कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। गां संचष्टे गोसंख्यः॥

## गापोष्टक् ॥ ८ ॥

कर्मण्यनुपसर्ग इति वर्तते। गायतेः पिबतेश्च धातोः कर्मण्युपपदेऽनुपसर्गे टक् प्रत्ययो भवति। कस्यापवादः। शक्रं गायति शक्रगः। सामगः। शक्रगी। सामगी ॥ सुराशीध्वोः पिबतेरिति वक्तव्यम् ॥ सुरापः। सुरापी। शीधुपः। शीधुपी। सुराशीध्वोरिति किम् ? क्षीरपा ब्राह्मणी। पिबतेरिति किम् ? सुरां पातीति सुरापा। अनुपसर्ग इत्येव— शक्रसंगायः। सामसंगायः॥ बहुलं छन्दसीति वक्तव्यम् ॥ या ब्राह्मणी सुरापी भवति, नैनां देवाः पतिलोकं नयन्ति। या ब्राह्मणी सुरापा भवति, नैनां देवाः पतिलोकं नयन्ति ॥

## हरतेरनुद्यमनेऽच् ॥ ९ ॥

हरतेर्धातोरनुद्यमने वर्तमानात् कर्मण्युपपदेऽच् प्रत्ययो भवति। अणोऽपवादः। उद्यमनमुत्क्षेपणम्। अंशं हरतीत्यंशहरः। रिक्थहरः। अनुद्यमन इति किम् ? भारहारः ॥ अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम् ॥ शक्तिग्रहः। लाङ्गलग्रहः। अङ्कुशग्रहः। यष्टिग्रहः। तोमरग्रहः। घटग्रहः। घटीग्रहः। धनुर्ग्रहः ॥ सूत्रे च धार्यर्थे ॥ सूत्रग्रहः। सूत्रं धारयतीत्यर्थः। सूत्रग्राह एवान्यः ॥

## वयसि च ॥ १० ॥

वयसि गम्यमाने हरतेः कर्मण्युपपदेऽच् प्रत्ययो भवति। उद्यमनार्थोऽयमारम्भः। कालकृता शरीरावस्था यौवनादिर्वयः। यदुद्यमनं क्रियमाणं संभाव्यमानं वा वयो गमयति, तत्रायं विधिः। अस्थिहरः श्वा। कवचहरः क्षत्रियकुमारः ॥

## आङि ताच्छील्ये ॥ ११ ॥

आङ्पूर्वाद् हरतेः कर्मण्युपपदेऽच् प्रत्ययो भवति ताच्छील्ये गम्यमाने। ताच्छील्यं तत्स्वभावता। पुष्पाहरः। फलाहरः। पुष्पाद्याहरणे स्वाभाविकी फलानपेक्षा प्रवृत्तिरस्येत्यर्थः। ताच्छील्य इति किम्? भारमाहरतीति भाराहारः ॥

## अर्हः ॥ १२ ॥

'अर्ह पूजायाम्' ( भ्वा० ४९२ ) अस्माद् धातोः कर्मण्युपपदेऽच् प्रत्ययो भवति। अणोऽपवादः। स्त्रीलिङ्गे विशेषः। पूजार्हा। गन्धार्हा। मालार्हा ॥

## स्तम्बकर्णयो रमिजपोः ॥ १३ ॥

स्तम्ब कर्ण इत्येतयोः सुबन्तयोरुपपदयोर्यथासंख्यं रमिजपोर्धात्वोरच् प्रत्ययो भवति। रमेरकर्मकत्वाज् जपेः शब्दकर्मकत्वात् कर्म न संभवतीति सुपीत्येतदिहाभिसंबध्यते ॥ हस्तिसूचकयोरिति वक्तव्यम् ॥ स्तम्बे रमत इति स्तम्बेरमो हस्ती। कर्णे जपतीति कर्णेजपः सूचकः। हस्तिसूचकयोरिति किम् ? स्तम्बे रन्ता। कर्णे जपिता मशकः ॥

## शमि धातोः संज्ञायाम् ॥ १४ ॥

शम्युपपदे धातुमात्रात् संज्ञायां विषयेऽच् प्रत्ययो भवति। शंकरः। शंभवः। शंवदः। धातुग्रहणं किं यावता धातोरिति वर्तत एव ? शमि संज्ञायामिति सिद्धे धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्। शंकरा नाम परिव्राजिका। शंकरा नाम

शकुनिका। तच्छीला च॥

## अधिकरणे शेतेः ॥ १५ ॥

सुपीति संबध्यते। शेतेर्धातोरधिकरणे सुबन्त उपपदेऽच् प्रत्ययो भवति। खे शेते खशयः। गर्तशयः ॥ पार्श्वादिषूपसंख्यानम् ॥ पार्श्वाभ्यां शेते पार्श्वशयः। उदरशयः। पृष्ठशयः ॥ दिग्धसहपूर्वाच्च ॥ दिग्धेन सह शेते दिग्धसहशयः ॥ उत्तानादिषु कर्तृषु ॥ उत्तानः शेते उत्तानशयः। अवमूर्धा शेते अवमूर्धशयः ॥ गिरौ डश्छन्दसि ॥ गिरौ शेते, गिरिश ( मा० सं० १६.४ )॥

## चरेष्टः ॥ १६ ॥

अधिकरण इति वर्तते। चरेर्धातोरधिकरणे सुबन्त उपपदे टप्रत्ययो भवति। कुरुषु चरतीति कुरुचरः। मद्रचरः। कुरुचरी। मद्रचरी। प्रत्ययान्तरकरणं ङीबर्थम्॥

## भिक्षासेनादायेषु च ॥ १७ ॥

अनधिकरणार्थ आरम्भः। भिक्षा सेना आदाय इत्येतेषूपपदेषु चरेर्धातोष्टप्रत्ययो भवति। भिक्षाचरः। सेनाचरः। आदायचरः॥

## पुरोऽग्रतोऽग्रेषु सर्तेः ॥ १८ ॥

पुरस्, अग्रतस्, अग्रे इत्येतेषूपपदेषु सर्तेर्धातोष्टप्रत्ययो भवति। पुरः सरति पुरःसरः। अग्रतःसरः। अग्रेसरः॥

## पूर्वे कर्तरि ॥ १९ ॥

पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेर्धातोष्टप्रत्ययो भवति। पूर्वः सरतीति पूर्वसरः। कर्तरीति किम् ? पूर्वं देशं सरतीति पूर्वसारः॥

## कृञो हेतुताच्छील्यानुलोम्येषु ॥ २० ॥

कर्मण्युपपदे करोतेर्धातोष्टप्रत्ययो भवति हेतौ, ताच्छील्ये, आनुलोम्ये च गम्यमाने। हेतुरैकान्तिकं कारणम्। ताच्छील्यं तत्स्वभावता। आनुलोम्यमनुकूलता। हेतौ तावत्—शोककरी कन्या। यशस्करी विद्या। कुलकरं धनम्। ताच्छील्ये—श्राद्धकरः। अर्थकरः। आनुलोम्ये—प्रैषकरः। वचनकरः। एतेष्विति किम् ? कुम्भकारः। नगरकारः॥

## दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥ २१ ॥

कर्मणि सुपीति च द्वयमप्यनुवर्तते। तत्र यथायोगं सम्बन्धः। दिवादिषूपपदेषु करोतेर्धातोष्टप्रत्ययो भवति। अहेत्वाद्यर्थ आरम्भः। दिवाशब्दोऽधिकरणवचनः सुपीत्यस्य विशेषणम्। दिवा करोति प्राणिनश्चेष्टायुक्तानिति दिवाकरः। विभां करोतीति विभाकरः। निशाकरः। प्रभाकरः। भास्करः। सकारस्य निपातनाद् विसर्जनीयजिह्वामूलीयौ न भवतः। कारकरः। अन्तकरः। अनन्तकरः। आदिकरः। बहुकरः। नान्दीकरः। किंकरः। लिपिकरः। लिबिकरः। बलिकरः। भक्तिकरः। कर्तृकरः। चित्रकरः। क्षेत्रकरः। संख्या—एककरः। द्विकरः। त्रिकरः। जङ्घाकरः। बाहुकरः। अहस्करः। यत्करः। तत्करः। धनुष्करः। अरुष्करः॥ किंयत्तद्बहुषु कृञोऽज्विधानम्॥ किंकरा। यत्करा। तत्करा। बहुकरा। अथवाजादिषु[1] पाठः करिष्यते॥

## कर्मणि भृतौ ॥ २२ ॥

कर्मणीति स्वरूपग्रहणम्। कर्मशब्द उपपदे कर्मवाचिनि करोतेष्टप्रत्ययो भवति भृतौ गम्यमानायाम्। भृतिर्वेतनम्, कर्मनिर्वेशः। कर्म करोतीति कर्मकरः। भृतक इत्यर्थः। भृताविति किम् ? कर्मकारः॥

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २३ ॥

शब्दादिषूपपदेषु करोतेष्टप्रत्ययो न भवति। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकारः। श्लोककारः। कलहकारः। गाथाकारः। वैरकारः। चाटुकारः। सूत्रकारः। मन्त्रकारः। पदकारः॥

## स्तम्बशकृतोरिन् ॥ २४ ॥

स्तम्ब शकृत् इत्येतयोः कर्मणोरुपपदयोरिन् प्रत्ययो भवति॥ व्रीहिवत्सयोरिति वक्तव्यम्॥ स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः। व्रीहिवत्सयोरिति किम् ? स्तम्बकारः। शकृत्कारः॥

## हरतेर्दृतिनाथयोः पशौ ॥ २५ ॥

दृति नाथ इत्येतयोः कर्मणोरुपपदयोर्हरतेर्धातोः पशौ कर्तरि इन् प्रत्ययो भवति।

---

१ - 'पचादिषु' इति पद०।

दृतिं हरति दृतिहरिः पशुः। नाथहरिः पशुः। पशाविति किम् ? दृतिहारः। नाथहारः॥

## फलेग्रहिरात्मंभरिश्च ॥ २६ ॥

फलेग्रहिः आत्मम्भरिः इत्येतौ शब्दौ निपात्येते। फलशब्दस्य उपपदस्यैकारान्तत्वमिन्प्रत्ययश्च ग्रहेर्निपात्यते। फलानि गृह्णातीति फलेग्रहिर्वृक्षः। आत्मशब्दस्योपपदस्य मुमागम इन्प्रत्ययश्च भृञो निपात्यते। आत्मानं बिभर्ति आत्मम्भरिः। अनुक्तसमुच्चयार्थश्चकारः। कुक्षिम्भरिः। उदरम्भरिः॥

## छन्दसि वनसनरक्षिमथाम् ॥ २७ ॥

'वन षण संभक्तौ' ( भ्वा० ३१३ ) 'रक्ष पालने' ( भ्वा० ४४० ) 'मथे विलोडने' ( भ्वा० ५८७ ) एतेभ्यः कर्मण्युपपदे छन्दसि विषय इन् प्रत्ययो भवति। ब्रह्मवनिं त्वा क्षत्रवनिम् ( तै० सं० १.३.१.२ )। गोसनिं वाचमुदेयम् ( शौ० सं० ३.२०.१० )। यौ पथिरक्षी श्वानौ ( शौ० सं० ८.१.९ )। हविर्मथीनामभ्या३ विवासताम् ( ऋ० ७.१०४.२१ )॥

## एजेः खश् ॥ २८ ॥

'एजृ कम्पने' ( भ्वा० १४३ ) इत्यस्माण् ण्यन्तात् कर्मण्युपपदे खश् प्रत्ययो भवति। खकारो मुमर्थः। शकारः सार्वधातुकसंज्ञार्थः। अङ्गमेजयति अङ्गमेजयः। जनमेजयः ॥ खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातीनामुपसंख्यानम् ॥ वातमजा मृगाः। शुनिन्धयः। तिलन्तुदः। शर्धञ्जहा माषाः॥

## नासिकास्तनयोर्ध्माधेटोः ॥ २९ ॥

नासिकास्तनयोः कर्मणोरुपपदयोर्ध्माधेटोर्धात्वोः खश् प्रत्ययो भवति। यथासंख्यमत्र नेष्यते ॥ स्तने धेटः ॥ स्तनन्धयः ॥ नासिकायां तु ध्मश्च धेटश्च ॥ नासिकन्धमः। नासिकन्धयः। तच्चैतन्नासिकास्तनयोरिति लक्षणव्यभिचारचिह्नादल्पाच्तरस्यापूर्वनिपातनाल्लभ्यते। धेटष्टित्त्वात् स्त्रियां ङीप् प्रत्ययो भवति। स्तनन्धयी॥

## नाडीमुष्ट्योश्च ॥ ३० ॥

नाडी मुष्टि इत्येतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् प्रत्ययो भवति। अत्रापि घ्यन्तस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नम्, तेन संख्यातानुदेशो न भवति। नाडिन्धमः। मुष्टिन्धमः। नाडिन्धयः। मुष्टिन्धयः। अनुक्तसमुच्चयार्थश्चकारः। घटिन्धमः। घटिन्धयः। खारिन्धमः। खारिन्धयः। वातन्धमः पर्वतः। वातन्धयः॥

## उदि कूले रुजिवहोः ॥ ३१ ॥

'रुजो भङ्गे' ( तुदा० १२६ ) 'वह प्रापणे' ( भ्वा० ७३० ) इत्येताभ्यामुत्पूर्वाभ्यां कूले कर्मण्युपपदे खश् प्रत्ययो भवति। कूलमुद्रुजतीति कूलमुद्रुजो रथः। कूलमुद्वहः॥

## वहाभ्रे लिहः ॥ ३२ ॥

वह अभ्र इत्येतयोः कर्मणोरुपपदयोर्लिहेर्धातोः खश् प्रत्ययो भवति। वहं लेढीति वहंलिहो गौः। अभ्रंलिहो वायुः॥

## परिमाणे पचः ॥ ३३ ॥

परिमाणं प्रस्थादि, तस्मिन् कर्मण्युपपदे पचेः खश् प्रत्ययो भवति। प्रस्थं पचति प्रस्थंपचा स्थाली। द्रोणम्पचः। खारिम्पचः कटाहः॥

## मितनखे च ॥ ३४ ॥

मित नख इत्येतयोः कर्मणोरुपपदयोः पचेः खश् प्रत्ययो भवति। अपरिमाणार्थ आरम्भः। मितं पचति मितम्पचा ब्राह्मणी। नखम्पचा यवागूः॥

## विध्वरुषोस्तुदः ॥ ३५ ॥

विधु अरुस् इत्येतयोः कर्मणोरुपपदयोः तुदेर्धातोः खश् प्रत्ययो भवति। विधुन्तुदो राहुः। अरुन्तुदः॥

## असूर्यललाटयोर्दृशितपोः ॥ ३६ ॥

असूर्य ललाट इत्येतयोः कर्मणोरुपपदयोर्दृशितपोर्धात्वोः खश् प्रत्ययो भवति। असूर्यम्पश्या राजदाराः। ललाटन्तप आदित्यः। असूर्य इति चासमर्थसमासोऽयम्, दृशिना नञः संबन्धात्, सूर्यं न पश्यन्तीति। गुप्तिपरं चैतत्। एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीति॥

## उग्रंपश्येरंमदपाणिंधमाश्च ॥ ३७ ॥

उग्रम्पश्य इरम्मद पाणिन्धम इत्येते शब्दा निपात्यन्ते। उग्रं पश्यतीत्युग्रम्पश्यः। इरया माद्यतीतीरम्मदः। पाणयो ध्मायन्त एष्विति पाणिन्धमाः पन्थानः॥

## प्रियवशे वदः खच् ॥ ३८ ॥

प्रिय वश इत्येतयोः कर्मणोरुपपदयोर्वदेर्धातोः खच् प्रत्ययो भवति। प्रियं वदतीति प्रियंवदः। वशंवदः। चकारः 'खचि ह्रस्वः' ( ६.४.९४ ) इति विशेषणार्थः। खकारो मुमर्थः। प्रत्ययान्तरकरणमुत्तरार्थम् ॥ खच्प्रकरणे गमेः सुप्युपसंख्यानम् ॥ मितंगमो हस्ती। मितंगमा हस्तिनी ॥ विहायसो विह च ॥ विहायसा गच्छति विहंगमः ॥ खच्च डिद् वा वक्तव्यः ॥ विहंगः, विहंगमः ॥ डे च विहायसो विहादेशो वक्तव्यः ॥ विहगः ॥

## द्विषत्परयोस्तापेः ॥ ३९ ॥

द्विषत्परयोः कर्मणोरुपपदयोस्तापेर्धातोः खच् प्रत्ययो भवति। 'तप दाहे' ( चुरा० २४२ ) चुरादिः, 'तप संतापे' ( भ्वा० ७११ ) भ्वादिः। द्वयोरपि ग्रहणम्। द्विषन्तं तापयति द्विषन्तपः। परन्तपः। द्विषत्परयोरिति द्वितकारको निर्देशः। तेन स्त्रियां न भवति। द्विषतीं तापयति द्विषतीतापः ॥

## वाचि यमो व्रते ॥ ४० ॥

वाक्शब्दे कर्मण्युपपदे यमेर्धातोः खच् प्रत्ययो भवति व्रते गम्यमाने। व्रत इति शास्त्रितो नियम उच्यते। वाचंयम आस्ते। व्रत इति किम् ? वाग्यामः ॥

## पूःसर्वयोर्दारिसहोः ॥ ४१ ॥

पुर् सर्व इत्येतयोः कर्मणोरुपपदयोर्यथासंख्यं दारिसहोर्धात्वोः खच् प्रत्ययो भवति। पुरं दारयति पुरंदरः। सर्वंसहो राजा ॥ भगे च दारेरिति वक्तव्यम् ॥ भगन्दरः ॥

## सर्वकूलाभ्रकरीषेषु कषः ॥ ४२ ॥

सर्व कूल अभ्र करीष इत्येतेषु कर्मसूपपदेषु कषेर्धातोः खच् प्रत्ययो भवति। सर्वं कषति सर्वंकषः खलः। कूलंकषा नदी। अभ्रंकषो गिरिः। करीषंकषा वात्या ॥

## मेघर्तिभयेषु कृञः ॥ ४३ ॥

मेघ ऋति भय इत्येतेषु कर्मसूपपदेषु कृञः खच् प्रत्ययो भवति। मेघंकरः। ऋतिंकरः। भयंकरः। उपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयति। अभयंकरः ॥

## क्षेमप्रियमद्रेऽण् च ॥ ४४ ॥

क्षेम प्रिय मद्र इत्येतेषु कर्मसूपपदेषु करोतेरण् प्रत्ययो भवति, चकारात् खच्च। क्षेमकारः। क्षेमंकरः। प्रियकारः। प्रियंकरः। मद्रकारः। मद्रंकरः। वेति वक्तव्ये पुनरण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम् ॥

## आशिते भुवः करणभावयोः ॥ ४५ ॥

अत्र सुपीत्युपतिष्ठते। आशितशब्दे सुबन्त उपपदे भवतेर्धातोः करणे भावे चार्थे खच् प्रत्ययो भवति। आशितो भवत्यनेन आशितंभव ओदनः। भावे—आशितस्य भवनम् आशितंभवं वर्तते॥

## संज्ञायां भृतृवृजिधारिसहितपिदमः ॥ ४६ ॥

कर्मणीति सुपीति च प्रकृतं संज्ञावशाद् यथासंभवं संबध्यते। भृ तृ वृ जि धारि सहि तपि दम् इत्येतेभ्यो धातुभ्यः संज्ञायां विषये खच् प्रत्ययो भवति। विश्वम्भरा वसुन्धरा। रथंतरं साम। पतिंवरा कन्या। शत्रुंजयो हस्ती। युगंधरः पर्वतः। शत्रुंसहः। शत्रुंतपः। अरिंदमः। संज्ञायामिति किम्? कुटुम्बं बिभर्तीति कुटुम्बभारः॥

## गमश्च ॥ ४७ ॥

गमेर्धातोः सुप्युपपदे संज्ञायां विषये खच् प्रत्ययो भवति। सुतंगमो नाम, यस्य पुत्रः सौतंगमिः। योगविभाग उत्तरार्थः॥

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ४८ ॥

संज्ञायामिति नानुवर्तते। अन्त अत्यन्त अध्वन् दूर पार सर्व अनन्त इत्येतेषु कर्मसूपपदेषु गमेर्डप्रत्ययो भवति। अन्तगः। अत्यन्तगः। अध्वगः। दूरगः। पारगः। सर्वगः। अनन्तगः। डकारः टिलोपार्थः। डित्यभस्याप्यनुबन्धकरणसामर्थ्यादिति ॥ डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम् ॥ सर्वत्रगः। पन्नगः॥ उरसो लोपश्च॥ उरसा गच्छतीत्युरगः ॥ सुदुरोरधिकरणे ॥ सुखेन गच्छत्यस्मिन्निति सुगः। दुर्गः ॥ निरो देशे॥ निर्गो देशः। अपर आह—॥ डप्रकरणेऽन्येष्वपि दृश्यत इति॥ स्त्र्यगारगः। ग्रामगः। गुरुतल्पगः॥

## आशिषि हनः ॥ ४९ ॥

ड इति वर्तते। आशिषि गम्यमानायां हन्तेर्धातोः कर्मण्युपपदे डप्रत्ययो भवति। तिमिं वध्यात् तिमिहः। शत्रुहः। आशिषीति किम्? शत्रुघातः॥ दारावाहनोऽणन्तस्य च टः संज्ञायाम्॥ दारावुपपद आङ्पूर्वाद् हन्तेरण् प्रत्ययो भवति, अन्तस्य च टकारादेशो भवति, संज्ञायां विषये। दारु आहन्ति, दार्वाघाटः॥ चारौ वा॥ आङ्पूर्वाद् हन्तेश्चारावुपपदेऽण्, अन्तस्य वा टकारादेशः। चार्वाघाटः। चार्वाघातः ॥ कर्मणि समि च॥ कर्मण्युपपदे संपूर्वात् हन्तेर्धातोरण् प्रत्ययो भवति, अन्तस्य च वा टकारादेशः। वर्णान्

संहन्ति वर्णसंघाटः। वर्णसंघातः। पदानि संहन्ति पदसंघाटः। पदसंघातः॥

## अपे क्लेशतमसोः ॥ ५० ॥

अपपूर्वाद् हन्तेः क्लेशतमसोः कर्मणोरुपपदयोर्डप्रत्ययो भवति। क्लेशापहः पुत्रः। तमोऽपहः सूर्यः। अनाशीरर्थ आरम्भः॥

## कुमारशीर्षयोर्णिनिः ॥ ५१ ॥

हन इति वर्तते। कुमार शीर्ष इत्येतयोरुपपदयोर्हन्तेर्णिनिः प्रत्ययो भवति। कुमारघाती। शीर्षघाती। निपातनाच्छिरसः शीर्षभावः॥

## लक्षणे जायापत्योष्टक् ॥ ५२ ॥

हन्तेर्जायापत्योः कर्मणोरुपपदयोर्लक्षणवति कर्तरि टक् प्रत्ययो भवति। जायाघ्नो ब्राह्मणः। पतिघ्नी वृषली। अथ वा लक्षणे द्योत्ये टक् प्रत्ययः॥

## अमनुष्यकर्तृके च ॥ ५३ ॥

अमनुष्यकर्तृके वर्तमानाद् हन्तेर्धातोः कर्मण्युपपदे टक् प्रत्ययो भवति। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। श्लेष्मघ्नं मधु। पित्तघ्नं घृतम्। अमनुष्यकर्तृक इति किम्? आखुघातः शूद्रः। इह कस्माद् न भवति—चौरघातो हस्ती? 'कृत्यल्युटो बहुलम्' (३.३.११३) इति बहुलवचनादण् भवति॥

## शक्तौ हस्तिकपाटयोः ॥ ५४ ॥

शक्तौ गम्यमानायां हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेष्टक् प्रत्ययो भवति। मनुष्यकर्तृकार्थ आरम्भः। हस्तिनं हन्तुं शक्तो हस्तिघ्नो मनुष्यः। कं पाटयति प्रविशत इति कपाटघ्नश्चौरः। शक्ताविति किम्? विषेण हस्तिनं हन्ति हस्तिघातः॥

## पाणिघताडघौ शिल्पिनि ॥ ५५ ॥

पाणिघ ताडघ इत्येतौ शब्दौ निपात्येते शिल्पिनि कर्तरि। पाणि ताड इत्येतयोः कर्मणोरुपपदयोर्हन्तेर्धातोः टक्[1] प्रत्ययो भवति, तस्मिंश्च परतो हन्तेष्टिलोपो घत्वं च निपात्यते। पाणिघः। ताडघः। शिल्पिनीति किम्? पाणिघातः। ताडघातः॥ राजघ उपसंख्यानम्॥ राजानं हन्ति राजघः॥

---

१ - 'कः' इति बाल०।

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ५६ ॥

आढ्यादिषु कर्मसूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु करोतेर्धातोः करणे कारके ख्युन् प्रत्ययो भवति। च्वेर्विकल्पेन विधानाद् द्विविधाश्च्व्यर्थाः। च्व्यन्ता अच्व्यन्ताश्च। तत्र च्व्यन्ताः पर्युदस्यन्ते। अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम्। सुभगंकरणम्। स्थूलंकरणम्। पलितंकरणम्। नग्नंकरणम्। अन्धंकरणम्। प्रियंकरणम्। च्व्यर्थेष्विति किम् ? आढ्यं तैलेन कुर्वन्ति, अभ्यञ्जयन्तीत्यर्थः। प्रकृतेरविवक्षायामभूतप्रादुर्भावेऽपि प्रत्युदाहरणं भवति। अच्वाविति किम् ? आढ्यीकुर्वन्त्यनेन। ननु च ख्युना मुक्ते ल्युटा भवितव्यम्। न च ल्युटः ख्युनश्च विशेषोऽस्ति। तत्र किं प्रतिषेधेन ? एवं तर्हि प्रतिषेधसामर्थ्यात् ख्युन्यसति ल्युडपि न भवति, तेन ल्युटोऽप्ययमर्थतः प्रतिषेधः। उत्तरार्थश्च च्विप्रतिषेधः क्रियते॥

## कर्तरि भुवः खिष्णुच्खुकञौ ॥ ५७ ॥

आढ्यादिषु सुबन्तेषूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु भवतेर्धातोः कर्तरि कारके खिष्णुच् खुकञ् इत्येतौ प्रत्ययौ भवतः। अनाढ्य आढ्यो भवति आढ्यंभविष्णुः। आढ्यंभावुकः। सुभगंभविष्णुः। सुभगंभावुकः। स्थूलंभविष्णुः। स्थूलंभावुकः। पलितंभविष्णुः। पलितंभावुकः। नग्नंभविष्णुः। नग्नंभावुकः ( काठ० सं० २६.६ )। अन्धंभविष्णुः। अन्धंभावुकः। प्रियंभविष्णुः। प्रियंभावुकः। कर्तरीति किम् ? करणे मा भूत्। च्व्यर्थेष्वित्येव—आढ्यो भविता। अच्वावित्येव—आढ्यीभविता।

उदात्तत्वाद् भुवः सिद्धमिकारादित्वमिष्णुचः।
नञस्तु स्वरसिद्ध्यर्थम् इकारादित्वमिष्यते॥

## स्पृशोऽनुदके क्विन् ॥ ५८ ॥

स्पृशेर्धातोरनुदके सुबन्त उपपदे क्विन् प्रत्ययो भवति। ननु च सकर्मकत्वात् स्पृशेः कर्मैवोपपदं प्राप्नोति ? नैष दोषः। कर्तरीति पूर्वसूत्रादनुवर्तते, तत्कर्तृप्रचयार्थं विज्ञायते। सुबन्तमात्रे चोपपदे कर्तृप्रचयो लभ्यते। घृतं स्पृशति घृतस्पृक्। मन्त्रेण स्पृशति मन्त्रस्पृक्। जलेन स्पृशति जलस्पृक्। अनुदक इति किम् ? उदकस्पर्शः। नकारः 'क्विन्प्रत्ययस्य कुः' ( ८.२.६२ ) इति विशेषणार्थः॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ५९ ॥

ऋत्विगादयः पञ्चशब्दाः क्विन्प्रत्ययान्ता निपात्यन्ते। अपरे त्रयो धातवो निर्दिश्यन्ते। ऋतुशब्द उपपदे यजेर्धातोः क्विन् प्रत्ययो निपात्यते। ऋतौ यजति, ऋतुं वा यजति,

ऋतुप्रयुक्तो वा यजति ऋत्विक्। रूढिरेषा यथाकथंचिदनुगन्तव्या। धृषेः क्विन् प्रत्ययो द्विर्वचनमन्तोदात्तत्वं च निपात्यते। धृष्णोतीति दधृक्। सृजेः कर्मणि क्विन् अमागमश्च निपात्यते। सृजन्ति तामिति स्रक्। दिशेः कर्मणि क्विन् निपात्यते। दिशन्ति तामिति दिक्। उत्पूर्वात् स्निहः क्विन्नुपसर्गान्तलोपः षत्वं च निपात्यते। उष्णिक्। अञ्चु युजि क्रुञ्च इत्येतेषां धातूनां क्विन् प्रत्ययो भवति। निपातनैः सह निर्देशादत्रापि किञ्चिदलाक्षणिकं कार्यमस्ति। अञ्चतेः सुबन्तमात्र उपपदे क्विन् प्रत्ययो भवति। प्राङ्। प्रत्यङ्। उदङ्। युजेः क्रुञ्चेश्च केवलादेव। युङ्, युञ्जौ, युञ्जः। सोपपदात् तु 'सत्सूद्विष०' ( ३.२.६१ ) इत्यादिना क्विब् भवति। अश्वयुक्, अश्वयुजौ, अश्वयुजः। क्रुङ्, क्रुञ्चौ, क्रुञ्चः। नलोपः कस्माद् न भवति ? निपातनसाहचर्यात्॥

## त्यदादिषु दृशोऽनालोचने कञ् च॥ ६० ॥

त्यदादिषूपपदेषु दृशेर्धातोरनालोचनेऽर्थे वर्तमानात् कञ् प्रत्ययो भवति, चकारात् क्विन् च। त्यादृशः। त्यादृक्। तादृशः। तादृक्। यादृशः। यादृक्। कञो ञकारो विशेषणार्थः। ठक्ठञ्कञ् ( ४.१.१५ ) इति। अनालोचन इति किम् ? तं पश्यति तद्दर्शः। तादृगादयो हि रूढिशब्दप्रकारा नैवात्र दर्शनक्रिया विद्यते ॥ समानान्ययोश्चेति वक्तव्यम्॥ सदृशः। सदृक्। अन्यादृशः। अन्यादृक् ॥ दृशेः क्सश्च वक्तव्यः॥ तादृक्षः। यादृक्षः। सदृक्षः। अन्यादृक्षः। कीदृक्षः॥

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्॥ ६१ ॥

सुपीत्यनुवर्तते। कर्मग्रहणं तु 'स्पृशोऽनुदके क्विन्' ( ३.२.५८ ) इत्यतः प्रभृति न व्याप्रियते। सदादिभ्यो धातुभ्यः सुबन्त उपपद उपसर्गेऽप्यनुपसर्गेऽपि क्विप् प्रत्ययो भवति। उपसर्गग्रहणं ज्ञापनार्थम्—अन्यत्र सुब्ग्रहण उपसर्गग्रहणं न भवतीति। 'वदः सुपि क्यप् च' ( ३.१.१०६ ) इति। सू इति द्विषा साहचर्यात् सूतेरादादिकस्य ग्रहणम्, न सुवतेस्तौदादिकस्य। 'युजिर् योगे' ( रुधा० ७ ), 'युज समाधौ' ( दिवा० ६६ ) द्वयोरपि ग्रहणम्। 'विद ज्ञाने' ( अदा० ५७ ) 'विद सत्तायाम्' ( दिवा० ६० ) 'विद विचारणे' ( रुधा० १३ ) त्रयाणामपि ग्रहणम्। न लाभार्थस्य विदेः ( तुदा० १४१ ), अकारस्य विवक्षितत्वात्। सत्—शुंचिषत् ( ऋ० ४.४०.५ )। अन्तरिक्षसत् ( ऋ० ४. ४०.५ )। उंपसत् ( तै० सं० ६.२.३.२ )। सूः—अण्डसूः। शतसूः। प्रसूः ( तै० सं० ४.७.३.२ )। द्विष—मित्रद्विट्। प्रद्विट्। द्रुह—मित्रध्रुक्। प्रध्रुक्। दुह्—गोधुक्। प्रधुक्। युज्—अश्वयुक्। प्रयुक्। विद—वेदवित्। प्रवित्। ब्रह्मवित्। भिद—काष्ठभित्। प्रभित्। छिद—रज्जुच्छिद्। प्रच्छिद्। जि—शत्रुजित्। प्रजित्। नी—सेनानीः। प्रणीः। ग्रामणीः। अग्रणीः। कथमत्र णत्वम् ? 'स एषां ग्रामणीः' ( ५.२.

७८ ) इति निपातनात्। नयतेः 'पूर्वपदात् संज्ञायामगः' ( ८.४.३ ) इति णत्वम्। राज्—राट्। विराट्। सम्राट्। 'मो राजि समः क्वौ' ( ८.३.२५ ) इति मत्वम्। 'अन्येभ्योऽपि दृश्यते' ( ३.२.१७८ ), 'क्विप् च' ( ३.२.७६ ) इति सामान्येन वक्ष्यति तस्यैवायं प्रपञ्चः॥

## भजो ण्विः ॥ ६२ ॥

उपसर्गे सुपीति वर्तते। भजेर्धातोः सुबन्त उपपद उपसर्गेऽप्यनुपसर्गेऽपि ण्विप्रत्ययो भवति। अर्धं भजत अर्धभाक्। उपसर्गेऽपि—प्रभाक्॥

## छन्दसि सहः ॥ ६३ ॥

उपसर्गे सुपीत्येव। छन्दसि विषये सहेर्धातोः सुबन्त उपपदे ण्विप्रत्ययो भवति। तु॒रा॒षाट् ( ऋ० ३.४८.४ )। 'सहेः साडः सः' ( ८.३.५६ ) इति षत्वम्। 'अन्येषामपि दृश्यते' ( ६.३.१३७ ) इति दीर्घत्वम्॥

## वहश्च ॥ ६४ ॥

वहेर्धातोश्छन्दसि विषये सुबन्त उपपदे ण्विप्रत्ययो भवति। प्रष्ठवाट्[1]। दित्यवाट्। योगविभाग उत्तरार्थः॥

## कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ६५ ॥

कव्य पुरीष पुरीष्य इत्येतेषूपपदेषु छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति। क॒व्य॒वाह॑नः पि॒तॄ॒णाम् ( तै० सं० २.५.८.६ )। पु॒री॒ष॒वाह॑णः ( मा० सं० ११.४४ )। पु॒री॒ष्य॒वा॑ह॒नः ( मै० सं० २.७.४ )॥

## हव्येऽनन्तःपादम् ॥ ६६ ॥

हव्यशब्द उपपदे छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति, अनन्तःपादं चेद् वहिर्वर्तते। अ॒ग्निश्च॑ ह॒व्य॒वाह॑नः ( शौ० सं० ७.२०.१ )। अनन्तःपादमिति किम् ? ह॒व्य॒वाड॒ग्निर॒जरः॑ पि॒ता नः॑ ( ऋ० ५.४.२ )॥

## जनसनखनक्रमगमो विट् ॥ ६७ ॥

छन्दसि उपसर्गे सुपीत्यनुवर्तते। 'जन जनने' (जु० २२), 'जनी प्रादुर्भावे'

---

१ – पष्ठवाट् ( मा० सं० १८.२७ )। 'पृष्ठवाट्' इति न्या०।

(दिवा० ४०) द्वयोरपि ग्रहणम्। तथा 'षणु दाने' (तना० २), 'वन षण संभक्तौ' (भ्वा० ३१३) द्वयोरपि ग्रहणम्। जनादिभ्यो धातुभ्यः सुबन्त उपपदे छन्दसि विषये विट् प्रत्ययो भवति। टकारः सामान्यग्रहणाविघातार्थो 'वेरपृक्तस्य' (६.१.६७) इति, विशेषणार्थश्च 'विड्वनोरनुनासिकस्यात्' (६.४.४१) इति। अब्जाः। गोजाः (ऋ० ४.४०.५)। सन—गोषा इंद्रो नृषा असि (ऋ० ९.२.१०)। खन—बिसखाः (ऋ० ६.६१.२)। कूपखाः। क्रम—दधिक्राः (ऋ० ४.३८.१०)। गम—अग्रेगा नेतॄणाम् (तै० सं० १.३.६.१)॥

## अदोऽनन्ने ॥ ६८ ॥

छन्दसीति निवृत्तम्। अदेर्धातोरनन्ने सुप्युपपदे विट् प्रत्ययो भवति। आममत्ति आमात्। सस्यात्। अनन्न इति किम्? अन्नादः॥

## क्रव्ये च ॥ ६९ ॥

क्रव्यशब्द उपपदेऽदेर्धातोर्विट् प्रत्ययो भवति। क्रव्यमत्ति क्रव्यात्। पूर्वेणैव सिद्धे वचनमसरूपबाधनार्थम्। तेनाण् न भवति। कथं तर्हि क्रव्यादः? कृत्तविकृत्तशब्द उपपदेऽण्, तस्य च पृषोदरादिपाठात् क्रव्यभावः। कृत्तविकृत्तपक्वमांसभक्षः क्रव्याद उच्यते, आममांसभक्षः क्रव्यादिति॥

## दुहः कब् घश्च ॥ ७० ॥

दुहेर्धातोः सुप्युपपदे कप् प्रत्ययो भवति, घकारश्चान्तादेशः। कामदुघा धेनुः। अर्घदुघा। घर्मदुघा॥

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ७१ ॥

श्वेतवह उक्थशस् पुरोडाश् इत्येतेभ्यो ण्विन् प्रत्ययो भवति मन्त्रे विषये। धातूपपदसमुदाया निपात्यन्ते अलाक्षणिककार्यसिद्ध्यर्थम्। प्रत्ययस्तु विधीयत एव। श्वेतशब्दे कर्तृवाचिन्युपपदे वहेर्धातोः कर्मणि कारके ण्विन् प्रत्ययो भवति। श्वेता एनं वहन्ति श्वेतवा इन्द्रः। उक्थशब्दे कर्मणि करणे वा उपपदे शंसतेर्धातोर्ण्विन् प्रत्ययो भवति, नलोपश्च निपात्यते। उक्थानि शंसत्युक्थैर्वा शंसति उक्थशा (तु०—ऋ० ४.२.१६) यजमानः। 'दाशृ दाने' (भ्वा० ६२२) इत्येतस्य पुरःपूर्वस्य डत्वम्, कर्मणि च प्रत्ययः। पुरो दाशन्त एनं पुरोडाः (ऋ० ३.२८.२)॥ श्वेतवहादीनां डस्पदस्येति वक्तव्यम्॥ श्वेतवोभ्याम्। श्वेतवोभिः। पदस्येति किम्? श्वेतवाहौ। श्वेतवाहः॥

## अवे यजः ॥ ७२ ॥

अव उपपदे यजेर्धातोर्ण्विन् प्रत्ययो भवति मन्त्रे विषये। त्वं यज्ञे वरुणस्यावया असि ( काठ० सं० ३५.६५ )। योगविभाग उत्तरार्थः॥

## विजुपे छन्दसि ॥ ७३ ॥

उप उपपदे यजेश्छन्दसि विषये विच् प्रत्ययो भवति। उपयड्भिरूर्ध्वं वहन्ति। उपयट्त्वम्। छन्दोग्रहणं ब्राह्मणार्थम्। विचः चित्करणं सामान्यग्रहणाविघातार्थम्— 'वेरपृक्तस्य' ( ६.१.६७ ) इति। किमर्थमिदमुच्यते, यावता 'अन्येभ्योऽपि दृश्यन्ते' ( ३.२.७५ ) इति यजेरपि विच् सिद्ध एव? यजेर्नियमार्थमेतत्। उपयजेश्छन्दस्येव, न भाषायामिति॥

## आतो मनिन्क्वनिब्वनिपश्च ॥ ७४ ॥

छन्दसीति वर्तते, सुप्युपसर्गेऽपीति च। आकारान्तेभ्यो धातुभ्यः सुप्युपपदे छन्दसि विषये मनिन् क्वनिब् वनिब् इत्येते प्रत्यया भवन्ति। चकाराद् विजू भवति। सुदामा ( ऋ० ६.२०.७ )। अश्वत्थामा। क्वनिप्—सुधीवा। सुपीवा। वनिप्—भूरिदावा ( ऋ० ९.८७.४ )। घृतपावा ( शौ० सं० १३.१.२४ )। विच् खल्वपि—कीलालपाः ( ऋ० १०.९१.१४ )। शुभंयाः ( ऋ० ४.३.६ )। रामस्योपदाः॥

## अन्येभ्योऽपि दृश्यन्ते ॥ ७५ ॥

छन्दसीति निवृत्तम्। अन्येभ्योऽपि धातुभ्योऽनाकारान्तेभ्यो मनिन् क्वनिप् वनिप् इत्येते प्रत्यया दृश्यन्ते, विच्च। सुशर्मा। क्वनिप्—प्रातरित्वा ( ऋ० १.१२५.१ )। प्रातरित्वानौ ( काठ० सं० ३०.१ )। वनिप्—विजावाग्ने ( ऋ० ३.१.२३ )। अग्रेगावा[1]। विच् खल्वपि—रेडसि ( मा० सं० ६.१८ )[2]। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। निरुपपदादपि भवति। धीवा ( शौ० सं० ३.५.६ )। पीवा ( मै० सं० २.५.११ )। दृशिग्रहणं प्रयोगानुसरणार्थम्॥

## क्विप् च ॥ ७६ ॥

सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि भाषायां च क्विप् प्रत्ययो भवति। उखायाः स्रंसते उखास्रत्। पर्णध्वत्। वाहाद् भ्रश्यति वाहाभ्रट्। 'अन्येषामपि दृश्यते' ( ६.३.१३७ ) इति दीर्घः॥

---

१ - ' अग्रेयावा ' इति है०पाठोऽयुक्तः, पूर्वेण सिद्धत्वाद् न्यासविरोधाच्च।

२ - ' पर्णं न वेः ' इत्यधिकम्। द्र० टि० ४ पृ० ६।

## स्थः क च ॥ ७७ ॥

सुप्युपसर्गेऽपीति च वर्तते। स्था इत्येतस्माद् धातोः सुप्युपपदे कप्रत्ययो भवति, क्विप् च। किमर्थमिदमुच्यते, यावता 'सुपि स्थः' ( ३.२.४ ) इति कः सिद्ध एव, 'अन्येभ्योऽपि दृश्यते' ( ३.२.१७८ ) इति क्विप् ? बाधकबाधनार्थं पुनर्वचनम्। 'शमि धातोः संज्ञायाम्' ( ३.२.१४ ) अचं बाधते—शंस्थः। शंस्थाः॥

## सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७८ ॥

अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये गम्यमाने धातोर्णिनिः प्रत्ययो भवति। उष्णभोजी। शीतभोजी। अजाताविति किम् ? ब्राह्मणानामन्त्रयिता। ताच्छील्य इति किम् ? उष्णं भुङ्क्ते कदाचित्। सुपीति वर्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम् ॥ उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम् ॥ उदासारिण्यः। प्रत्यासारिण्यः ॥ साधुकारिणि च ॥ साधुकारी। साधुदायी ॥ ब्रह्मणि वदः ॥ ब्रह्मवादिनों वदन्ति ( तै० सं० २.५.४. १ )॥

## कर्तर्युपमाने ॥ ७९ ॥

कर्तृवाचिन्युपमान उपपदे धातोर्णिनिप्रत्ययो भवति। उपपदकर्ता प्रत्ययार्थस्य कर्तुरुपमानम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अताच्छील्यार्थ आरम्भः, जात्यर्थो वा। कर्तरीति किम् ? अपूपानिव भक्षयति माषान्। उपमान इति किम् ? उष्ट्रः क्रोशति ॥

## व्रते ॥ ८० ॥

व्रत इति शास्त्रतो नियम उच्यते। व्रते गम्यमाने सुबन्त उपपदे धातोर्णिनिः प्रत्ययो भवति। समुदायोपाधिश्चायम्, धातूपपदप्रत्ययसमुदायेन व्रतं गम्यते। स्थण्डिलशायी। अश्राद्धभोजी। कामचारप्राप्तौ नियमः। सति शयने स्थण्डिल एव शेते नान्यत्र, सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति। व्रत इति किम् ? स्थण्डिले शेते देवदत्तः। अताच्छील्यार्थ आरम्भः, जात्यर्थो वा॥

## बहुलमाभीक्ष्ण्ये ॥ ८१ ॥

आभीक्ष्ण्ये गम्यमाने धातोर्बहुलं णिनिः प्रत्ययो भवति। आभीक्ष्ण्यं पौनःपुन्यम्, तात्पर्यमासेवैव, ताच्छील्यादन्यत्। कषायपायिणो गान्धाराः। क्षीरपायिण उशीनराः। सौवीरपायिणो बाह्लीकाः। बहुलग्रहणात् कुल्माषखाद इत्यत्र न भवति ॥

## मनः ॥ ८२ ॥

सुपीति वर्तते। मन्यतेः सुबन्त उपपदे णिनिः प्रत्ययो भवति। दर्शनीयमानी। शोभनमानी। बहुलग्रहणानुवृत्तेर्मन्यतेर्ग्रहणम्, न मनुतेः। उत्तरसूत्रे हि खशप्रत्यये विकरणकृतो विशेषः स्यात् ॥

## आत्ममाने खश्च ॥ ८३ ॥

आत्मनो मननमात्ममानः। आत्ममाने वर्तमानाद् मन्यतेः सुप्युपपदे खश् प्रत्ययो भवति। चकाराद् णिनिश्च। यदा प्रत्ययार्थः कर्तात्मानमेव दर्शनीयत्वादिना धर्मेण युक्तं मन्यते, तदायं विधिः। दर्शनीयमात्मानं मन्यते दर्शनीयंमन्यः, दर्शनीयमानी। पण्डितंमन्यः, पण्डितमानी। आत्ममान इति किम् ? दर्शनीयमानी देवदत्तस्य यज्ञदत्तः[1] ॥

## भूते ॥ ८४ ॥

भूत इत्यधिकारो 'वर्तमाने लट्' ( ३.२.१२३ ) इति यावत्। यदित ऊर्ध्वमनुक्रमिष्यामो भूत इत्येवं तद् वेदितव्यम्। धात्वधिकाराच्च धात्वर्थे भूत[2] इति विज्ञायते। वक्ष्यति—'करणे यजः' ( ३.२.८५ )—अग्निष्टोमेनेष्टवान् अग्निष्टोमयाजी। भूत इति किम् ? अग्निष्टोमेन यजते ॥

## करणे यजः ॥ ८५ ॥

णिनिरनुवर्तते, न खश्। यजतेर्धातोः करण उपपदे णिनिप्रत्ययो भवति भूते। अग्निष्टोमयाजी। अग्निष्टोमः फलभावनायां करणं भवति ॥

## कर्मणि हनः ॥ ८६ ॥

कर्मण्युपपदे हन्तेर्धातोर्णिनिः प्रत्ययो भवति भूते काले। पितृव्यघाती। मातुलघाती ॥ कुत्सितग्रहणं कर्तव्यम् ॥ इह मा भूत्—चौरं हतवान् ॥

## ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८७ ॥

कर्मणीति वर्तते। ब्रह्मादिषु कर्मसूपपदेषु हन्तेर्धातोः क्विप् प्रत्ययो भवति भूते। ब्रह्महा। भ्रूणहा। वृत्रहा। किमर्थमिदमुच्यते, यावता सर्वधातुभ्यः क्विब् विहित एव ? ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम्। चतुर्विधश्चात्र नियम इष्यते। ब्रह्मादिष्वेव

---

१ – ' अतः सर्वकालिका विधयो वेदितव्याः ' इत्यधिकं बाल० तारा०। २ – ' धात्वर्थभूते ' इति पद० ।

हन्तेः, नान्यस्मिन्नुपपदे। पुरुषं हतवानिति। ब्रह्मादिषु हन्तेरेव, नान्यस्मात् स्यात्। ब्रह्माधीतवानिति। ब्रह्मादिषु हन्तेर्भूतकाले क्विबेव, नान्यः प्रत्ययः। तथा भूतकाल एव, नान्यस्मिन्। ब्रह्माणं हन्ति हनिष्यति वेति। तदेतद् वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षणाद् लभ्यते॥

## बहुलं छन्दसि ॥ ८८ ॥

पूर्वेण नियमादप्राप्तः क्विप् प्रत्ययो विधीयते। छन्दसि विषय उपपदान्तरेष्वपि हन्तेर्बहुलं क्विप् प्रत्ययो भवति। मातृहा सप्तमं नरकं प्रविशेत्[1]। पितृहा ( छा० उप० ७. १५.२ )। न च भवति—मातृघातः। पितृघातः॥

## सुकर्मपापमन्त्रपुण्येषु कृञः ॥ ८९ ॥

कर्मणीति वर्तते, तदसंभवात् सुशब्दं वर्जयित्वा परिशिष्टानां विशेषणं भवति। स्वादिषु कर्मसूपपदेषु करोतेर्धातोः क्विप् प्रत्ययो भवति। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। अयमपि नियमार्थ आरम्भः। त्रिविधश्चात्र नियम इष्यते। धातुनियमं वर्जयित्वा कालोपपदप्रत्ययनियमः। धातोरनियतत्वादन्यस्मिन्नप्युपपदे भवति। शास्त्रकृत्। भाष्यकृत्॥

## सोमे सुञः ॥ ९० ॥

कर्मणीति वर्तते। सोमे कर्मण्युपपदे सुनोतेर्धातोः क्विप् प्रत्ययो भवति। सोमसुत्, सोमसुतौ, सोमसुतः। अयमपि नियमार्थ आरम्भः। चतुर्विधश्चात्र नियम इष्यते। धातुकालोपपदप्रत्ययविषयः॥

## अग्नौ चेः ॥ ९१ ॥

कर्मणीत्येव। अग्नौ कर्मण्युपपदे चिनोतेर्धातोः क्विप् प्रत्ययो भवति। अग्निचित्, अग्निचितौ, अग्निचितः। अत्रापि पूर्ववच्चतुर्विधो नियम इष्यते॥

## कर्मण्यग्न्याख्यायाम् ॥ ९२ ॥

चेः कर्मणीति वर्तते। कर्मण्युपपदे चिनोतेः कर्मण्येव कारके क्विप् प्रत्ययो भवति अग्न्याख्यायाम्, धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्या गम्यते। श्येन इव चीयते श्येनचित्। कङ्कचित्। आख्याग्रहणं रूढिसंप्रत्ययार्थम्। अग्न्यर्थो हीष्टकाचय उच्यते श्येनचिदिति॥

---

१ - 'व्रजेत्' इति हैं०।

## कर्मणीनिर्विक्रियः ॥ ९३ ॥

कर्मण्युपपदे विपूर्वात् क्रीणातेर्धातोरिनिः प्रत्ययो भवति। कर्मणीति वर्तमाने पुनः कर्मग्रहणं कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात्, कर्ममात्रे मा भूत्। सोमविक्रयी। रसविक्रयी। इह न भवति—धान्यविक्रायः॥

## दृशेः क्वनिप् ॥ ९४ ॥

कर्मणीत्येव। दृशेर्धातोः कर्मण्युपपदे क्वनिप् प्रत्ययो भवति। मेरुदृश्वा। परलोकदृश्वा। 'अन्येभ्योऽपि दृश्यन्ते' ( ३.२.७५ ) इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरनिवृत्त्यर्थम्॥

## राजनि युधिकृञः ॥ ९५ ॥

कर्मणीत्येव। राजन्शब्दे कर्मण्युपपदे युध्यतेः करोतेश्च क्वनिप् प्रत्ययो भवति। ननु च युधिरकर्मकः ? अन्तर्भावितण्यर्थः सकर्मको भवति। राजयुध्वा। राजानं योधितवानित्यर्थः। राजकृत्वा॥

## सहे च ॥ ९६ ॥

सहशब्दे चोपपदे युधिकृञोर्धात्वोः क्वनिप् प्रत्ययो भवति। असत्त्ववाचित्वाद् नोपपदं कर्मणा विशेष्यते। सहयुध्वा। सहकृत्वा॥

## सप्तम्यां जनेर्डः ॥ ९७ ॥

सप्तम्यन्त उपपदे जनेर्धातोर्डः प्रत्ययो भवति। उपसरे जातः उपसरजः। मन्दुरजः॥

## पञ्चम्यामजातौ ॥ ९८ ॥

पञ्चम्यन्त उपपदे जातिवर्जितें जनेर्डः प्रत्ययो भवति। बुद्धिजः। संस्कारजः। दुःखजः। अजाताविति किम् ? हस्तिनो जातः। अश्वाज् जातः॥

## उपसर्गे च संज्ञायाम् ॥ ९९ ॥

उपसर्गे चोपपदे जनेर्डः प्रत्ययो भवति संज्ञायां विषये। समुदायोपाधिः संज्ञा। अथेमा मानवीः प्रजाः[1]॥

---

१ - 'इमाः प्रजा मानवीः' ( मै० सं० १.५.१० )।

## अनौ कर्मणि ॥ १०० ॥

अनुपूर्वाज् जनेः कर्मण्युपपदे डः प्रत्ययो भवति। पुमांसमनुजातः पुमनुजः। स्त्र्यनुजः॥

## अन्येष्वपि दृश्यते ॥ १०१ ॥

अन्येष्वप्युपपदेषु कारकेषु जनेर्डप्रत्ययो दृश्यते। सप्तम्यामित्युक्तमसप्तम्यामपि दृश्यते। न जायत इत्यजः। द्विर्जाता द्विजाः। 'पञ्चम्यामजातौ' ( ३.२.९८ ) इत्युक्तम्, जातावपि दृश्यते। ब्राह्मणजो धर्मः। क्षत्रियजं युद्धम्। 'उपसर्गे च संज्ञायाम्' ( ३.२.९९ ) इत्युक्तम्, असंज्ञायामपि दृश्यते। अभिजाः। परिजाः केशाः। 'अनौ कर्मणि' ( ३.२.१०० ) इत्युक्तमकर्मण्यपि दृश्यते। अनुजातः अनुजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति, कारकान्तरेऽपि। परितः खाता परिखा। आखा॥

## निष्ठा ॥ १०२ ॥

'क्तक्तवतू निष्ठा' ( १.१.२६ ) इत्युक्तम् , स निष्ठासंज्ञकः प्रत्ययो भूते भवति। कृतम्। कृतवान्। भुक्तम्। भुक्तवान्। निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः। संज्ञायां क्तक्तवतू भाव्येते, सतोश्चानयोः संज्ञया भाव्यम्। नैष दोषः। भाविनी संज्ञा विज्ञायते। स भूते भवति, यस्योत्पन्नस्य निष्ठेत्येषा संज्ञा भवति। सामर्थ्यात् क्तक्तवत्वोर्विधानमेतत् ॥ आदिकर्मणि निष्ठा वक्तव्या॥ प्रकृतः कटं देवदत्तः। प्रकृतवान् कटं देवदत्तः॥

## सुयजोर्ङ्वनिप् ॥ १०३ ॥

सुनोतेर्यजतेश्च ङ्वनिप् प्रत्ययो भवति। सुत्वा। यज्वा॥

## जीर्यतेरतृन् ॥ १०४ ॥

'भूते' ( ३.२.८४ ) इति वर्तते। जीर्यतेरतृन् प्रत्ययो भवति भूते। जरन्, जरन्तौ, जरन्तः। वासरूपेण निष्ठा। जीर्णः। जीर्णवानिति॥

## छन्दसि लिट् ॥ १०५ ॥

भूत इत्येव। छन्दसि विषये धातोर्लिट् प्रत्ययो भवति। अ॒हं सूर्य॑मु॒भय॑तो॑ ददर्श॒ ( मा० सं० ८.९ )। अनु[1] द्यावा॑पृथि॒वी आत॑तान ( तै० ब्रा० १.२.१.२३ )। ननु च 'छन्दसि लुङ्लङ्लिटः' ( ३.४.६ ) इति सामान्येन लिड् विहित एव ? धातुसंबन्धे स विधिः, अयं त्वविशेषेण॥

---

१ - 'अहं' इति मुद्रितेषु।

## लिटः कानज् वा ॥ १०६ ॥

छन्दसि लिटः कानजादेशो भवति वा। अग्निं चिक्यानः (मै० सं० ३.३.९)। सोमं सुषुवाणः (मै० सं० ४.४.१०)। वरुणं सुषुवाणम् (तै० सं० २.१.९.१)। न च भवति—अहं सूर्यमुभयतो ददर्श (मा० सं० ८.९)। अनु द्यावापृथिवी आततान (तै० ब्रा० १.२.१.२३)। लिङ्ग्रहणं किम्, न पूर्वस्यैव प्रकृतस्यादेशविधाने विभक्तिविपरिणामो भविष्यति ? लिण्मात्रस्य यथा स्यात्, योऽपि परोक्षे विहितस्तस्याप्ययमादेशो भवति॥

## क्वसुश्च ॥ १०७ ॥

छन्दसि लिटः क्वसुरादेशो भवति। जक्षिवान् (शौ० सं० ४.७.३)। पपिवान् (ऋ० १.६१.७)। न च भवति—अहं सूर्यमुभयतो ददर्श (मा० सं० ८.९)। योगविभाग उत्तरार्थः॥

## भाषायां सदवसश्रुवः ॥ १०८ ॥

सद वस श्रु इत्येतेभ्यः परस्य लिटो भाषायां विषये वा क्वसुरादेशो भवति। आदेशविधानादेव लिडपि तद्विषयोऽनुमीयते। उपसेदिवान् कौत्सः पाणिनिम्। तेन मुक्ते यथाप्राप्तं प्रत्यया भवन्ति। उपासदत्। उपासीदत्। उपससाद। अनूषिवान् कौत्सः पाणिनिम्। अन्ववात्सीत्। अन्ववसत्। अनूवास। उपशुश्रुवान् कौत्सः पाणिनिम्। उपाश्रौषीत्। उपाशृणोत्। उपशुश्राव। लुङ्लङ्विषये परस्तादनुवृत्तेः क्वसुर्भवति॥

## उपेयिवाननाश्वाननूचानश्च ॥ १०९ ॥

उपेयिवान् अनाश्वान् अनूचान इत्येते शब्दा निपात्यन्ते। उपपूर्वादिणः क्वसुः, द्विर्वचनमभ्यासदीर्घत्वम्, तत्सामर्थ्यादिकादेशप्रतिबन्धः, तत्र 'वस्वेकाजाद्घसाम्' (७.२.६७) इत्यनेकाच्त्वादिण् न प्राप्नोति, स निपात्यते, अभ्यासस्य श्रवणं धातुरूपस्य यणादेशः। उपेयिवान्। क्रादिनियमात् प्राप्तश्च 'वस्वेकाजाद्घसाम्' (७.२.६७) इति प्रतिषिद्धः, स पुनरिट् प्रतिप्रसूयते, तेनाजादौ न भवति। उपेयुषः। उपेयुषा। न चात्रोपसर्गस्तन्त्रम्, अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येव। समीयिवान्। ईयिवान्। वावचनानुवृत्तेश्च पूर्ववल्लुङादयोऽपि भवन्ति। उपागात्। उपैत्। उपेयाय। अश्नातेः नञ्पूर्वात् क्वसुर्निपात्यते, इडभावश्च। अनाश्वान्। नाशीत्। नाश्नात्। नाश। वचेरनुपूर्वात् कर्तरि कानज् निपात्यते। अनूचानः। अन्ववोचत्। अन्वब्रवीत्। अनूवाच॥

## लुङ् ॥ ११० ॥

भूत इत्येव। भूतेऽर्थे वर्तमानाद् धातोर्लुङ् प्रत्ययो भवति। अकार्षीत्। अहार्षीत् ॥ वसतेर्लुङ् रात्रिशेषे जागरणसंततौ वक्तव्यः॥ क्व भवानुषितः ? अहमत्रावात्सम् ॥

## अनद्यतने लङ् ॥ १११ ॥

भूत इत्येव। अनद्यतन इति बहुव्रीहिनिर्देशः। अविद्यमानाद्यतने भूतेऽर्थे वर्तमानाद् धातोर्लङ् प्रत्ययो भवति। अकरोत्। अहरत्। बहुव्रीहिनिर्देशः किमर्थः ? अद्य ह्यो वा अभुक्ष्महीति व्यामिश्रे मा भूत्॥ परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः॥ अरुणद् यवनः साकेतम्। अरुणद् यवनो माध्यमिकानिति॥

## अभिज्ञावचने लृट् ॥ ११२ ॥

अभिज्ञा स्मृतिः, तद्वचन उपपदे भूतानद्यतने लृट् प्रत्ययो भवति। लङोऽपवादः। अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः। वचनग्रहणं पर्यायार्थम्। अभिजानासि, स्मरसि, बुध्यसे, चेतयस इति॥

## न यदि ॥ ११३ ॥

यच्छब्दसहितेऽभिज्ञावचन उपपदे लृट् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। अभिजानासि देवदत्त यत् कश्मीरेष्ववसाम। वासमात्रं स्मर्यते। नत्वपरं किंचिल्लक्ष्यते। तेनोत्तरसूत्रस्य नायं विषयः॥

## विभाषा साकाङ्क्षे ॥ ११४ ॥

यदीति नानुवर्तते। उभयत्र विभाषेयम्। अभिज्ञावचन उपपदे यच्छब्दसहिते केवले च विभाषा लृट् प्रत्ययो भवति साकाङ्क्षश्चेत् प्रयोक्ता। लक्ष्यलक्षणयोः संबन्धे प्रयोक्तुराकांक्षा भवति। अभिजानासि देवदत्त कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे[1]। अभिजानासि देवदत्त मगधेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे[1]। यदि खल्वपि—अभिजानासि देवदत्त यत् कश्मीरेषु वत्स्यामः, यत् तत्रौदनं भोक्ष्यामहे। अभिजानासि देवदत्त यत् कश्मीरेष्ववसाम, यत् तत्रौदनमभुञ्ज्महि। वासो लक्षणम्, भोजनं तु लक्ष्यम्॥

---

१ – 'अवसाम ---- अभुञ्ज्महि' इत्यपि विकल्प्यते ।

## परोक्षे लिट् ॥ ११५ ॥

भूतानद्यतन इति वर्तते। तस्य विशेषणं परोक्षग्रहणम्। भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद् धातोर्लिट् प्रत्ययो भवति। ननु च धात्वर्थः सर्वः परोक्ष एव ? सत्यमेतत्। अस्ति तु लोके धात्वर्थेनापि कारकेषु प्रत्यक्षाभिमानः। स यत्र नास्ति, तत् परोक्षमित्युच्यते। चकार। जहार। उत्तमविषयेऽपि चित्तव्याक्षेपात् परोक्षता संभवत्येव। तद्यथा—सुप्तोऽहं किल विललाप॥ अत्यन्तापह्नवे च लिड् वक्तव्यः॥ कलिङ्गेषु प्रस्थितोऽसि ? नाहं कलिङ्गान् जगाम। दक्षिणापथं प्रविष्टोऽसि ? नाहं दक्षिणापथं प्रविवेश॥

## हशश्वतोर्लङ् च ॥ ११६ ॥

भूतानद्यतनपरोक्षेऽर्थे लिटि प्राप्ते, हशश्वतोरुपपदयोर्लङ् प्रत्ययो भवति, चकाराल् लिट् च। इति ह अकरोत्। इति ह चकार। शश्वदकरोत्। शश्वच् चकार॥

## प्रश्ने चासन्नकाले ॥ ११७ ॥

भूतानद्यतनपरोक्ष इति वर्तते। तस्य विशेषणमेतत्। प्रष्टव्यः प्रश्नः। आसन्नकाले पृच्छ्यमाने भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद् धातोर्लङ्लिटौ प्रत्ययौ भवतः। कश्चित् कञ्चित् पृच्छति। अगच्छद् देवदत्तः ? जगाम देवदत्तः ? अयजद् देवदत्तः ? इयाज देवदत्तः ? प्रश्न इति किम् ? जगाम देवदत्तः। आसन्नकाल इति किम् ? भवन्तं पृच्छामि, जघान कंसं किल वासुदेवः ? ॥

## लट् स्मे ॥ ११८ ॥

भूतानद्यतनपरोक्ष इति वर्तते। स्मशब्द उपपदे भूतानद्यतनपरोक्षे लट् प्रत्ययो भवति। लिटोऽपवादः। नडेन स्म पुराधीयते। ऊर्णया स्म पुराधीयते॥

## अपरोक्षे च ॥ ११९ ॥

अपरोक्षे च भूतानद्यतनेऽर्थे वर्तमानाद् धातोः स्म उपपदे लट् प्रत्ययो भवति। एवं स्म पिता ब्रवीति। इति स्मोपाध्यायः कथयति॥

## ननौ पृष्टप्रतिवचने ॥ १२० ॥

अनद्यतने परोक्ष इति निवृत्तम्। भूतसामान्ये विधिरयम्। ननुशब्द उपपदे प्रश्नपूर्वके प्रतिवचने भूतेऽर्थे लट् प्रत्ययो भवति। लुङोऽपवादः। अकार्षीः कटं देवदत्त ? ननु करोमि भोः। अवोचस्तत्र किंचिद् देवदत्त ? ननु ब्रवीमि भोः। पृष्टप्रतिवचन इति

किम्? नन्वकार्षीन् माणवकः॥

## नन्वोर्विभाषा ॥ १२१ ॥

भूत इत्येव। नशब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने विभाषा लट् प्रत्ययो भवति भूते। अकार्षीः कटं देवदत्त ? न करोमि भोः। नाकार्षम्। अहं नु करोमि। अहं न्वकार्षम्॥

## पुरि लुङ् चास्मे ॥ १२२ ॥

अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्तते। पुराशब्द उपपदे स्मशब्दवर्जिते भूतानद्यतनेऽर्थे विभाषा लुङ् प्रत्ययो भवति, लट् च। ताभ्यां मुक्ते पक्षे यथाविषयमन्येऽपि प्रत्यया भवन्ति। वसन्तीह पुरा छात्राः। अवात्सुरिह पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः। अस्म इति किम् ? नडेन स्म पुराधीयते॥

## वर्तमाने लट् ॥ १२३ ॥

प्रारब्धोऽपरिसमाप्तश्च वर्तमानः। तस्मिन् वर्तमानेऽर्थे वर्तमानाद् धातोर्लट् प्रत्ययो भवति। पचति। पठति॥

## लटः शतृशानचावप्रथमासमानाधिकरणे ॥ १२४ ॥

लटः शतृशानचावित्येतावादेशौ भवतः, अप्रथमान्तेन चेत् तस्य सामानाधिकरण्यं भवति। पचन्तं देवदत्तं पश्य। पचमानं देवदत्तं पश्य। पचता कृतम्। पचमानेन कृतम्। अप्रथमासमानाधिकरण इति किम् ? देवदत्तः पचति। लडिति वर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम्। क्वचित् प्रथमासमानाधिकरणेऽपि भवति। सन् ब्राह्मणः। अस्ति ब्राह्मणः। विद्यमानो ब्राह्मणः। विद्यते ब्राह्मणः। जुह्वत्। जुहोति। अधीयानः। अधीते॥ माङ्याक्रोशे॥ मा पचन्। मा पचमानः। केचिद् विभाषाग्रहणमनुवर्तयन्ति 'नन्वोर्विभाषा' ( ३.२.१२१ ) इति। सा च व्यवस्थिता। तत्र यथादर्शनं प्रयोगा नेतव्याः॥

## सम्बोधने च ॥ १२५ ॥

प्रथमासमानाधिकरणार्थ आरम्भः। संबोधने च विषये लटः शतृशानचौ प्रत्ययौ भवतः। हे पचन्। हे पचमान॥

## लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥

लक्ष्यते चिह्न्यते येन तल्लक्षणम्। जनको हेतुः। धात्वर्थविशेषणं चैतत्। लक्षणे हेतौ चार्थे वर्तमानाद् धातोः परस्य लटः शतृशानचावादेशौ भवतः, तौ चेल्लक्षणहेतू क्रियाविषयौ भवतः। लक्षणे—शयाना भुञ्जते यवनाः। तिष्ठन्तोऽनुशासति गणकाः। हेतौ—अर्जयन् वसति। अधीयानो वसति। लक्षणहेत्वोरिति किम् ? पचति। पठति। क्रियाया इति किम् ? द्रव्यगुणयोर्मा भूत्। यः कम्पते सोऽश्वत्थः। यदुत्प्लवते तल्लघु। यन्निषीदति तद् गुरु। लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारलिङ्गम् ॥

## तौ सत् ॥ १२७ ॥

तौ शतृशानचौ सत्संज्ञौ भवतः। तौग्रहणमुपाध्यसंसर्गार्थम्। शतृशानज्मात्रस्य संज्ञा भवति। ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः। ब्राह्मणस्य करिष्यन्। ब्राह्मणस्य करिष्यमाणः। सत्प्रदेशाः—'पूरणगुणसुहितार्थसदव्ययतव्य०' ( २.२.११ ) इत्येवमादयः ॥

## पूङ्यजोः शानन् ॥ १२८ ॥

पूङो यजेश्च धातोः शानन् प्रत्ययो भवति। पवमानः। यजमानः। यदि प्रत्ययाः शानन्नादयो न लादेशाः, कथं सोमं पवमानः, नडमाघ्नान इति षष्ठीप्रतिषेधः ? तृन्निति प्रत्याहारनिर्देशात्। क्व संनिविष्टानां प्रत्याहारः ? 'लटः शतृ०' ( ३.२.१२४ ) इत्यतः प्रभृति आ तृनो ( ३.२.१३५ ) नकारात्। 'द्विषः शतुर्वावचनम्' ( २.३.६९ वा० )। चौरस्य द्विषन्। चौरं द्विषन् ॥

## ताच्छील्यवयोवचनशक्तिषु चानश् ॥ १२९ ॥

ताच्छील्यं तत्स्वभावता। वयः शरीरावस्था यौवनादिः। शक्तिः सामर्थ्यम्। ताच्छील्यादिषु धातोश्चानश् प्रत्ययो भवति। ताच्छील्ये तावत्—कतीह मण्डयमानाः। कतीह भूषयमाणाः। वयोवचने—कतीह कवचं पर्यस्यमानाः। कतीह शिखण्डं वहमानाः। शक्तौ—कतीह निघ्नानाः। कतीह पचमानाः ॥

## इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥

इङो धारेश्च धात्वोः शतृप्रत्ययो भवत्यकृच्छ्रिणि कर्तरि। अकृच्छ्रः सुखसाध्यो यस्य कर्तुर्धात्वर्थः सोऽकृच्छ्री। अधीयन् पारायणम्। धारयन्नुपनिषदम्। अकृच्छ्रिणीति किम् ? कृच्छ्रेणाधीते। कृच्छ्रेण धारयति ॥

## द्विषोऽमित्रे ॥ १३१ ॥

अमित्रः शत्रुः। अमित्रे कर्तरि द्विषेर्धातोः शतृप्रत्ययो भवति। द्विषन्, द्विषन्तौ, द्विषन्तः। अमित्र इति किम् ? द्वेष्टि भार्या पतिम् ॥

## सुञो यज्ञसंयोगे ॥ १३२ ॥

यज्ञेन संयोगो यज्ञसंयोगः। यज्ञसंयुक्तेऽभिषवे वर्तमानात् सुनोतेर्धातोः शतृप्रत्ययो भवति। सर्वे सुन्वन्तः। सर्वे यजमानाः सत्रिण उच्यन्ते। संयोगग्रहणं प्रधानकर्तृप्रतिपत्त्यर्थम्। याजकेषु मा भूत्। यज्ञसंयोग इति किम् ? सुनोति सुराम् ॥

## अर्हः प्रशंसायाम् ॥ १३३ ॥

प्रशंसा स्तुतिः। अर्हतेर्धातोः प्रशंसायां शतृप्रत्ययो भवति। अर्हन्निह भवान् विद्याम्। अर्हन्निह भवान् पूजाम्। प्रशंसायामिति किम् ? अर्हति चौरो वधम् ॥

## आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ १३४ ॥

'भ्राजभास०' ( ३.२.१७७ ) इति क्विपं वक्ष्यति। आ एतस्मात् क्विप्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामस्तच्छीलादिषु कर्तृषु ते वेदितव्याः। अभिविधौ चायमाङ्। तेन क्विपोऽप्ययमर्थनिर्देशः। तदिति धात्वर्थः शीलादिविशेषणत्वेन निर्दिश्यते। तच्छीलो यः स्वभावतः फलनिरपेक्षस्तत्र प्रवर्तते। तद्धर्मा तदाचारः, यः स्वधर्मे ममायमिति प्रवर्तते विनापि शीलेन। तत्साधुकारी यो धात्वर्थं साधु करोति। उत्तरत्रैवोदाहरिष्यामः ॥

## तृन् ॥ १३५ ॥

सर्वधातुभ्यस्तृन् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। नकारः स्वरार्थः। तच्छीले तावत्—कर्ता कटान्। वदिता जनापवादान्। तद्धर्मणि—मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम्। अन्नमपहर्तार आह्वरका भवन्ति श्राद्धे सिद्धे। उन्नेतारस्तौल्वलायना भवन्ति पुत्रे जाते। तत्साधुकारिणि—कर्ता कटम्। गन्ता खेटम् ॥ तृन्विधावृत्विक्षु चानुपसर्गस्य ॥ होतां। पोतां। अनुपसर्गस्येति किम् ? उद्गाता। प्रतिहर्ता। तृजेव भवति। स्वरे विशेषः ॥ नयतेः षुक् च ॥ नेष्टां ॥ त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च ॥ त्वष्टा ॥ क्षदेश्च नियुक्ते ॥ क्षत्ता। क्वचिदधिकृत उच्यते ॥ छन्दसि तृच्च ॥ क्षत्तृभ्यः संग्रहीतृभ्यः ( मा० सं० १६.२६ )। स्वरे विशेषः ॥

## अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥ १३६ ॥

अलंकृञादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। अलंकरिष्णुः। निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। रोचिष्णुः। अपत्रपिष्णुः। वर्तिष्णुः। वर्धिष्णुः। सहिष्णुः। चरिष्णुः॥ अलंकृञो मण्डनार्थाद् युचः पूर्वविप्रतिषेधेनेष्णुज् वक्तव्यः[1]॥

## णेश्छन्दसि ॥ १३७ ॥

ण्यन्ताद् धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। दृषदं धारयिष्णवः ( शा० आ० १२.२ )। वीरुधः पारयिष्णवः ( ऋ० १०.९७.३ )॥

## भुवश्च ॥ १३८ ॥

भवतेर्धातोश्छन्दसि विषये तच्छीलादिष्विष्णुच् प्रत्ययो भवति। भविष्णुः ( मै० सं० १.८.१ )। योगविभाग उत्तरार्थः। चकारोऽनुक्तसमुच्चयार्थः। भ्राजिष्णुना लोहितचन्दनेन॥

## ग्लाजिस्थश्च क्स्नुः ॥ १३९ ॥

छन्दसीति निवृत्तम्। ग्ला जि स्था इत्येतेभ्यो धातुभ्यश्चकाराद् भुवश्च तच्छीलादिषु क्स्नुः प्रत्ययो भवति। ग्लास्नुः। जिष्णुः। स्थास्नुः। भूष्णुः। गिच् चायं प्रत्ययः, न कित्। तेन स्थ ईकारो न भवति। 'क्क्ङिति च' ( १.१.५ ) इत्यत्र गकारोऽपि चर्त्वभूतो निर्दिश्यते, तेन गुणो न भवति। 'श्र्युकः किति' ( ७.२.११ ) इत्यत्रापि गकारो निर्दिश्यते, तेन भुव इड् न भवति।

क्स्नोर्गित्त्वान्न स्थ ईकारः क्ङितोरीत्वशासनात्।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः॥

॥ दंशेश्छन्दस्युपसंख्यानम्॥ दुङ्क्ष्णवः पुशवः ( मा० सं० १५.१५ )॥

## त्रसिगृधिधृषिक्षिपेः क्नुः ॥ १४० ॥

त्रसादिभ्यो धातुभ्यस्तच्छीलादिषु क्नुः प्रत्ययो भवति। त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्णुः[2]॥

---

१ – प्रक्षिप्तमिदं वाक्यं पद० अव्याख्याततत्वाद्, महाभाष्ये चानुपलम्भात्। अत्रत्यो न्यासाभिप्रायो वाक्यरूपेण प्रक्षिप्यते ( न्यासपर्यालोचन पृ० ३०८ )॥ २ – 'क्षिप्नुः' इत्यपपाठो मुद्रितेषु ।

## शमित्यष्टाभ्यो घिनुण् ॥ १४१ ॥

इतिशब्द आद्यर्थः। शमादिभ्यो धातुभ्योऽष्टाभ्यस्तच्छीलादिषु कर्तृषु घिनुण् प्रत्ययो भवति। 'शमु उपशमे' (दिवा० ९१) इत्यतः प्रभृति 'मदी हर्षे' (दिवा० ९८) इत्येवमन्तः शमादिर्दिवाद्यन्तर्गणः। घकार उत्तरत्र कुत्वार्थः। उकार उच्चारणार्थः। णकारो वृद्ध्यर्थः। शमी। तमी। दमी। श्रमी। भ्रमी। क्षमी। क्लमी। प्रमादी। उन्मादी। अष्टाभ्य इति किम्? असिता॥

## संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ॥ १४२ ॥

घिनुणनुवर्तते। संपृचादिभ्यो धातुभ्यो घिनुण् भवति तच्छीलादिषु। 'पृची संपर्के' (रुधा० २४) इति रुधादिर्गृह्यते, न त्वदादिर्लुग्विकरणत्वात्। परिदेविर्भ्वादिर्गृह्यते 'देवृ देवने' (भ्वा० ३३६) इति। 'क्षिप प्रेरणे' (दिवा० १५, तुदा० ५) दिवादिस्तुदादिश्च सामान्येन गृह्यते। 'युज समाधौ' (दिवा० ६६) दिवादिः, 'युजिर् योगे' (रुधा० ७) रुधादिः। द्वयोरपि ग्रहणम्। 'रञ्ज रागे' (भ्वा० ७२५) इत्यस्य निपातनादनुनासिकलोपः। संपर्की। अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। परिमोही। दोषी। द्वेषी। द्रोही। दोही। योगी। आक्रीडी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघाती॥

## वौ कषलसकत्थस्रम्भः ॥ १४३ ॥

'कष हिंसार्थः' (भ्वा० ४६२) 'लस श्लेषणक्रीडनयोः' (भ्वा० ४७३) 'कत्थ श्लाघायाम्' (भ्वा० ३०) 'स्रम्भु विश्वासे' (भ्वा० ५०७) एतेभ्यो धातुभ्यो विशब्द उपपदे घिनुण् प्रत्ययो भवति। विकाषी। विलासी। विकत्थी। विस्रम्भी॥

## अपे च लषः ॥ १४४ ॥

'लष कान्तौ' (भ्वा० ६२८) अस्माद् धातोरप उपपदे चकाराद् वौ च घिनुण् भवति। अपलाषी। विलाषी॥

## प्रे लपसृद्रुमथवदवसः ॥ १४५ ॥

प्र उपपदे लपादिभ्यो घिनुण् भवति। प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी।

प्रवादी। प्रवासी। वस इति 'वस निवासे' ( भ्वा० ७३१ ) इत्यस्य ग्रहणं नाच्छादनार्थस्य, लुग्विकरणत्वात् ॥

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो[१] वुञ् ॥ १४६ ॥

निन्दादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु वुञ् प्रत्ययो भवति। पञ्चम्यर्थे प्रथमा। 'क्लिश उपतापे' ( दिवा० ५० ) 'क्लिशू विबाधने' ( क्र्या० ५३ ) द्वयोरपि ग्रहणम्। निन्दकः। हिंसकः। क्लेशकः। खादकः। विनाशकः। परिक्षेपकः। परिराटकः। परिवादकः। व्याभाषकः। असूयकः। ण्वुलैव सिद्धे वुञ्विधानं ज्ञापनार्थम्—ताच्छीलिकेषु वासरूपन्यायेन तृजादयो न भवन्ति ( महाभाष्य २.१३३ ) इति ॥

## देविक्रुशोश्चोपसर्गे ॥ १४७ ॥

देवयतेः क्रुशेश्चोपसर्ग उपपदे वुञ् प्रत्ययो भवति। आदेवकः। परिदेवकः। आक्रोशकः। परिक्रोशकः। उपसर्ग इति किम् ? देवयिता। क्रोष्टा ॥

## चलनशब्दार्थादकर्मकाद् युच् ॥ १४८ ॥

चलनार्थेभ्यः शब्दार्थेभ्यश्चाकर्मकेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु युच् प्रत्ययो भवति। चलनः। चोपनः। शब्दार्थेभ्यः—शब्दनः। रचणः। अकर्मकादिति किम् ? पठिता विद्याम् ॥

## अनुदात्तेतश्च हलादेः ॥ १४९ ॥

अनुदात्तेद् यो धातुर्हलादिरकर्मकः, ततश्च युच् प्रत्ययो भवति। वर्तनः। वर्धनः। अनुदात्तेत इति किम् ? भविता। हलादेरिति किम् ? एधिता। आदिग्रहणं किम् ? जुगुप्सनः। मीमांसनः। अकर्मकादित्येव—वसिता वस्त्रम् ॥

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ १५० ॥

जुप्रभृतिभ्यो धातुभ्यो युच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जु इति सौत्रो धातुः। जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। गर्धनः। ज्वलनः। शोचनः। लषणः। पतनः। पदनः। चलनार्थानां पदेश्च ग्रहणं सकर्मकार्थमिह। ज्ञापकार्थं च पदिग्रहणमन्ये वर्णयन्ति—'ताच्छीलिकेषु मिथो वासरूपविधिर्नास्ति' ( परि० ६७ ) इति।

१ - मूले ' — विनाशि० ' इति क्वाचित्कः पाठः।

तेनालंकृञस्तृन् न भवति, अलंकर्तेति। तथाहि—पदेरुकञा विशेषविहितेन सामान्यविहितस्य युचोऽसरूपत्वात् समावेशो भवेदेव, किमनेन विधानेन ? ज्ञापकार्थं पुनर्विधीयते। प्रायिकं चैतज् ज्ञापकम्। क्वचित् समावेश इष्यत एव। गन्ता खेटं विकत्थनः॥

## क्रुधमण्डार्थेभ्यश्च ॥ १५१ ॥

'क्रुध कोपे' ( दिवा० ७८ ) 'मडि भूषायाम्' ( भ्वा० २१३ ) इत्येतदर्थेभ्यश्च धातुभ्यो युच् प्रत्ययो भवति। क्रोधनः। रोषणः। मण्डनः। भूषणः॥

## न यः ॥ १५२ ॥

यकारान्ताद् धातोर्युच् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। क्नूयिता। क्ष्मायिता॥

## सूददीपदीक्षश्च ॥ १५३ ॥

सूद दीप दीक्ष इत्येतेभ्यश्च युच् प्रत्ययो न भवति। अनुदात्तेत्त्वात् प्राप्तः प्रतिषिध्यते। सूदिता। दीपिता। दीक्षिता। ननु च दीपेर्विशेषविहितो रप्रत्ययो दृश्यते, 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' ( ३.२.१६७ ) इति। स एव बाधको भविष्यति, किं प्रतिषेधेन ? वासरूपेण युजपि प्राप्नोति। ताच्छीलिकेषु च वासरूपविधिर्नास्तीति ( परि० ६७ ) प्रायिकमेतद् इत्युक्तम्। तथा च समावेशो दृश्यते—कम्प्रा युवतिः, कमना युवतिः। कम्प्रा शाखा, कम्पना शाखेति। सूदेर्युचि प्रतिषिद्धे कथं मधुसूदनो रिपुसूदन इति ? अनित्योऽयं प्रतिषेध इति योगविभागाद् विज्ञायते। अथ वा मधुसूदनादयो नन्द्यादिषु द्रक्ष्यन्ते। 'कृत्यल्युटो बहुलम्' ( ३.३.११३ ) इति ल्युडन्ता वा॥

## लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ॥ १५४ ॥

लषादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु उकञ् प्रत्ययो भवति। अपलाषुकं वृषलसंगतम्। प्रपातुका गर्भा भवन्ति। उपपादुकं सत्त्वम्। उपस्थायुका एनं पशवो भवन्ति। प्रभावुकमन्नं भवति। प्रवर्षुकाः पर्जन्याः। आघातुकं पाकलिकस्य मूत्रम्[1]। कामुका एनं स्त्रियो भवन्ति। आगामुकं वाराणसीं रक्ष आहुः। किंशारुकं तीक्ष्णमाहुः॥

## जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ १५५ ॥

जल्पादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु षाकन् प्रत्ययो भवति। षकारो ङीषर्थः। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी॥

---

१ - 'कापालिकस्य शूलम्' इति बाल०।

## प्रजोरिनिः ॥ १५६ ॥

प्रपूर्वाज् जवतेः तच्छीलादिषु कर्तृषु इनिः प्रत्ययो भवति। प्रजवी। प्रजविनौ॥

## जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥ १५७ ॥

'जि जये' ( भ्वा० ३७८ ) 'दृङ् आदरे' ( तुदा० १२० ) 'क्षि क्षये' ( भ्वा० १४५) 'क्षि निवासगत्योः' ( तुदा० ११६ ) इति द्वयोरपि ग्रहणम्। प्रसू इति 'षू प्रेरणे' ( तुदा० ११७ ) इत्यस्य ग्रहणम्। जिप्रभृतिभ्यो धातुभ्य इनिः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्यथी। अभ्यमी। परिभवी। प्रसवी॥

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥ १५८ ॥

'स्पृह ईप्सायाम्' ( चु० २९४ ) 'गृह ग्रहणे' ( चु० ३२१ ) 'पत गतौ' ( चु० २८६) चुरादावदन्ताः पठ्यन्ते। 'दय दानगतिरक्षणेषु' ( भ्वा० ३२२ ) 'द्रा कुत्सायां गतौ' ( अदा० ४७ ) निपूर्वस्तत्पूर्वश्च, तदो नकारान्तता च निपात्यते। डुधाञ् ( जु० १० ) श्रत्पूर्वः। एतेभ्यस्तच्छीलादिषु कर्तृषु आलुच् प्रत्ययो भवति। स्पृहयालुः। गृहयालुः। पतयालुः। दयालुः। निद्रालुः। तन्द्रालुः। श्रद्धालुः॥ आलुचि शीङो ग्रहणं कर्तव्यम्॥ शयालुः॥

## दाधेट्सिशदसदो रुः ॥ १५९ ॥

दा धेट् सि शद सद इत्येतेभ्यो रुः प्रत्ययो भवति। दारुः। धारुर्वत्सो मातरम्। 'न लोकाव्यय०' ( २.३.६९ ) इत्युकारप्रश्लेषात् षष्ठी न भवति। सेरुः। शद्रुः। सद्रुः॥

## सृघस्यदः क्मरच् ॥ १६० ॥

सृ घसि अद् इत्येतेभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु क्मरच् प्रत्ययो भवति। सृमरः। घस्मरः। अद्मरः॥

## भञ्जभासमिदो घुरच् ॥ १६१ ॥

भञ्ज भास मिद इत्येतेभ्यो घुरच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। भङ्गुरं काष्ठम्। घित्त्वात् कुत्वम्। भासुरं ज्योतिः। मेदुरः पशुः। भञ्जेः कर्मकर्तरि प्रत्ययः, स्वभावात्॥

## विदिभिदिच्छिदेः कुरच् ॥ १६२ ॥

ज्ञानार्थस्य विदेः ( अदा० ५७ ) ग्रहणं न लाभार्थस्य ( तुदा० १४१ ) स्वभावात्। विदादिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु कुरच् प्रत्ययो भवति। विदुरः पण्डितः। भिदुरं काष्ठम्। छिदुरा रज्जुः। भिदिच्छिद्योः कर्मकर्तरि प्रयोगः॥ व्यधेः संप्रसारणं कुरच्च वक्तव्यः॥ विधुरः॥

## इण्नश्जिसर्तिभ्यः क्वरप् ॥ १६३ ॥

इण् नश् जि सर्ति इत्येतेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्वरप् प्रत्ययो भवति। पकारस्तुगर्थः। इत्वरः। इत्वरी। नश्वरः। नश्वरी। जित्वरः। जित्वरी। सृत्वरः। सृत्वरी। 'नेड् वशि कृति' ( ७.२.८ ) इतीट्प्रतिषेधः॥

## गत्वरश्च ॥ १६४ ॥

गत्वर इति निपात्यते। गमेरनुनासिकलोपः क्वरप् प्रत्ययश्च। गत्वरः। गत्वरी॥

## जागुरूकः ॥ १६५ ॥

जागर्तेरूकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जागरूकः॥

## यजजपदशां यङः ॥ १६६ ॥

यजादीनां यङन्तानामूकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। यायजूकः। जञ्जपूकः। दन्दशूकः॥

## नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥ १६७ ॥

नम्यादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु रः प्रत्ययो भवति। नम्रं काष्ठम्। कम्प्रा शाखा। स्मेरं मुखम्। अजस्रं जुहोति। कम्रा युवतिः। हिंस्रं रक्षः। दीप्रं काष्ठम्। अजस्रमिति 'जसु मोक्षणे' ( दिवा० १०१ ) नञ्पूर्वो रप्रत्ययान्तः क्रियासातत्ये वर्तते॥

## सनाशंसभिक्ष उः॥ १६८ ॥

सन् इति सन् प्रत्ययो गृह्यते, न सनिर्धातुः, अनभिधानाद् व्याप्तिन्यायाद् वा। सन्नन्तेभ्यो धातुभ्य आशंसेर्भिक्षेश्च तच्छीलादिषु कर्तृषु उः प्रत्ययो भवति। चिकीर्षुः। जिहीर्षुः। आशंसुः। भिक्षुः। 'आङः शसि इच्छायाम्' ( भ्वा० ४१९ ) इत्यस्य ग्रहणम्, न शंसेः स्तुत्यर्थस्य ( भ्वा० ४८२ )॥

## विन्दुरिच्छुः ॥ १६९ ॥

विदेर्नुमागम इषेश्छत्वमुकारश्च प्रत्ययो निपात्यते तच्छीलादिषु कर्तृषु। वेदनशीलो विन्दुः। एषणशील इच्छुः॥

## क्याच्छन्दसि ॥ १७० ॥

क्य इति क्यच्क्यङ्क्यषां सामान्येन निर्देशः। क्यप्रत्ययान्ताद् धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु उकारप्रत्ययो भवति। मित्रयुः (मै० सं० २.६.१२)। 'न च्छन्दस्यपुत्रस्य' (७.४.३५) इति प्रतिषेधाद् न दीर्घः[1]। संस्वेदयुः (मै० सं० ४.१२.२.४४)। सुम्नयुः (ऋ० १.७९.१०)। छन्दसीति किम्? मित्रीयिता॥

## आदृगमहनजनः किकिनौ लिट् च ॥ १७१ ॥

आकारान्तेभ्य ऋवर्णान्तेभ्यो गम हन जन इत्येतेभ्यश्च छन्दसि विषये तच्छीलादिषु किकिनौ प्रत्ययौ भवतः। लिड्वच्च तौ भवतः। आदिति तकारो मुखसुखार्थः, न त्वयं तपरः, मा भूत् तादपि परस्तपर इति ऋकारे तत्कालग्रहणम्। पपिः सोमं ददिर्गाः (ऋ० ६.२३.४)। मित्रावरुणा ततुरिम् (ऋ० ४.३९.२)। दूरे ह्यध्वा जगुरिः (ऋ० १०. १०८.१)। जग्मिर्युवा (ऋ० ७.२०.१)। जघ्निर्वृत्रम् (ऋ० ९.६१.२०)। जज्ञि बीजम् (तै० सं० ७.५.२०.१)। अथ किमर्थं कित्त्वम्, यावता 'असंयोगाल्लिट् कित्' (१.२.५) इति कित्त्वं सिद्धमेव? 'ऋच्छत्यृताम्' (७.४.११) इति लिटि गुणः प्रतिषेधविषय आरभ्यते, तस्यापि बाधनार्थं कित्त्वम्॥ किकिनावुत्सर्गश्छन्दसि सदा-दिभ्यो दर्शनात्॥ सेदिः (श० ब्रा० ७.३.१.२३)। नेमिः (ऋ० २.५.३)॥ भाषायां धाञ्कृञ्सृजनिगमिनमिभ्यः किकिनौ वक्तव्यौ॥ दधिः। चक्रिः। सस्रिः। जज्ञिः। जग्मिः। नेमिः॥ सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ॥ 'दीर्घोऽकितः' (७.४.८३)। सासहिः। वावहिः। चाचलिः। पापतिः॥

## स्वपितृषोर्नजिङ् ॥ १७२ ॥

छन्दसीति निवृत्तम्। स्वपेस्तृषेश्च तच्छीलादिषु कर्तृषु नजिङ् प्रत्ययो भवति। स्वप्—स्वप्नक्। तृष्णक्॥ धृषेश्चेति वक्तव्यम्॥ धृष्णक्॥

## शॄवन्द्योरारुः ॥ १७३ ॥

---

१ - 'न.......... दीर्घः' इति पाठो न सार्वत्रिकः।

'शॄ हिंसायाम्' ( क्र्या० १७ ) 'वदि अभिवादनस्तुत्योः' ( भ्वा० १० ) एताभ्यां धातुभ्यां तच्छीलादिषु कर्तृष्वारुः प्रत्ययो भवति। शरारुः। वन्दारुः॥

## भियः क्रुक्लुकनौ ॥ १७४ ॥

'ञिभी भये' ( जु० २ ) अस्माद् धातोः तच्छीलादिषु कर्तृषु क्रुक्लुकनौ प्रत्ययौ भवतः। भीरुः। भीलुकः॥ क्रुकन्नपि वक्तव्यः॥ भीरुकः॥

## स्थेशभासपिसकसो वरच् ॥ १७५ ॥

'ष्ठा गतिनिवृत्तौ' ( भ्वा० ६६२ ) 'ईश ऐश्वर्ये' ( अदा० १० ) 'भासृ दीप्तौ' (भ्वा० ४१५ ) 'पिसृ पेसृ गतौ' ( भ्वा० ४७६ ) 'कस गतौ' ( भ्वा० ५९९ ) एतेभ्यस्तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति। स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। विकस्वरः॥

## यश्च यङः ॥ १७६ ॥

'या प्रापणे' ( अदा० ४२ ) अस्माद् यङन्तात् तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति। यायावरः॥

## भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ॥ १७७ ॥

भ्राजादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् प्रत्ययो भवति। विभ्राट्, विभ्राजौ, विभ्राजः। भाः, भासौ, भासः। धूः, धुरौ, धुरः। विद्युत्, विद्युतौ, विद्युतः। ऊर्क्, ऊर्जौ, ऊर्जः। पूः, पुरौ, पुरः। जवतेर्दीर्घश्च निपात्यते। जूः, जुवौ, जुवः। ग्रावस्तुत्, ग्रावस्तुतौ, ग्रावस्तुतः। किमर्थमिदमुच्यते, यावता 'अन्येभ्योऽपि दृश्यन्ते', 'क्विप् च' ( ३.२.७५, ७६ ) इति क्विप् सिद्ध एव ? ताच्छीलिकैर्बाध्यते। वासरूपविधिर्नास्तीत्युक्तम् ( ३.२.१४६ )। अथ तु प्रायिकमेतत्, ततस्तस्यैवायं प्रपञ्चः॥

## अन्येभ्योऽपि दृश्यते ॥ १७८ ॥

अन्येभ्योऽपि धातुभ्यस्ताच्छीलिकेषु क्विप् प्रत्ययो दृश्यते। युक्। छित्। भित्। दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम्। क्वचिद् दीर्घः। क्वचिद् द्विर्वचनम्। क्वचित् संप्रसारणम्। क्वचिद् असंप्रसारणम्[1]। तथा चाह ॥ क्विब् वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च॥ वचि—वाक्। प्रच्छि—शब्दप्राट्। आयतस्तूः। कटप्रूः। जूः। श्रीः। जुग्रहणेनात्र नार्थः, भ्राजादिसूत्र एव गृहीतत्वात्॥ द्युतिगमिजुहोतीनां द्वे च॥

१ – 'क्वचिदसंप्रसारणम्' इति नास्ति है०।

दिद्युत्। जगत् ॥ जुहोतेर्दीर्घश्च॥ जुहूः ॥ 'दॄ भये' ( भ्वा० ५४८ ) इत्यस्य ह्रस्वश्च द्वे च॥ दद्रृत्॥ ध्यायतेः सम्प्रसारणं च॥ धीः॥

## भुवः संज्ञान्तरयोः ॥ १७९ ॥

भवतेर्धातोः संज्ञायामन्तरे च गम्यमाने क्विप् प्रत्ययो भवति। विभूर्नाम कश्चित्। अन्तरे—प्रतिभूः। धनिकाधमर्णयोरन्तरे यस्तिष्ठति; स प्रतिभूरुच्यते॥

## विप्रसंभ्यो ड्वसंज्ञायाम् ॥ १८० ॥

भुव इति वर्तते। वि प्र सम् इत्येवंपूर्वाद् भवतेर्धातोर्डुप्रत्ययो भवति, न चेत् संज्ञा गम्यते। विभुः सर्वगतः। प्रभुः स्वामी। संभुर्जनिता। असंज्ञायामिति किम्? विभूर्नाम कश्चित् ॥ डुप्रकरणे मितद्रवादिभ्य उपसंख्यानम्॥ मितं द्रवति मितद्रुः। शंभुः॥

## धः कर्मणि ष्ट्रन् ॥ १८१ ॥

धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन् प्रत्ययो भवति। षकारो ङीषर्थः। धयन्ति तां दधति वा भैषज्यार्थमिति धात्री। स्तनदायिनी आमलकी चोच्यते॥

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥ १८२ ॥

'दाप् लवने' ( अदा० ५२ ) 'णीञ् प्रापणे' ( भ्वा० ६४२ ) 'शसु हिंसायाम्' ( भ्वा० ४८२ ) 'यु मिश्रणे' ( अदा० २६ ) 'युजिर् योगे' ( रुधा० ७ ) 'ष्टुञ् स्तुतौ' ( अदा० ३६ ) 'तुद व्यथने' ( तुदा० १ ) 'षिञ् बन्धने' ( स्वा० २ ) 'षिच क्षरणे' ( तुदा० १४३ ) 'मिह सेचने' ( भ्वा० ७१८ ) 'पत्लृ गतौ' ( भ्वा० ५८४ ) 'दंश दशने' ( भ्वा० ७१५ ) 'णह बन्धने' ( दिवा० ५५ ) एतेभ्यो धातुभ्यः करणे कारके ष्ट्रन् प्रत्ययो भवति। दान्त्यनेनेति दात्रम्। नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। दंष्ट्रा। अजादित्वात् टाप्, न ङीष्। दंशेरनुनासिकलोपेन निर्देशो ज्ञापनार्थः—क्ङितोऽन्यस्मिन्नपि प्रत्यये नलोपः क्वचिद् भवतीति। तेन ल्युट्यपि भवति। दशनम्। नद्ध्री॥

## हलसूकरयोः पुवः ॥ १८३ ॥

पू इति पूङ्पूञोस्सामान्येन ग्रहणम्। अस्माद् धातोः करणे कारके ष्ट्रन् प्रत्ययो भवति, तच्चेत् करणं हलसूकरयोरवयवो भवति। हलस्य पोत्रम्। सूकरस्य पोत्रम्। मुखमुच्यते॥

## अर्तिलूधूसूखनसहचर इत्रः ॥ १८४ ॥

'ऋ गतौ' ( जु० १६ ) 'लूञ् छेदने' ( क्र्या० १२ ) 'धू विधूनने' ( तुदा० १०६ ) 'षू प्रेरणे' ( तुदा० ११७ ) 'खनु अवदारणे' ( भ्वा० ६१८ ) 'षह मर्षणे' ( भ्वा० ५९१ ) 'चर गतिभक्षणयोः' ( भ्वा० ३७६ ) एतेभ्यो धातुभ्यः करणे कारक इत्रः प्रत्ययो भवति। अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्॥

## पुवः संज्ञायाम् ॥ १८५ ॥

पूङ्पूञोः सामान्येन ग्रहणम्। पवतेर्धातोः करणे कारक इत्रप्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते। दर्भः पवित्रम्। बर्हिष्पवित्रम्॥

## कर्तरि चर्षिदेवतयोः ॥ १८६ ॥

पुव इति वर्तते। पुवः करणे कर्तरि चेत्रप्रत्ययो भवति। ऋषिदेवतयोर्यथासंख्यं संबन्धः। ऋषौ करणे, देवतायां कर्तरि। पूयतेऽनेनेति पवित्रोऽयमृषिः। देवतायाम्—अग्निः पवित्रं स मा पुनातु। वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु ( निरु० ५.६ )॥

## ञीतः क्तः ॥ १८७ ॥

ञि इद् यस्यासौ ञीत्। ञीतो धातोर्वर्तमानेऽर्थे क्तप्रत्ययो भवति। भूते निष्ठा विहिता वर्तमाने न प्राप्नोतीति विधीयते। 'ञिमिदा स्नेहने' ( भ्वा० ४९५ )—मिन्नः। ञिक्ष्विदा—क्ष्विण्णः। ञिधृषा—धृष्टः॥

## मतिबुद्धिपूजार्थेभ्यश्च ॥ १८८ ॥

मतिरिच्छा। बुद्धिर्ज्ञानम्। पूजा सत्कारः। एतदर्थेभ्यश्च धातुभ्यो वर्तमानार्थे क्तप्रत्ययो भवति। राज्ञां मतः। राज्ञामिष्टः। राज्ञां बुद्धः। राज्ञां ज्ञातः। राज्ञां पूजितः। राज्ञामर्चितः। अनुक्तसमुच्चयार्थश्चकारः।

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥ १ ॥
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ।
कष्टं भविष्यतीत्याहुरमृतः पूर्ववत् स्मृतः ॥ २ ॥

कष्ट इति भविष्यति काले। अमृत इति पूर्ववत्। वर्तमान इत्यर्थः। तथा सुप्तः, शयितः, आशितः, लिप्तः, तृप्त इत्येवमादयोऽपि वर्तमाने द्रष्टव्याः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य द्वितीयः पादः॥

# ॥ तृतीयाध्यायस्य तृतीयः पादः ॥

## उणादयो बहुलम् ॥ १ ॥

वर्तमान इत्येव, संज्ञायामिति च। उणादयः प्रत्यया वर्तमानेऽर्थे संज्ञायां विषये बहुलं भवन्ति। यतो विहितास्ततोऽन्यत्रापि भवन्ति। केचिदविहिता एव प्रयोगत उन्नीयन्ते। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' ( प० उ० १.१ )। कारुः। वायुः। पायुः। जायुः। मायुः। स्वादुः। साधुः। आशुः।

बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम्।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥ १ ॥
नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ २ ॥
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ ३ ॥

## भूतेऽपि दृश्यन्ते ॥ २ ॥

पूर्वत्र वर्तमानाधिकाराद् भूतार्थमिदं वचनम्। भूते काल उणादयः प्रत्यया दृश्यन्ते। वृत्तमिदं वर्त्म। चरितं तदिति चर्म। भसितं तदिति भस्म। दृशिग्रहणं प्रयोगानुसारार्थम् ॥

## भविष्यति गम्यादयः ॥ ३ ॥

भविष्यति काले गम्यादयः शब्दाः साधवो भवन्ति। प्रत्ययस्यैव भविष्यत्कालता विधीयते न प्रकृतेः। गमी ग्रामम्। आगामी। प्रस्थायी। प्रतिरोधी। प्रतिबोधी। प्रतियोधी। प्रतियोगी। प्रतियायी। आयायी[1]। भावी ॥ अनद्यतन उपसंख्यानम् ॥ श्वो गमी ग्रामम् ॥

## यावत्पुरानिपातयोर्लट् ॥ ४ ॥

भविष्यतीत्येव। यावत्पुराशब्दयोर्निपातयोरुपपदयोर्भविष्यति काले धातोर्लट् प्रत्ययो भवति। यावद् भुङ्क्ते। पुरा भुङ्क्ते। निपातयोरिति किम् ? यावद् दास्यति तावद् भोक्ष्यते। करणभूतया पुरा व्रजिष्यति ॥

---

१ – 'आयावी' इति है०।

## विभाषा कदाकर्ह्योः ॥ ५ ॥

कदा कर्हि इत्येतयोरुपपदयोर्विभाषा भविष्यति काले धातोर्लट् प्रत्ययो भवति। कदा भुङ्क्ते, कदा भोक्ष्यते, कदा भोक्ता। कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्ता॥

## किंवृत्ते लिप्सायाम् ॥ ६ ॥

विभाषेति वर्तते। किमो वृत्तं किंवृत्तम्। वृत्तग्रहणेन तद् विभक्त्यन्तं प्रतीयात्, डतरडतमौ चेति परिसंख्यानं स्मर्यते। किंवृत्त उपपदे लिप्सायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति। लिप्सा, लब्धुमिच्छा प्रार्थनाभिलाषः। कं भवन्तो भोजयन्ति ? कं भवन्तो भोजयितारः ? लब्धुकामः पृच्छति—कतरो भिक्षां दास्यति, ददाति, दाता वा ? कतमो भिक्षां दास्यति, ददाति, दाता वा ? लिप्सायामिति किम् ? कः पाटलिपुत्रं गमिष्यति॥

## लिप्स्यमानसिद्धौ च ॥ ७ ॥

विभाषेत्येव। लिप्स्यमानात् सिद्धिर्लिप्स्यमानसिद्धिः। लिप्स्यमानसिद्धौ गम्यमानायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति। अकिंवृत्तार्थोऽयमारम्भः। यो भक्तं ददाति, स स्वर्गं गच्छति। यो भक्तं दास्यति, स स्वर्गं गमिष्यति। यो भक्तं दाता, स स्वर्गं गन्ता। लिप्स्यमानाद् भक्तात् स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति॥

## लोडर्थलक्षणे च ॥ ८ ॥

लोडर्थः प्रैषादिर्लक्ष्यते येन, स लोडर्थलक्षणो धात्वर्थः, तत्र वर्तमानाद् धातोर्भविष्यति काले विभाषा लट् प्रत्ययो भवति। उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व। उपाध्यायागमनमध्ययनप्रैषस्य लक्षणम्॥

## लिङ् चोर्ध्वमौहूर्तिके ॥ ९ ॥

भविष्यति, विभाषा, लोडर्थलक्षण इति सर्वमनुवर्तते। ऊर्ध्वमौहूर्तिके भविष्यति काले लोडर्थलक्षणार्थे वर्तमानाद् धातोर्विभाषा लिङ् प्रत्ययो भवति, चकाराल्लट् च। ऊर्ध्वं मुहूर्ताद् भव ऊर्ध्वमौहूर्तिकः। निपातनात् समासः, उत्तरपदवृद्धिश्च। भविष्यतश्चैतद् विशेषणम्। ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्योपाध्यायश्चेदागच्छेत्, उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व॥

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ १० ॥

भविष्यतीत्येव। क्रियार्थायां क्रियायामुपपदे धातोर्भविष्यति काले तुमुन्ण्वुलौ प्रत्ययौ भवतः। भोक्तुं व्रजति। भोजको व्रजति। भुजिक्रियार्थो व्रजिरत्रोपपदम्। क्रियायामिति किम् ? भिक्षिष्य इत्यस्य जटाः। क्रियार्थायामिति किम् ? धावतस्ते पतिष्यति दण्डः। अथ किमर्थं ण्वुल् विधीयते, यावता 'ण्वुल्तृचौ' ( ३.१.१३३ ) इति सामान्येन विहित एव, सोऽस्मिन्नपि विषये भविष्यति ? लृटा क्रियार्थोपपदेन बाध्येत। वासरूपविधिना सोऽपि भविष्यति ? एवं तर्ह्येतज् ज्ञाप्यते—क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ति ( महाभाष्य २.१४१ ) इति। तेन कर्ता व्रजति, विक्षिपो व्रजतीत्येवमादि निवर्त्यते॥

## भाववचनाश्च ॥ ११ ॥

भविष्यतीत्येव। 'भावे' ( ३.३.१८ ) इति प्रकृत्य ये घञादयो विहितास्ते च भाववचना भविष्यति काले क्रियायामुपपदे क्रियार्थायां भवन्ति। किमर्थमिदं यावता विहिता एव ते ? क्रियार्थोपपदे विहितेनास्मिन्विषये तुमुना बाध्येरन्। वासरूपविधिश्चात्र नास्तीत्युक्तम् ( ३.३.१० )। अथ वचनग्रहणं किमर्थम् ? वाचका यथा स्युः। कथं च वाचका भवन्ति ? याभ्यः प्रकृतिभ्यो येन विशेषणेन विहिताः, यदि ताभ्यस्तथैव भवन्ति, नासामञ्जस्येनेति। पाकाय व्रजति। भूतये व्रजति। पुष्टये व्रजति॥

## अण् कर्मणि च ॥ १२ ॥

भविष्यतीत्येव। चकारः सन्नियोगार्थः। धातोरण् प्रत्ययो भवति भविष्यति काले कर्मण्युपपदे क्रियायां च क्रियार्थायाम्। 'कर्मण्यण्' ( ३.२.१ ) इति सामान्येन विहितो वासरूपविधेरभावाद् ण्वुला बाधितः पुनरण् विधीयते, सोऽपवादत्वाद् ण्वुलं बाधते, परत्वात् कादीन्। तेनापवादविषयेऽपि भवत्येव। काण्डलावो व्रजति। अश्वदायो व्रजति। गोदायो व्रजति। कम्बलदायो व्रजति॥

## लृट् शेषे च ॥ १३ ॥

भविष्यतीत्येव। शेषः क्रियार्थोपपदादन्यः। शेषे शुद्धे भविष्यति काले, चकारात् क्रियायां चोपपदे क्रियार्थायां धातोर्लृट् प्रत्ययो भवति। करिष्यामीति व्रजति। हरिष्यामीति व्रजति। शेषे खल्वपि—करिष्यति। हरिष्यति॥

## लृटः सद् वा ॥ १४ ॥

लृटः स्थाने सत्संज्ञौ शतृशानचौ वा भवतः। व्यवस्थितविभाषेयम्। तेन यथा लटः शतृशानचौ तथास्यापि भवतः। अप्रथमासमानाधिकरणादिषु नित्यम्, अन्यत्र विकल्पः। करिष्यन्तं देवदत्तं पश्य। करिष्यमाणं देवदत्तं पश्य। हे करिष्यन्। हे करिष्यमाण। अर्जयिष्यमाणो वसति। प्रथमासमानाधिकरणे विकल्पः। करिष्यन् देवदत्तः। करिष्यमाणो देवदत्तः। करिष्यति। करिष्यते॥

## अनद्यतने लुट्॥ १५ ॥

भविष्यतीत्येव। भविष्यदनद्यतनेऽर्थे वर्तमानाद् धातोर्लुट् प्रत्ययो भवति। लृटोऽपवादः। श्वः कर्ता। श्वो भोक्ता। अनद्यतन इति बहुव्रीहिनिर्देशः। तेन व्यामिश्रे न भवति। अद्य श्वो वा भविष्यतीति॥ परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्या॥ इयं नु कदा गन्ता, यैवं पादौ निदधाति। अयं नु कदाध्येता, य एवमनभियुक्तः॥

## पदरुजविशस्पृशो घञ्॥ १६ ॥

भविष्यतीति निवृत्तम्। इत उत्तरं त्रिष्वपि कालेषु प्रत्ययाः। पदादिभ्यो धातुभ्यो घञ् प्रत्ययो भवति। पद्यतेऽसौ पादः। रुजत्यसौ रोगः। विशत्यसौ वेशः॥ स्पृश उपताप इति वक्तव्यम्॥ स्पृशतीति स्पर्श उपतापः। ततोऽन्यत्र पचाद्यच् भवति। स्पर्शो देवदत्तः। स्वरे विशेषः॥

## सृ स्थिरे॥ १७ ॥

सर्तेर्धातोः स्थिरे कर्तरि घञ् प्रत्ययो भवति। स्थिर इति कालान्तरस्थायी पदार्थ उच्यते। स चिरं तिष्ठन् कालान्तरं सरतीति धात्वर्थस्य कर्ता युज्यते। चन्दनसारः। खदिरसारः। स्थिर इति किम् ? सर्ता। सारकः॥ व्याधिमत्स्यबलेष्विति वक्तव्यम्॥ अतीसारो व्याधिः। विसारो मत्स्यः। सारो बलम्॥

## भावे॥ १८ ॥

भावे वाच्ये धातोर्घञ् प्रत्ययो भवति। पाकः। त्यागः। रागः। क्रियासामान्यवाची भवतिः। तेनार्थनिर्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति। धात्वर्थश्च धातुनैवोच्यते। यस्तस्य सिद्धता नाम धर्मः तत्र घञादयः प्रत्यया विधीयन्ते। पुँल्लिङ्गमेकवचनं चात्र न तन्त्रम्, लिङ्गान्तरे वचनान्तरेऽपि चात्र प्रत्यया भवन्त्येव। पक्तिः। पचनम्। पक्वम्। पाकौ। पाका इति॥

## अकर्तरि च कारके संज्ञायाम् ॥ १९ ॥

कर्तृवर्जिते कारके संज्ञायां विषये धातोर्घञ् भवति। प्रास्यन्ति तं प्रासः। प्रसीव्यन्ति तं प्रसेवः। आहरन्ति तस्माद् रसमित्याहारः। मधुराहारः। तक्षशिलाहारः। अकर्तरीति किम् ? मिषत्यसौ मेषः। संज्ञायामिति किम् ? कर्तव्यः कटः। चकारः संज्ञाव्यभिचारार्थः। को भवता दायो दत्तः। को भवता लाभो लब्धः। कारकग्रहणं पर्युदासे न कर्तव्यम् , तत् क्रियते प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञापनार्थम्, 'आदेच उपदेशेऽशिति' ( ६.१.४५ ) इति। इत उत्तरं भावे अकर्तरि च कारक इति च द्वयमनुवर्तते ॥

## परिमाणाख्यायां सर्वेभ्यः ॥ २० ॥

परिमाणाख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यो घञ् प्रत्ययो भवति। एकस्तण्डुलनिश्चायः[1]। द्वौ शूर्पनिष्पावौ। 'कॄ विक्षेपे' ( तुदा० ११८ )—द्वौ कारौ। त्रयः काराः। सर्वग्रहणमपोऽपि बाधनार्थम्। पुरस्तादपवादन्यायेन ( परि० ५९ ) ह्यचमेव बाधेत नापम्। परिमाणाख्यायामिति किम् ? निश्चयः। आख्याग्रहणं रूढिनिरासार्थम्। तेन संख्यापि गृह्यते, न प्रस्थाद्येव। घञनुक्रमणमजपोर्विषये, स्त्रीप्रत्ययास्तु न बाध्यन्ते। एका तिलोच्छ्रितिः[2]। द्वे प्रसृती ॥ दारजारौ कर्तरि णिलुक् च ॥ दारयन्तीति दाराः। जरयन्तीति जाराः ॥

## इङश्च ॥ २१ ॥

इङो धातोर्घञ् प्रत्ययो भवति। अचोऽपवादः। अध्यायः। उपेत्यास्मादधीत उपाध्यायः ॥ अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ॥ उपाध्याया। उपाध्यायी ॥ शॄ वायुवर्णनिवृतेषु ॥ शारो वायुः। शारो वर्णः। शारो निवृतम्।

गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः ॥

## उपसर्गे रुवः ॥ २२ ॥

उपसर्ग उपपदे रौतेर्धातोर्घञ् प्रत्ययो भवति। अपोऽपवादः। संरावः। उपरावः। उपसर्ग इति किम् ? रवः ॥

## समि युद्रुदुवः ॥ २३ ॥

सम्युपपदे यु द्रु दु इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति। संयावः। संद्रावः। संदावः। समीति किम् ? प्रयवः ॥

---

१ - 'निचायः' इति बाल०, पद०। २ - 'तिलोच्छित्तिः' इति है०।

## श्रिणीभुवोऽनुपसर्गे ॥ २४ ॥

श्रि णी भू इत्येतेभ्यो धातुभ्योऽनुपसर्गेभ्यो घञ् प्रत्ययो भवति। अजपोरपवादः। श्रायः। नायः। भावः। अनुपसर्ग इति किम् ? प्रश्रयः। प्रणयः। प्रभवः। कथं प्रभावो राज्ञः ? प्रकृष्टो भाव इति प्रादिसमासो भविष्यति। कथं च नयो राज्ञः ? 'कृत्यल्युटो बहुलम्' ( ३.३.११३ ) इत्यज् भविष्यति ॥

## वौ क्षुश्रुवः ॥ २५ ॥

वावुपपदे क्षु श्रु इत्येताभ्यां धातुभ्यां घञ् प्रत्ययो भवति। अपोऽपवादः। विक्षावः। विश्रावः। वाविति किम् ? क्षवः। श्रवः॥

## अवोदोर्नियः ॥ २६ ॥

अव उद् इत्येतयोरुपपदयोर्नयतेर्धातोर्घञ् प्रत्ययो भवति। अवनायः। उन्नायः। कथमुन्नयः पदार्थानाम् ? 'कृत्यल्युटो बहुलम्' ( ३.३.११३ ) इत्यज् भविष्यति ॥

## प्रे द्रुस्तुस्रुवः ॥ २७ ॥

प्रशब्द उपपदे द्रु स्तु स्रु इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति। प्रद्रावः। प्रस्तावः। प्रस्रावः। प्र इति किम् ? द्रवः। स्तवः। स्रवः॥

## निरभ्योः पूल्वोः ॥ २८ ॥

पू इति पूङ्पूञोः सामान्येन ग्रहणम्। 'लूञ् छेदने' ( क्र्या० १२ )। यथासंख्यमुपसर्गसंबन्धः। निरभिपूर्वयोः पूल्वोर्धात्वोर्घञ् प्रत्ययो भवति। निष्पावः। अभिलावः। निरभ्योरिति किम् ? पवः। लवः॥

## उन्न्योर्ग्रः ॥ २९ ॥

'गॄ शब्दे' ( क्र्या० २९ ) 'गॄ निगरणे' ( तुदा० ११९ ) द्वयोरपि ग्रहणम्। उन्न्योरुपपदयोर्गॄ इत्येतस्माद् धातोर्घञ् प्रत्ययो भवति। उद्गारः समुद्रस्य। निगारो देवदत्तस्य। उन्न्योरिति किम् ? गरः॥

## कॄ धान्ये ॥ ३० ॥

उन्न्योरिति वर्तते। कॄ इत्येतस्माद् धातोरुन्न्योरुपपदयोर्घञ् प्रत्ययो भवति, धान्यविषयश्चेद् धात्वर्थो भवति। विक्षेपार्थस्य किरतेर्ग्रहणम्, न हिंसार्थस्य, अनभिधानात्। उत्कारो धान्यस्य। निकारो धान्यस्य। धान्य इति किम् ? भैक्ष्योत्करः। पुष्पनिकरः॥

## यज्ञे समि स्तुवः ॥ ३१ ॥

यज्ञविषये प्रयोगे संपूर्वात् स्तौतेर्घञ् प्रत्ययो भवति। संस्तावश्छन्दोगानाम्। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः, स देशः संस्ताव इत्युच्यते। यज्ञ इति किम् ? संस्तवश्छात्रयोः॥

## प्रे स्त्रोऽयज्ञे ॥ ३२ ॥

'स्तॄञ् आच्छादने' ( क्र्या० १३ ) अस्माद् धातोः प्रशब्द उपपदे घञ् प्रत्ययो भवति, न चेद् यज्ञविषयः प्रयोगो भवति। शङ्खप्रस्तारः। अयज्ञ इति किम् ? बर्हिष्प्रस्तरः॥

## प्रथने वावशब्दे ॥ ३३ ॥

'स्तॄञ् आच्छादने' ( क्र्या० १३ ) अस्माद् धातोर्विशब्द उपपदे घञ् प्रत्ययो भवति प्रथने गम्यमाने, तच्चेत् प्रथनं शब्दविषयं न भवति। प्रथनं विस्तीर्णता। पटस्य विस्तारः। प्रथन इति किम् ? तृणविस्तरः। अशब्द इति किम् ? विस्तरो वचसाम्॥

## छन्दोनाम्नि च ॥ ३४ ॥

वौ स्त्र इति वर्तते। विपूर्वात् स्तृणातेश्छन्दोनाम्नि घञ् प्रत्ययो भवति। वृत्तमत्र छन्दो गृह्यते, यस्य गायत्र्यादयो विशेषाः, न मन्त्रब्राह्मणम्, नामग्रहणात्। विष्टारपङ्क्तिश्छन्दः। विष्टारबृहती छन्दः। विष्टारपङ्क्तिशब्दोऽत्र छन्दोनाम, न घञन्तं शब्दरूपम्, तत्र त्ववयवत्वेन वर्तते। छन्दोनाम्नीत्यधिकरणसप्तम्येषा॥

## उदि ग्रहः ॥ ३५ ॥

उदि उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति। अपोऽपवादः। उद्ग्राहः ॥ छन्दसि निपूर्वादपीष्यते स्रुगुद्यमननिपातनयोः॥ हकारस्य भकारः। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ( मा० सं० १७.६४ )॥

## समि मुष्टौ ॥ ३६ ॥

ग्रह इत्येव। सम्युपपदे ग्रहेर्धातोर्घञ् भवति मुष्टिविषयश्चेद् धात्वर्थो भवति। मुष्टिरङ्गुलिसंनिवेशः। अहो मल्लस्य संग्राहः। अहो मुष्टिकस्य संग्राहः। दृढमुष्टिताख्यायते। मुष्टाविति किम् ? संग्रहो धान्यस्य॥

## परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥ ३७ ॥

परिशब्दे निशब्दे चोपपदे यथासंख्यं निय इणश्च धातोर्घञ् प्रत्ययो भवति। अचोऽपवादः। द्यूताभ्रेषयोः, अत्रापिं यथासंख्यमेव संबन्धः। द्यूतविषयश्चेन्नयतेरर्थः, अभ्रेषविषयश्चेदिणर्थः। पदार्थानामनपचारो यथाप्राप्तकरणमभ्रेषः। द्यूते तावत्—परिणायेन शारान् हन्ति। समन्तान्नयनेन। अभ्रेषे—एषोऽत्र न्यायः। द्यूताभ्रेषयोरिति किम् ? परिणयः। न्ययं गतः पापः॥

## परावनुपात्यय इणः ॥ ३८ ॥

परिशब्द उपपद इणो धातोर्घञ् प्रत्ययो भवति, अनुपात्यये गम्यमाने। क्रमप्राप्तस्यानतिपातोऽनुपात्ययः, परिपाटी। तव पर्यायः। मम पर्यायः। अनुपात्यय इति किम् ? कालस्य पर्ययः। अतिपात इत्यर्थः॥

## व्युपयोः शेतेः पर्याये ॥ ३९ ॥

वि उप इत्येतयोरुपपदयोः शेतेर्धातोर्घञ् भवति पर्याये गम्यमाने। तव विशायः। मम विशायः। तव राजोपशायः। तव राजानमुपशयितुं पर्याय इत्यर्थः। पर्याय इति किम् ? विशयः। उपशयः॥

## हस्तादाने चेरस्तेये ॥ ४० ॥

हस्तादाने गम्यमाने चिनोतेर्धातोर्घञ् प्रत्ययो भवति, न चेत् स्तेयं चौर्यं भवति। हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते। पुष्पप्रचायः। फलप्रचायः। हस्तादान इति किम् ? वृक्षशिखरे फलप्रचयं करोति। अस्तेय इति किम् ? फलप्रचयश्चौर्येण ॥ उच्चयस्य प्रतिषेधो वक्तव्यः॥

## निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ ४१ ॥

चेरित्येव। निवसन्त्यस्मिन्निति निवासः। चीयतेऽसौ चितिः। पाण्यादिसमुदायः शरीरम्। राशीकरणमुपसमाधानम्। एतेष्वर्थेषु चिनोतेर्घञ् प्रत्ययो भवति, धातोरादेश्च ककार आदेशः। निवासे तावत्—चिखल्लिनिकायः। चितौ—आकायमग्निं चिन्वीत। शरीरे—अनित्यकायः। उपसमाधाने—महान् गोमयनिकायः। एतेष्विति किम् ? चयः। इह कस्माद् न भवति—महान् काष्ठनिचयः ? बहुत्वमत्र विवक्षितं नोपसमाधानम्॥

---

१ – 'पुष्पप्रचय०' इति बाल०।

## संघे चानौत्तराधर्ये ॥ ४२ ॥

चेरित्येव। प्राणिनां समुदायः संघः। स च द्वाभ्यां प्रकाराभ्यां भवति। एकधर्मसमावेशेन, औत्तराधर्येण वा। तत्र औत्तराधर्यपर्युदासादितरो गृह्यते। संघे वाच्ये चिनोतेर्धातोर्घञ् प्रत्ययो भवति, आदेशश्च कः। भिक्षुकनिकायः। ब्राह्मणनिकायः। वैयाकरणनिकायः। अनौत्तराधर्य इति किम्? सूकरनिचयः। प्राणिविषयत्वात् संघस्येह न भवति। कृताकृतसमुच्चयः। प्रमाणसमुच्चयः॥

## कर्मव्यतिहारे णच् स्त्रियाम् ॥ ४३ ॥

कर्म क्रिया। व्यतिहारः परस्परकरणम्। कर्मव्यतिहारे गम्यमाने धातोर्णच् प्रत्ययो भवति स्त्रीलिङ्गे वाच्ये। तच्च भावे। चकारो विशेषणार्थो 'णचः स्त्रियामञ्' (५.४.१४) इति। व्यावक्रोशी। व्यावलेखी। व्यावहासी वर्तते। स्त्रियामिति किम्? व्यतिपाको वर्तते। बाधकविषयेऽपि क्वचिदिष्यते। व्यावचोरी। व्यावचर्ची। इह न भवति—व्यतीक्षा, व्यतीहा वर्तते। व्यात्युक्षी भवति। तदेतद् वैचित्र्यं कथं लभ्यते? 'कृत्यल्युटो बहुलम्' (३.३.११३) इति भवति॥

## अभिविधौ भाव इनुण् ॥ ४४ ॥

अभिविधिरभिव्याप्तिः, क्रियागुणाभ्यां कार्त्स्न्येन संबन्धः। अभिविधौ गम्यमाने धातोर्भाव इनुण् भवति। सांकूटिनम्। सांराविणम्। सान्द्राविणं वर्तते। अभिविधाविति किम्? संकोटः। संरावः। संद्रावः[1]। भाव इति वर्तमाने पुनर्भावग्रहणं वासरूपनिरासार्थम्, तेन घञ् न भवति। ल्युटा तु समावेश इष्यते। संकूटनं वर्तते। तत् कथम्? 'कृत्यल्युटो बहुलम्' (३.३.११३) इति॥

## आक्रोशेऽवन्योर्ग्रहः ॥ ४५ ॥

दृष्टानुवृत्तिसामर्थ्याद् घञनुवर्तते, नानन्तर इनुण्। अव नि इत्येतयोरुपपदयोर्ग्रहेर्धातोर्घञ् प्रत्ययो भवत्याक्रोशे गम्यमाने। आक्रोशः शपनम्। अवग्राहो हन्त ते वृषल भूयात्। निग्राहो हन्त ते वृषल भूयात्। आक्रोश इति किम्? अवग्रहः पदस्य। निग्रहश्चोरस्य॥

## प्रे लिप्सायाम् ॥ ४६ ॥

ग्रह इत्येव। प्रशब्द उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति लिप्सायां गम्यमानायाम्।

---

१ – इदं न न्याय्यम्। द्र० पद०।

पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी। स्रुवप्रग्राहेण चरति द्विजो दक्षिणार्थी। लिप्सायामिति किम् ? प्रग्रहो देववत्तस्य॥

## परौ यज्ञे ॥ ४७ ॥

परिशब्द उपपदे ग्रहेर्घञ् प्रत्ययो भवति, यज्ञविषयश्चेत् प्रत्ययान्ताभिधेयः स्यात्। उत्तरपरिग्राहः[१]। यज्ञ इति किम् ? परिग्रहो देवदत्तस्य॥

## नौ वृ धान्ये ॥ ४८ ॥

वृ इति वृङ्वृञोः सामान्येन ग्रहणम्। निशब्द उपपदे वृ इत्येतस्माद् धातोर्धान्य-विशेषेऽभिधेये घञ् प्रत्ययो भवति। अपोऽपवादः। नीवारा नाम व्रीहयो भवन्ति। धान्य इति किम् ? निवरा कन्या॥

## उदि श्रयतियौतिपूद्रुवः ॥ ४९ ॥

उच्छब्द उपपदे श्रयत्यादिभ्यो घञ् प्रत्ययो भवति। अजपोरपवादः। उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः। कथं पतनान्ताः समुच्छ्रयाः ? वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकितन्यायेन संबध्यते॥

## विभाषाङि रुप्लुवोः ॥ ५० ॥

आङ्युपपदे रौतेः प्लवतेश्च विभाषा घञ् प्रत्ययो भवति। आरावः, आरवः। आप्लावः, आप्लवः॥

## अवे ग्रहो वर्षप्रतिबन्धे ॥ ५१ ॥

विभाषेति वर्तते। अव उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति विभाषा वर्षप्रति-बन्धेऽभिधेये। प्राप्तकालस्य वर्षस्य कुतश्चिन्निमित्तादभावो वर्षप्रतिबन्धः। अवग्राहो देवस्य, अवग्रहो देवस्य। वर्षप्रतिबन्ध इति किम् ? अवग्रहः पदस्य॥

## प्रे वणिजाम् ॥ ५२ ॥

ग्रह इति वर्तते। विभाषेत्येव। प्रशब्द उपपदे ग्रहेर्धातोर्विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तवाच्यश्चेद् वणिजां संबन्धी भवति। वणिक्संबन्धेन च तुलासूत्रं लक्ष्यते, न तु वणिजस्तन्त्रम्। तुला प्रगृह्यते येन सूत्रेण स शब्दार्थः। तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति वणिगन्यो वा। वणिजामिति किम् ? प्रग्रहो देवदत्तस्य॥

---

१ - 'अधरपरिग्राहः' इत्यधिकं कोशेषु। तदयुक्तम्, याज्ञग्रन्थेष्वनुपलब्धेः। 'पूर्वपरिग्राहः' इति साधीयः स्यात्।

## रश्मौ च ॥ ५३ ॥

ग्रहो विभाषा प्र इति वर्तते। प्रशब्द उपपदे ग्रहेर्धातोर्विभाषा घञ् प्रत्ययो भवति, रश्मिश्चेत् प्रत्ययान्तेनाभिधीयते। रथादियुक्तानामश्वादीनां संयमनार्था रज्जू रश्मिरिह गृह्यते। प्रग्राहः, प्रग्रहः॥

## वृणोतेराच्छादने ॥ ५४ ॥

विभाषा प्र इति वर्तते। प्रशब्द उपपदे वृणोतेर्धातोर्विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तेन चेदाच्छादनविशेष उच्यते। प्रावारः, प्रवरः। आच्छादन इति किम् ? प्रवरा गौः॥

## परौ भुवोऽवज्ञाने ॥ ५५ ॥

विभाषेत्येव। परिशब्द उपपदे भवतेर्धातोर्विभाषा घञ् प्रत्ययो भवत्यवज्ञाने गम्यमाने। अवज्ञानमसत्कारः। परिभावः, परिभवः। अवज्ञान इति किम् ? सर्वतो भवनं परिभवः॥

## एरच् ॥ ५६ ॥

भावे, अकर्तरि च कारक इति प्रकृतमनुवर्तते यावत् 'कृत्यल्युटो बहुलम्' (३.३.११३) इति। इवर्णान्ताद् धातोर्भावे, अकर्तरि च कारके संज्ञायामच् प्रत्ययो भवति। घञोऽपवादः। चकारो विशेषणार्थः। 'अन्तः' (६.२.१४३) 'थाथघञ्क्ताजबित्रकाणाम्' (६.२.१४४) इति। चयः। अयः। जयः। क्षयः॥ अज्विधौ भयादीनामुपसंख्यानम्॥ नपुंसके क्तादिनिवृत्त्यर्थम्। भयम्। वर्षम्॥ जवसवौ छन्दसि वक्तव्यौ॥ ऊर्वोरस्तु मे जवः (पै० सं० २०.३६.७)। पञ्चौदनस्‌ सवः (पै० सं० ८.१९.३)॥

## ॠदोरप् ॥ ५७ ॥

ॠकारान्तेभ्य उवर्णान्तेभ्यश्च अप् प्रत्ययो भवति। घञोऽपवादः। पित्करणं स्वरार्थम्। करः। गरः। शरः। उवर्णान्तेभ्यः—यवः। स्तवः। लवः। पवः। दकारो मुखसुखार्थः। मा भूत् तादपि परस्तपरः॥

## ग्रहवृदृनिश्चिगमश्च ॥ ५८ ॥

ग्रहादिभ्यो धातुभ्योऽप् प्रत्ययो भवति। घञोऽपवादः। निश्चिनोतेस्त्वचोऽपवादः।

ग्रहः। वरः। दरः। निश्चयः। गमः। निश्चिग्रहणं स्वरार्थम् ॥ वशिरण्योरुपसंख्यानम् ॥ वशः। रणः ॥ घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ॥ प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः पर्वतस्य। प्रस्नात्यस्मिन् प्रस्नः। प्रपिबन्त्यस्यामिति प्रपा। आविध्यन्ति तेनेत्याविधः। विहन्यन्तेऽस्मिन्निति विघ्नः। आयुध्यतेऽनेनेत्यायुधम् ॥

## उपसर्गेऽदः ॥ ५९ ॥

अबित्येव। उपसर्ग उपपदेऽदेर्धातोरप् प्रत्ययो भवति। विघसः। प्रघसः। उपसर्ग इति किम्? घासः॥

## नौ ण च ॥ ६० ॥

निशब्द उपपदेऽदेर्धातोर्णः प्रत्ययो भवति, चकारादप् च। न्यादः। निघसः॥

## व्यधजपोरनुपसर्गे ॥ ६१ ॥

व्यध जप इत्येतयोरनुपसर्गयोरप् प्रत्ययो भवति। घञोऽपवादः। व्यधः। जपः। अनुपसर्ग इति किम्? आव्याधः[1]। उपजापः॥

## स्वनहसोर्वा ॥ ६२ ॥

अनुपसर्ग इत्येव। स्वनहसोरनुपसर्गयोर्वा अप् प्रत्ययो भवति। स्वनः, स्वानः। हसः, हासः। अनुमसर्ग इति किम्? प्रस्वानः। प्रहासः॥

## यमः समुपनिविषु च ॥ ६३ ॥

अनुपसर्गे वेति वर्तते। सम् उप नि वि इत्येतेषूपपदेष्वनुपसर्गेऽपि यमेर्वा अप् प्रत्ययो भवति। घञोऽपवादः। संयमः, संयामः। उपयमः, उपयामः। नियमः, नियामः। वियमः, वियामः। अनुपसर्गात् खल्वपि—यमः, यामः॥

## नौ गदनदपठस्वनः ॥ ६४ ॥

अबित्येव। निशब्द उपपदे गद नद पठ स्वन इत्येतेभ्यो धातुभ्यो वा अप् प्रत्ययो भवति। घञोऽपवादः। निगदः, निगादः। निनदः, निनादः। निपठः, निपाठः। निस्वनः, निस्वानः॥

---

१ – 'आव्याधा' इति मुद्रितेषु पाठः।

## क्वणो वीणायां च ॥ ६५ ॥

नौ वानुपसर्ग इति वर्तते। क्वणतेर्धातोर्निपूर्वादनुपसर्गाच्च वीणायां वाप् प्रत्ययो भवति। घञोऽपवादः। सोपसर्गार्थं वीणाया ग्रहणम्। निक्वणः, निक्वाणः। अनुपसर्गात्— क्वणः, क्वाणः। वीणायां खल्वपि—कल्याणप्रक्वणा वीणा। एतेष्विति किम्? अतिक्वाणो वर्तते॥

## नित्यं पणः परिमाणे ॥ ६६ ॥

'पण व्यवहारे स्तुतौ च' (भ्वा० २९८) अस्माद् धातोर्नित्यमप् प्रत्ययो भवति परिमाणे गम्यमाने। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। मूलकपणः। शाकपणः। संव्यवहाराय मूलकादीनां यः परिमितो मुष्टिर्बध्यते, तस्येदमभिधानम्। परिमाण इति किम्? पाणः॥

## मदोऽनुपसर्गे ॥ ६७ ॥

मदेर्धातोरनुपसर्गादप् प्रत्ययो भवति। घञोऽपवादः। विद्यामदः। धनमदः। कुलमदः। अनुपसर्ग इति किम्? उन्मादः। प्रमादः॥

## प्रमदसंमदौ हर्षे ॥ ६८ ॥

प्रमद संमद इत्येतौ शब्दौ निपात्येते हर्षेऽभिधेये। कन्यानां प्रमदः। कोकिलानां संमदः। हर्ष इति किम्? प्रमादः। संमादः। प्रसंभ्यामिति नोक्तम्। निपातनं रूढ्यर्थम्॥

## समुदोरजः पशुषु ॥ ६९ ॥

समुदोरुपपदयोरजतेर्धातोः पशुविषये धात्वर्थेऽप् प्रत्ययो भवति। घञोऽपवादः। 'अज गतिक्षेपणयोः' (भ्वा० १३९) इति पठ्यते। स संपूर्वः समुदाये वर्तते, उत्पूर्वश्च प्रेरणे। समजः पशूनाम्। समुदाय इत्यर्थः। उदजः पशूनाम्। प्रेरणमित्यर्थः। पशुष्विति किम्? समाजो ब्राह्मणानाम्। उदाजः क्षत्रियाणाम्॥

## अक्षेषु ग्लहः ॥ ७० ॥

ग्लह इति निपात्यते, अक्षविषयश्चेद् धात्वर्थो भवति। ग्रहेरप् सिद्ध एव, लत्वार्थं निपातनम्। अक्षस्य ग्लहः। अक्षेष्विति किम्? ग्रहः पादस्य। अन्ये ग्लहिं प्रकृत्यन्तरमाहुः। ते घञं प्रत्युदाहरन्ति। ग्लाहः॥

## प्रजने सर्तेः ॥ ७१ ॥

सर्तेर्धातोः प्रजने विषयेऽप् प्रत्ययो भवति। घञोऽपवादः। प्रजनं प्रथमं गर्भग्रहणम्। गवामुपसरः। पशूनामुपसरः। स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुच्यते॥

## ह्वः संप्रसारणं च न्यभ्युपविषु ॥ ७२ ॥

नि अभि उप वि इत्येतेषूपपदेषु ह्वयतेर्धातोः संप्रसारणमप् प्रत्ययश्च भवति। घञोऽपवादः। निहवः। अभिहवः। उपहवः। विहवः। एतेष्विति किम् ? प्रह्वायः॥

## आङि युद्धे ॥ ७३ ॥

आङ्युपपदे ह्वयतेर्धातोः संप्रसारणमप् प्रत्ययश्च भवति युद्धेऽभिधेये। आहूयन्तेऽस्मिन्नित्याहवः। युद्ध इति किम् ? आह्वायः॥

## निपानमाहावः ॥ ७४ ॥

आङ्पूर्वस्य ह्वयतेर्धातोः संप्रसारणमप् प्रत्ययो वृद्धिश्च निपात्यते, निपानं चेदभिधेयं भवति। निपिबन्त्यस्मिन्निति निपानमुदकाधार उच्यते। आहावः पशूनाम्। कूपोपसरेषु य उदकाधारस्तत्र हि पानाय पशव आहूयन्ते। निपानमिति किम् ? आह्वायः॥

## भावेऽनुपसर्गस्य ॥ ७५ ॥

अनुपसर्गस्य ह्वयतेः संप्रसारणमप् प्रत्ययश्च भवति भावेऽभिधेये। हवः। हवें हवे सुहवं शूरमिन्द्रम् (ऋ० ६.४७.११)। अनुपसर्गस्येति किम् ? आह्वायः। भावग्रहणम् 'अकर्तरि च कारके संज्ञायाम्' (३.३.१९) इत्यस्य निरासार्थम्॥

## हनश्च वधः ॥ ७६ ॥

भावेऽनुपसर्गस्येति वर्तते। हन्तेर्धातोरनुपसर्गे भावेऽप् प्रत्ययो भवति, तत्संनियोगेन च वधादेशः, स चान्तोदात्तः। तत्रोदात्तनिवृत्तिस्वरेणाप उदात्तत्वं भवति। वधश्चोराणाम्। वधो दस्यूनाम्। भाव इत्येव—घातः। अनुपसर्गस्येत्येव—प्रघातः। विघातः। चकारो भिन्नक्रमत्वाद् नादेशेन संबध्यते। किं तर्हि ? प्रकृतेन प्रत्ययेन। अप् च, यश्चापरः प्राप्नोति। तेन घञपि भवति। घातो वर्तते॥

## मूर्तौ घनः ॥ ७७ ॥

हन इत्येव। मूर्तिः काठिन्यम्। मूर्तावभिधेयायां हन्तेरप् प्रत्ययो भवति, घनश्चादेशः। अभ्रघनः। दधिघनः। कथं घनं दधीति ? धर्मशब्देन धर्मी भण्यते॥

## अन्तर्घनो देशे ॥ ७८ ॥

अन्तःपूर्वाद् हन्तेरप् प्रत्ययो भवति, घनादेशश्च भवति देशेऽभिधेये। अन्तर्घनः। संज्ञीभूतो वाहीकेषु देशविशेष उच्यते। अन्ये णकारं पठन्ति—अन्तर्घणो देश इति, तदपि ग्राह्यमेव। देश इति किम् ? अन्तर्घातोऽन्यः॥

## अगारैकदेशे प्रघणः प्रघाणश्च ॥ ७९ ॥

प्रपूर्वस्य हन्तेः प्रघण प्रघाण इत्येतौ शब्दौ निपात्येते अगारैकदेशे वाच्ये। प्रघणः। प्रघाणः। द्वारप्रकोष्ठो बाह्य उच्यते। अगारैकदेश इति किम् ? प्रघातोऽन्यः॥

## उद्घनोऽत्याधानम् ॥ ८० ॥

उत्पूर्वस्य हन्तेः उद्घन इति निपात्यतेऽत्याधानं चेद् भवति। उद्घनः। यस्मिन् काष्ठे स्थापयित्वा अन्यानि काष्ठानि तक्ष्यन्ते तदभिधीयते। उद्घातोऽन्यः॥

## अपघनोऽङ्गम् ॥ ८१ ॥

अपपूर्वस्य हन्तेरपघन इति निपात्यते, अङ्गं चेत् तद् भवति। अपघनः अङ्गम्। अवयवः, एकदेशो न सर्वः। किं तर्हि ? पाणिः पादश्चाभिधीयते। अपघातोऽन्यः॥

## करणेऽयोविद्रुषु ॥ ८२ ॥

हन इति वर्तते। अयस् वि द्रु इत्येतेषूपपदेषु हन्तेर्धातोः करणे कारकेऽप् प्रत्ययो भवति, घनादेशश्च। अयो हन्यतेऽनेनेत्ययोघनः। विघनः। द्रुघनः। द्रुघण इति केचिदुदाहरन्ति। कथं णत्वम् ? अरीहणादिषु पाठात्। 'पूर्वपदात् संज्ञायामगः' (८.४.३) इति वा॥

## स्तम्बे क च ॥ ८३ ॥

करणे हन इति वर्तते। स्तम्बशब्द उपपदे करणे कारके हन्तेः कः प्रत्ययो भवति चकारादप् च, तत्र घनादेशः। स्तम्बघ्नः, स्तम्बघनः। स्त्रियां स्तम्बघ्ना स्तम्बघनेतीष्यते। करण इत्येव—स्तम्बघातः॥

## परौ घः ॥ ८४ ॥

करणे हन इत्येव। परिशब्द उपपदे हन्तेर्धातोरप् प्रत्ययो भवति करणे कारके, घशब्दश्चादेशः। परिहन्यतेऽनेनेति परिघः। पलिघः॥

## उपघ्न आश्रये ॥ ८५ ॥

उपपूर्वस्य हन्तेरप् प्रत्यय उपधालोपश्च निपात्यत आश्रयेऽभिधेये। आश्रयशब्दः सामीप्यं प्रत्यासत्तिं लक्षयति। पर्वतोपघ्नः। ग्रामोपघ्नः। आश्रय इति किम् ? पर्वतोपघात एवान्यः॥

## संघोद्घौ गणप्रशंसयोः॥ ८६ ॥

समुदोरुपपदयोर्हन्तेर्धातोरप् प्रत्ययो भवति, टिलोपो घत्वं च निपात्यते, यथासंख्यं गणेऽभिधेये, प्रशंसायां गम्यमानायाम्। संघः पशूनाम्। उद्घो मनुष्याणाम्[1]। गणप्रशंसयो-रिति किम् ? संघातः॥

## निघो निमितम् ॥ ८७ ॥

निघ इति निपूर्वाद् हन्तेरप् प्रत्ययः टिलोपो घत्वं च निपात्यते, निमितं चेदभिधेयं भवति। समन्ताद् मितं निमितम्, समारोहपरिणाहम्। निघा वृक्षाः। निघाः शालयः। निमितमिति किम् ? निघातः॥

## ड्वितः क्त्रिः ॥ ८८ ॥

भावेऽकर्तरि च कारक इति वर्तते। डु इद् यस्य, तस्माद् ड्वितो धातोः क्त्रिः प्रत्ययो भवति। 'क्त्रेर्मम्नित्यम्' ( ४.४.२० ) इति वचनात् केवलो न प्रयुज्यते। 'डुपचष् पाके' ( भ्वा० ७२२ )—पक्त्रिमम्। 'डुवप बीजसंताने' ( भ्वा० ७२९ )—उप्त्रिमम्। 'डुकृञ् करणे' ( तना० १० )—कृत्रिमम्॥

## ट्वितोऽथुच् ॥ ८९ ॥

टु इद् यस्य, तस्माद् ट्वितो धातोरथुच् प्रत्ययो भवति भावादौ। 'टुवेपृ कम्पने' ( भ्वा० २५६ )—वेपथुः। 'टुओश्वि गतिवृद्ध्योः' ( भ्वा० ७३६ )—श्वयथुः। 'टुक्षु शब्दे' ( अदा० २९ )—क्षवथुः॥

## यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ९० ॥

भावेऽकर्तरि च कारक इति वर्तते। यजादिभ्यो धातुभ्यो नङ् प्रत्ययो भवति। ङकारो गुणप्रतिषेधार्थः[2]। यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः। प्रच्छेरसंप्रसारणं ज्ञापकात् 'प्रश्ने चासन्नकाले' ( ३.२.११७ ) इति॥

---

१ - 'मनुष्यः' इति है०। २ - 'गुणवृद्धिप्रति०' इति बाल०।

## स्वपो नन् ॥ ९१ ॥

स्वपेर्धातोर्नन् प्रत्ययो भवति। नकारः स्वरार्थः। स्वप्नः॥

## उपसर्गे घोः किः ॥ ९२ ॥

भावेऽकर्तरि च कारक इति वर्तते। उपसर्ग उपपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति। कित्करणमातो लोपार्थम्। प्रदिः। प्रधिः। अन्तर्धिः॥

## कर्मण्यधिकरणे च ॥ ९३ ॥

घोरित्येव। कर्मण्युपपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवत्यधिकरणे कारके। जलं धीयतेऽस्मिन्निति जलधिः। शरधिः। अधिकरणग्रहणमर्थान्तरनिरासार्थम्। चकारः प्रत्ययानुकर्षणार्थः॥

## स्त्रियां क्तिन् ॥ ९४ ॥

भावेऽकर्तरि च कारक इति वर्तते। स्त्रीलिङ्गे भावादौ धातोः क्तिन् प्रत्ययो भवति। घञजपामपवादः। कृतिः। चितिः। मतिः॥ क्तिन्नाबादिभ्यश्च वक्तव्यः॥ आबादयः प्रयोगतोऽनुसर्तव्याः। आप्तिः। राद्धिः। दीप्तिः। स्रस्तिः[1]। ध्वस्तिः। लब्धिः ॥ श्रुयजिस्तुभ्यः करणे ॥ श्रूयतेऽनयेति श्रुतिः। इष्टिः। स्तुतिः॥ ग्लाम्लाज्याहाभ्यो निः॥ ग्लानिः। म्लानिः। ज्यानिः। हानिः ॥ ॠकारल्वादिभ्यः क्तिन्निष्ठावद् भवतीति वक्तव्यम् ॥ कीर्णिः। गीर्णिः। जीर्णिः। शीर्णिः। लूनिः। धूनिः[2] ॥ संपदादिभ्यः क्विप्॥ संपत्। विपत्। प्रतिपत् ॥ क्तिन्नपीष्यते॥ संपत्तिः। विपत्तिः॥

## स्थागापापचो भावे ॥ ९५ ॥

स्त्रियामिति वर्तते। स्थादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावे क्तिन् प्रत्ययो भवति। अङोऽपवादस्य बाधकः। प्रस्थितिः। उद्गीतिः। संगीतिः। प्रपीतिः। संपीतिः। पक्तिः। भावग्रहणमर्थान्तरनिरासार्थम्। कथमवस्था संस्थेति ? व्यवस्थायामसंज्ञायाम् ( १.१.३४ ) इति ज्ञापकाद् नात्यन्ताय बाधा भवतीति॥

## मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ॥ ९६ ॥

---

१ – 'स्वस्तिः' इति बाल०। २ – 'यूनिः' 'पूनिः' इति वा प्रायिकः पाठः।

भावे स्त्रियामिति वर्तते। मन्त्रे विषये वृषादिभ्यो धातुभ्यः क्तिन् प्रत्ययो भवत्युदात्तः। प्रकृतिप्रत्ययोर्विभक्तिविपरिणामेन संबन्धः। कस्मादेवं कृतम् ? वैचित्र्यार्थम्। वृष्टिः ( ऋ० १.३८.८ )। इष्टिः ( ऋ० ४.४.७ )। पुक्तिः ( ऋ० ४.२४.५ )। मुतिः ( ऋ० १.१४१.१ )। वित्तिः ( मा० सं० १८.१४ )[1]। भूतिः ( मा० सं० १८.१४ )। वीतिः ( शौ० सं० २०.६९.३ )। रातिः ( ऋ० १.३४.१ )। सर्वत्र सर्वधातुभ्यः सामान्येन विहित एव क्तिन्। उदात्तार्थं वचनम्। इषेस्तु 'इच्छा' ( ३.३.१०१ ) इति निपातनं वक्ष्यति। ततः क्तिन्नपि विधीयते। मन्त्रादन्यत्रादिरुदात्तः॥

## ऊतियूतिजूतिसातिहेतिकीर्तयश्च ॥ ९७ ॥

मन्त्र इति नानुवर्तते। ऊत्यादयः शब्दा निपात्यन्ते। उदात्त इति वर्तते। अवतेः 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' ( ६.४.२० ) इत्यूठ्। ऊतिः। स्वरार्थं वचनम्। यौतेर्जवतेश्च यूतिः, जूतिः। दीर्घत्वं च निपात्यते। सातिः। स्यतेरित्त्वाभावो निपात्यते। सनोतेर्वा 'जनसनखनाम्०' ( ६.४.४२ ) इत्यात्वे कृते स्वरार्थं निपातनम्। हन्तेर्हिनोतेर्वा हेतिः। कीर्तयतेः कीर्तिः॥

## व्रजयजोर्भावे क्यप् ॥ ९८ ॥

उदात्त इत्येव। व्रजयजोर्धात्वोः स्त्रीलिङ्गे भावे क्यप् प्रत्ययो भवत्युदात्तः। क्तिनोऽपवादः। व्रज्या। इज्या। पित्करणमुत्तरत्र तुगर्थम्॥

## संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥ ९९ ॥

भाव इति न स्वर्यते। पूर्व एवात्रार्थाधिकारः। समजादिभ्यो धातुभ्यः स्त्रियां क्यप् प्रत्ययो भवत्युदात्तः संज्ञायां विषये। समजन्त्यस्यामिति समज्या। निषद्या। निपत्या। मन्या[2]। विद्या। सुत्या। शय्या। भृत्या। इत्या। कथं तदुक्तम्—'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति' इति ? भावाधिकारो भावव्यापारो वाच्यत्वेन विवक्षितः, न तु शास्त्रीयोऽधिकारः॥

## कृञः श च ॥ १०० ॥

करोतेर्धातोः स्त्रियां शः प्रत्ययो भवति, चकारात् क्यप् च। योगविभागोऽत्र कर्तव्यः, क्तिन्नपि यथा स्यात्। क्रिया। कृत्या। कृतिः॥

---

१ - वित्ति—भूत्योः स्वरो न संवदते। २ - 'मत्या' इति न्यासः।

## इच्छा ॥ १०१ ॥

इषेर्धातोः शः प्रत्ययो यगभावश्च निपात्यते। इच्छा॥ परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्॥ परिचर्या। परिसर्या। मृगया। अटाट्या॥ जागर्तेरकारो वा॥ जागरा। जागर्या॥

## अ प्रत्ययात् ॥ १०२ ॥

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययो भवति। क्तिनोऽपवादः। चिकीर्षा। जिहीर्षा। पुत्रीया। पुत्रकाम्या। लोलूया। कण्डूया॥

## गुरोश्च हलः ॥ १०३ ॥

हलन्तो यो धातुर्गुरुमान्, ततः स्त्रियामकारः प्रत्ययो भवति। क्तिनोऽपवादः। कुण्डा। हुण्डा। ईहा। ऊहा। गुरोरिति किम्? भक्तिः। हल इति किम्? नीतिः॥

## षिद्भिदादिभ्योऽङ् ॥ १०४ ॥

षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् प्रत्ययो भवति। गणपरिपठितेषु भिदादिषु निष्कृष्य प्रकृतयो गृह्यन्ते। जॄष्—जरा। त्रपूष्—त्रपा। भिदादिभ्यः खल्वपि—भिदा। छिदा। विदा। क्षिपा। गुहा गिर्योषध्योः (ग० सू० २९)। श्रद्धा। मेधा। गोधा। आरा। हारा। कारा। क्षिया। तारा। धारा। लेखा। रेखा। चूडा। पीडा। वपा। वसा। मृजा। क्रपेः संप्रसारणं च (ग० सू० ३०)। कृपा। भिदा विदारणे (ग० सू० ३१)। भित्तिरन्या। छिदा द्वैधीकरणे (ग० सू० ३२)। छित्तिरन्या। आरा शस्त्र्याम् (ग० सू० ३३)। आर्तिरन्या। धारा प्रपाते (ग० सू० ३४)। धृतिरन्या॥

## चिन्तिपूजिकथिकुम्बिचर्चश्च ॥ १०५ ॥

'चिति स्मृत्याम्' (चु० २) 'पूज पूजायाम्' (चु० १११) 'कथ वाक्यप्रबन्धे' (चु० २७९) 'कुबि आच्छादने' (चु० १२३) 'चर्च अध्ययने' (चु० १८१) चुरादिः। एभ्यो धातुभ्यो युचि प्राप्ते स्त्रियामङ् प्रत्ययो भवति। चिन्ता। पूजा। कथा। कुम्बा। चर्चा। चकाराद् युजपि भवति। चिन्तना॥

## आतश्चोपसर्गे ॥ १०६ ॥

आकारान्तेभ्य उपसर्ग उपपदे स्त्रियामङ् प्रत्ययो भवति। क्तिनोऽपवादः। प्रदा। उपदा। प्रधा। उपधा। श्रदन्तरोरुपसर्गवद् वृत्तिः। श्रद्धा। अन्तर्धा॥

## ण्यासश्रन्थो युच् ॥ १०७ ॥

ण्यन्तेभ्यो धातुभ्यः, आस श्रन्थ इत्येताभ्यां च स्त्रियां युच् प्रत्ययो भवति। अकारस्यापवादः। कारणा। हारणा। आसना। श्रन्थना। कथमास्या? 'ऋहलोर्ण्यत्' (३.१.१२४) भविष्यति। वासरूपप्रतिषेधश्च स्त्रीप्रकरणविषयस्यैवोत्सर्गापवादस्य। श्रन्थिः क्र्यादिर्गृह्यते—'श्रन्थ विमोचनप्रतिहर्षयोः' (क्र्या० ४३) इति, न चुरादिः—'श्रन्थ ग्रन्थ संदर्भे' (चु० २६४) इति, ण्यन्तत्वेनैव सिद्धत्वात् ॥ घट्टिवन्दिविदिभ्य उपसंख्यानम् ॥ घट्टना। वन्दना। वेदना। घट्टेर्भौवादिकस्य[1] ग्रहणं 'घट्ट चलने' (भ्वा० १५९) इति, न चौरादिकस्य 'घट्ट संवरणे'[2] (चु० ९८) इत्यस्य ग्रहणम्, तस्य णेरित्येव सिद्धत्वात् ॥ इषेरनिच्छार्थस्य युज्वक्तव्यः ॥ अध्येषणा। अन्वेषणा ॥ परेर्वा ॥ पर्येषणा। परीष्टिः ॥

## रोगाख्यायां ण्वुल् बहुलम् ॥ १०८ ॥

रोगाख्यायां गम्यमानायां धातोर्बहुलं ण्वुल् प्रत्ययो भवति। क्तिन्नादीनामपवादः। आख्याग्रहणं रोगस्य चेत् प्रत्ययान्तेन संज्ञा भवति। बहुलग्रहणं व्यभिचारार्थम्। प्रच्छर्दिका। प्रवाहिका। विचर्चिका। न च भवति—शिरोऽर्तिः ॥ धात्वर्थनिर्देशे ण्वुल् वक्तव्यः ॥ आशिका। शायिका वर्तते ॥ इक्श्तिपौ धातुनिर्देशे ॥ भिदिः। छिदिः। पचतिः। पठतिः ॥ वर्णात् कारः ॥ निर्देश इति प्रकृतम्। अकारः। इकारः ॥ रादिफः ॥ रेफः ॥ मत्वर्थाच्छः ॥ अकारलोपश्च। मत्वर्थीयः ॥ इणजादिभ्यः ॥ आजिः। आतिः। आदिः ॥ इक् कृष्यादिभ्यः ॥ कृषिः। किरिः ॥

## संज्ञायाम् ॥ १०९ ॥

संज्ञायां विषये धातोर्ण्वुल् प्रत्ययो भवति। उद्दालकपुष्पभञ्जिका। वारणपुष्पप्रचायिका। अभ्यूषखादिका। आचोषखादिका। शालभञ्जिका। तालभञ्जिका ॥

## विभाषाख्यानपरिप्रश्नयोरिञ् च ॥ ११० ॥

पूर्वं परिप्रश्नः, पश्चादाख्यानम्। सूत्रेऽल्पाच्तरस्य पूर्वनिपातः। परिप्रश्न आख्याने च गम्यमाने धातोरिञ् प्रत्ययो भवति, चकाराद् ण्वुलपि। विभाषाग्रहणात् परोऽपि यः प्राप्नोति, सोऽपि भवति। कां त्वं कारिमकार्षीः, कां कारिकामकार्षीः, कां क्रियामकार्षीः,

---

१ – 'घट्टेस्तौदादिकस्य' इति बाल०।

२ – 'चलने' इति साम्प्रतिकधातुपाठेषु। 'खट्ट संवरणे' (चु० १००) इत्यन्यः।

कां कृत्यामकार्षीः, कां कृतिमकार्षीः ? सर्वां कारिमकार्षम्, सर्वां कारिकामकार्षम्, सर्वां क्रियामकार्षम्, सर्वां कृत्यामकार्षम्, सर्वां कृतिमकार्षम्। कां गणिमजीगणः, कां गणिकामजीगणः, कां गणनामजीगणः ? सर्वां गणिमजीगणम्, सर्वां गणिकाम्, सर्वां गणनाम्। एवं कां याजिम्, कां याजिकाम्, कां याचिम्, कां याचिकाम्, कां पाचिम्, कां पाचिकाम्, कां पचाम्, कां पक्तिम्, कां पाठिम्, कां पाठिकाम्, कां पठितिम् इति द्रष्टव्यम्। आख्यानपरिप्रश्नयोरिति किम् ? कृतिः। हृतिः॥

## पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ १११ ॥

पर्यायः परिपाटी क्रमः। अर्हणमर्हः, तद्योग्यता। ऋणं तत्, यत् परस्य धार्यते। उत्पत्तिर्जन्म। एतेष्वर्थेषु धातोर्ण्वुच् प्रत्ययो भवति। क्तिन्नादीनामपवादः। पर्याये तावत्—भवतः शायिका। भवतोऽग्रग्रासिका। अर्हे—अर्हति भवानिक्षुभक्षिकाम्। ऋणे—इक्षुभक्षिकां मे धारयसि। ओदनभोजिकाम्। पयःपायिकाम्। उत्पत्तौ—इक्षुभक्षिका मे उदपादि। ओदनभोजिका। पयःपायिका। विभाषेत्येव—चिकीर्षोत्पद्यते। ण्वुलि प्रकृते प्रत्ययान्तरकरणं स्वरार्थम्॥

## आक्रोशे नञ्यनिः ॥ ११२ ॥

विभाषेति निवृत्तम्। आक्रोशः शपनम्। आक्रोशे गम्यमाने नञ्युपपदे धातोरनिः प्रत्ययो भवति। क्तिन्नादीनामपवादः। अकरणिस्ते वृषल भूयात्। आक्रोश इति किम्? अकृतिस्तस्य कटस्य। नञीति किम् ? मृतिस्ते वृषल भूयात्॥

## कृत्यल्युटो बहुलम् ॥ ११३ ॥

भावेऽकर्तरि च कारक इति निवृत्तम्। कृत्यसंज्ञकाः प्रत्यया ल्युट् च बहुलमर्थेषु भवन्ति। यत्र विहितास्ततोऽन्यत्रापि भवन्ति। भावकर्मणोः कृत्या विहिताः कारकान्तरेऽपि भवन्ति। स्नानीयं चूर्णम्। दानीयो ब्राह्मणः। करणाधिकरणयोर्भावे च ल्युट्। अन्यत्रापि भवति। अपसेचनम्। अवस्रावणम्। राजभोजनाः शालयः। राजाच्छादनानि वासांसि। प्रस्कन्दनम्। प्रपतनम्। बहुलग्रहणादन्येऽपि कृतो यथाप्राप्तमभिधेयं व्यभिचरन्ति। पादाभ्यां ह्रियते पादहारकः। गले चोप्यते गलेचोपकः॥

## नपुंसके भावे क्तः ॥ ११४ ॥

नपुंसकलिङ्गे भावे धातोः क्तः प्रत्ययो भवति। हसितम्। सहितम्। जल्पितम्॥

## ल्युट् च ॥ ११५ ॥

नपुंसकलिङ्गे भावे धातोर्ल्युट् प्रत्ययो भवति। हसनं छात्रस्य। शोभनम्। जल्पनम्। शयनम्। आसनम्। योगविभाग उत्तरार्थः॥

## कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ॥ ११६ ॥

येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते, तस्मिन् कर्मण्युपपदे धातोर्नपुंसकलिङ्गे भावे ल्युट् प्रत्ययो भवति[1]। पूर्वेणैव सिद्धे प्रत्यये नित्यसमासार्थं वचनम्। उपपदसमासो हि नित्यः समासः। पयःपानं सुखम्। ओदनभोजनं सुखम्। कर्मणीति किम् ? तूलिकाया उत्थानं सुखम्। संस्पर्शादिति किम् ? अग्निकुण्डस्योपासनं सुखम्। कर्तुरिति किम् ? गुरोः स्नापनं सुखम्। स्नापयतेर्न गुरुः कर्ता, किं तर्हि ? कर्म। शरीरग्रहणं किम् ? पुत्रस्य परिष्वञ्जनं सुखम्। सुखं मानसी प्रीतिः। सुखमिति किम्? कण्टकानां मर्दनं दुःखम्। सर्वत्रासमासः प्रत्युदाह्रियते॥

## करणाधिकरणयोश्च ॥ ११७ ॥

करणेऽधिकरणे च कारके धातोर्ल्युट् प्रत्ययो भवति। इध्मप्रव्रश्चनः। पलाशशातनः। अधिकरणे—गोदोहनी। सक्तुधानी॥

## पुंसि संज्ञायां घः प्रायेण ॥ ११८ ॥

करणाधिकरणयोरित्येव। पुँल्लिङ्गयोः करणाधिकरणयोरभिधेययोर्धातोर्घः प्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते। प्रायग्रहणमकात्स्न्यार्थम्। दन्तच्छदः। उरश्छदः पटः। अधिकरणे खल्वपि—एत्य तस्मिन् कुर्वन्ति इत्याकरः। आलयः। पुंसीति किम् ? प्रसाधनम्। संज्ञायामिति किम् ? प्रहरणो दण्डः। घकारः 'छादेर्घे०' ( ६.४.९६ ) इति विशेषणार्थः॥

## गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ११९ ॥

गोचरादयः शब्दा घप्रत्ययान्ता निपात्यन्ते पूर्वस्मिन्नेवार्थे। 'हलश्च' ( ३.३.१२१ ) इति घञं वक्ष्यति, तस्यायमपवादः। गावश्चरन्त्यस्मिन्निति गोचरः। संचरन्तेऽनेनेति संचरः। वहन्ति तेन वहः। व्रजन्ति तेन व्रजः। व्यजन्ति तेन व्यजः। निपातनाद् 'अजेर्व्यघञपोः' ( २.४.५६ ) इति वीभावो न भवति। एत्य तस्मिन्नापणन्त इत्यापणः। निगच्छन्ति तस्मिन्निति निगमः। चकारोऽनुक्तसमुच्चयार्थः। कषः। निकषः॥

---

१ - अस्य योगस्य द्वितीयोऽर्थः ' अनो भावकर्मवचनः' ( ६.२.१५० ) इत्यत्र द्रष्टव्यः।

## अवे तॄस्त्रोर्घञ् ॥ १२० ॥

अव उपपदे तरतेः स्तृणातेश्च धातोः करणाधिकरणयोः संज्ञायां घञ् प्रत्ययो भवति। घस्यापवादः। ञकारो वृद्ध्यर्थः, स्वरार्थश्च। घकार उत्तरत्र कुत्वार्थः। अवतारः। अवस्तारः। कथमवतारो नद्याः, न हीयं संज्ञा ? प्रायानुवृत्तेरसंज्ञायामपि भवति॥

## हलश्च ॥ १२१ ॥

पुंसि संज्ञायां करणाधिकरणयोश्चेति सर्वमनुवर्तते। हलन्ताद् धातोः करणाधिकरणयोर्घञ् प्रत्ययो भवति। घस्यापवादः। लेखः। वेदः। वेष्टः। बन्धः। मार्गः। अपामार्गः। वीमार्गः॥

## अध्यायन्यायोद्यावसंहाराधारावायाश्च ॥ १२२ ॥

अध्यायादयः शब्दा घञन्ता निपात्यन्ते। 'पुंसि संज्ञायां०' ( ३.३.११८ ) घे प्राप्ते घञ् विधीयते। अहलन्तार्थ आरम्भः। अधीयतेऽस्मिन्नित्यध्यायः। नीयतेऽनेनेति न्यायः। उद्युवन्त्यस्मिन्नित्युद्यावः। संह्रियन्तेऽनेनेति संहारः। आध्रियन्तेऽस्मिन्नित्याधारः। आवयन्त्यस्मिन्नित्यावायः। चकारोऽनुक्तसमुच्चयार्थः। अवहारः॥

## उदङ्कोऽनुदके ॥ १२३ ॥

उदङ्क इति निपात्यते, अनुदकविषयश्चेद् धात्वर्थो भवति। उत्पूर्वादञ्चतेर्घञ् निपात्यते। ननु च 'हलश्च' ( ३.३.१२१ ) इति सिद्ध एव घञ् ? उदके प्रतिषेधार्थमिदं वचनम्। तैलोदङ्कः। अनुदक इति किम् ? उदकोदञ्चनः। घः कस्माद् न प्रत्युदाह्रियते? विशेषाभावात्। घञ्यपि थाथादिस्वरेणान्तोदात्त एव॥

## जालमानायः ॥ १२४ ॥

आनाय इति निपात्यते, जालं चेत् तद् भवति। आङ्पूर्वाद् नयतेः करणे घञ् निपात्यते। आनायो मत्स्यानाम्। आनायो मृगाणाम्॥

## खनो घ च ॥ १२५ ॥

खनतेर्धातोः करणाधिकरणयोर्घः प्रत्ययो भवति, चकाराद् घञ् च। आखनः, आखानः॥ डो वक्तव्यः॥ आखः ॥ डरो वक्तव्यः॥ आखरः ॥ इको वक्तव्यः॥ आखनिकः ॥ इकवको वक्तव्यः॥ आखनिकवकः॥

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १२६ ॥

करणाधिकरणयोरिति निवृत्तम्। ईषत् दुर्[1] सु इत्येतेषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु धातोः खल् प्रत्ययो भवति। कृच्छ्रं दुःखम्। तद् दुरो विशेषणम्। अकृच्छ्रं सुखम्। तदितरयोर्विशेषणम्, संभवात्। ईषत्करो भवता कटः। दुष्करः। सुकरः। ईषद्भोजः। दुर्भोजः। सुभोजः। ईषदादिष्विति किम् ? कृच्छ्रेण कार्यः कटः। कृच्छ्राकृच्छ्रार्थेष्विति किम् ? ईषत्कार्यः। लकारः स्वरार्थः। खित्करणमुत्तरत्र मुमर्थम्॥

## कर्तृकर्मणोश्च भूकृञोः ॥ १२७ ॥

भवतेः करोतेश्च धातोर्यथासंख्यं कर्तरि कर्मणि चोपपदे चकारादीषदादिषु च खल् प्रत्ययो भवति। ईषदाढ्यंभवं भवता। दुराढ्यंभवम्। ईषदाढ्यंकरः। स्वाढ्यंकरो देवदत्तो भवता॥ कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम्॥ इह मा भूत्—स्वाढ्येन भूयते[2]॥

## आतो युच् ॥ १२८ ॥

ईषदादयोऽनुवर्तन्ते। कर्तृकर्मणोरिति न स्वर्यते। कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेष्वाकारान्तेभ्यो धातुभ्यो युच् प्रत्ययो भवति। खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः। ईषद्दानो गौर्भवता। दुर्दानः। सुदानः॥

## छन्दसि गत्यर्थेभ्यः ॥ १२९ ॥

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि विषये युच् प्रत्ययो भवति। खलोऽपवादः। सूपसदनोऽग्निः (तै० सं० ७.५.२०.१)। सूपसदनमन्तरिक्षम्॥

## अन्येभ्योऽपि दृश्यते ॥ १३० ॥

अन्येभ्योऽपि धातुभ्यो गत्यर्थेभ्यश्छन्दसि विषये युच् प्रत्ययो दृश्यते। सुदोहनाम् (निरु० ११.४३) अकृणोद् ब्रह्मणे गाम्। सुवेदनामकृणोर्ब्रह्मणे गाम् (ऋ० १०.११२.८)॥ भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज् वक्तव्यः॥ दुःशासनः। दुर्योधनः। दुर्दर्शनः। दुर्धर्षणः। दुर्मर्षणः॥

## वर्तमानसामीप्ये वर्तमानवद् वा ॥ १३१ ॥

समीपमेव सामीप्यम्। ष्यञः स्वार्थिकत्वं ज्ञाप्यते चातुर्वर्ण्यादिसिद्ध्यर्थम्। वर्तमानसमीपे भूते भविष्यति च वर्तमानाद् धातोर्वर्तमानवत् प्रत्यया वा भवन्ति। 'वर्तमाने

---

१ – 'दुस्' इति मुद्रितेषु। २ – हरदत्तस्तु 'आढ्येन सुभूयते' इति पाठं युक्तं मेने।

लट्' ( ३.२.१२३ ) इत्यारभ्य यावद् 'उणादयो बहुलम्' ( ३.३.१ ) इति वर्तमाने प्रत्यया उक्ताः, ते भूतभविष्यतोर्विधीयन्ते। कदा देवदत्तागतोऽसि ? अयमागच्छामि। आगच्छन्तमेव मां विद्धि। अयमागमम्। एषोऽस्म्यागतः। कदा देवदत्त गमिष्यसि ? एष गच्छामि। गच्छन्तमेव मां विद्धि। एष गमिष्यामि। गन्तास्मि। वत्करणं सर्वसादृश्यार्थम्। येन विशेषणेन[1] वर्तमाने प्रत्यया विहिताः प्रकृत्युपपदादिना[2] तथैवात्र भवन्ति। पवमानः। यजमानः। अलंकरिष्णुः। सामीप्यग्रहणं किम् ? विप्रकर्षविवक्षायां मा भूत्। परुद-गच्छत् पाटलिपुत्रम्। वर्षेण गमिष्यति। यो मन्यते गच्छामीति पदं वर्तमाने काल एव वर्तते, कालान्तरगतिस्तु वाक्याद् भवति, न च वाक्यगम्यः कालः पदसंस्कारवेलायामुप-युज्यत इति, तादृशं वाक्यार्थप्रतिपत्तारं[3] प्रति प्रकरणमिदं नारभ्यते। तथा च श्वः करिष्यति वर्षेण गमिष्यतीति सर्वमुपपद्यते ॥

## आशंसायां भूतवच्च ॥ १३२ ॥

वेत्येव। वर्तमानसामीप्य इति नानुवर्तते। आशंसनमाशंसा, अप्राप्तस्य प्रियार्थस्य प्राप्तुमिच्छा। तस्याश्च भविष्यत्कालो विषयः। तत्र भविष्यति काल आशंसायां गम्यमानायां धातोर्वा भूतवत् प्रत्यया भवन्ति, चकाराद् वर्तमानवच्च। उपाध्यायश्चेदागमत्, आगतः, आगच्छति, आगमिष्यति, एते व्याकरणमध्यगीष्महि, एते व्याकरणमधीतवन्तः, अधीमहे, अध्येष्यामहे। सामान्यातिदेशे विशेषानतिदेशात् ( परि० १०१ ) लङ्लिटौ न भवतः। आशंसायामिति किम् ? आगमिष्यति ॥

## क्षिप्रवचने लृट् ॥ १३३ ॥

आशंसायामित्येव। क्षिप्रवचन उपपद आशंसायां गम्यमानायां धातोर्लृट् प्रत्ययो भवति। भूतवच्चेत्यस्यायमपवादः। उपाध्यायश्चेत् क्षिप्रमागमिष्यति, क्षिप्रं व्याकरणमध्ये-ष्यामहे। वचनग्रहणं पर्यायार्थम्। क्षिप्रं शीघ्रमाशु त्वरितमध्येष्यामहे। नेति वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात्। श्वः क्षिप्रमध्येष्यामहे ॥

## आशंसावचने लिङ् ॥ १३४ ॥

आशंसा येनोच्यते तदाशंसावचनम् , तस्मिन्नुपपदे धातोर्लिङ् प्रत्ययो भवति। भूतवच्चेत्यस्यायमपवादः। उपाध्यायश्चेदागच्छेत् , आशंसे युक्तोऽधीयीय। आशंसेऽ-वकल्पये युक्तोऽधीयीय। आशंसे क्षिप्रमधीयीय ॥

---

१ - 'विशेषेण ' इति बाल०। २ - 'प्रकृत्युपपदोपाधिना ' इति मुद्रितेषु पाठः। द्र० - न्यासपद० ।

३ - 'वाक्यार्थज्ञं प्रति० ' इति बाल०।

## नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥ १३५ ॥

भूतानद्यतने भविष्यदनद्यतने च लङ्लुटौ विहितौ, तयोरयं प्रतिषेधः। अनद्यतनवत् प्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये च गम्यमाने। क्रियाणां प्रबन्धः सातत्येनानुष्ठानम्। कालानां सामीप्यं तुल्यजातीयेनाव्यवधानम्। यावज्जीवं भृशमन्नमदात्। भृशमन्नं दास्यति। यावज्जीवं युक्तोऽध्यापिपत्[1]। यावज्जीवमध्यापयिष्यति। सामीप्ये खल्वपि— येयं पौर्णमास्यतिक्रान्ता, एतस्यामुपाध्यायोऽग्नीनाधित, सोमेनायष्ट, गामदित। येयममावास्या- गामिनी एतस्यामुपाध्यायोऽग्नीनाधास्यते, सोमेन यक्ष्यते, स गां दास्यते। द्वौ प्रतिषेधौ यथाप्राप्तस्याभ्यनुज्ञापनाय ॥

## भविष्यति मर्यादावचनेऽवरस्मिन् ॥ १३६ ॥

नानद्यतनवदिति वर्तते। अक्रियाप्रबन्धार्थम् , असामीप्यार्थं च वचनम्। भविष्यति काले मर्यादावचने सत्यवरस्मिन् प्रविभागेऽनद्यतनवत् प्रत्ययविधिर्न भवति। योऽयमध्वा गन्तव्य आ पाटलिपुत्रात् , तस्य यदवरं कौशाम्ब्याः, तत्र द्विरोदनं भोक्ष्यामहे, तत्र सक्तून् पास्यामः। भविष्यतीति किम् ? योऽयमध्वा गत आ पाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्याः, तत्र युक्ता अध्यैमहि, तत्र द्विरोदनमभुञ्जमहि, तत्र सक्तूनपिबाम। मर्यादावचन इति किम् ? योऽयमध्वा निरवधिको गन्तव्यः, तस्य यदवरं कौशाम्ब्याः, तत्र द्विरोदनं भोक्तास्महे, सक्तून् पातास्मः। अवरस्मिन्निति किम् ? योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्, तस्य यत्परं कौशाम्ब्याः, तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून् पातास्मः। इह सूत्रे देशकृता मर्यादा, उत्तरत्र कालकृता। तत्र च विशेषं वक्ष्यति ॥

## कालविभागे चानहोरात्राणाम् ॥ १३७ ॥

भविष्यति मर्यादावचनेऽवरस्मिन्निति वर्तते। कालमर्यादाविभागे सत्यवरस्मिन् प्रविभागे भविष्यति कालेऽनद्यतनवत् प्रत्ययविधिर्न भवति, न चेदहोरात्रसंबन्धी विभागः, तैस्तेषां च विभागे प्रतिषेधः। पूर्वेणैव सिद्धे वचनमिदमहोरात्रनिषेधार्थम्। योगविभाग उत्तरार्थः। योऽयं संवत्सर आगामी, तत्र यदवरमाग्रहायण्याः, तत्र युक्ता अध्येष्यामहे, तत्रौदनं भोक्ष्यामहे। भविष्यतीत्येव—योऽयं वत्सरोऽतीतः, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि। मर्यादावचन इत्येव—योऽयं निरवधिकः काल आगामी, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्महे। अवरस्मि- न्नित्येव—परस्मिन् विभाषां ( ३.३.१३८ ) वक्ष्यति। अनहोरात्राणामिति किम् ? त्रिविध- मुदाहरणम्। योऽयं मास आगामी, तस्य योऽवरः पञ्चदशरात्रः, योऽयं त्रिंशद्रात्र आगामी,

---

१ - 'पुत्रोऽध्या०' इति बाल०। 'पुत्रानध्या०' इति हैं०।

तस्य योऽवरोऽर्धमासः, योऽयं त्रिंशदहोरात्र आगामी, तस्य योऽवरः पञ्चदशरात्रः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः। सर्वथाहोरात्रस्पर्शे प्रतिषेधः॥

## परस्मिन् विभाषा ॥ १३८ ॥

भविष्यति मर्यादावचने कालविभागे चानहोरात्राणामिति सर्वमनुवर्तते। कालमर्यादाविभागे सति भविष्यति काले परस्मिन् प्रविभागे विभाषानद्यतनवत् प्रत्ययविधिर्न भवति, न चेदहोरात्रसंबन्धी प्रविभागः। अवरस्मिनूवर्जं पूर्वमनुवर्तते[१]। अवरस्मिन् पूर्वेण प्रतिषेध उक्तः, संप्रति परस्मिन्नप्राप्त एव विकल्प उच्यते। योऽयं संवत्सर आगामी, तस्य यत्परमाग्रहायण्याः, तत्र युक्ता अध्येष्यामहे, अध्येतास्महे। तत्र सक्तून् पास्यामः, तत्र सक्तून् पातास्मः। अनहोरात्राणामित्येव—योऽयं त्रिंशद्रात्र आगामी, तस्य यः परः पञ्चदशरात्रः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः। भविष्यतीत्येव—योऽयं संवत्सरोऽतीतः, तस्य यत् परमाग्रहायण्याः, तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि। मर्यादावचन इत्येव—योऽयं[२] निरवधिकः काल आगामी, तस्य यत् परमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः। कालविभाग इत्येव—योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्, तस्य यत् परं कौशाम्ब्याः, तत्र युक्ता अध्येतास्महे, ओदनं भोक्तास्मह इति। सर्वत्रानद्यतनवत् प्रत्यया उदाहार्याः॥

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ १३९ ॥

भविष्यतीत्यनुवर्तते। 'हेतुहेतुमतोर्लिङ्' (३.३.१५६) इत्येवमादिकं लिङो निमित्तम्। तत्र लिङ्निमित्ते भविष्यति काले लृङ् प्रत्ययो भवति क्रियातिपत्तौ सत्याम्। कुतश्चिद् वैगुण्यादनभिनिर्वृत्तिः क्रियायाः क्रियातिपत्तिः। दक्षिणेन चेदायास्यन्न शकटं पर्याभविष्यत्। यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यत्। अभोक्ष्यत भवान् घृतेन यदि मत्समीपमागमिष्यत्। भविष्यत्कालविषयमेतद् वचनम्। भविष्यदपर्याभवनं च हेतुमत्, तत्र हेतुभूतं च कमलकाह्वानम्। लिङ्गिलिङ्गे बुद्ध्वा तदतिपत्तिं च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङ्क्ते—यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यदिति, हेतुहेतुमतोराह्वानापर्याभवनयोर्भविष्यत्कालविषययोरतिपत्तिरितो वाक्यादवगम्यते॥

## भूते च ॥ १४० ॥

लिङ्निमित्ते लृङ् क्रियातिपत्ताविति सर्वमनुवर्तते। पूर्वेण भविष्यति विहितः, संप्रति भूते विधीयते। भूते च काले लिङ्निमित्ते क्रियातिपत्तौ सत्यां लृङ् प्रत्ययो भवति। 'उताप्योः०' (३.३.१५२) इत्यारभ्य लिङ्निमित्तेषु विधानमेतत्। प्राक् ततो विकल्पं

---

१ - सन्दिग्धमिदं वाक्यम्। २ - 'संवत्सरः' इत्यधिकः पाठो मुद्रितेषु, स त्वपपाठ एव।

वक्ष्यति। दृष्टो मया भवत्पुत्रोऽन्नार्थी चङ्क्रम्यमाणः, अपरश्च द्विजो ब्राह्मणार्थी, यदि स तेन दृष्टोऽभविष्यत्, तदाभोक्ष्यत। न तु भुक्तवान्, अन्येन पथा स गतः॥

## वोताप्योः ॥ १४१ ॥

भूते लिङ्निमित्ते लृङ् क्रियातिपत्ताविति सर्वमनुवर्तते। वा आ उताप्योर्वोताप्योः। मर्यादायामयमाङ् नाभिविधौ। 'उताप्योः समर्थयोर्लिङ्' ( ३.३.१५२ ) इति वक्ष्यति। प्रागेतस्मात् सूत्रावधेर्यदित ऊर्ध्वमनुक्रमिष्यामः, तत्र भूते लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा भवतीत्येतदधिकृतं वेदितव्यम्। वक्ष्यति—'विभाषा कथमि लिङ् च' ( ३.३.१४३ )। कथं नाम तत्र भवान् वृषलमयाजयिष्यत्। यथाप्राप्तं च, याजयेत्॥

## गर्हायां लडपिजात्वोः ॥ १४२ ॥

गर्हा कुत्सेत्यनर्थान्तरम्। गर्हायां गम्यमानायामपिजात्वोरुपपदयोर्धातोर्लट् प्रत्ययो भवति। 'वर्तमाने लट्' ( ३.२.१२३ ) उक्तः कालसामान्ये न प्राप्नोतीति विधीयते। कालविशेषविहितांश्चापि प्रत्ययानयं परत्वाद् अस्मिन् विषये बाधते। अपि तत्र भवान् वृषलं याजयति, जातु तत्र भवान् वृषलं याजयति। गर्हामहे, अहोऽन्याय्यमेतत्। लिङ्-निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति॥

## विभाषा कथमि लिङ् च ॥ १४३ ॥

गर्हायामिति वर्तते। कथंशब्द[1] उपपदे गर्हायां गम्यमानायां धातोर्लिङ् प्रत्ययो भवति, चकाराल्लट् च। विभाषाग्रहणं यथास्वं कालविषये विहितानामबाधनार्थम्। कथं नाम तत्र भवान् वृषलं याजयेत्। कथं नाम तत्र भवान् वृषलं याजयति। कथं नाम तत्र भवान् वृषलं याजयिष्यति। कथं नाम तत्र भवान् वृषलं याजयिता। कथं नाम तत्र भवान् वृषलमयीयजत्[2]। कथं नाम तत्र भवान् वृषलमयाजयत्। कथं नाम तत्र भवान् वृषलं याजयांचकार। अत्र लिङ्निमित्तमस्तीति भूतविवक्षायां क्रियातिपत्तौ वा लृङ्। भविष्यद्विवक्षायां सर्वत्र नित्येनैव लृङा भवितव्यम्॥

## किंवृत्ते लिङ्लृटौ ॥ १४४ ॥

गर्हायामित्येव। विभाषा न स्वर्यते। किंवृत्त उपपदे गर्हायां गम्यमानायां धातोर्लिङ्लृटौ प्रत्ययौ भवतः। सर्वलकाराणामपवादः। लिङ्ग्रहणं लटोऽपरिग्रहार्थम्। को नाम वृषलो यं तत्र भवान् याजयेत्। यं तत्र भवान् वृषलं याजयिष्यति। कतरो नाम,

१ - 'कथमि' इति है०। २ - 'याजयेत्' इत्यपपाठो है०, बाल०।

कतमो नाम यं तत्र भवान् वृषलं याजयेत्, याजयिष्यति। भूते क्रियातिपत्तौ वा लृङ्। भविष्यति तु नित्यम्। को नाम वृषलो यं तत्र भवानयाजयिष्यत्॥

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ १४५ ॥

गर्हायामिति निवृत्तम्। अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा। किंवृत्तेऽकिंवृत्ते चोपपदेऽनवक्लृप्त्यमर्षयोर्धातोर्लिङ्लृटौ प्रत्ययौ भवतः। सर्वलकाराणामपवादः। बह्वचः पूर्वनिपातो लक्षणव्यभिचारचिह्नम्। तेन यथासंख्यं न भवति। अनवक्लृप्तौ तावत्—नावकल्पयामि, न संभावयामि, न श्रद्दधे, तत्र भवान् नाम वृषलं याजयेत्। तत्र भवान् नाम वृषलं याजयिष्यति। को नाम वृषलः, यं तत्र भवान्[1] याजयेत्। को नाम तत्र भवान् वृषलं याजयिष्यति। अमर्षे—न मर्षयामि तत्र भवान् वृषलं याजयेत्, याजयिष्यति। को नाम वृषलः, यं तत्र भवान् याजयेत्, याजयिष्यति। भूतविवक्षायां तु क्रियातिपत्तौ वा लृङ् भवति। भविष्यति नित्यम्। नावकल्पयामि तत्र भवान् नाम वृषलमयाजयिष्यत्॥

## किंकिलास्त्यर्थेषु लृट् ॥ १४६ ॥

अनवक्लृप्त्यमर्षयोरिति वर्तते। किंकिलशब्दः समुदाय एव उपपदम्। अस्त्यर्था अस्तिभवतिविद्यतयः। किंकिलास्त्यर्थेषूपपदेष्वनवक्लृप्त्यमर्षयोर्धातोर्लृट् प्रत्ययो भवति। लिङोऽपवादः। किंकिल नाम तत्र भवान् वृषलं याजयिष्यति। अस्ति नाम तत्र भवान् वृषलं याजयिष्यति। भवति नाम तत्र भवान् वृषलं याजयिष्यति। विद्यते नाम तत्र भवान् वृषलं याजयिष्यति। न श्रद्दधे, न मर्षयामि। लिङ्निमित्तमिह नास्ति तेन लृङ् न भवति॥

## जातुयदोर्लिङ् ॥ १४७ ॥

अनवक्लृप्त्यमर्षयोरित्येव। जातु यदित्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्गम्यमानयोर्धातोर्लिङ् प्रत्ययो भवति। लृटोऽपवादः। जातु तत्र भवान् वृषलं याजयेत्। यन्नाम तत्र भवान् वृषलं याजयेत्। न श्रद्दधे, न मर्षयामि ॥ जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानम्॥ यदा भवद्विधः क्षत्रियं याजयेत्। यदि भवद्विधः क्षत्रियं याजयेत्। न श्रद्दधे, न मर्षयामि। क्रियातिपत्तौ भूते वा लृङ्। भविष्यति नित्यम्॥

## यच्चयत्रयोः ॥ १४८ ॥

अनवक्लृप्त्यमर्षयोरित्येव। यच्च यत्र इत्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्गम्य-

१ - 'वृषलं' इत्यधिकं मुद्रितेपु।

मानयोर्धातोर्लिङ् प्रत्ययो भवति। लृटोऽपवादः। योगविभाग उत्तरार्थः। यथासंख्यं नेष्यते। यच्च तत्र भवान् वृषलं याजयेत्। यत्र तत्र भवान् वृषलं याजयेत्। क्रियातिपत्तौ यथायथं लृङ् भवति॥

## गर्हायां च ॥ १४९ ॥

अनवक्लृप्त्यमर्षयोरिति निवृत्तम्। गर्हा निन्दा कुत्सेत्यनर्थान्तरम्। यच्च यत्रेत्येतयो-रुपपदयोर्धातोर्लिङ् प्रत्ययो भवति गर्हायां गम्यमानायाम्। सर्वलकाराणामपवादः। यच्च तत्र भवान् वृषलं याजयेत्। यत्र तत्र भवान् वृषलं याजयेद् ऋद्धो वृद्धः सन् ब्राह्मणः। गर्हामहे, अहोऽन्याय्यमेतत्। क्रियातिपत्तौ यथायथं लृङ् भवति॥

## चित्रीकरणे च ॥ १५० ॥

यच्चयत्रयोरित्येव। चित्रीकरणमाश्चर्यमद्भुतं विस्मयनीयम्। यच्चयत्रयोरुपपदयो-श्चित्रीकरणे गम्यमाने धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। यच्च तत्र भवान् वृषलं याजयेत्। यत्र तत्र भवान् वृषलं याजयेत्, आश्चर्यमेतत्। क्रियातिपत्तौ यथायथं लृङ् भवति॥

## शेषे लृडयदौ ॥ १५१ ॥

यच्चयत्राभ्यामन्यत्र चित्रीकरणं शेषः। शेष उपपदे चित्रीकरणे गम्यमाने धातोर्लृट् प्रत्ययो भवति, यदिशब्दश्चेद् न प्रयुज्यते। सर्वलकाराणामपवादः। आश्चर्यं चित्रमद्भुतम्, अन्धो नाम पर्वतमारोक्ष्यति। बधिरो नाम व्याकरणमध्येष्यते। अयदाविति किम् ? आश्चर्यं यदि स भुञ्जीत। यदि सोऽधीयीत। लिङ्निमित्ताभावादिह लृङ् न भवति॥

## उताप्योः समर्थयोर्लिङ्॥ १५२ ॥

उत अपि इत्येतयोः समर्थयोर्धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। बाढमित्यस्मिन्नर्थे समानार्थत्वमनयोः। उत कुर्यात्। अपि कुर्यात्। उताधीयीत। अप्यधीयीत। बाढमध्येष्यत इत्यर्थः। समर्थयोरिति किम् ? उत दण्डः पतिष्यति। अपि द्वारं धास्यति। प्रश्नः प्रच्छादनं च गम्यते। 'वोताप्योः' ( ३.३.१४१ ) इति विकल्पो निवृत्तः। इतः प्रभृति भूतेऽपि लिङ्निमित्ते क्रियातिपत्तौ नित्यं लृङ्। भविष्यति तु सर्वत्रैव नित्यः॥

## कामप्रवेदनेऽकच्चिति॥ १५३ ॥

स्वाभिप्रायाविष्करणं कामप्रवेदनम्। काम इच्छाभिलाष इत्यनर्थान्तरम्। तस्य प्रवेदनं प्रकाशनम्। तस्मिन् गम्यमानेऽकच्चित्युपपदे धातोर्लिङ् प्रत्ययो भवति। सर्वल-

काराणामपवादः। कामो मे भुञ्जीत भवान्। अभिलाषो मे भुञ्जीत भवान्। अकच्चितीति किम् ?

कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता।
माराविद त्वां पृच्छामि कच्चिज्जीवति पार्वती॥

## संभावनेऽलमिति चेत् सिद्धाप्रयोगे॥ १५४ ॥

लिङित्येव। संभावनं क्रियासु योग्यताध्यवसानम्, शक्तिश्रद्धानम्। तदिदानीमलमर्थेन विशेष्यते। तच्चेत् संभावनं पर्याप्तमवितथं भवति। सिद्धाप्रयोग इत्यलमो विशेषणम्। सिद्धश्चेदलमोऽप्रयोगः। क्व चासौ सिद्धः ? यत्र गम्यते चार्थो न चासौ प्रयुज्यते। तदीदृशसंभावनोपाधिकेऽर्थे वर्तमानाद् धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। अपि पर्वतं शिरसा भिन्द्यात्। अपि द्रोणपाकं भुञ्जीत। अलमिति किम् ? विदेशस्थायी देवदत्तः प्रायेणागमिष्यति ग्रामम्। सिद्धाप्रयोग इति किम् ? अलं देवदत्तो हस्तिनं हनिष्यति। क्रियातिपत्तौ भूते भविष्यति च नित्यं लङ् भवति॥

## विभाषा धातौ संभावनवचनेऽयदि॥ १५५ ॥

संभावनेऽलमिति चेत् सिद्धाप्रयोग इति सर्वमनुवर्तते। संभावनमुच्यते येन स संभावनवचनः। संभावनवचने धातावुपपदे यच्छब्दवर्जिते धातोर्विभाषा लिङ् भवति। पूर्वेण नित्यप्राप्तौ विकल्पार्थं वचनम्। संभावयामि भुञ्जीत भवान्। संभावयामि भोक्ष्यते भवान्। अवकल्पयामि भुञ्जीत भवान् , भोक्ष्यते भवान्। श्रद्दधे भुञ्जीत भवान्, भोक्ष्यते भवान्। अयदीति किम् ? संभावयामि यद् भुञ्जीत भवान्॥

## हेतुहेतुमतोर्लिङ्॥ १५६ ॥

हेतुः कारणम्। हेतुमत् फलम्। हेतुभूते हेतुमति चार्थे वर्तमानाद् धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। दक्षिणेन चेद् यायाद् न शकटं पर्याभवेत्। यदि कमलकमाह्वयेद् न शकटं पर्याभवेत्। दक्षिणेन यानं हेतुः। अपर्याभवनं हेतुमत्। विभाषा चायमिष्यते। भविष्यति च काले। तेन लृडपि भवति। दक्षिणेन चेद् यास्यति न शकटं पर्याभविष्यति। तत्र विभाषाग्रहणं तावदनन्तरमेवानुवर्तते। लिङिति वर्तमाने पुनर्लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थम्। तेनेह न भवति—हन्तीति पलायते, वर्षतीति धावति। क्रियातिपत्तौ लृङ् भवति॥

## इच्छार्थेषु लिङ्लोटौ॥ १५७ ॥

इच्छार्थेषु धातुषूपपदेषु धातोर्लिङ्लोटौ प्रत्ययौ भवतः। सर्वलकाराणामपवादः। इच्छामि भुञ्जीत भवान्। इच्छामि भुङ्क्तां भवान्। कामये। प्रार्थये॥ कामप्रवेदन

इति वक्तव्यम् ॥ इह मा भूत्—इच्छन् करोति ॥

## समानकर्तृकेषु तुमुन् ॥ १५८ ॥

इच्छार्थेषु धातुषु समानकर्तृकेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति। तुमुन्प्रकृत्यपेक्षमेव समानकर्तृकत्वम्। इच्छति भोक्तुम्। कामयते भोक्तुम्। वष्टि भोक्तुम्। वाञ्छति भोक्तुम्। समानकर्तृकेष्विति किम् ? देवदत्तं भुञ्जानमिच्छति यज्ञदत्तः। इह कस्माद् न भवति—इच्छन् करोति ? अनभिधानात् ॥

## लिङ् च ॥ १५९ ॥

इच्छार्थेषु समानकर्तृकेषु धातुषूपपदेषु धातोर्लिङ् प्रत्ययो भवति। भुञ्जीयेतीच्छति। अधीयीयेतीच्छति। क्रियातिपत्तौ लृङ् भवति। योगविभाग उत्तरार्थः ॥

## इच्छार्थेभ्यो विभाषा वर्तमाने ॥ १६० ॥

इच्छार्थेभ्यो धातुभ्यो वर्तमाने काले विभाषा लिङ् प्रत्ययो भवति। लटि प्राप्ते वचनम्। इच्छति। इच्छेत्। वष्टि। उश्यात्। कामयते। कामयेत ॥

## विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ १६१ ॥

विधिः प्रेरणम्। निमन्त्रणं नियोगकरणम्। आमन्त्रणं कामचारकरणम्। अधीष्टः सत्कारपूर्वको व्यापारः। संप्रश्नः संप्रधारणम्। प्रार्थनं याच्ञा। विध्यादिष्वर्थेषु धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। विध्यादयश्च प्रत्ययार्थविशेषणम्। विध्यादिविशिष्टेषु कर्त्रादिषु लिङ् प्रत्ययो भवति। विधौ तावत्—कटं कुर्यात्। ग्रामं भवानागच्छेत्। निमन्त्रणे—इह भवान् भुञ्जीत। इह भवानासीत। आमन्त्रणे—इह भवानासीत। इह भवान् भुञ्जीत। अधीष्टे—अधीच्छामो भवन्तम्, माणवकं भवानुपनयेत[1]। संप्रश्ने—किं नु खलु भो व्याकरणमधीयीय। प्रार्थने—भवति मे प्रार्थना व्याकरणमधीयीय ॥

## लोट् च ॥ १६२ ॥

लोट् प्रत्ययो भवति धातोर्विध्यादिष्वर्थेषु। योगविभाग उत्तरार्थः। विधौ तावत्—कटं तावद् भवान् करोतु। ग्रामं भवानागच्छतु। निमन्त्रणे—अमुत्र भवानास्ताम्। अमुत्र भवान् भुङ्क्ताम्। आमन्त्रणे—इह भवान् भुङ्क्ताम्। अधीष्टे—अधीच्छामो भवन्तम्, माणवकं भवानध्यापयतु, माणवकं भवानुपनयताम्। संप्रश्ने—किं नु खलु भो व्याकरणमध्ययै। प्रार्थने—भवति मे प्रार्थना व्याकरणमध्ययै। छन्दोऽध्ययै ॥

---

१ - 'अध्यापयेत्' इति न्यासः।

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ १६३ ॥

प्रेषणं प्रैषः। कामचाराभ्यनुज्ञानमतिसर्गः। निमित्तभूतस्य कालस्यावसरः प्राप्तकालता। एतेष्वर्थेषु धातोः कृत्यसंज्ञकाः प्रत्यया भवन्ति, चकाराल्लोट् च। भवता कटः करणीयः, कर्तव्यः, कृत्यः, कार्यः। लोट् खल्वपि—करोतु कटं भवानिह प्रेषितः, भवानतिसृष्टः, भवतः प्राप्तकालः कटकरणे। किमर्थं प्रैषादिषु कृत्या विधीयन्ते, न सामान्येन भावकर्मणोर्विहिता एव, ते प्रैषादिष्वन्यत्र च भविष्यन्ति ? विशेषविहितेनानेन लोटा बाध्यन्ते। वासरूपविधिना भविष्यन्ति ? एवं तर्हि ज्ञापयति—स्त्र्यधिकारात् परेण वासरूपविधिर्नावश्यं भवतीति। विधिप्रैषयोः को विशेषः ? केचिदाहुः — अज्ञातज्ञापनं विधिः, प्रेषणं प्रैष इति ॥

## लिङ् चोर्ध्वमौहूर्तिके ॥ १६४ ॥

प्रैषादयो वर्तन्ते। प्रैषादिषु गम्यमानेषूर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद् धातोर्लिङ् प्रत्ययो भवति। चकाराद् यथाप्राप्तं च। ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्य भवता खलु कटः कर्तव्यः, करणीयः, कार्यः। भवान् खलु कटं कुर्यात्। भवान् खलु करोतु। भवानिह प्रेषितः। भवानतिसृष्टः। भवान् प्राप्तकालः॥

## स्मे लोट् ॥ १६५ ॥

प्रैषादिषूर्ध्वमौहूर्तिक इति वर्तते। स्मशब्द उपपदे प्रैषादिषु गम्यमानेषूर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद् धातोर्लोट् प्रत्ययो भवति। लिङ्कृत्यानामपवादः। ऊर्ध्वं मुहूर्ताद् भवान् कटं करोतु स्म, ग्रामं गच्छतु स्म, माणवकमध्यापयतु स्म॥

## अधीष्टे च ॥ १६६ ॥

स्म इति वर्तते। अधीष्टं व्याख्यातम् ( ३.३.१६१ )। स्मशब्द उपपदेऽधीष्टे गम्यमाने धातोर्लोट् प्रत्ययो भवति। लिङोऽपवादः। अङ्ग स्म राजन् माणवकमध्यापय। अङ्ग स्म राजन्नग्निहोत्रं जुहुधि॥

## कालसमयवेलासु तुमुन् ॥ १६७ ॥

कालादिषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति। कालो भोक्तुम्। समयो भोक्तुम्[1]। वेला भोक्तुम्। इह कस्माद् न भवति—कालः पचति भूतानि ( मै० उ० ६.१५ ) इति ? प्रैषादिग्रहणमिहाभिसंबध्यते। इह कस्माद् न भवति—कालो भोजनस्य ? वासरूपेण

१ – 'समयो भोक्तुम्' इति नास्ति मुद्रितेषु।

ल्युडपि भवति। उक्तमिदम्—स्त्र्यधिकारात् परत्र वासरूपविधिरनित्यः ( ३.३.१६३ ) इति॥

## लिङ् यदि ॥ १६८ ॥

कालादयोऽनुवर्तन्ते। यच्छब्द उपपदे कालादिषु धातोर्लिङ् प्रत्ययो भवति। तुमुनोऽपवादः। कालो यद् भुञ्जीत भवान्। समयो यद् भुञ्जीत भवान्। वेला यद् भुञ्जीत भवान्॥

## अर्हे कृत्यतृचश्च ॥ १६९ ॥

अर्हतीत्यर्हः, तद्योग्यः। अर्हे कर्तरि वाच्ये गम्यमाने वा धातोः कृत्यतृचः प्रत्यया भवन्ति, चकाराल्लिङ् च। भवता खलु कन्या वोढव्या, वाह्या, वहनीया। भवान् खलु कन्याया वोढा। भवान् खलु कन्यां वहेत्। भवानेतदर्हेदिति। अथ कस्मादर्हे कृत्यतृचो विधीयन्ते, यावता सामान्येन विहितत्वादर्हेऽपि भविष्यन्ति ? योऽयमिह लिङ् विधीयते, तेन बाधा मा भूदिति। वासरूपविधिश्चानित्यः॥

## आवश्यकाधमर्ण्ययोर्णिनिः ॥ १७० ॥

अवश्यंभाव आवश्यकम्। उपाधिरयम्, नोपपदम्। अवश्यंभावविशिष्ट आधमर्ण्यविशिष्टे च कर्तरि वाच्ये धातोर्णिनिः प्रत्ययो भवति। अवश्यंकारी। मयूरव्यंसकादित्वात् समासः। आधमर्ण्ये खल्वपि—शतं दायी। सहस्रं दायी। निष्कं दायी॥

## कृत्याश्च ॥ १७१ ॥

आवश्यकाधमर्ण्ययोरिति वर्तते। कृत्यसंज्ञकाश्च प्रत्यया आवश्यकाधमर्ण्ययोरुपाधिभूतयोर्धातोर्भवन्ति। भवता खल्ववश्यं कटः कर्तव्यः। अवश्यं करणीयः। अवश्यं कार्यः। अवश्यं कृत्यः। आधमर्ण्ये—भवता शतं दातव्यम्। सहस्रं देयम्। किमर्थमिदम्, यावता सामान्येन विहिता अस्मिन्नपि विषये भविष्यन्ति ? विशेषविहितेन णिनिना बाध्येरन्। कर्तरि णिनिः, भावकर्मणोः कृत्याः, तत्र कुतो बाधप्रसङ्गः ? तत्र केचिदाहुः—भव्यगेयादयः कर्तृवाचिनः कृत्याः, त इहोदाहरणमिति॥

## शकि लिङ् च ॥ १७२ ॥

शकीति प्रकृत्यर्थविशेषणम्। शक्नोत्यर्थोपाधिके धात्वर्थे लिङ् प्रत्ययो भवति, चकारात् कृत्याश्च। भवता खलु भारो वोढव्यः, वहनीयः, वाह्यः। भवान् खलु भारं वहेत्। भवानिह शक्तः। सामान्यविहितानां पुनर्वचनं लिङा बाधा मा भूदिति॥

## आशिषि लिङ्लोटौ ॥ १७३ ॥

आशंसनमाशीः, अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा। प्रकृत्यर्थविशेषणं चैतत्। आशीर्विशिष्टेऽर्थे वर्तमानाद् धातोर्लिङ्लोटौ प्रत्ययौ भवतः। चिरं जीव्याद् भवान्। चिरं जीवतु भवान्। आशिषीति किम्? चिरं जीवति देवदत्तः॥

## क्तिच्क्तौ च संज्ञायाम् ॥ १७४ ॥

आशिषीत्येव। आशिषि विषये धातोः क्तिच्क्तौ प्रत्ययौ भवतः, समुदायेन चेत् संज्ञा गम्यते। तनुतात् तन्तिः। सनुतात् सातिः। भवतात् भूतिः[1]। क्तः खल्वपि—देवा एनं देयासुर्देवदत्तः। सामान्येन विहितः क्तः पुनरुच्यते, क्तिचा बाधा मा भूदिति। चकारो विशेषणार्थः—'न क्तिचि दीर्घश्च' (६.४.३९) इति॥

## माङि लुङ् ॥ १७५ ॥

माङ्युपपदे धातोर्लुङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। मा कार्षीत्। मा हार्षीत्। कथं मा भवतु तस्य पापम्, मा भविष्यतीति? असाधुरेवायम्। केचिदाहुः—अङिदपरो माशब्दो विद्यते, तस्यायं प्रयोगः॥

## स्मोत्तरे लङ् च ॥ १७६ ॥

स्मशब्दोत्तरे माङ्युपपदे धातोर्लङ् प्रत्ययो भवति, चकारात्लुङ् च। मा स्म करोत्। मा स्म कार्षीत्। मा स्म हरत्। मा स्म हार्षीत्॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य तृतीयः पादः॥



---

१ – 'मनुतात् मन्तिः' इत्यपपाठो मुद्रितेष्वधिकः।

# ॥ तृतीयाध्यायस्य चतुर्थः पादः ॥

## धातुसंबन्धे प्रत्ययाः ॥ १ ॥

धात्वर्थे धातुशब्दः। धात्वर्थानां संबन्धो धातुसंबन्धः, विशेषणविशेष्यभावः। तस्मिन् सत्ययथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति। अग्निष्टोमयाज्यस्य पुत्रो जनिता। कृतः कटः श्वो भविता। भावि कृत्यमासीत्। अग्निष्टोमयाजीति भूतकालः, जनितेति भविष्यत्कालः। तत्र भूतः कालो भविष्यत्कालेनाभिसंबध्यमानः साधुर्भवति। विशेषणं गुणत्वाद् विशेष्यकालमनुरुध्यते, तेन विपर्ययो न भवति। प्रत्ययाधिकारे पुनः प्रत्ययग्रहणमधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धातुसंबन्धे सति कालभेदे साधवो यथा स्युरिति। गोमान् आसीत्। गोमान् भविता। गावो विद्यन्तेऽस्येति वर्तमानविहितो मतुबासीद् भवितेति संबन्धादतीते भविष्यति च साधुर्भवति॥

## क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥ २ ॥

धातुसंबन्ध इति वर्तते। पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः। प्रकृत्यर्थविशेषणं चैतत्। समभिहारविशिष्टक्रियावचनाद् धातोर्लोट् प्रत्ययो भवति सर्वेषु कालेषु। सर्वलकारा-णामपवादः। तस्य च लोटो हि स्व इत्येतावादेशौ भवतः, तध्वंभाविनस्तु वा भवतः। योगविभागोऽत्र कर्तव्यः। क्रियासमभिहारे लोड् भवति। ततो लोटो हिस्वौ। लोडित्येव। लोड्धर्माणौ हिस्वौ भवत इत्यर्थः। तेनात्मनेपदपरस्मैपदत्वं भेदेनावतिष्ठते, तिङ्त्वं च द्वयोरपि भवति। लुनीहिलुनीहीत्येवायं लुनाति, इमौ लुनीतः, इमे लुनन्ति। लुनीहिलुनी-हीत्येव त्वं लुनासि, युवां लुनीथः, यूयं लुनीथ। अथवा लुनीतलुनीतेत्येव यूयं लुनीथ। लुनीहिलुनीहीत्येवाहं लुनामि, आवां लुनीवः, वयं लुनीमः। भूते—लुनीहिलुनीहीत्येवाय-मलावीत्, अलाविष्टाम्, अलाविषुः। एवं मध्यमोत्तमयोरुदाहार्यम्। भविष्यति—लुनीहिलुनी-हीत्येवायं लविष्यति, लविष्यतः, लविष्यन्ति। एवं मध्यमोत्तमयोरुदाहार्यम्। अधीष्वाधीष्वे-त्येवायमधीते, इमावधीयाते, इमेऽधीयते। अधीष्वाधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। अथवा अधीध्वमधीध्वमित्येव यूयमधीध्वे। अधीष्वाधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे। एवं सर्वेषु लकारेषूदाहार्यम्। क्रियासमभिहाराभिव्यक्तौ द्विर्वचनमयं लोडपेक्षते—'क्रियासमभिहारे द्वे भवतः' (वा० ८.१.१२) इति। यङ्प्रत्ययः पुनरस्मिन्नेवार्थे विधीयमानः स्वयमेव शक्तत्वाद् नापेक्षते द्विर्वचनम्॥

## समुच्चयेऽन्यतरस्याम् ॥ ३ ॥

अनेकक्रियाध्याहारः समुच्चयः। समुच्चीयमानक्रियावचनाद् धातोरन्यतरस्यां

लोट् प्रत्ययो भवति, तस्य लोटो हिस्वावादेशौ भवतः, तध्वंभाविनस्तु वा भवतः। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येवायमटति, इमावटतः, इमेऽटन्ति। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येव त्वमटसि, युवामटथः, यूयमटथ। अथवा भ्राष्ट्रमटत, मठमटत, खदूरमटत, स्थाल्यपिधानमटतेत्येव यूयमटथ। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येवाहमटामि, आवामटावः, वयमटामः। अथवा भ्राष्ट्रमटति, मठमटति, खदूरमटति, स्थाल्यपिधानमटतीत्येवायमटति, इमावटतः, इमेऽटन्ति। भ्राष्ट्रमटसि, मठमटसि, खदूरमटसि, स्थाल्यपिधानमटसीत्येव त्वमटसि, युवामटथः, यूयमटथ। भ्राष्ट्रमटामि, मठमटामि, खदूरमटामि, स्थाल्यपिधानमटामीत्येवाहमटामि, आवामटावः, वयमटामः। छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते। छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। अथ वा छन्दोऽधीध्वम्, व्याकरणमधीध्वम्, निरुक्तमधीध्वमित्येव यूयमधीध्वे। छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे। अथ वा व्याकरणमधीते, छन्दोऽधीते, निरुक्तमधीत इत्येवायमधीते, इमावधीयाते, इमेऽधीयते। छन्दोऽधीषे, व्याकरणमधीषे, निरुक्तमधीष इत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। छन्दोऽधीये, व्याकरणमधीये, निरुक्तमधीय इत्येवाहमधीये, आवामधीवहे, वयमधीमहे॥

## यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ४ ॥

पूर्वस्मिन् लोड्विधाने यथाविध्यनुप्रयोगो भवति। यस्माद् धातोर्लोड् विहितः, स एव धातुरनुप्रयोक्तव्यः। धातुसंबन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव, यथाविध्यर्थं तु वचनम्। तथा चैवोदाहृतम्—लुनीहिलुनीहीत्येवायं लुनातीति। छिनत्तीति नानुप्रयुज्यते। अधीष्वाधीष्वेत्येवायमधीते। पठतीति नानुप्रयुज्यते॥

## समुच्चये सामान्यवचनस्य ॥ ५ ॥

द्वितीये लोड्विधाने समुच्चये सामान्यवचनस्य धातोरनुप्रयोगः कर्तव्यः। ओदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खादेत्येवायमभ्यवहरति। सर्वविशेषानुप्रयोगनिवृत्त्यर्थं वचनम्। लाघवं च लौकिके शब्दव्यवहारे नाद्रियते। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधान-मटेत्येवायमटतीत्यत्रापि कारकभेदात् क्रियाभेदे सति सामान्यवचनता सम्भवत्येव॥

## छन्दसि लुङ्लङ्लिटः ॥ ६ ॥

धातुसम्बन्ध इत्येव। छन्दसि विषये धातुसंबन्धे सर्वेषु कालेषु लुङ्लङ्लिटः प्रत्यया भवन्ति। अन्यतरस्यामिति वर्तते। तेनान्येऽपि लकारा यथायथं भवन्ति। लुङ्—शकलाङ्गुष्ठकोऽकरत्। अहं तेभ्योऽकरं नमः (मा० सं० १६.८)। लङ्—अग्निमद्य

होतारम् ( शा० श्रौ० ५.२०.५ ) अवृणीतायं यजमानः। लिट्—अ॒द्या मु॒मार॒ ( ऋ० १० ५५.५ )। अद्य म्रियते॥

## लिङर्थे लेट् ॥ ७ ॥

छन्दस्यन्यतरस्यामिति वर्तते। लिङर्थे, यत्र लिङ् विधीयते विध्यादिः, 'हेतुहेतुमतोर्लिङ्' ( ३.३.१५६ ) इत्येवमादिः, तत्र छन्दसि विषयेऽन्यतरस्यां लेट् प्रत्ययो भवति। जोषिषत् ( ऋ० २.३५.१ )। तारिषत् ( ऋ० १.२५.१२ )। मन्दिषत्। नेता इन्द्रो नेषत् ( शा० श्रौ० ७.९.१ )। तक्षिषत्। पताति दि॒द्युत् ( ऋ० ७.२५.१ )। प्र॒जाप॑तिर् उद॒धिं च्यावया॒ति ( तै० सं० ३.५.५.२ )॥

## उपसंवादाशङ्कयोश्च ॥ ८ ॥

उपसंवादः परिभाषणम्, कर्तव्ये पणबन्धः, यदि मे भवानिदं कुर्याद् अहमपि भवत इदं दास्यामीति। कारणतः कार्यानुसरणं तर्कः, उत्प्रेक्षा, आशङ्का। उपसंवाद आशङ्कायां च गम्यमानायां छन्दसि विषये लेट् प्रत्ययो भवति। उपसंवादे—अहमेव पशूनामीशै ( काठ० सं० २५.१ )। मद्ग्रा एवं वो[1] ग्रहा गृह्यान्तै ( मै० सं० ४.५.८ ) इति। मद्देवत्यान्येव वः पात्राण्युच्यान्तै ( तै० सं० ६.४.७.२ )। आशङ्कायां च—नेज्जिह्मायन्त्यो नरकं पताम ( ऋ० खिल १०.१०६.१ )। जिह्माचरणेन नरकपात आशङ्कयते। लिङर्थ एवायं नित्यार्थं तु वचनम्। पूर्वसूत्रेऽन्यतरस्यामिति वर्तते॥

## तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥ ९ ॥

छन्दसीत्येव। तुमुनोऽर्थस्तुमर्थः। तत्र छन्दसि विषये धातोः सयादयः प्रत्यया भवन्ति। तुमर्थो भावः। कथं ज्ञायते ? वचनसामर्थ्यात् तावदयं कर्तुरपकृष्यते। न चान्यस्मिन्नर्थे तुमुन्नादिश्यते। 'अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति' ( परि० ११३)। स्वार्थश्च धातूनां भाव एव। से—वक्षे रायः। सेन्—ता वा॒मेषे॒ रथानाम् ( ऋ० ५.६६.३ )। असे, असेन्—क्रत्वे॒ दक्षाय जी॒वसे ( शौ० सं० ६.१९.२ )। स्वरे विशेषः। क्से, कसेन्—प्रेषे॒ भगाय॒ ( तै० सं० १.२.११.१ )। श्रि॒यसे ( ऋ० ५.५९.३ )। अध्यै, अध्यैन्—काममुपाचरध्यै[2]। स्वरे विशेषः। कध्यै—इ॒न्द्रा॒ग्नी आ॒हु॒वध्यै ( मा० सं० ३.१३)। कध्यैन्—श्रियध्यै। शध्यै, शध्यैन्—वा॒यवे॒ पिबध्यै ( ऋ० ७.९२.२ )। स॒ह माद॒यध्यै ( मा० सं० ३.१३ )। तवै—सोम॒मिन्द्राय॒ पात॒वै[3]। तवेङ्—दश॒मे मा॒सि सूतवे

---

१ - 'वो' इति मै० सं० नास्ति। २ - 'कर्मण्युपाचरध्यै' इति बाल०।

३ - सोम॒मिन्द्राय॒ पातवे ( ऋ० ८.६९.१० )।

( ऋ० १०.१८४.३ )। तवेन्—स्वर्देवेषु गन्तवे ( शौ० सं० ९.५.१७ )। कर्तवे ( ऋ० ९.८६.२० )। हर्तवे॥

## प्रयै रोहिष्यै अव्यथिष्यै ॥ १० ॥

तुमर्थे छन्दसीत्येव। प्रयै रोहिष्यै अव्यथिष्यै इत्येते शब्दा निपात्यन्ते छन्दसि विषये। प्रपूर्वस्य यातेः कैप्रत्ययः—प्रयै देवेभ्यः ( ऋ० १.१४२.६ )। प्रयातुम्। रुहेरिष्यैप्रत्ययः—अपामोषधीनां रोहिष्यै ( तै० सं० १.३.१०.२ )। रोहणाय। व्यथेर्नञ्पूर्वस्येष्यैप्रत्ययः—अव्यथिष्यै ( काठ० सं० ३. ७ )। अव्यथनाय॥

## दृशे विख्ये च ॥ ११ ॥

तुमर्थे छन्दसीत्येव। दृशे विख्ये इत्येतौ छन्दसि विषये निपात्येते। दृशेः केप्रत्ययः। दृशे विश्वाय सूर्यम् ( ऋ० १.५०.१ )। द्रष्टुम्। विख्ये त्वा हरामि। विख्यातुम्॥

## शकि णमुल्कमुलौ ॥ १२ ॥

छन्दसीत्येव। शक्नोतौ धातावुपपदे छन्दसि विषये तुमर्थे णमुल् कमुल् इत्येतौ प्रत्ययौ भवतः। णकारो वृद्ध्यर्थः। ककारो गुणवृद्धिप्रतिषेधार्थः। लकारः स्वरार्थः। अग्निं वै देवा विभाजं नाशक्नुवन् ( मै० सं० १.६.४ )। विभक्तुमित्यर्थः। अपलुम्पं नाशक्नोत्[1] ( मै० सं० १.६.५ )। अपलोप्तुमित्यर्थः॥

## ईश्वरे तोसुन्कसुनौ ॥ १३ ॥

तुमर्थे छन्दसीत्येव। ईश्वरशब्द उपपदे छन्दसि विषये तुमर्थे धातोस्तोसुन्कसुन्प्रत्ययौ भवतः। ईश्वरोऽभिचरितोः। अभिचरितुमित्यर्थः। ईश्वरो विलिखः। विलेखितुम्[2] इत्यर्थः। ईश्वरो वितृदः। वितर्दितुमित्यर्थः॥

## कृत्यार्थे तवैकेन्केन्यत्वनः ॥ १४ ॥

छन्दसीत्येव। कृत्यानामर्थो भावकर्मणी। तस्मिन् कृत्यार्थे छन्दसि विषये तवै केन् केन्य त्वन् इत्येते प्रत्यया भवन्ति। तवै—अन्वेतवै ( ऋ० ७.४४.५ )। अन्वेतव्यम्। परिधातवै ( शौ० सं० २.१३.२ )। परिधातव्यम्। परिस्तरितवै ( काठ० सं० ३२.७ )। परिस्तरितव्यम्। केन्—नावगाहे। नावगाहितव्यम्। केन्य—दिदृक्षेण्यः ( ऋ० १.१४६.५ )। शुश्रूषेण्यः ( तै० आ० ४.१.१ )। दिदृक्षितव्यम्। शुश्रूषितव्यम्। त्वन्—कर्त्वं

---

१ – 'अपलुपं नाशक्नुवन्' इति बाल०। २ – 'विलिखितुम्' इति मुद्रितः पाठः।

हुविः ( शौ० सं० १.४.३ )। कर्तव्यम्। तुमर्थे छन्दसीति सयादिसूत्रेऽपि तवै विहितः, तस्य तुमर्थादन्यत्र कारके विधिर्द्रष्टव्यः॥

## अवचक्षे च ॥ १५ ॥

कृत्यार्थे छन्दसीत्येव। अवपूर्वाच् चक्षिङ एश् प्रत्ययो निपात्यते। रिपुणा नावचक्षे ( मा० सं० १७.९३ )। नावख्यातव्यमित्यर्थः॥

## भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ १६ ॥

कृत्यार्थ इति निवृत्तम्। तुमर्थ इति वर्तते। प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम्। भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यश्छन्दसि विषये तुमर्थे तोसुन् प्रत्ययो भवति। आ संस्थातोर्वेद्यां शेरते ( काठ० सं० ११.६ )। आ समाप्तेः सीदन्तीत्यर्थः। इण्—पुरा सूर्यस्योदेतोराधेयः ( काठ० सं० ८.३ )। कृञ्—पुरा वत्सानामपाकर्तोः ( काठ० सं० ३१.१५ )। वदि—पुरा प्रवदितोरग्नौ प्रहोतव्यम्। चरि—पुरा प्रचरितोराग्नीध्रीये होतव्यम् ( गो० ब्रा० २.२.१० )। हु—आ होतोरप्रमत्तस्तिष्ठति[1]। तमि—आ तमितोरासीत ( तै० ब्रा० १.४.४.५ )। जनि—आ विजनितोः संभवामेति ( तै० सं० २.५.१.५ )॥

## सृपितृदोः कसुन् ॥ १७ ॥

भावलक्षणे छन्दसीति वर्तते। सृपितृदोर्धात्वोर्भावलक्षणेऽर्थे वर्तमानयोश्छन्दसि विषये तुमर्थे कसुन् प्रत्ययो भवति। पुरा क्रूरस्य विसृपो विरप्शिन् ( तै० सं० १.१.९.३)। पुरा जत्रुभ्य आतृदः ( ऋ० ८.१.१२ )॥

## अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ १८ ॥

छन्दसि भावलक्षण इति सर्वं निवृत्तम्। अलं खलु इत्येतयोः प्रतिषेधवाचिनोरुपपदयोर्धातोः क्त्वा प्रत्ययो भवति प्राचामाचार्याणां मतेन। अलं कृत्वा। खलु कृत्वा। अलं बाले रुदित्वा। अलंखल्वोरिति किम् ? मा कार्षीः। प्रतिषेधयोरिति किम् ? अलंकारः। प्राचांग्रहणं विकल्पार्थम्। अलं रोदनेन। वासरूपविधिश्चेत् पूजार्थम्॥

## उदीचां माङो व्यतीहारे ॥ १९ ॥

क्त्वा तु वर्तते। माङो धातोर्व्यतीहारे वर्तमानादुदीचामाचार्याणां मतेन क्त्वा

१ - है० कृतः सन्दर्भस्थलनिर्देशोऽशुद्धः।

प्रत्ययो भवति। अपमित्य याचते। अपमित्य हरति। अपूर्वकालत्वादप्राप्तः क्त्वा विधीयते। उदीचांग्रहणात् तु यथाप्राप्तमपि भवति। याचित्वापमयते। हृत्वापमयते। मेङः कृतात्वस्यायं निर्देशः कृतो ज्ञापनार्थः—'नानुबन्धकृतमनेजन्तत्वम्' ( परि० ७ ) इति, तेन 'दाधा घ्वदाप्' ( १.१.२० ) इति दैपोऽपि प्रतिषेधो भवति॥

## परावरयोगे च ॥ २० ॥

परावराभ्यां योगः परावरयोगः। परेण पूर्वस्य योगे गम्यमानेऽवरेण च परस्य, धातोः क्त्वा प्रत्ययो भवति। परेण तावत्—अप्राप्य नदीं पर्वतः स्थितः। परनदीयोगेन पर्वतो विशिष्यते। अवरयोगे—अतिक्रम्य तु पर्वतं नदी स्थिता। अवरपर्वतयोगेन नदी विशिष्यते॥

## समानकर्तृकयोः पूर्वकाले ॥ २१ ॥

समानः कर्ता ययोर्धात्वर्थयोस्तत्र पूर्वकाले धात्वर्थे वर्तमानाद् धातोः क्त्वाप्रत्ययो भवति। शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वात् समानकर्तृकता। भुक्त्वा व्रजति। पीत्वा व्रजति। द्विवचनमतन्त्रम्। स्नात्वा पीत्वा भुक्त्वा दत्त्वा व्रजति। समानकर्तृकयोरिति किम् ? भुक्तवति ब्राह्मणे व्रजति देवदत्तः। पूर्वकाल इति किम् ? व्रजति च जल्पति च॥ आस्यं व्यादाय स्वपिति चक्षुः संमील्य हसतीत्युपसंख्यानम्, अपूर्वकालत्वात्॥

## आभीक्ष्ण्ये णमुल् च ॥ २२ ॥

समानकर्तृकयोः पूर्वकाल इत्येव। आभीक्ष्ण्यं पौनःपुन्यम्। प्रकृत्यर्थविशेषणं चैतत्। आभीक्ष्ण्यविशिष्टेऽर्थे वर्तमानाद् धातोर्णमुल् प्रत्ययो भवति, चकारात् क्त्वा च। द्विर्वचनसहितौ क्त्वाणमुलावाभीक्ष्ण्यं द्योतयतः, न केवलौ। 'आभीक्ष्ण्ये द्वे भवतः' ( वा० ८.१.१२ ) इत्युपसंख्यानाद् द्विर्वचनम्। भोजंभोजं व्रजति। भुक्त्वाभुक्त्वा व्रजति। पायंपायं व्रजति। पीत्वापीत्वा व्रजति॥

## न यद्यनाकाङ्क्षे ॥ २३ ॥

यच्छब्द उपपदे धातोः क्त्वाणमुलौ प्रत्ययौ न भवतोऽनाकाङ्क्षे वाच्ये। यत्र पूर्वोत्तरे क्रिये स्तः, तच्चेद् वाक्यं न परं किञ्चिदाकाङ्क्षति[1] इति। णमुलनन्तरः, क्त्वा तु पूर्वसूत्रविहितोऽपि प्रतिषिध्यते। यदयं भुङ्क्ते ततः पठति[2]। यदयमधीते ततः शेते। अनाकाङ्क्ष इति किम् ? यदयं भुक्त्वा व्रजति अधीत एव ततः परम्॥

---

१ – '० काङ्क्षते ' इत्यपपाठो मुद्रितेषु। २ – ' पचति ' इति मुद्रितेषु पाठः।

## विभाषाग्रेप्रथमपूर्वेषु ॥ २४ ॥

अप्राप्तविभाषेयम्। आभीक्ष्ण्य इति नानुवर्तते। अग्रे प्रथम पूर्व इत्येतेषूपपदेषु समानकर्तृकयोः पूर्वकाले धातोः क्त्वाणमुलौ प्रत्ययौ विभाषा भवतः। अग्रे भोजं व्रजति। अग्रे भुक्त्वा व्रजति। प्रथमं भोजं व्रजति। प्रथमं भुक्त्वा व्रजति। पूर्वं भोजं व्रजति। पूर्वं भुक्त्वा व्रजति। विभाषाग्रहणमेताभ्यां मुक्ते लडादयोऽपि यथा स्युः। अग्रे भुङ्क्ते ततो व्रजति। ननु च वासरूप इति भविष्यति ? क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्नास्तीत्येतदनेन ज्ञाप्यते। तेनाभीक्ष्ण्ये लडादयो न भवन्ति। उपपदसमासः कस्माद् न भवति ? उक्तं तत्रैवकारस्य प्रयोजनम्—अमैव यत्तुल्यविधानमुपपदं तत् समस्यते, नान्यदिति ॥

## कर्मण्याक्रोशे कृञः खमुञ् ॥ २५ ॥

कर्मण्युपपदे कृञो धातोः खमुञ् प्रत्ययो भवत्याक्रोशे गम्यमाने। चोरंकारमाक्रोशति। चोरोऽसि दस्युरसीत्याक्रोशति। चोरकरणमाक्रोशसंपादनार्थमेव, न त्वसौ चोरः क्रियते ॥

## स्वादुमि णमुल् ॥ २६ ॥

समानकर्तृकयोः पूर्वकाले कृञ इति चानुवर्तते। स्वादुमीत्यर्थग्रहणम्। स्वाद्वर्थेषूपपदेषु कृञो णमुल् प्रत्ययो भवति। स्वादुंकारं भुङ्क्ते। संपन्नंकारं भुङ्क्ते। लवणंकारम्। स्वादुमीति मकारान्तनिपातनमीकाराभावार्थम्, च्व्यन्तस्यापि मकारार्थम्, दीर्घाभावार्थं च। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते। वासरूपेण क्त्वापि भवति। स्वादुं कृत्वा भुङ्क्ते। तुमर्थाधिकाराच्च सर्व एते भावे प्रत्ययाः। यद्येवं स्वादुंकारं भुङ्क्ते देवदत्त इति णमुला कर्तुरनभिहितत्वात् कर्तरि कस्मात् तृतीया न भवति ? भुजिप्रत्ययेनाभिहितः कर्ता। न चास्मिन् प्रकरणे शक्तिशक्तिमतोर्भेदो विवक्ष्यते, समानकर्तृकत्वं हि विरुध्यते। प्रधानशक्त्यभिधाने वा गुणशक्तिरभिहितवत् प्रकाशते ॥

## अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ २७ ॥

कृञ इत्येव। अन्यथादिषूपपदेषु कृञो णमुल् प्रत्ययो भवति, सिद्धाप्रयोगश्चेत् करोतिर्भवति। कथं पुनरसौ सिद्धाप्रयोगः ? निरर्थकत्वाद् न प्रयोगमर्हतीत्येवमेव प्रयुज्यते। अन्यथा भुङ्क्त इति यावानर्थः, तावानेवान्यथाकारं भुङ्क्त इति गम्यते। अन्यथाकारं भुङ्क्ते। एवंकारं भुङ्क्ते। कथंकारं भुङ्क्ते। इत्थंकारं भुङ्क्ते। सिद्धाप्रयोग इति किम्? अन्यथा कृत्वा शिरो भुङ्क्ते ॥

## यथातथयोरसूयाप्रतिवचने ॥ २८ ॥

कृञः सिद्धाप्रयोग इति वर्तते। यथातथाशब्दयोरुपपदयोः कृञो णमुल् प्रत्ययो भवत्यसूयाप्रतिवचने गम्यमाने। यद्यसूयन् पृच्छति प्रतिवक्ति तत्र प्रतिवचनम्। यथाकारमहं भोक्ष्ये तथाकारमहम्, किं तवानेन ? असूयाप्रतिवचन इति किम् ? यथा कृत्वाहं भोक्ष्ये, तथा त्वं द्रक्ष्यसि। सिद्धाप्रयोग इत्येव—यथा कृत्वाहं शिरो भोक्ष्ये, किं तवानेन॥

## कर्मणि दृशिविदोः साकल्ये ॥ २९ ॥

कर्मण्युपपदे साकल्यविशिष्टेऽर्थे दृशिविदोर्धात्वोर्णमुल् प्रत्ययो भवति। कन्यादर्शं वरयति। यायाः कन्याः पश्यति तास्ता वरयतीत्यर्थः। ब्राह्मणवेदं भोजयति। यंयं ब्राह्मणं जानाति लभते विचारयति वा तान् सर्वान् भोजयतीत्यर्थः। साकल्य इति किम्? ब्राह्मणं दृष्ट्वा भोजयति॥

## यावति विन्दजीवोः ॥ ३० ॥

यावच्छब्द उपपदे विन्दतेर्जीवतेश्च णमुल् प्रत्ययो भवति। यावद्वेदं भुङ्क्ते। यावल्लभते तावद् भुङ्क्त इत्यर्थः। यावज्जीवमधीते। यावज्जीवति तावदधीत इत्यर्थः॥

## चर्मोदरयोः पूरेः ॥ ३१ ॥

कर्मणीत्येव। चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णमुल् प्रत्ययो भवति। चर्मपूरं स्तृणाति। उदरपूरं भुङ्क्ते॥

## वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३२ ॥

कर्मणीत्येव। पूरयतेर्धातोर्णमुल् प्रत्ययो भवति, ऊलोपश्चास्य पूरयतेरन्यतरस्यां भवति, समुदायेन चेद् वर्षस्य प्रमाणमियत्ता गम्यते। गोष्पदपूरं वृष्टो देवः। गोष्पदप्रं वृष्टो देवः। सीतापूरं वृष्टो देवः। सीताप्रं वृष्टो देवः। अस्यग्रहणं किमर्थम् ? उपपदस्य मा भूत्—मूषिकाबिलपूरं वृष्टो देवः। मूषिकाबिलप्रम्॥

## चेले क्नोपेः ॥ ३३ ॥

कर्मणीत्येव। 'क्नूयी शब्दे उन्दने च' ( भ्वा० ३२६ ) अस्माण्ण्यन्ताद् धातोश्चेलार्थेषु कर्मसूपपदेषु णमुल् प्रत्ययो भवति, वर्षप्रमाणे गम्यमाने। चेलक्नोपं वृष्टो देवः। वस्त्रक्नोपम्, वसनक्नोपम्॥

## निमूलसमूलयोः कषः ॥ ३४ ॥

कर्मणीत्येव। निमूलसमूलशब्दयोः कर्मवाचिनोरुपपदयोः कषेर्धातोर्णमुल् प्रत्ययो भवति। निमूलकाषं कषति। समूलकाषं कषति। निमूलं समूलं कषतीत्यर्थः। इतः प्रभृति कषादीन् यान् वक्ष्यति, तत्र 'कषादिषु यथाविध्यनुप्रयोगः' (३.४.४६) इति॥

## शुष्कचूर्णरूक्षेषु पिषः ॥ ३५ ॥

कर्मणीत्येव। शुष्कादिषु कर्मवाचिषूपपदेषु पिषेर्धातोर्णमुल् प्रत्ययो भवति। शुष्कपेषं पिनष्टि। शुष्कं पिनष्टीत्यर्थः। चूर्णपेषं पिनष्टि। चूर्णं पिनष्टीत्यर्थः। रूक्षपेषं पिनष्टि। रूक्षं पिनष्टीत्यर्थः॥

## समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ ३६ ॥

कर्मणीत्येव। समूल अकृत जीव इत्येतेषु शब्देषु कर्मसूपपदेषु यथासंख्यं हन् कृञ् ग्रह इत्येतेभ्यो धातुभ्यो णमुल् प्रत्ययो भवति। समूलघातं हन्ति। समूलं हन्तीत्यर्थः। अकृतकारं करोति। जीवग्राहं गृह्णाति॥

## करणे हनः ॥ ३७ ॥

करण उपपदे हन्तेर्धातोर्णमुल् प्रत्ययो भवति। पाणिघातं वेदिं हन्ति। पादघातं भूमिं हन्ति। 'हिंसार्थानां च समानकर्मकाणाम्' (३.४.४८) इति णमुलं वक्ष्यति। अहिंसार्थोऽयमारम्भः, नित्यसमासार्थो वा यथाविध्यनुप्रयोगार्थश्च। पूर्वविप्रतिषेधेन हन्तेर्हिंसार्थस्यापि प्रत्ययोऽनेनैवेष्यते। असिघातं हन्ति। शरघातं हन्ति॥

## स्नेहने पिषः ॥ ३८ ॥

करण इत्येव। स्निह्यते येन तत् स्नेहनम्। स्नेहनवाचिनि करण उपपदे पिषेर्धातोर्णमुल् प्रत्ययो भवति। उदपेषं पिनष्टि। तैलपेषं पिनष्टि। तैलेन पिनष्टीत्यर्थः॥

## हस्ते वर्तिग्रहोः ॥ ३९ ॥

करण इत्येव। हस्त इत्यर्थग्रहणम्। वर्तिर्ण्यन्तः। हस्तवाचिनि करण उपपदे वर्तयतेर्गृह्णातेश्च णमुल् प्रत्ययो भवति। हस्तेन वर्तयति हस्तवर्तं वर्तयति। करवर्तम्। पाणिवर्तम्। ग्रहेः खल्वपि-हस्तेन गृह्णाति हस्तग्राहं गृह्णाति। करग्राहम्। पाणिग्राहम्॥

## स्वे पुषः ॥ ४० ॥

करण इत्येव। स्व इत्यर्थग्रहणम्। स्ववाचिनि करण उपपदे पुषेर्धातोर्णमुल् प्रत्ययो भवति। आत्मात्मीयज्ञातिधनवचनः[1] स्वशब्दः। स्वपोषं पुष्णाति। आत्मपोषम्। गोपोषम्। पितृपोषम्। मातृपोषम्। धनपोषम्। रैपोषम्॥

## अधिकरणे बन्धः ॥ ४१ ॥

अधिकरणवाचिन्युपपदे बध्नातेर्धातोर्णमुल् प्रत्ययो भवति। चक्रबन्धं बध्नाति। कूटबन्धं बध्नाति। मुष्टिबन्धं बध्नाति। चोरकबन्धं बध्नाति। चोरके बध्नातीत्यर्थः॥

## संज्ञायाम् ॥ ४२ ॥

संज्ञायां विषये बध्नातेर्धातोर्णमुल् प्रत्ययो भवति। क्रौञ्चबन्धं बध्नाति। मयूरिकाबन्धं बध्नाति। मयूरिकाबन्धं बद्धः। अट्टालिकाबन्धं बद्धः। बन्धविशेषाणां नामधेयान्येतानि॥

## कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ४३ ॥

जीवपुरुषयोः कर्तृवाचिनोरुपपदयोर्यथासंख्यं नशिवहोर्धात्वोर्णमुल् प्रत्ययो भवति। जीवनाशं नश्यति। जीवो नश्यतीत्यर्थः। पुरुषवाहं वहति। पुरुषः प्रेष्यो भूत्वा वहतीत्यर्थः। कर्तरीति किम्? जीवेन नष्टः। पुरुषेणोढः॥

## ऊर्ध्वे शुषिपूरोः ॥ ४४ ॥

कर्तृग्रहणमनुवर्तते। ऊर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषिपूरोर्धात्वोर्णमुल् प्रत्ययो भवति। ऊर्ध्वशोषं शुष्यति। ऊर्ध्वं शुष्यतीत्यर्थः। ऊर्ध्वपूरं पूर्यते। ऊर्ध्वं पूर्यत इत्यर्थः॥

## उपमाने कर्मणि च ॥ ४५ ॥

उपमीयतेऽनेनेत्युपमानम्। उपमाने कर्मण्युपपदे, चकारात् कर्तरि, धातोर्णमुल् प्रत्ययो भवति। घृतनिधायं निहितः। घृतमिव निहित इत्यर्थः। सुवर्णनिधायं निहितः। सुवर्णमिव निहित इत्यर्थः। कर्तरि खल्वपि—अजकनाशं नष्टः। अजक इव नष्टः। चूडकनाशम्। दन्तनाशम्॥

## कषादिषु यथाविध्यनुप्रयोगः ॥ ४६ ॥

'निमूलसमूलयोः०' (३.४.३४) इत्येतदारभ्य कषादयः। एतेषु यथाविध्यनुप्रयोगो

---

१ - 'आत्मीय०' इति मुद्रितेपु।

भवति। यस्माद् धातोर्णमुल् प्रत्ययो भवति, स एवानुप्रयोक्तव्यः। ननु धातुसंबन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव ? यथाविधीति नियमार्थं वचनम्। तथा चैवोदाहृतम्॥

## उपदंशस्तृतीयायाम् ॥ ४७ ॥

'दंश दशने' ( भ्वा० ७१५ ) अस्माद् धातोरुपपूर्वात् तृतीयान्त उपपदे णमुल् प्रत्ययो भवति। मूलकोपदंशं भुङ्क्ते। मूलकेनोपदंशम्। आर्द्रकोपदंशम्। आर्द्रकेणोपदंशम्। अत्र विकल्पेनोपपदसमासः 'तृतीयाप्रभृतीन्यन्यतरस्याम्' ( २.२.२१ ) इति। मूलकादि चोपदंशेः कर्म। भुजेः करणम्। सर्वस्मिन्नेवात्र णमुल्प्रकरणे क्रियाभेदे सति वासरूपविधिना क्त्वापि भवति। मूलकेनोपदश्य भुङ्क्ते॥

## हिंसार्थानां च समानकर्मकाणाम् ॥ ४८ ॥

तृतीयायामित्येव। हिंसा प्राण्युपघातः। तदर्थानां धातूनामनुप्रयोगधातुना समान-कर्मकाणां तृतीयान्त उपपदे णमुल् प्रत्ययो भवति। दण्डोपघातं गाः कालयति। दण्डेनोपघातम्। दण्डताडम्। दण्डेन ताडम्। समानकर्मकाणामिति किम् ? चोरं दण्डेनोपहत्य गोपालको गाः कालयति॥

## सप्तम्यां चोपपीडरुधकर्षः ॥ ४९ ॥

उपशब्दः प्रत्येकमभिसंबध्यते। उपपूर्वेभ्यः पीडरुधकर्षेभ्यः सप्तम्यन्त उपपदे, चकारात् तृतीयान्त उपपदे, णमुल् प्रत्ययो भवति। पार्श्वोपपीडं शेते। पार्श्वयोरुपपीडम्। पार्श्वाभ्यामुपपीडम्। व्रजोपरोधं गाः स्थापयति। व्रज उपरोधम्। व्रजेनोपरोधम्। पाण्युपकर्षं धानाः संगृह्णाति। पाणावुपकर्षम्। पाणिनोपकर्षम्। कर्षतेरिदं ग्रहणम्, न कृषतेः॥

## समासत्तौ ॥ ५० ॥

सप्तम्यां तृतीयायामिति वर्तते। समासत्तिः सन्निकर्षः। समासत्तौ गम्यमानायां तृतीयासप्तम्योरुपपदयोर्धातोर्णमुल् प्रत्ययो भवति। केशग्राहं युध्यन्ते। केशेषु ग्राहम्। केशैर्ग्राहम्। हस्तग्राहम्। हस्तेषु ग्राहम्। हस्तैर्ग्राहम्। युद्धसंरम्भादत्यन्तं सन्निकृष्यन्त इत्यर्थः॥

## प्रमाणे च ॥ ५१ ॥

तृतीयासप्तम्योरित्येव। प्रमाणमायामः, दैर्घ्यम्। प्रमाणे गम्यमाने तृतीयासप्तम्योरुप-पदयोर्धातोर्णमुल् प्रत्ययो भवति। द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति। द्व्यङ्गुल उत्कर्षम्, द्व्यङ्गुलेनोत्कर्षम्। त्र्यङ्गुलोत्कर्षम्॥

## अपादाने परीप्सायाम् ॥ ५२ ॥

परीप्सा त्वरा। परीप्सायां गम्यमानायामपादान उपपदे धातोर्णमुल् प्रत्ययो भवति। शय्योत्त्थायं धावति। शय्याया उत्त्थायम्। एवं नाम त्वरते यदवश्यं कर्तव्यमपि नापेक्षते। शय्योत्त्थानमात्रमाद्रियते। रन्ध्रापकर्षं पयः पिबति। भ्राष्ट्रापकर्षमपूपान् भक्षयति। परीप्साया-मिति किम्? आसनादुत्त्थाय गच्छति॥

## द्वितीयायां च ॥ ५३ ॥

परीप्सायामित्येव। द्वितीयान्त उपपदे परीप्सायां गम्यमानायां धातोर्णमुल् प्रत्ययो भवति। यष्टिग्राहं युध्यन्ते। यष्टिं ग्राहम्। लोष्टग्राहम्। लोष्टं ग्राहम्। एवं नाम त्वरते यदायुधग्रहणमपि नाद्रियते। लोष्टादिकं यत् किञ्चिदासन्नम्, तद् गृह्णाति॥

## स्वाङ्गेऽध्रुवे ॥ ५४ ॥

द्वितीयायामित्येव। अध्रुवे स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् प्रत्ययो भवति। अक्षिनिकाणं जल्पति। भ्रूविक्षेपं कथयति। अध्रुव इति किम्? उत्क्षिप्य शिरः कथयति। यस्मिन्नङ्गे छिन्नेऽपि प्राणी न म्रियते तदध्रुवम्। 'अद्रवं मूर्तिमत्स्वाङ्गम्' (का० ४.१.५४)॥

## परिक्लिश्यमाने च ॥ ५५ ॥

स्वाङ्गे द्वितीयायामित्येव। परिक्लिश्यमाने स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्ण-मुल् प्रत्ययो भवति। परिक्लेशः सर्वतो विबाधनम्, दुःखनम्। उरःपेषं युध्यन्ते। उरः-प्रतिपेषं युध्यन्ते। शिरःपेषम्। शिरःप्रतिपेषम्। कृत्स्नमुरः पीडयन्तो युध्यन्ते। ध्रुवार्थोऽ-यमारम्भः॥

## विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ५६ ॥

द्वितीयायामित्येव। द्वितीयान्त उपपदे विश्यादिभ्यो धातुभ्यो णमुल् प्रत्ययो भवति व्याप्यमान आसेव्यमाने चार्थे गम्यमाने। विश्यादिभिः क्रियाभिरनवयवेन पदार्थानां संबन्धो व्याप्तिः। तात्पर्यमासेवा। द्रव्ये व्याप्तिः, क्रियायामासेवा। गेहानुप्रवेशमास्ते। समासेन व्याप्त्यासेवयोरुक्तत्वाद् 'नित्यवीप्सयोः' (८.१.४) इति द्विर्वचनं न भवति। असमासपक्षे तु व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनम्, आसेव्यमानतायां तु क्रिया-वचनस्य। तथा च वक्ष्यति—सुप्सु वीप्सा, तिङ्क्षु नित्यता (का० ८.१.४) इति।

गेहंगेहमनुप्रवेशमास्ते। आसेवायाम्—गेहमनुप्रवेशमनुप्रवेशमास्ते। पति—गेहानुप्रपातमास्ते। गेहंगेहमनुप्रपातमास्ते। गेहमनुप्रपातमनुप्रपातमास्ते। पदि—गेहानुप्रपादमास्ते। गेहंगेहमनुप्रपादम्। गेहमनुप्रपादमनुप्रपादम्। स्कन्दि—गेहावस्कन्दमास्ते। गेहंगेहमवस्कन्दम्। गेहमवस्कन्दमवस्कन्दम्। व्याप्यमानासेव्यमानयोरिति किम् ? गेहमनुप्रविश्य भुङ्क्ते। ननु चाभीक्ष्ण्ये णमुल् विहित एव। आसेवा चाभीक्ष्ण्यमेव। किमर्थं पुनरासेवायां णमुलुच्यते ? क्त्वानिवृत्त्यर्थमिति चेत्, न, इष्टत्वात् तस्य। द्वितीयोपपदार्थं तर्हि वचनम्। उपपदसमासः पक्षे यथा स्यात्। तेन हि सत्युपपदाभावः॥

## अस्यतितृषोः क्रियान्तरे कालेषु ॥ ५७ ॥

द्वितीयायामित्येव। क्रियामन्तरयति क्रियान्तरः, क्रियाव्यवधायकः। क्रियान्तरे धात्वर्थे वर्तमानाभ्यामस्यतितृषिभ्यां द्वितीयान्तेषु कालवाचिषूपपदेषु णमुल् प्रत्ययो भवति। द्व्यहात्यासं गाः पाययति। द्व्यहमत्यासं गाः पाययति। त्र्यहात्यासं गाः पाययति। त्र्यहमत्यासं गाः पाययति। द्व्यहतर्षं गाः पाययति। द्व्यहं तर्षं गाः पाययति। अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते विच्छिद्यते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः। अस्यतितृषोरिति किम्? द्व्यहमुपोष्य भुङ्क्ते। क्रियान्तर इति किम् ? अहरत्यस्येषून् गतः। न गतिर्व्यवधीयते। कालेष्विति किम् ? योजनमत्यस्य गाः पाययति। अध्वकर्मकमत्यसनं व्यवधायकम्, न कालकर्मकम्॥

## नाम्न्यादिशिग्रहोः ॥ ५८ ॥

द्वितीयायामित्येव। नामशब्दे द्वितीयान्त उपपद आदिशेर्ग्रहेश्च धातोर्णमुल् प्रत्ययो भवति। नामादेशमाचष्टे। नामग्राहमाचष्टे॥

## अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ ५९ ॥

अव्यय उपपदेऽयथाभिप्रेताख्याने गम्यमाने करोतेः क्त्वाणमुलौ भवतः। ब्राह्मण पुत्रस्ते जातः। किं तर्हि वृषल नीचैःकृत्याचक्षे। नीचैः कृत्वा। नीचैःकारम्। उच्चैर्नाम प्रियमाख्येयम्। ब्राह्मण कन्या ते गर्भिणी। किं तर्हि वृषलोच्चैःकृत्याचक्षे। उच्चैः कृत्वा। उच्चैःकारम्। नीचैर्नामाप्रियमाख्येयम्। अयथाभिप्रेताख्यान इति किम् ? उच्चैः कृत्वाचष्टे पुत्रस्ते जात इति। क्त्वाग्रहणं किम्, यावता सर्वस्मिन्नेवात्र प्रकरणे वासरूपेण क्त्वा भवतीत्युक्तम् ? समासार्थं वचनम्। तथा हि 'क्त्वा च' (२.२.२२) इत्यस्मिन् सूत्रे 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (२.२.२१) इति वर्तते। णमुलधिकारे पुनर्णमुल्ग्रहणं तुल्यकक्षत्वज्ञापनार्थम्। तेनोत्तरत्र द्वयोरप्यनुवृत्तिर्भविष्यति॥

## तिर्यच्यपवर्गे ॥ ६० ॥

तिर्यक्शब्द उपपदे कृञः क्त्वाणमुलौ प्रत्ययौ भवतोऽपवर्गे गम्यमाने। अपवर्गः समाप्तिः। तिर्यक्कृत्य गतः। तिर्यक् कृत्वा गतः। तिर्यक्कारं गतः। समाप्य गत इत्यर्थः। अपवर्ग इति किम् ? तिर्यक् कृत्वा काष्ठं गतः। तिर्यचीति शब्दानुकरणम्। न च प्रकृतिवदनुकरणेन भवितव्यम् , अनुक्रियमाणरूपविनाशप्रसङ्गात्। 'एतदोऽश्' ( २.४.३३ ), 'अदसो मात्' ( १.१.१२ ) इति॥

## स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ ६१ ॥

तस् प्रत्ययो यतः स्वाङ्गात् तदेवमुच्यते। तस्प्रत्यये स्वाङ्गवाचिन्युपपदे करोतेर्भवतेश्च धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः। यथासंख्यमत्र नेष्यते, अस्वरितत्वात्। मुखतःकृत्य गतः। मुखतः कृत्वा गतः। मुखतःकारं गतः। मुखतोभूय तिष्ठति। मुखतो भूत्वा तिष्ठति। मुखतोभावं तिष्ठति। पृष्ठतःकृत्य गतः। पृष्ठतः कृत्वा गतः। पृष्ठतःकारं गतः। पृष्ठतोभूय गतः। पृष्ठतो भूत्वा। पृष्ठतोभावम्। स्वाङ्ग इति किम् ? सर्वतः कृत्वा गतः। तस्ग्रहणं किम् ? मुखीकृत्य गतः। मुखीभूय गतः। प्रत्ययग्रहणं किम् ? मुखे तस्यतीति मुखतः, मुखतः कृत्वा गतः॥

## नाधार्थप्रत्यये च्व्यर्थे ॥ ६२ ॥

नार्थो धार्थश्च प्रत्ययो यस्मात् स एवमुच्यते। नाधार्थप्रत्यये शब्दे च्व्यर्थ उपपदे कृभ्वोर्धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः। अनाना नाना कृत्वा गतः, नानाकृत्य गतः। नाना कृत्वा गतः। नानाकारं गतः। विनाकृत्य गतः। विना कृत्वा गतः। विनाकारं गतः। नानाभूय गतः। नाना भूत्वा गतः। नानाभावं गतः। विनाभूय गतः। विना भूत्वा गतः। विनाभावं गतः। द्विधाकृत्य गतः। द्विधा कृत्वा गतः। द्विधाकारं गतः। द्विधाभूय गतः। द्विधा भूत्वा गतः। द्विधाभावं गतः। द्वैधंकृत्य गतः। द्वैधं कृत्वा गतः। द्वैधंकारं गतः। द्वैधंभूय गतः। द्वैधं भूत्वा गतः। द्वैधंभावं गतः। प्रत्ययग्रहणं किम् ? हिरुक् कृत्वा। पृथक् कृत्वा। च्व्यर्थ इति किम् ? नाना कृत्वा काष्ठानि गतः। धार्थमर्थग्रहणम्, ना पुनरेक एव 'विनञ्भ्यां नानाञौ०' ( ५.२.२७ ) इति॥

## तूष्णीमि भुवः ॥ ६३ ॥

तूष्णींशब्द उपपदे भवतेर्धातोः क्त्वाणमुलौ प्रत्ययौ भवतः। तूष्णींभूय गतः। तूष्णीं भूत्वा। तूष्णींभावम्। भूग्रहणं कृञो निवृत्त्यर्थम्॥

## अन्वच्यानुलोम्ये ॥ ६४ ॥

अन्वक्शब्द उपपदे भवतेर्धातोरानुलोम्ये क्त्वाणमुलौ भवतः। आनुलोम्यमनुलोमता, अनुकूलत्वम्, परचित्तानुविधानम्। अन्वग्भूयास्ते। अन्वग् भूत्वास्ते। अन्वग्भावमास्ते। आनुलोम्य इति किम् ? अन्वग् भूत्वा तिष्ठति॥

## शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥ ६५ ॥

शकादिषूपपदेषु अस्त्यर्थेषु वा धातुमात्रात् तुमुन् प्रत्ययो भवति। अक्रियार्थोपपदार्थोऽयमारम्भः। शक्नोति भोक्तुम्। धृष्णोति भोक्तुम्। जानाति भोक्तुम्। ग्लायति भोक्तुम्। घटते भोक्तुम्। आरभते भोक्तुम्। लभते भोक्तुम्। प्रक्रमते भोक्तुम्। सहते भोक्तुम्। अर्हति भोक्तुम्। अस्त्यर्थेषु खल्वपि—अस्ति भोक्तुम्। भवति भोक्तुम्। विद्यते भोक्तुम्[1]॥

## पर्याप्तिवचनेष्वलमर्थेषु ॥ ६६ ॥

पर्याप्तिरन्यूनता। पर्याप्तिवचनेष्वलमर्थेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति। पर्याप्तो भोक्तुम्। अलं भोक्तुम्। भोक्तुं पारयति। पर्याप्तिवचनेष्विति किम् ? अलं कृत्वा। अलमर्थेष्विति किम् ? पर्याप्तं भुङ्क्ते। पूर्वसूत्रे शकिग्रहणमनलमर्थम्। शक्यमेवं कर्तुमिति॥

## कर्तरि कृत् ॥ ६७ ॥

कृत्संज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति। कृदुत्पत्तिवाक्यानामयं शेषः। तत्र येष्वर्थादेशो नास्ति तत्रेदमुपतिष्ठते, अर्थाकाङ्क्षत्वात्। न ख्युनादिवाक्येषु, साक्षादर्थनिर्देशे सति तेषां निराकाङ्क्षत्वात्। कारकः। कर्ता। नन्दनः। ग्राही। पचः॥

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ ६८ ॥

भव्यादयः शब्दाः कर्तरि वा निपात्यन्ते। 'तयोरेव कृत्यक्तखलर्थाः' ( ३.४.७० ) इति भावकर्मणोः प्राप्तयोः कर्ता च वाच्यः पक्ष उच्यते। भवत्यसौ भव्यः, भव्यमनेनेति वा। गेयो माणवकः साम्नाम्, गेयानि माणवकेन सामानीति वा। प्रवचनीयो गुरुः स्वाध्यायस्य, प्रवचनीयो गुरुणा स्वाध्याय इति वा। उपस्थानीयोऽन्तेवासी गुरोः, उपस्थानीयः शिष्येण वा गुरुः। जायतेऽसौ जन्यः, जन्यमनेनेति वा। आप्लवतेऽसावाप्लाव्यः, आप्लाव्यमनेनेति वा। आपतत्यसावापात्यः, आपात्यमनेनेति वा॥

---

१ - इदमुदाहरणं नास्ति है०।

## लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ६९ ॥

ल इत्युत्सृष्टानुबन्धं सामान्यं गृह्यते। प्रथमाबहुवचनान्तं चैतत्। लकाराः कर्मणि कारके भवन्ति, चकारात् कर्तरि च। अकर्मकेभ्यो धातुभ्यो भावे भवन्ति, पुनश्चकारात् कर्तरि च। गम्यते ग्रामो देवदत्तेन। गच्छति ग्रामं देवदत्तः। अकर्मकेभ्यः—आस्यते देवदत्तेन। आस्ते देवदत्तः। सकर्मकेभ्यो भावे न भवन्ति॥

## तयोरेव कृत्यक्तखलर्थाः ॥ ७० ॥

तयोरेव भावकर्मणोः कृत्यसंज्ञकाः क्तखलर्थाश्च प्रत्यया भवन्ति। एवकारः कर्तुरपकर्षणार्थः। कृत्याः कर्मणि—कर्तव्यः कटो भवता। भोक्तव्य ओदनो भवता। भावे—आसितव्यं[1] भवता। शयितव्यं भवता। क्तः कर्मणि—कृतः कटो भवता। भुक्त ओदनो भवता। भावे—आसितं भवता। शयितं भवता। खलर्थाः कर्मणि—ईषत्करः कटो भवता। सुकरः। दुष्करः। भावे—ईषदाढ्यंभवं भवता। स्वाढ्यंभवं भवता। भावे चाकर्मकेभ्य इत्यनुवृत्तेस्सकर्मकेभ्यो भावे न भवन्ति॥

## आदिकर्मणि क्तः कर्तरि च ॥ ७१ ॥

आदिकर्मणि यः क्तो विहितः, स कर्तरि भवति। चकाराद् यथाप्राप्तं भावकर्मणोः। आदिभूतः क्रियाक्षण आदिकर्म, तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते यः क्तो विहितः, तस्यायमर्थनिर्देशः। प्रकृतः कटं देवदत्तः। प्रकृतः कटो देवदत्तेन। प्रकृतं देवदत्तेन। प्रभुक्त ओदनं देवदत्तः। प्रभुक्त ओदनो देवदत्तेन। प्रभुक्तं देवदत्तेन॥

## गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ॥ ७२ ॥

गत्यर्थेभ्यो धातुभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च यः क्तः, स कर्तरि भवति। चकाराद् यथाप्राप्तं च भावकर्मणोः। गतो देवदत्तो ग्रामम्। गतो देवदत्तेन ग्रामः। गतं देवदत्तेन। अकर्मकेभ्यः—ग्लानो भवान्। ग्लानं भवता। आसितो भवान्। आसितं भवता। श्लिष—उपश्लिष्टो गुरुं भवान्। उपश्लिष्टो गुरुर्भवता। उपश्लिष्टं भवता। शीङ्—उपशयितो गुरुं भवान्। उपशयितो गुरुर्भवता। उपशयितं भवता। स्था—उपस्थितो गुरुं भवान्। उपस्थितो गुरुर्भवता। उपस्थितं भवता। आस—उपासितो गुरुं भवान्। उपासितो गुरुर्भवता। उपासितं भवता। वस—अनूषितो गुरुं भवान्। अनूषितो गुरुर्भवता। अनूषितं भवता। जन—अनुजातो माणवको माणविकाम्। अनुजाता माणवकेन माणविका। अनुजातं माणवकेन। रुह—आरूढो वृक्षं भवान्। आरूढो

---

१ – 'आशितव्यम्' इति मुद्रितेपु।

वृक्षो भवता। आरूढं भवता। जीर्यति—अनुजीर्णो वृषलीं देवदत्तः। अनुजीर्णा वृषली देवदत्तेन। अनुजीर्णं देवदत्तेन। श्लिषादयस्सोपसर्गास्सकर्मका भवन्ति, तदर्थमेषामुपादानम्॥

## दाशगोघ्नौ संप्रदाने ॥ ७३ ॥

दाशगोघ्नौ शब्दौ संप्रदाने कारके निपात्येते। 'दाशृ दाने' ( भ्वा० ६२२ ) ततः पचाद्यच्। स कृत्संज्ञकत्वात् कर्तरि प्राप्तः, संप्रदाने निपात्यते। दाशन्ति तस्मा इति दाशः। आगताय तस्मै दातुं गां घ्नन्तीति गोघ्नः, अर्घार्होऽतिथिः। टगत्र निपात्यते। निपातनसामर्थ्यादेव गोघ्न ऋत्विगादिरुच्यते, न तु चण्डालादिः। असत्यपि च गोहनने तस्य योग्यतया गोघ्न इत्यभिधीयते॥

## भीमादयोऽपादाने ॥ ७४ ॥

भीमादयः शब्दा अपादाने निपात्यन्ते। उणादिप्रत्ययान्ता एते। 'श्याधूसूभ्यो मक्' ( प० उ० १.१४५ ) 'भियः षुग् वा' ( प० उ० १.१४८ ) इत्येवमादयः। 'ताभ्यामन्यत्रोणादयः' ( ३.४.७५ ) इति पर्युदासे प्राप्ते निपातनमारभ्यते। भीमः। भीष्मः। भयानकः। वरुः। चरुः। भूमिः। रजः। संस्कारः। संक्रन्दनः। प्रपतनः। समुद्रः। स्रुवः। स्रुक्। खलतिः॥

## ताभ्यामन्यत्रोणादयः ॥ ७५ ॥

उणादयः शब्दास्ताभ्यामपादानसंप्रदानाभ्यामन्यत्र कारके भवन्ति। कृत्त्वात् कर्तर्येव प्राप्ताः कर्मादिषु कथ्यन्ते। ताभ्यामिति संप्रदानप्रत्यवमर्शार्थम्[1]। अन्यथा ह्यपादानमेव पर्युदस्येत, अनन्तरत्वात्। कृषितोऽसौ कृषिः। तनितं[2] इति तन्तुः। वृत्तमिति वर्त्म। चरितं चर्म॥

## क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥ ७६ ॥

ध्रौव्यार्था अकर्मकाः, प्रत्यवसानार्था अभ्यवहारार्था इति स्वनिकायप्रसिद्धिः। ध्रौव्यगतिप्रत्यवसानार्थेभ्यो यः क्तो विहितः, सोऽधिकरणे भवति। चकाराद् यथाप्राप्तं च। ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु, गत्यर्थेभ्यः कर्तृकर्मभावाधिकरणेषु , प्रत्यवसानार्थेभ्यः कर्मभावाधिकरणेषु। ध्रौव्यार्थेभ्यस्तावत्—आसितो देवदत्तः। आसितं तेन। इदमेषामासितम्। गत्यर्थेभ्यः—यातो देवदत्तो ग्रामम्। यातो देवदत्तेन ग्रामः। यातं देवदत्तेन। इदमेषां यातम्। प्रत्यवसानार्थेभ्यः—भुक्त ओदनो देवदत्तेन। देवदत्तेन भुक्तम्। इदमेषां

१ - यथान्यासम्। 'सम्प्रदानार्थः प्रत्यवमर्शः' इति है०।

२ - कृषिततनितयोरिड्विषये पदमञ्जरी द्रष्टव्या।

भुक्तम्। कथं भुक्ता ब्राह्मणाः, पीता गाव इति ? अकारो मत्वर्थीयः। भुक्तमेषामस्ति, पीतमेषामस्तीति॥

## लस्य ॥ ७७ ॥

लस्येत्ययमधिकारः। अकार उच्चारणार्थः। लकारमात्रं स्थानित्वेनाधिक्रियते। यदित ऊर्ध्वमनुक्रमिष्यामः, लस्येत्येवं तद् वेदितव्यम्। किं चेदं लस्येति? दश लकारा अनुबन्धविशिष्टा विहिता अर्थविशेषे कालविशेषे च, तेषां विशेषकराननुबन्धानुत्सृज्य यत् सामान्यं तद् गृह्यते। षट् टितः, चत्वारो ङितः। अक्षरसमाम्नायवदानुपूर्व्या कथ्यन्ते। लट्। लिट्। लुट्। लृट्। लेट्। लोट्। लङ्। लिङ्। लुङ्। लृङ् इति। अथ लकारमात्रस्य ग्रहणं कस्माद् न भवति—लुनाति चूडाल इति? धात्वधिकारोऽनुवर्तते, कर्त्रादयश्च विशेषकाः॥

## तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ॥ ७८ ॥

लस्य तिबादय आदेशा भवन्ति। तिप्सिप्मिपां पकारः स्वरार्थः। इटष्टकार 'इटोऽत्' ( ३.४.१०६ ) इति विशेषणार्थः, तिबादिभिरादेशैस्तुल्यत्वाद् न देशविध्यर्थः। महिङो ङकारस्तिङ् इति प्रत्याहारग्रहणार्थः। पचति, पचतः, पचन्ति। पचसि, पचथः, पचथ। पचामि, पचावः, पचामः। पचते, पचेते, पचन्ते। पचसे, पचेथे, पचध्वे। पचे, पचावहे, पचामहे। एवमन्येष्वपि लकारेषूदाहार्यम्॥

## टित आत्मनेपदानां टेरे ॥ ७९ ॥

टितो लकारस्य स्थाने यान्यात्मनेपदानि तेषां टेरेकारादेशो भवति। तथा चैवोदाहृतम्। इह कस्माद् न भवति—पचमानो यजमानः ? प्रकृतैस्तिबादिभिरात्मनेपदानि विशेष्यन्ते॥

## थासः से ॥ ८० ॥

टित इत्येव। टितो लकारस्य यस्थास् तस्य सेशब्द आदेशो भवति। पचसे। पेचिषे। पक्तासे। पक्ष्यसे॥

## लिटस्तझयोरेशिरेच् ॥ ८१ ॥

लिडादेशयोस्तझयोर्यथासंख्यमेश् इरेच् इत्येतावादेशौ भवतः। शकारः सर्वादेशार्थः। चकारः स्वरार्थः। पेचे, पेचाते, पेचिरे। लेभे, लेभाते, लेभिरे॥

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ८२ ॥

लिट इत्येव। लिडादेशानां परस्मैपदसंज्ञकानां यथासंख्यं तिबादीनां णलादयो नवादेशा भवन्ति। लकारः स्वरार्थः। णकारो वृद्ध्यर्थः। पपाच, पेचतुः, पेचुः। पेचिथ, पपक्थ, पेचथुः, पेच। पपाच, पपच, पेचिव, पेचिम॥

## विदो लटो वा ॥ ८३ ॥

परस्मैपदानामित्येव। 'विद ज्ञाने' (अदा० ५७) अस्माद् धातोः परेषां लडादेशानां परस्मैपदानां णलादयो नव विकल्पेनादेशा भवन्ति। वेद, विदतुः, विदुः। वेत्थ, विदथुः, विद। वेद, विद्व, विद्म। न च भवति—वेत्ति, वित्तः, विदन्ति। वेत्सि, वित्थः, वित्थ। वेद्मि, विद्वः, विद्मः॥

## ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८४ ॥

परस्मैपदानामित्येव, लटो वेति च। ब्रुवः परस्य लटः परस्मैपदानां पञ्चानामादि-भूतानां पञ्चैव णलादय आदेशा भवन्ति[1], तत्सन्नियोगेन च ब्रुव आहशब्द आदेशो भवति। आह, आहतुः, आहुः। आत्थ, आहथुः। न च भवति—ब्रवीति, ब्रूतः, ब्रुवन्ति। ब्रवीषि, ब्रूथः। पञ्चानामिति किम् ? ब्रूथ। ब्रवीमि, ब्रूवः, ब्रूमः। आदित इति किम्? परेषां मा भूत्। ब्रुव इति पुनर्वचनं स्थान्यर्थम्, परस्मैपदानामेव हि स्यात्॥

## लोटो लङ्वत् ॥ ८५ ॥

अतिदेशोऽयम्। लोटो लङ्वत् कार्यं भवति। तामादयस्सलोपश्च। पचताम्। पचतम्। पचत। पचाव, पचाम। अडाटौ कस्माद् न भवतः, तथा झेर्जुसादेशः (३.४.१०८) 'लङः शाकटायनस्यैव' (३.४.१११) इति—वान्तु, यान्तु ? 'विदो लटो वा' (३.४.८३) इत्यतो वाग्रहणमनुवर्तते। सा च व्यवस्थितविभाषा भविष्यति॥

## एरुः ॥ ८६ ॥

लोट इत्येव। लोडादेशानामिकारस्योकारादेशो भवति। पचतु। पचन्तु ॥ हिन्योरुत्वप्रतिषेधो वक्तव्यः॥ न वोच्चारणसामर्थ्यात्। अथवा वेति वर्तते, सा च व्यवस्थितविभाषा॥

---

१ – 'स्थानिसंबन्धादादेशेऽपि पञ्चत्वमादित्वं च विज्ञायते' इति पाठोऽप्यत्र स्यात्, न्यासे प्रतीकदर्शनात्, क्वचिद् मातृकासूपलम्भाच्च।

## सेर्ह्यपिच्च ॥ ८७ ॥

लोट इत्येव। लोडादेशस्य सेर्हीत्ययमादेशो भवति, अपिच्च भवति। स्थानिवद्भावात् पित्त्वं प्राप्तं प्रतिषिध्यते। लुनीहि। पुनीहि। राध्नुहि। तक्ष्णुहि॥

## वा छन्दसि ॥ ८८ ॥

अपित्त्वं विकल्प्यते। लादेशश्छन्दसि विषये हिशब्दो वापिद् भवति। युयोध्यंस्मज्जुंहुराणमेनः (ऋ० १.१८९.१)। प्रीणाहि। प्रीणीहि (काठ० सं० ४०.१२)॥

## मेर्निः ॥ ८९ ॥

लोट इत्येव। लोडादेशस्य मेर्निरादेशो भवति। उत्वलोपयोरपवादः। पचानि। पठानि॥

## आमेतः ॥ ९० ॥

लोट इत्येव। लोट्संबन्धिन एकारस्य आमित्ययमादेशो भवति। पचताम्, पचेताम्, पचन्ताम्॥

## सवाभ्यां वामौ ॥ ९१ ॥

लोट इत्येव। सकारवकाराभ्यामुत्तरस्य लोट्संबन्धिन एकारस्य यथासंख्यं व अम् इत्येतावादेशौ भवतः। आमोऽपवादः। पचस्व। पचध्वम्॥

## आडुत्तमस्य पिच्च ॥ ९२ ॥

लोट इत्येव। लोट्संबन्धिन उत्तमपुरुषस्याडागमो भवति, स चोत्तमपुरुषः पिद् भवति। करवाणि, करवाव, करवाम। करवै, करवावहै, करवामहै॥

## एत ऐ ॥ ९३ ॥

लोडुत्तमस्येति वर्तते। लोडुत्तमसंबन्धिन एकारस्य ऐकारादेशो भवति। आमोऽपवादः। करवै, करवावहै, करवामहै। इह कस्माद् न भवति—पचावेदम्, यजावेदम्? बहिरङ्गलक्षणत्वाद् गुणस्य॥

## लेटोऽडाटौ ॥ ९४ ॥

लेटोऽडाटावागमौ भवतः पर्यायेण। जोषिंषत् (ऋ० २.३५.१)। तारिषत्

( ऋ० १.२५.१२ )। मन्दिषत्। पताति दिद्युत् ( ऋ० ७.२५.१ )। उदधिं च्यावयाति ( तै० सं० ३.५.५.२ )॥

## आत ऐ ॥ ९५ ॥

लेट इत्येव। लेट्संबन्धिन आकारस्य ऐकारादेशो भवति। प्रथमपुरुषमध्यमपुरुषात्मनेपदद्विवचनयोः। मन्त्रयैते। मन्त्रयैथे। करवैते। करवैथे। आटः कस्माद् न भवति ? विधानसामर्थ्यात्॥

## वैतोऽन्यत्र ॥ ९६ ॥

लेट इत्येव। लेट्संबन्धिन एकारस्य वैकारादेशो भवति। अन्यत्रेत्यनन्तरो विधिरपेक्ष्यते। 'आत ऐ' ( ३.४.९५ ) इत्येतद्विषयं वर्जयित्वा एत ऐ भवति। सप्ताहानि शासै। अहमेव पशूनामीशै ( काठ० सं० २५.१ )। मदंग्रा एव वो ग्रहां गृह्यान्तै ( तै० सं० ६.४.७.१ )। मद्देवत्यांन्येव वः पात्रांण्युच्यान्तै ( तै० सं० ६.४.७.२ )। न च भवति—यत्र क्वं च ते मनो दक्षं दधस उत्तंरम् ( ऋ० ६.१६.१७ )। अन्यत्रेति किम् ? मन्त्रयैते। मन्त्रयैथे॥

## इतश्च लोपः परस्मैपदेषु ॥ ९७ ॥

लेट इत्येव। लेट्संबन्धिन इकारस्य परस्मैपदविषयस्य लोपो भवति। वानुवृत्तेः पक्षे श्रवणमपि भवति। जोषिषत् ( ऋ० २.३५.१ )। तारिषत् ( ऋ० १.२५.१२ )। मन्दिषत्। न च भवति—पताति दिद्युत् ( ऋ० ७.२५.१ )। उदधिं च्यावयाति ( तै० सं० ३.५.५.२ )। परस्मैपदग्रहणमिड्वहिमहिङां मा भूत्॥

## स उत्तमस्य ॥ ९८ ॥

लेट इति, वेति च वर्तते। लेट्संबन्धिन उत्तमपुरुषस्य सकारस्य वा लोपो भवति। करवाव। करवाम। न च भवति—करवावः। करवामः। उत्तमग्रहणं पुरुषान्तरे मा भूत्॥

## नित्यं ङितः ॥ ९९ ॥

लेट इति निवृत्तम्। ङितो लकारस्य य उत्तमः, तस्य नित्यं सकारस्य लोपो भवति। अपचाव। अपचाम। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्॥

## इतश्च ॥ १०० ॥

ङित इत्येव। ङिल्लकारसंबन्धिन इकारस्य नित्यं लोपो भवति। अपचत्। अपाक्षीत्। परस्मैपदेष्वित्येव—अपचावहि। अपचामहि॥

## तस्थस्थमिपां तांतंतामः ॥ १०१ ॥

ङित इत्येव। ङिल्लकारसंबन्धिनां चतुर्णां यथासंख्यं तामादय आदेशा भवन्ति। अपचताम्। अपचतम्। अपचत। अपचम्। अपाक्ताम्। अपाक्तम्। अपाक्त। अपाक्षम्॥

## लिङः सीयुट् ॥ १०२ ॥

लिङादेशानां सीयुडागमो भवति। टकारो देशविध्यर्थः। उकार उच्चारणार्थः। पचेत, पचेयाताम्, पचेरन्। पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन्॥

## यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ १०३ ॥

लिङ इत्येव। परस्मैपदविषयस्य लिङो यासुडागमो भवति, स चोदात्तो भवति, ङिच्च। सीयुटोऽपवादः। आगमानुदात्तत्वे प्राप्ते,[१] ङित्त्वं तु लिङ एव विधीयते, तत्र तत्कार्याणां संभवाद्, नागमस्य। कुर्यात्, कुर्याताम्, कुर्युः। स्थानिवद्भावादेव लिङादेशस्य ङित्त्वे सिद्धे यासुटो ङिद्वचनं ज्ञापनार्थम्—लकाराश्रयङित्त्वमादेशानां न भवतीति। अचिनवम्। अकरवम्॥

## किदाशिषि ॥ १०४ ॥

आशिषि यो लिङ्, तस्य यासुडागमो भवति, स चोदात्तः किद्वद् भवति। प्रत्ययस्यैवेदं कित्त्वम्, नागमस्य, प्रयोजनाभावात्। ङित्त्वे प्राप्ते कित्त्वं विधीयते। गुणवृद्धि-प्रतिषेधस्तुल्यः, संप्रसारणं जागर्तेर्गुणे च विशेषः। उच्यात्, उच्यास्ताम्, उच्यासुः[२]। जागर्यात्, जागर्यास्ताम्, जागर्यासुः। आशिषीति किम्? वच्यात्। जागृयात्॥

## झस्य रन् ॥ १०५ ॥

लिङ इत्येव। झस्य लिङादेशस्य रन्नित्ययमादेशो भवति। झोऽन्तापवादः। पचेरन्। यजेरन्। कृषीरन्॥

---

१ – 'उदात्तवचनम्' इति शेषः। २ – 'इष्यात्, इष्यास्ताम्, इष्यासुः' इति पाठो मुद्रितेषु।

## इटोऽत् ॥ १०६ ॥

लिङादेशस्य इटोऽत् इत्ययमादेशो भवति। पचेय। यजेय। कृषीय। हृषीय। तकारस्येत्संज्ञाप्रतिषेधः प्राप्नोति—'न विभक्तौ तुस्माः' ( १.३.४ ) इति ? नैवायमादेशावयवस्तकारः। किं तर्हि ? मुखसुखार्थ उच्चार्यते। आगमस्येटो ग्रहणं न भवति, 'अर्थवद्ग्रहणे नानर्थकस्य' ( परि० १४ ) इति ॥

## सुट् तिथोः ॥ १०७ ॥

लिङ इत्येव। लिङ्संबन्धिनोस्तकारथकारयोः सुडागमो भवति। तकारथकारावागमिनौ, लिङ् तद्विशेषणम्। सीयुटस्तु लिङेवागमी। तेन भिन्नविषयत्वात् सुटा बाधनं न भवति। तकार इकार उच्चारणार्थः। कृषीष्ट, कृषीयास्ताम्। कृषीष्ठाः, कृषीयास्थाम् ॥

## झेर्जुस् ॥ १०८ ॥

लिङ इत्येव। लिङादेशस्य झेर्जुसादेशो भवति। झोऽन्तापवादः। पचेयुः। यजेयुः॥

## सिजभ्यस्तविदिभ्यश्च ॥ १०९ ॥

अलिङर्थ आरम्भः। सिचः परस्य, अभ्यस्तसंज्ञकेभ्यो वेत्तेश्चोत्तरस्य झेर्जुसादेशो भवति। अभ्यस्तविदिग्रहणमसिजर्थम्। ङित इति चानुवर्तते। सिचस्तावत्—अकार्षुः। अहार्षुः। अभ्यस्तात्—अबिभयुः। अजिह्रयुः। अजागरुः। विदेः—अविदुः॥

## आतः ॥ ११० ॥

सिज्ग्रहणमनुवर्तते। सिच आकारान्ताच्च परस्य झेर्जुसादेशो भवति। कथमाभ्यामानन्तर्यम्? सिचो लुकि कृते प्रत्ययलक्षणेन सिचोऽनन्तरः, श्रुत्या चाकारान्तादिति। अदुः। अधुः। अस्थुः। तकारो मुखसुखार्थः। पूर्वेणैव सिद्धे नियमार्थं वचनम्—आत एव सिज्लुगन्ताद्, नान्यस्मादिति। अभूवन्। प्रत्ययलक्षणेन जुस् प्राप्तः प्रतिषिध्यते, तुल्यजातीयापेक्षत्वाद् नियमस्य। श्रूयमाणे हि सिचि भवत्येव—अकार्षुः। अहार्षुः॥

## लङः शाकटायनस्यैव ॥ १११ ॥

आत इत्येव। आकारान्तादुत्तरस्य लङादेशस्य झेर्जुसादेशो भवति शाकटायनस्याचार्यस्य मतेन। अयुः। अवुः। अन्येषां मते—अयान्। अवान्[1]। ननु ङित इत्यनु-

---

१ - 'अवान्' इति नास्ति मुद्रितेपु।

वर्तते। अत्र लङेवाकारान्तादनन्तरो ङित् संभवति नान्यः, तत्किं लङ्ग्रहणेन ? एवं तर्हि लङेव यो लङ् विहितस्तस्य यथा स्यात् , लङ्वद्भावेन यस्तस्य मा भूत्—'लोटो लङ्वत्' ( ३.४.८५ ) इति। यान्तु। वान्तु। 'सिजभ्यस्तविदिभ्यश्च' ( ३.४.१०९ ) इत्ययमपि झेर्जुस् लोटो न भवति। बिभ्यतु। जाग्रतु। विदन्तु। जुस्भावमात्रं हि मुख्येन लङा विशेष्यते। एवकार उत्तरार्थः॥

## द्विषश्च ॥ ११२ ॥

लङः शाकटायनस्यैवेत्येव। द्विषः परस्य लङादेशस्य झेर्जुसादेशो भवति शाकटायनस्याचार्यस्य मतेन। अद्विषुः। अन्येषां मते—अद्विषन्॥

## तिङ्शित् सार्वधातुकम् ॥ ११३ ॥

तिङः शितश्च प्रत्ययाः सार्वधातुकसंज्ञा भवन्ति। भवति[१]। नयति। स्वपिति। रोदिति। पवमानः। यजमानः। सार्वधातुकप्रदेशाः—'सार्वधातुके यक्' ( ३.१.६७ ) इत्येवमादयः॥

## आर्धधातुकं शेषः ॥ ११४ ॥

तिङः शितश्च वर्जयित्वान्यः प्रत्ययः शेषो धातुसंशब्दनेन विहित आर्धधातुकसंज्ञो भवति। लविता। लवितुम्। लवितव्यम्। धातोरित्येव—वृक्षत्वम्, वृक्षतास्ति। लूभ्याम्, लूभिः। जुगुप्सते॥

## लिट् च ॥ ११५ ॥

लिडादेशस्तिङार्धधातुकसंज्ञो भवति। सार्वधातुकसंज्ञाया अपवादः। पेचिथ। शेकिथ। जग्ले। मम्ले। ननु चैकसंज्ञाधिकारादन्यत्र समावेशो भवति ? सत्यमेतत्। इह त्वेवकारोऽनुवर्तते, स नियमं करिष्यति॥

## लिङाशिषि ॥ ११६ ॥

आशिषि विषये यो लिङ्, स आर्धधातुकसंज्ञो भवति। सार्वधातुकसंज्ञाया अपवादः। समावेशश्चैवकारानुवृत्तेर्न भवति। लविषीष्ट। पविषीष्ट। आशिषीति किम् ? लुनीयात्। पुनीयात्॥

---

१ – 'तरति' इति पद०।

## छन्दस्युभयथा ॥ ११७ ॥

छन्दसि विषय उभयथा भवति, सार्वधातुकमार्धधातुकं च। किं लिङेवानन्तरः संबध्यते ? नैतदस्ति। सर्वमेव प्रकरणमपेक्ष्यैतदुच्यते। तिङ्शिदादि छन्दस्युभयथा भवति। वर्धन्तु त्वा सुष्टुतयः ( ऋ० ७.९९.७ )। आर्धधातुकत्वाण् णिलोपः। वर्धयन्त्विति प्राप्ते। शेषं च सार्वधातुकम्—स्वस्तये नावमिवारुहेम ( ऋ० १०.१७८.२ )। क्तिनः सार्वधातुकत्वादस्तेर्भूभावो न भवति। लिट् सार्वधातुकम्—ससवांसो विशृण्विरे ( ऋ० ४.८.६ )। इम इन्द्राय सुन्विरे ( ऋ० ७.३२.४ )। लिङ् उभयथा भवति—उप स्थेयाम शरणा बृहन्ता ( ऋ० ६.४७.८ )। सार्वधातुकत्वाल् लिङः सलोपः, आर्धधातुकत्वादेत्वम्। 'व्यत्ययो बहुलम्' ( ३.१.८५ ) इत्यस्यैवायं प्रपञ्चः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य चतुर्थः पादः॥



# ॥ चतुर्थाध्यायस्य प्रथमः पादः ॥

## ङ्याप्प्रातिपदिकात् ॥ १ ॥

अधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्याम आ पञ्चमाध्यायपरिसमाप्तेर्ङ्याप्प्रातिपदिकादित्येवं तद् वेदितव्यम्। स्वादिषु कप्पर्यन्तेषु प्रकृतिरधिक्रियते। ङीब्ङीष्ङीनां सामान्येन ग्रहणं ङीति, टाप्डाप्चापामाबिति, प्रातिपदिकमुक्तम् 'अर्थवद्०' (१.२.४५) 'कृत्तद्धितसमासाश्च' (१.२.४६) इति। तेषां समाहारनिर्देशो ङ्याप्प्रातिपदिकादिति। यद्यपि च प्रत्ययपरत्वेन पारिशेष्यादियमेव प्रकृतिर्लभ्यते, तथापि वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणप्रत्ययविधौ तत्संप्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं कर्तव्यम्। इतरथा हि समर्थविशेषणमेतत् स्यात्। अथ ङ्याब्ग्रहणं किम्, न 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' (परि० ७१) इत्येव सिद्धम्? नैतदस्ति। स्वरूपविधिविषये परिभाषेयम्—प्रातिपदिकस्वरूपग्रहणे सति लिङ्गविशिष्टग्रहणं भवतीति। तथा च 'युवा खलतिपलितवलिनजरतीभिः' (२.१.६७) इति ज्ञापकमस्यास्तादृशमेव। किं च, तदन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणम्—कालितरा, हरिणितरा, खट्वातरा, मालातरेति। विप्रतिषेधाद्धि तद्धितबलीयस्त्वं स्यात्॥

## स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्॥ २ ॥

ङ्याप्प्रातिपदिकादित्यधिकृतम्। ङ्याप्प्रातिपदिकात् स्वादयः प्रत्यया भवन्ति। उकारादयोऽनुबन्धा यथायोगमुच्चारणविशेषणार्थाः। औटष्टकारः सुडिति प्रत्याहारग्रहणार्थः। पकारः सुबिति प्रत्याहारार्थः। संख्या कर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरेण विहिताः, तेन सहास्यैकवाक्यता। ङ्यन्तात् तावत्—कुमारी। गौरी। शार्ङ्गरवी। ङीब्ङीष्ङीनां क्रमेणोदाहरणम्—कुमारी, कुमार्यौ, कुमार्यः। कुमारीम्, कुमार्यौ, कुमारीः। कुमार्या, कुमारीभ्याम्, कुमारीभिः। कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः। कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः। कुमार्याः, कुमार्योः, कुमारीणाम्। कुमार्याम्, कुमार्योः, कुमारीषु। एवं गौरी शार्ङ्गरवी चोदाहार्ये। आपः खल्वपि—खट्वा। बहुराजा। कारीषगन्ध्या। टाब्डाप्चापां क्रमेणोदाहरणम्—खट्वा, खट्वे, खट्वाः। खट्वाम्, खट्वे, खट्वाः। खट्वया, खट्वाभ्याम्, खट्वाभिः। खट्वायै, खट्वाभ्याम्, खट्वाभ्यः। खट्वायाः, खट्वाभ्याम्, खट्वाभ्यः। खट्वायाः, खट्वयोः, खट्वानाम्। खट्वायाम्, खट्वयोः, खट्वासु। एवं बहुराजाकारीषगन्ध्ये चोदाहार्ये। एवं प्रातिपदिकात्—दृषद्, दृषदौ, दृषदः। दृषदम्, दृषदौ, दृषदः। दृषदा, दृषद्भ्याम्, दृषद्भिः। दृषदे, दृषद्भ्याम्, दृषद्भ्यः। दृषदः, दृषद्भ्याम्, दृषद्भ्यः।

दृषदः, दृषदोः, दृषदाम्। दृषदि, दृषदोः, दृषत्सु॥

## स्त्रियाम् ॥ ३ ॥

अधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्यामः स्त्रियामित्येवं तद् वेदितव्यम्। 'ङ्याप्प्रातिपदिकात्' (४.१.१) इति सर्वाधिकारेऽपि प्रातिपदिकमात्रमत्र प्रकरणे संबध्यते, ङ्यापोरनेनैव विधानात्। स्त्रियामित्युच्यते। केयं स्त्री नाम ? सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा व्यक्तयः। क्वचिदाश्रयविशेषाभावादुपदेशव्यङ्ग्या एव भवन्ति, यथा ब्राह्मणत्वादयः। स्त्रीत्वं च प्रत्ययार्थः प्रकृत्यर्थविशेषणं चेत्युभयथापि युज्यते—स्त्रियामभिधेयायां स्त्रियां वा यत् प्रातिपदिकं वर्तत इति। वक्ष्यति—'अजाद्यतष्टाप्' (४.१.४)—अजा। देवदत्ता। स्त्रियामिति किम् ? अजः। देवदत्तः॥

## अजाद्यतष्टाप् ॥ ४ ॥

अजादिभ्यः प्रातिपदिकेभ्योऽकारान्ताच्च प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति। पकारः सामान्यग्रहणार्थः। टकारः सामान्यग्रहणाविघातार्थः। अजा। एडका। कोकिला। चटका। अश्वा। खट्वा। देवदत्ता। तपरकरणं तत्कालार्थम्। शुभंयाः, कीलालपाः ब्राह्मणी। 'हल्ङ्याब्भ्यः०' (६.१.६८) इति सुलोपः स्यात्। अजादिग्रहणं तु क्वचिद् जातिलक्षणे ङीषि प्राप्ते (४.१.६३), क्वचित् तु पुंयोगलक्षणे (४.१.४८), क्वचित् तु पुष्पफलोत्तरपदलक्षणे (४.१.६४), क्वचित् तु वयोलक्षणे (४.१.२०) ङीपि, क्वचित् टिल्लक्षणे (४.१.१५)। हलन्तानां त्वप्राप्त एव कस्मिंश्चिदाब् विधीयते। शूद्रा चामहत्पूर्वा जातिरिति पठ्यते। तस्यायमर्थः। शूद्रशब्दष्टापमुत्पादयति जातिश्चेद् भवति। शूद्रा। पुंयोगे ङीषैव भवितव्यम्। शूद्रस्य भार्या शूद्री। महत्पूर्वस्य प्रतिषेधः। महाशूद्री। महाशूद्रशब्दो ह्याभीरजातिवचनः, तत्र तदन्तविधिना टाप् प्राप्तः प्रतिषिध्यते। 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' (परि० ३१) इति कथं तदन्तविधिः ? एतदेव ज्ञापकम्—भवत्यस्मिन् प्रकरणे तदन्तविधिरिति। तेनातिधीवरी, अतिपीवरी, अतिभवती, अतिमहती इति भवति॥ अजा, एडका, चटका, अश्वा, मूषिकेति जातिः। बाला, होढा, पाका, वत्सा, मन्दा, विलातेति वयः। पूर्वापहाणा। अपरापहाणा। टित्, निपातनाण् णत्वम्। संभस्त्राजिनशणपिण्डेभ्यः फलात् (ग० सू० ३५)। संफला। भस्त्रफला। अजिनफला। शणफला। पिण्डफला। त्रिफला द्विगौ (ग० सू० ३६)। बहुव्रीहौ त्रिफली संहतिः। सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् (ग० सू० ३७)। सत्पुष्पा। प्राक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा। 'पाककर्ण०' (४.१.६४) इति ङीषोऽपवादः। शूद्रा चामहत्पूर्वा जातिः (ग० सू० ३८)। क्रुञ्चा। उष्णिहा। देवविशा हलन्ताः। ज्येष्ठा। कनिष्ठा। मध्यमा पुंयोगः। कोकिला जातिः। मूलान्नञः

( ग० सू० ३९ )। अमूला॥

## ऋन्नेभ्यो ङीप् ॥ ५ ॥

ऋकारान्तेभ्यो नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति। ङकारः सामान्यग्रहणार्थः[1]। कर्त्री। हर्त्री। दण्डिनी। छत्रिणी॥

## उगितश्च ॥ ६ ॥

उग् इद् यत्र संभवति यथाकथंचित् तदुगिच्छब्दरूपम्, तदन्तात् स्त्रियां ङीप् प्रत्ययो भवति। भवती। अतिभवती। पचन्ती। यजन्ती ॥ धातोरुगितः प्रतिषेधो वक्तव्यः॥ उखास्रत्। पर्णध्वत् ब्राह्मणी ॥ अञ्चतेश्चोपसंख्यानम्॥ प्राची। प्रतीची। उदीची॥

## वनो र च ॥ ७ ॥

वन्नन्तात् प्रातिपदिकाद् स्त्रियां ङीप् प्रत्ययो भवति, रेफश्चान्तादेशः। धीवरी। पीवरी। शर्वरी। परलोकदृश्वरी। 'ऋन्नेभ्यः०' ( ४.१.५ ) इत्येव ङीपि सिद्धे तत्सन्नियोगेन रेफविधानार्थं वचनम् ॥ वनो न हशः॥ प्राप्तौ ङीब्रावुभावपि प्रतिषिध्येते। सहयुध्वा ब्राह्मणी॥

## पादोऽन्यतरस्याम् ॥ ८ ॥

पाद इति कृतसमासान्तः पादशब्दो निर्दिश्यते। पादन्तात् प्रातिपदिकादन्यतरस्यां स्त्रियां ङीप् प्रत्ययो भवति। द्विपात्। द्विपदी। त्रिपात्। त्रिपदी। चतुष्पाद्। चतुष्पदी॥

## टाबृचि ॥ ९ ॥

पाद इत्येव। ऋचीत्यभिधेयनिर्देशः। ऋचि वाच्यायां पादन्तात् प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति। ङीपोऽपवादः। द्विपदा ऋक्। त्रिपदा ऋक्। चतुष्पदा ऋक्। ऋचीति किम् ? द्विपदी देवदत्ता॥

## न षट्स्वस्रादिभ्यः ॥ १० ॥

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति। यो यतः प्राप्नोति स सर्वः प्रतिषिध्यते। पञ्च ब्राह्मण्यः। सप्त। नव। दश। स्वस्रादिभ्यः— स्वसा। दुहिता। ननान्दा। याता। माता। तिस्रः। चतस्रः।

---

१ – ' पकारः सामान्यग्रहणाविघातार्थः ' इत्यधिकं बाल०।

षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात्।
प्रत्याहाराच्चापा सिद्धं दोषस्त्वित्त्वे तस्मान्नोभौ॥

## मनः ॥ ११ ॥

मन्नन्तात् प्रातिपदिकात् ङीप् प्रत्ययो न भवति। 'ऋन्नेभ्यो ङीप्' (४.१.५) इति ङीप् प्राप्तो मन इति सूत्रेण प्रतिषिध्यते। दामा, दामानौ, दामानः। पामा, पामानौ, पामानः। 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' (परि० १६)। सीमा, सीमानौ, सीमानः। अतिमहिमा, अतिमहिमानौ, अतिमहिमानः॥

## अनो बहुव्रीहेः ॥ १२ ॥

अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीप् प्रत्ययो न भवति। अनुपधालोपी बहुव्रीहिरिहोदाहरणम्। उपधालोपिनो हि विकल्पं वक्ष्यति। सुपर्वा, सुपर्वाणौ, सुपर्वाणः। सुचर्मा, सुचर्माणौ, सुचर्माणः। बहुव्रीहेरिति किम्? अतिक्रान्ता राजानम् अतिराज्ञी[१]॥

## डाबुभाभ्यामन्यतरस्याम् ॥ १३ ॥

डाप् प्रत्ययो भवत्युभाभ्यां मन्नन्तात् प्रातिपदिकादनन्ताच्च बहुव्रीहेरन्यतरस्याम्। पामा, पामे, पामाः। सीमा, सीमे, सीमाः। न च भवति—पामानः। सीमानः। बहुव्रीहौ—बहुराजा, बहुराजे, बहुराजाः। बहुतक्षा, बहुतक्षे, बहुतक्षाः। न च भवति—बहुराजानः। बहुतक्षाणः। अन्यतरस्यांग्रहणं किमर्थम्? बहुव्रीहौ 'वनो र च' (४.१.७) इत्यस्यापि विकल्पो यथा स्यात्। बहुधीवा, बहुधीवरी। बहुपीवा, बहुपीवरी॥

## अनुपसर्जनात् ॥ १४ ॥

अधिकारोऽयम्। उत्तरसूत्रेषूपसर्जनप्रतिषेधं करोति। यदित ऊर्ध्वमनुक्रमिष्यामोऽनुपसर्जनादित्येवं तद् वेदितव्यम्। वक्ष्यति—'टिड्ढाणञ्०' (४.१.१५) इति ङीप्। कुरुचरी। मद्रचरी। अनुपसर्जनादिति किम्? बहुकुरुचरा, बहुमद्रचरा मधुरा। 'जातेः०' (४.१.६३) इति ङीष्। कुक्कुटी। शूकरी। अनुपसर्जनादिति किम्? बहुकुक्कुटा, बहुशूकरा मधुरा। कथं पुनरुपसर्जनात् प्रत्ययप्रसङ्गः? तदन्तविधिना। ज्ञापितं (४.१.४) चैतद्—अस्त्यत्र प्रकरणे तदन्तविधिरिति। तथा च प्रधानेन तदन्तविधिर्भवति। कुम्भकारी। नगरकारी। न चाणिति कृद्ग्रहणम्, तद्धितोऽप्यणस्ति॥

---

१ – 'अतिराजी' इति मुद्रितेषु। टजभावः, समासान्तविधेरनित्यत्वादिति हरदत्तः।

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम् ॥ १५ ॥

अत इति सर्वत्रानुवर्तते। तत् सति संभवे विशेषणं भवति। टिदादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति। टापोऽपवादः। टितस्तावत्—कुरुचरी। मद्रचरी। इह कस्माद् न भवति—पचमाना यजमाना ? द्व्यनुबन्धकत्वाल् लटः। ल्युडादिषु कथम् ? टित्करणसामर्थ्यात्। इतरत्र तु टेरेत्वं फलम्। पठिता विद्येति ? आगमटित्त्वमनिमित्तम्, ट्युट्युलौ तुट् च ( ४.३.२३ ) इति लिङ्गात्। ढ—सौपर्णेयी। वैनतेयी। निरनुबन्धको ढशब्दः स्त्रियां नास्तीति निरनुबन्धकपरिभाषा ( परि० ८१ ) न प्रवर्तते। अण्—कुम्भकारी। नगरकारी। औपगवी। 'णेऽपि क्वचिदणूकृतं कार्यं भवति' ( परि० ८७ )। चौरी, तापसी। दाण्डा, मौष्टेत्यत्र न भवति। अञ्—औत्सी। औदपानी। 'शार्ङ्गरवाद्यञः०' ( ४.१.७३ ) इति पुनरञो ग्रहणं जातिलक्षणं ङीषं बाधितुम्। द्वयसच्—ऊरुद्वयसी। जानुद्वयसी। दघ्नच्—ऊरुदघ्नी। जानुदघ्नी। मात्रच्—ऊरुमात्री। जानुमात्री। तयप्—पञ्चतयी। दशतयी। ठक्—आक्षिकी। शालाकिकी। ठञ्—लावणिकी। ठक्ठञोर्भेदेन ग्रहणं ठनादिनिवृत्त्यर्थम्। कञ्—यादृशी। तादृशी। क्वरप्—इत्वरी। नश्वरी। ख्युन्—आढ्यंकरणी। सुभगंकरणी ॥ नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ॥ स्त्रैणी। पौंस्नी। शाक्तीकी। याष्टीकी। तरुणी। तलुनी ॥

## यञश्च ॥ १६ ॥

ङीबित्येव। यञन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति। गार्गी। वात्सी ॥ आपत्यग्रहणं कर्तव्यम् ॥ इह मा भूत्—'द्वीपादनुसमुद्रं यञ्' ( ४.३.१० )—द्वैप्या। योगविभाग उत्तरार्थः ॥

## प्राचां ष्फ तद्धितः ॥ १७ ॥

यञ इत्येव। प्राचामाचार्याणां मतेन यञन्तात् स्त्रियां ष्फः प्रत्ययो भवति, स च तद्धितसंज्ञः। षकारो ङीषर्थः। प्रत्ययद्वयेनेह स्त्रीत्वं व्यज्यते। तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम्। गार्ग्यायणी। वात्स्यायनी। अन्येषाम्—गार्गी। वात्सी। सर्वत्रग्रहणमुत्तरसूत्रादिहापकृष्यते, बाधकबाधनार्थम्। 'आवट्याच्च०' ( ४.१.७५ ) चापं वक्ष्यति, तमपि बाधित्वा प्राचां ष्फ एव यथा स्यात्। आवट्यायनी ॥

## सर्वत्र लोहितादिकतन्तेभ्यः ॥ १८ ॥

यञ इत्येव। पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम्। सर्वत्र लोहितादिभ्यः कतपर्यन्तेभ्यो यञन्तेभ्यः स्त्रियां ष्फः प्रत्ययो भवति। कतशब्दः स्वतन्त्रं यत् प्रातिपदिकं तदवधित्वेन

परिगृह्यते कपिशब्दात् परः कपि कतेति, न प्रातिपदिकावयवः कुरुकतेति। लौहित्यायनी। शांसित्यायनी। बाभ्रव्यायणी।

कण्वात् तु शकलः पूर्वः कतादुत्तर इष्यते।
पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम्॥

प्रातिपदिकेष्वन्यथा पाठः, स एवं व्यवस्थापयितव्य इति मन्यते। कतन्तेभ्य इति बहुव्रीहितत्पुरुषयोरेकशेषः, तथा 'कण्वादिभ्यो गोत्रे' ( ४.२.१११ ) इति। तत्र तत्पुरुष-वृत्त्या संगृहीतो मध्यपाती शकलशब्दो यञन्तः प्रत्ययद्वयमपि प्रतिपद्यते। शाकल्यायनी। शाकल्यस्येमे छात्राः शाकलाः॥

## कौरव्यमाण्डूकाभ्यां च ॥ १९ ॥

कौरव्य माण्डूक इत्येताभ्यां स्त्रियां ष्फः प्रत्ययो भवति। कुर्वादिभ्यो ण्ये ( ४.१.१५१ ) कृते 'ढक् च मण्डूकात्' ( ४.१.११९ ) इत्यणि च। यथाक्रमं टाब्ङीपोरपवादः। कौरव्यायणी। माण्डूकायनी। कथं कौरवी सेना ? 'तस्येदं'-( ४.३.१२० )-विवक्षायामणि कृते भविष्यति ॥ कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम्॥ आसुरायणी। शैषिकेष्वर्थेषु 'इञश्च' ( ४.२.११२ ) इत्यणि प्राप्ते छप्रत्यय इष्यते। आसुरीयः कल्पः॥

## वयसि प्रथमे ॥ २० ॥

कालकृतशरीरावस्था यौवनादिर्वयः। प्रथमे वयसि यत् प्रातिपदिकं श्रुत्या वर्तते, ततः स्त्रियां ङीप् प्रत्ययो भवति। कुमारी। किशोरी। बर्करी। प्रथम इति किम् ? स्थविरा। वृद्धा। अत इत्येव - शिशुः ॥ वयस्यचरम इति वक्तव्यम्॥ वधूटी। चिरण्टी। द्वितीयवयोवचनावेतौ। प्राप्तयौवना स्त्र्यभिधीयते। कथं कन्या ? 'कन्यायाः कनीन च' ( ४.१.११६ ) इति ज्ञापकात्। उत्तानशया लोहितपादिकेति ? नैता वयःश्रुतयः॥

## द्विगोः ॥ २१ ॥

द्विगुसंज्ञकात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति। पञ्चपूली। दशपूली। कथं त्रिफला ? अजादिषु दृश्यते॥

## अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ २२ ॥

पूर्वेण ङीप् प्राप्तः प्रतिषिध्यते। अपरिमाणान्ताद् द्विगोर्बिस्ताचितकम्बल्यान्तात् च तद्धितलुकि सति ङीप् प्रत्ययो न भवति। बिस्तादीनां परिमाणार्थं ग्रहणम्। सर्वतो

मानं परिमाणम्। अपरिमाणान्तात् तावत्—पञ्चभिरश्वैः क्रीता पञ्चाश्वा। दशाश्वा। कालः संख्या च न परिमाणम्। द्विवर्षा। त्रिवर्षा। द्वाभ्यां शताभ्यां क्रीता द्विशता। त्रिशता। बिस्तादिभ्यः—द्विबिस्ता। त्रिबिस्ता। द्व्याचिता। त्र्याचिता। द्विकम्बल्या। त्रिकम्बल्या। अपरिमाणेति किम्? द्व्याढकी। त्र्याढकी। तद्धितलुकीति किम्? समाहारे—पञ्चाश्वी। दशाश्वी॥

## काण्डान्तात् क्षेत्रे ॥ २३ ॥

काण्डशब्दान्ताद् द्विगोस्तद्धितलुकि सति क्षेत्रे वाच्ये ङीप् प्रत्ययो न भवति। द्वे काण्डे प्रमाणमस्याः क्षेत्रभक्तेः। 'प्रमाणे द्वयसज्०' (५.२.३७) इति विहितस्य तद्धितस्य 'प्रमाणे लो द्विगोर्नित्यम्' (वा० ५.२.३७) इति लुकि कृते, द्विकाण्डा क्षेत्रभक्तिः। त्रिकाण्डा क्षेत्रभक्तिः। काण्डशब्दस्यापरिमाणवाचित्वात् पूर्वेणैव प्रतिषेधे सिद्धे क्षेत्रे नियमार्थं वचनम्। इह मा भूत्—द्विकाण्डी रज्जुस्त्रिकाण्डी रज्जुरिति। प्रमाणविशेषः काण्डम्॥

## पुरुषात् प्रमाणेऽन्यतरस्याम् ॥ २४ ॥

द्विगोस्तद्धितलुकीत्येव। प्रमाणे यः पुरुषशब्दः, तदन्ताद् द्विगोस्तद्धितलुकि सत्यन्यतरस्यां न ङीप् प्रत्ययो भवति। द्वौ पुरुषौ प्रमाणमस्याः परिखायाः द्विपुरुषा, द्विपुरुषी। त्रिपुरुषा, त्रिपुरुषी। अपरिमाणान्तत्वाद् नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। प्रमाण इति किम्? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा। त्रिपुरुषा। तद्धितलुकीत्येव—समाहारे—द्विपुरुषी, त्रिपुरुषी॥

## बहुव्रीहेरूधसो ङीष् ॥ २५ ॥

ऊधस्शब्दान्ताद् बहुव्रीहेः स्त्रियां ङीष् प्रत्ययो भवति। 'ऊधसोऽनङ्' (५.४.१३१) इति समासान्ते कृते 'अनो बहुव्रीहेः' (४.१.१२) इति डाप्प्रतिषेधयोः प्राप्तयोरिदमुच्यते। घटोध्नी। कुण्डोध्नी। बहुव्रीहेरिति किम्? प्राप्ता ऊधः प्राप्तोधाः। 'अन उपधालोपिनः०' (४.१.२८) इत्यस्यापि ङीपोऽयमुत्तरत्रानुवृत्तेर्बाधक इष्यते। समासान्तश्च स्त्रियामेव। इह न भवति—महोधाः पर्जन्य इति॥

## संख्याव्ययादेर्ङीप् ॥ २६ ॥

पूर्वेण ङीषि प्राप्ते ङीब् विधीयते। संख्यादेरव्ययादेश्च बहुव्रीहेरूधःशब्दान्ताद् ङीप् प्रत्ययो भवति। संख्यादेस्तावत्—द्व्यूध्नी। त्र्यूध्नी। अव्ययादेः—अत्यूध्नी। निरूध्नी। आदिग्रहणं किम्? द्विविधोध्नी। त्रिविधोध्नीत्यत्रापि यथा स्यात्॥

## दामहायनान्ताच्च ॥ २७ ॥

ऊधस इति निवृत्तम्। संख्याग्रहणमनुवर्तते, नाव्ययग्रहणम्। संख्यादेर्बहुव्रीहेर्दामशब्दान्ताद् हायनशब्दान्तात् च स्त्रियां ङीप् प्रत्ययो भवति। दामान्तात् डाप्प्रतिषेधविकल्पेषु प्राप्तेषु नित्यार्थं वचनम्। द्विदाम्नी। त्रिदाम्नी। हायनान्तात् टापि प्राप्ते, द्विहायनी। त्रिहायणी। चतुर्हायणी ॥ हायनो वयसि स्मृतः ॥ तेनेह न भवति—द्विहायना शाला। त्रिहायना। चतुर्हायना। 'णत्वमपि त्रिचतुर्भ्यां हायनस्येति वयस्येव स्मर्यते' ( महाभाष्य २.२१३ )॥

## अन उपधालोपिनोऽन्यतरस्याम् ॥ २८ ॥

बहुव्रीहेरित्येव। अन्नन्तो यो बहुव्रीहिरुपधालोपी, तस्मादन्यतरस्यां ङीप् प्रत्ययो भवति। ङीपा मुक्ते डाप्प्रतिषेधौ भवतः। किमर्थं तर्हीदमुच्यते, ननु सिद्धा एव डाप्प्रतिषेधङीपः? अनुपधालोपिनो ङीप्प्रतिषेधार्थं वचनम्। बहुराजा। बहुराज्ञी। बहुराजे। बहुतक्षा। बहुतक्ष्णी। बहुतक्षे। अन इति किम् ? बहुमत्स्या। उपधालोपिन इति किम्? सुपर्वा, सुपर्वे, सुपर्वाः। सुपर्वाणौ, सुपर्वाणः। डाप्प्रतिषेधावेवात्र भवतः॥

## नित्यं संज्ञाछन्दसोः ॥ २९ ॥

अन्नन्ताद् बहुव्रीहेरुपधालोपिनः संज्ञायां विषये छन्दसि च नित्यं ङीप् प्रत्ययो भवति। विकल्पस्यापवादः। सुराज्ञी। अतिराज्ञी नाम ग्रामः। छन्दसि—गौः पञ्चदाम्नी। एकदाम्नी। द्विदाम्नी। एकमूर्ध्नी ( शौ० सं० ८.९.१५ )। समानमूर्ध्नी ( तै० सं० ४.३.११.४ )॥

## केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ३० ॥

संज्ञाछन्दसोरित्येव। केवलादिभ्यः प्रातिपदिकेभ्यः संज्ञायां छन्दसि विषये स्त्रियां ङीप् प्रत्ययो भवति। केवली ( पै० सं० १६.२०.१ )। केवलेति भाषायाम्। मामकी ( पै० सं० ६.६.८ )। मामिकेति भाषायाम्। मित्रावरुणयोर्भागधेयीः स्थ ( तै० सं० १.३.१२.१ )। भागधेयेति भाषायाम्। सा पापीं ( मै० सं० ४.२.१४ )। पापेति भाषायाम्। उताऽपरीभ्यो मघवा विजिग्ये ( ऋ० १.३२.१३ )। अपरेति भाषायाम्। समानी ( ऋ० १०.१९१.३ ) प्रवाणी। समानेति भाषायाम्। आर्यकृती ( मै० सं० १.८.३ )। आर्यकृतेति भाषायाम्। सुमङ्गली ( ऋ० १०.८५.३३ )। सुमङ्गलेति भाषायाम्। भेषजी ( तै० सं० ४.५.१०.१ )। भेषजेति भाषायाम्॥

## रात्रेश्चाजसौ ॥ ३१ ॥

जस्विषयादन्यत्र संज्ञायां छन्दसि च रात्रिशब्दाद् ङीप् प्रत्ययो भवति। या रात्री सृष्टा। रात्रीभिः ( ऋ० १०.१०.९ )। अजसाविति किम् ? यास्ता रात्रयः ॥ अजसादिष्विति वक्तव्यम् ॥ रात्रिं सहोषित्वा। कथं तिमिरपटलैरवगुण्ठिताश्च रात्र्यः? ङीषयं बह्वादिलक्षणः। तत्र हि पठ्यते 'कृदिकारादक्तिनः' ( ग० सू० ४९ ) 'सर्वतोऽक्तिन्नर्थादित्येके' ( ग० सू० ५० ) इति ॥

## अन्तर्वत्पतिवतोर्नुक् ॥ ३२ ॥

प्रकृतिर्निपात्यते, नुगागमस्तु विधीयते। अन्तर्वत्पतिवतोर्नुग् भवति ङीप् च प्रत्ययः, स तु नकारान्तत्वादेव सिद्धः। निपातनसामर्थ्यात् च विशेषे वृत्तिर्भवति। अन्तर्वत् पतिवदिति गर्भभर्तृसंयोगे। इह न भवति—अन्तरस्यां शालायां विद्यते, पतिमती पृथिवी। अन्तर्वदिति मतुब् निपात्यते, वत्वं सिद्धम्। पतिवदिति वत्वं निपात्यते, मतुप् सिद्धः। अन्तर्वत्नी गर्भिणी। पतिवत्नी जीवपतिः[1]।

अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात्।
गर्भिण्यां जीवपत्यां[1] च वा छन्दसि तु नुग्विधिः॥

सान्तर्वत्नी ( मै० सं० ४.२.९ ) देवानुपैत्। सान्तर्वती देवान् ( काठ० सं० ८.१० ) उपैत्। पतिवत्नी तरुणवत्सा। पतिवती तरुणवत्सा ॥

## पत्युर्नो यज्ञसंयोगे ॥ ३३ ॥

पतिशब्दस्य नकारादेशः स्त्रियां विधीयते, ङीप् प्रत्ययस्तु नकारान्तत्वादेव सिद्धः, यज्ञसंयोगे। यज्ञेन संयोगो यज्ञसंयोगः। तत्साधनत्वात् फलग्रहीतृत्वाद् वा यजमानस्य पत्नी। पत्नि वाचं यच्छ। यज्ञसंयोग इति किम् ? ग्रामस्य पतिरियं ब्राह्मणी। कथं वृषलस्य पत्नी ? उपमानाद् भविष्यति ॥

## विभाषा सपूर्वस्य ॥ ३४ ॥

पत्युर्न इति वर्तते। पतिशब्दान्तस्य प्रातिपदिकस्य सपूर्वस्यानुपसर्जनस्य स्त्रियां विभाषा नकारादेशो भवति, ङीप् तु लभ्यत एव। वृद्धपत्नी, वृद्धपतिः। स्थूलपत्नी, स्थूलपतिः। अप्राप्तविभाषेयमयज्ञसंयोगत्वात्। सपूर्वस्येति किम् ? पतिरियं ब्राह्मणी ग्रामस्य ॥

---

१ – 'जीवत्प०' इति बाल०।

## नित्यं सपत्न्यादिषु ॥ ३५ ॥

सपत्न्यादिषु नित्यं पत्युर्नकारादेशो भवति, ङीप् तु लभ्यत एव। पूर्वेण विकल्पे प्राप्ते वचनम्। नित्यग्रहणं विस्पष्टार्थम्। समानः पतिरस्याः सपत्नी। एकपत्नी। समानादिष्विति वक्तव्ये समानस्य सभावार्थं वचनम्॥ समान। एक। वीर। पिण्ड। भ्रातृ। पुत्र। दासाच्छन्दसि (ग० सू० ४०)॥

## पूतक्रतोरै च ॥ ३६ ॥

पूतक्रतुशब्दस्य स्त्रियामैकारश्चान्तादेशो भवति, ङीप् प्रत्ययः। पूतक्रतोः स्त्री पूतक्रतायी। त्रय एते योगाः पुंयोगप्रकरणे द्रष्टव्याः। यया हि पूताः क्रतवः पूतक्रतुः सा भवति॥

## वृषाकप्यग्निकुसितकुसीदानामुदात्तः ॥ ३७ ॥

वृषाकप्यादीनामुदात्त ऐकारादेशो भवति स्त्रियाम्, ङीप् च प्रत्ययः। वृषाकपिशब्दो मध्योदात्त उदात्तत्वं प्रयोजयति। अग्न्यादिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धम्। वृषाकपेः स्त्री वृषाकपायीं। अग्नायीं। कुसितायीं। कुसीदायीं[1]। पुंयोग इत्येव—वृषाकपिः स्त्री॥

## मनोरौ वा ॥ ३८ ॥

ऐ उदात्त इति वर्तते। मनुशब्दात् स्त्रियां ङीप् प्रत्ययो भवति, औकारश्चान्तादेशः, ऐकारश्चोदात्तः। वाग्रहणेन द्वावपि विकल्प्येते। तेन त्रैरूप्यं भवति। मनोः स्त्री मनायी (मै० सं० १.८.६)। मनावीं (काठ० सं० ३०.१)। मनुः। मनुशब्द आद्युदात्तः॥

## वर्णादनुदात्तात्तोपधात्तो नः ॥ ३९ ॥

वेति वर्तते। वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात् तकारोपधाद् वा ङीप् प्रत्ययो भवति, तकारस्य नकारादेशो भवति। एनीं, एतां। श्येनीं, श्येतां। हरिंणी, हरिंता। सर्व एत आद्युदात्ताः, 'वर्णानां तणतिनितान्तानाम्' (फि० सू० २.१०) इति वचनात्। वर्णादिति किम्? प्रकृंता। प्ररुंता। गतिस्वरेणाद्युदात्तः। अनुदात्तादिति किम्? श्वेता। घृतादित्वाद् (फि० सू० १.२१) अन्तोदात्तः। तोपधादिति किम्? अन्यतो ङीषं वक्ष्यति। अत इत्येव—शितिर्ब्राह्मणी ॥ पिशङ्गादुपसंख्यानम् ॥ पिशङ्गी ॥ असितपलितयोः प्रतिषेधः॥ असिता। पलिता ॥ छन्दसि क्नमित्येके॥

---

१ – 'कुसिदायीं' इति है०। सूत्रे खल्वपि तथैव।

असिंक्नी ( शौ० सं० १.२३.१ )। पलिंक्नी ( ऋ० ५.२.४ )। भाषायामपीष्यते। गतो गणस्तूर्णमसिक्निकानाम् ॥

## अन्यतो ङीष् ॥ ४० ॥

वेति निवृत्तम्। वर्णादनुदात्तादिति वर्तते, तोपधापेक्षमन्यत्वम्। वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात् स्त्रियां ङीष् प्रत्ययो भवति। स्वरे विशेषः। सारङ्गी। कुल्माषी। शबली। वर्णादित्येव—खट्वा। अनुदात्तादित्येव—कृष्णा। कपिला ॥

## षिद्गौरादिभ्यश्च ॥ ४१ ॥

ङीषनुवर्तते। षिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियां ङीष् प्रत्ययो भवति। 'शिल्पिनि ष्वुन्' ( ३.१.१४५ )—नर्तकी। खनकी। रजकी। गौरादिभ्यः—गौरी। मत्सी॥ गौर। मत्स्य। मनुष्य। शृङ्ग। हय। गवय। मुकय। ऋष्य। पुट। द्रुण। द्रोण। हरिण। कण। पटर। उकण। आमलक। कुवल। बदर। बिम्ब। तर्कार। शर्कार। पुष्कर। शिखण्ड। सुषम। सलन्द। गडुज। आनन्द। सृपाट। सृगेठ। आढक। शष्कुल। सूर्म। सुब। सूर्य। पूष। मूष। घातक। सकलूक। सल्लक। मालक। मालत। साल्वक। वेतस। अतस। पृस। मह। मठ। छेद। श्वन्। तक्षन्। अनडुही। अनड्वाही। एषणः करणे ( ग० सू० ४१ )। देह। काकादन। गवादन। तेजन। रजन। लवण। पान। मेध। गौतम। आयस्थूण। भौरि। भौलिकि। भौलिङ्गि। औद्गाहमानि। आलिङ्गि। आपिच्छिक। आरट। टोट। नट। नाट। मलाट। शातन। पातन। सवन। आस्तरण। अधिकरण। एत। अधिकार। आग्रहायणी। प्रत्यवरोहिणी। सेवन। सुमङ्गलात् संज्ञायाम् ( ग० सू० ४२ )। सुन्दर। मण्डल। पिण्ड। विटक। कुर्द। गूर्द। पट। पाण्ट। लोफाण्ट। कन्दर। कन्दल। तरुण। तलुन। बृहत्। महत्। सौधर्म। रोहिणी नक्षत्रे ( ग० सू० ४३ )। रेवती नक्षत्रे ( ग० सू० ४४ )। विकल। निष्फल। पुष्कल। कटाच्छ्रोणिवचने ( ग० सू० ४५ )। पिप्पल्यादयश्च ( ग० सू० ४६)। पिप्पली। हरीतकी। कोशातकी। शमी। करीरी। पृथिवी। क्रोष्ट्री। मातामह। पितामह। 'मातामहपितामहयोर्मातरि षिच् च' ( महाभाष्य वा० ४.२.३६ ) इति षित्त्वादेव सिद्धे ज्ञापनार्थं वचनम्—अनित्यः षिल्लक्षणो ङीषिति। तेन दंष्ट्रेत्युपपन्नं भवति ॥

## जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ ४२ ॥

जानपदादिभ्य एकादशभ्यः प्रातिपदिकेभ्य एकादशसु वृत्त्यादिष्वर्थेषु यथासंख्यं ङीष् प्रत्ययो भवति। जानपदी भवति वृत्तिश्चेत्। जानपदी अन्या। स्वरे विशेषः। उत्सादिपाठादञि कृते ङीप्, आद्युदात्तत्वं भवति। कुण्डी भवति, अमत्रं चेत्। कुण्डान्या। गोणी भवति, आवपनं चेत्। गोणान्या। स्थली भवति, अकृत्रिमा चेत्। स्थलान्या। भाजी भवति, श्राणा चेत्। पक्वेत्यर्थः। भाजान्या। नागी भवति, स्थौल्यं चेत्। नागान्या। नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुण एव टापम्। जातिवचनात् तु जातिलक्षणो ङीषेव भवति। नागी। काली भवति, वर्णश्चेत्। कालान्या। नीली भवति, अनाच्छादनं चेत्। नीलान्या। न च सर्वस्मिन्नाच्छादन इष्यते। किं तर्हि? नीलादोषधौ, प्राणिनि च। नीली ओषधिः। नीली गौः। नीली वडवा। संज्ञायां वा। नीली, नीला। कुशी भवति, अयोविकारश्चेत्। कुशान्या। कामुकी भवति, मैथुनेच्छा चेत्। कामुकान्या। मैथुनेच्छावती भण्यते, नेच्छामात्रम्। कबरी भवति, केशवेशश्चेत्। कबरान्या॥

## शोणात् प्राचाम् ॥ ४३ ॥

शोणशब्दात् प्राचामाचार्याणां मतेन स्त्रियां ङीष् प्रत्ययो भवति। शोणी, शोणा वडवा॥

## वोतो गुणवचनात् ॥ ४४ ॥

गुणमुक्तवान् गुणवचनः। गुणवचनात् प्रातिपदिकाद् उकारान्तात् स्त्रियां वा ङीष् प्रत्ययो भवति। पट्वी, पटुः। मृद्वी, मृदुः। उत इति किम्? शुचिरियं ब्राह्मणी। गुणवचनादिति किम्? आखुः॥ वसुशब्दाद् गुणवचनाद् ङीबाद्युदात्तार्थम्॥ वस्वीं ॥ खरुसंयोगोपधात् प्रतिषेधो वक्तव्यः॥ खरुरियं ब्राह्मणी। पाण्डुरियं ब्राह्मणी।

सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥

## बह्वादिभ्यश्च ॥ ४५ ॥

बहु इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति। बह्वी, बहुः॥ बहु। पद्धति। अङ्कति। अञ्चति। अंहति। वंहति। शकटि। शक्तिः शस्त्रे (ग० सू० ४७)। शारि। वारि। गति। अहि। कपि। मुनि। यष्टि। इतः प्राण्यङ्गात् (ग० सू० ४८)। कृदिकारादक्तिनः (ग० सू० ४९)। सर्वतोऽक्तिन्नर्थादित्येके (ग० सू० ५०)। चण्ड। अराल। कमल। कृपाण। विकट। विशाल। विशङ्कट। भरुज।

ध्वज। चन्द्रभागाद् नद्याम् ( ग० सू० ५१ )। कल्याण। उदार। पुराण। अहन्। बहुशब्दो गुणवचन एव। तस्येह पाठ उत्तरार्थः॥

## नित्यं छन्दसि ॥ ४६ ॥

बह्वादिभ्यश्छन्दसि विषये नित्यं स्त्रियां ङीष् प्रत्ययो भवति। बह्वीषु हित्वा प्रपिबन्। बह्वी नाम ओषधी भवति। नित्यग्रहणमुत्तरार्थम्॥

## भुवश्च ॥ ४७ ॥

छन्दसि विषये स्त्रियां भुवो नित्यं ङीष् प्रत्ययो भवति। वि॒भ्वी ( ऋ०५.३८.१ ) च। प्र॒भ्वी ( ऋ० १.१८८.५ ) च। संभ्वी च। इह कस्माद् न भवति—स्वयम्भूः ? उत इति तपरकरणमनुवर्तते। ह्रस्वादेवेयं पञ्चमी। भुव इति सौत्रो निर्देशः॥

## पुंयोगादाख्यायाम् ॥ ४८ ॥

पुंसा योगः पुंयोगः। पुंयोगात् हेतोर्यत् प्रातिपदिकं स्त्रियां वर्तते पुंस आख्याभूतम्, तस्माद् ङीष् प्रत्ययो भवति। गणकस्य स्त्री गणकी। महामात्री। प्रष्ठी। प्रचरी। पुंसि शब्दप्रवृत्तिनिमित्तस्य संभवात् पुंशब्दा एते, तद्योगात् स्त्रियां वर्तन्ते। पुंयोगादिति किम्? देवदत्ता। यज्ञदत्ता। आख्याग्रहणं किम् ? परिसृष्टा। प्रजाता। पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते, न तु पुमांसमाचक्षते ॥ गोपालिकादीनां प्रतिषेधः॥ गोपालकस्य स्त्री गोपालिका ॥ सूर्याद् देवतायां चाब् वक्तव्यः॥ सूर्यस्य स्त्री देवता सूर्या। देवतायामिति किम् ? सूरी॥

## इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ४९ ॥

इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति, आनुक् चागमः। येषामत्र पुंयोग एवेष्यते, तेषामानुगागममात्रं विधीयते। प्रत्ययस्तु पूर्वेणैव सिद्धः। अन्येषां तूभयं विधीयते। इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी ॥ हिमारण्ययोर्महत्त्वे ॥ महद्धिमं हिमानी। महदरण्यमरण्यानी ॥ यवाद् दोषे ॥ दुष्टो यवो यवानी ॥ यवनाल्लिप्याम्॥ यवनानी लिपिः ॥ उपाध्यायमातुलाभ्यां वा ॥ उपाध्यायी, उपाध्यायानी। मातुली, मातुलानी ॥ आचार्यादणत्वं च ॥ आचार्यानी[1]। ॥ अर्यक्षत्रियाभ्यां वा ॥ अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया। विना पुंयोगेन स्वार्थ एवायं विधिः। पुंयोगे तु ङीषैव भवितव्यम्। अर्यी। क्षत्रियी ॥ मुद्गलाच्छन्दसि लिच्च॥ र॒थीर॑भून्मुद्ग॒लानी॒ गवि॑ष्टौ ( ऋ० १०.१०२.२ )॥

---

१ – ' आचार्या ' इत्यधिकः पाठो मुद्रितेषु । स त्वयुक्तः ।

## क्रीतात् करणपूर्वात् ॥ ५० ॥

करणं पूर्वमस्मिन्निति करणपूर्वं प्रातिपदिकम्। क्रीतशब्दान्तात् प्रातिपदिकात् करणपूर्वात् स्त्रियां ङीष् प्रत्ययो भवति। वस्त्रेण क्रीयते सा वस्त्रक्रीती। वसनक्रीती। करणपूर्वादिति किम्? सुक्रीता। दुष्क्रीता। इह कस्माद् न भवति—सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसीति? टाबन्तेन समासः। अत इति चानुवर्तते। 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' ( परि० ७५ ) इति बहुलं तदुच्यते, 'कर्तृकरणे कृता बहुलम्' ( २.१.३२ ) इति ॥

## क्तादल्पाख्यायाम् ॥ ५१ ॥

करणपूर्वादित्येव। करणपूर्वात् प्रातिपदिकात् क्तान्तादल्पाख्यायां ङीष् प्रत्ययो भवति। अल्पाख्यायामिति समुदायोपाधिः। अभ्रविलिप्ती द्यौः। सूपविलिप्ती पात्री। अल्पसूपेत्यर्थः। अल्पाख्यायामिति किम्? चन्दनानुलिप्ता ब्राह्मणी ॥

## बहुव्रीहेश्चान्तोदात्तात् ॥ ५२ ॥

क्तादित्येव। बहुव्रीहिर्योऽन्तोदात्तः, तस्मात् स्त्रियां ङीष् प्रत्ययो भवति। स्वाङ्गपूर्वपदो बहुव्रीहिरिहोदाहरणम्। 'अस्वाङ्गपूर्वपदाद्०' ( ४.१.५३ ) विकल्पं वक्ष्यति। शङ्खभिन्नी। ऊरुभिन्नी। गलोत्कृत्ती। केशलूनी। बहुव्रीहेरिति किम्? पादपतिता ॥ अन्तोदात्ताज्जातप्रतिषेधः ॥ दन्तजाता। स्तनजाता ॥ पाणिगृहीत्यादीनामर्थविशेषे ॥ पाणिगृहीती भार्या। यस्यास्तु कथंचित् पाणिर्गृह्यते पाणिगृहीता सा भवति ॥ अबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम् ॥ बहुकृता। नञ्—अकृता। सु—सुकृता। काल—मासजाता। संवत्सरजाता। सुखादिः—सुखजाता। दुःखजाता। 'जातिकालसुखादिभ्योऽनाच्छादनात्०' ( ६.२.१७० ) इत्येवमादिना बहुव्रीहेरन्तोदात्तत्वम् ॥

## अस्वाङ्गपूर्वपदाद् वा ॥ ५३ ॥

अन्तोदात्तात् क्तादित्यनुवर्तते। अस्वाङ्गपूर्वपदादन्तोदात्तात् क्तान्ताद् बहुव्रीहेः स्त्रियां वा ङीष् प्रत्ययो भवति। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। शार्ङ्गजग्धी, शार्ङ्गजग्धा। पलाण्डुभक्षिती, पलाण्डुभक्षिता। सुरापीती, सुरापीता। अस्वाङ्गपूर्वपदादिति किम्? शङ्खभिन्नी। ऊरुभिन्नी। अन्तोदात्तादित्येव—वस्त्रच्छन्ना। वसनच्छन्ना ॥ बहुलं संज्ञाछन्दसोरिति वक्तव्यम् ॥ प्रवृद्धविलूनी, प्रवृद्धविलूना। प्रवृद्धा चासौ विलूना चेति। नायं बहुव्रीहिः ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५४ ॥

बहुव्रीहेः क्तान्तादन्तोदात्तादिति सर्वं निवृत्तम्। वाग्रहणमनुवर्तते। स्वाङ्गं यदुपसर्जनमसंयोगोपधं तदन्तात् प्रातिपदिकात् स्त्रियां वा ङीषू प्रत्ययो भवति। चन्द्रमुखी, चन्द्रमुखा। अतिक्रान्ता केशान् अतिकेशी, अतिकेशा माला। स्वाङ्गादिति किम् ? बहुयवा। उपसर्जनादिति किम् ? अशिखा। असंयोगोपधादिति किम् ? सुगुल्फा। सुपार्श्वा ॥ अङ्गगात्रकण्ठेभ्य इति वक्तव्यम् ॥ मृद्वङ्गी, मृद्वङ्गा। सुगात्री, सुगात्रा। स्निग्धकण्ठी, स्निग्धकण्ठा।

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं चेत् तस्य चेत् तत्तथायुतम् ॥

## नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ५५ ॥

स्वाङ्गाच्चोपसर्जनादित्येव। बह्वजूलक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्ते वचनम्। सहनञ्विद्यमानपूर्वलक्षणस्तु प्रतिषेधो भवत्येव। नासिकाद्यन्तात् प्रातिपदिकात् स्त्रियां वा ङीषू प्रत्ययो भवति। तुङ्गनासिकी, तुङ्गनासिका। तिलोदरी, तिलोदरा। बिम्बोष्ठी, बिम्बोष्ठा। दीर्घजङ्घी, दीर्घजङ्घा। समदन्ती, समदन्ता। चारुकर्णी, चारुकर्णा। तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा ॥ पुच्छाच्चेति वक्तव्यम् ॥ कल्याणपुच्छी, कल्याणपुच्छा ॥ कबरमणिविषशरेभ्यो नित्यम् ॥ कबरपुच्छी। मणिपुच्छी। विषपुच्छी। शरपुच्छी ॥ उपमानात् पक्षात् च पुच्छात् च ॥ उलूकपक्षी सेना। उलूकपुच्छी शाला ॥

## न क्रोडादिबह्वचः ॥ ५६ ॥

स्वाङ्गादिति ङीषू प्राप्तः प्रतिषिध्यते। क्रोडाद्यन्ताद् बह्वजन्तात् च प्रातिपदिकात् स्त्रियां ङीषू प्रत्ययो न भवति। कल्याणक्रोडा। कल्याणखुरा। कल्याणोखा। कल्याणबाला। कल्याणशफा। कल्याणगुदा। कल्याणघोणा[1]। सुभगा। सुगला। क्रोडादिराकृतिगणः। बह्वचः खल्वपि—पृथुजघना। महाललाटा ॥

## सहनञ्विद्यमानपूर्वाच्च ॥ ५७ ॥

'स्वाङ्गाच्चोपसर्जनाद्०' ( ४.१.५४ ) इति 'नासिकोदरौष्ठजङ्घा०' ( ४.१.५५ ) इति च प्राप्तो ङीषू प्रतिषिध्यते। सह नञ् विद्यमान इत्येवंपूर्वात् प्रातिपदिकात् स्त्रियां ङीषू प्रत्ययो न भवति। सकेशा। अकेशा। विद्यमानकेशा। सनासिका। अनासिका। विद्यमाननासिका ॥

---

१ - ' कल्याणनखा, कल्याणमुखा ' इति मुद्रितेष्वधिकः पाठः। यथापदमञ्जरि सोऽग्रन्थः।

## नखमुखात् संज्ञायाम् ॥ ५८ ॥

नखमुखान्तात् प्रातिपदिकात् संज्ञायां विषये स्त्रियां ङीष् प्रत्ययो न भवति। शूर्पणखा। वज्रणखा। गौरमुखा। कालमुखा। संज्ञायामिति किम्? ताम्रनखी कन्या। चन्द्रमुखी॥

## दीर्घजिह्वी चच्छन्दसि ॥ ५९ ॥

दीर्घजिह्वी इति छन्दसि विषये निपात्यते। संयोगोपधत्वादप्राप्तो ङीष् विधीयते। दीर्घजिह्वीं वैं देवानां हव्यमवालेट् (तु०—मै० सं० ३.१०.६)। चकारः संज्ञानुकर्षणार्थः। दीर्घजिह्वीति निपातनं नित्यार्थम्॥

## दिक्पूर्वपदान् ङीप् ॥ ६० ॥

'स्वाङ्गाच्चोपसर्जनाद्०' (४.१.५४) इत्येवमादिविधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यते। यत्र ङीष् विहितस्तत्र तदपवादः। दिक्पूर्वपदात् प्रातिपदिकाद् ङीप् प्रत्ययो भवति। स्वरे विशेषः। प्राङ्मुखी, प्राङ्मुखा। प्राङ्नासिकी, प्राङ्नासिका। इह न भवति—प्राग्गुल्फा, प्राक्क्रोडा, प्राग्जघनेति॥

## वाहः ॥ ६१ ॥

ङीषेव स्वर्यते, न ङीप्। वहेरयं ण्विप्रत्ययान्तस्य निर्देशः। सामर्थ्यात् तदन्तविधेर्विज्ञानम्। वाहन्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति। दित्यौही (तै० सं० ४.७.१०.१)। प्रष्ठौही[1]॥

## सख्यशिश्वीति भाषायाम् ॥ ६२ ॥

सखी अशिश्वी इत्येतौ शब्दौ ङीषन्तौ भाषायां निपात्येते। सखीयं मे ब्राह्मणी। नास्याः शिशुरस्तीति अशिश्वी। भाषायामिति किम्? सखा सप्तपदी भव (आ० गृ० १.७.१९)। अशिशुमिव मामयं शिशुरभिमन्यते॥

## जातेरस्त्रीविषयादयोपधात् ॥ ६३ ॥

जातिवाचि यत् प्रातिपदिकं न च स्त्रियामेव नियतमस्त्रीविषयमयकारोपधं च, तस्मात् स्त्रियां ङीष् प्रत्ययो भवति।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह॥

---

१ – 'पष्ठौही' इति श्रूयते (मा० सं० १८.२७; तै० सं० ४.७.१०.१)।

कुक्कुटी। सूकरी। ब्राह्मणी। वृषली। नाडायनी। चारायणी। कठी। बह्वृची। जातेरिति किम् ? मुण्डा। अस्त्रीविषयादिति किम् ? मक्षिका। अयोपधादिति किम् ? क्षत्रिया ॥ योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधः॥ हयी। गवयी। मुकयी। मत्सी। मनुषी॥

## पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च ॥ ६४ ॥

पाकाद्युत्तरपदाज् जातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति। स्त्रीविषयत्वादेतेषां पूर्वेणाप्राप्तः प्रत्ययो विधीयते। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोबाली। पुष्पफलमूलोत्तरपदात् तु यतो नेष्यते तदजादिषु पठ्यते। 'सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' ( ग० सू० ३७ )। 'संभस्त्राजिनशणपिण्डेभ्यः फलात्' ( ग० सू० ३५ )। 'मूलान्नञः' ( ग० सू० ३९ ) इति ॥

## इतो मनुष्यजातेः ॥ ६५ ॥

इकारान्तात् प्रातिपदिकात् मनुष्यजातिवाचिनः स्त्रियां ङीष् प्रत्ययो भवति। अवन्ती। कुन्ती। दाक्षी। प्लाक्षी। इत इति किम् ? विट्। दरत्। मनुष्यग्रहणं किम् ? तित्तिरिः। जातेरिति वर्तमाने पुनर्जातिग्रहणं योपधादपि यथा स्यात्। औदमेयी ॥ इञ उपसंख्यानमजात्यर्थम् ॥ सौतङ्गमी। मौनिचित्ती। सुतङ्गमादिभ्यश्चातुरर्थिक इञ् ( ४.२.८० ) न जातिः॥

## ऊङुतः ॥ ६६ ॥

मनुष्यजातेरिति वर्तते। उकारान्ताद् मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियामूङ् प्रत्ययो भवति। कुरूः। ब्रह्मबन्धूः। वीरबन्धूः। ङकारो 'नोङ्धात्वोः' ( ६.१.१७५ ) इति विशेषणार्थः। दीर्घोच्चारणं कपो बाधनार्थम्। अयोपधादित्येतदत्रापेक्ष्यते। अध्वर्युर्ब्राह्मणी ॥ अप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम्॥ अलाबूः। कर्कन्धूः। अप्राणिग्रहणं किम् ? कृकवाकुः। अरज्ज्वादीनामिति किम् ? रज्जुः। हनुः॥

## बाह्वन्तात् संज्ञायाम् ॥ ६७ ॥

बाहुशब्दान्तात् प्रातिपदिकात् संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति। भद्रबाहूः। जालबाहूः। संज्ञायामिति किम् ? वृत्तौ बाहू अस्याः वृत्तबाहुः॥

## पङ्गोश्च ॥ ६८ ॥

पङ्गुशब्दात् स्त्रियामूङ् प्रत्ययो भवति। पङ्गूः ॥ श्वशुरस्योकाराकारयोर्लोपश्च वक्तव्यः॥ श्वश्रूः॥

## ऊरूत्तरपदादौपम्ये ॥ ६९ ॥

ऊरूत्तरपदात् प्रातिपदिकादौपम्ये गम्यमाने स्त्रियामूङ् प्रत्ययो भवति। कदली-स्तम्भोरूः। नागनासोरूः। करभोरूः। औपम्य इति किम्? वृत्तोरुः स्त्री॥

## संहितशफलक्षणवामादेश्च ॥ ७० ॥

संहित शफ लक्षण वाम इत्येवमादेः प्रातिपदिकादूरूत्तरपदात् स्त्रियामूङ् प्रत्ययो भवति। अनौपम्यार्थ आरम्भः। संहितोरूः। शफोरूः। लक्षणोरूः। वामोरूः॥ सहितसहाभ्यां चेति वक्तव्यम्॥ सहितोरूः। सहोरूः॥

## कद्रुकमण्डल्वोश्छन्दसि ॥ ७१ ॥

कद्रुशब्दात् कमण्डलुशब्दात् च छन्दसि विषये स्त्रियामूङ् प्रत्ययो भवति। कद्रूश्च वै सुपर्णी च (तै० सं० ६.१.६.१)। मा स्म कमण्डलूं शूद्राय दद्यात्। छन्दसीति किम्? कद्रुः। कमण्डलुः ॥ गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्॥ गुग्गुलूः (शौ० सं० ४.३७.३)। मधूः (शौ० सं० ७.५६.२)। जतूः (मै० सं० ३.१४.६)। पतयालूः (शौ० सं० ७.११५.२)॥

## संज्ञायाम् ॥ ७२ ॥

कद्रुकमण्डलुशब्दाभ्यां संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति। अच्छन्दोऽर्थं वचनम्। कद्रूः। कमण्डलूः। संज्ञायामिति किम्? कद्रुः। कमण्डलुः॥

## शार्ङ्गरवाद्यञो ङीन् ॥ ७३ ॥

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति। शार्ङ्गरवी। कापटवी। अञन्तेभ्यः—बैदी। और्वी। जातिग्रहणं चेहानुवर्तते। तेन जातिलक्षणो ङीषनेन बाध्यते, न पुंयोगलक्षणः। बैदस्य स्त्री बैदी॥ शार्ङ्गरव। कापटव। गौगुलव। ब्राह्मण। गौतम। एतेऽणन्ताः। कामण्डलेय। ब्राह्मकृतेय। आनिचेय। आनिधेय। आशोकेय। एते ढगन्ताः। वात्स्यायन। मौञ्जायन। एतौ फगन्तौ जातिः। कैकसेयो ढगन्तः। काव्यशैव्यौ ञ्यङन्तौ। एहि, पर्येहि। कृदिकारान्तौ। आश्मरथ्यो यञन्तः। औदपानः। उदपानशब्दः शुण्डिकाद्यणन्तः (४.३.७६) प्रयोजयति। अराल। चण्डाल।

वतण्ड। जातिः। भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम् ( ग० सू० ५२ )। नृनरयोर्वृद्धिश्च ( ग० सू० ५३ )। अत्र यथायोगं ङीबादिषु प्राप्तेषु ङीन् विधीयते॥

## यङश्चाप् ॥ ७४ ॥

यङन्तात् प्रातिपदिकात् स्त्रियां चाप् प्रत्ययो भवति। ञ्यङः ष्यङश्च सामान्यग्रहणमेतत्। आम्बष्ठ्या। सौवीर्या। कौसल्या। ष्यङ्—कारीषगन्ध्या। वाराह्या। बालाक्या॥ षाच्च यञः॥ षात् परो यो यञ् तदन्तात् चाप् वक्तव्यः। शार्कराक्ष्या। पौतिमाष्या। गौकक्ष्या। उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन वा भविष्यति॥

## आवट्याच्च ॥ ७५ ॥

अवटशब्दो गर्गादिः। तस्माद् यञि कृते ङीपि प्राप्ते वचनमेतत्। आवट्यात् च स्त्रियां चाप् प्रत्ययो भवति। आवट्या। प्राचां ष्फ एव, सर्वत्रग्रहणात्। आवट्यायनी॥

## तद्धिताः ॥ ७६ ॥

अधिकारोऽयम्। आ पञ्चमाध्यायपरिसमाप्तेर्यानित ऊर्ध्वमनुक्रमिष्यामः, तद्धितसंज्ञास्ते वेदितव्याः। वक्ष्यति—'यूनस्तिः' ( ४.१.७७ )—युवतिः। बहुवचनमनुक्ततद्धितपरिग्रहार्थम्। 'पृथिव्या ञाञौ' ( वा० ४.१.८५ )। 'अग्रादिपश्चाड्डिमच्' (वा० ४.३.२३ ) इत्येवमादि लब्धं भवति। तद्धितप्रदेशाः—'कृत्तद्धितसमासाश्च' ( १.२.४६ ) इत्येवमादयः॥

## यूनस्तिः ॥ ७७ ॥

युवन्शब्दात् प्रातिपदिकात् स्त्रियां तिः प्रत्ययो भवति, स च तद्धितसंज्ञो भवति। ङीपोऽपवादः। युवतिः॥

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ७८ ॥

गोत्रे यावणिञौ विहितावनार्षौ, तदन्तयोः प्रातिपदिकयोर्गुरूपोत्तमयोः स्त्रियां ष्यङादेशो भवति। 'निर्दिश्यमानस्यादेशा भवन्ति' ( परि० १२ ) इत्यणिञोरेव विज्ञायते, न तु समुदायस्य। ङकारः सामान्यग्रहणार्थः। षकारस्तदविघातार्थः। 'यङश्चाप्' ( ४.१.७४) इति। उत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमक्षरमाह। उत्तमस्य समीपमुपोत्तमम्। गुरु उपोत्तमं यस्य तद् गुरूपोत्तमं प्रातिपदिकम्। करीषस्येव गन्धोऽस्य करीषगन्धिः। कुमुदगन्धिः। 'तस्यापत्यम्' ( ४.१.९२ ) इत्यण्। तस्य ष्यङादेशः। कारीषगन्ध्या।

कौमुदगन्ध्या। वराहस्यापत्यम्। 'अत इञ्' ( ४.१.९५ )—वाराहिः। तस्य ष्यङादेशः। वाराह्या। बालाक्या। अणिञोरिति किम्? ऋतभागस्यापत्यम्, बिदादित्वादञ्, आर्तभागी। गुरूपोत्तमादिकं सर्वमस्तीति, न त्वणिञौ। 'टिड्ढाणञ्०' ( ४.१.१५ ) इति ङीबेवं भवति। अनार्षयोरिति किम्? वासिष्ठी। वैश्वामित्री। गुरूपोत्तमयोरिति किम्? औपगवी। कापटवी। गोत्र इति किम्? 'तत्र जाताः' ( ४.३.२५ )—आहिच्छत्री। कान्यकुब्जी॥

## गोत्रावयवात् ॥ ७९ ॥

अणिञोरित्येव। गोत्रावयवा गोत्राभिमताः कुलाख्याः पुणिकभुणिकमुखरप्रभृतयः, ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशो भवति। अगुरूपोत्तमार्थ आरम्भः। पौणिक्या। भौणिक्या। मौखर्या। येषां त्वनन्तरापत्येऽपीष्यते दैवदत्या याज्ञदत्येति, ते क्रौड्यादिषु द्रष्टव्याः॥

## क्रौड्यादिभ्यश्च ॥ ८० ॥

क्रौडि इत्येवमादिभ्यश्च स्त्रियां ष्यङ् प्रत्ययो भवति। अगुरूपोत्तमार्थ आरम्भः, अनणिञर्थश्च। क्रौड्या। लाड्या॥ क्रौडि। लाडि। व्याडि। आपिशलि। आपक्षिति। चौपयत। चैटयत। शैकयत। बैल्वयत। वैकल्पयत। सौधातकि। सूत युवत्याम् ( ग० सू० ५४ )। भोज क्षत्रिये ( ग० सू० ५५ )। भौरिकि। भौलिकि। शाल्मलि। शालास्थलि। कापिष्ठलि। गौलक्ष्य। गौकक्ष्य॥

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ॥ ८१ ॥

दैवयज्ञि शौचिवृक्षि सात्यमुग्रि काण्ठेविद्धि इत्येतेषामन्यतरस्यां ष्यङ् प्रत्ययो भवति। इञन्ता एते, गोत्रग्रहणं च नानुवर्तते। तेनोभयत्रविभाषेयम्। गोत्रे पूर्वेण नित्यः ष्यङादेशः प्राप्तो विकल्प्यते, अगोत्रे त्वनन्तरेऽपत्ये पक्षे विधीयते। तेन मुक्त 'इतो मनुष्यजातेः' ( ४.१.६५ ) इति ङीषेव भवति। दैवयज्ञ्या, दैवयज्ञी। शौचिवृक्ष्या, शौचिवृक्षी। सात्यमुग्र्या, सात्यमुग्री। काण्ठेविद्ध्या, काण्ठेविद्धी॥

## समर्थानां प्रथमाद् वा ॥ ८२ ॥

त्रयमप्यधिक्रियते समर्थानामिति च, प्रथमादिति च, वेति च। स्वार्थिकप्रत्ययावधिश्चायमधिकारः, 'प्राग् दिशो विभक्तिः' ( ५.३.१ ) इति यावत्। स्वार्थिकेषु ह्यस्योपयोगो

१ - वस्तुतस्तु 'शार्ङ्गरवाद्यञो ङीन्' ( ४.१.७३ ) इति ङीन् भवति।

नास्ति, विकल्पोऽपि तत्रानवस्थितः। केचिन्नित्यमेव भवन्ति। लक्षणवाक्यानि 'तस्यापत्यम्' (४.१.९२) 'तेन रक्तं रागात्' (४.२.१) 'तत्र भवः' (४.३.५३) इत्येवमादीनि भविष्यन्ति। तेषु सामर्थ्ये सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवतीति वेदितव्यम्। समर्थानामिति निर्धारणे षष्ठी। समर्थानां मध्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्धार्यते। तस्येति सामान्यं विशेषलक्षणार्थम्, तदीयं प्राथम्यं विशेषाणां विज्ञायते। उपगोरपत्यम्, औपगवः। समर्थानामिति किम्? कम्बल उपगोः, अपत्यं देवदत्तस्य। प्रथमादिति किम्? षष्ठ्यन्ताद् यथा स्यात् प्रथमान्ताद् मा भूत्। वेति किम्? वाक्यमपि हि यथा स्यात्—उपगोरपत्यमिति। यद्येवं समासवृत्तिस्तद्धितवृत्त्या बाध्येत उपग्वपत्यमिति। नैष दोषः। पूर्वसूत्रादन्यतरस्यांग्रहणमनुवर्तते। तेनैतदपि भविष्यति॥

## प्राग् दीव्यतोऽण् ॥ ८३ ॥

'तेन दीव्यति०' (४.४.२) इति वक्ष्यति। तदेकदेशो दीव्यच्छब्दोऽवधित्वेन गृह्यते। प्राग् दीव्यत्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, अण्प्रत्ययस्तत्र भवतीति वेदितव्यम्। अधिकारः, परिभाषा, विधिर्वेति त्रिष्वपि दर्शनेष्वपवादविषयं परिहृत्याण् प्रवर्तते। वक्ष्यति—'तस्यापत्यम्' (४.१.९२)। औपगवः। कापटवः॥

## अश्वपत्यादिभ्यश्च ॥ ८४ ॥

अश्वपत्यादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेष्वण् प्रत्ययो भवति। पत्युत्तर-पदाद् ण्यं वक्ष्यति, तस्यापवादः। आश्वपतम्। शातपतम्॥ अश्वपति। शतपति। धनपति। गणपति। राष्ट्रपति। कुलपति। गृहपति। धान्यपति। पशुपति। धर्मपति। सभापति। प्राणपति। क्षेत्रपति॥

## दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ८५ ॥

प्राग्दीव्यत इत्येव। दिति अदिति आदित्य इत्येतेभ्यः, पत्युत्तरपदात् च प्रातिपदिकात् प्राग्दीव्यतीयेष्वर्थेषु ण्यः प्रत्ययो भवति। दैत्यः। आदित्यः। आदित्यम्। पत्युत्तरपदात्—प्राजापत्यम्। सैनापत्यम् ॥ यमाच्चेति वक्तव्यम्॥ याम्यम् ॥ वाङ्मतिपितृमतां छन्दस्युपसंख्यानम्॥ वाच्यः (मा० सं० १३.५८)। मात्यां (मै० सं० २.७.१९)। पैतृमत्यम् (मा० सं० ७.४६) ॥ पृथिव्या ञाञौ॥ पार्थिवा (ऋ० १.६४.३)। पार्थिवी (पै० सं० १६.४६.३) ॥ देवाद् यञञौ॥ दैव्यम् (ऋ० १.३१.१७)। दैवम् (पै० सं० १.३१.४) ॥ बहिषष्टिलोपश्च ॥ बाह्याः (शौ० सं० १९.४४.६) ॥ईकक् च॥ बाहीकः ॥ईकञ् छन्दसि॥ बाहीकः। स्वरे विशेषः। टिलोपवचनमव्य-

यानां भमात्रे टिलोपस्य (वा० ६.४.१४४) अनित्यत्वज्ञापनार्थम्। आरातीयः ॥ स्थाम्नोऽकारः॥ अश्वत्थामः ॥ लोम्नोऽपत्येषु बहुषु ॥ उडुलोमाः। शरलोमाः। बहुष्विति किम्? औडुलोमिः। शारलोमिः ॥ सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत्॥ गव्यम्। अजादिप्रत्ययप्रसङ्ग इति किम्? गोभ्यो हेतुभ्य आगतं गोरूप्यम्। गोमयम् ॥ ण्यादयोऽर्थविशेषलक्षणादणपवादात् पूर्वविप्रतिषेधेन ॥ दितेरपत्यं दैत्यः। वनस्पतीनां समूहो वानस्पत्यम्। कथं दैतेयः? 'दितिशब्दात् कृदिकारादक्तिनः' (ग० सू० ४९), 'सर्वतोऽक्तिन्नर्थादित्येके' (ग० सू० ५०) इति ङीषं कृत्वा 'स्त्रीभ्यो ढक्' (४.१.१२०) क्रियते। लिङ्गविशिष्टपरिभाषा (परि० ७१) चानित्या॥

## उत्सादिभ्योऽञ् ॥ ८६ ॥

प्राग्दीव्यत इत्येव। उत्सादिभ्यः प्राग्दीव्यतीयेष्वर्थेष्वञ् प्रत्ययो भवति। अणस्तदपवादानां च बाधकः। औत्सः। औदपानः॥ उत्स। उदपान। विकर। विनोद। महानद। महानस। महाप्राण। तरुण। तलुन। वष्कयासे (ग० सू० ५६)। धेनु। पृथिवी। पङ्क्ति। जगती। त्रिष्टुप्। अनुष्टुप्। जनपद। भरत। उशीनर। ग्रीष्म। पीलु। कुल। उदस्थानाद् देशे (ग० सू० ५७)। पृषदंशे (ग० सू० ५८)। भल्लकीय। रथन्तर। मध्यन्दिन। बृहत्। महत्। सत्वन्तु। सद्शब्दो मतुबन्त आगतनुङ्को गृह्यते सत्वन्त्विति। कुरु। पञ्चाल। इन्द्रावसान। उष्णिक्। ककुभ्। सुवर्ण। देव। ग्रीष्मादच्छन्दसीति वक्तव्यम् (ग० सू० ५९)। इह मा भूत्—त्रिष्टुंब् ग्रैष्मीं (काठ० सं० १६.१९)। छन्दश्चेह वृत्तं गृह्यते न वेदः॥

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥

'धान्यानां भवने०' (५.२.१) इति वक्ष्यति। तस्य प्रागित्यनेनैव संबन्धः। प्राग् भवनसंशब्दनाद् येऽर्थास्तेषु स्त्रीशब्दात् पुंस्शब्दात् च यथाक्रमं नञ्स्नञौ प्रत्ययौ भवतः। स्त्रीषु भवं स्त्रैणम्। पौंस्नम्। स्त्रीणां समूहः स्त्रैणम्। पौंस्नम्। स्त्रीभ्य आगतं स्त्रैणम्। पौंस्नम्। स्त्रीभ्यो हितं स्त्रैणम्। पौंस्नम्। 'स्त्रियाः पुंवद्०' (६.३.३४) इति ज्ञापकाद् वत्यर्थे न भवति। योगापेक्षं च ज्ञापकमिति स्त्रीवदित्यपि सिद्धम्॥

## द्विगोर्लुगनपत्ये ॥ ८८ ॥

प्राग् दीव्यत इति वर्तते, न भवनादिति। द्विगोरिति षष्ठी। द्विगोर्यः संबन्धी निमित्तत्वेन तद्धितः प्राग्दीव्यतीयोऽपत्यप्रत्ययं वर्जयित्वा, तस्य लुग् भवति। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः। दशकपालः। द्वौ वेदावधीते द्विवेदः। त्रिवेदः। अनपत्य इति किम्? द्वैदेवदत्तिः। त्रैदेवदत्तिः। प्राग् दीव्यत इत्येव—द्वैपारायणिकः। द्विगुनिमित्तविज्ञानादिह

न भवति—पञ्चकपालस्येदं पाञ्चकपालम्। अथवा द्विगोरेवायं लुग् विधीयते, द्विगोरिति स्थानषष्ठी। ननु च प्रत्ययादर्शनस्यैषा संज्ञा ? सत्यमेतत्। उपचारेण तु लक्षणया द्विगुनिमित्तभूतः प्रत्यय एव द्विगुः, तस्य लुग् भवति। द्विगुनिमित्तकोऽपि तर्हि गुणकल्पनया कस्माद् न द्विगुरुच्यते पाञ्चकपालमिति ? न तस्य द्विगुत्वं निमित्तम्। इतरस्तु द्विगुत्वस्यैव निमित्तमित्यस्ति विशेषः। यद्येवमिह कथं पञ्चकपाल्यां संस्कृतः पञ्चकपाल इति ? नैवात्र तद्धित उत्पद्यते। वाक्यमेव भवति। त्रैशब्द्यं हि साध्यम्—पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः, पञ्चकपाल इति। तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यति। अथेह कस्माद् न भवति—पञ्चभ्यो गर्गेभ्य आगतं पञ्चगर्गरूप्यम्, पञ्चगर्गमयमिति ? वेत्यनुवर्तते। सा च व्यवस्थितविभाषा विज्ञायते॥

## गोत्रेऽलुगचि ॥ ८९ ॥

प्राग् दीव्यत इत्येव। 'यस्कादिभ्यो गोत्रे' (२.४.६३) इत्यादिना येषां गोत्रप्रत्ययानां लुगुक्तः, तेषामजादौ प्राग्दीव्यतीये विषयभूते प्रतिषिध्यते। गर्गाणां छात्रा गार्गीयाः। वात्सीयाः। आत्रेयीयाः। खारपायणीयाः। गोत्र इति किम् ? कौवलम्। बादरम्। अचीति किम् ? गर्गेभ्य आगतं गर्गरूप्यम्। गर्गमयम्। प्राग् दीव्यत इत्येव—गर्गेभ्यो हितं गर्गीयम्[1] ॥ गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक्॥ बिदानामपत्यं युवा, युवानौ। बैदः। बैदौ। बैदशब्दादत इञि (४.१.९५) कृते तस्य च इञो 'ण्यक्षत्रियार्षञितः०' (२.४.५८) इति लुकि रूपम् ॥ एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि॥ बैदस्य बैदयोर्वापत्यं बहवो माणवका बिदाः। नह्यत्राञ् बहुषूत्पन्नः॥

## यूनि लुक् ॥ ९० ॥

प्राग् दीव्यत इति वर्तते, अचीति च। प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव युवप्रत्ययस्य लुग् भवति। तस्मिन्निवृत्ते सति यो यतः प्राप्नोति, स ततो भवति। फाण्टाहृतस्यापत्यं फाण्टाहृतिः। तस्यापत्यं युवा, 'फाण्टाहृतिमिमताभ्यां णफिञौ' (४.१.१५०) फाण्टाहृतः। तस्य छात्रा इति विवक्षितेऽर्थे बुद्धिस्थे युवप्रत्ययस्य लुग् भवति। तस्मिन् निवृत्त इञन्तं प्रकृतिरूपं संपन्नम्। तस्माद् 'इञश्च' (४.२.११२) इत्यण् भवति। फाण्टाहृताः। भागवित्तस्यापत्यम्[2], भागवित्तिः। तस्यापत्यं युवा 'वृद्धाट्ठक् सौवीरेषु बहुलम्' (४.१.१४८) इति ठक्, भागवित्तिकः। तस्य छात्राः, पूर्ववद् युवप्रत्यये निवृत्त 'इञश्च' (४.२.११२) इत्यण्, भागवित्ताः। तिकस्यापत्यं

---

१ – 'गार्गीयम्' इत्यपपाठो है०। २ – 'भगवित्त०' इति न्यासे (४.१.१४८)।

ग्रामता। जनता। बन्धुता। सहायता ॥ गजाच्चेति वक्तव्यम् ॥ गजानां समूहो गजता ॥

## अनुदात्तादेरञ् ॥ ४४ ॥

अनुदात्तादेः शब्दादञ् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। कपोतानां समूहः कापोतम्। मायूरम्। तैत्तिरम् ॥

## खण्डिकादिभ्यश्च ॥ ४५ ॥

खण्डिका इत्येवमादिभ्यः शब्देभ्योऽञ् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। आद्युदात्तार्थमचित्तार्थं च वचनम्। खण्डिकानां समूहः खाण्डिकम्। वाडवम्। क्षुद्रकमालव-शब्दोऽत्र पठ्यते। क्षुद्रकाश्च मालवाश्चेति क्षत्रियद्वन्द्वः। ततः पूर्वेणैवाञि सिद्धे वचनं गोत्रवुञ्बाधनार्थम् ( ४.२.३९ )। ननु च परत्वादञा वुञ् बाधिष्यते। न च गोत्रसमुदायो गोत्रम्, न च तदन्तविधिरत्रास्ति ? एवं तर्ह्येतज् ज्ञापयति—वुञि पूर्वविप्रतिषेधः, सामूहिकेषु च तदन्तविधिरस्तीति। प्रयोजनमौपगवकं कापटवकमिति वुञ् भवति। वानहस्तिकं गौधेनुकमिति च तदन्तविधिः। क्षुद्रकमालवादित्येतावता योगविभागेन पूर्वविप्रतिषेधस्तदन्तविधिश्च ज्ञापितः, पुनरस्यैव नियमार्थमुच्यते सेनासंज्ञायामिति। क्षुद्र-कमालवात् सेनासंज्ञायामेवाञ् भवति। क्षौद्रकमालवी सेना। क्षौद्रकमालवकमन्यत्।

अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।
गोत्राद् वुञ् न च तद्गोत्रं तदन्तान्न स सर्वतः॥ १ ॥
ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः।
सेनायां नियमार्थं च यथा बाध्येत चाञ् वुञा ॥ २ ॥

खण्डिका। वडवा। क्षुद्रकमालवात् सेनासंज्ञायाम् ( ग० सू० ७९ )। भिक्षुक। शुक। उलूक। श्वन्। युग। अहन्। वरत्रा। हलबन्ध ॥

## चरणेभ्यो धर्मवत् ॥ ४६ ॥

चरणशब्दाः कठकलापादयः, तेभ्यः षष्ठीसमर्थेभ्यः समूहे धर्मवत् प्रत्यया भवन्ति। 'गोत्रचरणाद् वुञ्' ( ४.३.१२६ ) इत्यारभ्य प्रत्यया वक्ष्यन्ते, तत्रेदमुच्यते 'चरणाद् धर्माम्नाययोः०' ( वा० ४.३.१२६ ) इति, तेन धर्मवदित्यतिदेशः क्रियते। वतिः सर्वसादृश्यार्थः। कठानां धर्मः काठकम्। कालापकम्। छान्दोग्यम्। औक्थिक्यम्। आथर्वणम्। तथा समूहेऽपि। काठकम्। कालापकम्। छान्दोग्यम्। औक्थिक्यम्। आथर्वणम् ॥

## अचित्तहस्तिधेनोष्ठक् ॥ ४७ ॥

अचित्तार्थेभ्यो हस्तिधेनुशब्दाभ्यां च ठक् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। अणञोरपवादः। अपूपानां समूह आपूपिकम्। शाष्कुलिकम्। हास्तिकम्। धैनुकम् ॥ धेनोरनञ इति वक्तव्यम् ॥ आधेनवम् ॥

## केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४८ ॥

केश अश्व इत्येताभ्यां यथासंख्यं यञ् छ इत्येतौ प्रत्ययौ भवतोऽन्यतरस्यां तस्य समूह इत्येतस्मिन् विषये। केशानां समूहः कैश्यम्। कैशिकम्। अश्वानां समूहः अश्वीयम्। आश्वम् ॥

## पाशादिभ्यो यः ॥ ४९ ॥

पाशादिभ्यो यः प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। पाशानां समूहः पाश्या। तृण्या ॥ पाश। तृण। धूम। वात। अङ्गार। पोत। बालक। पिटक। पिटाक। शकट। हल। नड। वन ॥

## खलगोरथात् ॥ ५० ॥

खलगोरथशब्देभ्यो यः प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। खलानां समूहः खल्या। गव्या। रथ्या। पाशादिष्वपाठ उत्तरार्थः ॥

## इनित्रकट्यचश्च ॥ ५१ ॥

खलगोरथशब्देभ्यो यथासंख्यम् इनि त्र कट्यच् इत्येते प्रत्यया भवन्ति तस्य समूह इत्येतस्मिन् विषये। खलिनी। गोत्रा। रथकट्या ॥ खलादिभ्य इनिर्वक्तव्यः ॥ डाकिनी। कुण्डलिनी। कुटुम्बिनी ॥ कमलादिभ्यः खण्डच् प्रत्ययो भवति ॥ कमलखण्डम्। अम्भोजखण्डम् ॥ कमल। अम्भोज। पद्मिनी। कुमुद। सरोज। पद्म। नलिनी। कैरविणी। कमलादिराकृतिगणः ॥ नरकरितुरङ्गाणां स्कन्धच् प्रत्ययः ॥ नरस्कन्धः। करिस्कन्धः। तुरङ्गस्कन्धः ॥ पूर्वादिभ्यः काण्डः प्रत्ययो भवति ॥ पूर्वकाण्डम्। तृणकाण्डम्। कर्मकाण्डम् ॥

## विषयो देशे ॥ ५२ ॥

समूह इति निवृत्तम्। षष्ठी समर्थविभक्तिरनुवर्तते। तस्येति षष्ठीसमर्थाद् विषय

इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयो देशश्चेत् स भवति। विषय-शब्दोऽयं बह्वर्थः। क्वचिद् ग्रामसमुदाये वर्तते, विषयो लब्ध इति। क्वचिदिन्द्रियग्राह्ये, चक्षुर्विषयो रूपमिति। क्वचिदत्यन्तशीलिते ज्ञेये, देवदत्तस्य-विषयोऽनुवाक इति। क्वचिद-न्यत्राभावे, मत्स्यानां विषयो जलमिति। तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम्। शिबीनां विषयो देशः शैबः। औष्ट्रः। देश इति किम्? देवदत्तस्य विषयोऽनुवाकः॥

## राजन्यादिभ्यो वुञ् ॥ ५३ ॥

राजन्यादिभ्यः शब्देभ्यो वुञ् प्रत्ययो भवति विषयो देश इत्येतस्मिन्नर्थे। अणोऽपवादः। राजन्यानां विषयो देशो राजन्यकः। दैवयानकः। आकृतिगणश्चायम्। मालवानां विषयो देशो मालवकः। वैराटकः। त्रैगर्तकः॥ राजन्य। देवयान। शालङ्कायन। जालन्धरायण। आत्मकामेय। अम्बरीषपुत्र। वसाति। बैल्ववन। शैलूष। उदुम्बर। बैल्वत। आर्जुनायन। संप्रिय। दाक्षि। ऊर्णनाभ॥

## भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५४ ॥

भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासंख्यं विधल् भक्तल् इत्येतौ प्रत्ययौ भवतो विषयो देश इत्येतस्मिन् विषये। अणोऽपवादः। भौरिकिविधः। वैपेयविधः। ऐषु-कार्यादिभ्यः—ऐषुकारिभक्तः। सारस्यायनभक्तः॥ भौरिकि। वैपेय। भौलिकि। चैटयत। काणेय। वाणिजक। वालिज। वालिज्यक। शैकयत। वैकयत। भौरिक्यादिः॥ ऐषुकारि। सारस्यायन। चान्द्रायण। द्व्याक्षायण। त्र्याक्षायण। औडायन। जौलायन। खाडायन। सौवीर। दासमित्रि। दासमित्रायण। शौद्रायण। दाक्षायण। शयण्ड। तार्क्ष्यायण। शौभ्रायण। सायण्डि। शौण्डि। वैश्वमाणव। वैश्वधेनव। नद। तुण्डदेव। विशदेव॥

## सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ॥ ५५ ॥

स इति समर्थविभक्तिः। अस्येति प्रत्ययार्थः। आदिरिति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। छन्दस इति प्रकृतिनिर्देशः। प्रगाथेष्विति प्रत्ययार्थविशेषणम्। स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं छन्दश्चेत् तदादिर्भवति, यत् तदस्येति निर्दिष्टं प्रगाथाश्चेत् ते भवन्ति। इतिकरणस्ततश्चेद् विवक्षा। पङ्क्तिरादिरस्य पाङ्क्तः प्रगाथः। आनुष्टुभः। जागतः। आदिरिति किम्? अनुष्टुब् मध्यम् अस्य प्रगाथस्य। छन्दस इति किम्? उदुत्यशब्द आदिरस्य प्रगाथस्य। प्रगाथेष्विति किम्? पङ्क्तिरादिरस्यानुवाकस्य। प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते। यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते, स प्रग्रथनात् प्रकर्षगानाद् वा प्रगाथ

इत्युच्यते ॥ छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम् ॥ त्रिष्टुबेव त्रैष्टुभम्। जागतम् ॥

## संग्रामे प्रयोजनयोद्धृभ्यः ॥ ५६ ॥

सोऽस्येति समर्थविभक्तिः, प्रत्ययार्थश्चानुवर्तते। प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च। प्रत्ययार्थविशेषणं संग्रामः। प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्योऽस्येति षष्ठ्यर्थे संग्रामेऽभिधेये यथाविहितं प्रत्ययो भवति। भद्रा प्रयोजनमस्य संग्रामस्य भाद्रः संग्रामः। सौभद्रः। गौरिमित्रः। योद्धृभ्यः—अहिमाला योद्धारोऽस्य संग्रामस्य आहिमालः। स्यान्दनाश्वः। भारतः। संग्राम इति किम्? सुभद्रा प्रयोजनमस्य दानस्य। प्रयोजनयोद्धृभ्य इति किम्? सुभद्रा प्रेक्षिकास्य संग्रामस्य॥

## तदस्यां प्रहरणमिति क्रीडायां णः ॥ ५७ ॥

तदिति प्रथमासमर्थादस्यामिति सप्तम्यर्थे णः प्रत्ययो भवति, यत् तदिति निर्दिष्टं प्रहरणं चेत् तद् भवति। यदस्यामिति निर्दिष्टं क्रीडा चेत् सा भवति। इतिकरणस्ततश्चेद् विवक्षा। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। मौष्टा। प्रहरणमिति किम्? माला भूषणमस्यां क्रीडायाम्। क्रीडायामिति किम्? खड्गः प्रहरणमस्यां सेनायाम्॥

## घञः सास्यां क्रियेति ञः ॥ ५८ ॥

सेति समर्थविभक्तिः। अस्यामिति प्रत्ययार्थः स्त्रीलिङ्गः। क्रियेति प्रकृत्यर्थविशेषणम्। घञ इति प्रकृतिनिर्देशः। इतिकरणो विवक्षार्थः। घञन्तात् क्रियावाचिनः प्रथमासमर्थादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञः प्रत्ययो भवति। घञ इति कृद्ग्रहणम्, तत्र गतिकारकपूर्वमपि गृह्यते (परि० २८)। श्येनपातोऽस्यां वर्तते श्यैनंपाता। तैलंपाता। घञ इति किम्? श्येनपतनमस्यां वर्तते। क्रियेति किम्? प्राकारोऽस्यां वर्तते। अथ समर्थविभक्तिः प्रत्ययार्थश्च कस्मात् पुनरुपादीयते, यावता द्वयमपि प्रकृतमेव? क्रीडायामित्यनेन तत् संबद्धम्, अतस्तदनुवृत्तौ क्रीडानुवृत्तिरपि संभाव्येत। सामान्येन चेदं विधानम्। दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः। मौसलपाता तिथिः॥

## तदधीते तद्वेद ॥ ५९ ॥

तदिति द्वितीयासमर्थादधीते वेद इत्येतयोरर्थयोर्यथाविहितं प्रत्ययो भवति। छन्दोऽधीते छान्दसः। वैयाकरणः। नैरुक्तः। निमित्तानि वेद नैमित्तः। मौहूर्तः। औत्पातः। द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थम्॥

## क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ६० ॥

क्रतुविशेषवाचिभ्य उक्थादिभ्यश्च सूत्रान्तात् च ठक् प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन् विषये। अणोऽपवादः। अग्निष्टोममधीते वेद वा आग्निष्टोमिकः। वाजपेयिकः। उक्थादिभ्यः—औक्थिकः। लौकायतिकः। सूत्रान्तात्—वार्तिकसूत्रिकः। सांग्रहसूत्रिकः। सूत्रान्तादकल्पादेरिष्यते। कल्पसूत्रमधीते काल्पसूत्रः। अणेव भवति। उक्थशब्दः केषुचिदेव सामसु रूढः। यज्ञायज्ञीयात् ( कौ० सं० उत्तरा० १.६.१,२ ) परेण यानि गीयन्ते। न च तान्यधीयाने प्रत्यय इष्यते। किं तर्हि ? सामलक्षण औक्थिक्ये वर्तमान उक्थशब्दः प्रत्ययमुत्पादयति। उक्थमधीत औक्थिकः। औक्थिक्यमधीत इत्यर्थः। औक्थिक्यशब्दाच्च प्रत्ययो न भवत्येव, अनभिधानात्। विद्यालक्षणकल्पान्तादिति[1] वक्तव्यम्। वायसविद्यिकः। सार्पविद्यिकः। गौलक्षणिकः। आश्वलक्षणिकः। मातृकल्पिकः। पाराशरकल्पिकः। विद्या च नाङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा। अङ्गविद्यामधीते, आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। सांसर्गविद्यः। त्रैविद्यः। आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग् वक्तव्यः। आख्यानाख्यायिकयोरर्थग्रहणम्, इतिहासपुराणयोः स्वरूपग्रहणम्। यावक्रीतिकः। प्रैयङ्गविकः। वासवदत्तिकः। सौमनोत्तरिकः। ऐतिहासिकः। पौराणिकः। सर्वसादेर्द्विगोश्च लः। सर्ववेदः। सर्वतन्त्रः। सादेः—सवार्तिकः। ससंग्रहः। द्विगोः—द्विवेदः। पञ्चव्याकरणः। अनुसूर्लक्ष्यलक्षणे च। अनुसूर्नाम ग्रन्थः, तमधीत आनुसुकः। लाक्षियकः[2]। लाक्षणिकः। इकन् बहुलं पदोत्तरपदात्। पूर्वपदिकः। शतषष्टेः षिकन् पथो बहुलम्। शतपथिकः। शतपथिकी। षष्टिपथिकः। षष्टिपथिकी। बहुलग्रहणादणपि भवति। शातपथः। षाष्टिपथः॥ उक्थ। लोकायत। न्याय। न्यास। निमित्त। पुनरुक्त। निरुक्त। यज्ञ। चर्चा। धर्म। क्रमेतर। श्लक्ष्ण। संहिता। पद। क्रम। संघात। वृत्ति। संग्रह। गुणागुण। आयुर्वेद। सूत्रान्तादकल्पादेः ( ग० सू० ८० )। विद्यालक्षणकल्पान्तात् ( ग० सू० ८१ )। विद्या चानङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा ( ग० सू० ८२ )। आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक् ( ग० सू० ८३ )। सर्वसादेर्द्विगोश्च लः ( ग० सू० ८४ )। अनुसूर्लक्ष्यलक्षणे च ( ग० सू० ८५ )। द्विपदी ज्योतिषि ( ग० सू० ८६ )। अनुपद। अनुकल्प। अनुगुण। इकन् बहुलं पदोत्तरपदात् ( ग० सू० ८७ )। शतषष्टेः षिकन् पथो बहुलम् ( ग० सू० ८८ )॥

## क्रमादिभ्यो वुन् ॥ ६१ ॥

क्रम इत्येवमादिभ्यः शब्देभ्यो वुन् प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन् विषये। अणोऽपवादः। क्रमकः। पदकः॥ क्रम। पद। शिक्षा। मीमांसा। सामन्॥

---

१ – 'कल्पसूत्रान्तादिति' इति है०। २ – 'लाक्षिकः' इति मुद्रितेष्वपपाठः।

## अनुब्राह्मणादिनिः ॥ ६२ ॥

अनुब्राह्मणशब्दादिनिः प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन् विषये। अणोऽपवादः। ब्राह्मणसदृशोऽयं ग्रन्थोऽनुब्राह्मणम्। तदधीते अनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिनः। मत्वर्थेन 'अत इनिठनौ' (५.२.११५) इतीनिना सिद्धम् ? तत्रैतस्माट्‌ ठन्नपि प्राप्नोति। अनभिधानान्न भविष्यति ? अणो निवृत्त्यर्थं तर्हि वचनम्॥

## वसन्तादिभ्यष्ठक् ॥ ६३ ॥

वसन्त इत्येवमादिभ्यष्ठक् प्रत्ययो भवति तदधीते तद्वेदेत्येतस्मिन् विषये। अणोऽपवादः। वसन्तसहचरितोऽयं ग्रन्थो वसन्तः, तमधीते वासन्तिकः। वार्षिकः॥ वसन्त। वर्षाशरदम्। हेमन्त। शिशिर। प्रथम। गुण। चरम। अनुगुण। अपर्वन्। अथर्वन्॥

## प्रोक्ताल्लुक् ॥ ६४ ॥

प्रोक्तसहचरितः प्रत्ययः प्रोक्तः। प्रोक्तप्रत्ययान्तादध्येतृवेदित्रोरुत्पन्नस्य लुग् भवति। पाणिनिना प्रोक्तं पाणिनीयम्, तदधीते पाणिनीयः। आपिशलः। स्त्रियां स्वरे च विशेषः। पाणिनीया ब्राह्मणी॥

## सूत्राच्च कोपधात् ॥ ६५ ॥

सूत्रवाचिनः ककारोपधादुत्पन्नस्य प्रत्ययस्य लुग् भवति। अप्रोक्तार्थ आरम्भः। पाणिनीयमष्टकं सूत्रम्, तदधीयते अष्टकाः पाणिनीयाः। दशका वैयाघ्रपदीयाः। त्रिकाः काशकृत्स्नाः॥ संख्याप्रकृतेरिति वक्तव्यम्॥ इह मा भूत्—महावार्तिकं सूत्रमधीते माहावार्तिकः। कालापकमधीते कालापकः। कोपधादिति किम् ? चतुष्टयमधीते चातुष्टयः॥

## छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥

प्रोक्तग्रहणमनुवर्तते। छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति। अध्येतृवेदितृप्रत्ययविषयाणि। अनन्यभावो विषयार्थः। तेन स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यं च निवर्तते। कठेन प्रोक्तमधीयते कठाः। मौदाः। पैप्पलादाः। आर्चाभिनः। वाजसनेयिनः। ब्राह्मणानि खल्वपि—ताण्डिनः। भाल्लविनः। शाट्यायनिनः। ऐतरेयिणः। ब्राह्मणग्रहणं किम्, यावता छन्द एव तद् ? ब्राह्मणविशेषप्रतिपत्त्यर्थम्, इह तद्विषयता मा भूत्—याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि[1]। सौलभानि। चकारोऽनुक्त-

---

१ – 'याज्ञवल्क्यानि' इत्यपपाठो मुद्रितेषु।

समुच्चयार्थः। कल्पे—काश्यपिनः। कौशिकिनः। सूत्रे—पाराशरिणो भिक्षवः। शैलालिनो नटाः। कर्मन्दिनः। कृशाश्विनः। छन्दोब्राह्मणानीति किम्? पाणिनीयं व्याकरणम्। पैङ्गी कल्पः॥

## तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥

तदिति प्रथमासमर्थविभक्तिः। अस्मिन्निति प्रत्ययार्थः। अस्तीति प्रकृत्यर्थविशेषणम्। इतिकरणो विवक्षार्थः। देशे तन्नाम्नीति प्रत्ययार्थविशेषणम्। तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थमस्ति चेत् तद् भवति, यदस्मिन्निति निर्दिष्टं देशश्चेत् स तन्नामा भवति, प्रत्ययान्तनामा। इतिकरणस्ततश्चेद् विवक्षा। उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः। बाल्बजः। पार्वतः। मत्वर्थीयापवादो योगः॥

## तेन निर्वृत्तम् ॥ ६८ ॥

तेनेति तृतीयासमर्थाद् निर्वृत्तमित्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। देशे तन्नाम्नीति चतुर्ष्वपि योगेषु संबध्यते। सहस्रेण निर्वृत्ता साहस्री परिखा। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी। हेतौ कर्तरि च यथायोगं तृतीया समर्थविभक्तिः॥

## तस्य निवासः ॥ ६९ ॥

तस्येति षष्ठीसमर्थाद् निवास इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। निवसन्त्यस्मिन्निति निवासः। ऋजुनावां निवासो देश आर्जुनावो देशः। शैबः। औदिष्ठः॥

## अदूरभवश्च ॥ ७० ॥

पूर्वा समर्थविभक्तिरनुवर्तते। तस्येति षष्ठीसमर्थाददूरभव इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। विदिशाया अदूरभवं नगरं वैदिशम्। हैमवतम्। चकारः पूर्वेषां त्रयाणामर्थाना-मिह सन्निधानार्थः। तेनोत्तरेषु चत्वारोऽप्यर्थाः संबध्यन्ते॥

## ओरञ् ॥ ७१ ॥

चत्वारोऽर्थाः (४.२.६७—७०) अनुवर्तन्ते। उवर्णान्तात् प्रातिपदिकाद् यथाविहितं समर्थविभक्तियुक्तादञ् प्रत्ययो भवति तदस्मिन्नस्तीत्येवमादिष्वर्थेषु। अणोऽपवादः। अरडु—आरडवम्। कक्षतु—काक्षतवम्। कर्कटेलु—कार्कटेलवम्। नद्यां तु परत्वाद् मतुब् भवति। इक्षुमती। अञधिकारः प्राक् सुवास्त्वादिभ्योऽणः (४.२.७७)॥

## मतोश्च बह्वजङ्गात् ॥ ७२ ॥

बह्वज् अङ्गं यस्यासौ बह्वजङ्गो मतुप्, तदन्तात् प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। ऐषुकावतम्। सैध्रकावतम्। बह्वजङ्गादिति किम् ? आहिमतम्। यावमतम्। अङ्गग्रहणं किम्[1]? बह्वजिति तद्विशेषणं यथा विज्ञायेत[2], मत्वन्तविशेषणं मा विज्ञायीति। मालावतां निवासो मालावतम्॥

## बह्वचः कूपेषु ॥ ७३ ॥

बह्वचः प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेषु। अणोऽपवादः। यथासंभवमर्थाः संबध्यन्ते। दीर्घवरत्रेण निर्वृत्तः कूपो दैर्घवरत्रः। कापिलवरत्रः॥

## उदक् च विपाशः ॥ ७४ ॥

विपाश उत्तरे कूले ये कूपाः, तेष्वभिधेयेष्वञ् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। अबह्वजर्थ आरम्भः। दत्तेन निर्वृत्तः कूपो दात्तः। गौप्तः। उदगिति किम् ? दक्षिणतो विपाशः कूपेष्वणेव। दात्तः। गौप्तः। स्वरे विशेषः। महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य॥

## संकलादिभ्यश्च ॥ ७५ ॥

कूपेष्विति निवृत्तम्। संकल इत्येवमादिभ्योऽञ् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। यथासंभवमर्थसंबन्धः। संगतः कलः संकलः। संकलेन निर्वृत्तः सांकलः। पौष्कलः॥ संकल। पुष्कल। उद्वप। उडुप। उत्पुट। कुम्भ। विधान। सुदक्ष। सुदत्त। सुभूत। सुनेत्र। सुपिङ्गल। सिकता। पूतीकी। पूलास। कूलास। पलाश। निवेश। गवेष। गम्भीर। इतर। शर्मन्। अहन्। लोमन्। वेमन्। वरुण। बहुल। सद्योज। अभिषिक्त। गोभृत्। राजभृत्। गृह। भृत। भल्ल। माल। वृत्॥

## स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥

देशे तन्नाम्नीत्यस्य विशेषणं सौवीरादयः, स्त्रीत्वं च। ङ्याप्प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः, अणोऽपवादः, सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि। सौवीरे तावत्—दत्तामित्रेण निर्वृत्ता नगरी दात्तामित्री। साल्वे—विधूमाग्निना निर्वृत्ता वैधूमाग्नी। प्राचि खल्वपि—ककन्देन निर्वृत्ता काकन्दी। माकन्दी। माणिचरी। जारुषी॥

---

१ - 'किम्' इति मुद्रितेषु नास्ति। २ - 'विज्ञायते' इति मुद्रितपाठः।

## सुवास्त्वादिभ्योऽण् ॥ ७७ ॥

सुवास्तु इत्येवमादिभ्योऽण् प्रत्ययो भवति चातुरर्थिकः। अत्र उवर्णान्तलक्षणस्य कूपलक्षणस्य चापवादः। सुवास्तोरदूरभवं नगरं सौवास्तवम्। वार्णवम्। अण्ग्रहणं नद्यां मतुपो बाधनार्थम्। सौवास्तवी नदी ॥ सुवास्तु। वर्णु। भण्डु। खण्डु। सेचालिन्। कर्पूरिन्। शिखण्डिन्। गर्त। कर्कश। शटीकर्ण। कृष्ण। कर्क। कर्कन्धूमती। गोह्य। अहिसक्थ। वृत् ॥

## रोणी ॥ ७८ ॥

रोणीशब्दादण् प्रत्ययो भवति चातुरर्थिकः। यथासंभवमर्थसंबन्धः। कूपलक्षणस्याञोऽपवादः। रोणीति कोऽयं निर्देशः, यावता प्रत्ययविधौ पञ्चमी युक्ता ? सर्वावस्थप्रतिपत्त्यर्थमेवमुच्यते। रोणीशब्दः सर्वावस्थोऽण्प्रत्ययमुत्पादयति, केवलस्तदन्तश्च। रौणः। आजकरोणः। सैंहिकरोणः ॥

## कोपधाच्च ॥ ७९ ॥

ककारोपधात् च प्रातिपदिकादण् प्रत्ययो भवति चातुरर्थिकः। यथासंभवमर्थसंबन्धः। कूपलक्षणस्योवर्णलक्षणस्य चाञोऽपवादः। कार्णच्छिद्रिकः कूपः। कार्णवेष्टकः। कृकवाकुना निर्वृत्तं कार्कवाकवम्। त्रैशङ्कवम् ॥

## वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः ॥ ८० ॥

वुञादयः सप्तदश प्रत्ययाः, अरीहणादयोऽपि सप्तदशैव प्रातिपदिकगणाः। आदिशब्दः प्रत्येकमभिसंबध्यते। तत्र यथासंख्यं सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश प्रत्यया भवन्ति चातुरर्थिकाः। अणोऽपवादः। यथासंभवमर्थसंबन्धः। अरीहणादिभ्यो वुञ् प्रत्ययो भवति। आरीहणकम्। द्रौघणकम् ॥ अरीहण। द्रुघण। खदिर। सार। भगल। उलन्द। साम्परायण। क्रौष्ट्रायण। भास्त्रायण। मैत्रायण। त्रैगर्तायन। रायस्पोष। विपथ। उद्दण्ड। उदञ्चन। खाडायन। खण्ड। वीरण। काशकृत्स्न। जाम्बवन्त। शिंशपा। किरण। रैवत। बैल्व। वैमतायन। सौसायन। शाण्डिल्यायन। शिरीष। बधिर। अरीहणादिः ॥ कृशाश्वादिभ्यश्छण् प्रत्ययो भवति। कार्शाश्वीयः। आरिष्टीयः ॥ कृशाश्व। अरिष्ट। अरीश्व। वेश्मन्। विशाल। रोमक। शबल। कूट। रोमन्। वर्वर। सुकर। सूकर। प्रतर। सदृश। पुरग। सुख। धूम। अजिन।

विनता। अवनत। विकुघास। अरुस्। अवयास। मौद्गल्य। कृशाश्वादिः॥ ऋश्यादिभ्यः कः प्रत्ययो भवति। ऋश्यकः। न्यग्रोधकः॥ ऋश्य। न्यग्रोध। शिरा। निलीन। निवास। निधान। निवात। निबद्ध। विबद्ध। परिगूढ। उपगूढ। उत्तराश्मन्। स्थूलबाहु। खदिर। शर्करा। अनडुह्। परिवंश। वेणु। वीरण। ऋश्यादिः॥ कुमुदादिभ्यष्ठच् प्रत्ययो भवति। कुमुदिकम्। शर्करिकम्॥ कुमुद। शर्करा। न्यग्रोध। इत्कट। गर्त। बीज। अश्वत्थ। बल्बज। परिवाप। शिरीष। यवाष। कूप। विकङ्कत। कुमुदादिः॥ काशादिभ्य इलः प्रत्ययो भवति। काशिलम्। वाशिलम्॥ काश। वाश। अश्वत्थ। पलाश। पीयूष। विश। तृण। नर। चरण। कर्दम। कर्पूर। कण्टक। गृह। काशादिः॥ तृणादिभ्यः सः[1] प्रत्ययो भवति। तृणसः[1]। नडसः[1]॥ तृण। नड। बुस। पर्ण। वर्ण। चरण। अर्ण। जन। बल। लव। वन। तृणादिः॥ प्रेक्षादिभ्य इनिप्रत्ययो भवति। प्रेक्षी। हलकी॥ प्रेक्षा। हलका। बन्धुका। ध्रुवका। क्षिपका। न्यग्रोध। इर्कुट। प्रेक्षादिः॥ अश्मादिभ्यो रप्रत्ययो भवति। अश्मरः॥ अश्मन्। यूष। रूष। मीन। दर्भ। वृन्द। गुड। खण्ड। नग। शिखा। अश्मादिः॥ सख्यादिभ्यो ढञ् प्रत्ययो भवति। साखेयम्। साखिदत्तेयम्॥ सखि। सखिदत्त। वायुदत्त। गोहित। भल्ल। पाल। चक्रपाल। चक्रवाल। छगल। अशोक। करवीर। सीकर। सकर। सरस। समल। सख्यादिः॥ संकाशादिभ्यो ण्यप्रत्ययो भवति। सांकाश्यम्। काम्पिल्यम्॥ संकाश। काम्पिल्य। समीर। कश्मर। शूरसेन। सुपथिन्। सक्थच। यूप। अंश। एग। अश्मन्। कूट। मलिन। तीर्थ। अगस्ति। विरत। चिकार। विरह। नासिका। संकाशादिः॥ बलादिभ्यो यः प्रत्ययो भवति। बल्यः। कुल्यम्॥ बल। वुल। तुल। उल। डुल। कवल। वन। कुल। बलादिः॥ पक्षादिभ्यः फक् प्रत्ययो भवति। पाक्षायणः। तौषायणः॥ पक्ष। तुष। अण्ड। कम्बलिक। चित्र। अश्मन्। अतिस्वन्। पथिन् पन्थ च ( ग० सू० ८९ )। पक्षादिः॥ कर्णादिभ्यः फिञ् प्रत्ययो भवति। कार्णायनिः। वासिष्ठायनिः॥ कर्ण। वसिष्ठ। अलुश। शल। डुपद। अनडुह्य। पाञ्चजन्य। स्थिरा। कुलिश। कुम्भी। जीवन्ती। जित्व। आण्डीवत्। कर्णादिः॥ सुतङ्गमादिभ्य इञ् प्रत्ययो भवति। सौतङ्गमिः। मौनिचित्तिः॥ सुतङ्गम। मुनिचित्त। विप्रचित्त। महापुत्र। श्वेत। गडिक। शुक्र। विग्र। बीजवापिन्। श्वन्। अर्जुन। अजिर। जीव। सुतङ्गमादिः॥ प्रगदिन्नादिभ्यो ञ्यः प्रत्ययो भवति। प्रागद्यम्॥ प्रगदिन्। मगदिन्। शरदिन्। कलिव। खडिव। गडिव। चूडार। मार्जार। कोविदार। प्रगद्यादिः॥ वराहादिभ्यः कक् प्रत्ययो भवति। वाराहकम्। पालाशकम्॥ वराह। पलाश। शिरीष। पिनद्ध। स्थूण। विदग्ध। विजग्ध। विभग्न। बाहु। खदिर। शर्करा। वराहादिः॥ कुमुदादिभ्यष्ठक् प्रत्ययो भवति। कौमुदिकम्॥ कुमुद। गोमथ।

१ - 'शः' इत्यपपाठो मुद्रितेषु। 'तृणशः, नडशः' इत्युदाहरणे अपि तथैव।

रथकार। दशग्राम। अश्वत्थ। शाल्मली। कुण्डल। मुनिस्थूल। कूट। मुचुकर्ण। कुमुदादिः॥ शिरीषशब्दोऽरीहणादिषु, कुमुदादिषु, वराहादिषु च पठ्यते, औत्सर्गिकोऽपि तत इष्यते, तस्य च वरणादिषु दर्शनाल्लुब् भवति। तथा चोक्तम्—शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनम् ( का० १.२.५१ ) इति॥

## जनपदे लुप् ॥ ८१ ॥

देशे तन्नाम्नीति यश्चातुरर्थिकः प्रत्ययो भवति, तस्य देशविशेषे जनपदेऽभिधेये लुब् भवति। ग्रामसमुदायो जनपदः। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। मत्स्याः। अङ्गाः। वङ्गाः। मगधाः। सुह्माः। पुण्ड्राः। इह कस्माद् न भवति—उदुम्बरा अस्मिन् सन्ति, औदुम्बरो जनपदः, वैदिशो जनपद इति ? तन्नाम्नीति वर्तते। न चात्र लुबन्तं तन्नामधेयं भवति॥

## वरणादिभ्यश्च ॥ ८२ ॥

वरण इत्येवमादिभ्य उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुब् भवति। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः। शृङ्गी। शाल्मलयः। चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति। कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी। शिरीषाः। काञ्ची॥ वरणाः, पूर्वौ गोदौ। आलिङ्ग्यायन। पर्णी। शृङ्गी। शाल्मलयः। सदाण्वी। वणिकि। वणिक। जालपद। मथुरा। उज्जयिनी। गया। तक्षशिला। उरशा। आकृत्या॥

## शर्कराया वा ॥ ८३ ॥

शर्कराशब्दादुत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य वा लुब् भवति। वाग्रहणं किम्, यावता शर्कराशब्दः कुमुदादिषु वराहादिषु च पठ्यते, तत्र पाठसामर्थ्यात् प्रत्ययस्य पक्षे श्रवणं भविष्यति ? एवं तर्ह्येतज् ज्ञापयति—शर्कराशब्दादौत्सर्गिको भवति, तस्यायं विकल्पितो लुबिति। शर्करा। शार्करम्। गणपाठात् च श्रवणमुत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ, तदेवं षड् रूपाणि भवन्ति। शर्करा। शार्करम्। शर्करिकम्। शार्करकम्। शार्करिकम्। शर्करीयमिति॥

## ठक्छौ च ॥ ८४ ॥

शर्कराशब्दाट् ठक् छ इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ। यथासंभवमर्थसंबन्धः। शार्करिकम्। शर्करीयम्॥

## नद्यां मतुप् ॥ ८५ ॥

नद्यामभिधेयायां मतुप् प्रत्ययो भवति चातुरर्थिकः। तन्नाम्नो देशस्य विशेषणं नदी। उदुम्बरा यस्यां सन्ति उदुम्बरावती। मशकावती। वीरणावती। पुष्करावती। इक्षुमती। द्रुमती। इह कस्माद् न भवति—भागीरथी। भैमरथी ? मतुबन्तस्यातन्नामधेयत्वात्॥

## मध्वादिभ्यश्च ॥ ८६ ॥

मधु इत्येवमादिभ्यः शब्देभ्यो मतुप् प्रत्ययो भवति चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्। बिसवान्॥ मधु। बिस। स्थाणु। मुष्टि। इक्षु। वेणु। रम्य। ऋक्ष। कर्कन्धु। शमी। किरीर। हिम। किशरा। शर्पणा। मरुत्। मरुव। दार्वाघाट। शर। इष्टका। तक्षशिला। शक्ति। आसन्दी। आसुति। शलाका। आमिधी। खडा। वेटा। मध्वादिः॥

## कुमुदनडवेतसेभ्यो ड्मतुप्॥ ८७ ॥

कुमुद नड वेतस इत्येतेभ्यः शब्देभ्यो ड्मतुप् प्रत्ययो भवति चातुरर्थिकः। कुमुद्वान्। नड्वान्। वेतस्वान् ॥ महिषाच्चेति वक्तव्यम्॥ महिष्मान् नाम देशः॥

## नडशादाड् ड्वलच् ॥ ८८ ॥

नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति चातुरर्थिकः। यथासंभवमर्थसंबन्धः। नड्वलम्। शाद्वलम्॥

## शिखाया वलच् ॥ ८९ ॥

शिखाशब्दाद् वलच् प्रत्ययो भवति चातुरर्थिकः। यथासंभवमर्थसंबन्धः। शिखावलं नाम नगरम्। मतुप्प्रकरणेऽपि शिखाया वलचं ( ५.२.११३ ) वक्ष्यति, तददेशार्थं वचनम्॥

## उत्करादिभ्यश्छः ॥ ९० ॥

उत्कर इत्येवमादिभ्यश्छः प्रत्ययो भवति चातुरर्थिकः। यथासंभवमर्थसंबन्धः। उत्करीयम्। शफरीयम्॥ उत्कर। संफल। शफर। पिप्पल। पिप्पलीमूल। अश्मन्। अर्क। पर्ण। सुपर्ण। खलाजिन। इडा। अग्नि। तिक। कितव। आतप। अनेक। पलाश। तृणव। पिचुक। अश्वत्थ। शकाक्षुद्र। भस्त्रा। विशाला। अवरोहित। गर्त। शाल। अन्य। जन्या। अजिन। मञ्च। चर्मन्। उत्क्रोश। शान्त। खदिर। शूर्पणाय।

श्यावनाय। नैव। बक। नितान्त। वृक्ष। इन्द्रवृक्ष। आर्द्रवृक्ष। अर्जुनवृक्ष। उत्करादिः॥

## नडादीनां कुक् च ॥ ९१ ॥

नड इत्येवमादीनां कुगागमो भवति, छश्च प्रत्ययश्चातुरर्थिकः। यथासंभवमर्थ-संबन्धः। नडकीयम्। प्लक्षकीयम्॥ नड। प्लक्ष। बिल्व। वेणु। वेत्र। वेतस। तृण। इक्षु। काष्ठ। कपोत। क्रुञ्चाया ह्रस्वत्वं च ( ग० सू० ९० )। तक्षन् नलोपश्च ( ग० सू० ९१ )॥

## शेषे ॥ ९२ ॥

शेष इत्यधिकारोऽयम्। यानित ऊर्ध्वं प्रत्ययानुक्रमिष्यामः, शेषेऽर्थे ते वेदितव्याः। उपयुक्तादन्यः शेषः। अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्योऽन्योऽर्थः शेषः। तस्येदंविशेषा ह्यपत्य-समूहादयः, तेषु घादयो मा भूवन्निति शेषाधिकारः क्रियते। किं च, सर्वेषु जातादिषु घादयो यथा स्युः, अनन्तरेणैवार्थादिशेन संबन्धित्वेन कृतार्थता मा विज्ञायीति[1] साकल्यार्थं शेषवचनम्। वक्ष्यति—'राष्ट्रावारपाराद् घखौ' ( ४.२.९३ )—राष्ट्रियः। अवारपारीणः। शेष इति लक्षणं चाधिकारश्च। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। दृषदि पिष्टा दार्षदाः सक्तवः। उलूखले क्षुण्णः औलूखलो यावकः। अश्वैरुह्यत आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति॥

## राष्ट्रावारपाराद् घखौ ॥ ९३ ॥

राष्ट्र अवारपार इत्येताभ्यां यथासंख्यं घखावित्येतौ प्रत्ययौ भवतः। राष्ट्रियः। अवारपारीणः॥ विगृहीतादपीष्यते॥ अवारीणः। पारीणः॥ विपरीताच्च॥ पारावारीणः। प्रकृतिविशेषोपादानमात्रेण तावत् प्रत्यया विधीयन्ते। तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च पुरस्ताद् वक्ष्यन्ते॥

## ग्रामाद् यखञौ ॥ ९४ ॥

ग्रामशब्दाद् य खञ् इत्येतौ प्रत्ययौ भवतः। ग्राम्यः। ग्रामीणः॥

## कत्र्यादिभ्यो ढकञ् ॥ ९५ ॥

कत्रि इत्येवमादिभ्यो ढकञ् प्रत्ययो भवति। कात्रेयकः। औम्भेयकः॥ कत्रि। उम्भि। पुष्कर। पुष्कल[2]। मोदन। कुम्भी। कुण्डिन। नगर। वज्जी। भक्ति।

---

१ – 'ज्ञायीति' इति मुद्रितेपु। २ – 'पुष्कल' इति नास्ति है०।

माहिष्मती। चर्मण्वती। ग्राम। उखूया। कुड्यायां[1] यलोपश्च ( ग० सू० ९२ )। कत्र्यादिः॥

## कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु ॥ ९६ ॥

कुलकुक्षिग्रीवाशब्देभ्यो यथासंख्यं श्वन् असि अलंकार इत्येतेषु जातादिष्वर्थेषु ढकञ् प्रत्ययो भवति। कौलेयको भवति श्वा चेत्। कौलोऽन्यः। कौक्षेयको भवत्यसिश्चेत्। कौक्षोऽन्यः। ग्रैवेयको भवत्यलंकारश्चेत्। ग्रैवोऽन्यः॥

## नद्यादिभ्यो ढक् ॥ ९७ ॥

नदी इत्येवमादिभ्यो ढक् प्रत्ययो भवति। नादेयम्। माहेयम्। पूर्वनगरीशब्दोऽत्र पठ्यते। पौर्वनगरेयम्। केचित् तु पूर्वनगिरीति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति। पौरेयम्। वानेयम्। गैरेयमिति। तदुभयमपि दर्शनं प्रमाणम्॥ नदी। मही। वाराणसी। श्रावस्ती। कौशाम्बी। नवकौशाम्बी। काशफरी। खादिरी। पूर्वनगरी। पावा। मावा। साल्वा। दार्वा। दाल्वा। वासेनकी। वडवाया वृषे ( ग० सू० ९३ )॥

## दक्षिणापश्चात्पुरसस्त्यक् ॥ ९८ ॥

दक्षिणा पश्चात् पुरस् इत्येतेभ्यस्त्यक् प्रत्ययो भवति शैषिकः। दाक्षिणात्यः। पाश्चात्त्यः। पौरस्त्यः॥

## कापिश्याः ष्फक् ॥ ९९ ॥

कापिशीशब्दात् ष्फक् प्रत्ययो भवति शैषिकः। षकारो ङीषर्थः। कापिशायनं मधु। कापिशायनी द्राक्षा ॥बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम्॥ बाह्लायनी। और्दायनी। पार्दायनी॥

## रङ्कोरमनुष्येऽण् च ॥ १०० ॥

रङ्कुशब्दादण् प्रत्ययो भवति, चकारात् ष्फक् च शैषिकोऽमनुष्येऽभिधेये। राङ्कवो गौः। राङ्कवायणो गौः। अमनुष्य इति किम्? राङ्कवको मनुष्यः। ननु च रङ्कुशब्दः कच्छादिषु ( ४.२.१३३ ) पठ्यते, तत्र च 'मनुष्यतत्स्थयोर्वुञ्' ( ४.२.१३४ ) इति मनुष्ये परत्वाद् वुञैव भवितव्यम्, कच्छादिपाठादमनुष्येऽणपि सिद्धः, किमिह मनुष्य-प्रतिषेधेनाण्ग्रहणेन च? तदुच्यते, नैवायं मनुष्यप्रतिषेधः। किं तर्हि? नञिवयुक्तन्यायेन

---

१ – ' कुल्याया ' इति बाल०।

( परि० ७४ ) मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते। तेन राङ्कवः कम्बल इति ष्फग् न भवति। विशेषविहितेन च ष्फकाणो बाधा मा भूदित्यण्ग्रहणमपि क्रियते॥

## द्युप्रागपागुदक्प्रतीचो यत् ॥ १०१ ॥

दिव् प्राच् अपाच् उदच् प्रत्यच् इत्येतेभ्यो यत् प्रत्ययो भवति शैषिकः। दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। अव्ययात् तु कालवाचिनः परत्वात् ट्युट्युलौ भवतः। प्राक्तनम्॥

## कन्थायाष्ठक् ॥ १०२ ॥

कन्थाशब्दाट् ठक् प्रत्ययो भवति शैषिकः। कान्थिकः॥

## वर्णौ वुक् ॥ १०३ ॥

कन्थाया इत्येव। वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति शैषिकः। ठकोऽपवादः। वर्णुर्नाम नदः, तत्समीपो देशो वर्णुः। तद्विषयार्थवाचिनः कन्थाशब्दादयं प्रत्ययः। तथाहि—जातं हिमवत्सु कान्थकम्॥

## अव्ययात् त्यप् ॥ १०४ ॥

अव्ययात् त्यप् प्रत्ययो भवति शैषिकः।

अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः।
निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा॥

अमात्यः। इहत्यः। क्वत्यः। इतस्त्यः। तत्रत्यः। यत्रत्यः। परिगणनं किम् ? औपरिष्टः। पौरस्तः। पारस्तः। वृद्धात् तु छो भवति। आरातीयः ॥ त्यब् नेर्ध्रुवे॥ नियतं ध्रुवं नित्यम् ॥ निसो गते॥ निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चण्डालादिः ॥ आविसश्छन्दसि॥ आविस्शब्दाच् छन्दसि त्यप् प्रत्ययो भवति। आविष्ट्यों वर्धते ( ऋ० १.९५.५ ) ॥ अरण्याण् णो वक्तव्यः॥ आरण्याः सुमनसः ॥ दूरादेत्यः॥ दूरेत्यः पथिकः ॥ उत्तरादाहञ्॥ औत्तराहम्॥

## ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ १०५ ॥

ऐषमस् ह्यस् श्वस् इत्येतेभ्योऽन्यतरस्यां त्यप् प्रत्ययो भवति शैषिकः। ऐषमस्त्यम्, ऐषमस्तनम्। ह्यस्त्यम्, ह्यस्तनम्। श्वस्त्यम्, श्वस्तनम्। 'श्वसस्तुट् च' ( ४.३.१५ ) इति ठञपि तृतीयो भवति। शौवस्तिकम्॥

## तीररूप्योत्तरपदादञ्ञौ ॥ १०६ ॥

तीरोत्तरपदाद् रूप्योत्तरपदात् च प्रातिपदिकाद् यथासंख्यमञ् ञ इत्येतौ प्रत्ययौ भवतः शैषिकौ। अणोऽपवादौ। काकतीरम्। पाल्वलतीरम्। रूप्योत्तरपदात्—वार्करूप्यम्। शैवरूप्यम्। तीररूप्यान्तादिति नोक्तम्, बहुच्प्रत्ययपूर्वाद् मा भूदिति। बाहुतीरम्[1]। अणेव भवति ॥

## दिक्पूर्वपदादसंज्ञायां ञः ॥ १०७ ॥

असंज्ञायामिति प्रकृतिविशेषणम्। दिक्पूर्वपदात् प्रातिपदिकादसंज्ञाविषयाद् ञः प्रत्ययो भवति शैषिकः। अणोऽपवादः। पौर्वशालः। दाक्षिणशालः। आपरशालः। असंज्ञायामिति किम् ? पूर्वैषुकामशमः। अपरैषुकामशमः। 'दिक्संख्ये संज्ञायाम्' ( २. १.५० ) इति समासः। 'प्राचां ग्रामनगराणाम्' ( ७.३.१४ ) इत्युत्तरपदवृद्धिः। पदग्रहणं स्वरूपविधिनिरासार्थम् ॥

## मद्रेभ्योऽञ् ॥ १०८ ॥

दिक्पूर्वपदादित्येव। दिक्पूर्वपदाद् मद्रशब्दादञ् प्रत्ययो भवति शैषिकः। पौर्वमद्रः। आपरमद्रः। 'दिशोऽमद्राणाम्' ( ७.३.१३ ) इति पर्युदासादादिवृद्धिरेव ॥

## उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ १०९ ॥

दिग्ग्रहणं निवृत्तम्। उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्वचोऽन्तोदात्ताद् अञ् प्रत्ययो भवति शैषिकः। अणोऽपवादः। शैवपुरम्। माण्डवपुरम्। उदीच्यग्रामादिति किम् ? माथुरम्। बह्वच इति किम्? ध्वजी—ध्वाजम्। अन्तोदात्तादिति किम् ? शार्करीधानम्। शर्करीधानशब्दे[2] लित्स्वरेण धाशब्द उदात्तः॥

## प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥ ११० ॥

प्रस्थोत्तरपदात् पलद्यादिभ्यः ककारोपधात् च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। उदीच्यग्रामलक्षणस्याञोऽपवादः। माद्रीप्रस्थः। माहकीप्रस्थः। पलद्यादिभ्यः—पालदः। पारिषदः। ककारोपधात्—नैलीनकः। चैयातकः। पलद्यादिषु यो वाहीकग्रामः, ततष्ठञ्ञिठयोः ( ४.२.११७ ) अपवादः। यथा—गौष्ठी, नैतकीति। गोमतीशब्दः पठ्यते, ततो 'रोपधेतोः प्राचाम्' ( ४.२.१२३ ) इति वुञोऽपवादः। वाहीकशब्दः कोपधोऽपि पुनः पठ्यते परं छं ( ४.२.११४ ) बाधितुम्। अणुग्रहणं बाधकबाधनार्थम् ॥ पलदी। परिषत्। यकृल्लोमन्।

---

१ - 'बाहुरूप्यम्' इति मुद्रितेषु। २ - 'धानशब्द' इति है०।

रोमक। कालकूट। पटच्चर। वाहीक। कलकीट। मलकीट। कमलकीट। कमलभिदा। गोष्ठी। कमलकीर। बाहुकीट। नैतकी। परिखा। शूरसेन। गोमती। उदयान। पलद्यादिः॥

## कण्वादिभ्यो गोत्रे ॥ १११ ॥

गोत्रमिह न प्रत्ययार्थो न च प्रकृतिविशेषणम्। तर्ह्येवं संबध्यते—कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितः, तदन्तेभ्य एवाण् प्रत्ययो भवति शैषिकः। छस्यापवादः। काण्वाश्छात्राः। गौकक्षाः॥

## इञश्च ॥ ११२ ॥

गोत्र इत्येव। गोत्रे य इञ् विहितः, तदन्तात् प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। छस्यापवादः। दाक्षाः। प्लाक्षाः। माहकाः। गोत्र इत्येव—सौतङ्गमेरिदं सौतङ्गमीयम्॥

## न द्व्यचः प्राच्यभरतेषु ॥ ११३ ॥

द्व्यचः प्रातिपदिकात् प्राच्यभरतगोत्रादिञन्तादण् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। पैङ्गीयाः। प्रौष्ठीयाः। चैदीयाः। पौष्कीयाः। काशीयाः। पाशीयाः। द्व्यच इति किम्? पान्नागाराः। प्राच्यभरतेष्विति किम्? दाक्षाः। काशीया इति कथमुदाहृतम्, यावता काश्यादिभ्यष्ठञ्ञिठाभ्यां (४.२.११६) भवितव्यम्? नैतदस्ति। देशवाचिनः काशिशब्दस्य तत्र ग्रहणम्, चेदिशब्देन[१] साहचर्यात्। गोत्रात् तु 'वृद्धाच्छः' (४.२.११४) एव भवति। ज्ञापकाद् (२.४.६६) अन्यत्र प्राच्यग्रहणेन भरतग्रहणं न भवतीति स्वशब्देन भरतानामुपादानं कृतम्॥

## वृद्धाच्छः ॥ ११४ ॥

गोत्र इति नानुवर्तते। सामान्येन विधानम्। वृद्धात् प्रातिपदिकाच् छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। गार्गीयः। वात्सीयः। शालीयः। मालीयः। अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधीन् (४.२.१०४, १०६, १०९, ११०) तु परत्वाद् बाधते॥

## भवतष्ठक्छसौ ॥ ११५ ॥

---

१ – 'चैदिशब्देन' इति मुद्रितपाठः। 'वैदि०' इति पाठान्तरम्।

वृद्धादित्येव। भवच्छब्दाद् वृद्धात् ठक्छसित्येतौ प्रत्ययौ भवतः शैषिकौ। छस्यापवादौ। सकारः पदसंज्ञार्थः। भवतस्त्यदादित्वाद् वृद्धसंज्ञा। भावत्कः। भवदीयः। अवृद्धात् तु भवतः शतुरणेव भवति। भावतः॥

## काश्यादिभ्यष्ठञ्ञिठौ ॥ ११६ ॥

काशि इत्येवमादिभ्यष्ठञ् ञिठ इत्येतौ प्रत्ययौ भवतः शैषिकौ। इकार उच्चारणार्थः। ञकार एवोभयत्र विपर्यस्तदेशोऽनुबन्धः। स्त्रीप्रत्यये विशेषः। काशिकी, काशिका। चैदिकी, चैदिका[1]। वृद्धादित्यत्रानुवर्तते। ये त्ववृद्धाः पठ्यन्ते वचनप्रामाण्यात् तेभ्यः प्रत्ययविधिः। देवदत्तशब्दः पठ्यते, तस्य 'एङ् प्राचां देशे' (१.१.७५) इति वृद्धसंज्ञा। दैवदत्तिकः। वाहीकग्रामस्य तु नास्ति वृद्धसंज्ञा। दैवदत्तः। कथं भाष्य उदाहृतम्—वा नामधेयस्य वृद्धसंज्ञा वेदितव्या—देवदत्तीयाः, दैवदत्ताः (महाभाष्य १.१८९) इति, यावता वृद्धसंज्ञापक्षे काश्यादित्वाट् ठञ्ञिठाभ्यां भवितव्यम्? तत्रैवं वर्णयन्ति—वा नामधेयस्येति व्यवस्थितविभाषेयम्, सा छे कर्तव्ये भवति, ठञ्ञिठयोर्न भवतीति॥ काशि। चेदि[2]। संज्ञा। संवाह। अच्युत। मोहमान। शकुलाद। हस्तिकर्षू। कुदामन्। हिरण्य। करण। गोधाशन। भौरिकि। भौलिङ्गि। अरिन्दम। सर्वमित्र। देवदत्त। साधुमित्र। दासमित्र। दासग्राम। सौधावतान। युवराज। उपराज। सिन्धुमित्र। देवराज। आपदादिपूर्वपदात् कालात् (ग० सू० ९४)। आपत्कालिकी, आपत्कालिका। और्ध्वकालिकी, और्ध्वकालिका। तात्कालिकी, तात्कालिका॥

## वाहीकग्रामेभ्यश्च ॥ ११७ ॥

वृद्धादित्येव। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ प्रत्ययौ भवतः शैषिकौ। छस्यापवादौ। शाकलिकी, शाकलिका। मान्थविकी, मान्थविका॥

## विभाषोशीनरेषु ॥ ११८ ॥

वृद्धादिति वर्तते, वाहीकग्रामेभ्य इति च। उशीनरेषु ये वाहीकग्रामाः, तद्वाचिभ्यो वृद्धेभ्यः प्रातिपदिकेभ्यो विभाषा ठञ्ञिठौ प्रत्ययौ भवतः। आह्वजालिकी, आह्वजालिका, आह्वजालीया। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया॥

## ओर्देशे ठञ् ॥ ११९ ॥

वृद्धादिति नानुवर्तते, उत्तरसूत्रे पुनर्वृद्धग्रहणात्। उवर्णान्ताद् देशवाचिनः प्रातिपदिकाट् ठञ् प्रत्ययो भवति शैषिकः। नैषादकर्षुकः। शाबरजम्बुकः। देश इति किम्? पटोश्छात्राः

---

१ – 'बैदिकी, बैदिका' इति मुद्रितः पाठः। २ – 'बेदि' इति पाठान्तरम्।

पाटवाः। ठञ्ञिठयोः प्रकरणे ठञः केवलस्यानुवृत्तिर्न लभ्यत इति ठञ्ग्रहणं कृतम् ॥

## वृद्धात् प्राचाम् ॥ १२० ॥

ओर्देश इत्येव। उवर्णान्ताद् वृद्धात् प्राग्देशवाचिनः प्रातिपदिकाट् ठञ् प्रत्ययो भवति शैषिकः। आढकजम्बुकः। शाकजम्बुकः। नापितवास्तुकः। पूर्वेणैव ठञि सिद्धे नियमार्थं वचनम्—वृद्धादेव प्राचाम्, अवृद्धाद् न भवतीति। मल्लवास्तु—माल्लवास्तवः॥

## धन्वयोपधाद् वुञ् ॥ १२१ ॥

वृद्धादिति वर्तते, देश इति च। धन्ववाचिनो यकारोपधात् च देशाभिधायिनो वृद्धात् प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। धन्वशब्दो मरुदेशवचनः। पारेधन्वकः। ऐरावतकः। योपधात्—सांकाश्यकः। काम्पिल्यकः॥

## प्रस्थपुरवहान्ताच्च ॥ १२२ ॥

वृद्धादित्येव, देश इति च। अन्तशब्दः प्रत्येकमभिसंबध्यते। प्रस्थ पुर वह इत्येवमन्ताद् देशवाचिनः प्रातिपदिकाद् वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः। कान्तीपुरकः। पैलुवहकः। फाल्गुनीवहकः। पुरान्तो रोपधः, तंत उत्तरसूत्रेणैव सिद्धम्, अप्रागर्थमिह ग्रहणम्॥

## रोपधेतोः प्राचाम् ॥ १२३ ॥

वृद्धादित्येव, देश इति च। तद्विशेषणं प्राग्ग्रहणम्। रोपधादीकारान्तात् च प्राग्देश-वाचिनो वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। पाटलिपुत्रकाः। ऐकचक्रकाः। ईतः खल्वपि—काकन्दी—काकन्दकः। माकन्दी—माकन्दकः। प्राचामिति किम्? दात्तामित्रीयः। तपरकरणं विस्पष्टार्थम्॥

## जनपदतदवध्योश्च ॥ १२४ ॥

वृद्धादित्येव, देश इति च। तद्विशेषणं जनपदतदवधी। वृद्धात् जनपदवाचिन-स्तदवधिवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। आभिसारकः। आदर्शकः। जनपदावधेः खल्वपि—औपुष्टकः। श्यामायनकः। तदवधिरपि जनपद एव गृह्यते न ग्रामः। किमर्थं तर्हि अवधिग्रहणम्? बाधकबाधनार्थम्। गर्तोत्तरपदाच्छं बाधित्वा वुञेव जनपदावधेर्भवति। त्रैगर्तकः॥

## अवृद्धादपि बहुवचनविषयात् ॥ १२५ ॥

जनपदतदवध्योरित्येव। अवृद्धाद् वृद्धात् च जनपदात् तदवधिवाचिनश्च बहुवचनविषयात् प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। अण्छयोरपवादः। अवृद्धाद् जनपदात् तावत्—अङ्गाः। वङ्गाः। कलिङ्गाः। आङ्गकः। वाङ्गकः। कालिङ्गकः। अवृद्धाज्जनपदावधेः—अजमीढाः। अजक्रन्दाः। आजमीढकः। आजक्रन्दकः। वृद्धात् जनपदात्—दार्वाः। जाम्ब्वाः। दार्वकः। जाम्ब्वकः। वृद्धाद् जनपदावधेः—कालञ्जराः। वैकुलिशाः। कालञ्जरकः। वैकुलिशकः। विषयग्रहणमनन्यत्रभावार्थम्। जनपदैकशेषबहुत्वे मा भूत्। वर्तन्यः—वार्तनः। अपिग्रहणं किम्, यावता वृद्धात् पूर्वेणैव सिद्धम्? तक्रकौण्डिन्यन्यायेन बाधा मा विज्ञायीति समुच्चीयते॥

## कच्छाग्निवक्त्रगर्तोत्तरपदात् ॥ १२६ ॥

देश इत्येव। उत्तरपदशब्दः प्रत्येकमभिसंबध्यते। कच्छाद्युत्तरपदाद् देशवाचिनः प्रातिपदिकात् चावृद्धाद् वृद्धात् च वुञ् प्रत्ययो भवति शैषिकः। छाणोरपवादः। दारुकच्छकः। पैप्पलीकच्छकः। काण्डाग्नकः। वैभुजाग्नकः। ऐन्द्रवक्त्रकः। सैन्धुवक्त्रकः। बाहुगर्त्तकः। चाक्रगर्त्तकः॥

## धूमादिभ्यश्च ॥ १२७ ॥

धूमादिभ्यो देशवाचिभ्यः प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति शैषिकः। अणादेरपवादः। धौमकः। खाण्डकः। पाथेयशब्दः पठ्यते, तस्य योपधत्वादेव वुञि सिद्धे सामर्थ्याददेशार्थं ग्रहणम्। तथा विदेहानर्तशब्दयोर्जनपदलक्षणे वुञि सिद्धेऽदेशार्थः पाठः। विदेहानां क्षत्रियाणां स्वं वैदेहकम्। आनर्तकम्। समुद्रशब्दः पठ्यते, तस्य नावि मनुष्ये च वुञिष्यते। सामुद्रिका नौः। सामुद्रको मनुष्यः। अन्यत्र न भवति—सामुद्रं जलमिति॥ धूम। खण्ड। शशादन। आर्जुनाद। दाण्डायनस्थली। माहकस्थली। घोषस्थली। माषस्थली। राजस्थली। राजगृह। सत्रासाह। भक्षास्थली। मद्रकूल। गर्तकूल। आञ्जीकूल। द्व्याहाव। त्र्याहाव। संहीय। वर्वर। वर्चगर्त। विदेह। आनर्त। माठर। पाथेय। घोष। शिष्य। मित्र। वल। आराज्ञी। धार्तराज्ञी। अवयात। तीर्थ। कूलात् सौवीरेषु (ग० सू० ९५)। समुद्रान्नावि मनुष्ये च (ग० सू० ९६)। कुक्षि। अन्तरीप। द्वीप। अरुण। उज्जयिनी। दक्षिणापथ। साकेत॥

## नगरात् कुत्सनप्रावीण्ययोः ॥ १२८ ॥

नगरशब्दाद् वुञ् प्रत्ययो भवति शैषिकः कुत्सने प्रावीण्ये च गम्यमाने। प्रत्ययार्थविशेषणं चैतत्, कुत्सने प्रावीण्ये च जातादौ प्रत्ययार्थ इति। कुत्सनं निन्दनम्। प्रावीण्यं नैपुण्यम्।

केनायं मुषितः पन्था गात्रे पक्ष्मालिधूसरः।

इह नगरे मनुष्येण संभाव्यत एतन्नागरकेण। चोरा हि नागरका भवन्ति।

केनेदं लिखितं चित्रं मनोनेत्रविकाशि यत्।

इह नगरे मनुष्येण संभाव्यत एतन्नागरकेण। प्रवीणा हि नागरका भवन्ति। कुत्सनप्रावीण्ययोरिति किम् ? नागरा ब्राह्मणाः। कत्र्यादिषु तु संज्ञाशब्देन साहचर्यात् संज्ञानगरं पठ्यते, तस्मिन् नागरेयकमिति प्रत्युदाहार्यम्॥

## अरण्यान् मनुष्ये ॥ १२९ ॥

अरण्यशब्दाद् वुञ् प्रत्ययो भवति शैषिको मनुष्येऽभिधेये। औपसंख्यानिकस्य णस्यापवादः। आरण्यको मनुष्यः ॥ पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्॥ आरण्यकः पन्थाः। आरण्यकोऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती ॥ वा गोमयेषु॥ आरण्याः, आरण्यका गोमयाः। एतेष्विति किम् ? आरण्याः पशवः॥

## विभाषा कुरुयुगन्धराभ्याम् ॥ १३० ॥

कुरु युगन्धर इत्येताभ्यां विभाषा वुञ् प्रत्ययो भवति शैषिकः। कौरवकः, कौरवः। यौगन्धरकः, यौगन्धरः। जनपदशब्दावेतौ, ताभ्याम् 'अवृद्धादपि०' ( ४.२.१२५ ) इति नित्ये वुञि प्राप्ते विकल्प उच्यते। कुरुशब्दः कच्छादिषु ( ४.२.१३३ ) अपि पठ्यते, तत्र वचनादणपि भविष्यति। सैषा[1] युगन्धरार्था विभाषा। 'मनुष्यतत्स्थयोः०' ( ४.२.१३४) तु कुरुशब्दाद् नित्य एव वुञ् प्रत्ययो भवति। कौरवको मनुष्यः, कौरवकमस्य हसितमिति॥

## मद्रवृज्योः कन् ॥ १३१ ॥

मद्रवृजिशब्दाभ्यां कन् प्रत्ययो भवति शैषिकः। जनपदवुञोऽपवादः। मद्रेषु जातो मद्रकः। वृजिकः॥

## कोपधादण् ॥ १३२ ॥

देश इत्येव। ककारोपधात् प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। जनपदवुञोऽपवादः। अन्यत्र जनपदं मुक्त्वा पूर्वेण ( ४.२.११० ) एव कोपधादणि सिद्धम्। ऋषिकेषु जातः, आर्षिकः। माहिषिकः। अण्ग्रहणमुवर्णान्तादपि यथा स्यात्। इक्ष्वाकुषु जात ऐक्ष्वाकः॥

---

१ – 'पारिशेष्यात्' इति बाल०।

## कच्छादिभ्यश्च ॥ १३३ ॥

देश इत्येव। कच्छ इत्येवमादिभ्यो देशवाचिभ्योऽण् प्रत्ययो भवति शैषिकः। वुञादेरपवादः। काच्छः। सैन्धवः। वार्णवः। कच्छशब्दो न बहुवचनविषयः, तस्य मनुष्यतत्स्थयोर्वुञर्थः ( ४.२.१३४ ) पाठः। विजापकशब्दः पठ्यते। तस्य कोपधत्वाद् ( ४.२.१३२ ) एवाणि सिद्ध इह ग्रहणमुत्तरार्थम्॥ कच्छ। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। कुरु। रङ्कु। अणु। खण्ड। द्वीप। अनूप। अजवाह। विजापक। कुलून। कच्छादिः॥

## मनुष्यतत्स्थयोर्वुञ् ॥ १३४ ॥

कच्छादिभ्य इत्येव। मनुष्ये मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ् प्रत्ययो भवति। अणोऽपवादः। काच्छको मनुष्यः। काच्छकमस्य हसितम् , जल्पितम्। काच्छिका चूडा। सैन्धवको मनुष्यः। सैन्धवकमस्य हसितम् , जल्पितम्। सैन्धविका चूडा। मनुष्यतत्स्थयोरिति किम् ? काच्छो गौः। सैन्धवः। वार्णवः॥

## अपदातौ साल्वात् ॥ १३५ ॥

साल्वशब्दः कच्छादिषु पठ्यते, ततः पूर्वेणैव मनुष्यतत्स्थयोर्वुञि सिद्धे नियमार्थं वचनम्। अपदातावेव मनुष्ये मनुष्यस्थे च साल्वशब्दाद् वुञ् प्रत्ययो भवति। साल्वको मनुष्यः। साल्वकमस्य हसितम्, जल्पितम्। अपदाताविति किम् ? साल्वः पदातिर्व्रजति॥

## गोयवाग्वोश्च ॥ १३६ ॥

गवि यवाग्वां च जातादौ प्रत्ययार्थे साल्वशब्दाद् वुञ् प्रत्ययो भवति शैषिकः। कच्छाद्यणोऽपवादः। साल्वको गौः। साल्विका यवागूः। साल्वमन्यत्॥

## गर्तोत्तरपदाच्छः ॥ १३७ ॥

देश इत्येव। गर्तोत्तरपदाद् देशवाचिनः प्रातिपदिकात् छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। वाहीकग्रामलक्षणं च प्रत्ययं परत्वाद् बाधते। वृकगर्तीयम्। शृगालगर्तीयम्। श्वाविद्गर्तीयम्। उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम्। बाहुगर्तम्॥

## गहादिभ्यश्च ॥ १३८ ॥

गह इत्येवमादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति शैषिकः। अणादेरपवादः। गहीयः। अन्तःस्थीयः। देशाधिकारेऽपि संभवापेक्षं विशेषणम्, न सर्वेषाम्। मध्य

मध्यमं चाण् चरण इति पठ्यते, तस्यायमर्थः। मध्यशब्दः प्रत्ययसन्नियोगेन मध्यममापद्यते। मध्यमीयाः। चरणे तु प्रत्ययार्थेऽण् भवति, माध्यमा इति। तदेतद् विशेष एव स्मर्यते— पृथिवीमध्यस्य मध्यमभावः, चरणसंबन्धेन निवासलक्षणोऽणिति च। मुखपार्श्वतसोर्लोपश्च। मुखतीयम्। पार्श्वतीयम्। कुग् जनस्य परस्य च । जनकीयम्। परकीयम्। देवस्य चेति वक्तव्यम्। देवकीयम्। वेणुकादिभ्यश्छण् वक्तव्यः। आकृतिगणोऽयम्। वैणुकीयम्। वैत्रकीयम्। औत्तरपदकीयम्। प्रास्थकीयम्। माध्यमकीयम्॥ गह। अन्तःस्थ। सम। विषम। मध्य मध्यमं चाण् चरणे ( ग० सू० ९७ )। उत्तम। अङ्ग। वङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख। उत्तमशाख। समानशाख। एकग्राम। एकवृक्ष। एकपलाश। इष्वग्र। इष्वनी। अवस्यन्दी। कामप्रस्थ। खाडायनि। कावेरणि। शैशिरि। शौङ्गि। आसुरि। आहिंसि। आमित्रि। व्याडि। वैदजि। भौजि। आढ्यश्वि। आनृशंसि। सौवि। पारकि। अग्निशर्मन्। देवशर्मन्। श्रौति। आरटकि। वाल्मीकि। क्षेमवृद्धिन्। उत्तर। अन्तर। मुखपार्श्वतसोर्लोपः ( ग० सू० ९८ )। जनपरयोः कुक् च ( ग० सू० ९९ )। देवस्य च ( ग० सू० १०० )। वेणुकादिभ्यश्छण् ( ग० सू० १०१)। गहादिः॥

## प्राचां कटादेः ॥ १३९ ॥

देश इत्येव, तद्विशेषणं प्राग्ग्रहणम्। प्राग्देशवाचिनः कटादेः प्रातिपदिकाच् छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। कटनगरीयम्। कटघोषीयम्। कटपल्वलीयम्॥

## राज्ञः क च ॥ १४० ॥

असंभवाद् देशाधिकारो न विशेषणम्। राज्ञः ककारश्चान्तादेशो भवति छश्च प्रत्ययः। राजकीयम्। आदेशमात्रमिह विधेयम् , प्रत्ययस्तु 'वृद्धाच्छः' ( ४. २. ११४ ) इत्येव सिद्धः॥

## वृद्धादकेकान्तखोपधात् ॥ १४१ ॥

देश इत्येव। वृद्धाद् देशवाचिनोऽक इक इत्येवमन्तात् खकारोपधात् च प्रातिपदिकाच् छः प्रत्ययो भवति शैषिकः। कोपधलक्षणस्याणोऽपवादः, वाहीकग्रामलक्षणस्य च प्रत्ययस्य, 'रोपधेतोः प्राचाम्' ( ४.२.१२३ ) इति च। अकान्तात् तावत्—आरीहणकीयम्। द्रौघणकीयम्। इकान्तात्—आश्वपथिकीयम्। शाल्मलिकीयम्। खोपधात्—कौटिशिखीयम्। आयोमुखीयम् ॥ अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम्॥ सौसुकीयम्। मौसुकीयम्। ऐन्द्रवेणुकीयम्॥

## कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ १४२ ॥

देश इत्येव, वृद्धादिति च। कन्थाद्युत्तरपदाद् देशवाचिनो वृद्धात् प्रातिपदिकाच् छः प्रत्ययो भवति शैषिकः। वाहीकग्रामादिलक्षणस्य प्रत्ययस्यापवादः। दाक्षिकन्थीयम्। माहिकिकन्थीयम्। दाक्षिपलदीयम्। माहिकिपलदीयम्। दाक्षिनगरीयम्। माहिकिनगरीयम्। दाक्षिग्रामीयम्। माहिकिग्रामीयम्। दाक्षिह्रदीयम्। माहिकिह्रदीयम्॥

## पर्वताच्च ॥ १४३ ॥

पर्वतशब्दाच् छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। पर्वतीयो राजा। पर्वतीयः पुरुषः॥

## विभाषामनुष्ये ॥ १४४ ॥

पर्वतशब्दाच् छः प्रत्ययो भवति वामनुष्ये वाच्ये। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। पर्वतीयानि फलानि, पार्वतानि फलानि। पर्वतीयमुदकम्, पार्वतमुदकम्। अमनुष्य इति किम् ? पर्वतीयो मनुष्यः॥

## कृकणपर्णाद् भारद्वाजे ॥ १४५ ॥

देश इत्येव। भारद्वाजशब्दोऽपि देशवचन एव, न गोत्रशब्दः। प्रकृतिविशेषणं चैतत्, न प्रत्ययार्थः। कृकणपर्णशब्दाभ्यां भारद्वाजदेशवाचिभ्यां छः प्रत्ययो भवति शैषिकः। कृकणीयम्। पर्णीयम्। भारद्वाज इति किम् ? कार्कणम्। पार्णम्॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः॥



# ॥ चतुर्थाध्यायस्य तृतीयः पादः ॥

## युष्मदस्मदोरन्यतरस्यां खञ् च ॥ १ ॥

देशाधिकारो निवृत्तः। युष्मदस्मदोः खञ् प्रत्ययो भवति शैषिकः। चकाराच् छश्च। अन्यतरस्यांग्रहणाद् यथाप्राप्तम्। तदेते त्रयः प्रत्यया भवन्ति, तत्र वैषम्याद् यथासंख्यं न भवति। त्यदादित्वाद् वृद्धसंज्ञकयोर्युष्मदस्मदोश्छे प्राप्ते प्रत्येकं प्रत्ययत्रयं विधीयते। यौष्माकीणः। आस्माकीनः। युष्मदीयः। अस्मदीयः। यौष्माकः। आस्माकः॥

## तस्मिन्नणि च युष्माकास्माकौ ॥ २ ॥

तस्मिन्निति साक्षाद् विहितः खञ् निर्दिश्यते, न चकारानुकृष्टश्छः। तस्मिन् खञि अणि च युष्मदस्मदोर्यथासंख्यं युष्माक अस्माक इत्येतावादेशौ भवतः। निमित्तयोरादेशौ प्रति यथासंख्यं कस्माद् न भवति ? योगविभागः करिष्यते, तस्मिन् खञि युष्मदस्मदोर्युष्माकास्माकौ भवतः। ततोऽणि चेति। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः। तस्मिन्नणि चेति किम् ? युष्मदीयः। अस्मदीयः॥

## तवकममकावेकवचने ॥ ३ ॥

एकवचनपरयोर्युष्मदस्मदोस्तवक ममक इत्येतावादेशौ भवतो यथासंख्यं तस्मिन् खञि अणि च परतः। निमित्तयोस्तु यथासंख्यं पूर्ववदेव न भवति। ननु च 'न लुमताङ्गस्य' (१.१.६३) इति प्रत्ययलक्षणप्रतिषेधादेकवचनपरता युष्मदस्मदोर्न संभवति ? वचनात् प्रत्ययलक्षणं भविष्यति। अथवा नैवेदं प्रत्ययग्रहणम्[1]। किं तर्हि ? अन्वर्थग्रहणम्। एकवचने युष्मदस्मदी एकस्यार्थस्य वाचके तवकममकावादेशौ प्रतिपद्येते इति सूत्रार्थः। तावकीनः। मामकीनः। तावकः। मामकः। तस्मिन्नणि चेत्येव—त्वदीयः। मदीयः॥

## अर्धाद् यत् ॥ ४ ॥

अर्धशब्दाद् यत् प्रत्ययो भवति शैषिकः। अणोऽपवादः। अर्ध्यम् ॥ सपूर्वपदाट् ठञ् वक्तव्यः॥ बालेयार्धिकम्। गौतमार्धिकम्॥

## परावराधमोत्तमपूर्वाच्च ॥ ५ ॥

पर अवर अधम उत्तम इत्येवंपूर्वाच् चार्धाद् यत् प्रत्ययो भवति शैषिकः। परार्ध्यम्।

---

१ – 'प्रत्ययलक्षणम्' इति मुद्रितेष्वपपाठः।

अवरार्ध्यम्। अधमार्ध्यम्। उत्तमार्ध्यम्। पूर्वग्रहणं किम्, परावराधमोत्तमेभ्य इत्येवोच्यते, अर्धादिति वर्तते। तस्य तत्पूर्वता विज्ञास्यते ? परावरशब्दावदिग्ग्रहणावपि स्तः, परं सुखम् अवरं सुखमिति। तत्र कृतार्थत्वाद् दिक्छब्दपक्षे परेण ठञ्यतौ स्याताम्। अस्मात् पूर्वग्रहणाद् यत् प्रत्ययो भवति—परार्ध्यम्, अवरार्ध्यमिति ॥

## दिक्पूर्वपदाट् ठञ् च ॥ ६ ॥

दिक्पूर्वपदादर्धान्तात् प्रातिपदिकात् ठञ् प्रत्ययो भवति चकाराद् यत् च शैषिकः। अणोऽपवादः। पौर्वार्धिकम्, पूर्वार्ध्यम्। दाक्षिणार्धिकम्, दक्षिणार्ध्यम्। पदग्रहणं स्वरूपविधिनिवारणार्थम् ॥

## ग्रामजनपदैकदेशादञ्ठञौ ॥ ७ ॥

दिक्पूर्वपदादित्येव। ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च प्रातिपदिकाद् दिक्पूर्वपदादर्धान्तादञ्ठञौ प्रत्ययौ भवतः शैषिकौ यतोऽपवादौ। इमे खल्वस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः, पौर्वार्धिकाः। दाक्षिणार्धाः, दाक्षिणार्धिकाः ॥

## मध्यान् मः ॥ ८ ॥

मध्यशब्दाद् मः प्रत्ययो भवति शैषिकः। अणोऽपवादः। मध्यमः ॥ आदेश्चेति वक्तव्यम् ॥ आदिमः ॥ अवोऽधसोर्लोपश्च ॥ अवमम्। अधमम् ॥

## अ साम्प्रतिके ॥ ९ ॥

अकारः प्रत्ययो भवति मध्यशब्दात् सांप्रतिके जातादौ प्रत्ययार्थे। मस्यापवादः। सांप्रतिकं न्याय्यं युक्तमुचितं सममुच्यते। नातिदीर्घं नातिह्रस्वं मध्यं काष्ठम्। नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः। मध्या स्त्री ॥

## द्वीपादनुसमुद्रं यञ् ॥ १० ॥

समुद्रसमीपे यो द्वीपः, तस्माद् यञ् प्रत्ययो भवति शैषिकः। कच्छादिपाठाद् (४.२.१३३) अणो मनुष्यवुञः (४.२.१३४) चापवादः। द्वैप्यम्। द्वैप्यं[1] भवन्तोऽनुचरन्ति चक्रम्। अनुसमुद्रमिति किम् ? द्वैपकम्। द्वैपमन्यत् ॥

१ – 'द्वैप्याः' इति पाठान्तरम्।

## कालाट् ठञ् ॥ ११ ॥

कालविशेषवाचिनः प्रातिपदिकाट् ठञ् प्रत्ययो भवति शैषिकः। अणोऽपवादः। वृद्धात् तु छं परत्वाद् बाधते। मासिकः। आर्धमासिकः। सांवत्सरिकः। यथाकथंचिद् गुणवृत्त्यापि काले वर्तमानात् प्रत्यय इष्यते। कादम्बपुष्पिकम्। व्रैहिपलालिकम्। 'तत्र जातः' (४.३.२५) इति प्रागतः कालाधिकारः॥

## श्राद्धे शरदः ॥ १२ ॥

शरच्छब्दाट् ठञ् प्रत्ययो भवति श्राद्धेऽभिधेये शैषिकः। ऋत्वणः (४.३.१६) अपवादः। श्राद्ध इति च कर्म गृह्यते, न श्रद्धावान् पुरुषः, अनभिधानात्। शारदिकं श्राद्धम्। शारदमन्यत्॥

## विभाषा रोगातपयोः ॥ १३ ॥

शरद इत्येव। रोग आतपे चाभिधेये शरच्छब्दाट् ठञ् प्रत्ययो वा भवति शैषिकः। ऋत्वणोऽपवादः। शारदिको रोगः। शारदिक आतपः। शारदो रोगः। शारद आतपः। रोगातपयोरिति किम्? शारदं दधि॥

## निशाप्रदोषाभ्यां च ॥ १४ ॥

निशाप्रदोषशब्दाभ्यां च विभाषा ठञ् प्रत्ययो भवति शैषिकः। 'कालाट् ठञ्' (४.३.११) इति नित्ये ठञि प्राप्ते विकल्प उच्यते। नैशिकम्, नैशम्। प्रादोषिकम्, प्रादोषम्॥

## श्वसस्तुट् च ॥ १५ ॥

विभाषेत्येव। श्वःशब्दाद् विभाषा ठञ् प्रत्ययो भवति, तस्य च तुडागमो भवति। त्यप् प्रत्ययोऽप्यतो विहित 'ऐषमोह्यःश्वसोऽन्यतरस्याम्' (४.२.१०५) इति। एताभ्यां मुक्ते ट्युट्युलावपि भवतः। शौवस्तिकः, श्वस्त्यः, श्वस्तनः॥

## संधिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥ १६ ॥

कालादित्येव। संधिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् प्रत्ययो भवति शैषिकः। ठञोऽपवादः। अण्ग्रहणं वृद्धाच्छस्य (४.२.११४) बाधनार्थम्। संधिवेलादिभ्यस्तावत्—सांधिवेलम्। सांध्यम्। ऋतुभ्यः—ग्रैष्मम्। शैशिरम्। नक्षत्रेभ्यः—

तैषम्[१]। पौषम् ॥ संधिवेला। संध्या। अमावास्या। त्रयोदशी। चतुर्दशी। पञ्चदशी। पौर्णमासी। प्रतिपत्। संवत्सरात् फलपर्वणोः ( ग० सू० १०२ )। सांवत्सरं फलम्। सांवत्सरं पर्व ॥

## प्रावृष एण्यः ॥ १७ ॥

प्रावृष्शब्दादेण्यः प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। प्रावृषेण्यो बलाहकः ॥

## वर्षाभ्यष्ठक् ॥ १८ ॥

वर्षाशब्दाट् ठक् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। वार्षिकं वासः। वार्षिकमनुलेपनम् ॥

## छन्दसि ठञ् ॥ १९ ॥

वर्षाशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ठकोऽपवादः। स्वरे भेदः। नभंश्च नभुस्यंश्चु वार्षिकावृतू ( तै० सं० ४.४.११.१ )॥

## वसन्ताच्च ॥ २० ॥

छन्दसीत्येव। वसन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। मधुंश्चु माधवश्चु वासन्तिकावृतू ( तै० सं० ४.४.११.१ )॥

## हेमन्ताच्च ॥ २१ ॥

छन्दसीत्येव। हेमन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। सहंश्च सहुस्यंश्चु हैमन्तिकावृतू ( तै० सं० ४.४.११.१ )। योगविभाग उत्तरार्थः ॥

## सर्वत्राण् च तलोपश्च ॥ २२ ॥

हेमन्तशब्दादण् प्रत्ययो भवति, तत्सन्नियोगेन चास्य तकारलोपः। हैमनं वासः। हैमनमुपलेपनम्। सर्वत्रग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्। छन्दसि भाषायां च सर्वत्रैतद् भवति। ननु च छन्दसीति नानुवर्तिष्यते ? सैवाननुवृत्तिः शब्देनाख्यायते प्रयत्नाधिक्येन पूर्वसूत्रेऽपि संबन्धार्थम्। हैमन्तिकमिति हि भाषायामपि ठञं स्मरन्ति। अथाणचेति चकारः किमर्थः ? अण् , यथाप्राप्तं च ऋत्वणिति। कः पुनरनयोरणोर्विशेषः ? ऋत्वणि

१ – इतः पूर्वं ' सौवातम् ' इत्यधिकं पद० ।

हि तकारलोपो नास्ति हैमन्ती पङ्क्तिरिति। तदेवं त्रीणि रूपाणि भवन्ति। हैमन्तिकम् (तै० सं० ४.४.११.१), हैमन्तम् (पै० सं० १७.२९.११), हैम्नम् (शौ० सं० १५.४.१४) इति॥

## सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २३ ॥

कालादित्येव। सायं चिरं प्राह्णे प्रगे इत्येतेभ्योऽव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ प्रत्ययौ भवतः, तयोश्चादिष्टयोः तुडागमो भवति। सायंतनम्। चिरंतनम्। प्राह्णेतनम्। प्रगेतनम्। अव्ययेभ्यः—दोषातनम्। दिवातनम्। सायमिति मकारान्तं पदमव्ययम्, ततोऽव्ययत्वादेव सिद्धः प्रत्ययः। यस्तु स्यतेरन्तकर्मणो घञि सायशब्दस्तस्येदं मकारान्तत्वं प्रत्ययसन्नियोगेन निपात्यते। दिवसावसानं सायः। चिरशब्दस्यापि मकारान्तत्वं निपात्यते। प्राह्णे प्रगे इत्येकारान्तत्वम् ॥ चिरपरुत्परारिभ्यस्त्नो वक्तव्यः॥ चिरत्नम्। परुत्नम्। परारित्नम् ॥प्रगस्य छन्दसि गलोपश्च॥ प्रत्नम् (ऋ० १.३६.४) ॥ अग्रपश्चाड्डिमच्॥ अग्रिमम्। पश्चिमम् ॥ अन्ताच्चेति वक्तव्यम्॥ अन्तिमम्॥

## विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ २४ ॥

पूर्वाह्णापराह्णशब्दाभ्यां विभाषा ट्युट्युलौ प्रत्ययौ भवतः, तुट् च तयोरागमः। 'कालाट् ठञ्' (४.३.११) इति ठञि प्राप्ते वचनम्, पक्षे सोऽपि भवति। पूर्वाह्णेतनम्। अपराह्णेतनम्। पौर्वाह्णिकम्। आपराह्णिकम्। 'घकालतनेषु कालनाम्नः' (६.३.१७) इति सप्तम्या अलुक्। यदा तु न सप्तमी समर्थविभक्तिः पूर्वाह्णः सोढोऽस्येति तदा पूर्वाह्णतन इति भवितव्यम्॥

## तत्र जातः ॥ २५ ॥

अणादयो घादयश्च प्रत्ययाः प्रकृताः, तेषामतः प्रभृत्यर्थाः समर्थविभक्तयश्च निर्दिश्यन्ते। तत्रेति सप्तमीसमर्थाद् जात इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्ने जातः स्रौघ्नः। माथुरः। औत्सः। औदपानः। राष्ट्रियः। अवारपारीणः। शाकलिकः। माकलिकः। ग्राम्यः। ग्रामीणः। कात्रेयकः। औम्भेयकः॥

## प्रावृषष्ठप् ॥ २६ ॥

प्रावृट्शब्दात् सप्तमीसमर्थाद् जात इत्येतस्मिन्नर्थे ठप् प्रत्ययो भवति। एण्यस्यापवादः। पकारः स्वरार्थः। प्रावृषि जातः प्रावृषिकः॥

## संज्ञायां शरदो वुञ् ॥ २७ ॥

शरच्छब्दात् सप्तमीसमर्थाद् जात इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति, ऋत्यणोऽपवादः, समुदायेन चेत् संज्ञा गम्यते। शारदका दर्भाः। शारदका मुद्गाः। दर्भविशेषस्य मुद्गविशेषस्य चेयं संज्ञा। संज्ञायामिति किम् ? शारदं सस्यम्। संज्ञाधिकारं केचित् 'कृतलब्धक्रीतकुशलाः' ( ४.३.३८ ) इति यावदनुवर्तयन्ति॥

## पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन् ॥ २८ ॥

पूर्वाह्णादिभ्यः शब्देभ्यो वुन् प्रत्ययो भवति तत्र जात इत्येतस्मिन् विषये संज्ञायां गम्यमानायाम्। पूर्वाह्णकः। अपराह्णकः। 'विभाषा पूर्वाह्णापराह्णाभ्याम्' ( ४.३.२४ ) इत्यस्यापवादः। आर्द्रकः। मूलकः। नक्षत्राणोऽपवादः। प्रदोषकः। 'निशाप्रदोषाभ्यां च' ( ४.३.१४ ) इत्यस्यापवादः। अवस्करकः। औत्सर्गिकस्याणोऽपवादः। असंज्ञायां तु यथाप्राप्तं ठञादय एव भवन्ति॥

## पथः पन्थ च ॥ २९ ॥

पथिशब्दाद् वुन् प्रत्ययो भवति तत्र जात इत्येतस्मिन् विषये, अणोऽपवादः, प्रत्ययसन्नियोगेन च पथः पन्थ इत्ययमादेशो भवति। पथि जातः पन्थकः॥

## अमावास्याया वा ॥ ३० ॥

अमावास्याशब्दाद् वुन् प्रत्ययो भवति वा तत्र जात इत्येतस्मिन् विषये। संधिवेलादिषु ( ४.३.१६ ) पाठादणोऽपवादः। अमावास्यकः, आमावास्यः। एकदेशविकृतस्यानन्यत्वाद् ( परि० ३७ ) अमावस्याशब्दाद्[1] अपि भवति। अमावस्यकः। आमावस्यः॥

## अ च ॥ ३१ ॥

अमावास्याशब्दादकारः प्रत्ययो भवति तत्र जात इत्येतस्मिन् विषये। पूर्वेण वुन्नणोः प्राप्तयोरयं तृतीयः प्रत्ययो विधीयते। अमावास्यः, अमावास्यकः, आमावास्यः। अमावस्यः, अमावस्यकः, आमावस्यः॥

## सिन्ध्वपकराभ्यां कन् ॥ ३२ ॥

सिन्धुशब्दादपकरशब्दात् च कन् प्रत्ययो भवति तत्र जात इत्येतस्मिन् विषये। सिन्धुशब्दः कच्छादिः, ततोऽणि मनुष्यवुञि ( ४.२.१३३, १३४ ) च प्राप्ते विधानम्, अपकरशब्दादप्यौत्सर्गिकेऽणि। सिन्धुकः। अपकरकः॥

---

१ – 'अमावस्यशब्दात्' इति मुद्रितपाठः।

## अणञौ च ॥ ३३ ॥

सिन्ध्वपकरशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतस्तत्र जात इत्येतस्मिन् विषये। पूर्वेण कनि प्राप्ते वचनम्। सैन्धवः। आपकरः॥

## श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ३४ ॥

श्रविष्ठादिभ्यः शब्देभ्यो नक्षत्रेभ्य आगतस्य जातार्थे लुग् भवति। तस्मिन् स्त्रीप्रत्ययस्यापि 'लुक् तद्धितलुकि'[२] (१.२.४९) इति लुग् भवति। श्रविष्ठासु जातः श्रविष्ठः। फल्गुनः। अनुराधः। स्वातिः। तिष्यः। पुनर्वसुः। हस्तः। विशाखः। अषाढः। बहुलः ॥ लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ॥ चित्रायां जाता, चित्रा। रेवती। रोहिणी। स्त्रीप्रत्ययस्य लुकि कृते गौरादित्वाद् (४.१.४१) ङीष् ॥ फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ ॥ फल्गुनी। अषाढा ॥ श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः ॥ श्राविष्ठीयः। आषाढीयः॥

## स्थानान्तगोशालखरशालाच्च ॥ ३५ ॥

स्थानान्तात् प्रातिपदिकाद् गोशालशब्दात् खरशालशब्दात् च जातार्थे प्रत्ययस्य लुग् भवति। गोस्थाने जातो गोस्थानः। अश्वस्थानः। गोशालः। खरशालः॥

## वत्सशालाभिजिदश्वयुक्छतभिषजो वा ॥ ३६ ॥

वत्सशालादिभ्यः परस्य जातार्थे प्रत्ययस्य लुग् वा भवति। वत्सशालायां जातो वत्सशालः, वात्सशालः। अभिजित्, आभिजितः। अश्वयुक्, आश्वयुजः। शतभिषक्, शातभिषजः। बहुलग्रहणस्यायं प्रपञ्चः॥

## नक्षत्रेभ्यो बहुलम् ॥ ३७ ॥

नक्षत्रेभ्य उत्तरस्य जातार्थे प्रत्ययस्य बहुलं लुग् भवति। रोहिणः, रौहिणः। मृगशिराः, मार्गशीर्षः॥

## कृतलब्धक्रीतकुशलाः ॥ ३८ ॥

तत्रेत्येव। सप्तमीसमर्थात् कृतादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। स्रुघ्ने कृतो वा लब्धो वा क्रीतो वा कुशलो वा स्रौघ्नः। माथुरः। राष्ट्रियः। ननु च यद् यत्र कृतं

जातमपि तत् तत्र भवति, यच्च यत्र क्रीतं लब्धमपि तत् तत्रैव भवति, किमर्थं भेदेनोपादानं क्रियते ? शब्दार्थस्य भिन्नत्वाद्[१] वस्तुमात्रेण क्रीतं लब्धं भवति, शब्दार्थस्तु भिद्यत एव ॥

## प्रायभवः ॥ ३९ ॥

तत्रेत्येव। सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकात् प्रायभव इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। प्रायशब्दः साकल्यस्य किंचिन्न्यूनतामाह। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः। माथुरः। राष्ट्रियः। प्रायभवग्रहणमनर्थकम्, तत्रभवेन कृतार्थत्वात्। अनित्यभवः प्रायभव इति चेद्, मुक्तसंशयेन तुल्यम् ॥

## उपजानूपकर्णोपनीवेष्ठक् ॥ ४० ॥

उपजान्वादिभ्यः शब्देभ्यः सप्तमीसमर्थेभ्यः प्रायभव इत्येतस्मिन् विषये ठक् प्रत्ययो भवति। अणोऽपवादः। औपजानुकः। औपकर्णिकः। औपनीविकः ॥

## संभूते ॥ ४१ ॥

तत्रेत्येव। सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकात् संभूत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। अवक्लृप्तिः प्रमाणानतिरेकश्च संभवत्यर्थ इह गृह्यते, नोत्पत्तिः सत्ता वा, जातभवाभ्यां गतत्वात्। स्रुघ्ने संभवति स्रौघ्नः। माथुरः। राष्ट्रियः ॥

## कोशाड् ढञ् ॥ ४२ ॥

कोशशब्दाद् ढञ् प्रत्ययो भवति तत्र संभूत इत्यस्मिन् विषये। अणोऽपवादः। कोशे संभूतं कौशेयं वस्त्रम्। रूढिरेषा, तेन क्रिमौ न भवति, खड्गकोशात् च ॥

## कालात् साधुपुष्प्यत्पच्यमानेषु ॥ ४३ ॥

तत्रेत्येव। कालविशेषवाचिभ्यः सप्तमीसमर्थेभ्यः साध्वादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। हेमन्ते साधुर्हैमनः प्राकारः। शैशिरमनुलेपनम्। वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। ग्रैष्म्यः पाटलाः। शरदि पच्यन्ते शारदाः शालयः। ग्रैष्मा यवाः ॥

## उप्ते च ॥ ४४ ॥

तत्रेत्येव, कालादिति च। सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकादुप्तेऽर्थे यथा-

---

१ – 'शब्दार्थस्याभिन्नत्वात्' इति है०।

विहितं प्रत्ययो भवति। हेमन्त उप्यन्ते हैमन्ता यवाः। ग्रैष्मा व्रीहयः। योगविभाग उत्तरार्थः॥

## आश्वयुज्या वुञ् ॥ ४५ ॥

आश्वयुजीशब्दाद् वुञ् प्रत्ययो भवत्युप्तेऽर्थे। ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः। अश्विनीभ्यां युक्ता पौर्णमासी, आश्वयुजी। अश्विनीपर्यायोऽश्वयुक्शब्दः॥

## ग्रीष्मवसन्तादन्यतरस्याम् ॥ ४६ ॥

ग्रीष्मवसन्तशब्दाभ्यामन्यतरस्यां वुञ् प्रत्ययो भवत्युप्तेऽर्थे। ऋत्वणोऽपवादः। ग्रैष्मकम्, ग्रैष्मं[१] सस्यम्। वासन्तकम्, वासन्तम्॥

## देयमृणे ॥ ४७ ॥

तत्रेत्येव, कालादिति च। सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकाद् देयमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद् देयमृणं चेत् तद् भवति। मासे देयमृणं मासिकम्। आर्धमासिकम्। सांवत्सरिकम्। ऋण इति किम्? मासे देया भिक्षा॥

## कलाप्यश्वत्थयवबुसाद् वुन् ॥ ४८ ॥

कालादित्येव। कलापिन् अश्वत्थ यवबुस इत्येतेभ्यः कालवाचिभ्यः सप्तमीसमर्थेभ्यो देयमृणमित्येतस्मिन्नर्थे वुन् प्रत्ययो भवति। कलाप्यादयः शब्दाः साहचर्यात् काले वर्तन्ते। यस्मिन् काले मयूराः कलापिनो भवन्ति, स कलापी। यस्मिन्नश्वत्थाः फलन्ति सोऽश्वत्थः। यस्मिन् यवबुसं संपद्यते स यवबुसशब्देनोच्यते। कलापिनि काले देयमृणम्, कलापकम्। अश्वत्थकम्। यवबुसकम्॥

## ग्रीष्मावरसमाद् वुञ् ॥ ४९ ॥

ग्रीष्मावरसमशब्दाभ्यां वुञ् प्रत्ययो भवति देयमृणम् इत्येतस्मिन्नर्थे। अणूठञोरपवादः। ग्रीष्मे देयमृणं ग्रैष्मकम्। आवरसमकम्। प्रत्ययान्तरकरणं वृद्ध्यर्थम्। समाशब्दो वर्षपर्यायः॥

## संवत्सराग्रहायणीभ्यां ठञ् च ॥ ५० ॥

---

१ - 'ग्रीष्मम्' इति है०, बाल० पाठः।

संवत्सराग्रहायणीशब्दाभ्यां ठञ् प्रत्ययो भवति, चकाराद् वुञ् च देयमृणमित्येतस्मिन्नर्थे। संवत्सरे देयमृणं सांवत्सरिकम्, सांवत्सरकम्। आग्रहायणिकम्, आग्रहायणकम्। वेति वक्तव्ये ठञ्ग्रहणं संधिवेलादिषु ( ४.३.१६ ) 'संवत्सरात् फलपर्वणोः' ( ग० सू० १०२ ) इति पठ्यते, तत्र फल ऋणत्वेन विवक्षितेऽणं बाधित्वा ठञेव यथा स्यादिति॥

## व्याहरति मृगः ॥ ५१ ॥

तत्रेत्येव, कालादिति च। कालवाचिनः सप्तमीसमर्थात् प्रातिपदिकाद् व्याहरति मृग इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। निशायां व्याहरति मृगो नैशः, नैशिकः। प्रादोषः, प्रादोषिकः। मृग इति किम् ? निशायां व्याहरत्युलूकः॥

## तदस्य सोढम् ॥ ५२ ॥

कालादित्येव। तदिति प्रथमासमर्थात् कालवाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं सोढं चेत् तद् भवति। सोढं जितमभ्यस्तमित्यर्थः। निशासहचरितमध्ययनं निशा, तत् सोढमस्य छात्रस्य नैशः, नैशिकः। प्रादोषः, प्रादोषिकः॥

## तत्र भवः ॥ ५३ ॥

कालादिति निवृत्तम्। तत्रेति सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकाद् भव इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सत्ता भवत्यर्थो गृह्यते न जन्म, 'तत्र जातः' ( ४.३.२५ ) इति गतार्थत्वात्। स्रुघ्ने भवः स्रौघ्नः। माथुरः। राष्ट्रियः। पुनस्तत्रग्रहणं तदस्येतिं निवृत्त्यर्थम्॥

## दिगादिभ्यो यत् ॥ ५४ ॥

दिश् इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणश्छस्य चापवादः। दिशि भवं दिश्यम्। वर्ग्यम्। मुखजघनशब्दयोरशरीरावयवार्थः पाठः, सेनामुख्यम् , सेनाजघन्यमिति॥ दिश्। वर्ग। पूग। गण। पक्ष। धाय्या। मित्र। मेधा। अन्तर। पथिन्। रहस्। अलीक। उखा। साक्षिन्। आदि। अन्त। मुख। जघन। मेघ। यूथ। उदकात् संज्ञायाम् ( ग० सू० १०३ )। न्याय। वंश। अनुवंश। विश। काल। अप्। आकाश। दिगादिः॥

## शरीरावयवाच्च ॥ ५५ ॥

शरीरं प्राणिकायः। शरीरावयववाचिनः प्रातिपदिकाद् यत् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणोऽपवादः। दन्तेषु भवं दन्त्यम्। कर्ण्यम्। ओष्ठ्यम्॥

## दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ ५६ ॥

दृत्यादिभ्यः प्रातिपदिकेभ्यो ढञ् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। दृतौ भवं दार्तेयम्। कौक्षेयम्। कालशेयम्। वास्तेयम्। आस्तेयम्। आहेयमजरं विषम्। अस्तिशब्दः प्रातिपदिकम्, न तिङन्तः॥

## ग्रीवाभ्योऽण् च ॥ ५७ ॥

ग्रीवाशब्दादण् प्रत्ययो भवति, चकाराड् ढञ् च, तत्र भव इत्येतस्मिन् विषये। शरीरावयवाद् यतोऽपवादः। ग्रीवासु भवं ग्रैवम् , ग्रैवेयम्। ग्रीवाशब्दो धमनीवचनः, तासां बहुत्वाद् बहुवचनं कृतम्॥

## गम्भीराञ् ञ्यः ॥ ५८ ॥

गम्भीरशब्दाद् ञ्यः प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणोऽपवादः। गम्भीरे भवं गाम्भीर्यम् ॥ बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्॥ बाह्यम्। दैव्यम्। पाञ्चजन्यम्॥

## अव्ययीभावाच्च ॥ ५९ ॥

अव्ययीभावसंज्ञकात् प्रातिपदिकात् च ञ्यः प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणोऽपवादः। न च सर्वस्मादव्ययीभावाद् भवति। किं तर्हि ? परिमुखादेः। परिमुखादीनां च गणपाठस्यैतदेव प्रयोजनम्। तेषां विशेषणमव्ययीभावग्रहणम्। परिमुखं भवं पारिमुख्यम्। पारिहनव्यम्। परिमुखादेरन्यत्र न भवति। औपकूलम्॥ परिमुख। परिहनु। पर्योष्ठ। पर्युलूखल। परिसीर। अनुसीर। उपसीर। उपस्थल। उपकलाप। अनुपथ। अनुखङ्ग। अनुतिल। अनुशीत। अनुमाष। अनुयव। अनुयूप। अनुवंश॥

## अन्तःपूर्वपदाट् ठञ् ॥ ६० ॥

अव्ययीभावादित्येव। अन्तःशब्दो विभक्त्यर्थे समस्यते। तत्पूर्वपदादव्ययीभावाट् ठञ् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणोऽपवादः। आन्तर्वेश्मिकम्। आन्तर्गेहिकम् ॥ समानशब्दाट् ठञ् वक्तव्यः॥ समाने भवं सामानिकम् ॥ तदादेश्च॥ सामानग्रामिकम्। सामानदेशिकम् ॥ अध्यात्मादिभ्यश्च॥ आध्यात्मिकम्। आधिदैविकम्। आधिभौतिकम्। अध्यात्मादिराकृतिगणः ॥ ऊर्ध्वंदमाच्च ठञ् वक्तव्यः॥ और्ध्वंदमिकः। ऊर्ध्वशब्देन समानार्थ ऊर्ध्वं शब्दः[1] ॥ ऊर्ध्वदेहाच्च॥ और्ध्वदेहिकम् ॥ लोकोत्तरपदाच्च॥

१ – 'ऊर्ध्वंदमशब्दः' इति मुद्रितेषु।

ऐहलौकिकम्। पारलौकिकम् ॥मुखपार्श्वशब्दाभ्यां तसन्ताभ्यामीयः प्रत्ययो वक्तव्यः॥ मुखतीयम्। पार्श्वतीयम् ॥जनपरयोः कुक् च॥ जनकीयम्। परकीयम् ॥मध्यशब्दादीयः॥ मध्यीयः ॥ मण्मीयौ च प्रत्ययौ वक्तव्यौ॥ माध्यमम्। मध्यमीयम् ॥ मध्यो मध्यं दिनण् चास्मात्॥ मध्ये भवं माध्यन्दिनम् ॥स्थाम्नो लुग् वक्तव्यः॥ अश्वत्थामा ॥ अजिनान्ताच्च॥ वृकाजिनः। सिंहाजिनः॥

समानस्य तदादेश्चाध्यात्मादिषु चेष्यते।
ऊर्ध्वंदमाच्च देहाच्च लोकोत्तरपदस्य च॥
मुखपार्श्वतसोरीयः कुग् जनस्य परस्य च।
ईयः कार्योऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा॥
मध्यो मध्यं दिनण् चास्मात् स्थाम्नो लुगजिनात्तथा॥

## ग्रामात् पर्यनुपूर्वात् ॥ ६१ ॥

अव्ययीभावादित्येव। ग्रामशब्दान्तादव्ययीभावात् परि अनु इत्येवंपूर्वाट् ठञ् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणोऽपवादः। पारिग्रामिकः। आनुग्रामिकः॥

## जिह्वामूलाङ्गुलेश्छः ॥ ६२ ॥

जिह्वामूलशब्दादङ्गुलिशब्दात् च छः प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। यतोऽपवादः। जिह्वामूलीयम्। अङ्गुलीयम्॥

## वर्गान्ताच्च ॥ ६३ ॥

वर्गशब्दान्तात् च प्रातिपदिकाच् छः प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणोऽपवादः। कवर्गीयम्। चवर्गीयम्॥

## अशब्दे यत्खावन्यतरस्याम् ॥ ६४ ॥

वर्गान्तादित्येव। शब्दादन्यस्मिन् प्रत्ययार्थे वर्गान्तात् प्रातिपदिकादन्यतरस्यां यत्खौ प्रत्ययौ भवतः तत्र भव इत्येतस्मिन् विषये। छे प्राप्ते वचनं पक्षे सोऽपि भवति। वासुदेववर्ग्यः, वासुदेववर्गीणः, वासुदेववर्गीयः। युधिष्ठिरवर्ग्यः, युधिष्ठिरवर्गीणः, युधिष्ठिरवर्गीयः। अशब्द इति किम् ? कवर्गीयो वर्णः॥

## कर्णललाटात् कनलंकारे ॥ ६५ ॥

कर्णललाटशब्दाभ्यां कन् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषयेऽलंकारेऽ-

भिधेये। यतोऽपवादः। कर्णिका। ललाटिका। अलंकार इति किम् ? कर्ण्यम्। ललाट्यम्॥

## तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥ ६६ ॥

व्याख्यायतेऽनेनेति व्याख्यानम्, व्याख्यातव्यस्य नाम व्याख्यातव्यनाम। तस्येति षष्ठीसमर्थाद् व्याख्यातव्यनाम्नः प्रातिपदिकाद् व्याख्यानेऽभिधेये यथाविहितं प्रत्ययो भवति, तत्र भवे च। वाक्यार्थसमीपे चकारः श्रूयमाणः पूर्ववाक्यार्थमेव समुच्चिनोति 'तत्र भवः' (४.३.५३) इति। सुपां व्याख्यानः सौपो ग्रन्थः। तैङः। कार्तः। सुप्सु भवं सौपम्। तैङम्। कार्तम्। व्याख्यातव्यनाम्न इति किम् ? पाटलिपुत्रस्य व्याख्यानी सुकोसला, पाटलिपुत्रं सुकोसलया व्याख्यायते, एवंसंनिवेशं पाटलिपुत्रमिति, न तु पाटलिपुत्रं व्याख्यातव्यनाम। भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः। कृतनिर्देशौ हि तौ॥

## बह्वचोऽन्तोदात्ताट् ठञ् ॥ ६७ ॥

बह्वचो व्याख्यातव्यनाम्नः प्रातिपदिकादन्तोदात्ताद् भवव्याख्यानयोष्ठञ् प्रत्ययो भवति। अणोऽपवादः। षात्वणत्विकम्। नातानतिकम्। समासस्वरेणान्तोदात्ताः प्रकृतयः। बह्वच इति किम् ? द्व्यचष्ठकं (४.३.७२) वक्ष्यति। एकाच् प्रत्युदाह्रियते। सौपम्। तैङम्। कार्तम्। अन्तोदात्तादिति किम् ? संहितायाः सांहितम्। संहिताशब्दो हि गतिस्वरेणाद्युदात्तः॥

## क्रतुयज्ञेभ्यश्च ॥ ६८ ॥

क्रतुभ्यो यज्ञेभ्यश्च व्याख्यातव्यनामभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोष्ठञ् प्रत्ययो भवति। अणोऽपवादः। क्रतुभ्यस्तावत्—अग्निष्टोमस्य व्याख्यानस्तत्र भवः, आग्निष्टोमिकः। वाजपेयिकः। राजसूयिकः। यज्ञेभ्यः—पाकयज्ञिकः। नावयज्ञिकः। अनन्तोदात्तार्थ आरम्भः। क्रतुभ्य इत्येव सिद्धे यज्ञग्रहणमसोमयागेभ्योऽपि यथा स्यात्। पाञ्चौदनिकः। दाशौदनिकः। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## अध्यायेष्वेवर्षेः ॥ ६९ ॥

ऋषिशब्दाः प्रवरनामधेयानि, तेभ्य ऋषिशब्देभ्यो भवव्याख्यानयोरर्थयोष्ठञ् प्रत्ययो भवति। अणोऽपवादः। अध्यायेष्वेव प्रत्ययार्थविशेषणेषु[1]। व्याख्यातव्यनाम्न इत्यनुवर्तते, तत्साहचर्यादृषिशब्दैर्ग्रन्थ उच्यते। वसिष्ठस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽ-

---

१ - 'प्रत्ययार्थे विशेषणेषु' इति है०।

ध्यायः। वैश्वामित्रिकः। अध्यायेष्विति किम्? वासिष्ठी ऋक्॥

## पौरोडाशपुरोडाशात् ष्ठन् ॥ ७० ॥

पौरोडाशशब्दात् पुरोडाशशब्दात् च भवव्याख्यानयोरर्थयोः ष्ठन् प्रत्ययो भवति। पुरोडाशाः पिष्टपिण्डाः, तेषां संस्कारको मन्त्रः पौरोडाशः, तस्य व्याख्यानस्तत्र भवो वा पौरोडाशिकः। पौरोडाशिकी। पुरोडाशसहचरितो ग्रन्थः[1] पुरोडाशः, तस्य व्याख्यानस्तत्र भवो वा पुरोडाशिकः। पुरोडाशिकी। षकारो ङीषर्थः॥

## छन्दसो यदणौ ॥ ७१ ॥

छन्दःशब्दाद् भवव्याख्यानयोरर्थयोर्यदणौ प्रत्ययौ भवतः। द्व्यच इति ठकि प्राप्ते वचनम्। छन्दस्यः (तै० सं० १.६.११.४)। छान्दसः (कौ० गृ० १४१.३४)॥

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट् ठक् ॥ ७२ ॥

द्व्यजादिभ्यः प्रातिपदिकेभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोष्ठक् प्रत्ययो भवति। अणादेरपवादः। द्व्यचस्तावत्—ऐष्टिकः। पाशुकः। ऋकारान्तात् — चातुर्होतृकः। पाञ्चहोतृकः। ब्राह्मण—ब्राह्मणिकः। ऋक्—आर्चिकः। प्रथम—प्राथमिकः। अध्वर—आध्वरिकः। पुरश्चरण—पौरश्चरणिकः। नामाख्यातग्रहणं संघातविगृहीतार्थम्। नामिकः। आख्यातिकः। नामाख्यातिकः॥

## अणृगयनादिभ्यः ॥ ७३ ॥

ऋगयनादिभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोरण् प्रत्ययो भवति। ठञादेरपवादः। आर्गयनः। पादव्याख्यानः। अण्ग्रहणं बाधकबाधनार्थम्। वास्तुविद्यः॥ ऋगयन। पदव्याख्यान। छन्दोमान। छन्दोभाषा। छन्दोविचिति। न्याय। पुनरुक्त। निरुक्त। व्याकरण। निगम। वास्तुविद्या। अङ्गविद्या। क्षत्रविद्या। उत्पात। उत्पाद। संवत्सर। मुहूर्त। निमित्त। उपनिषत्। शिक्षा। ऋगयनादिः॥

## तत आगतः ॥ ७४ ॥

तत इति पञ्चमीसमर्थादागत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्नादागतः स्रौघ्नः। माथुरः। राष्ट्रियः। तत इति मुख्यमपादानं विवक्षितं यत् तदिह गृह्यते, न नान्तरीयकम्। स्रुघ्नादागच्छन् वृक्षमूलादागत इति॥

---

१ – 'मन्त्रः' इति न्यासपद०।

## ठगायस्थानेभ्यः ॥ ७५ ॥

आय इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानम्। आयस्थानवाचिभ्यः प्रातिपदिकेभ्यष्ठक् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। अणोऽपवादः। छं तु परत्वाद् बाधते। शुल्कशालाया आगतः शौल्कशालिकः। आकरिकम्। बहुवचनं स्वरूपविधिनिरासार्थम् ॥

## शुण्डिकादिभ्योऽण् ॥ ७६ ॥

शुण्डिक इत्येवमादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। आयस्थानठकोऽपवादः। शुण्डिकादागतः शौण्डिकः। कार्कणः। अण्ग्रहणं बाधकबाधनार्थम्। औदपानः॥ शुण्डिक। कृकण। स्थण्डिल। उदपान। उपल। तीर्थ। भूमि। तृण। पर्ण। शुण्डिकादिः॥

## विद्यायोनिसंबन्धेभ्यो वुञ् ॥ ७७ ॥

विद्यायोनिकृतः संबन्धो येषां ते विद्यायोनिसंबन्धाः। तद्वाचिभ्यः शब्देभ्यो वुञ् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। अणोऽपवादः। छं तु परत्वाद् बाधते। विद्यासंबन्धेभ्यस्तावत्—उपाध्यायादागतम् औपाध्यायकम्। शैष्यकम्। आचार्यकम्। योनिसंबन्धेभ्यः—मातामहकः। पैतामहकः। मातुलकः॥

## ऋतष्ठञ् ॥ ७८ ॥

विद्यायोनिसंबन्धेभ्य इत्येव। ऋकारान्तेभ्यः प्रातिपदिकेभ्यो विद्यायोनिसंबन्धवाचिभ्यष्ठञ् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। वुञोऽपवादः। विद्यासंबन्धवाचिभ्यस्तावत्—होतुरागतं हौतृकम्। पौतृकम्। योनिसंबन्धवाचिभ्यः—भ्रातृकम्। स्वास्रृकम्। मातृकम्। तपरकरणं मुखसुखार्थम्। विद्यायोनिभ्यामन्यत्र सावित्रम्॥

## पितुर्यच्च ॥ ७९ ॥

पितृशब्दाद् यत् प्रत्ययो भवति, चकाराट् ठञ् च तत आगत इत्येतस्मिन् विषये। पितुरागतं पित्र्यम्। पैतृकम्॥

## गोत्रादङ्कवत् ॥ ८० ॥

अपत्याधिकारादन्यत्र लौकिकं गोत्रमपत्यमात्रं गृह्यते। गोत्रप्रत्ययान्तात् प्रातिपदिकादङ्कवत् प्रत्ययविधिर्भवति तत आगत इत्येतस्मिन् विषये। अङ्कग्रहणेन तस्येदमर्थ-

सामान्यं लक्ष्यते। तस्माद् वुञप्यतिदिश्यते नाणेव[१] 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' (४.३.१२७) इति। औपगवानामङ्कः औपगवकः। कापटवकः। नाडायनकः। चारायणकः। एवमौपगवेभ्य आगतम्, औपगवकम्। कापटवकम्। नाडायनकम्। चारायणकम्॥

## हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ ८१ ॥

हेतुभ्यो मनुष्येभ्यश्चान्यतरस्यां रूप्यः प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। मनुष्यग्रहणमहेत्वर्थम्। हेतुः कारणम्। हेतुभ्यस्तावत्—समादागतं समरूप्यम्, समीयम्। विषमरूप्यम्, विषमीयम्। गहादित्वात् (४.२.१३८) छः। मनुष्येभ्यः—देवदत्तरूप्यम्। यज्ञदत्तरूप्यम्। दैवदत्तम्। याज्ञदत्तम्। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## मयट् च ॥ ८२ ॥

हेतुभ्यो मनुष्येभ्यश्च मयट् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। सममयम्। विषममयम्। मनुष्येभ्यः—देवदत्तमयम्। यज्ञदत्तमयम्। टकारो ङीबर्थः। सममयी। योगविभागो यथासंख्यनिरासार्थः॥

## प्रभवति ॥ ८३ ॥

तत इत्येव। पञ्चमीसमर्थाद् ङ्याप्प्रातिपदिकात् प्रभवतीत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। प्रभवति प्रकाशते, प्रथमत उपलभ्यत इत्यर्थः। हिमवतः प्रभवति हैमवती गङ्गा। दारदी सिन्धुः॥

## विदूराञ् ञ्यः ॥ ८४ ॥

विदूरशब्दाद् ञ्यः प्रत्ययो भवति ततः प्रभवतीत्येतस्मिन् विषये। अणोऽपवादः। विदूरात् प्रभवति वैदूर्यो मणिः। ननु च बालवायादसौ प्रभवति, न विदूरात्, तत्र तु संस्क्रियते ? एवं तर्हि —

वालवायो विदूरं च प्रकृत्यन्तरमेव वा।
न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत्॥

## तद् गच्छति पथिदूतयोः ॥ ८५ ॥

तदिति द्वितीयासमर्थाद् गच्छतीत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति, योऽसौ गच्छति पन्थाश्चेत् स भवति दूतो वा। स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा। माधुरः।

---

१ – 'वुञतिदिश्यते नाण्' इत्यपपाठो है०।

तत्स्थेषु गच्छत्सु पन्था गच्छतीत्युच्यते। अथ वा स्रुघ्नप्राप्तिः पथो गमनम्। पथिदूतयोरिति किम्? स्रुघ्नं गच्छति सार्थः॥

## अभिनिष्क्रामति द्वारम् ॥ ८६ ॥

तदित्येव। तदिति[1] द्वितीयासमर्थादभिनिष्क्रामतीत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यदभिनिष्क्रामति द्वारं चेत् तद् भवति। आभिमुख्येन निष्क्रामति, अभिनिष्क्रामति। स्रुघ्नमभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नम्। माथुरम्। राष्ट्रियम्। द्वारमभिनिष्क्रमण-क्रियायां करणं प्रसिद्धम्, तदिह स्वातन्त्र्येण विवक्ष्यते, यथा साध्वसिश्छिनत्तीति। द्वारमिति किम्? स्रुघ्नमभिनिष्क्रामति पुरुषः॥

## अधिकृत्य कृते ग्रन्थे ॥ ८७ ॥

तदित्येव। अधिकृत्यैतदपेक्षया[2] द्वितीया। अधिकृत्य, प्रस्तुत्य, आगूर्येत्यर्थः। तदिति द्वितीयासमर्थादधिकृत्य कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् तत् कृतं ग्रन्थश्चेत् स भवति। सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः। गैरिमित्रः[3]। यायातः। ग्रन्थ इति किम्? सुभद्रामधिकृत्य कृतः प्रासादः ॥ लुबाख्यायिकाभ्यः[4] प्रत्ययस्य बहुलम् ॥ वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता। सुमनोत्तरा। उर्वशी। न च भवति—भैमरथी॥

## शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥

तदित्येव। अधिकृत्य कृते ग्रन्थ इति च। शिशुक्रन्दादिभ्यो द्वितीयासमर्थेभ्यश्छः प्रत्ययो भवत्यधिकृत्य कृते ग्रन्थे। अणोऽपवादः। शिशूनां क्रन्दनं शिशुक्रन्दः। तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमस्य सभा यमसभम्, यमसभीयः। द्वन्द्वात्—अग्निकाश्यपीयः। श्येनकपोतीयः। शब्दार्थसंबन्धीयं प्रकरणम्। वाक्यपदीयम्। इन्द्रजननादिभ्यः—इन्द्र-जननीयम्। प्रद्युम्नागमनीयम्। इन्द्रजननादिराकृतिगणः प्रयोगतोऽनुसर्तव्यः, प्रातिपदिकेषु न पठ्यते ॥ द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः॥ दैवासुरम्। राक्षोऽसुरम्। गौणमुख्यम्। इन्द्रजननादेराकृतिगणत्वात् शिशुक्रन्दादयोऽपि तत्रैव द्रष्टव्याः। प्रपञ्चार्थमेषां ग्रहणम्। एवं सति देवासुरादिप्रतिषेधोऽपि न वक्तव्यः, ततश्छप्रत्ययस्यादर्शनात्॥

## सोऽस्य निवासः ॥ ८९ ॥

---

१ - 'तदिति' इति नास्ति बाल० । २ - '० तदपेक्ष्य' इति मुद्रितेषु ।

३ - 'गौरिमित्रः' इति बाल०, तारा०। ४ - 'लुबाख्यायिकार्थस्य' इति मुद्रितेषु ।

स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं निवासश्चेत् स भवति। निवसन्त्यस्मिन्निवासो देश उच्यते। स्रुघ्नो निवासोऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः॥

## अभिजनश्च ॥ ९० ॥

सोऽस्येत्येव। स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थमभिजनश्चेत् स भवति। अभिजनः पूर्वबान्धवः। तत्संबन्धाद् देशोऽप्यभिजन इत्युच्यते—यस्मिन् पूर्वबान्धवैरुषितम्। तस्मादिह देशवाचिनः प्रत्ययः, न बन्धुभ्यः, निवासप्रत्यासत्तेः। स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः। निवासाभिजनयोः को विशेषः ? यत्र संप्रत्युष्यते स निवासः, यत्र पूर्वैरुषितं सोऽभिजनः। योगविभाग उत्तरार्थः॥

## आयुधजीविभ्यश्छः पर्वते ॥ ९१ ॥

सोऽस्याभिजन इति वर्तते। आयुधजीविभ्य इति तादर्थ्ये चतुर्थी, पर्वत इति प्रकृतिविशेषणम्। पर्वतवाचिनः प्रथमासमर्थादभिजनादस्येति षष्ठ्यर्थे छः प्रत्ययो भवति। आयुधजीविभ्य[1] आयुधजीव्यर्थम्, आयुधजीविनोऽभिधातुं प्रत्ययो भवतीत्यर्थः। हृद्गोलः पर्वतोऽभिजन एषामायुधजीविनां हृद्गोलीयाः। अन्धकवर्तीयाः। रोहितगिरीयाः। आयुधजीविभ्य इति किम् ? ऋक्षोदः पर्वतोऽभिजन एषां ब्राह्मणानाम्, आर्क्षोदा ब्राह्मणाः। पर्वत इति किम् ? सांकाश्यका आयुधजीविनः॥

## शण्डिकादिभ्यो ञ्यः ॥ ९२ ॥

शण्डिक इत्येवमादिभ्यः प्रातिपदिकेभ्यो ञ्यः प्रत्ययो भवति सोऽस्याभिजन इत्येतस्मिन् विषये। अणादेरपवादः। शाण्डिक्यः। सार्वसेन्यः॥ शण्डिक। सर्वसेन। सर्वकेश। शक। सट। रक। शङ्ख। बोध। शण्डिकादिः॥

## सिन्धुतक्षशिलादिभ्योऽणञौ ॥ ९३ ॥

आदिशब्दः प्रत्येकमभिसंबध्यते। सिन्ध्वादिभ्यः प्रातिपदिकेभ्यस्तक्षशिलादिभ्यश्च यथासंख्यमणञौ प्रत्ययौ भवतः सोऽस्याभिजन इत्येतस्मिन् विषये। सैन्धवः। वार्णवः॥ सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। किष्किन्धा। गब्दिका[2]। उरस। दरत्। ये तु कच्छादिषु (४.२.१३३) पठ्यन्ते सिन्धुवर्णुप्रभृतयः, तेभ्यस्तत

---

१ – 'च' इत्यधिकं बाल०। २ – 'गदिका' इति हैं०।

एवाणि सिद्धे मनुष्यवुञो ( ४.२.१३४ ) बाधनार्थं वचनम्। तक्षशिलादिभ्यः खल्वपि—ताक्षशिलः। वात्सोद्धरणः॥ तक्षशिला। वत्सोद्धरण। कौमेदुर। काण्डवारण। ग्रामणी। सरालक। कंस। किन्नर। संकुचित। सिंहकोष्ठ। कर्णकोष्ठ। बर्बर। अवसान॥

## तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ ९४ ॥

तूद्यादिभ्यश्चतुर्भ्यः शब्देभ्यो यथासंख्यं चत्वार एव ढक् छण् ढञ् यक् इत्येते प्रत्यया भवन्ति सोऽस्याभिजन इत्येतस्मिन् विषये। अणोऽपवादः। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः॥

## भक्तिः ॥ ९५ ॥

समर्थविभक्तिः प्रत्ययार्थश्चानुवर्तते। अभिजन इति निवृत्तम्। स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं भक्तिश्चेत् तद् भवति। भज्यते सेव्यत इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः। माथुरः। राष्ट्रियः॥

## अचित्ताददेशकालाट्ठक् ॥ ९६ ॥

देशकालव्यतिरिक्तादचित्तवाचिनः प्रातिपदिकाट्ठक् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। अणोऽपवादः। वृद्धाच् छं परत्वाद् बाधते। अपूपो[1] भक्तिरस्य आपूपिकः। शाष्कुलिकः। पायसिकः। अचित्तादिति किम्? दैवदत्तः। अदेशादिति किम्? स्रौघ्नः। अकालादिति किम्? ग्रैष्मः॥

## महाराजाट्ठञ् ॥ ९७ ॥

महाराजशब्दाट्ठञ् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। अणोऽपवादः। महाराजो भक्तिरस्य माहाराजिकः। प्रत्ययान्तरकरणं स्वरार्थम्॥

## वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥

वासुदेवार्जुनशब्दाभ्यां वुन् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। छाणोरपवादः। वासुदेवो भक्तिरस्य वासुदेवकः। अर्जुनकः। ननु च वासुदेवशब्दाद् 'गोत्रक्षत्रियाख्येभ्यः०' ( ४.३.९९ ) इति वुञस्त्येव। न चात्र वुन्वुञोर्विशेषो विद्यते, किमर्थं वासुदेवग्रहणम्? संज्ञैषा देवताविशेषस्य न क्षत्रियाख्या। 'अल्पाच्तरम्' ( २.२.३४ ) 'अजाद्यदन्तम्' ( २.२.३३ ) इति वा[2] अर्जुनशब्दस्य पूर्वनिपातमकुर्वन् ज्ञापयति—अभ्यर्हितं पूर्वं निपततीति॥

---

१ - ' अपूपा ' इति बाल०। २ - ' च ' इति है०।

## गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥ ९९ ॥

गोत्राख्येभ्यः क्षत्रियाख्येभ्यश्च प्रातिपदिकेभ्यो बहुलं वुञ् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। अणोऽपवादः। वृद्धाच्छं परत्वाद् बाधते। ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः। औपगवकः। कापटवकः। क्षत्रियाख्येभ्यः—नाकुलकः। साहदेवकः। साम्बकः। आख्याग्रहणं प्रसिद्धक्षत्रियशब्दपरिग्रहार्थम्, यथाकथंचित् क्षत्रियवृत्तिभ्यो मा भूत्। बहुलग्रहणात् क्वचिदप्रवृत्तिरेव। पाणिनो भक्तिरस्य पाणिनीयः। पौरवीयः॥

## जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने ॥ १०० ॥

जनपदिनो ये बहुवचने जनपदेन समानशब्दाः, तेषां जनपदवत् सर्वं भवति, प्रत्ययः प्रकृतिश्च, सोऽस्य भक्तिरित्येतस्मिन् विषये। 'जनपदतदवध्योश्च' ( ४.२.१२४) इत्यत्र प्रकरणे ये प्रत्यया विहिताः, ते जनपदिभ्योऽस्मिन्नर्थेऽतिदिश्यन्ते। जनपदिनो जनपदस्वामिनः क्षत्रियाः। अङ्गा जनपदो भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। तद्वदङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। जनपदिनामिति किम् ? पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः। सर्वग्रहणं प्रकृत्यतिदेशार्थम्, स च द्व्येकयोः प्रयोजयति। वृद्धिनिमित्तेषु च वुञादिषु विशेषो नास्तीति। मद्रवृज्योः कनि ( ४.२.१३१ ) विशेषः। मद्रस्यापत्यम्, 'द्व्यञ्मगधकलिङ्गसूरमसादण्' ( ४.१.१७० ), माद्रः। वृजिशब्दादपि 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' ( ४.१.१७१ ), वार्ज्यः। स भक्तिरस्येति प्रकृतिनिर्ह्रासे कृते मद्रकः। वृजिकः। जनपदेन समानशब्दानामिति किम् ? अनुषण्डो जनपदः, पौरवो राजा, स भक्तिरस्य पौरवीयः। बहुवचनग्रहणं समानशब्दताविषयलक्षणार्थम्। अन्यथा हि यत्रैव समानशब्दता तत्रैवातिदेशः स्याद्, एकवचनद्विवचनयोर्न स्यात्, वाङ्गो वाङ्गौ वा भक्तिरस्येति। बहुवचने तु बहुवचने समानशब्दानामेकवचनद्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो भवति। वाङ्गो वाङ्गौ वा भक्तिरस्य वाङ्गकः॥

## तेन प्रोक्तम् ॥ १०१ ॥

तेनेति तृतीयासमर्थात् प्रोक्तमित्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतम्, 'कृते ग्रन्थे' ( ४.३.११६ ) इत्यनेन गतार्थत्वात्[1]। अन्येन कृता, माथुरेण प्रोक्ता माथुरी वृत्तिः। पाणिनीयम्। आपिशलम्। काशकृत्स्नम्॥

## तित्तिरिवरतन्तुखण्डिकोखाच् छण् ॥ १०२ ॥

तित्तिर्यादिभ्यः शब्देभ्यश्छण् प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये।

---

१ – 'गतत्वात्' इति बाल०।

अणोऽपवादः। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः। वारतन्तवीयाः। खाण्डिकीयाः। औखीयाः। छन्दसि चायमिष्यते, तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवति, 'शौनकादिभ्यश्छन्दसि' ( ४.३.१०६ ) इत्यत्रास्यानुवृत्तेः। छन्दोऽधिकारविहितानां च तद्विषयतेष्यते॥

## काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ १०३ ॥

काश्यपकौशिकशब्दाभ्यामृषिवाचिभ्यां[1] णिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये। छस्यापवादः। णकार उत्तरत्र वृद्ध्यर्थः। कल्पस्ताभ्यां प्रोक्त इति स्मर्यते। तस्यापि च तद्विषयता भवत्येव, 'शौनकादिभ्यश्छन्दसि' ( ४.३.१०६ ) इत्यत्रानुवृत्तेः, छन्दोऽधिकारविहितानां च तत्र तद्विषयतेष्यते। काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः। कौशिकिनः[2]। ऋषिभ्यामिति किम् ? इदानींतनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम्॥

## कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ १०४ ॥

कलाप्यन्तेवासिनां वैशंपायनान्तेवासिनां च ये वाचकाः शब्दास्तेभ्यो णिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये। अणोऽपवादः। छं तु परत्वाद् बाधते। तत्र कलाप्यन्तेवासिनश्चत्वारः—हरिद्रुः, छगली, तुम्बुरुः, उलप इति। वैशम्पायनान्तेवासिनो नव—आलम्बिः, पलङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापी इति। प्रत्यक्षकारिणो गृह्यन्ते, न तु व्यवहिताः शिष्यशिष्याः। कुतः ? कलापिखाडायनग्रहणात्[3]। तथाहि, वैशंपायनान्तेवासी कलापी, तदन्तेवासिनो वैशंपायनान्तेवासिन एव भवन्ति, किं कलापिग्रहणेन ? तथा वैशंपायनान्तेवासी कठः, तदन्तेवासी खाडायनः, तस्य किं शौनकादिषु पाठेन ? तदेतत् प्रत्यक्षकारिग्रहणस्य लिङ्गम्। कलाप्यन्तेवासिभ्यस्तावत्—हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः। तौम्बुरविणः। औलपिनः। छगलिनो ढिनुकं ( ४.३.१०९ ) वक्ष्यति। वैशम्पायनान्तेवासिभ्यः—आलम्बिनः। पालङ्गिनः। कामलिनः। आर्चाभिनः। आरुणिनः। ताण्डिनः। श्यामायनिनः। कठाल् लुकं वक्ष्यति ( ४.३.१०७ ), कलापिनश्चाणम् ( ४.३.१०८ )।

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू।
उलपेन चतुर्थेन कालापकमिहोच्यते॥
आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ।
ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे॥
श्यामायन उदीच्येषु उक्तः कठकलापिनोः।

---

१ - 'शब्द' 'वाचि' इति न स्तो है०। २ - 'कौशिकिनः' इति नास्ति बाल०।
३ - '० खाण्डायन०' इति न्यासपद०।

चरक इति वैशंपायनस्याख्या, तत्संबन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते ॥

## पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ १०५ ॥

प्रत्ययार्थविशेषणमेतत्। तृतीयासमर्थात् प्रोक्ते णिनिः प्रत्ययो भवति यत् प्रोक्तं पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति। पुराणेन चिरन्तनेन मुनिना प्रोक्ताः। ब्राह्मणेषु तावत्—भाल्लविनः। शाट्यायनिनः। ऐतरेयिणः। कल्पेषु—पैङ्गी कल्पः। आरुणपराजी। पुराणप्रोक्तेष्विति किम्? याज्ञवल्कानि ब्राह्मणानि। आश्मरथः कल्पः। याज्ञवल्क्यादयोऽचिरकाला इत्याख्यानेषु वार्ता। तया व्यवहरति सूत्रकारः। तद्विषयता कस्माद् न भवति? प्रतिपदं ब्राह्मणेषु यः प्रत्ययः, तस्य तद्विषयता विधीयते णिनेः। अयं तु याज्ञवल्क्यशब्दस्य कण्वादिषु (४.२.१११) पाठादण्। न चायं योगश्छन्दोऽधिकारमनुवर्तयति, तेन कल्पेष्वपि न भवति। पुराण इति निपातनात् तुडभावः। न चात्यन्तबाधैव, तेन पुरातनमित्यपि भवति ॥

## शौनकादिभ्यश्छन्दसि ॥ १०६ ॥

शौनक इत्येवमादिभ्यो णिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये छन्दस्यभिधेये। छाणोरपवादः। शौनकेन प्रोक्तमधीयते शौनकिनः (कौ० सू० ८५.८)। वाजसनेयिनः (आप० श्रौ० १.८.१२)। छन्दसीति किम्? शौनकीया शिक्षा। कठशाठ इत्यत्र पठ्यते। तत् संघातार्थम्, केवलाद्धि लुकं वक्ष्यति (४.३.१०७)। कठशाठाभ्यां प्रोक्तमधीयते काठशाठिनः॥ शौनक। वाजसनेय। साङ्गरव। शार्ङ्गरव। सांपेय। शाखेय। खाड़ायन। स्कन्ध। स्कन्द। देवदत्तशठ। रज्जुकण्ठ। रज्जुभार। कठशाठ। कशाय। तलवकार। पुरुषांसक। अश्वपेय। शौनकादिः॥

## कठचरकाल् लुक् ॥ १०७ ॥

कठचरकशब्दाभ्यां परस्य प्रोक्तप्रत्ययस्य लुग् भवति। कठशब्दाद् वैशंपायनान्तेवासिभ्यः (४.३.१०४) इति णिनेः, चरकशब्दादप्यणः। कठेन प्रोक्तमधीयते कठाः। चरकाः। छन्दसीत्येव—काठाः। चारकाः॥

## कलापिनोऽण् ॥ १०८ ॥

कलापिशब्दादण् प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये। वैशंपायनान्तेवासित्वाद् णिनेरपवादः। कलापिना प्रोक्तमधीयते कालापाः। 'इनण्यनपत्ये' (६.४.१६४) इति प्रकृतिभावे प्राप्ते, 'नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलिजाङ्गलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्' (वा० ६.४.

१४४ ) इति टिलोपः। अथाण्ग्रहणं किम्, यथाप्राप्तमित्येव सिद्धम् ? अधिकविधानार्थम्, तेन माथुरी वृत्तिः, सौलभानि ब्राह्मणानीत्येवमादि सिद्धम् ॥

## छगलिनो ढिनुक् ॥ १०९ ॥

छगलिन्शब्दाद् ढिनुक् प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये। कलाप्यन्तेवासित्वाद् णिनेरपवादः। छगलिना प्रोक्तमधीयते छागलेयिनः॥

## पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ ११० ॥

णिनिरिहानुवर्तते, न ढिनुक्। पाराशर्यशिलालिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये। भिक्षुनटसूत्रयोरिति यथासंख्यं प्रत्ययार्थविशेषणम्। सूत्रशब्दः प्रत्येकमभिसंबध्यते। तद्विषयता चात्रेष्यते, तदर्थं छन्दोग्रहणमनुवर्त्यम्, गुणकल्पनया च भिक्षुनटसूत्रयोश्छन्दस्त्वम्। पाराशर्येण प्रोक्तमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः। भिक्षुनटसूत्रयोरिति किम् ? पाराशरम्। शैलालम्॥

## कर्मन्दकृशाश्वादिनिः ॥ १११ ॥

भिक्षुनटसूत्रयोरित्येव। कर्मन्दकृशाश्वशब्दाभ्यामिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये यथासंख्यं भिक्षुनटसूत्रयोरभिधेययोः। अणोऽपवादः। अत्रापि तद्विषयतार्थं छन्दोग्रहणमनुवर्त्यम्। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः। भिक्षुनटसूत्रयोरित्येव—कार्मन्दम्। कार्शाश्वम्॥

## तेनैकदिक् ॥ ११२ ॥

तेनेति तृतीयासमर्थादेकदिगित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। एकदिक् तुल्यदिक्, समानदिगित्यर्थः। सुदाम्ना एकदिक् सौदामनी विद्युत्। हैमवती। त्रैककुदी। पैलुमूली। तेनेति प्रकृते पुनः समर्थविभक्तिग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्। पूर्वत्र हि छन्दोऽधिकारात् तद्विषयता साध्यते॥

## तसिश्च ॥ ११३ ॥

तसिश्च प्रत्ययो भवति तेनैकदिगित्येतस्मिन् विषये। पूर्वेण घादिष्वणादिषु च प्राप्तेष्वयमपरः प्रत्ययो विधीयते। स्वरादिपाठादव्ययत्वम्। सुदामतः। हिमवत्तः। पिलुमूलतः॥

## उरसो यच्च ॥ ११४ ॥

उरःशब्दाद् यत् प्रत्ययो भवति, चकारात् तसिश्च, तेनैकदिगित्येतस्मिन् विषये। अणोऽपवादः। उरसैकदिग् उरस्यः। उरस्तः॥

## उपज्ञाते ॥ ११५ ॥

तेनेत्येव। तृतीयासमर्थादुपज्ञात इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। विनोपदेशेन ज्ञातमुपज्ञातम्, स्वयमभिसंबुद्धमित्यर्थः[1]। पाणिनिनोपज्ञातं पाणिनीयमकालकं व्याकरणम्। काशकृत्स्नं गुरुलाघवम्। आपिशलं दुष्करणम्[2]॥

## कृते ग्रन्थे ॥ ११६ ॥

तेनेत्येव। तृतीयासमर्थात् कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् तत् कृतं ग्रन्थश्चेत् स भवति। वररुचिना कृता वाररुचाः श्लोकाः। हैकुपादो ग्रन्थः। भैकुराटो ग्रन्थः। जालूकः। ग्रन्थ इति किम् ? तक्षकृतः प्रासादः। उत्पादितं कृतम्, विद्यमानमेव ज्ञातमुपज्ञातमित्ययमनयोर्विशेषः॥

## संज्ञायाम् ॥ ११७ ॥

तृतीयासमर्थात् कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति समुदायेन चेत् संज्ञा ज्ञायते। मक्षिकाभिः कृतं माक्षिकम्। कार्मुकम्। सारघम्। पौत्तिकम्। मधुनः संज्ञा एताः॥

## कुलालादिभ्यो वुञ् ॥ ११८ ॥

तेन, कृते, संज्ञायामिति चैतत् सर्वमनुवर्तते। कुलालादिभ्यो वुञ् प्रत्ययो भवति तेन कृतमित्येतस्मिन्नर्थे संज्ञायां गम्यमानायाम्। कौलालकम्। वारुडकम्॥ कुलाल। वरुड। चण्डाल। निषाद। कर्मार। सेना। सिरिध्र। सेन्द्रिय। देवराज। परिषत्। वधू। रुरु। ध्रुव। रुद्र। अनडुह्। ब्रह्मन्। कुम्भकार। श्वपाक। कुलालादिः॥

## क्षुद्राभ्रमरवटरपादपादञ् ॥ ११९ ॥

तेन, कृते, संज्ञायामिति सर्वमनुवर्तते। क्षुद्रादिभ्योऽञ् प्रत्ययो भवति तेन कृत इत्येतस्मिन् विषये संज्ञायां गम्यमानायाम्। अणोऽपवादः। स्वरे विशेषः। क्षुद्रादिभिः कृतं क्षौद्रम्। भ्रामरम्। वाटरम्। पादपम्॥

---

१ - '०संबद्ध०' इति मुद्रितेषु। २ - 'पुष्करणम्' इति बाल०।

## तस्येदम् ॥ १२० ॥

तस्येति षष्ठीसमर्थादिदमित्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। अणादयः पञ्च महोत्सर्गाः, घादयश्च प्रत्यया यथाविहितं विधीयन्ते। प्रकृतिप्रत्ययार्थयोः षष्ठ्यर्थमात्रं तत्संबन्धिमात्रं च विवक्षितम्, यदपरं लिङ्गसंख्याप्रत्यक्षपरोक्षादिकं तत् सर्वमविवक्षितम्। उपगोरिदमौपगवम्। कापटवम्। राष्ट्रियम्। अवारपारीणम्। अनन्तरादिष्वनभिधानाद् न भवति, देवदत्तस्यानन्तरमिति ॥ संवहेस्तुरणिट् च ॥ संवोढुः स्वं सांवहित्रम्। सिद्ध एवात्राण्, इडर्थमुपसंख्यानम् ॥ अग्नीधः[1] शरणे रञ्[2] भं च ॥ आग्नीध्रम् ॥ समिधा-माधाने षेण्यण् ॥ सामिधेन्यो मन्त्रः। सामिधेनी ऋक् ॥

## रथाद् यत् ॥ १२१ ॥

रथशब्दाद् यत् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। अणोऽपवादः। रथस्येदं रथ्यम्, चक्रं वा युगं वा। रथाङ्ग एवेष्यते नान्यत्र, अनभिधानात्। 'रथसीताहलेभ्यो यद्विधौ' ( १.१.७२ महाभाष्यवा० ) इति तदन्तविधिरुपसंख्यायते। परमरथ्यम्। उत्तमरथ्यम् ॥

## पत्रपूर्वादञ् ॥ १२२ ॥

पतन्ति तेनेति पत्रमश्वादिकं वाहनमुच्यते। तत्पूर्वाद् रथशब्दादञ् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। पूर्वस्य यतोऽपवादः। आश्वरथं चक्रम्। औष्ट्ररथम्। गार्दभरथम् ॥

## पत्राध्वर्युपरिषदश्च ॥ १२३ ॥

पत्रं वाहनम्, तद्वाचिनः प्रातिपदिकादध्वर्युपरिषच्छब्दाभ्यां चाञ् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। अणोऽपवादः ॥ पत्राद् वाह्ये ॥ अश्वस्येदं वहनीयमाश्वम्। औष्ट्रम्। गार्दभम्। आध्वर्यवम्। पारिषदम् ॥

## हलसीराट् ठक् ॥ १२४ ॥

हलसीरशब्दाभ्यां ठक् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। अणोऽपवादः। हलस्येदं हालिकम्। सैरिकम् ॥

## द्वन्द्वाद् वुन् वैरमैथुनिकयोः ॥ १२५ ॥

---

१ - 'आग्नीधः' इति है०। २ - 'रण्' इति मुद्रितेपु।

द्वन्द्वसंज्ञकाद् वुन् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये, वैरमैथुनिकयोः प्रत्ययार्थ-विशेषणयोः। अणोऽपवादः। छं तु परत्वाद् बाधते। वैरे तावत्—बाभ्रव्यशालङ्कायनिका। काकोलूकिका। मैथुनिकायाम्—अत्रिभरद्वाजिका। कुत्सकुशिकिका। विवहनं मैथुनिका[1]। वैरस्य नपुंसकत्वेऽप्यमी स्वभावतः स्त्रीलिङ्गाः ॥ वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः ॥ दैवासुरम्। राक्षोऽसुरं वैरम् ॥

## गोत्रचरणाद् वुञ् ॥ १२६ ॥

गोत्रवाचिभ्यश्चरणवाचिभ्यश्च प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। अणोऽपवादः। छं तु परत्वाद् बाधते। गोत्रात् तावत्—ग्लौचुकायनकम्। औपगवकम् ॥ चरणाद् धर्माम्नाययोरिष्यते ॥ काठकम्। कालापकम्। मौदकम्। पैप्पलादकम् ॥

## सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ १२७ ॥

संघादिषु प्रत्ययार्थविशेषणेष्वञन्ताद्, यञन्ताद्, इञन्तात् च प्रातिपदिकादण् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। पूर्वस्य वुञोऽपवादः ॥ घोषग्रहणमत्र कर्तव्यम् ॥ तेन वैषम्याद् यथासंख्यं न भवति। अञन्तात्—बैदः संघः। बैदोऽङ्कः। बैदं लक्षणम्। बैदो घोषः। यञन्तात्—गार्गः संघः। गार्गोऽङ्कः। गार्गं लक्षणम्। गार्गो घोषः। इञन्तात्—दाक्षः संघः। दाक्षोऽङ्कः। दाक्षं लक्षणम्। दाक्षो घोषः। अङ्कलक्षणयोः को विशेषः ? लक्षणं लक्ष्यस्यैव[2] चिह्नभूतं स्वं यथा विद्या बिदानाम्, अङ्कस्तु गवादिस्थोऽपि गवादीनां स्वं न भवति। णित्करणं ङीबर्थं पुंवद्भावप्रतिषेधार्थं च। बैदी विद्यास्य बैदीविद्यः ॥

## शाकलाद्वा ॥ १२८ ॥

शाकलशब्दात् संघादिषु प्रत्ययार्थविशेषणेषु वाण् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। वुञोऽपवादः। शाकल्येन[3] प्रोक्तमधीयते, शाकलाः। तेषां संघः शाकलः, शाकलकः। शाकलोऽङ्कः, शाकलकोऽङ्कः। शाकलं लक्षणम्, शाकलकं लक्षणम्। शाकलो घोषः, शाकलको घोषः ॥

---

१ – 'विवहनमैथुनिका' इत्यपपाठो मुद्रितेषु। २ – यथान्यासपद० ।
३ – 'शाकलेन' इति मुद्रितेषु पाठः।

## छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ् ञ्यः ॥ १२९ ॥

संघादयो निवृत्ताः, सामान्येन विधानम्। छन्दोगादिभ्यः शब्देभ्यो ञ्यः प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। वुञणोरपवादः। चरणाद् धर्माम्नाययोः, तत्साहचर्याद् नटशब्दादपि धर्माम्नाययोरेव भवति। छन्दोगानां धर्मो वाम्नायो वा छान्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम्। बाह्वृच्यम्। नाट्यम्। अन्यत्र छान्दोगं कुलमित्यादि ॥

## न दण्डमाणवान्तेवासिषु ॥ १३० ॥

दण्डप्रधाना माणवा दण्डमाणवाः, अन्तेवासिनः शिष्याः। तेष्वभिधेयेषु वुञ् प्रत्ययो न भवति। गोत्रग्रहणमिहानुवर्तते, तेन वुञ्प्रतिषेधो विज्ञायते। गौकक्षाः दण्डमाणवा अन्तेवासिनो वा। दाक्षाः। माहकाः ॥

## रैवतिकादिभ्यश्छः ॥ १३१ ॥

रैवतिकादिभ्यश्छः प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। गोत्रप्रत्ययान्ता एते, ततः पूर्वेण वुञि प्राप्ते छविधानार्थं वचनम्। रैवतिकीयः। स्वापिशीयः॥ रैवतिक। स्वापिशि। क्षैमवृद्धि। गौरग्रीवि। औदमेयि। औदवाहि। बैजवापि ॥

## कौपिञ्जलहास्तिपदादण् ॥ १३२ ॥

कौपिञ्जलहास्तिपदशब्दाभ्यामण् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। गोत्रवुञोऽपवादः, गोत्राधिकारात्। कौपिञ्जलः। हास्तिपदः॥

## आथर्वणिकस्येकलोपश्च ॥ १३३ ॥

अणित्येव। आथर्वणिकशब्दादण् प्रत्ययो भवति, तत्सन्नियोगेन चेकलोपः, तस्येदमित्येतस्मिन् विषये। चरणवुञोऽपवादः। आथर्वणिकस्यायम् आथर्वणो धर्म आम्नायो वा। 'चरणाद् धर्माम्नाययोः' (वा० ४.३.१२६)॥

## तस्य विकारः ॥ १३४ ॥

तस्येति षष्ठीसमर्थाद् विकार इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। प्रकृतेरवस्थान्तरं विकारः। किमिहोदाहरणम् ? अप्राण्याद्युदात्तमवृद्धम्, यस्य च नान्यत् प्रतिपदं विधानम्। अश्मनो विकार आश्मनः। आश्मः। 'अश्मनो विकारे' (वा० ६.४.१४४) इति टिलोपः पाक्षिकः। भास्मनः। मार्त्तिकः। नित्स्वरेणाद्युदात्ता एते। तस्यप्रकरणे तस्येति पुनर्वचनं शैषिकनिवृत्त्यर्थम्। विकारावयवयोर्घादयो न भवन्ति। हालः। सैरः॥

## अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ १३५ ॥

प्राण्योषधिवृक्षवाचिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्योऽवयवे यथाविहितं प्रत्ययो भवति, चकाराद् विकारे च। तत्र प्राणिभ्योऽञ्जं वक्ष्यति (४.३.१५४)। कपोतस्य विकारोऽवयवो वा कापोतः। मायूरः। तैत्तिरः। ओषधिभ्यः—मौर्वं काण्डम्। मौर्वं भस्म। वृक्षेभ्यः—कारीरं काण्डम्। कारीरं भस्म। इत उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यो विकारावयवयोर्भवन्ति। अन्येभ्यस्तु विकारमात्रे। कथं द्वयमप्यधिक्रियते तस्य विकारः, अवयवे च प्राण्योषधिवृक्षेभ्य इति ? विकारावयवयोर्युगपदधिकारोऽपवादविधानार्थः। कृतनिर्देशौ (४.३.१२०) हि तौ॥

## बिल्वादिभ्योऽण् ॥ १३६ ॥

बिल्व इत्येवमादिभ्योऽण् प्रत्ययो भवति विकारावयवयोरर्थयोः। यथायोगमञ्-मयटोरपवादः। बिल्वस्य विकारोऽवयवो वा बैल्वः। गवेधुकाशब्दोऽत्र पठ्यते, ततः कोपधादेव सिद्धे मयड्बाधनार्थं ग्रहणम्॥ बिल्व। व्रीहि। काण्ड। मुद्ग। मसूर। गोधूम। इक्षु। वेणु। गवेधुका। कर्पासी। पाटली। कर्कन्धू। कुटीर। बिल्वादिः॥

## कोपधाच्च ॥ १३७ ॥

ककारोपधात् प्रातिपदिकादण् प्रत्ययो भवति यथायोगं विकारावयवयोरर्थयोः। अञोऽपवादः। तर्कु—तार्कवम्। तित्तिडीक—तैत्तिडीकम्। माण्डूकम्। दार्दुरूकम्। माधूकम्॥

## त्रपुजतुनोः षुक् ॥ १३८ ॥

त्रपुजतुशब्दाभ्यामण् प्रत्ययो भवति विकारे, तत्सन्नियोगेन तयोः षुगागमो भवति। ओरञोऽपवादः। त्रपुणो विकारः त्रापुषम्। जातुषम्। अप्राण्यादित्वाद् नावयवे॥

## ओरञ् ॥ १३९ ॥

उवर्णान्तात् प्रातिपदिकादञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अणोऽपवादः। अनुदात्तादेरन्यदिहोदाहरणम्। दैवदारवम्। भाद्रदारवम्॥

## अनुदात्तादेश्च ॥ १४० ॥

अनुदात्तादेः प्रातिपदिकादञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अणोऽपवादः। दाधित्थम्। कापित्थम्। माहित्थम्॥

## पलाशादिभ्यो वा ॥ १४१ ॥

पलाशादिभ्यः प्रातिपदिकेभ्यो वाञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। पालाशम्। खादिरम्। यावासम्। उभयत्र विभाषेयम्। पलाशखदिरशिंशपास्पन्दनानामनुदात्तादित्वात् प्राप्ते, अन्येषामप्राप्ते ॥ पलाश। खदिर। शिंशपा। स्पन्दन। करीर। शिरीष। यवास। विकङ्कत। पलाशादिः॥

## शम्याष्ट्लञ् ॥ १४२ ॥

शमीशब्दाट् ट्लञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अञोऽपवादः। शामीलं भस्म। शामीली स्रुक्॥

## मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४३ ॥

प्रकृतिमात्राद् वा मयट् प्रत्ययो भवति भक्ष्याच्छादनवर्जितयोर्विकारावयवयोरर्थयोर्भाषायां विषये यथायथं प्रत्ययेषु प्राप्तेषु। अश्ममयम्, आश्मनम्[1]। मूर्वामयम्, मौर्वम्। भाषायामिति किम् ? बैल्वः खादिरो वा यूपः ( आप० श्रौ० १८.१.८ ) स्यात्। अभक्ष्याच्छादनयोरिति किम् ? मौद्गः सूपः। कार्पासमाच्छादनम्। एतयोरित्यनेन किम्, यावता विकारावयवौ प्रकृतावेव ? ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञ्' ( ४.३.१५४ ) इत्येवमादयस्तद्विषयेऽपि यथा स्यात्—कपोतमयम्, कापोतम्। लोहमयम्, लौहमिति ॥

## नित्यं वृद्धशरादिभ्यः ॥ १४४ ॥

भाषायामभक्ष्याच्छादनयोरित्येव। वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्चाभक्ष्याच्छादनयोर्विकारावयवयोर्भाषायां विषये नित्यं मयट् प्रत्ययो भवति। वृद्धेभ्यस्तावत्—आम्रमयम्। शालमयम्। शाकमयम्। शरादिभ्यः—शरमयम्। दर्भमयम्। मृन्मयम्। नित्यग्रहणं किम्, यावतारम्भसामर्थ्यादेव नित्यं भविष्यति ? एकाचो नित्यं मयटमिच्छन्ति, तदनेन क्रियते—त्वङ्मयम्, स्रङ्मयम्, वाङ्मयमिति ॥ शर। दर्भ। मृत्। कुटी। तृण। सोम। बल्वज। शरादिः॥

## गोश्च पुरीषे ॥ १४५ ॥

गोशब्दात् पुरीषेऽभिधेये मयट् प्रत्ययो भवति। गोमयम्। पुरीष इति किम् ? गव्यं पयः। पुरीषं न विकारो नाप्यवयवः, तस्येदंविषये विधानम्। विकारावयवयोस्तु गोपयसोर्यत् ( ४.३.१६० ) वक्ष्यति ॥

---

१ - ' आश्मम् ' इत्यपि स्यात्। जयादित्यो विकारे टिलोपं पाक्षिकं मन्यते ( ४.३.१३४ ), वामनस्तु नित्यम्।

## पिष्टाच्च ॥ १४६ ॥

पिष्टशब्दाद् नित्यं मयट् प्रत्ययो भवति तस्य विकार इत्येतस्मिन् विषये। अणोऽपवादः। पिष्टमयं भस्म ॥

## संज्ञायां कन् ॥ १४७ ॥

पिष्टशब्दात् कन् प्रत्ययो भवति विकारे संज्ञायां विषये। मयटोऽपवादः। पिष्टकः ॥

## व्रीहेः पुरोडाशे ॥ १४८ ॥

व्रीहिशब्दाद् मयट् प्रत्ययो भवति पुरोडाशे विकारे। बिल्वाद्यणोऽपवादः। व्रीहिमयः पुरोडाशः। व्रैहमन्यत् ॥

## असंज्ञायां तिलयवाभ्याम् ॥ १४९ ॥

तिलयवशब्दाभ्यामसंज्ञाविषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः। तिलमयम्। यवमयम्। असंज्ञायामिति किम् ? तैलम्। यावकः। 'यावादिभ्यः कन्' ( ५.४.२९ )॥

## द्व्यचश्छन्दसि ॥ १५० ॥

द्व्यचः प्रातिपदिकाच् छन्दसि विषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः। भाषायां मयडुक्तः, छन्दस्यप्राप्तो विधीयते। यस्यं पर्णमयीं जुहूर्भवति ( तै० सं० ३.५.७.१ )। दर्भमयं वासो भवति ( मै० सं० १. ११.८ )। शरमयं बर्हिर्भवति ( आ० श्रौ० ९.७.५ )॥

## नोत्वद्वर्ध्रबिल्वात् ॥ १५१ ॥

उत्वतः प्रातिपदिकाद् वर्ध्रबिल्वशब्दाभ्यां च मयट् प्रत्ययो न भवति। 'द्व्यचश्छन्दसि' ( ४.३.१५० ) इति प्राप्तः प्रतिषिध्यते। मौञ्जं शिक्यम् ( तै० सं० ५.१.१०.५ )। गार्मुतं चरुम् ( तै० सं० २.४.४.१ )। वार्ध्री बालप्रग्रथिता ( आप० श्रौ० १८.१०.२३ ) भवति। बैल्वो ब्रह्मवर्चसंकामेन कार्युः ( मै० सं० ३.९.३ )। तपरकरणं तत्कालार्थम्। धूममयान्यभ्राणि। मतुब्निर्देशस्तदन्तविधिनिरासार्थः। इहैव स्यात्— वैणवी यष्टिरिति ॥

## तालादिभ्योऽण् ॥ १५२ ॥

तालादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति विकारावयवयोरर्थयोः। मयडादी-

नामपवादः। तालं धनुः। बार्हिणम्। ऐन्द्रालिशम्॥ तालाद् धनुषि ( ग० सू० १०४)। बार्हिण। इन्द्रालिश। इन्द्रादृश। इन्द्रायुध। चाप। श्यामाक। पीयूक्षा। तालादिः॥

## जातरूपेभ्यः परिमाणे ॥ १५३ ॥

जातरूपं सुवर्णम् । बहुवचननिर्देशात् तद्वाचिनः सर्वे गृह्यन्ते। जातरूपवाचिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति परिमाणे विकारे। मयडादीनामपवादः। हाटको निष्कः। हाटकं कार्षापणम्। जातरूपम्। तापनीयम्। परिमाण इति किम् ? यष्टिरियं हाटकमयी॥

## प्राणिरजतादिभ्योऽञ् ॥ १५४ ॥

प्राणिवाचिभ्यः प्रातिपदिकेभ्यो रजतादिभ्यश्चाञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अणादीनामपवादः। अनुदात्तादेरञ् ( ४.३.१४० ) विहित एव, परिशिष्टमिहोदाहरणम्। प्राणिभ्यस्तावत्—कापोतम्। मायूरम्। तैत्तिरम्। रजतादिभ्यः—राजतम्। सैसम्। लौहम्। रजतादिषु येऽनुदात्तादयः पठ्यन्ते रजतकण्टकारप्रभृतयः, तेभ्योऽञि सिद्धे पुनर्वचनं मयड्बाधनार्थम्॥ रजत। सीस। लोह। उदुम्बर। नीलदारु[1]। रोहितक। बिभीतक। पीतदारु[2]। तीव्रदारु। त्रिकण्टक। कण्टकार। रजतादिः॥

## ञितश्च तत्प्रत्ययात् ॥ १५५ ॥

अञित्येव। तदिति विकारावयवयोरर्थयोः प्रत्यवमर्शः। ञिद् यो विकारावयवप्रत्ययः, तदन्तात् प्रातिपदिकादञ् प्रत्ययो भवति विकारावयवयोरेव। मयटोऽपवादः। 'ओरञ्' ( ४.३.१३९ ), 'शम्याष्ट्लञ्' ( ४.३.१४२ ), 'प्राणिरजतादिभ्योऽञ्' ( ४.३.१५४ ), 'उष्ट्राद् वुञ्' ( ४.३.१५७ ), 'एण्या ढञ्' ( ४.३.१५९ ), 'कंसीयपरशव्ययोर्यञञौ०' ( ४.३.१६८ ) इत्येते प्रत्यया गृह्यन्ते। दैवदारवस्य विकारोऽवयवो वा दैवदारवम्। दाधित्थस्य दाधित्थम्। पालाशस्य पालाशम्। शामीलस्य शामीलम्। कापोतस्य कापोतम्। औष्ट्रकस्य औष्ट्रकम्। ऐणेयस्य ऐणेयम्। कांस्यस्य कांस्यम्। पारशवस्य पारशवम्। ञित इति किम् ? बैल्वमयम्। तत्प्रत्ययादिति किम् ? बैदमयम्॥

## क्रीतवत् परिमाणात् ॥ १५६ ॥

'प्राग्वतेष्ठञ्' ( ५.१.१८ ) इत्यत आरभ्य क्रीतार्थे ये प्रत्ययाः परिमाणाद् विहिताः, ते विकारेऽतिदिश्यन्ते। परिमाणात् क्रीत इव प्रत्यया भवन्ति तस्य विकार इत्येतस्मिन् विषये। अणादीनामपवादः। संख्यापि[3] परिमाणग्रहणेन गृह्यते, न रूढिपरिमाणमेव।

१ - 'नीचदारु' इति बाल०। २ - 'कपीत दारु' इति बाल०। 'पीतदास' इति है०।
३ - 'संख्या च' इति पाठान्तरम्।

निष्केण क्रीतं नैष्किकम्। एवं निष्कस्य विकारो नैष्किकः। शतेन क्रीतं शत्यम्, शतिकम्। शतस्य विकारः शत्यः, शतिकः। साहस्रः। वतिः सर्वसादृश्यार्थः। 'अध्यर्धपूर्वाद्[1] द्विगोर्लुगसंज्ञायाम्' ( ५.१.२८ ) इत्येवमादिकमप्यतिदिश्यते। द्विसहस्रः, द्विसाहस्रः। द्विनिष्कः, द्विनैष्किकः॥

## उष्ट्राद् वुञ् ॥ १५७ ॥

उष्ट्रशब्दाद् वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। प्राण्यञोऽपवादः। उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः॥

## उमोर्णयोर्वा ॥ १५८ ॥

उमाशब्दादूर्णाशब्दात् च वा वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। औमकम्, औमम्। और्णकम्, और्णम्॥

## एण्या ढञ् ॥ १५९ ॥

एणीशब्दाद् ढञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। प्राण्यञोऽपवादः। ऐणेयं मांसम्। पुंसस्त्वञेव भवति। एणस्य मांसमैणम्॥

## गोपयसोर्यत् ॥ १६० ॥

गोपयःशब्दाभ्यां यत् प्रत्ययो भवति विकारावयवयोरर्थयोः। गव्यम्। पयस्यम्। 'सर्वत्र गोरजादिप्रसङ्गे यत्' ( वा० ४.१.८५ ) अस्त्येव, मयड्विषये तु विधीयते॥

## द्रोश्च ॥ १६१ ॥

द्रुशब्दाद् यत् प्रत्ययो भवति विकारावयवयोरर्थयोः। ओरञोऽपवादः। द्रव्यम्॥

## माने वयः ॥ १६२ ॥

द्रुशब्दाद् माने विकारविशेषे वयः प्रत्ययो भवति। यतोऽपवादः। द्रुवयम्॥

## फले लुक् ॥ १६३ ॥

विकारावयवयोरुत्पन्नस्य फले तद्विशेषे विवक्षिते लुग् भवति। आमलक्याः फलम् आमलकम्। कुवलम्। बदरम्। फलितस्य वृक्षस्य फलमवयवो भवति विकारश्च, पल्लवितस्येव पल्लवः॥

---

१ – ' अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ' इति मूले।

## प्लक्षादिभ्योऽण् ॥ १६४ ॥

फल इत्येव। प्लक्षादिभ्यः प्रातिपदिकेभ्यः फले विकारावयवत्वेन विवक्षितेऽण् प्रत्ययो भवति। अञोऽपवादः। विधानसामर्थ्यात् तस्य न लुग् भवति। प्लाक्षम्। नैयग्रोधम्॥ प्लक्ष। न्यग्रोध। अश्वत्थ। इङ्गुदी। शिग्रु। कर्कन्धु। बृहती। प्लक्षादिः॥

## जम्ब्वा वा ॥ १६५ ॥

फल इत्येव। जम्बूशब्दात् फलेऽभिधेये वाण् प्रत्ययो भवति। अञोऽपवादः। अत्राणो विधानसामर्थ्याल् लुग् न भवति, अञस्तु भवत्येव। जाम्बवानि फलानि, जम्बूनि वा॥

## लुप् च ॥ १६६ ॥

वेत्येव। जम्ब्वाः फलेऽभिधेये प्रत्ययस्य वा लुब् भवति। युक्तवद्भावे विशेषः। जम्ब्वाः फलं जम्बूः फलम्, जम्बु फलम्, जाम्बवमिति वा ॥ लुप्प्रकरणे फलपाकशुषामुपसंख्यानम्॥ व्रीहयः। यवाः। माषाः। मुद्गाः। तिलाः ॥ पुष्पमूलेषु बहुलम्॥ मल्लिकायाः पुष्पं मल्लिका। नवमल्लिका जातिः। बिदार्या मूलं बिदारी। अंशुमती। बृहती। न च भवति—पाटलानि पुष्पाणि। शाल्वानि मूलानि। बहुलवचनात् क्वचिदन्यदपि भवति। कदम्बं पुष्पम्। अशोकम्। करवीरम्। बैल्वानि फलानीति॥

## हरीतक्यादिभ्यश्च ॥ १६७ ॥

हरीतकी इत्येवमादिभ्यः शब्देभ्यः फले प्रत्ययस्य लुब् भवति। लुकि प्राप्ते लुपो विधाने युक्तवद्भावे स्त्रीप्रत्ययश्रवणे च विशेषः। हरीतक्याः फलं हरीतकी। कोशातकी। नखरजनी। अत्र च व्यक्तिर्युक्तवद्भावेनेष्यते, वचनं त्वभिधेयवदेव भवति। हरीतक्याः फलानि हरीतक्यः॥ हरीतकी। कोशातकी। नखरजनी। शष्कण्डी। दाडी। दोडी। दीडी। श्वेतपाकी। अर्जुनपाकी। काला। द्राक्षा। ध्वाङ्क्षा। गर्गरिका। कण्टकारिका। शेफालिका। येषां च फलपाकनिमित्तः शोषः ( ग० सू० १०५ )। पुष्पमूलेषु बहुलम्[१] ( ग० सू० १०६ )। हरीतक्यादिः॥

## कंसीयपरशव्ययोर्यञञौ लुक् च ॥ १६८ ॥

---

१ - 'येषां..............बहुलम्' इति पाठः क्वाचित्कः।

'प्राक्क्रीताच्छः' ( ५.१.१ )—कंसीयः। 'उगवादिभ्यो यत्' ( ५.१.२ )—परशव्यः। कंसीयपरशव्यशब्दाभ्यां यथासंख्यं यञञौ प्रत्ययौ भवतस्तस्य विकार इत्येतस्मिन् विषये, तत्संनियोगेन च कंसीयपरशव्ययोर्लुग् भवति। कंसीयस्य विकारः कांस्यः। परशव्यस्य विकारः पारशवः। प्रातिपदिकाधिकाराद् धातुप्रत्ययस्य न लुग् भवति। परशव्यशब्दादनुदात्तादित्वादेवाञि सिद्धे लुगर्थं वचनम्। ननु च 'यस्येति०' ( ६.४.१४८ ) इति लोपे कृते 'हलस्तद्धितस्य' ( ६.४.१५० ) इति यलोपो भविष्यति ? नैतदस्ति। ईतीति तत्र वर्तते॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य तृतीयः पादः॥



# ॥ चतुर्थाध्यायस्य चतुर्थः पादः ॥

## प्राग्वहतेष्ठक् ॥ १ ॥

'तद्वहति रथयुगप्रासङ्गम्' ( ४.४.७६ ) इति वक्ष्यति। प्रागेतस्माद् वहतिसंशब्दनाद् यानर्थाननुक्रमिष्यामः, ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—'तेन दीव्यति खनति जयति जितम्' ( ४.४.२ ) इति। अक्षैर्दीव्यति आक्षिकः ॥ ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् ॥ माशब्द इत्याह माशब्दिकः। नैत्यशब्दिकः। कार्यशब्दिकः। वाक्यादेतत् प्रत्ययविधानम् ॥ आहौ प्रभूतादिभ्यः ॥ प्रभूतमाह प्राभूतिकः। पार्याप्तिकः। क्रियाविशेषणात् प्रत्ययः ॥ पृच्छतौ सुस्नातादिभ्यः॥ सुस्नातं पृच्छति सौस्नातिकः। सौखरात्रिकः। सौखशायनिकः ॥ गच्छतौ परदारादिभ्यः॥ परदारान् गच्छति पारदारिकः। गौरुतल्पिकः॥

## तेन दीव्यति खनति जयति जितम् ॥ २ ॥

तेनेति तृतीयासमर्थाद् दीव्यति खनति जयति जितमित्येतेष्वर्थेषु ठक् प्रत्ययो भवति। अक्षैर्दीव्यति आक्षिकः। शालाकिकः। अभ्र्या खनति आभ्रिकः। कौद्दालिकः। अक्षैर्जयति आक्षिकः। अक्षैर्जितम् आक्षिकम्। शालाकिकम्। सर्वत्र करणे तृतीया समर्थविभक्तिः। देवदत्तेन जितमिति प्रत्ययो न भवति, अनभिधानात्। अङ्गुल्या खनतीति च। प्रत्ययार्थे संख्याकालयोरविवक्षा। क्रियाप्रधानत्वेऽपि चाख्यातस्य तद्धितः स्वभावात् साधनप्रधानः॥

## संस्कृतम् ॥ ३ ॥

तेनेति तृतीयासमर्थात् संस्कृतमित्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। सत उत्कर्षाधानं संस्कारः। दध्ना संस्कृतं दाधिकम्। शार्ङ्गवेरिकम्। मारिचिकम्[1]। योगविभाग उत्तरार्थः॥

## कुलत्थकोपधादण् ॥ ४ ॥

कुलत्थशब्दात् ककारोपधाच् छब्दाच् च प्रातिपदिकादण् प्रत्ययो भवति संस्कृतमित्येतस्मिन् विषये। ठकोऽपवादः। कुलत्थैः संस्कृतं कौलत्थम्। ककारोपधात्—तैत्तिडीकम्। दार्दभकम्॥

## तरति ॥ ५ ॥

तेनेति तृतीयासमर्थात् तरतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। तरति प्लवत इत्यर्थः। काण्डप्लवेन तरति काण्डप्लविकः। औडुपिकः॥

## गोपुच्छाट् ठञ् ॥ ६ ॥

गोपुच्छशब्दाट् ठञ् प्रत्ययो भवति तरतीत्येतस्मिन्नर्थे। ठकोऽपवादः। स्वरे विशेषः। गौपुच्छिकः॥

## नौद्व्यचष्ठन् ॥ ७ ॥

नौशब्दाद् द्व्यचश्च प्रातिपदिकाट् ठन् प्रत्ययो भवति तरतीत्येतस्मिन्नर्थे। ठकोऽपवादः। नावा तरति नाविकः। द्व्यचः खल्वपि—घटिकः। प्लविकः। बाहुकः। षकारः सांहितिको नानुबन्धः। बाहुका स्त्री।

---

१ - 'मारीचिकम्' इत्यपपाठो है० ।

आकर्षात् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च।
आवसथात् किशरादेः षितः षडेते ठगधिकारे॥
विधिवाक्यापेक्षं च षट्त्वम्, प्रत्ययास्तु सप्त॥

## चरति ॥ ८ ॥

तेनेति तृतीयासमर्थात् चरतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। चरतिर्भक्षणे गतौ च ( भ्वा० ३७६ ) वर्तते। दध्ना चरति दाधिकः। हास्तिकः। शाकटिकः॥

## आकर्षात् ष्ठल् ॥ ९ ॥

आकर्षशब्दात् ष्ठल् प्रत्ययो भवति चरतीत्येतस्मिन्नर्थे। ठकोऽपवादः। लकारः स्वरार्थः। षकारो ङीषर्थः। आकर्षेण चरति आकर्षिकः। आकर्षिकी। आकर्ष इति सुवर्णपरीक्षार्थो निकषोपल उच्यते॥

## पर्पादिभ्यः ष्ठन् ॥ १० ॥

पर्प इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति चरतीत्येतस्मिन्नर्थे। ठकोऽपवादः। नकारः स्वरार्थः। षकारो ङीषर्थः। पर्पिकः। पर्पिकी। अश्विकः। अश्विकी॥ पर्प। अश्व। अश्वत्थ। रथ। जाल। न्यास। व्याल। पादः पच्च ( ग० सू० १०७ )। पदिकः[1]। पर्पादिः॥

## श्वगणाट् ठञ् च ॥ ११ ॥

श्वगणशब्दात् ठञ् प्रत्ययो भवति, चकारात् ष्ठन्, चरतीत्येतस्मिन्नर्थे। ठकोऽपवादः। श्वगणेन चरति श्वागणिकः। श्वागणिकी। ष्ठन्—श्वगणिकः। श्वगणिकी। श्वादेरिञि ( ७.३.८ ) इत्यत्र वक्ष्यति—'इकारादिग्रहणं च कर्तव्यं श्वागणिकाद्यर्थम्' ( वा० ७.३.८) इति। तेन ठञि द्वारादिकार्यं न भवति॥

## वेतनादिभ्यो जीवति ॥ १२ ॥

तेनेति तृतीयासमर्थेभ्यो वेतनादिभ्यः शब्देभ्यो जीवतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। वेतनेन जीवति वैतनिकः कर्मकरः। धनुर्दण्डग्रहणमत्र संघातविगृहीतार्थम्। धानुर्दण्डिकः। धानुष्कः। दाण्डिकः॥ वेतन। वाह। अर्धवाह। धनुर्दण्ड। जाल। वेस। उपवेस। प्रेषण। उपस्ति। सुख। शय्या। शक्ति। उपनिषत्। उपवेष। स्रक्। पाद। उपस्थान। वेतनादिः॥

---

१ - 'पाद। पच्च। पदिक।' इति हैः०।

## वस्नक्रयविक्रयाट्ठन् ॥ १३ ॥

वस्नक्रयविक्रयशब्दाभ्यां तृतीयासमर्थाभ्यां ठन् प्रत्ययो भवति, जीवतीत्येतस्मिन् विषये। ठकोऽपवादः। वस्नेन जीवति वस्निकः। क्रयविक्रयग्रहणं संघातविगृहीतार्थम्। क्रयविक्रयिकः। क्रयिकः। विक्रयिकः॥

## आयुधाच्छ च ॥ १४ ॥

आयुधशब्दाच् छप्रत्ययो भवति, चकारात् ठंश्च, जीवतीत्येतस्मिन् विषये। आयुधेन जीवति आयुधीयः। आयुधिकः॥

## हरत्युत्सङ्गादिभ्यः ॥ १५ ॥

तेनेत्येव। उत्सङ्गादिभ्यस्तृतीयासमर्थेभ्यो हरतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। हरतिर्देशान्तरप्रापणे वर्तते। उत्सङ्गेन हरति औत्सङ्गिकः। औडुपिकः॥ उत्सङ्ग। उडुप। उत्पत। पिटक। उत्सङ्गादिः॥

## भस्त्रादिभ्यः ष्ठन् ॥ १६ ॥

भस्त्रेत्येवमादिभ्यस्तृतीयासमर्थेभ्यो हरतीत्येतस्मिन्नर्थे ष्ठन् प्रत्ययो भवति। भस्त्रया हरति भस्त्रिकः। भस्त्रिकी। भरटिकः। भरटिकी॥ भस्त्रा। भरट। भरण। शीर्षभार। शीर्षेभार। अंसभार। अंसेभार। भस्त्रादिः॥

## विभाषा विवधवीवधात् ॥ १७ ॥

हरतीत्येव। विवधवीवधशब्दाभ्यां तृतीयासमर्थाभ्यां विभाषा ष्ठन् प्रत्ययो भवति। तेन मुक्ते प्रकृतष्ठग् भवति। विवधेन हरति विवधिकः। विवधिकी। वीवधिकः। वीवधिकी। ठक् खल्वपि—वैवधिकः। वैवधिकी। विवधवीवधशब्दौ समानार्थौ पथि पर्याहारे च वर्तेते॥

## अण् कुटिलिकायाः ॥ १८ ॥

हरतीत्येव। कुटिलिकाशब्दात् तृतीयासमर्थादण् प्रत्ययो भवति हरतीत्येतस्मिन्नर्थे। कुटिलिकया हरति मृगो व्याधं कौटिलिको मृगः। कुटिलिकया हरत्यङ्गारान् कौटिलिकः कर्मारः। कुटिलिका वक्रगतिः, कर्माराणामायुधकर्षणी लोहमयी यष्टिश्चोच्यते॥

## निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ १९ ॥

तेनेत्येव। अक्षद्यूतादिभ्यस्तृतीयासमर्थेभ्यो निर्वृत्त इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरम्। जानुप्रहृतिकम्॥ अक्षद्यूत। जानुप्रहृत। जङ्घाप्रहृत। पादस्वेदन। कण्टकमर्दन। गतागत। यातोपयात। अनुगत। अक्षद्यूतादिः॥

## त्रेर्मम् नित्यम् ॥ २० ॥

निर्वृत्त इत्येव। 'ड्वितः क्त्रिः' ( ३.३.८८ ) इत्ययं त्रिशब्दो गृह्यते। त्र्यन्ताद् नित्यं मप् प्रत्ययो भवति तेन निर्वृत्त इत्येतस्मिन्नर्थे। 'डुपचष् पाके' ( भ्वा० ७२२ )—पक्त्रिमम्। डुवप् ( भ्वा० ७२९ )—उप्त्रिमम्। डुकृञ् ( तना० १० )—कृत्रिमम्। नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम्। तेन त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवति, विषयान्तरे न प्रयोक्तव्यमिति ॥भावप्रत्ययान्तादिमब् वक्तव्यः॥ पाकेन निर्वृत्तं पाकिमम्। त्यागिमम्। सेकिमम्। कुट्टिमम्॥

## अपमित्ययाचिताभ्यां कक्कनौ ॥ २१ ॥

निर्वृत्त इत्येव। अपमित्ययाचितशब्दाभ्यां यथासंख्यं कक् कन् इत्येतौ प्रत्ययौ भवतो निर्वृत्त इत्येतस्मिन्नर्थे। आपमित्यकम्। याचितकम्॥

## संसृष्टे ॥ २२ ॥

तेनेत्येव। तृतीयासमर्थात् संसृष्ट इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। संसृष्टमेकीभूतमभिन्नमित्यर्थः। दध्ना संसृष्टं दाधिकम्। मारिचिकम्। शार्ङ्गवेरिकम्। पैप्पलिकम्॥

## चूर्णादिनिः ॥ २३ ॥

चूर्णशब्दादिनिः प्रत्ययो भवति संसृष्टे। ठकोऽपवादः। चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः। चूर्णिनो धानाः॥

## लवणाल्लुक् ॥ २४ ॥

संसृष्ट इत्यनेनोत्पन्नस्य ठको लवणशब्दाद् लुग् भवति। लवणः सूपः। लवणं शाकम्। लवणा यवागूः। द्रव्यवाची लवणशब्दो लुकं प्रयोजयति, न गुणवाची॥

## मुद्गादण् ॥ २५ ॥

मुद्गशब्दादण् प्रत्ययो भवति संसृष्ट इत्येतस्मिन् विषये। ठकोऽपवादः। मौद्ग ओदनः। मौद्गी यवागूः॥

## व्यञ्जनैरुपसिक्ते ॥ २६ ॥

तेनेत्येव। व्यञ्जनवाचिभ्यः प्रातिपदिकेभ्यस्तृतीयासमर्थेभ्य उपसिक्त इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। दध्ना उपसिक्तं दाधिकम्। सौपिकम्। खारिकम्। व्यञ्जनैरिति किम्? उदकेनोपसिक्त ओदनः॥

## ओजःसहोऽम्भसा वर्तते ॥ २७ ॥

ओजस् सहस् अम्भस् इत्येतेभ्यस्तृतीयासमर्थेभ्यो वर्तत इत्यर्थे ठक् प्रत्ययो भवति। ओजसा वर्तत औजसिकः शूरः। साहसिकश्चौरः। आम्भसिको मत्स्यः॥

## तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ २८ ॥

तदिति द्वितीयासमर्थविभक्तिः। प्रति अनु इत्येवंपूर्वेभ्य ईपलोमकूलशब्देभ्यो द्वितीयासमर्थेभ्यो वर्तत इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। ननु च वृतिरकर्मकः, तस्य कथं कर्मणा संबन्धः? क्रियाविशेषणमकर्मकाणामपि कर्म भवति। प्रतीपं वर्तते प्रातीपिकः। आन्वीपिकः। प्रातिलोमिकः। आनुलोमिकः। प्रातिकूलिकः। आनुकूलिकः॥

## परिमुखं च ॥ २९ ॥

परिमुखशब्दाद् द्वितीयासमर्थाद् वर्तत इत्यस्मिन्नर्थे ठक् प्रत्ययो भवति। परिमुखं वर्तते पारिमुखिकः। चकारोऽनुक्तसमुच्चयार्थः। पारिपार्श्विकः॥

## प्रयच्छति गर्ह्यम् ॥ ३० ॥

तदिति द्वितीयासमर्थात् प्रयच्छतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति, यत् तद् द्वितीयासमर्थं गर्ह्यं चेत् तद् भवति। द्विगुणार्थं द्विगुणम्, तादर्थ्यात् ताच्छब्द्यम्। द्विगुणं प्रयच्छति द्वैगुणिकः। त्रैगुणिकः ॥ वृद्धेर्वृधुषिभावो वक्तव्यः॥ वार्धुषिकः। प्रकृत्यन्तरं वा वृद्धिपर्यायो वृधुषिशब्दः। गर्ह्यमिति किम्? द्विगुणं प्रयच्छत्यधमर्णः॥

## कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥ ३१ ॥

प्रयच्छति गर्ह्यमित्येव। कुसीदं वृद्धिः, तदर्थं द्रव्यं कुसीदम्। एकादशार्था दश दशैकादशशब्देनोच्यन्ते। कुसीददशैकादशशब्दाभ्यां यथासंख्यं ष्ठन् ष्ठच् इत्येतौ प्रत्ययौ भवतः प्रयच्छति गर्ह्यमित्येतस्मिन् विषये। ठकोऽपवादौ। कुसीदं प्रयच्छति कुसीदिकः। कुसीदिकी। दशैकादशिकः। दशैकादशिकी॥

## उञ्छति ॥ ३२ ॥

तदिति द्वितीयासमर्थादुञ्छतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। बदराण्युञ्छति बादरिकः। श्यामाकिकः। भूमौ पतितस्यैकैकस्य कणस्योपादानमुञ्छः। कणानुञ्छति काणिकः॥

## रक्षति ॥ ३३ ॥

तदिति द्वितीयासमर्थाद् रक्षतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। समाजं रक्षति सामाजिकः। सांनिवेशिकः॥

## शब्ददर्दुरं करोति ॥ ३४ ॥

तदिति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां करोतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। शब्दं करोति शाब्दिको वैयाकरणः। दार्दुरिकः कुम्भकारः॥

## पक्षिमत्स्यमृगान् हन्ति ॥ ३५ ॥

तदित्येव। पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो हन्तीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणमिहेष्यते। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। तैत्तिरिकः। मत्स्य—मात्स्यिकः। मैनिकः। शाफरिकः। शाकुलिकः। मृग—मार्गिकः। हारिणिकः। सौकरिकः। सारङ्गिकः॥

## परिपन्थं च तिष्ठति ॥ ३६ ॥

परिपन्थशब्दात् तदिति द्वितीयासमर्थात् तिष्ठतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। परिपन्थं तिष्ठति पारिपन्थिकश्चौरः। चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोति। परिपन्थं हन्ति पारिपन्थिकः। समर्थविभक्तिप्रकरणे पुनर्द्वितीयोच्चारणं लौकिकवाक्यप्रदर्शनार्थम्। परिपथशब्दपर्यायः परिपन्थशब्दोऽस्तीति ज्ञापयति। स विषयान्तरेऽपि प्रयोक्तव्यः॥

## माथोत्तरपदपदव्यनुपदं धावति ॥ ३७ ॥

माथशब्दोत्तरपदात् प्रातिपदिकात् पदवी अनुपद इत्येताभ्यां च धावतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। दण्डमाथं धावति दाण्डमाथिकः। शौल्कमाथिकः। पादविकः। आनुपदिकः। माथशब्दः पथिपर्यायः॥

## आक्रन्दाट्‌ ठञ्‌ च ॥ ३८ ॥

आक्रन्दन्त्येतस्मिन्नित्याक्रन्दो देशः। अथवाक्रन्द्यत इत्याक्रन्द आर्तायनमुच्यते। विशेषाभावाद्‌ द्वयोरपि ग्रहणम्‌। आक्रन्दशब्दात्‌ तदिति द्वितीयासमर्थाद्‌ धावतीत्येतस्मिन्नर्थे ठञ्‌ प्रत्ययो भवति, चकारात्‌ ठक्‌ च। स्वरे विशेषः। आक्रन्दं धावति आक्रन्दिकः। आक्रन्दिकी ॥

## पदोत्तरपदं गृह्णाति ॥ ३९ ॥

पदशब्द उत्तरपदं यस्य तस्मात्‌ पदोत्तरपदशब्दात्‌ तदिति द्वितीयासमर्थाद्‌ गृह्णातीत्येतस्मिन्नर्थे ठक्‌ प्रत्ययो भवति। पूर्वपदं गृह्णाति पौर्वपदिकः। औत्तरपदिकः। पदान्तादिति नोक्तम्‌—बहुच्पूर्वान्‌ मा भूदिति ॥

## प्रतिकण्ठार्थललामं च ॥ ४० ॥

प्रतिकण्ठार्थललामशब्देभ्यस्तदिति द्वितीयासमर्थेभ्यो गृह्णातीत्येतस्मिन्नर्थे ठक्‌ प्रत्ययो भवति। प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः। आर्थिकः। लालामिकः ॥

## धर्मं चरति ॥ ४१ ॥

धर्मशब्दात्‌ तदिति द्वितीयासमर्थात्‌ चरतीत्येतस्मिन्नर्थे ठक्‌ प्रत्ययो भवति। चरतिरासेवायां नानुष्ठानमात्रे। धर्मं चरति धार्मिकः ॥ अधर्माच्चेति वक्तव्यम्‌ ॥ आधर्मिकः ॥

## प्रतिपथमेति ठंश्च ॥ ४२ ॥

प्रतिपथशब्दाद्‌ द्वितीयासमर्थाद्‌ एतीत्यस्मिन्नर्थे ठन्‌ प्रत्ययो भवति, चकारात्‌ ठक्‌ च। प्रतिपथमेति प्रतिपथिकः। प्रातिपथिकः ॥

## समवायान्‌ समवैति ॥ ४३ ॥

समवायवाचिभ्यः शब्देभ्यस्तदिति द्वितीयासमर्थेभ्यः समवैतीत्येतस्मिन्नर्थे ठक्‌ प्रत्ययो भवति। समवायः समूह उच्यते, न संप्रधारणा। समवायानिति बहुवचनं स्वरूपविधिनिरासार्थम्‌। समवैति आगत्य तदेकदेशीभवतीत्यर्थः। समवायान्‌ समवैति सामवायिकः। सामाजिकः। सामूहिकः। सान्निवेशिकः ॥

## परिषदो ण्यः ॥ ४४ ॥

परिषदो ण्यः प्रत्ययो भवति समवायान् समवैतीत्येतस्मिन् विषये। ठकोऽपवादः। परिषदं समवैति पारिषद्यः॥

## सेनाया वा ॥ ४५ ॥

सेनाशब्दाद् वा ण्यः प्रत्ययो भवति समवायान् समवैतीत्येतस्मिन्नर्थे। ठकोऽपवादः। पक्षे सोऽपि भवति। सेनां समवैति सैन्यः। सैनिकः॥

## संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥ ४६ ॥

ललाटकुक्कुटीशब्दाभ्यां तदिति द्वितीयासमर्थाभ्यां पश्यतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति संज्ञायां विषये। संज्ञाग्रहणमभिधेयनियमार्थम्, न तु रूढ्यर्थम्। ललाटं पश्यति लालाटिकः सेवकः। कौक्कुटिको भिक्षुः। सर्वावयवेभ्यो ललाटं दूरे दृश्यते। तदनेन ललाटदर्शनेन सेवकस्य स्वामिनं प्रत्यनुपश्लेषः कार्येष्वनुपस्थायित्वं लक्ष्यते। लालाटिकः सेवकः। स्वामिनः कार्येषु नोपतिष्ठत इत्यर्थः। कुक्कुटीशब्देनापि कुक्कुटीपातो लक्ष्यते। देशस्याल्पतया हि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छति, स उच्यते कौक्कुटिक इति॥

## तस्य धर्म्यम् ॥ ४७ ॥

तस्येति षष्ठीसमर्थाद् धर्म्यमित्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। धर्म्यं न्याय्यम्, आचारयुक्तमित्यर्थः। शुल्कशालाया धर्म्यं शौल्कशालिकम्। आकरिकम्। आपणिकम्। गौल्मिकम्॥

## अण् महिष्यादिभ्यः ॥ ४८ ॥

महिषीत्येवमादिभ्योऽण् प्रत्ययो भवति तस्य धर्म्यमित्येतस्मिन् विषये। ठकोऽपवादः। महिष्या धर्म्यं माहिषम्। प्राजावतम्॥ महिषी। प्रजावती। प्रलेपिका। विलेपिका। अनुलेपिका। पुरोहित। मणिपाली। अनुचारक। होतृ। यजमान। महिष्यादिः॥

## ऋतोऽञ् ॥ ४९ ॥

ऋकारान्तात् प्रातिपदिकादञ् प्रत्ययो भवति तस्य धर्म्यमित्येतस्मिन् विषये। ठकोऽपवादः। पोतुर्धर्म्यं पौत्रम्। औद्गात्रम्॥ नराच्चेति वक्तव्यम्॥ नरस्य धर्म्या नारी॥ विशसितुरिड्लोपश्च॥ विशसितुर्धर्म्यं वैशस्त्रम्॥ विभाजयितुर्णिलोपश्च॥ विभाजयितुर्धर्म्यं वैभाजित्रम्॥

## अवक्रयः ॥ ५० ॥

तस्येत्येव। षष्ठीसमर्थादवक्रय इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अवक्रीणीतेऽनेनेत्यवक्रयः, पिण्डक उच्यते। शुल्कशालाया अवक्रयः शौल्कशालिकः। आकरिकः। आपणिकः। गौल्मिकः। नन्ववक्रयोऽपि धर्म्यमेव ? नैतदस्ति। लोकपीडया धर्मातिक्रमेणाप्यवक्रयो भवति ॥

## तदस्य पण्यम् ॥ ५१ ॥

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं पण्यं चेत् तद् भवति। अपूपाः पण्यमस्य आपूपिकः। शाष्कुलिकः। मौदकिकः। पण्यमिति विशेषणं तद्धितवृत्तावन्तर्भूतम् , अतः पण्यशब्दो न प्रयुज्यते ॥

## लवणाट् ठञ् ॥ ५२ ॥

लवणशब्दाट् ठञ् प्रत्ययो भवति तदस्य पण्यमित्येतस्मिन् विषये। ठकोऽपवादः। स्वरे विशेषः। लवणं पण्यमस्य लावणिकः ॥

## किशरादिभ्यः ष्ठन् ॥ ५३ ॥

किशर इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति तदस्य पण्यमित्येतस्मिन् विषये। ठकोऽपवादः। किशरादयो गन्धविशेषवचनाः। किशराः पण्यमस्य किशरिकः। किशरिकी। नरदिकः। नरदिकी॥ किशर। नरद। नलद। सुमङ्गल। तगर। गुग्गुलु। उशीर। हरिद्रा। हरिद्रायणी। किशरादिः॥

## शलालुनोऽन्यतरस्याम् ॥ ५४ ॥

शलालुशब्दादन्यतरस्यां ष्ठन् प्रत्ययो भवति तदस्य पण्यमित्येतस्मिन् विषये। ठकोऽपवादः, पक्षे सोऽपि भवति। शलालुशब्दो गन्धविशेषवचनः। शलालु पण्यमस्य शलालुकः। शलालुकी। शालालुकः। शालालुकी ॥

## शिल्पम् ॥ ५५ ॥

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं शिल्पं चेत् तद् भवति। शिल्पं कौशलम्। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः। पाणविकः। वैणिकः। मृदङ्गवादने वर्तमानो मृदङ्गशब्दः प्रत्ययमुत्पादयति। शिल्पं तद्धितवृत्तावन्तर्भवति॥

## मड्डुकझर्झरादणन्यतरस्याम् ॥ ५६ ॥

मड्डुकझर्झरशब्दाभ्यामन्यतरस्यामण् प्रत्ययो भवति तदस्य शिल्पमित्येतस्मिन् विषये। ठकोऽपवादः। पक्षे सोऽपि भवति। मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः। झार्झरः, झार्झरिकः॥

## प्रहरणम् ॥ ५७ ॥

तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं प्रहरणं चेत् तद् भवति। असिः प्रहरणमस्य आसिकः। प्रासिकः। चाक्रिकः। धानुष्कः॥

## परश्वधाट् ठञ् च ॥ ५८ ॥

परश्वधशब्दाट् ठञ् प्रत्ययो भवति, चकाराट् ठक्। स्वरे विशेषः। परश्वधः प्रहरणमस्य पारश्वधिकः॥

## शक्तियष्ट्योरीकक् ॥ ५९ ॥

शक्तियष्टिशब्दाभ्यामीकक् प्रत्ययो भवति तदस्य प्रहरणमित्येतस्मिन् विषये। ठकोऽपवादः। शक्तिः प्रहरणमस्य शाक्तीकः। याष्टीकः॥

## अस्तिनास्तिदिष्टं मतिः ॥ ६० ॥

तदस्येत्येव। तदिति प्रथमासमर्थेभ्योऽस्ति नास्ति दिष्ट इत्येतेभ्यः शब्देभ्योऽस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं मतिश्चेत् तद् भवति। अस्ति मतिरस्य आस्तिकः। नास्ति मतिरस्य नास्तिकः। दैष्टिकः। न च मतिसत्तामात्रे प्रत्यय इष्यते। किं तर्हि ? परलोकोऽस्तीति यस्य मतिरस्ति[1], स आस्तिकः। तद्विपरीतो नास्तिकः। प्रमाणानुपातिनी यस्य मतिः स दैष्टिकः। तदेतदभिधानशक्तिस्वभावाल् लभ्यते। अस्तिनास्तिशब्दौ निपातौ, वचनसामर्थ्याद् वा आख्याताद् वाक्याच् च प्रत्ययः॥

## शीलम् ॥ ६१ ॥

तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं शीलं चेत् तद् भवति। शीलं स्वभावः। अपूपभक्षणं शीलमस्य आपूपिकः। शाष्कुलिकः। मौदकिकः। भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्तावन्तर्भवति॥

---

१ – 'अस्ति' इति नास्ति है०।

## छत्रादिभ्यो णः ॥ ६२ ॥

छत्र इत्येवमादिभ्यः प्रातिपदिकेभ्यो णः प्रत्ययो भवति तदस्य शीलमित्येतस्मिन् विषये। ठकोऽपवादः। छत्रं शीलमस्य छात्रः। छादनादावरणाच्छत्रम्। गुरुकार्येष्ववहितस्तच्छिद्रावरणप्रवृत्तश्छत्रशीलः शिष्यश्छात्रः। स्थाशब्दोऽत्र पठ्यते, स चोपसर्गपूर्वोऽत्र गृह्यते—आस्था संस्था अवस्थेति॥ छत्र। बुभुक्षा। शिक्षा। पुरोह। स्था। चुरा। उपस्थान। ऋषि। कर्मन्। विश्वधा। तपस्। सत्य। अनृत। शिबिका। छत्रादिः॥

## कर्माध्ययने वृत्तम् ॥ ६३ ॥

तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं कर्म चेद् तद्वृत्तमध्ययनविषयं भवति। एकमन्यदध्ययने कर्म वृत्तमस्य ऐकान्यिकः। द्वैयन्यिकः। त्रैयन्यिकः। एकमन्यदिति विगृह्य 'तद्धितार्थो०' (२.१.५१) इति समासः। ततश्च ठक् प्रत्ययः। अध्ययने कर्म वृत्तमित्येतत् सर्वं तद्धितवृत्तावन्तर्भवति। यस्याध्ययनप्रयुक्तस्य[1] परीक्षाकाले पठतः स्खलितमपपाठरूपमेकं जातम्, स उच्यत ऐकान्यिक इति। एवं द्वैयन्यिकः, त्रैयन्यिक इति॥

## बह्वच्पूर्वपदाट्ठच् ॥ ६४ ॥

बह्वच् पूर्वपदं यस्य तस्माद् बह्वच्पूर्वपदात् प्रातिपदिकात् ठच् प्रत्ययो भवति तदस्य कर्माध्ययने वृत्तमित्येतस्मिन्नर्थे। ठकोऽपवादः। द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः। त्रयोदशान्यिकः। चतुर्दशान्यिक इति। चतुर्दशापपाठा अस्य जाता इत्यर्थः। उदात्ते कर्तव्ये योऽनुदात्तं करोति, स उच्यतेऽन्यत् त्वं करोषीति॥

## हितं भक्षाः ॥ ६५ ॥

तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं हितं चेत् तद् भवति, तच्च भक्षाः। ननु च हितयोगे चतुर्थ्या भवितव्यम्, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते ? एवं तर्हि सामर्थ्याद् विभक्तिविपरिणामो भविष्यति। अपूपभक्षणं हितमस्मै आपूपिकः। शाष्कुलिकः। मौदकिकः। हितार्थक्रिया च तद्धितवृत्तावन्तर्भवति॥

## तदस्मै दीयते नियुक्तम् ॥ ६६ ॥

---

१ - 'यस्याध्ययने नियुक्तस्य' इति बाल०।

तदिति प्रथमासमर्थाद् अस्मा इति चतुर्थ्यर्थे ठक् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं तच्चेद् दीयते नियुक्तम्। नियोगेनाव्यभिचारेण दीयत इत्यर्थः। अव्यभिचारो नियोगः। अग्रे भोजनमस्मै नियुक्तं दीयत आग्रभोजनिकः। आपूपिकः। शाष्कुलिकः। केचित् तु नियुक्तं नित्यमाहुः। अपूपा नित्यमस्मै दीयन्त आपूपिकः॥

## श्राणामांसौदनाट्टिठन् ॥ ६७ ॥

श्राणामांसौदनशब्दाभ्यां टिठन् प्रत्ययो भवति तदस्मै दीयते नियुक्तमित्येतस्मिन्नर्थे। ठकोऽपवादः। इकार उच्चारणार्थः। टकारो ङीबर्थः। श्राणा नियुक्तमस्मै दीयते श्राणिकः। श्राणिकी। मांसौदनिकः। मांसौदनिकी। अथ[1] ठञेव कस्माद् नोक्तः, न ह्यत्र ठञष्टिठनो वा विशेषोऽस्ति ? मांसौदनग्रहणं संघातविगृहीतार्थं केचिदिच्छन्ति। तत्र वृद्ध्यभावो विशेषः। ओदनिकः। ओदनिकी॥

## भक्तादणन्यतरस्याम् ॥ ६८ ॥

भक्तशब्दादण् प्रत्ययो भवत्यन्यतरस्यां तदस्मै दीयते नियुक्तमित्येतस्मिन् विषये। ठकोऽपवादः। पक्षे सोऽपि भवति। भक्तमस्मै दीयते नियुक्तं भाक्तः, भाक्तिकः॥

## तत्र नियुक्तः ॥ ६९ ॥

तत्रेति सप्तमीसमर्थाद् नियुक्त इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। नियुक्तोऽधिकृतो व्यापारित इत्यर्थः। शुल्कशालायां नियुक्तः शौल्कशालिकः। आकरिकः। आपणिकः। गौल्मिकः। दौवारिकः॥

## अगारान्ताट्ठन् ॥ ७० ॥

अगारशब्दान्तात् प्रातिपदिकात् ठन् प्रत्ययो भवति तत्र नियुक्त इत्येतस्मिन् विषये। ठकोऽपवादः। देवागारे नियुक्तो देवागारिकः। कोष्ठागारिकः। भाण्डागारिकः॥

## अध्यायिन्यदेशकालात् ॥ ७१ ॥

तत्रेत्येव। सप्तमीसमर्थाददेशवाचिनः प्रातिपदिकादकालवाचिनश्चाध्यायिन्यभिधेये ठक् प्रत्ययो भवति। अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते, तत इदं प्रत्ययविधानम्। श्मशानेऽधीते श्माशानिकः। चातुष्पथिकः। अकालात्— चतुर्दश्यामधीते चातुर्दशिकः। आमावास्यिकः। अदेशकालादिति किम् ? स्रुघ्नेऽधीते। पूर्वाह्णेऽधीते॥

---

१ - 'ननु च' इति बाल०।

## कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७२ ॥

तत्रेत्येव। कठिनशब्दान्तात् सप्तमीसमर्थात् प्रस्तारसंस्थानशब्दाभ्यां च ठक् प्रत्ययो भवति व्यवहरतीत्येतस्मिन्नर्थे। व्यवहारः क्रियातत्त्वम्, यथा लौकिकव्यवहार इति। वंशकठिने व्यवहरति वांशकठिनिकः चक्रचरः। वार्ध्रकठिनिकः। प्रास्तारिकः। सांस्थानिकः॥

## निकटे वसति ॥ ७३ ॥

निकटशब्दात् सप्तमीसमर्थाद् वसतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। यस्य शास्त्रतो निकटवासस्तत्रायं विधिः। आरण्यकेन भिक्षुणा ग्रामात् क्रोशे वस्तव्यमिति शास्त्रम्। निकटे वसति नैकटिको भिक्षुः॥

## आवसथात् ष्ठल् ॥ ७४ ॥

तत्रेत्येव। आवसथशब्दात् सप्तमीसमर्थाद् वसतीत्येतस्मिन्नर्थे ष्ठल् प्रत्ययो भवति। लकारः स्वरार्थः। षकारो ङीषर्थः। आवसथे वसति आवसथिकः। आवसथिकी। ठकः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययो विधीयते॥

## प्राग्घिताद् यत् ॥ ७५ ॥

'तस्मै हितम्' ( ५.१.५ ) इति वक्ष्यति। प्रागेतस्माद् हितसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामो यत्प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—'तद्वहति रथयुगप्रासङ्गम्' ( ४.४.७६ )—रथ्यः। युग्यः। प्रासङ्ग्यः॥

## तद् वहति रथयुगप्रासङ्गम् ॥ ७६ ॥

तदिति द्वितीयासमर्थेभ्यो रथयुगप्रासङ्गेभ्यो वहतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः। 'रथसीताहलेभ्यो यद्विधौ' ( १.१.७२ महाभाष्यवा० ) इति तदन्तविध्युपसंख्यानात् परमरथ्य इत्यपि भवति॥

## धुरो यड्ढकौ ॥ ७७ ॥

तद् वहतीत्येव। धुर् इत्येतस्माद् द्वितीयासमर्थाद् वहतीत्येतस्मिन्नर्थे यत् ढक् इत्येतौ प्रत्ययौ भवतः। धुरं वहतीति धुर्यः। धौरेयः॥

## खः सर्वधुरात् ॥ ७८ ॥

तद् वहतीत्येव। सर्वधुराशब्दाद् द्वितीयासमर्थाद् वहतीत्येतस्मिन्नर्थे खः प्रत्ययो भवति। सर्वधुरां वहति सर्वधुरीणः। स्त्रीलिङ्गे न्याय्ये सर्वधुरादिति प्रातिपदिकमात्रापेक्षो निर्देशः। ख इति योगविभागः कर्तव्य इष्टसंग्रहार्थः। उत्तरधुरीणः। दक्षिणधुरीणः॥

## एकधुराल्लुक् च ॥ ७९ ॥

तद् वहतीत्येव। एकधुराशब्दाद् द्वितीयासमर्थाद् वहतीत्येतस्मिन्नर्थे खः प्रत्ययो भवति, तस्य च लुग् भवति। वचनसामर्थ्यात् पक्षे लुग् विधीयते। एकधुरां वहति एकधुरीणः। एकधुरः॥

## शकटादण् ॥ ८० ॥

तद् वहतीत्येव। शकटशब्दाद् द्वितीयासमर्थाद् वहतीत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति। शकटं वहति शाकटो गौः॥

## हलसीराट् ठक् ॥ ८१ ॥

तद् वहतीत्येव। हलसीरशब्दाभ्यां द्वितीयासमर्थाभ्यां वहतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। हलं वहति हालिकः। सैरिकः॥

## संज्ञायां जन्याः ॥ ८२ ॥

तद् वहतीत्येव। जनीशब्दाद् द्वितीयासमर्थाद् वहतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते। जनीं वहति जन्यां, जामातुर्वयस्या। सा हि विहारादिषु जामातृसमीपं प्रापयति[1]। जनी वधूरुच्यते॥

## विध्यत्यधनुषा ॥ ८३ ॥

तदिति द्वितीयासमर्थाद् विध्यतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, न चेद् धनुष् करणं भवति। पादौ विध्यन्ति पद्याः शर्कराः। ऊरव्याः कण्टकाः। अधनुषेति किम्? पादौ विध्यति धनुषा। नन्वसमर्थत्वादनभिधानात् च प्रत्ययो न भवति, नहि धनुषा पद्य इत्युक्ते विवक्षितोऽर्थः प्रतीयते? एवं तर्हि धनुष्प्रतिषेधेन व्यधनक्रिया विशेष्यते—यस्यां धनुष्करणं न संभाव्यत इति। तेनेह न भवति—चौरं विध्यति, शत्रुं विध्यति देवदत्त इति॥

---

१ – 'सा.........प्रापयति' इति बहुत्र नास्ति।

## धनगणं लब्धा ॥ ८४ ॥

तदित्येव। धनगणशब्दाभ्यां द्वितीयासमर्थाभ्यां लब्धेत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। धन्यः। गण्यः। लब्धेति तृन्नन्तम् , तेन द्वितीया समर्था विभक्तिर्युज्यते ॥

## अन्नाण् णः ॥ ८५ ॥

अन्नशब्दात् तदिति द्वितीयासमर्थात् लब्धेत्येतस्मिन्नर्थे णः प्रत्ययो भवति। अन्नं लब्धा आन्नः ॥

## वशं गतः ॥ ८६ ॥

वशशब्दात् तदिति द्वितीयासमर्थाद् गत इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। वशं गतो वश्यः। कामप्राप्तो विधेय इत्यर्थः ॥

## पदमस्मिन् दृश्यम् ॥ ८७ ॥

निर्देशादेव प्रथमा समर्थविभक्तिः। पदशब्दात् प्रथमासमर्थाद् दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत् प्रत्ययो भवति। पदं दृश्यमस्मिन् पद्यः कर्दमः। पद्याः पांसवः। शक्यार्थे कृत्यप्रत्ययः। शक्यते यस्मिन् पदं द्रष्टुं प्रतिमुद्रोत्पादनेन, स पद्यः कर्दमः। कर्दमस्यावस्थोच्यते नातिद्रवो नातिशुष्क इति ॥

## मूलमस्याबर्हि ॥ ८८ ॥

मूलशब्दात् प्रथमासमर्थादाबर्हीत्येवमुपाधिकादस्येति षष्ठ्यर्थे यत् प्रत्ययो भवति। मूलमेषामाबर्हि मूल्या माषाः। मूल्या मुद्गाः। 'वृहू उद्यमने' ( तुदा० ५८ ), येषां मूलमावृह्यत उत्पाट्यते, ते मूल्याः, सुष्ठु निष्पन्नाः। मूलोत्पाटनेन विना ग्रहीतुं न शक्यन्त इत्यर्थः ॥

## संज्ञायां धेनुष्या ॥ ८९ ॥

धेनुष्येति निपात्यते संज्ञायां विषये। संज्ञाग्रहणमभिधेयनियमार्थम्। धेनोः षुगागमो यश्च प्रत्ययो निपात्यते। अन्तोदात्तोऽपि ह्ययमिष्यते। या धेनुरुत्तमर्णाय ऋणप्रदानाद् दोहनार्थं दीयते सा धेनुष्या। पीतदुग्धेति यस्याः प्रसिद्धिः। धेनुष्यां भवते ददामि ॥

## गृहपतिना संयुक्ते ञ्यः ॥ ९० ॥

निर्देशादेव तृतीयासमर्थविभक्तिः। गृहपतिशब्दात् तृतीयासमर्थात् संयुक्त इत्येतस्मिन्नर्थे ञ्यः प्रत्ययो भवति। गृहपतिना संयुक्तो गार्हपत्योऽग्निः। अन्यस्यापि गृहपतिना संयोगोऽस्ति, तत्र संज्ञाधिकारादतिप्रसङ्गनिवृत्तिः॥

## नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ॥ ९१ ॥

नावादिभ्योऽष्टभ्यः शब्देभ्योऽष्टस्वेव तार्यादिष्वर्थेषु यथासंख्यं यत् प्रत्ययो भवति। प्रत्ययार्थद्वारेण तृतीयासमर्थविभक्तिर्लभ्यते। नावा तार्यं नाव्यमुदकम्। नाव्या नदी। शक्यार्थे कृत्यः। वयसा तुल्यो वयस्यः सखा। संज्ञाधिकारोऽभिधेयनियमार्थः। तेन वयसा तुल्ये शत्रौ न भवति। धर्मेण प्राप्यं धर्म्यम्। ननु च 'धर्मादनपेते' ( ४.४.९२ ) इति वक्ष्यमाणेनैव सिद्धम् ? नैतदस्ति। धर्मं यदनुवर्तते तद् धर्मादनपेतमित्युच्यते। फलं तु धर्मादपेत्यैव, कार्यविरोधित्वाद् धर्मस्य। विषेण वध्यो विष्यः। विषेण वधमर्हतीत्यर्थः। मूलेनानाम्यं मूल्यम्। आनाम्यमभिभवनीयम्। पटादीनामुत्पत्तिकारणं मूलम्, तेन तदभिभूयते शेषीक्रियते। मूल्यं[1] हि सगुणं मूलं[1] करोति। 'पोरदुपधात्' ( ३.१.९८ ) इति यति प्राप्त आनाम्यमिति निपातनाद् ण्यत्। मूलेन समो मूल्यः पटः। उपादानेन समानफल इत्यर्थः। सीतया समितं सीत्यं क्षेत्रम्। समितं संगतमित्यर्थः। 'रथसीताहलेभ्यो यद्विधौ' ( महाभाष्यवा० १.१.७२ ) इति तदन्तविधिरपीष्यते। परमसीत्यम्। उत्तमसीत्यम्। द्विसीत्यम्। त्रिसीत्यम्। तुलया संमितं तुल्यम्। संमितं समानं सदृशमित्यर्थः। यथा तुला परिच्छिनत्ति परम्, एवं तदपीति॥

## धर्मपथ्यर्थन्यायादनपेते ॥ ९२ ॥

निर्देशादेव पञ्चमी समर्थविभक्तिः। धर्मादिभ्यः पञ्चमीसमर्थेभ्योऽनपेत इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। धर्मादनपेतं धर्म्यम्। पथ्यम्। अर्थ्यम्। न्याय्यम्। संज्ञाधिकारादभिधेयनियमः॥

## छन्दसो निर्मिते ॥ ९३ ॥

प्रत्ययार्थसामर्थ्यलभ्या समर्थविभक्तिः। छन्दःशब्दात् तृतीयासमर्थाद् निर्मित इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। निर्मित उत्पादितः। छन्दसा निर्मितश्छन्दस्यः। [2]इच्छया कृत इत्यर्थः। इच्छापर्यायश्छन्दःशब्द इह गृह्यते॥

---

१ - मूल्यमूलशब्दयोर्विपर्यासो मुद्रितेषु। २ - 'छन्दसा' इत्यधिकं है०।

## उरसोऽण् च ॥ ९४ ॥

उरःशब्दात् तृतीयासमर्थाद् निर्मित इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति, चकाराद् यत् च। उरसा निर्मित औरसः पुत्रः। उरस्यः पुत्रः। संज्ञाधिकारादभिधेयनियमः॥

## हृदयस्य प्रियः ॥ ९५ ॥

निर्देशादेव समर्थविभक्तिः। हृदयशब्दात् षष्ठीसमर्थात् प्रिय इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। हृदयस्य प्रियो हृद्यो देशः। हृद्यं वनम्। संज्ञाधिकारादभिधेयनियमः। इह न भवति—हृदयस्य प्रियः पुत्र इति॥

## बन्धने चर्षौ ॥ ९६ ॥

हृदयस्येत्येव। बन्धन इति प्रत्ययार्थः। तद्विशेषणमृषिग्रहणम्। बध्यते येन तद् बन्धनम्। हृदयशब्दात् षष्ठीसमर्थाद् बन्धन ऋषावभिधेये यत् प्रत्ययो भवति। ऋषिर्वेदो गृह्यते। हृदयस्य बन्धनमृषिर्हृद्यः। परहृदयं येन बध्यते वशीक्रियते, स वशीकरणमन्त्रो हृद्य इत्युच्यते॥

## मतजनहलात् करणजल्पकर्षेषु ॥ ९७ ॥

मतादिभ्यस्त्रिभ्यः शब्देभ्यस्त्रिष्वेव करणादिष्वर्थेषु यथासंख्यं यत् प्रत्ययो भवति। प्रत्ययार्थसामर्थ्याद् लब्धा षष्ठी समर्थविभक्तिः। मतं ज्ञानं तस्य करणं मत्यम्। भावसाधनं वा। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः। द्विहल्यः। त्रिहल्यः। कर्षणं कर्षः। भावसाधनं वा॥

## तत्र साधुः ॥ ९८ ॥

तत्रेति सप्तमीसमर्थात् साधुरित्येतस्मिन्नर्थे यत् प्रत्ययो भवति। सामसु साधुः सामन्यः। वेमन्यः। कर्मण्यः। शरण्यः। साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकारकः। तत्र हि परत्वात् 'तस्मै हितम्' (५.१.५) इत्यनेन विधिना भवितव्यम्॥

## प्रतिजनादिभ्यः खञ् ॥ ९९ ॥

प्रतिजनादिभ्यः शब्देभ्यः खञ् प्रत्ययो भवति तत्र साधुरित्येतस्मिन्नर्थे। यतोऽपवादः। प्रतिजने साधुः प्रातिजनीनः। जनेजने साधुरित्यर्थः। ऐदंयुगीनः। सांयुगीनः॥ प्रतिजन। इदंयुग। संयुग। समयुग। परयुग। परकुल। परस्यकुल। अमुष्यकुल। सर्वजन। विश्वजन। पञ्चजन। महाजन। प्रतिजनादिः। यत्र हितार्थ एव साध्वर्थस्तत्र वचनात् प्राक्क्रीतीया बाध्यन्ते॥

## भक्ताण् णः ॥ १०० ॥

भक्तशब्दाद् णः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। भक्ते साधुर्भाक्तः शालिः। भाक्तास्तण्डुलाः॥

## परिषदो ण्यः ॥ १०१ ॥

परिषच्छब्दाद् ण्यः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। परिषदि साधुः पारिषद्यः। णप्रत्ययोऽप्यत्रेष्यते। तदर्थं योगविभागः क्रियते। परिषदो णो भवति। परिषदि साधुः पारिषदः। ततो ण्यः। परिषद इत्येव॥

## कथादिभ्यष्ठक् ॥ १०२ ॥

कथादिभ्यः शब्देभ्यष्ठक् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। कथायां साधुः काथिकः। वैकथिकः॥ कथा। विकथा। वितण्डा। कुष्टचित्। जनवाद। जनेवाद। वृत्ति। सद्गृह। गुण। गण। आयुर्वेद। कथादिः॥

## गुडादिभ्यष्ठञ् ॥ १०३ ॥

गुडादिभ्यः शब्देभ्यष्ठञ् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। गुडे साधुर्गौडिक इक्षुः। कौल्माषिको मुद्गः। साक्तुको यवः॥ गुड। कुल्माष। सक्तु। अपूप। मांसौदन। इक्षु। वेणु। संग्राम। संघात। प्रवास। निवास। उपवास। गुडादिः॥

## पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥

पथ्यादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। पथि साधु पाथेयम्। आतिथेयम्। वासतेयम्। स्वापतेयम्॥

## सभाया यः ॥ १०५ ॥

सभाशब्दाद् यः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। स्वरे विशेषः। सभायां साधुः सभ्यः॥

## ढश्छन्दसि ॥ १०६ ॥

सभाशब्दाद् ढः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये छन्दसि। यस्यापवादः। स॒भेयो॒ युवा॒स्य॒ यज॑मानस्य वी॒रो जा॑यताम् ( मा० सं० २२.२२ )॥

## समानतीर्थे वासी ॥ १०७ ॥

साधुरिति निवृत्तम्। वासीति प्रत्ययार्थः। समानतीर्थशब्दात् तत्रेति सप्तमीसमर्थाद् वासीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। समाने तीर्थे वासीति सतीर्थ्यः। समानोपाध्याय इत्यर्थः। तीर्थशब्देनेह गुरुरुच्यते[1]॥

## समानोदरे शयित ओ चोदात्तः ॥ १०८ ॥

समानोदरशब्दात् सप्तमीसमर्थात् शयित इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, ओकारश्चोदात्तः। शयितः स्थित इत्यर्थः। समानोदरे शयितः समानोदर्यो भ्राता॥

## सोदराद् यः ॥ १०९ ॥

सोदरशब्दात् सप्तमीसमर्थात् शयित इत्येतस्मिन्नर्थे यः प्रत्ययो भवति। 'विभाषोदरे' (६.३.८८) इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः। समानोदरे शयितः सोदर्यो भ्राता। ओ चोदात्तः (४.४.१०८) इति नानुवर्तते। यकारे स्वरः॥

## भवे छन्दसि ॥ ११० ॥

तत्रेत्येव। सप्तमीसमर्थाद् भव इत्येतस्मिन्नर्थे छन्दसि विषये यत् प्रत्ययो भवति। अणादीनां घादीनां चापवादः। सति दर्शने तेऽपि भवन्ति सर्वविधीनां छन्दसि व्यभिचारात्। नमो॑ मे॒घ्या॑य च विद्यु॒त्या॑य च॒ नमः॑ (तै० सं० ४.५.७.२)। आ पादपरिसमाप्तेश्छन्दोऽधिकारः, भवाधिकारश्च 'समुद्राभ्राद् घः' (४.४.११८) इति यावत्॥

## पाथोनदीभ्यां ड्यण् ॥ १११ ॥

पाथःशब्दाद् नदीशब्दात् च ड्यण् प्रत्ययो भवति तत्र भव इत्येतस्मिन्नर्थे। यतोऽपवादः। पाथसि भवः पा॒थ्यो वृ॒षा (ऋ० ६.१६.१५)। चनो॑ दधीत ना॒द्यो गिरो॑ मे (ऋ० २.३५.१)। पाथोऽन्तरिक्षम्॥

## वेशन्तहिमवद्भ्यामण् ॥ ११२ ॥

वेशन्तशब्दाद् हिमवच्छब्दात् चाण् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। यतोऽपवादः। वैश॒न्तीभ्य॒ः स्वाहा॑ (तै० सं० ७.४.१३.९)। हैमव॒तीभ्य॒ः स्वाहा॑ (तु०—शौ० सं० १९.२.१)॥

---

१ – 'समानस्य सभावस्तीर्थे यः' इत्यपि क्वचित्।

## स्रोतसो विभाषा ड्यड्ड्यौ ॥ ११३ ॥

स्रोतस्शब्दाद् विभाषा ड्यत् ड्य इत्येतौ प्रत्ययौ भवतस्तत्र भव इत्येतस्मिन् विषये। यतोऽपवादः। पक्षे सोऽपि भवति। स्रोतसि भवः स्रोत्यः (ऋ० १०.१०४.८)। स्रोतुस्यः (शौ० सं० १९.२.४)। ड्यड्ड्ययोः स्वरे विशेषः॥

## सगर्भसयूथसनुताद् यन् ॥ ११४ ॥

सगर्भसयूथसनुतशब्देभ्यो यन् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। यतोऽपवादः। स्वरे विशेषः। अनु भ्राता सगर्भ्यः (मा० सं० ४.२०)। अनु सखा सयूथ्यः (तै० सं० १.२.४.२)। यो नः सनुत्यः (ऋ० २.३०.९)। सर्वत्र 'समानस्य छन्दस्य०' (६.३.८४) इति सभावः॥

## तुग्राद् घन् ॥ ११५ ॥

तुग्रशब्दाद् घन् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। यतोऽपवादः। त्वमग्ने वृषभस्तुग्रियाणाम्। अन्नाकाशयज्ञवरिष्ठेषु[१] तुग्रशब्दः॥

## अग्राद् यत् ॥ ११६ ॥

अग्रशब्दाद् यत् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अग्रे भवम् अग्र्यम् (मा० सं० १६.३०)। किमर्थमिदं यावता सामान्येन यद् विहित एव ? 'घच्छौ च' (४.४.११७) इति वक्ष्यति, ताभ्यां बाधा मा भूदिति पुनर्विधीयते॥

## घच्छौ च ॥ ११७ ॥

अग्रशब्दाद् यत् घच्छौ च प्रत्यया भवन्ति तत्र भव इत्येतस्मिन् विषये। अग्र्यम् (खि० १.३.७)। अग्रियम् (ऋ० १.१३.१०)। अग्रीयम् (मै० सं० २.७.१३)। चकारः 'तुग्राद् घन्' (४.४.११५) इत्यस्यानुकर्षणार्थः। अग्रियम्। स्वरे विशेषः॥

## समुद्राभ्राद् घः ॥ ११८ ॥

समुद्रशब्दादभ्रशब्दात् च घः प्रत्ययो भवति तत्र भव इत्येतस्मिन्नर्थे। यतोऽपवादः। समुद्रियां नदीनाम् (ऋ० ७.८७.१)। अभ्रियस्येव घोषाः (ऋ० १०.६८.१)। अभ्रशब्दस्यापूर्वनिपातः, तस्य लक्षणस्य व्यभिचारित्वात्॥

---

१ – 'अग्न्याकाश०' इति पाठान्तरम्।

## बर्हिषि दत्तम् ॥ ११९ ॥

भव इति निवृत्तम्। बर्हिःशब्दात् सप्तमीसमर्थाद् दत्तमित्येतस्मिन्नर्थे यत् प्रत्ययो भवति। बर्हिष्येषु निधिषु प्रियेषु ( ऋ० १०.१५.५ )॥

## दूतस्य भागकर्मणी ॥ १२० ॥

निर्देशादेव समर्थविभक्तिः। दूतशब्दात् षष्ठीसमर्थाद् भागे कर्मणि चाभिधेये यत् प्रत्ययो भवति। भागोंऽशः। कर्म क्रिया। यदग्ने यासि दूत्यम् ( ऋ० १.१२.४ )। दूतभागः, दूतकर्म वा॥

## रक्षोयातूनां हननी ॥ १२१ ॥

निर्देशादेव समर्थविभक्तिः। रक्षःशब्दाद् यातुशब्दात् च षष्ठीसमर्थाद् हननीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। हन्यतेऽनयेति हननी। यां वां मित्रावरुणौ रक्षस्या तनूः ( मै० सं० २.३.१ )। रक्षसां हननी। यातव्या ( मै० सं० २.३.१ )। यातूनां हननी। बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थम्। बहूनां रक्षसां हननेन तनूः स्तूयते॥

## रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ १२२ ॥

रेवत्यादिभ्यः षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत् प्रत्ययो भवति। प्रशंसनं प्रशस्यम्। भावे क्यप् प्रत्ययो भवति। यद्वो रेवती रेवत्यम् ( काठ० सं० १.८ )। यद्वो जगतीर्जगत्यम् ( काठ० सं० १.८ )। यद्वो हविष्या हविष्यम् ( काठ० सं० १.८ )। हविषे हिता हविष्याः, तासां प्रशंसनं हविष्यम्। 'यस्येति च' ( ६.४.१४८ ) इति लोपे कृते 'हलो यमां यमि लोपः' ( ८.४.६४ ) इति लोपः॥

## असुरस्य स्वम् ॥ १२३ ॥

असुरशब्दात् षष्ठीसमर्थात् स्वमित्येतस्मिन्नर्थे यत् प्रत्ययो भवति। अणोऽपवादः। असु३र्यं वा एतत्पात्रं यत् कुलालकृतम् चक्रवृत्तम् ( मै० सं० १.८.३ )॥

## मायायामण् ॥ १२४ ॥

असुरशब्दात् षष्ठीसमर्थाद् मायायां स्वविशेषेऽण् प्रत्ययो भवति। पूर्वस्य यतोऽपवादः। आसुरी माया स्वधया कृतासि ( मा० सं० ११.६९ )॥

## तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ १२५ ॥

तद्वानिति निर्देशादेव समर्थविभक्तिः। मतुबन्तात् प्रातिपदिकात् प्रथमासमर्थादासामिति षष्ठ्यर्थे यत् प्रत्ययो भवति, यत् प्रथमासमर्थमुपधानो मन्त्रश्चेत् स भवति, यत् तदासामिति निर्दिष्टमिष्टकाश्चेत् ता भवन्ति। लुक् च मतोरिति प्रकृतिनिर्ह्रासः। इतिकरणस्ततश्चेद् विवक्षा। तद्वानित्यवयवेन समुदायो निर्दिश्यते। वर्चः शब्दो यस्मिन् मन्त्रेऽस्ति, स वर्चस्वान्। उपधीयते येन स उपधानः। चयनवचन इत्यर्थः। वर्चस्वानुपधानमन्त्र आसामिष्टकानामिति विगृह्य यति विहिते मतोर्लुकि कृते वर्चस्यां ( तै० ब्रा० १.८.९.१) उपदधाति। तेजस्यां ( तै० ब्रा० १.८.९.१ ) उपदधाति। पयस्यां: ( तै० सं० २.३.१३.२ )। रेतस्याः ( ष० विं० २.१ )। तद्वानिति किम् ? मन्त्रसमुदायादेव मा भूत्। उपधान इति किम् ? वर्चस्वानुपस्थानमन्त्र आसामित्यत्र मा भूत्। मन्त्र इति किम् ? अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत्। इष्टकास्विति किम् ? वर्चस्वान् उपधानमन्त्र एषां कपालानामित्यत्र[1] मा भूत्। इतिकरणो नियमार्थः। अनेकपदसंभवेऽपि केनचिदेव पदेन तद्वान् मन्त्रो गृह्यते, न सर्वेण॥

## अश्विमानण् ॥ १२६ ॥

अश्विशब्दो यस्मिन् मन्त्रेऽस्ति सोऽश्विमान्। अश्विमच्छब्दादण् प्रत्ययो भवति। पूर्वस्य यतोऽपवादः। अश्विमानुपधानो मन्त्र आसामिष्टकानामिति विगृह्याण् विधीयते, तत्र मतुपो लुकि कृत 'इनण्यनपत्ये' ( ६.४.१६४ ) इति प्रकृतिभावः। आश्विनीरुपदधाति (शा० ब्रा० ८.२.१.१ )॥

## वयस्यासु मूर्ध्नो मतुप् ॥ १२७ ॥

वयस्वानुपधानो मन्त्रो यासां ता वयस्याः, तास्वभिधेयासु मूर्ध्नो मतुप् प्रत्ययो भवति। पूर्वस्य यतोऽपवादः। यस्मिन् मन्त्रे वयःशब्दो मूर्धन्शब्दश्च विद्यते, स वयस्वानपि भवति मूर्धन्वानपि। यथा—मूर्धा वयः प्रजापतिश्छन्दः ( मा० सं० १४.९ ) इति। तत्र वयस्वच्छब्दादिव मूर्धन्वच्छब्दादपि यति प्राप्ते मतुब् विधीयते[2]। मूर्धन्वतीर्भवन्ति ( तै० सं० ५.३.८.२ )। वयस्या एव मूर्धन्वत्यः। वयस्यास्विति किम् ? यत्र मूर्धन्शब्द एव केवलो न वयःशब्दस्तत्र मा भूत्। मूर्धन्वत इति वक्तव्ये मूर्ध्न इत्युक्तम्, मतुपो लुकं भाविनं चित्ते कृत्वा॥

---

१ – ' वर्चस्वान् ............. मित्यत्र ' इति युक्तोऽपि पाठः टिप्पण्यां प्रदर्शितः है०। मुद्रितेपु ' अङ्गुलि ......मित्यत्र ' इति पूर्वप्रत्युदाहरणमेवानुमुद्रितम्।

२ – ' विधास्यते ' इति है०। ' विधायते ' इति बाल०।

## मत्वर्थे मासतन्वोः ॥ १२८ ॥

यस्मिन्नर्थे मतुब् विहितः, तस्मिंश्छन्दसि विषये यत् प्रत्ययो भवति मासतन्वोः प्रत्ययार्थविशेषणयोः। प्रथमासमर्थादस्त्युपाधिकात् षष्ठ्यर्थे सप्तम्यर्थे च यत् प्रत्ययो भवति। मत्वर्थीयानामपवादः। नभांसि विद्यन्ते यस्मिन् मासे नभस्यः ( तै० सं० १.४.१४.१ ) मासः। सहस्यः ( तै० सं० १.४.१४.१ )। तपस्यः ( तै० सं० १.४.१४.१ )। मधव्यः ( तै० सं० ५.२.९.३ )। नभःशब्दोऽभ्रेषु वर्तते। तन्वां खल्वपि—ओजोऽस्यां विद्यत ओजस्या तनूः। रक्षस्या तनूः ( मै० सं० २.३.१ )। मासतन्वोरिति किम् ? मधुमता पात्रेण चरति। मासतन्वोरनन्तरार्थे च। मध्वस्मिन्नस्ति मध्वस्मिन्ननन्तरमिति वा मधव्यो मासः ॥ लुगकारेकाररेफाश्च वक्तव्याः ॥ लुक्तावत्—तपंश्च तपस्यंश्च ( तै० सं० १.४.१४.१ )। नभंश्च नभस्यंश्च ( तै० सं० १.४.१४.१ )। सहंश्च सहस्यंश्च ( तै० सं० १.४.१४.१ )। नपुंसकलिङ्गं छान्दसत्वात्। अकारः—इषः ( तै० सं० १.४.१४.१ ) मासः । ऊर्जः ( तै० सं० १.४.१४.१ ) मासः। इकारः—शुचिः ( तै० सं० १.४.१४.१ ) मासः। रेफः—शुक्रः ( तै० सं० १.४.१४.१ ) मासः॥

## मधोर्ञ च ॥ १२९ ॥

मधुशब्दाद् मत्वर्थे ञः प्रत्ययो भवति चकाराद् यत् च। उपसंख्यानात् लुक् च। माधवः ( तै० सं० १.४.१४.१ )। मधव्यः ( तै० सं० ५.२.९.३ )। मधुः ( तै० सं० १.४.१४.१ )। तन्वां खल्वपि—माधवा, मधव्या, मधुः तनूः॥

## ओजसोऽहनि यत्खौ ॥ १३० ॥

मत्वर्थ इत्येव। ओजःशब्दाद् मत्वर्थे यत्खौ प्रत्ययौ भवतोऽहन्यभिधेये। ओजस्यमहः। ओजसीनमहः॥

## वेशोयशआदेर्भगाद् यल् ॥ १३१ ॥

मत्वर्थ इत्येव। वेशोयशसी आदौ यस्य प्रातिपदिकस्य तस्माद् वेशोयशआदेर्भगान्तात् प्रातिपदिकाद् मत्वर्थे यल् प्रत्ययो भवति। लकारः स्वरार्थः। वेशोभगो विद्यते यस्य स वेशोभग्यः। यशोभग्यः। वेश इति बलमुच्यते। श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः। वेशश्चासौ भगश्च श्रीप्रभृतिर्वेशोभगः, सोऽस्यास्तीति वेशोभग्यः॥

## ख च ॥ १३२ ॥

वेशोयशआदेर्भगान्तात् प्रातिपदिकाद् मत्वर्थे खः प्रत्ययो भवति। योगविभागो

यथासंख्यनिरासार्थ उत्तरार्थश्च। चकाराद् यत्। वेशोभगीनः। वेशोभग्यः। यशोभगीनः। यशोभग्यः॥

## पूर्वैः कृतमिनयौ च ॥ १३३ ॥

मत्वर्थ इति निवृत्तम्। निर्देशादेव समर्थविभक्तिः। पूर्वशब्दात् तृतीयासमर्थात् कृतमित्येतस्मिन्नर्थ इन य इत्येतौ प्रत्ययौ भवतः। चकारात् ख च। गम्भीरेभिः पथिभिः पूर्विणेभिः ( काठ० सं० ९.६.१९ )। पूर्व्यैः ( तै० सं० १.८.५.२ )। पूर्वीणैः। पूर्वैरिति बहुवचनान्तेन पूर्वपुरुषा उच्यन्ते। तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा॥

## अद्भिः संस्कृतम् ॥ १३४ ॥

निर्देशादेव समर्थविभक्तिः। अप्शब्दात् तृतीयासमर्थात् संस्कृतमित्येतस्मिन्नर्थे यत् प्रत्ययो भवति। यस्येदमप्यं हविः ( ऋ० १०.८६.१२ )। अद्भिः संस्कृतमिति॥

## सहस्रेण संमितौ घः ॥ १३५ ॥

निर्देशादेव समर्थविभक्तिः। सहस्रशब्दात् तृतीयासमर्थात् सम्मितावित्येतस्मिन्नर्थे घः प्रत्ययो भवति। सम्मितस्तुल्यः सदृशः। अयमग्निः संहस्रियः ( तै० सं० ४.७.१३.४ )। सहस्रतुल्य इत्यर्थः। केचित्तु समितावितिं पठन्ति। तत्रापि समित्या सम्मित एव लक्षयितव्यः। तत्र छन्दसि प्रयोगदर्शनात्॥

## मतौ च ॥ १३६ ॥

मत्वर्थे च सहस्रशब्दाद् घः प्रत्ययो भवति। सहस्रमस्य विद्यते सहस्रियः। 'तपः-सहस्राभ्यां विनीनी' ( ५.२.१०२ ), 'अण् च' ( ५.२.१०३ ) इत्यस्यापवादः॥

## सोममर्हति यः ॥ १३७ ॥

निर्देशादेव समर्थविभक्तिः। सोमशब्दाद् द्वितीयासमर्थादर्हतीत्येतस्मिन्नर्थे यः प्रत्ययो भवति। सोममर्हन्ति सोम्या ब्राह्मणाः ( काठ० सं० ५.२ )[1]। यज्ञार्हा इत्यर्थः। यति प्रकृते यग्रहणम्। स्वरे विशेषः॥

## मये च ॥ १३८ ॥

सोमग्रहणम्, यश्चानुवर्तते। मय इति मयडर्थो लक्ष्यते। सोमशब्दाद् मयडर्थे यः

---

१ – 'ब्राह्मणास्सोम्याः' इति संहितापाठः।

प्रत्ययो भवति। आगतविकारावयवप्रकृता मयडर्थाः। 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' (४.३.८१), 'मयट् च' (४.३.८२), 'मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः' (४.३.१४३), 'तत्प्रकृतवचने मयट्' (५.४.२१) इति। तत्र यथायोगं समर्थविभक्तिः। पिबाति सोम्यं मधुं (ऋ० ८.२४.१३)। सोममयमित्यर्थः॥

## मधोः ॥ १३९ ॥

यशब्दो निवृत्तः। मधुशब्दाद् मयडर्थे यत् प्रत्ययो भवति। मधव्यान् स्तोकान् (पै० सं० १.८८.२)। मधुमयानित्यर्थः॥

## वसोः समूहे च ॥ १४० ॥

वसुशब्दात् समूहे वाच्ये यत् प्रत्ययो भवति चकाराद् मयडर्थे च। यथायोगं समर्थविभक्तिः। वसव्यः समूहः। मयडर्थो वा ॥ अक्षरसमूहे छन्दसः स्वार्थ उपसंख्यानम् ॥ ओंश्रावय इंति चंतुरक्षरम्। अंस्तु श्रौषडिंति चंतुरक्षरम्। यंज इंति द्व्यक्षरम्। यें यंजामहें इंति पञ्चाक्षरम्। द्व्यक्षरों वषट्कारः। एषं वैं सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञो मन्त्रे विहितः (मै० सं० १.४.११)[1]। सप्तदशाक्षराण्येव छन्दस्य इत्यर्थः। छन्दःशब्दादक्षरसमूहे वर्तमानात् स्वार्थे यत् प्रत्ययः ॥ वसुशब्दादपि यद् वक्तव्यः ॥ हस्तौं पृणस्व बहुभिर्वसव्यैः (शौ० सं० ७.२६.८)। वसुभिरित्यर्थः। अग्निरींशे वसव्यंस्य (ऋ० ४.५५.८)। वसोरित्यर्थः॥

## नक्षत्राद् घः ॥ १४१ ॥

नक्षत्रशब्दाद् घः प्रत्ययो भवति स्वार्थे। समूह इति नानुवर्तते। नक्षत्रियेंभ्यः स्वाहां (मा० सं० २२.२८)॥

## सर्वदेवात् तातिल् ॥ १४२ ॥

सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति छन्दसि विषये स्वार्थिकः। सर्वतांतिम् (ऋ० १०.३६.१४)। देवतांतिम् (ऋ० ३.१९.२)॥

## शिवशमरिष्टस्य करे ॥ १४३ ॥

करोतीति करः प्रत्ययार्थः। तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः। शिवादिभ्यः

---

१ - पाठभेदेनोपलभ्यते। (अपि द्र० — तै० सं० १.६.११.१)।

शब्देभ्यः षष्ठीसमर्थेभ्यः कर इत्येतस्मिन्नर्थे तातिल् प्रत्ययो भवति। शिवं करोतीति शिवतातिः ( पै० सं० ५.३६.१ )। शंताति॑ः ( ऋ० ८.१८.७ )। अरि॒ष्टता॑तिः ( ऋ० १०.६०.८ )॥

## भावे च ॥ १४४ ॥

भावे चार्थे छन्दसि विषये शिवादिभ्यस्तातिल् प्रत्ययो भवति। शिवस्य भावः शिवतातिः ( पै० सं० ५.३६.१ )। शंताति॑ः ( ऋ० ८.१८.७ )। अरि॒ष्टता॑तिः ( ऋ० १०.६०.८ )। यतः पूर्णोऽवधिः। अतः परमन्यः प्रत्ययोऽधिक्रियते॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः॥



# ॥ पञ्चमाध्यायस्य प्रथमः पादः ॥

## प्राक् क्रीताच्छः ॥ १ ॥

'तेन क्रीतम्' ( ५.१.३७ ) इति वक्ष्यति। प्रागेतस्मात् क्रीतसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, छप्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—'तस्मै हितम्' ( ५.१.५) इति। वत्सेभ्यो हितो वत्सीयो गोधुक्। करभीय उष्ट्रः। अकरभीयः। अवत्सीयः। अर्थोऽवधित्वेन गृहीतः, न प्रत्ययः। तेन प्राक् ठञः छ इति नोक्तम्॥

## उगवादिभ्यो यत् ॥ २ ॥

प्राक् क्रीतादित्येव। उवर्णान्तात् प्रातिपदिकाद् गवादिभ्यश्च यत् प्रत्ययो भवति प्राक्क्रीतीयेष्वर्थेषु। छस्यापवादः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका। गवादिभ्यः खल्वपि—गव्यम्। हविष्यम्। सनङ्गुर्नाम चर्मविकारः। ततः परत्वात् 'चर्मणोऽञ्' ( ५.१.१५ ) इत्येष विधिः प्राप्नोति। तथा चरुर्नाम हविः, सक्तुरन्नविकारः। अपूपादिषु 'अन्नविकारेभ्यश्च' ( ग० सू० १११ ) इति पठ्यते। ततो 'विभाषा हविरपूपादिभ्यः' ( ५.१.४ ) इत्येष विधिः प्राप्नोति। तत्र सर्वत्र पूर्वविप्रतिषेधेन यत् प्रत्यय एवेष्यते—सनङ्गव्यं चर्म, चरव्यास्तण्डुलाः, सक्तव्या धाना इति। गवादिषु 'नाभि नभं च' ( ग० सू० १०८) इति पठ्यते। तस्यायमर्थः—नाभिशब्दो यत्प्रत्ययमुत्पादयति, नभं चादेशमापद्यत इति। नाभये हितो नभ्योऽक्षः। नभ्यमञ्जनम्। यस्तु शरीरावयवो नाभिशब्दः, ततः 'शरीरावयवाद् यत्' ( ५.१.६ ) इति यति कृते नाभये हितं नाभ्यं तैलमिति भवितव्यम्। गवादिषु यता सन्नियुक्तो नभभावोऽत्र न भवति॥ गो। हविस्। बर्हिष्। खट। अष्टका। युग। मेधा। स्रक्। नाभि नभं च ( ग० सू० १०८ )। शुनः संप्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम् ( ग० सू० १०९ )—शुन्यम्, शून्यम्। चकारस्यानुक्तसमुच्चयार्थत्वाद् 'नस्तद्धिते' ( ६.४.१४४ ) इति लोपो न स्यात्। ऊधसोऽनङ् च ( ग० सू० ११० )—ऊधन्यः। कूप[1]। उदर[2]। खर। स्खद। अक्षर। विष। गवादिः॥

## कम्बलाच्च संज्ञायाम् ॥ ३ ॥

कम्बलात् प्राक्क्रीतीयेष्वर्थेषु यत् प्रत्ययो भवति संज्ञायां विषये। छस्यापवादः। कम्बल्यमूर्णापलशतम्। संज्ञायामिति किम् ? कम्बलीया ऊर्णा॥

---

१ - 'कूपः' इत्यपपाठो मुद्रितेपु । गणशब्दोऽयम्, नोधन्यविशेष्यः ।

२ - 'उदर' इति नास्ति है०।

## विभाषा हविरपूपादिभ्यः ॥ ४ ॥

हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति। आमिक्ष्यं दधि, आमिक्षीयं दधि। पुरोडाश्यास्तण्डुलाः, पुरोडाशीयाः। हविश्शब्दात्तु गवादिपाठाद् नित्यमेव भवति। अपूपादिभ्यः—अपूप्यम्, अपूपीयम्। तण्डुल्यम्, तण्डुलीयम्॥ अपूप। तण्डुल। अभ्यूष। अभ्योष। पृथुक। अभ्येष। अर्गल। मुसल। सूप। कटक। कर्णवेष्टक। किण्व। अन्नविकारेभ्यश्च (ग० सू० १११)। पूप। स्थूणा। पीप। अश्व। पत्र। अपूपादिः॥

## तस्मै हितम् ॥ ५ ॥

तस्मा इति चतुर्थीसमर्थाद् हितमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। वत्सेभ्यो हितो गोधुक् वत्सीयः। अवत्सीयः। पटव्यम्। गव्यम्। हविष्यम्। अपूप्यम्, अपूपीयम्॥

## शरीरावयवाद् यत् ॥ ६ ॥

शरीरं प्राणिकायः। शरीरावयववाचिनः प्रातिपदिकाद् यत् प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। दन्त्यम्। कण्ठ्यम्। ओष्ठ्यम्। नाभ्यम्। नस्यम्॥

## खलयवमाषतिलवृषब्रह्मणश्च ॥ ७ ॥

खलादिभ्यो यत् प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। खलाय हितं खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृष्यम्। ब्रह्मण्यम्। वृष्णे हितम्, ब्राह्मणेभ्यो हितमिति वाक्यमेव भवति। छप्रत्ययोऽपि न भवति, अनभिधानात्। चकारोऽनुक्तसमुच्चयार्थः। रथाय हिता रथ्या॥

## अजाविभ्यां थ्यन् ॥ ८ ॥

अज अवि इत्येताभ्यां थ्यन् प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। अजथ्या यूथिः। अविथ्या॥

## आत्मन्विश्वजनभोगोत्तरपदात् खः ॥ ९ ॥

आत्मन् विश्वजन इत्येताभ्यां भोगोत्तरपदात् च प्रातिपदिकात् खः प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। आत्मन्निति नलोपो न कृतः प्रकृति-

परिमाणज्ञापनार्थम्। तेनोत्तरपदग्रहणं भोगशब्देनैव संबध्यते, न तु प्रत्येकम्। आत्मने हितम् आत्मनीनम् ( पै० सं० ५.११.८ )। 'आत्माध्वानौ खे' ( ६.४.१६९ ) इति प्रकृति-भावः। विश्वजनेभ्यो हितं विश्वजनीनम्। कर्मधारयादेवेष्यते। षष्ठीसमासाद् बहुव्रीहेश्च छ एव भवति। विश्वजनाय हितं विश्वजनीयम् ॥ पञ्चजनादुपसंख्यानम् ॥ पञ्चजनात् च खः। अत्रापि कर्मधारयादिष्यते। पञ्चजनीनम्। अन्यत्र पञ्चजनीयम् ॥ सर्वजनाट् ठञ् खश्च ॥ सार्वजनिकम्, सर्वजनीनम्। अत्रापि कर्मधारयादेव—सर्वजनीयमन्यत्र ॥ महाजनाद् नित्यं ठञ् वक्तव्यः ॥ महाजनाय हितं माहाजनिकम्। तत्पुरुषादेव। बहुव्रीहेस्तु छ एव भवति। महाजनीयम्। भोगोत्तरपदात् खल्वपि—मातृभोगीणः। पितृभोगीणः। भोगशब्दः शरीरवाची। केवलेभ्यो मात्रादिभ्यश्छ एव भवति। मात्रीयम्। पित्रीयम् ॥ राजाचार्याभ्यां तु नित्यम् ॥ भोगोत्तरपदाभ्यामेव खः प्रत्यय इष्यते, न केवलाभ्याम्। राजभोगीनः ॥ आचार्यादणत्वं च ॥ आचार्यभोगीनः। केवलाभ्यां वाक्यमेव भवति—राज्ञे हितम्, आचार्याय हितमिति ॥

## सर्वपुरुषाभ्यां णढञौ ॥ १० ॥

सर्वपुरुषाभ्यां यथासंख्यं णढञौ प्रत्ययौ भवतः तस्मै हितमित्येतस्मिन् विषये। छस्याप-वादः। सर्वस्मै हितं सार्वम्। पौरुषेयम् ॥ सर्वाद् णस्य वा वचनम् ॥ सर्वीयम् ॥ पुरुषाद् वधविकारसमूहतेनकृतेष्विति वक्तव्यम् ॥ पौरुषेयो वधः, पौरुषेयो विकारः, पौरुषेयः समूहो वा। तेन कृते—पौरुषेयो ग्रन्थः ॥

## माणवचरकाभ्यां खञ् ॥ ११ ॥

माणवचरकशब्दाभ्यां खञ् प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। माणवाय हितं माणवीनम्। चारकीणम् ॥

## तदर्थं विकृतेः प्रकृतौ ॥ १२ ॥

प्रकृतिरुपादानकारणम्, तस्यैव उत्तरमवस्थान्तरं विकृतिः। विकृतिवाचिनः प्राति-पदिकात् प्रकृतावभिधेयायां यथाविहितं प्रत्ययो भवति। तदर्थमिति प्रत्ययार्थविशेषणम्। तदिति सर्वनाम्ना विकृतिः परामृश्यते। विकृत्यर्थायां प्रकृतौ प्रत्ययः। तदर्थग्रहणेन प्रकृतेरनन्यार्थता-ख्यायते। न प्रकृतिविकारसंभवमात्रे प्रत्ययः। किं तर्हि ? प्रकृतेरनन्यार्थत्वे विवक्षिते। प्रत्ययार्थस्य च तदर्थत्वे सति सामर्थ्याल् लभ्या चतुर्थी समर्थविभक्तिः। केचित् तु 'तस्मै हितम्' ( ५.१.५ ) इत्यनुवर्तयन्ति। अङ्गारेभ्यो हितान्येतानि काष्ठानि अङ्गारीयाणि काष्ठानि। प्राकारीया इष्टकाः। शङ्कव्यं दारु। पिचव्यः कार्पासः। तदर्थमिति किम् ? यवानां धानाः।

धानानां सक्तवः। प्रकृत्यन्तरनिवृत्तिरत्र विवक्षिता न तादर्थ्यम्—धानानां सक्तवः, न लाजानामिति। विकृतेरिति किम् ? उदकार्थः कूपः। विकृतिग्रहणेऽक्रियमाणे या काचित् प्रकृतिर्गृह्यते, नोपादानकारणमेव। भवति च कूप उदकस्य प्रकृतिः, तत्रोत्पादनात्। न तूदकं तस्य विकृतिः, अत्यन्तभेदात्। प्रकृताविति किम् ? अस्यर्था कोशी। असिरयसो विकृतिर्भवति, न तु कोशी तस्य प्रकृतिर्भवति। द्वयोरपि प्रकृतिविकृत्योर्ग्रहणे विवक्षितः प्रकृतिविकारभावो लभ्यते॥

## छदिरुपधिबलेर्ढञ् ॥ १३ ॥

छदिरादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये। छस्यापवादः। छादिषेयाणि तृणानि। औपधेयं दारु। बालेयास्तण्डुलाः। उपधिशब्दात् स्वार्थे प्रत्ययः। उपधीयत इत्युपधिः रथाङ्गम्। औपधेयमपि तदेव दारु॥

## ऋषभोपानहोर्ञ्यः ॥ १४ ॥

ऋषभ उपानह् इत्येताभ्यां ञ्यः प्रत्ययो भवति तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये। छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। चर्मण्यपि प्रकृतित्वेन विवक्षिते पूर्वविप्रतिषेधादयमेवेष्यते। औपानह्यं चर्म॥

## चर्मणोऽञ् ॥ १५ ॥

चर्मण इति षष्ठी। चर्मणो या विकृतिः तद्वाचिनः प्रातिपदिकादञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये। छस्यापवादः। वार्ध्रं चर्म। वारत्रं चर्म॥

## तदस्य तदस्मिन् स्यादिति ॥ १६ ॥

तदिति प्रथमा समर्थविभक्तिः, अस्येति प्रत्ययार्थः, स्यादिति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। एवं द्वितीयेऽपि वाक्ये। सप्तम्यर्थे तु प्रत्यय इत्येतावान् विशेषः। प्रथमासमर्थात् षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति, यत् तत् प्रथमासमर्थं स्यात् चेत् तद् भवति। इतिकरणस्ततश्चेद् विवक्षा। प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः। प्रासादीयं दारु। सप्तम्यर्थे खल्वपि—प्राकारोऽस्मिन् देशे स्यात् प्राकारीयो देशः। प्रासादीया भूमिः। स्यादिति संभावनायां लिङ् 'संभावनेऽलमिति चेद्०' (३.३.१५४) इत्यादिना। इष्टकानां बहुत्वेन तत् संभाव्यते—प्राकार आसामिष्टकानां स्यादिति। देशस्य च गुणेन संभाव्यते—प्रासादोऽस्मिन् देशे स्यादिति। प्रकृतिविकारभावस्तादर्थ्यं चेह न विवक्षितम्। किं तर्हि ? योग्यतामात्रम्। तेन पूर्वस्यायमविषयः। द्विस्तद्ग्रहणं न्यायप्रदर्शनार्थम्—अनेकस्मिन् प्रत्ययार्थे प्रत्येकं समर्थविभक्तिः संबन्धनीयेति।

अथेह कस्माद् न भवति—प्रासादो देवदत्तस्य स्यादिति, गुणवानयम्, संभाव्यते प्रासाद-लाभोऽस्येति ? इतिकरणो विवक्षार्थ इत्युक्तम् ॥

## परिखाया ढञ् ॥ १७ ॥

परिखाशब्दाद् ढञ् प्रत्ययो भवति तदस्य तदस्मिन् स्यादित्येतस्मिन् अर्थे। छस्याप-वादः। पारिखेयी भूमिः। छयतोः पूर्णोऽवधिः। इतः परमन्यः प्रत्ययो विधीयते ॥

## प्राग्वतेष्ठञ् ॥ १८ ॥

'तेन तुल्यं क्रिया चेद् वतिः' ( ५.१.११५ ) इति वक्ष्यति। प्रागेतस्माद् वतिसंशब्द-नाद् यानित ऊर्ध्वमनुक्रमिष्यामः, ठञ् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—'पारायण-तुरायणचान्द्रायणं वर्तयति' ( ५.१.७२ )—पारायणिकः। तौरायणिकः। चान्द्रायणिकः॥

## आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ १९ ॥

'तदर्हति' ( ५.१.६३ ) इति वक्ष्यति। आ एतस्मादर्हसंशब्दनाद् यानित ऊर्ध्वमनु-क्रमिष्यामः, ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यो गोपुच्छादीन् वर्जयित्वा। अभिविधावय-माकारः, तेनार्हत्यर्थेऽपि[1] ठग् भवत्येव। ठञधिकारमध्ये तदपवादः ठग् विधीयते। वक्ष्यति—'तेन क्रीतम्' ( ५.१.३७ )—नैष्किकम्। पाणिकम्। अगोपुच्छसंख्यापरिमाणादिति किम्? गोपुच्छेन क्रीतं गौपुच्छिकम्। संख्या—षाष्टिकम्। परिमाण—प्रास्थिकम्। कौड-विकम्। ठञ् प्रत्युदाह्रियते। संख्यापरिमाणयोः को विशेषः ? भेदगणनं संख्या एकत्वादिः। गुरुत्वमानमुन्मानं पलादि। आयाममानं प्रमाणं वितस्त्यादि। आरोहपरिणाहमानं परिमाणं प्रस्थादि।

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः॥

## असमासे निष्कादिभ्यः ॥ २० ॥

आर्हादित्येव। निष्कादिभ्यः शब्देभ्योऽसमासे ठक् प्रत्ययो भवत्यार्हीयेष्वर्थेषु। ठञोऽ-पवादः। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्। असमास इति किम् ? द्विनैष्किकम्। त्रिनैष्किकम्[2]। ठञेव भवति, 'परिमाणान्तस्या०' ( ७.३.१७ ) इत्युत्तरपदवृद्धिः। अथ किमर्थमसमास इत्युच्यते, यावता 'ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते' ( परि० ३१ ) ? निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य। 'उगवादिभ्यो

---

१ - 'तेनार्हत्यर्थोऽपि ' इति मुद्रितेषु। २ - 'परमनैष्किकम्, उत्तमनैष्किकम्' इत्यपपाठो मुद्रितेषु ।

यत्' ( ५.१.२ )—गव्यम्। सुगव्यम्। अतिसुगव्यम्। 'विभाषा हविरपूपादिभ्यः' ( ५.१.४ )—अपूप्यम्, अपूपीयम्। यवापूप्यम्, यवापूपीयम्। 'शरीरावयवाद् यत्' ( ५.१.६ )—दन्त्यम्, राजदन्त्यमित्येवमादि सिद्धं भवति। इत उत्तरं च संख्यापूर्वपदानां तदन्तविधिरिष्यते। 'पारायणतुरायणचान्द्रायणं वर्तयति' ( ५.१.७२ )—द्वैपारायणिकः। त्रैपारायणिकः। लुगन्तायास्तु प्रकृतेर्नेष्यते। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। त्रिशूर्पम्। द्विशूर्पेण क्रीतमिति तदन्तविधिप्रतिषेधात् 'शूर्पादञन्यतरस्याम्' ( ५.१.२६ ) इत्यञ् न भवति। सामान्यविहितष्ठञेव भवति। द्विशौर्पिकम्। ठञो द्विगुं प्रत्यनिमित्तत्वाद् लुगभावः। तथा चोक्तम्—'प्राग् वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' ( महाभाष्य-वा० ५.१.२० ) इति॥ निष्क। पण। पाद। माष। वाह। द्रोण। षष्टि। निष्कादिः॥

## शताच्च ठन्यतावशते ॥ २१ ॥

आर्हादित्येव। शतशब्दात् ठन्यतौ प्रत्ययौ भवतोऽशतेऽभिधेय आर्हीयेष्वर्थेषु। कनोऽपवादः। शतेन क्रीतं शतिकम्। शत्यम्। अशत इति किम्? शतं परिमाणमस्य शतकं निदानम्। प्रत्ययार्थोऽत्र संघः शतमेव वस्तुतः प्रकृत्यर्थाद् न भिद्यते। इह तु न भवति—शतेन क्रीतं शत्यं शाटकशतम्, शतिकं शाटकशतमिति। वाक्येन ह्यत्र प्रत्ययार्थस्य तत्त्वं गम्यते, न श्रुत्या। तथा चोक्तम्—'शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः' ( महाभाष्य-वा० ५.१.२१ ) इति। चकारोऽसमास इत्यनुकर्षणार्थः। द्वौ च शतं च द्विशतम्, द्विशतेन क्रीतं द्विशतकम्। त्रिशतकम्। 'प्राग् वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' (महाभाष्य-वा० ५.१.२० ) इत्यनया इष्ट्या समासादपि प्राप्नोति॥

## संख्याया अतिशदन्तायाः कन् ॥ २२ ॥

आर्हादित्येव। संख्याया अत्यन्ताया अशदन्तायाश्च कन् प्रत्ययो भवत्यार्हीयेष्वर्थेषु। ठञोऽपवादः। पञ्चभिः क्रीतः पञ्चकः पटः। बहुकः। गणकः। अतिशदन्ताया इति किम्? साप्ततिकः। चात्वारिंशत्कः। अर्थवतस्तिशब्दस्य ग्रहणाद् डतेः पर्युदासो न भवति। कतिकः॥

## वतोरिड् वा ॥ २३ ॥

वत्वन्तस्य संख्यात्वात् कन् सिद्ध एव, तस्य त्वनेन वा इडागमो विधीयते। वतोः परस्य कनो वा इडागमो भवत्यार्हीयेष्वर्थेषु। तावतिकः, तावत्कः। यावतिकः, यावत्कः॥

## विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् ॥ २४ ॥

विंशतित्रिंशद्भ्यां ड्वुन् प्रत्ययो भवत्यसंज्ञायां विषय आर्हीयेष्वर्थेषु। विंशकः।

त्रिंशकः। 'ति विंशतेर्डिति' ( ६.४.१४२ ) इति तिलोपः। असंज्ञायामिति किम् ? विंशतिकः। त्रिंशत्कः। कथं पुनरत्र कन्, यावता अतिशदन्ताया इति पर्युदासेन भवितव्यम्? योगविभागः करिष्यते—विंशतित्रिंशद्भ्यां कन् प्रत्ययो भवति, ततो ड्वुन्नसंज्ञायामिति॥

## कंसाट्टिठन् ॥ २५ ॥

कंसाट् टिठन् प्रत्ययो भवत्यार्हीयेष्वर्थेषु। ठञोऽपवादः। टकारो ङीबर्थः। इकार उच्चारणार्थः। नकारः स्वरार्थः। कंसिकः। कंसिकी॥ अर्धाच्चेति वक्तव्यम्॥ अर्धिकः। अर्धिकी ॥ कार्षापणाट् टिठन् वक्तव्यः॥ कार्षापणिकः। कार्षापणिकी॥ प्रतिशब्दश्चास्यादेशो वा वक्तव्यः॥ प्रतिकः। प्रतिकी॥

## शूर्पादञन्यतरस्याम् ॥ २६ ॥

शूर्पशब्दादन्यतरस्यामञ् प्रत्ययो भवत्यार्हीयेष्वर्थेषु। ठञोऽपवादः। पक्षे सोऽपि भवति। शूर्पेण क्रीतं शौर्पम्, शौर्पिकम्॥

## शतमानविंशतिकसहस्रवसनादण् ॥ २७ ॥

शतमानादिभ्यः शब्देभ्योऽण् प्रत्ययो भवत्यार्हीयेष्वर्थेषु। ठक्ठञोरपवादः। शतमानेन क्रीतं शातमानं शतम्[1]। वैंशतिकम्। साहस्रम्। वासनम्॥

## अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ २८ ॥

आर्हादित्येव। अध्यर्धशब्दः पूर्वो यस्मिन् तस्मादध्यर्धपूर्वात् प्रातिपदिकाद् द्विगोश्च परस्यार्हीयस्य लुग् भवत्यसंज्ञायां विषये। अध्यर्धकंसम्। द्विकंसम्। त्रिकंसम्। अध्यर्धशूर्पम्। द्विशूर्पम्। त्रिशूर्पम्। असंज्ञायामिति किम् ? पाञ्चलोहितिकम्। पाञ्चकलापिकम्[2]। लोहिनीशब्दस्य 'भस्याढे तद्धिते०' ( वा० ६.३.३५ ) इति पुंवद्भावः। प्रत्ययान्तस्य विशेषणमसंज्ञाग्रहणम्, न चेत् प्रत्ययान्तं संज्ञेति। अध्यर्धशब्दः संख्यैव, किमर्थं भेदेनोपादीयते? ज्ञापकार्थम् , क्वचिदस्य संख्याकार्यं न भवति, 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' ( ५.४.१७ ) इति॥

## विभाषा कार्षापणसहस्राभ्याम् ॥ २९ ॥

अध्यर्धपूर्वाद् द्विगोश्च कार्षापणसहस्रान्तादुत्तरस्यार्हीयप्रत्ययस्य विभाषा लुग्

---

१ – ' शतम् ' इति नास्ति बहुत्र । २ – ' पञ्चलौहितिकम् । पाञ्चकलायिकम् ' इति बाल० ।

भवति। पूर्वेण लुकि नित्ये प्राप्ते विकल्प्यते। अध्यर्धकार्षापणम्, अध्यर्धकार्षापणिकम्। द्विकार्षापणम्, द्विकार्षापणिकम्। औपसंख्यानिकस्य टिठनो लुक्। अलुक्पक्षे च प्रतिरादेशो विकल्पितः। अध्यर्धप्रतिकम्। द्विप्रतिकम्। त्रिप्रतिकम्। सहस्रात्—अध्यर्धसहस्रम्, अध्यर्धसाहस्रम्। द्विसहस्रम्, द्विसाहस्रम्। अलुक्पक्षे 'संख्यायाः संवत्सरसंख्यस्य च' (७.३.१५) इत्युत्तरपदवृद्धिः॥ सुवर्णशतमानयोरुपसंख्यानम्॥ अध्यर्धसुवर्णम्, अध्यर्धसौवर्णिकम्। द्विसुवर्णम्, द्विसौवर्णिकम्। अध्यर्धशतमानम्, अध्यर्धशातमानम्। द्विशतमानम्, द्विशातमानम्। 'परिमाणान्तस्या०' (७.३.१७) इत्युत्तरपदवृद्धिः॥

## द्वित्रिपूर्वान्निष्कात् ॥ ३० ॥

द्विगोरित्येव। द्वित्रिपूर्वाद् द्विगोर्निष्कान्तादार्हीयप्रत्ययस्य विभाषा लुग् भवति। द्विनिष्कम्, द्विनैष्किकम्। त्रिनिष्कम्, त्रिनैष्किकम् ॥ बहुपूर्वाच्चेति वक्तव्यम्॥ बहुनिष्कम्, बहुनैष्किकम्। 'परिमाणान्तस्या०' (७.३.१७) इत्युत्तरपदवृद्धिः॥

## बिस्ताच्च ॥ ३१ ॥

द्वित्रिपूर्वादिति चकारेणानुकृष्यते। द्वित्रिपूर्वाद् बिस्तान्ताद् द्विगोः परस्यार्हीयप्रत्ययस्य विभाषा लुग् भवति। द्विबिस्तम्, द्विबैस्तिकम्। त्रिबिस्तम्, त्रिबैस्तिकम्। बहुबिस्तम्, बहुबैस्तिकम्॥

## विंशतिकात् खः ॥ ३२ ॥

अध्यर्धपूर्वात् प्रातिपदिकाद् द्विगोश्च विंशतिकशब्दान्तादार्हीयेष्वर्थेषु खः प्रत्ययो भवति। अध्यर्धविंशतिकीनम्। द्विविंशतिकीनम्। त्रिविंशतिकीनम्। विधानसामर्थ्यादस्य लुङ् न भवति॥

## खार्या ईकन् ॥ ३३ ॥

अध्यर्धपूर्वाद् द्विगोरित्येव। अध्यर्धपूर्वात् प्रातिपदिकाद् द्विगोश्च खारीशब्दान्तादार्हीयेष्वर्थेषु ईकन् प्रत्ययो भवति। अध्यर्धखारीकम्। द्विखारीकम् ॥ केवलायाश्चेति वक्तव्यम्॥ खारीकम्॥ काकिण्याश्चोपसंख्यानम्॥ अध्यर्धकाकिणीकम्। द्विकाकिणीकम्। त्रिकाकिणीकम् ॥ केवलायाश्च॥ काकिणीकम्॥

## पणपादमाषशताद् यत् ॥ ३४ ॥

अध्यर्धपूर्वाद् द्विगोरित्येव। अध्यर्धपूर्वाद् द्विगोश्च पणपादमाषशतशब्दान्ता-

दार्हीयेष्वर्थेषु यत् प्रत्ययो भवति। अध्यर्धपण्यम्। द्विपण्यम्। त्रिपण्यम्। पाद—अध्यर्धपाद्यम्। द्विपाद्यम्। त्रिपाद्यम्। पद्भावो न भवति 'पद्यत्यतदर्थे' (६.३.५३) इति। प्राण्यङ्गस्य स इष्यते, इदं तु परिमाणम्। माष—अध्यर्धमाष्यम्। द्विमाष्यम्। त्रिमाष्यम्। शत—अध्यर्धशत्यम्। द्विशत्यम्। त्रिशत्यम्॥

## शाणाद् वा ॥ ३५ ॥

अध्यर्धपूर्वाद् द्विगोरित्येव। शाणशब्दादध्यर्धपूर्वाद् द्विगोरार्हीयेष्वर्थेषु वा यत् प्रत्ययो भवति। ठञोऽपवादः। पक्षे सोऽपि भवति, तस्य च लुक्। अध्यर्धशाण्यम्, अध्यर्धशाणम्। द्विशाण्यम्, द्विशाणम्। त्रिशाण्यम्, त्रिशाणम्॥ शताच्चेति वक्तव्यम्॥ अध्यर्धशत्यम्, अध्यर्धशतम्। द्विशत्यम्, द्विशतम्। त्रिशत्यम्, त्रिशतम्॥

## द्वित्रिपूर्वादण् च ॥ ३६ ॥

शाणाद्वेत्येव। द्वित्रिपूर्वात् शाणान्तात् प्रातिपदिकादार्हीयेष्वर्थेषु अण् प्रत्ययो भवति, चकाराद् यत् च वा। तेन त्रैरूप्यं संपद्यते[1] द्वैशाणम्, द्विशाण्यम्, द्विशाणम्। त्रैशाणम्, त्रिशाण्यम्, त्रिशाणम्। 'परिमाणान्तस्यासंज्ञाशाणयोः' (७.३.१७) इति पर्युदासादादिवृद्धिरेव भवति॥

## तेन क्रीतम् ॥ ३७ ॥

ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः। तेषामितः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते। तेनेति तृतीयासमर्थात् क्रीतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सप्तत्या क्रीतं साप्ततिकम्। आशीतिकम्। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्। शत्यम्। शतिकम्। द्विकम्। त्रिकम्। तेनेति मूल्यात् करणे तृतीया समर्थविभक्तिः। अन्यत्रानभिधानाद् न भवति देवदत्तेन क्रीतम्, पाणिना क्रीतमिति। द्विवचनबहुवचनान्तात् प्रत्ययो न भवति। प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतमिति, अनभिधानादेव। यत्र तु प्रकृत्यर्थस्य संख्याभेदावगमे प्रमाणमस्ति तत्र द्विवचनबहुवचनान्तादपि प्रत्ययो भवति। द्वाभ्यां क्रीतं द्विकम्। त्रिकम्। पञ्चकम्। तथा मुद्गैः क्रीतं मौद्गिकम्। माषिकम्। न ह्येकेन मुद्गेन क्रयः संभवति॥

## तस्य निमित्तं संयोगोत्पातौ ॥ ३८ ॥

---

१ - 'भवति' इति बाल०।

तस्येति षष्ठीसमर्थाद् निमित्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् तद् निमित्तं संयोगश्चेत् स भवति, उत्पातो वा। संयोगः संबन्धः। प्राणिनां शुभाशुभसूचको महाभूतपरिणाम उत्पातः। शतस्य निमित्तं धनपतिना संयोगः शत्यः, शतिकः। साहस्रः। उत्पातः खल्वपि—शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनं शत्यम्, शतिकम्। साहस्रम् ॥ तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् ॥ वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम् ॥ सन्निपाताच्चेति वक्तव्यम् ॥ सान्निपातिकम् ॥

## गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ ३९ ॥

गोशब्दाद् द्व्यचश्च प्रातिपदिकात् संख्यापरिमाणाश्वादिविवर्जिताद् यत् प्रत्ययो भवति तस्य निमित्तं संयोगोत्पातावित्येतस्मिन्नर्थे। ठञादीनामपवादः। गोर्निमित्तं संयोग उत्पातो वा गव्यः। द्व्यचः खल्वपि—धन्यम्। स्वर्ग्यम्। यशस्यम्। आयुष्यम्। असंख्यापरिमाणाश्वादेरिति किम्? पञ्चानां निमित्तं पञ्चकम्। सप्तकम्। अष्टकम्। परिमाण—प्रास्थिकम्। खारीकम्। अश्वादि—आश्विकः ॥ ब्रह्मवर्चसादुपसंख्यानम् ॥ ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगो ब्रह्मवर्चस्यम् ॥ अश्व। अश्मन्। गण। ऊर्णा। उमा। वसु। वर्ष। भङ्ग। अश्वादिः ॥

## पुत्राच्छ च ॥ ४० ॥

पुत्रशब्दात् छः प्रत्ययो भवति, चकाराद् यत् च, तस्य निमित्तं संयोगोत्पातावित्येतस्मिन् विषये। द्व्यच इति नित्ये यति प्राप्ते वचनम्। पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयम्, पुत्र्यम् ॥

## सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥

सर्वभूमिपृथिवीशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः तस्य निमित्तं संयोगोत्पातावित्येतस्मिन् विषये। ठकोऽपवादौ। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः। पार्थिवः। सर्वभूमेरनुशतिकादिपाठाद् (७.३.२०) उभयपदवृद्धिः ॥

## तस्येश्वरः ॥ ४२ ॥

तस्येति षष्ठीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यां यथासंख्यम्[1] अणञौ प्रत्ययौ भवत

---

१ – 'यथासंख्यम्' इति नास्ति बाल०।

ईश्वर इत्येतस्मिन् विषये। सर्वभूमेरीश्वरः सार्वभौमः। पार्थिवः। षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देशः प्रत्ययार्थस्य निवृत्तये। अन्यथा संयोगोत्पाताविवेश्वरोऽपि प्रत्ययार्थस्य निमित्तस्य विशेषणं संभाव्येत ॥

## तत्र विदित इति च ॥ ४३ ॥

तत्रेति सप्तमीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतो विदित इत्येतस्मिन्नर्थे। विदितो ज्ञातः प्रकाशित इत्यर्थः। सर्वभूमौ विदितः सार्वभौमः। पार्थिवः ॥

## लोकसर्वलोकाट् ठञ् ॥ ४४ ॥

लोकसर्वलोकशब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्यां विदित इत्येतस्मिन् विषये ठञ् प्रत्ययो भवति। लोके विदितो लौकिकः। सार्वलौकिकः। अनुशतिकादित्वाद् (७.३.२०) उभयपदवृद्धिः ॥

## तस्य वापः ॥ ४५ ॥

तस्येति षष्ठीसमर्थाद् वाप इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। उप्यतेऽस्मिन् वापः, क्षेत्रमुच्यते। प्रस्थस्य वापः क्षेत्रं प्रास्थिकम्। द्रौणिकम्। खारीकम् ॥

## पात्रात् ष्ठन् ॥ ४६ ॥

पात्रशब्दात् ष्ठन् प्रत्ययो भवति तस्य वाप इत्येतस्मिन् विषये। ठञोऽपवादः। नकारः स्वरार्थः। षकारो ङीषर्थः। पात्रशब्दः परिमाणवाची। पात्रस्य वापः पात्रिकं क्षेत्रम्। पात्रिकी क्षेत्रभक्तिः ॥

## तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् तत् प्रथमासमर्थं वृद्ध्यादि चेत् तद् दीयते। दीयत इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसंबध्यते। तत्र यदधमर्णेनोत्तमर्णाय मूलधनातिरिक्तं देयं तद् वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भाग आयः। पटादीनामुपादानमूलादतिरिक्तं द्रव्यं लाभः। रक्षानिर्वेशो राजभागः शुल्कः। उत्कोच उपदा। पञ्च अस्मिन् वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः। सप्तकः। शत्यः, शतिकः। साहस्रः ॥ चतुर्थ्यर्थ उपसंख्यानम् ॥ पञ्चास्मै वृद्धिर्वा आयो

वा लाभो वा शुल्को वा[1] उपदा वा दीयते पञ्चको देवदत्तः। सिद्धं त्वधिकरणत्वेन विवक्षितत्वात्। सममब्राह्मणे दानम् ( मनु० ७.८५ ) इति यथा॥

## पूरणार्धाट्ठन् ॥ ४८ ॥

पूरणवाचिनः शब्दादर्धशब्दात् च ठन् प्रत्ययो भवति तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयत इत्येतस्मिन्नर्थे। यथायथं ठक्ठिठनोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः। तृतीयिकः। पञ्चमिकः। सप्तमिकः। अर्धिकः। अर्धशब्दो रूपकार्धस्य रूढिः॥

## भागाद् यच्च ॥ ४९ ॥

भागशब्दाद् यत् प्रत्ययो भवति, चकारात् ठंश्च, तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयत इत्येतस्मिन्नर्थे। ठञोऽपवादः। भागो वृद्ध्यादिरस्मिन् दीयते भाग्यम्, भागिकं शतम्। भाग्या, भागिका विंशतिः। भागशब्दोऽपि रूपकार्धस्य वाचकः॥

## तद्धरति वहत्यावहति भाराद् वंशादिभ्यः ॥ ५० ॥

तदिति द्वितीयासमर्थाद् हरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। प्रकृतिविशेषणं भाराद् वंशादिभ्य इति। वंशादिभ्यः परो यो भारशब्दस्तदन्तात् प्रातिपदिकादिति। वंशभारं हरति वहत्यावहति वा वांशभारिकः। कौटजभारिकः। बाल्वजभारिकः। भारादिति किम्? वंशं हरति। वंशादिभ्य इति किम् ? व्रीहिभारं हरति। अपरा वृत्तिः—भाराद् वंशादिभ्य इति, भारभूतेभ्यो वंशादिभ्य इत्यर्थः। भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणम्। भारभूतान् वंशान् हरति वांशिकः। कौटजिकः। बाल्वजिकः। भारादिति किम् ? वंशं हरति। वंशादिभ्य इति किम् ? भारभूतान् व्रीहीन् वहति। सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः। तदुभयमपि ग्राह्यम्। हरति देशान्तरं प्रापयति चोरयति वा। वहत्युत्क्षिप्य धारयतीत्यर्थः। आवहति उत्पादयतीत्यर्थः॥ वंश। कुटज। बल्वज। मूल। अक्ष। स्थूणा। अश्मन्। अश्व। इक्षु। खट्वा। वंशादिः॥

## वस्नद्रव्याभ्यां ठन्कनौ ॥ ५१ ॥

वस्नद्रव्यशब्दाभ्यां द्वितीयासमर्थाभ्यां यथासंख्यं ठन् कन् इत्येतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु। वस्नं हरति वहति वा वस्निकः। द्रव्यकः॥

---

१ – ' शुल्को वा ' इति नास्ति है०, बाल०।

## संभवत्यवहरति पचति ॥ ५२ ॥

तदिति द्वितीया समर्थविभक्तिरनुवर्तते। तदिति द्वितीयासमर्थात् संभवत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। तत्राधेयस्य प्रमाणानतिरेकः संभवः। उपसंहरणमवहारः। विक्लेदनं पाकः। प्रस्थं संभवत्यवहरति पचति वा प्रास्थिकः। कौडविकः। खारीकः। ननु च पाके च संभवोऽस्ति ? नास्त्यत्र नियोगः। प्रस्थं पचति ब्राह्मणी प्रास्थिकी ॥ तत्पचतीति द्रोणादण् च ॥ द्रोणं पचति द्रौणी, द्रौणिकी ॥

## आढकाचितपात्रात् खोऽन्यतरस्याम् ॥ ५३ ॥

आढकाचितपात्रशब्देभ्यो द्वितीयासमर्थेभ्योऽन्यतरस्यां संभवादिष्वर्थेषु खः प्रत्ययो भवति। ठञोऽपवादः। पक्षे सोऽपि भवति। आढकं संभवत्यवहरति पचति वा आढकीना, आढकिकी। आचितीना, आचितिकी। पात्रीणा, पात्रिकी ॥

## द्विगोः ष्ठंश्च ॥ ५४ ॥

आढकाचितपात्रादित्येव। आढकाचितपात्रान्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् प्रत्ययो भवति, चकारात् खः, अन्यतरस्याम्। विधानसामर्थ्यादनयोर्लुग् न भवति। ठञस्तु पक्षेऽनुज्ञातस्य 'अध्यर्धपूर्वद्विगोः०' (५.१.२८) इति लुग् भवत्येव। नकारः स्वरार्थः। षकारो ङीषर्थः। द्व्याढकिकी, द्व्याढकीना, द्व्याढकी। द्व्याचितिकी, द्व्याचितीना, द्व्याचिता। 'अपरिमाणबिस्ताचित०' (४.१.२२) इति ङीपः प्रतिषेधः। द्विपात्रिकी, द्विपात्रीणा, द्विपात्री ॥

## कुलिजाल्लुक्खौ च ॥ ५५ ॥

द्विगोरित्येव। कुलिजशब्दान्ताद् द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ भवतः, चकारात् ष्ठंश्च। अन्यतरस्यांग्रहणानुवृत्त्या लुगपि विकल्प्यते। ठञः पक्षे श्रवणं भवति। तेन चातूरूप्यं संपद्यते। द्वे कुलिजे संभवत्यवहरति पचति वा द्विकुलिजिकी, द्विकुलिजीना, द्विकुलिजी[1], द्वैकुलिजिकी। 'परिमाणान्तस्यासंज्ञाशाणयोः' (७.३.१७) इत्यत्र कुलिजग्रहणमपीष्यते। तेनोत्तरपदवृद्धिरपि न भवति ॥

## सोऽस्यांशवस्नभृतयः ॥ ५६ ॥

स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् तत् प्रथमा-

१ – 'द्विकुलिजा' इति बाल०।

समर्थमंशवस्नभृतयश्चेत् ता भवन्ति। अंशो भागः। वस्नं मूल्यम्। भृतिर्वेतनम्। पञ्च अंशो वस्नो वा भृतिर्वास्य पञ्चकः। सप्तकः। साहस्रः॥

## तदस्य परिमाणम् ॥ ५७ ॥

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं परिमाणं चेत् तद् भवति। प्रस्थः परिमाणमस्य प्रास्थिको राशिः। खारशतिकः[१]। शत्यः, शतिकः। साहस्रः। द्रौणिकः। कौडविकः। वर्षशतं परिमाणमस्य वार्षशतिकः। वार्षसहस्रिकः। षष्टिर्जीवितपरिमाणमस्येति षाष्टिकः। साप्ततिकः[२]। समर्थविभक्तिः प्रत्ययार्थश्च पूर्वसूत्रादेवानुवर्तिष्यते, किमर्थं पुनरनयोरुपादानम्? पुनर्विधानार्थम्। द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिकः। द्विसाप्ततिकः। पुनर्विधानसामर्थ्याद् 'अध्यर्धपूर्वद्विगोर्लुग०' (५.१.२८) न भवति॥

## संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ॥ ५८ ॥

तदस्य परिमाणमिति वर्तते। संख्यावाचिनः प्रातिपदिकात् परिमाणोपाधिकात् प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति। संज्ञासंघसूत्राध्ययनेष्विति प्रत्ययार्थविशेषणम्। तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः। पञ्चैव पञ्चकाः शकुनयः। त्रिकाः शालङ्कायनाः। संघ—पञ्च परिमाणमस्य पञ्चकः संघः। अष्टकः। सूत्र—अष्टावध्यायाः परिमाणमस्य सूत्रस्य अष्टकं पाणिनीयम्। दशकं वैयाघ्रपदीयम्। त्रिकं काशकृत्स्नम्। ननु चाध्यायसमूहः सूत्रसंघ एव भवति? नैतदस्ति। प्राणिसमूहे संघशब्दो रूढः। अध्ययन—पञ्चकोऽधीतः। सप्तकोऽधीतः। अष्टकः। नवकः। अधीतिरध्ययनम्। तस्य संख्यापरिमाणं पञ्चावृत्तयः पञ्च वाराः पञ्च रूपाण्यस्याध्ययनस्य पञ्चकमध्ययनम् ॥ स्तोमे डविधिः पञ्चदशाद्यर्थः॥ पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः स्तोमः। सप्तदशः। एकविंशः॥ शनुशतोर्डिनिश्छन्दसि॥ पञ्चदशिनोऽर्धमासाः (तै० सं० ७.५.२०.१)। त्रिंशिनो मासाः (तै० सं० ७.५.२०.१)॥ विंशतेश्चेति वक्तव्यम्॥ विंशिनोऽङ्गिरसः (गो० ब्रा० १.१.८)॥

## पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ५९ ॥

तदस्य परिमाणमिति वर्तते। पङ्क्त्यादयः शब्दा निपात्यन्ते। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम्। पञ्चानां टिलोपः, तिश्च प्रत्ययः। पञ्च परिमाणमस्य

१ – 'खारीकः' इति बाल०। २ – 'द्विसाप्ततिकः' इति बाल०।

पङ्क्तिश्छन्दः। द्वयोर्दशतोर्विन्भावः शतिच् च प्रत्ययः। द्वौ दशतौ परिमाणमस्य संघस्य विंशतिः। त्रयाणां दशतां त्रिन्भावः शत् च प्रत्ययः। त्रयो दशतः परिमाणमस्य त्रिंशत्। चतुर्णां दशतां चत्वारिन्भावः शत् च प्रत्ययः। चत्वारो दशतः परिमाणमस्य चत्वारिंशत्। पञ्चानां दशतां पञ्चाभावः शत् च प्रत्ययः। पञ्च दशतः परिमाणमस्य पञ्चाशत्। षण्णां दशतां षड्भावस्तिः प्रत्ययोऽपदत्वं च। षड् दशतः परिमाणमस्य षष्टिः। सप्तानां दशतां सप्तभावः तिः प्रत्ययश्च। सप्त दशतः परिमाणमस्य सप्ततिः। अष्टानां दशतामशीभावस्तिः प्रत्ययश्च। अष्टौ दशतः परिमाणमस्य अशीतिः। नवानां दशतां नवभावस्तिः प्रत्ययश्च। नव दशतः परिमाणमस्य नवतिः। दशानां दशतां शभावः तश्च प्रत्ययः। दश दशतः परिमाणमस्य संघस्य शतम्। विंशत्यादयो गुणशब्दाः, ते यथाकथंचिद् व्युत्पाद्याः। नात्रावयवार्थेऽभिनिवेष्टव्यम्। तथाहि—पङ्क्तिरिति क्रमसंनिवेशेऽपि वर्तते। ब्राह्मणपङ्क्तिः, पिपीलिकापङ्क्तिरिति। न चात्रावयवार्थः कश्चिदस्ति। या चैषां विषयभेदेन गुणमात्रे गुणिनि च वृत्तिः, स्वलिङ्गसंख्यानुविधानं च, एतदपि सर्वं स्वाभाविकमेव। सहस्रादयोऽप्येवंजातीयकास्तद्वदेव द्रष्टव्याः। उदाहरणमात्रमेतदिति॥

## पञ्चद्दशतौ वर्गे वा ॥ ६० ॥

पञ्चत् दशत् इत्येतौ वा निपात्येते तदस्य परिमाणमित्यस्मिन् विषये वर्गेऽभिधेये। 'संख्यायाः०' (५.१.५८) इति कनि प्राप्ते डतिर्निपात्यते। वावचनात् पक्षे सोऽपि भवति। पञ्च परिमाणमस्य पञ्चद् वर्गः, दशद् वर्गः। पञ्चको वर्गः, दशको वर्गः॥

## सप्तनोऽञ् छन्दसि ॥ ६१ ॥

वर्ग इत्येव। तदस्य परिमाणमिति च। सप्तन्शब्दात् छन्दसि विषयेऽञ् प्रत्ययो भवति वर्गेऽभिधेये। सुप्त साप्तानि ( तु० — तै० सं० ५.४.७.५ ) असृजत्॥

## त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ॥ ६२ ॥

तदस्य परिमाणमित्येव। वर्ग इति निवृत्तम्। त्रिंशच्चत्वारिंशच्छब्दाभ्यां संज्ञायां विषये डण् प्रत्ययो भवति तदस्य परिमाणमित्येतस्मिन् विषये ब्राह्मणेऽभिधेये। अभिधेयसप्तम्येषा, न विषयसप्तमी। तेन मन्त्रभाषयोरपि भवति। त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि ब्राह्मणानि। चात्वारिंशानि ब्राह्मणानि। कानिचिदेव ब्राह्मणान्युच्यन्ते॥

## तदर्हति ॥ ६३ ॥

तदिति द्वितीयासमर्थादर्हतीत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः। वास्त्रयुग्मिकः। शत्यः, शतिकः। साहस्रः॥

## छेदादिभ्यो नित्यम् ॥ ६४ ॥

नित्यग्रहणं प्रत्ययार्थविशेषणम्। छेदादिभ्यो द्वितीयासमर्थेभ्यो नित्यमर्हतीत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। छेदं नित्यमर्हति छैदिकः। भैदिकः॥ छेद। भेद। द्रोह। दोह। वर्त। कर्ष। संप्रयोग। विप्रयोग। प्रेषण। संप्रश्न। विप्रकर्ष। विराग विरङ्गं च ( ग० सू० ११२ )। वैरङ्गिकः। छेदादिः॥

## शीर्षच्छेदाद् यच्च ॥ ६५ ॥

शीर्षच्छेदशब्दाद् द्वितीयासमर्थाद् नित्यमर्हतीत्यस्मिन्नर्थे यत् प्रत्ययो भवति, चकाराद् यथाविहितं च। शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः, शैर्षच्छेदिकः। प्रत्ययसन्नियोगेन शिरसः शीर्षभावो निपात्यते॥

## दण्डादिभ्यो यः[१]॥ ६६ ॥

नित्यमिति निवृत्तम्। दण्डादिभ्यो द्वितीयासमर्थेभ्योऽर्हतीत्यस्मिन्नर्थे यः प्रत्ययो भवति। ठकोऽपवादः। दण्डमर्हति दण्ड्यः। मुसल्यः॥ दण्ड। मुसल। मधुपर्क। कशा। अर्घ। मेधा। मेघ। युग। उदक। वध। गुहा। भाग। इभ। दण्डादिः॥

## छन्दसि च ॥ ६७ ॥

प्रातिपदिकमात्रात् छन्दसि विषये तदर्हतीत्यस्मिन्नर्थे यत् प्रत्ययो भवति। ठञादीनामपवादः। उदक्या वृत्तयः। यूप्यः पलाशः। गर्त्यो देशः॥

## पात्राद् घंश्च ॥ ६८ ॥

पात्रशब्दाद् घन् प्रत्ययो भवति, चकाराद् यत् च, तदर्हतीत्यस्मिन्नर्थे। ठकूठञोरपवादः। पात्रं परिमाणमप्यस्ति। पात्रमर्हति पात्रियः, पात्र्यः॥

## कडङ्करदक्षिणाच्छ च ॥ ६९ ॥

कडङ्करदक्षिणाशब्दाभ्यां छः प्रत्ययो भवति, चकाराद् यत् च, तदर्हतीत्यस्मिन् विषये। ठकोऽपवादः। कडङ्करमर्हति कडङ्करीयो गौः। कडङ्कर्यः। दक्षिणामर्हति दक्षिणीयो भिक्षुः। दक्षिण्यो ब्राह्मणः। दक्षिणाशब्दस्याल्पाचूतरस्यापूर्वनिपातेन लक्षणव्यभिचारचिह्नेन यथासंख्याभावं सूचयति॥

---

१ - 'अयमेव प्रायिकः पाठः, न्यासाभिमतश्च। 'दण्डादिभ्यः' इति सूत्रपाठं यतोऽनुवृत्तिं च निरचैषीद् हरदत्तः।

द्वितीया। मासमधीष्टो मासिकोऽध्यापकः। मासं भृतो मासिकः कर्मकरः। मासं भूतो मासिको व्याधिः। मासं भावी मासिक उत्सवः। ननु चाध्येषणं भरणं च मुहूर्तं क्रियते, तेन कथं मासो व्याप्यते ? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामेव व्याप्त इत्युच्यते॥

## मासाद् वयसि यत्खञौ ॥ ८१ ॥

मासशब्दाद् वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः। ठञोऽपवादौ। अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद् भूत एवात्राभिसंबध्यते। मासं भूतो मास्यः, मासीनः। वयसीति किम् ? मासिकम्॥

## द्विगोर्यप् ॥ ८२ ॥

मासाद् वयसीति वर्तते। मासान्ताद् द्विगोर्यप् प्रत्ययो भवति वयस्यभिधेये। द्वौ मासौ भूतो द्विमास्यः। त्रिमास्यः॥

## षण्मासाण्ण्यच्च ॥ ८३ ॥

वयसीत्येव। षण्मासशब्दाद् वयस्यभिधेये ण्यत् प्रत्ययो भवति, यप् च। औत्सर्गिकष्ठञपीष्यते, स चकारेण समुच्चेतव्यः। स्वरितत्वाच्चानन्तरोऽनुवर्तिष्यते। तेन त्रैरूप्यं भवति। षाण्मास्यः, षण्मास्यः, षाण्मासिकः॥

## अवयसि ठंश्च ॥ ८४ ॥

षण्मासशब्दादवयस्यभिधेये ठन् प्रत्ययो भवति। चकारेणानन्तरस्य ण्यतः समुच्चयः क्रियते[1]। षण्मासिको रोगः। षाण्मास्यः॥

## समायाः खः ॥ ८५ ॥

अधीष्टादयश्चत्वारोऽर्था अनुवर्तन्ते। समाशब्दाद् द्वितीयासमर्थादधीष्टादिष्वर्थेषु खः प्रत्ययो भवति। ठञोऽपवादः। समामधीष्टो भृतो भूतो भावी वा समीनः। केचित् तु 'तेन निर्वृत्तम्' (५.१.७९) इति सर्वत्रानुवर्तयन्ति। समया निर्वृत्तः समीनः॥

## द्विगोर्वा ॥ ८६ ॥

समायाः ख इत्येव। समाशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु पञ्चसु वा खः प्रत्ययो

---

१ – 'चकारोऽनन्तरस्य ण्यतः समुच्चयार्थः' इति पाठान्तरम्।

भवति। पूर्वेण नित्यः प्राप्तो विकल्प्यते। 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' (महाभाष्य-वा० ५.१.२०) इति प्राप्तिरस्त्येव। खेन मुक्ते पक्षे ठञपि भवति। द्विसमीनः, द्वैसमिकः। त्रिसमीनः, त्रैसमिकः॥

## रात्र्यहःसंवत्सराच्च ॥ ८७ ॥

रात्रि अहः संवत्सर इत्येवमन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। खेन मुक्ते पक्षे ठञपि भवति। द्विरात्रीणः, द्वैरात्रिकः। त्रिरात्रीणः, त्रैरात्रिकः। द्व्यहीनः, द्वैयह्निकः। त्र्यहीणः, त्रैयह्निकः। द्विसंवत्सरीणः, द्विसांवत्सरिकः। त्रिसंवत्सरीणः, त्रिसांवत्सरिकः। 'संख्यायाः संवत्सरसंख्यस्य च' (७.३.१५) इत्युत्तरपदवृद्धिः॥

## वर्षाल्लुक् च ॥ ८८ ॥

द्विगोरित्येव। वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। पक्षे ठञ्। तयोश्च वा लुग् भवति। एवं त्रीणि रूपाणि भवन्ति। द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः। त्रिवर्षीणः, त्रिवार्षिकः, त्रिवर्षः। 'वर्षस्याभविष्यति' (७.३.१६) इत्युत्तरपदवृद्धिः। भाविनि तु त्रैवर्षिकः॥

## चित्तवति नित्यम् ॥ ८९ ॥

चित्तवति प्रत्ययार्थेऽभिधेये वर्षशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषूत्पन्नस्य प्रत्ययस्य नित्यं लुग् भवति। पूर्वेण विकल्पे प्राप्ते वचनम्। द्विवर्षो दारकः। चित्तवतीति किम्? द्विवर्षीणो व्याधिः॥

## षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ९० ॥

षष्टिकशब्दो निपात्यते। बहुवचनमतन्त्रम्। षष्टिरात्रशब्दात् तृतीयासमर्थात् कन् प्रत्ययो निपात्यते पच्यन्त इत्येतस्मिन्नर्थे, रात्रिशब्दस्य च लोपः। षष्टिरात्रेण पच्यन्ते षष्टिकाः। संज्ञैषा धान्यविशेषस्य। तेन मुद्गादिष्वतिप्रसङ्गो न भवति॥

## वत्सरान्ताच्छश्छन्दसि ॥ ९१ ॥

वत्सरान्तात् प्रातिपदिकाद् निर्वृत्तादिष्वर्थेषु छन्दसि विषये छः प्रत्ययो भवति। ठञोऽपवादः। इद्वत्सरीयः। इदावत्सरीयः (काठ० सं० १३.१५)॥

## संपरिपूर्वात् ख च ॥ ९२ ॥

संपरिपूर्वाद् वत्सरान्तात् प्रातिपदिकाच् छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो

भवति, चकाराच्च छश्च। सुंवत्सुरीणाः (तै० सं० ४.३.१३.४)। परिवत्सुरीणम् (ऋ० ७.१०३.८)। संवत्सरीया, परिवत्सरीया (काठ० सं० १३.१५)॥

## तेन परिजय्यलभ्यकार्यसुकरम् ॥ ९३ ॥

तेनेति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकात् परिजय्य लभ्य कार्य सुकर इत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति। मासेन परिजय्यः, शक्यते जेतुम्, मासिको व्याधिः। सांवत्सरिकः। मासेन लभ्यो मासिकः पटः। मासेन कार्यं मासिकं चान्द्रायणम्। मासेन सुकरो मासिकः प्रासादः॥

## तदस्य ब्रह्मचर्यम् ॥ ९४ ॥

तदिति द्वितीया समर्थविभक्तिः। सा चात्यन्तसंयोगे। अस्येति प्रत्ययार्थः। ब्रह्मचर्यमिति द्वाभ्यामपि संबध्यते। कालस्य व्यापकम्, प्रत्ययार्थस्य च स्वमिति। तदिति द्वितीयासमर्थात् कालवाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, ब्रह्मचर्यं चेद् गम्यते। मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी। आर्धमासिकः। सांवत्सरिकः। अपरा वृत्तिः—तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत् तदस्येति निर्दिष्टं ब्रह्मचर्यं चेत् तद् भवति। मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम्। आर्धमासिकम्। सांवत्सरिकम्। पूर्वत्र ब्रह्मचारी प्रत्ययार्थः, उत्तरत्र ब्रह्मचर्यमेव। उभयमपि प्रमाणम्, उभयथा सूत्रप्रणयनात् ॥ महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसंख्यानम्॥ माहानामिकम्। गौदानिकम्। आदित्यव्रतिकम्॥ तच्चरतीति च॥ महानाम्न्य ऋचः, तत्सहचरितं व्रतं तच्छब्देनोच्यते। महानाम्नीश्चरति माहानामिकः। आदित्यव्रतिकः। गौदानिकः। 'भस्याढे०' (वा० ६.३.३५) इति पुंवद्भावेन ङीपि निवृत्ते 'नस्तद्धिते' (६.४.१४४) इति टिलोपः॥ अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः॥ अवान्तरदीक्षां चरति अवान्तरदीक्षी[1]। तिलव्रती॥ अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः॥ अष्टाचत्वारिंशद् वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः। अष्टाचत्वारिंशी॥ चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः॥ चातुर्मास्यानि चरति चातुर्मासकः। चातुर्मासी ॥ चतुर्मासाद् ण्यो यज्ञे तत्र भवे॥ चतुर्षु मासेषु भवानि चातुर्मास्यानि॥ संज्ञायामण् वक्तव्यः॥ चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी—आषाढी, कार्त्तिकी, फाल्गुनी॥

## तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ९५ ॥

---

१ - द्र०—तै० सं० ६.२.२.७।

तस्येति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो दक्षिणेत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी। वाजपेयिकी। राजसूयिकी। आख्याग्रहणमकालादपि यज्ञवाचिनो यथा स्यादिति। इतरथा हि कालाधिकारादेकाहद्वादशाहप्रभृतय एव यज्ञा गृह्येरन्। 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' ( महाभाष्य-वा० ५.१.२० ) इति कालाधिकारेऽपि द्वादशाहादिष्वस्ति प्राप्तिः॥

## तत्र च दीयते कार्यं भववत् ॥ ९६ ॥

तत्रेति सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकाद् दीयते कार्यमित्येतयोरर्थयो-र्भववत् प्रत्ययो भवति। यथा—मासे भवं मासिकम्। सांवत्सरिकम्। प्रावृषेण्यम्। वासन्तिकम्, वासन्तम्। हैमनम्, हैमन्तम्, हैमन्तिकम्। शारदम्। वतिः सर्वसादृश्यार्थः। योगविभागश्चात्र कर्तव्यः। तत्र च दीयते, यज्ञाख्येभ्य इति। आग्निष्टोमिकं भक्तम्। राजसूयिकम्। वाजपेयिकम्। कालाधिकारस्य पूर्णोऽवधिः। अतः परं सामान्येन प्रत्यय-विधानम्॥

## व्युष्टादिभ्योऽण् ॥ ९७ ॥

तत्रेति सप्तमीसमर्थेभ्यो व्युष्टादिभ्यो दीयते कार्यमित्येतयोरण् प्रत्ययो भवति। व्युष्टे दीयते कार्यं वा, वैयुष्टम्। नैत्यम्॥ अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम्॥ आग्निपदम्। पैलुमूलम्। किं वक्तव्यम्? न वक्तव्यम्। अत्रैव ते पठितव्याः॥ व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। तीर्थ। संभ्रम। आस्तरण। संग्राम। संघात। अग्निपद। पीलुमूल। प्रवास। उपसंक्रमण। व्युष्टादिः॥

## तेन यथाकथाचहस्ताभ्यां णयतौ ॥ ९८ ॥

दीयते कार्यमिति वर्तते। तेनेति तृतीयासमर्थाभ्यां यथाकथाचहस्तशब्दाभ्यां यथा-संख्यं णयतौ प्रत्ययौ भवतः। दीयते कार्यमित्येतयोरर्थयोः प्रत्येकमभिसंबन्धः, यथा-संख्यं नेष्यते। यथाकथाचशब्दोऽव्ययसमुदायोऽनादरे वर्तते। तृतीयार्थमात्रं चात्र संभवति, न तु तृतीया समर्थविभक्तिः। यथाकथाच दीयते कार्यं वा याथाकथाचम्। हस्तेन दीयते कार्यं वा हस्त्यम्॥

## संपादिनि ॥ ९९ ॥

तेनेत्येव। तृतीयासमर्थात् संपादिन्यभिधेये ठञ् प्रत्ययो भवति। गुणोत्कर्षः संपत्तिः। आवश्यके णिनिः ( ३.३.१७० )। कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकं मुखम्। वास्त्रयुगिकं शरीरम्। वस्त्रयुगेण विशेषतः शोभत इत्यर्थः॥

## कर्मवेषाद् यत् ॥ १०० ॥

कर्मवेषशब्दाभ्यां तृतीयासमर्थाभ्यां यत् प्रत्ययो भवति संपादिनीत्येतस्मिन् विषये। ठञोऽपवादः। कर्मणा संपद्यते कर्मण्यं शरीरम्। वेषेण संपद्यते वेष्यो नटः॥

## तस्मै प्रभवति संतापादिभ्यः ॥ १०१ ॥

तस्मा इति चतुर्थीसमर्थेभ्यः संतापादिभ्यः प्रभवतीत्यस्मिन् विषये ठञ् प्रत्ययो भवति। समर्थः शक्तः प्रभवतीत्युच्यते। अलमर्थे चतुर्थी। संतापाय प्रभवति सान्तापिकः। सान्नाहिकः॥ संताप। संनाह। संग्राम। संयोग। संपराय। संपेष। निष्पेष। निसर्ग। असर्ग। विसर्ग। उपसर्ग। उपवास। प्रवास। संघात। संमोदन। सक्तुमांसौदनाद् विगृहीतादपि ( ग० सू० ११३ )। संतापादिः॥

## योगाद् यच्च ॥ १०२ ॥

योगशब्दाद् यत् प्रत्ययो भवति, चकाराट् ठञ्, तस्मै प्रभवतीत्यस्मिन् विषये। योगाय प्रभवति योग्यः, यौगिकः॥

## कर्मण उकञ् ॥ १०३ ॥

कर्मशब्दादुकञ् प्रत्ययो भवति तस्मै प्रभवतीत्येतस्मिन्नर्थे। ठञोऽपवादः। कर्मणे प्रभवति कार्मुकं धनुः। धनुषोऽन्यत्र न भवति, अनभिधानात्[1]॥

## समयस्तदस्य प्राप्तम् ॥ १०४ ॥

समयशब्दात् तदिति प्रथमासमर्थाद् अस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं प्राप्तं चेत् तद् भवति। समयः प्राप्तोऽस्य सामयिकं कार्यम्। उपनतकाल-मित्यर्थः। समर्थविभक्तिनिर्देश उत्तरार्थः॥

## ऋतोरण् ॥ १०५ ॥

तदस्य प्राप्तमित्यनुवर्तते। ऋतुशब्दात् तदिति प्रथमासमर्थाद् अस्येति षष्ठ्यर्थेऽण् प्रत्ययो भवति तदस्य प्राप्तमित्येतस्मिन् विषये। ऋतुः प्राप्तोऽस्य आर्तवं पुष्पम्॥ तदस्य प्रकरण उपवस्त्रादिभ्य उपसंख्यानम्॥ उपवस्ता प्राप्तोऽस्य औपवस्त्रम्। प्राशिता प्राप्तोऽस्य प्राशित्रम्॥

---

१ – ' धनुष..........अनभिधानात् ' इति क्वाचित्कः पाठः।

## छन्दसि घस् ॥ १०६ ॥

ऋतुशब्दाच् छन्दसि विषये घस् प्रत्ययो भवति तदस्य प्राप्तमित्यस्मिन् विषये। अणोऽपवादः। अयं ते योनिर्ऋत्वियः ( ऋ० ३.२९.१० )॥

## कालाद् यत् ॥ १०७ ॥

कालशब्दाद् यत् प्रत्ययो भवति तदस्य प्राप्तमित्यस्मिन् विषये। कालः प्राप्तोऽस्य काल्यस्तापः। काल्यं शीतम्॥

## प्रकृष्टे ठञ् ॥ १०८ ॥

कालादित्येव, तदस्येति च। प्राप्तमिति निवृत्तम्। प्रकर्षेण कालो विशेष्यते। प्रकर्षे वर्तमानात् कालात् प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति। प्रकृष्टो दीर्घः कालोऽस्य कालिकमृणम्। कालिकं वैरम्। ठञ्ग्रहणं विस्पष्टार्थम्॥

## प्रयोजनम् ॥ १०९ ॥

तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं प्रयोजनं चेत् तद् भवति। इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्। गाङ्गामहिकम्॥

## विशाखाषाढादण् मन्थदण्डयोः ॥ ११० ॥

विशाखाषाढाशब्दाभ्यामण् प्रत्ययो भवति तदस्य प्रयोजनमित्येतस्मिन् विषये यथा-संख्यं मन्थदण्डयोरभिधेययोः। विशाखा प्रयोजनमस्य वैशाखो मन्थः। आषाढो दण्डः ॥ चूडादिभ्य उपसंख्यानम्॥ चूडा प्रयोजनमस्य चौडम्। श्रद्धा प्रयोजनमस्य श्राद्धम्॥

## अनुप्रवचनादिभ्यश्छः ॥ १११ ॥

अनुप्रवचनादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति तदस्य प्रयोजनमित्यस्मिन् विषये। ठञोऽपवादः। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम्। उत्त्थापनीयम् ॥ विशिपूरिपतिरुहिप्रकृतेरनात् सपूर्वपदादुपसंख्यानम् ॥ गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम्। प्रपापूरणीयम्। अश्वप्रपतनीयम्। प्रासादारोहणीयम्॥ स्वर्गादिभ्यो यद् वक्तव्यः॥ स्वर्गः प्रयोजनमस्य स्वर्ग्यम्। यशस्यम्। आयुष्यम्। काम्यम्। धन्यम्॥ पुण्याहवाचनादिभ्यो लुग् वक्तव्यः॥ पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम्। स्वस्ति-वाचनम्। शान्तिवाचनम्॥ अनुप्रवचन। उत्त्थापन। प्रवेशन। अनुप्रवेशन। उपस्थापन।

संवेशन। अनुवेशन। अनुवचन। अनुवादन। अनुवासन। आरम्भण। आरोहण। प्ररोहण। अन्वारोहण। अनुप्रवचनादिः॥

## समापनात् सपूर्वपदात् ॥ ११२ ॥

समापनशब्दात् सपूर्वपदाद् विद्यमानपूर्वपदाच्छः प्रत्ययो भवति तदस्य प्रयोजनमित्येतस्मिन् विषये। ठञोऽपवादः। छन्दस्समापनं प्रयोजनमस्य छन्दःसमापनीयम्। व्याकरणसमापनीयम्। पदग्रहणं बहुच्पूर्वनिरासार्थम्॥

## ऐकागारिकट् चौरे ॥ ११३ ॥

ऐकागारिकड् इति निपात्यते चौरेऽभिधेये। एकागारं प्रयोजनमस्य ऐकागारिकः चौरः। ऐकागारिकी। किमर्थमिदं निपात्यते, यावता प्रयोजनमित्येव सिद्धष्ठञ् ? चौरे नियमार्थं वचनम्। इह मा भूत्—एकागारं प्रयोजनमस्य भिक्षोरिति। टकारः कार्यावधारणार्थः। ङीबेव भवति, न ञित्स्वर इति। अपरे पुनरिकट् प्रत्ययं वृद्धिं च निपातयन्ति॥

## आकालिकडाद्यन्तवचने ॥ ११४ ॥

आकालिकड् इति निपात्यत आद्यन्तवचने। समानकालशब्दस्य आकालशब्द आदेशः। आद्यन्तयोश्चैतद् विशेषणम्। इकट् प्रत्ययश्च निपात्यते। समानकालावाद्यन्तावस्य आकालिकः स्तनयित्नुः। आकालिकी विद्युत्। जन्मना तुल्यकालविनाशा। उत्पादानन्तरं विनाशिनीत्यर्थः[1]॥ आकालाट् ठंश्च॥ चात् ठञ् च। आकालिका विद्युत्। ठञः पूर्णोऽवधिः॥

## तेन तुल्यं क्रिया चेद् वतिः ॥ ११५ ॥

तेनेति तृतीयासमर्थात् तुल्यमित्येतस्मिन्नर्थे वतिः प्रत्ययो भवति, यत् तुल्यं क्रिया चेत् सा भवति। ब्राह्मणेन तुल्यं वर्तते ब्राह्मणवत्। राजवत्। क्रियाग्रहणं किम् ? गुणद्रव्यतुल्ये[2] मा भूत्। पुत्रेण तुल्यः स्थूलः। पुत्रेण तुल्यः पिङ्गलः[3]। पुत्रेण तुल्यो गोमान्॥

## तत्र तस्येव ॥ ११६ ॥

तत्रेति सप्तमीसमर्थात् तस्येति षष्ठीसमर्थात् च इवार्थे वतिः प्रत्ययो भवति। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। पाटलिपुत्रवत् साकेते परिखा। षष्ठीसमर्थात्—देवदत्तस्येव

---

१ – 'उत्पन्नानन्तरं विनाशीत्यर्थः' इति बाल०। २ – 'द्रव्य' इति नास्ति है०, पद०।
३ – इदमुदाहरणं नास्ति है०।

देवदत्तवत् यज्ञदत्तस्य गावः। यज्ञदत्तस्येव यज्ञदत्तवत् देवदत्तस्य दन्ताः॥

## तदर्हम् ॥ ११७ ॥

तदिति द्वितीयासमर्थादर्हमित्येतस्मिन्नर्थे वतिः प्रत्ययो भवति। राजानमर्हति राजवत् पालनम्। ब्राह्मणवत्। ऋषिवत्। क्षत्रियवत्॥

## उपसर्गाच्छन्दसि धात्वर्थे ॥ ११८ ॥

उपसर्गात् ससाधने धात्वर्थे वर्तमानात् स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये। यदुद्वतो निवतो यासि बप्सद् ( ऋ० १०.१४२.४ )। उद्गतानि निगतानि च ॥

## तस्य भावस्त्वतलौ ॥ ११९ ॥

तस्येति षष्ठीसमर्थाद् भाव इत्येतस्मिन्नर्थे त्वतलौ प्रत्ययौ भवतः। भवतोऽस्मादभिधानप्रत्ययाविति भावः। शब्दस्य प्रवृत्तिनिमित्तं भावशब्देनोच्यते। अश्वस्य भावः अश्वत्वम्। अश्वता। गोत्वम्। गोता॥

## आ च त्वात् ॥ १२० ॥

'ब्रह्मणस्त्वः' ( ५.१.१३६ ) इति वक्ष्यति। आ एतस्मात् त्वसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, तत्र त्वतलौ प्रत्ययावधिकृतौ वेदितव्यौ। वक्ष्यति—'पृथ्वादिभ्य इमनिज् वा' ( ५.१.१२२ ) इति। प्रथिमा। पार्थवम्। पृथुत्वम्। पृथुता। म्रदिमा। मार्दवम्। मृदुत्वम्। मृदुता। अपवादैः सह समावेशार्थं वचनम्। कर्मणि च विधानार्थं 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' ( ५.१.१२४ ) इति। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रिया भावः स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पुंसो भावः पुंस्त्वम्। पुंस्ता। पौंस्नम्॥

## न नञ्पूर्वात् तत्पुरुषादचतुरसंगतलवणवटबुधकतरसलसेभ्यः॥ १२१ ॥

इत उत्तरे ये भावप्रत्ययाः ते नञ्पूर्वात् तत्पुरुषाद् न भवन्ति चतुरादीन् वर्जयित्वा। वक्ष्यति—'पत्यन्तपुरोहितादिभ्यो यक्' ( ५.१.१२८ ) इति। अपतित्वम्। अपतिता। अपटुत्वम्। अपटुता। अरमणीयत्वम्। अरमणीयता। नञ्पूर्वादिति किम्? बार्हस्पत्यम्। प्राजापत्यम्। तत्पुरुषादिति किम्? नास्य पटवः सन्तीत्यपटुः, तस्य भाव आपटवम्। आलघवम्। अचतुरादिभ्य इति किम्? आचतुर्यम्। आसंगत्यम्। आलवण्यम्। आवट्यम्। आबुध्यम्। आकत्यम्। आरस्यम्। आलस्यम्॥

## पृथ्वादिभ्य इमनिज् वा ॥ १२२ ॥

पृथु इत्येवमादिभ्यः प्रातिपदिकेभ्य इमनिच् प्रत्ययो भवति वा तस्य भाव इत्येतस्मिन्नर्थे। वावचनमणादेः समावेशार्थम्। पृथोर्भावः प्रथिमा, पार्थवम्। म्रदिमा, मार्दवम्। 'तुरिष्ठेमेयस्सु' (६.४.१५४), 'टेः' (६.४.१५५) इति टिलोपः। 'र ऋतो हलादेर्लघोः' (६.४.१६१) इति रेफादेशः। त्वतलौ सर्वत्र भवत एव। पृथुत्वम्, पृथुता। मृदुत्वम्, मृदुता॥ पृथु। मृदु। महत्। पटु। तनु। लघु। बहु। साधु। वेणु। आशु। बहुल। गुरु। दण्ड। ऊरु। खण्ड। चण्ड। बाल। अकिंचन। होड। पाक। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। प्रिय। वृष। ऋजु। क्षिप्र[1]। क्षुद्र। पृथ्वादिः॥

## वर्णदृढादिभ्यः ष्यञ् च ॥ १२३ ॥

वर्णविशेषवाचिभ्यः प्रातिपदिकेभ्यो दृढादिभ्यश्च ष्यञ् प्रत्ययो भवति, चकारादिमनिच् च, तस्य भाव इत्येतस्मिन् विषये। शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता। कार्ष्ण्यम्, कृष्णिमा, कृष्णत्वम्, कृष्णता। दृढादिभ्यः—दार्ढ्यम्, द्रढिमा, दृढत्वम्, दृढता। षकारो ङीषर्थः। औचिती। याथाकामी॥ दृढ। परिवृढ। भृश। कृश। चक्र। आम्र। लवण। ताम्र। अम्ल। शीत। उष्ण। जड। बधिर। पण्डित। मधुर। मूर्ख। मूक। वेर्यातलाभमतिमनःशारदानाम् (ग० सू० ११४)। समो मतिमनसोः[2] (ग० सू० ११५)। दृढादिः॥

## गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ १२४ ॥

गुणमुक्तवन्तो गुणवचनाः। गुणवचनेभ्यो ब्राह्मणादिभ्यश्च तस्येति षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ् प्रत्ययो भवति, चकाराद् भावे च। कर्मशब्दः क्रियावचनः। जडस्य भावः कर्म वा जाड्यम्। ब्राह्मणादिभ्यः खल्वपि—ब्राह्मण्यम्। माणव्यम्। आ पादपरिसमाप्तेर्भावकर्माधिकारः। ब्राह्मणादिराकृतिगणः। आदिशब्दः प्रकारवचनः॥ चातुर्वर्ण्यादीनां स्वार्थ उपसंख्यानम्॥ चत्वार एव वर्णाश्चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैलोक्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। सौख्यम्॥ ब्राह्मण। वाडव। माणव। चोर। मूक। आराधय। विराधय। अपराधय। उपराधय। एकभाव। द्विभाव। त्रिभाव। अन्यभाव। समस्थ। विषमस्थ। परमस्थ। मध्यमस्थ। अनीश्वर। कुशल। कपि। चपल। अक्षेत्रज्ञ। निपुण। अर्हतो नुम् च (ग० सू० ११६)। आर्हन्त्यम्। संवादिन्। संवेशिन्। बहुभाषिन्। बालिश। दुष्पुरुष। कापुरुष। दायाद।

---

१ - 'क्षुप्र' इत्यधिकं है०। २ - 'जवने' इत्यधिकं बाल०।

विशसि। धूर्त। राजन्। संभाषिन्। शीर्षपातिन्। अधिपति। अलस। पिशाच। पिशुन। विशाल। गणपति। धनपति। नरपति। गडुल। निव। निधान। विष। सर्ववेदादिभ्यः स्वार्थे (ग० सू० ११७)। चतुर्वेदस्योभयपदवृद्धिश्च (ग० सू० ११८)। चातुर्वैद्यम्। ब्राह्मणादिः॥

## स्तेनाद् यन् नलोपश्च ॥ १२५ ॥

स्तेनशब्दात् षष्ठीसमर्थात् भावकर्मणोर्यत् प्रत्ययो भवति, नशब्दस्य लोपश्च भवति। स्तेनस्य भावः कर्म वा स्तेयम्। स्तेनादिति केचिद् योगविभागं कुर्वन्ति। स्तेनात् ष्यञ् भवति। स्तैन्यम्। ततो यन्नलोपश्च। स्तेयम्॥

## सख्युर्यः ॥ १२६ ॥

सखिशब्दाद् यः प्रत्ययो भवति भावकर्मणोरर्थयोः। सख्युर्भावः कर्म वा सख्यम् ॥ दूतवणिग्भ्यां चेति वक्तव्यम्॥ दूत्यम्। वणिज्यम्। कथं वाणिज्यम्? ब्राह्मणादित्वात्॥

## कपिज्ञात्योर्ढक् ॥ १२७ ॥

कपिज्ञातिशब्दाभ्यां ढक् प्रत्ययो भवति भावकर्मणोरर्थयोः। कपेर्भावः कर्म वा कापेयम्। ज्ञातेयम्। यथासंख्यमर्थयोः सर्वत्रैवात्र प्रकरणे नेष्यते॥

## पत्यन्तपुरोहितादिभ्यो यक् ॥ १२८ ॥

पत्यन्तात् प्रातिपदिकात् पुरोहितादिभ्यश्च यक् प्रत्ययो भवति भावकर्मणोरर्थयोः। सेनापतेर्भावः कर्म वा सैनापत्यम्। गार्हपत्यम्। प्राजापत्यम्। पौरोहित्यम्। राज्यम्॥ पुरोहित। राजन्। संग्रामिक। एषिक। वर्मित। खण्डिक। दण्डिक। छत्रिक। मिलिक। पिण्डिक। बाल। मन्द। स्तनिक। चूडितिक। कृषिक। पूतिक। पत्रिक। प्रतिक। अजानिक। सलनिक। सूचिक। शाक्वर। सूचक। पक्षिक। सारथिक। जलिक। सूतिक। अञ्जलिक। राजासे (ग० सू० ११९)। पुरोहितादिः॥

## प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ १२९ ॥

प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्च अञ् प्रत्ययो भवति भावकर्मणोरर्थयोः। अश्वस्य भावः कर्म वा आश्वम्। औष्ट्रम्। वयोवचनेभ्यः—कौमारम्। कैशोरम्। उद्गात्रादिभ्यः—औद्गात्रम्। औन्नेत्रम्॥ उद्गातृ। उन्नेतृ। प्रतिहर्तृ। रथगणक। पक्षिगणक। सुष्ठु। दुष्ठु। अध्वर्यु। वधू। सुभग मन्त्रे (ग० सू० १२०)। उद्गात्रादिः॥

## हायनान्तयुवादिभ्योऽण् ॥ १३० ॥

हायनान्तेभ्यः प्रातिपदिकेभ्यो युवादिभ्यश्चाण् प्रत्ययो भवति भावकर्मणोरर्थयोः। द्विहायनस्य भावः कर्म वा द्वैहायनम्। त्रैहायनम्। युवादिभ्यः—यौवनम्। स्थाविरम् ॥ श्रोत्रियस्य यलोपश्च वाच्यः ॥ श्रोत्रियस्य भावः कर्म वा श्रौत्रम् ॥ युवन्। स्थविर। होतृ। यजमान। कमण्डलु। पुरुषासे (ग० सू० १२१)। सुहृत्। यातृ। श्रवण। कुस्त्री। सुस्त्री। सुहृदय। सुभ्रातृ। वृषल। दुर्भ्रातृ। हृदयासे (ग० सू० १२२)। क्षेत्रज्ञ। कृतक। परिव्राजक। कुशल। चपल। निपुण। पिशुन। सब्रह्मचारिन्। कुतूहल। अनृशंस। युवादिः ॥

## इगन्ताच्च लघुपूर्वात् ॥ १३१ ॥

इगन्ताच्च लघुपूर्वादण् प्रत्ययो भवति भावकर्मणोः। लघुपूर्वग्रहणेन प्रातिपदिक-समुदायो विशेष्यते। लघुः पूर्वोऽवयवोऽस्येति लघुपूर्वः। कुतः पुनरसौ लघुः पूर्वः ? इक्संनिधानादिक इति विज्ञायते। लघुः पूर्वो[1] यस्मादिकः तदन्तात् प्रातिपदिकादित्ययमर्थो विवक्षितः। अपरे तत्पुरुषकर्मधारयं वर्णयन्ति। इक् चासावन्तश्चेतीगन्तः। लघुपूर्व-ग्रहणेन स एव विशेष्यते। पश्चात् तेन प्रातिपदिकस्य तदन्तविधिरिति। अस्मिन् व्याख्यानेऽन्तग्रहणमतिरिच्यते। लघुपूर्वादिक इत्येतावदेव वाच्यं स्यात्। शुचेर्भावः कर्म वा शौचम्। मौनम्। नागरम्। हारीतकम्। पाटवम्। लाघवम्। इगन्तादिति किम् ? पटत्वम्। घटत्वम्। लघुपूर्वादिति किम् ? कण्डूत्वम्। पाण्डुत्वम्। कथं काव्यमिति ? ब्राह्मणादिषु कविशब्दो द्रष्टव्यः ॥

## योपधाद् गुरूपोत्तमाद् वुञ् ॥ १३२ ॥

त्रिप्रभृतीनामन्तस्य समीपमुपोत्तमम्। गुरुरुपोत्तमं यस्य तद् गुरूपोत्तमम्। यकारो-पधाद् गुरूपोत्तमाद् वुञ् प्रत्ययो भवति भावकर्मणोः। रमणीयस्य भावः कर्म वा रामणीयकम्। वासनीयकम्। योपधादिति किम् ? विमानत्वम्। गुरूपोत्तमाद्रिति किम् ? क्षत्रियत्वम् ॥ सहायाद् वेति वक्तव्यम् ॥ साहायकम्, साहाय्यम् ॥

## द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३३ ॥

द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च वुञ् प्रत्ययो भवति भावकर्मणोः। गोपालपशु-पालानां भावः कर्म वा गौपालपशुपालिका। शैष्योपाध्यायिका। कौत्सकुशिकिका।

---

१ – 'लघुपूर्वः' इति बाल०।

मनोज्ञादिभ्यः—मानोज्ञकम्। काल्याणकम्॥ मनोज्ञ। कल्याण। प्रियरूप। छान्दस। छात्र। मेधाविन्। अभिरूप। आढ्य। कुलपुत्र। श्रोत्रिय। चोर। धूर्त। वैश्वदेव। युवन्। ग्रामपुत्र। ग्रामखण्ड। ग्रामकुमार। अमुष्यपुत्र। अमुष्यकुल। शतपुत्र[1]। कुशल। मनोज्ञादिः॥

## गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३४ ॥

गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति, प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु। तत्र श्लाघा विकत्थनम्। अत्याकारः पराधिक्षेपः। तदवेतस्तत्प्राप्तस्तज्ज्ञो वा। तदिति गोत्रचरणयोर्भावकर्मणी निर्दिश्येते। तत्प्राप्तस्तदवगतवान् तदवेत इत्युच्यते। श्लाघायां तावत्—गार्गिकया श्लाघते। काठिकया श्लाघते। गार्ग्यत्वेन कठत्वेन च विकत्थत इत्यर्थः। अत्याकारे—गार्गिकयात्याकुरुते। काठिकयात्याकुरुते। गार्ग्यत्वेन कठत्वेन च परानधिक्षिपतीत्यर्थः। तदवेतः—गार्गिकामवेतः। काठिकामवेतः। गार्ग्यत्वं कठत्वं च प्राप्त इत्यर्थः। तद् वावगतवानित्यर्थः। श्लाघादिष्विति किम्? गार्ग्यत्वम्। कठत्वम्॥

## होत्राभ्यश्छः ॥ १३५ ॥

होत्राशब्द ऋत्विग्विशेषवचनः। ऋत्विग्विशेषवाचिभ्यश्छः प्रत्ययो भवति भावकर्मणोः। अच्छावाकस्य भावः कर्म वा अच्छावाकीयम्। मित्रावरुणीयम्। ब्राह्मणाच्छंसीयम्। आग्नीध्रीयम्। प्रतिप्रस्थात्रीयम्। त्वष्ट्रीयम्। पोत्रीयम्। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## ब्रह्मणस्त्वः ॥ १३६ ॥

होत्राभ्य इत्यनुवर्तते। ब्रह्मन्शब्दाद् होत्रावाचिनस्त्वः प्रत्ययो भवति भावकर्मणोः। छस्यापवादः। ब्रह्मणो भावः कर्म वा ब्रह्मत्वम्। नेति वक्तव्ये त्ववचनं तलो बाधनार्थम्। यस्तु जातिशब्दो ब्राह्मणपर्यायो ब्रह्मन्शब्दः, ततस्त्वतलौ भवत एव। ब्रह्मत्वम्। ब्रह्मता। भवनावधिकयोर्नञ्स्नञोरधिकारः समाप्तः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य प्रथमः पादः॥

— o —

१ – 'शतपत्र' इति है०।

# ॥ पञ्चमाध्यायस्य द्वितीयः पादः ॥

## धान्यानां भवने क्षेत्रे खञ् ॥ १ ॥

निर्देशादेव समर्थविभक्तिः। धान्यविशेषवाचिभ्यः षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ् प्रत्ययो भवति, तच्चेद् भवनं क्षेत्रं भवति। भवनमिति भवन्ति जायन्तेऽस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्। कौद्रवीणम्। कौलत्थीनम्। धान्यानामिति किम्? तृणानां भवनं क्षेत्रमित्यत्र न भवति। क्षेत्रमिति किम्? मुद्गानां भवनं कुसूलम्। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## व्रीहिशाल्योर्ढक् ॥ २ ॥

व्रीहिशालिशब्दाभ्यां ढक् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। व्रीहीणां भवनं क्षेत्रं व्रैहेयम्। शालेयम्॥

## यवयवकषष्टिकाद् यत् ॥ ३ ॥

यवादिभ्यः शब्देभ्यो यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। यवानां भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम्॥

## विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥

तिल माष उमा भङ्गा अणु इत्येतेभ्यो विभाषा यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञि प्राप्ते वचनम्, पक्षे सोऽपि भवति। उमाभङ्गयोरपि धान्यत्वमाश्रितमेव। तिल माष उमा भङ्गा अणु—एषां भवनं क्षेत्रं[1] तिल्यम्, तैलीनम्। माष्यम्, माषीणम्। उम्यम्, औमीनम्। भङ्ग्यम्, भाङ्गीनम्। अणव्यम्, आणवीनम्॥

## सर्वचर्मणः कृतः खखञौ ॥ ५ ॥

सर्वचर्मन्शब्दात् तृतीयासमर्थात् कृत इत्यस्मिन्नर्थे खखञौ प्रत्ययौ भवतः। सर्वशब्दश्चात्र प्रत्ययार्थेन कृतेन संबध्यते, न चर्मणा। तत्रायमसमर्थसमासो द्रष्टव्यः। सर्वश्चर्मणा कृत इत्येतस्मिन् वाक्यार्थे वृत्तिः। सर्वचर्मीणः। सार्वचर्मीणः॥

## यथामुखसंमुखस्य दर्शनः खः ॥ ६ ॥

---

१ – 'तिलानां भवनं क्षेत्रम्' इति है०।

यथामुखशब्दात् संमुखशब्दात् षष्ठीसमर्थाद् दर्शन इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। दृश्यतेऽस्मिन्निति दर्शनः, आदर्शादिः प्रतिबिम्बाश्रय उच्यते। निपातनात् सादृश्येऽव्ययीभावः। यथामुखं दर्शनो यथामुखीनः। सर्वस्य मुखस्य दर्शनः सम्मुखीनः॥

## तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ७ ॥

तदिति द्वितीया समर्थविभक्तिः। व्याप्नोतीति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। सर्वादेः प्रातिपदिकात् पथिन् अङ्ग कर्मन् पत्र पात्र इत्येवमन्ताद् द्वितीयासमर्थाद् व्याप्नोतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणस्तापः। सर्वकर्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीण ओदनः॥

## आप्रपदं प्राप्नोति ॥ ८ ॥

प्रपदमिति पादस्याग्रमुच्यते। आङ् मर्यादायाम्। तयोरव्ययीभावः। आप्रपदशब्दात् तदिति द्वितीयासमर्थात् प्राप्नोतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। आप्रपदं प्राप्नोति आप्रपदीनः पटः। शरीरेणासंबद्धस्यापि पटस्य प्रमाणमाख्यायते॥

## अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥

अनुपदादिभ्यः शब्देभ्यस्तदिति द्वितीयासमर्थेभ्यो यथासंख्यं बद्धा भक्षयति नेय इत्येतेष्वर्थेषु खः प्रत्ययो भवति। अनुरायामे सादृश्ये वा। अनुपदं बद्धा उपानत् अनुपदीना। पदप्रमाणेत्यर्थः। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयः प्रदक्षिणम्, अनयः प्रसव्यम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन् परशारैः पदानामसमावेशः सोऽयानयः। अयानयं नेयः अयानयीनः शारः। फलकशिरसि स्थित इत्यर्थः॥

## परोवरपरंपरपुत्रपौत्रमनुभवति ॥ १० ॥

परोवर परम्पर पुत्रपौत्र इत्येतेभ्यस्तदिति द्वितीयासमर्थेभ्योऽनुभवतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। परोवरेति परस्योत्वं प्रत्ययसंनियोगेन निपात्यते। परांश्चावरांश्चानुभवति परोवरीणः। परपरतराणां च परम्परभावो निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। परम्परशब्दो विनापि प्रत्ययेन दृश्यते— मन्त्रिपरम्परा मन्त्रं भिनत्तीति। तच्छब्दान्तरमेव द्रष्टव्यम्॥

## अवारपारात्यन्तानुकामं गामी ॥ ११ ॥

अवारपार अत्यन्त अनुकाम इत्येतेभ्यो द्वितीयासमर्थेभ्यो गामीत्येतस्मिन्नर्थे खः प्रत्ययो भवति। गमिष्यतीति गामी, 'भविष्यति गम्यादयः' ( ३.३.३ ) इति। 'अकेनोर्भ-

विष्यदाधमर्ण्ययोः' ( २.३.७० ) इति षष्ठीप्रतिषेधः। अवारपारं गामी अवारपारीणः ॥ विगृहीतादपीष्यते[1] ॥ अवारीणः, पारीणः[2] ॥ विपरीताच्च ॥ पारावारीणः। अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः। अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः॥

## समांसमां विजायते ॥ १२ ॥

समांसमामिति वीप्सा। सुबन्तसमुदायः प्रकृतिः। विजायते गर्भं धारयतीति प्रत्ययार्थः। गर्भधारणेन सकलापि समा व्याप्यत इति अत्यन्तसंयोगे द्वितीया ( २.१.२९)। समांसमां विजायते समांसमीना गौः। समांसमीना वडवा ॥ पूर्वपदे सुपोऽलुग् वक्तव्यः ॥ केचित् तु समायांसमायां विजायत इति विगृह्णन्ति, गर्भविमोचने तु[3] विजनिर्वर्तत इत्याहुः। तेषां पूर्वपदे यलोपमात्रं निपात्यते, परिशिष्टस्यालुग् वक्तव्यः॥ अनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यः॥ समांसमां विजायते, समायांसमायां विजायत इति वा॥

## अद्यश्वीनावष्टब्धे ॥ १३ ॥

विजायत इति वर्तते। अद्यश्वीन इति निपात्यत अवष्टब्धे विजने, आसन्ने प्रसवे। आविदूर्ये हि मूर्धन्यो विधीयते, 'अवाच्चालम्बनाविदूर्ययोः' ( ८.३.६८ ) इति। अद्य वा श्वो वा विजायते अद्यश्वीना गौः। अद्यश्वीना वडवा। केचित् तु विजायत इति नानुवर्तयन्ति, अवष्टब्धमात्रे निपातनमित्याहुः। अद्यश्वीनं मरणम्। अद्यश्वीनो वियोग इति ॥

## आगवीनः ॥ १४ ॥

आगवीन इति निपात्यते। गोराङ्पूर्वाद् आ तस्य गोः प्रतिदानात्[4] कर्मकारिणि खः प्रत्ययो निपात्यते। आगवीनः कर्मकरः। यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणात् ॥

## अनुग्वलंगामी ॥ १५ ॥

गोः पश्चाद् अनुगु। अनुगुशब्दादलंगामीत्यस्मिन्नर्थे खः प्रत्ययो भवति। अनुगु पर्याप्तं गच्छति अनुगवीनो गोपालकः ॥

## अध्वनो यत्खौ ॥ १६ ॥

---

१ - 'विगृहीतादपि भवति' इति न्यासः। २ - 'पारीणः' इति नास्ति मुद्रितेषु।

३ - 'अपि' इति न्यासः। ४ - 'प्रतिपादनात्' इति बाल० है०।

तदिति द्वितीया समर्थविभक्तिरनुवर्तते। अलंगामीति च प्रत्ययार्थः। अध्वन्-शब्दाद् द्वितीयासमर्थादलंगामीत्येतस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः। अध्वानमलंगामी अध्वन्यः, अध्वनीनः। 'ये चाभावकर्मणोः' ( ६.४.१६८ ), 'आत्माध्वानौ खे' ( ६.४.१६९ ) इति प्रकृतिभावः॥

## अभ्यमित्राच्छ च ॥ १७ ॥

अभ्यमित्रशब्दाद् द्वितीयासमर्थादलंगामीत्यस्मिन्नर्थे छः प्रत्ययो भवति, चकाराद् यत्खौ च। अभ्यमित्रमलंगामी अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः। अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः॥

## गोष्ठात् खञ् भूतपूर्वे ॥ १८ ॥

गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्। गोष्ठशब्देन सन्निहितगोसमूहो देश उच्यते। भूतपूर्वग्रहणं तस्यैव विशेषणम्। गोष्ठशब्दाद् भूतपूर्वोपाधिकात् स्वार्थे खञ् प्रत्ययो भवति। गोष्ठो भूतपूर्वो गौष्ठीनो देशः। भूतपूर्वग्रहणं किम् ? गोष्ठो वर्तते॥

## अश्वस्यैकाहगमः ॥ १९ ॥

निर्देशादेव समर्थविभक्तिः। अश्वशब्दात् षष्ठीसमर्थादेकाहगम इत्येतस्मिन्नर्थे खञ् प्रत्ययो भवति। एकाहेन गम्यत इत्येकाहगमः। अश्वस्यैकाहगमोऽध्वा आश्वीनः। आश्वीनानि ( तां० ब्रा० २१.१.९ ) शतं पतित्वा॥

## शालीनकौपीने अधृष्टाकार्ययोः ॥ २० ॥

शालीनकौपीनशब्दौ निपात्येते यथासंख्यमधृष्टेऽकार्ये चाभिधेये। अधृष्टोऽप्रगल्भः। अकार्यमकरणार्हं विरुद्धम्। शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ यथाकथंचिद् व्युत्पादयितव्यौ। शालाप्रवेशनमर्हति कूपावतारमर्हति इति खञ् प्रत्यय उत्तरपदलोपश्च निपात्यते। शालीनो जडः। कौपीनं पापम्॥

## व्रातेन जीवति ॥ २१ ॥

निर्देशादेव तृतीया समर्थविभक्तिः। व्रातशब्दात् तृतीयासमर्थाद् जीवतीत्यस्मिन्नर्थे खञ् प्रत्ययो भवति। नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः। उत्सेधः शरीरम्, तदायास्य[1] ये जीवन्ति, त उत्सेधजीविनः, तेषां कर्म व्रातम्। तेन व्रातेन जीवति व्रातीनः। तेषामेव व्रातानामन्यतम उच्यते। यस्त्वन्यस्तदीयेन जीवति, तत्र नेष्यते॥

१ – 'तदायासेन' इति बाल०।

## साप्तपदीनं सख्यम् ॥ २२ ॥

साप्तपदीनमिति निपात्यते सख्येऽभिधेये। सप्तभिः पदैरवाप्यते साप्तपदीनम्। सख्यं जनाः साप्तपदीनमाहुः। कथं साप्तपदीनः सखा, साप्तपदीनं मित्रमिति ? यदा गुणप्रधानः साप्तपदीनशब्दः सखिभावे तत्कर्मणि च वर्तते, तदा सख्यशब्देन सामानाधिकरण्यं भवति, यदा तु लक्षणया वर्तते, तदा पुरुषेण सामानाधिकरण्यं भवति॥

## हैयङ्गवीनं संज्ञायाम् ॥ २३ ॥

हैयङ्गवीनं निपात्यते संज्ञायां विषये। ह्योगोदोहस्य हियङ्ग्वादेशः, तस्य विकारे खञ् प्रत्ययो भवति संज्ञायाम्। ह्योगोदोहस्य विकारो हैयङ्गवीनम्। घृतस्य संज्ञा। तेनेह न भवति—ह्योगोदोहस्य विकार उदश्वित्॥

## तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ २४ ॥

तस्येति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासंख्यं पाकमूलयोरर्थयोः कुणब् जाहच् इत्येतौ प्रत्ययौ भवतः। पीलूनां पाकः पीलुकुणः। कर्कन्धुकुणः। कर्णादिभ्यः—कर्णस्य मूलं कर्णजाहम्॥ पीलु। कर्कन्धु। शमी। करीर। कुवल। बदर। अश्वत्थ। खदिर। पील्वादिः॥ कर्ण। अक्षि। नख। मुख। मख। केश। पाद। गुल्फ। भ्रूभङ्ग। दन्त। ओष्ठ। पृष्ठ। अङ्गुष्ठ। कर्णादिः॥

## पक्षात् तिः ॥ २५ ॥

तस्येत्येव। तस्येति षष्ठीसमर्थात् पक्षशब्दाद् मूलेऽभिधेये तिः प्रत्ययो भवति। मूलग्रहणमनुवर्तते, न पाकग्रहणम्, 'एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते' ( परि० १८) इति। पक्षस्य मूलं पक्षतिः प्रतिपत्॥

## तेन वित्तश्चुञ्चुप्चणपौ ॥ २६ ॥

तेनेति तृतीयासमर्थाद् वित्त इत्येतस्मिन्नर्थे चुञ्चुप् चणप् इत्येतौ प्रत्ययौ भवतः। वित्तः प्रतीतो ज्ञात इत्यर्थः। विद्यया वित्तो विद्याचुञ्चुः। विद्याचणः[१]॥

## विनञ्भ्यां नानाञौ न सह ॥ २७ ॥

---

१ – 'केशचणः' इति बाल०।

वि नञ् इत्येताभ्यां यथासंख्यं ना नाञ् इत्येतौ प्रत्ययौ भवतः। न सहेति प्रकृतिविशेषणम्। असहार्थे पृथग्भावे वर्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ प्रत्ययौ भवतः। विना। नाना॥

## वेः शालच्छङ्कटचौ ॥ २८ ॥

विशब्दात् शालच् शङ्कटज् इत्येतौ प्रत्ययौ भवतः। ससाधनक्रियावचनादुपसर्गात् स्वार्थे प्रत्ययौ भवतः। विगते शृङ्गे विशाले। विशङ्कटे। तद्योगाद् गौरपि विशालो विशङ्कट इत्युच्यते। परमार्थतस्तु गुणशब्दा एते यथाकथंचिद् व्युत्पाद्यन्ते। नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः॥

## संप्रोदश्च कटच् ॥ २९ ॥

सम् प्र उद् इत्येतेभ्यः कटच् प्रत्ययो भवति। चकाराद् वेश्च। संकटम्। प्रकटम्। उत्कटम्। विकटम् ॥ कटच्प्रकरणेऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् ॥ अलाबूनां रजोऽलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम् ॥ गोष्ठादयः स्थानादिषु पशुनामादिभ्य उपसंख्यानम् ॥ गवां स्थानं गोगोष्ठम्। महिषीगोष्ठम् ॥ संघाते कटज् वक्तव्यः॥ अवीनां संघातोऽविकटम् ॥ विस्तारे पटज् वक्तव्यः॥ अविपटम् ॥ द्वित्वे गोयुगच् ॥ उष्ट्रगोयुगम्। अश्वगोयुगम् ॥ प्रकृत्यर्थस्य षट्त्वे षड्गवच् ॥ हस्तिषड्गवम्। अश्वषड्गवम् ॥ विकारे स्नेहे तैलच् ॥ एरण्डतैलम्। इङ्गुदतैलम्। तिलतैलम् ॥ भवने क्षेत्र इक्ष्वादिभ्यः शाकटशाकिनौ ॥ इक्षुशाकटम्। इक्षुशाकिनम्। मूलशाकटम्[1]। मूलशाकिनम्[1]॥

## अवात् कुटारच्च ॥ ३० ॥

अवशब्दात् कुटारच् प्रत्ययो भवति, चकारात् कटच्। अवकुटारम्। अवकटम्॥

## नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥ ३१ ॥

अवादित्येव। नमनं नतम्। नासिकायाः संबन्धिनि नतेऽभिधेये टीटच् नाटच् भ्रटच् इत्येते प्रत्यया भवन्ति संज्ञायां विषये। नासिकाया नतम् अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगाद् नासिकापि, पुरुषोऽपि तथोच्यते, अवटीटः। अवनाटः। अवभ्रट इति॥

---

१ – 'मूलकशा०' इति बाल०।

## नेर्बिडज्बिरीसचौ ॥ ३२ ॥

नते नासिकाया इत्यनुवर्तते, संज्ञायामिति च। निशब्दाद् नासिकाया नतेऽभिधेये बिडज् बिरीसच् इत्येतौ प्रत्ययौ भवतः। निबिडम्। निबिरीसम्। तद्योगाद् नासिकापि, पुरुषोऽपि निबिडः, निबिरीसः। कथं निबिडाः केशाः, निबिडं वस्त्रम्? उपमानाद् भविष्यति॥

## इनच्पिटच्चिकचि च ॥ ३३ ॥

नेरित्येव, नते नासिकाया इति च। निशब्दाद् नासिकाया नतेऽभिधेय इनच् पिटच् इत्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च निशब्दस्य यथासंख्यं चिक चि इत्येतावादेशौ भवतः। चिकिनः। चिपिटः ॥ ककारः प्रत्ययो वक्तव्यश्चिक् च प्रकृत्यादेशः॥ चिक्कः। तथा चोक्तम्—'इनच्पिटच्काश्चिकचिचिकादेशाश्च' (महाभाष्य ५.२.३३) वक्तव्या इति ॥ क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी॥ क्लिन्नस्य चिल् पिल् इत्येतावादेशौ भवतो लश्च प्रत्ययोऽस्य चक्षुषी इत्येतस्मिन्नर्थे। क्लिन्ने अस्य चक्षुषी चिल्लः। पिल्लः ॥ चुलादेशो वक्तव्यः॥ चुल्लः। अस्येत्यनेन नार्थः। चक्षुषोरेवाभिधाने प्रत्यय इष्यते। क्लिन्ने चक्षुषी चिल्ले। पिल्ले। चुल्ले। तद्योगात् तु पुरुषस्तथोच्यते॥

## उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ ३४ ॥

उप अधि इत्येताभ्यां यथासंख्यमासन्नारूढयोर्वर्तमानाभ्यां स्वार्थे त्यकन् प्रत्ययो भवति। संज्ञाधिकारात् च नियतविषयमासन्नारूढं गम्यते। पर्वतस्यासन्नमुपत्यका। तस्यैवारूढम् अधित्यका। 'प्रत्ययस्थात् कात् पूर्वस्या०' (७.३.४४) इतीत्वमत्र न भवति, संज्ञाधिकारादेव॥

## कर्मणि घटोऽठच् ॥ ३५ ॥

निर्देशादेव समर्थविभक्तिः। कर्मशब्दात् सप्तमीसमर्थाद् घट इत्येतस्मिन्नर्थेऽठच् प्रत्ययो भवति। घटत इति घटः। कर्मणि घटते कर्मठः पुरुषः॥

## तदस्य संजातं तारकादिभ्य इतच् ॥ ३६ ॥

तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्योऽस्येति षष्ठ्यर्थ इतच् प्रत्ययो भवति। संजातग्रहणं प्रकृतिविशेषणम्। तारकाः संजाता अस्य नभसस्तारकितं नभः। पुष्पितो वृक्षः॥ तारका। पुष्प। मुकुल। कण्टक। पिपासा। सुख। दुःख। ऋजीष। कुड्मल। सूचक। रोग। विचार। व्याधि। निष्क्रमण। मूत्र। पुरीष। किसलय। कुसुम। प्रचार।

तन्द्रा[१]। वेग। पुक्षा। श्रद्धा। उत्कण्ठा। भर। द्रोह। गर्भादप्राणिनि ( ग० सू० १२३ )। तारकादिराकृतिगणः॥

## प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ३७ ॥

तदस्येत्यनुवर्तते। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे द्वयसच् दघ्नच् मात्रच् इत्येते प्रत्यया भवन्ति, यत् तत् प्रथमासमर्थं प्रमाणं चेत् तद् भवति। ऊरुः प्रमाणमस्य ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्। जानुद्वयसम्। जानुदघ्नम्। जानुमात्रम्।

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।

ऊरुद्वयसमुदकम्। ऊरुदघ्नमुदकम्। मात्रच् पुनरविशेषेण प्रस्थमात्रमित्यपि भवति ॥ प्रमाणे लो वक्तव्यः॥ प्रमाणशब्दा इति ये प्रसिद्धाः, तेभ्य उत्पन्नस्य प्रत्ययस्य लुग् भवति। शमः प्रमाणमस्य शमः। दिष्टिः। वितस्तिः॥ द्विगोर्नित्यम्॥ द्वौ शमौ प्रमाणमस्य द्विशमः। त्रिशमः। द्विवितस्तिः। नित्यग्रहणं किम् ? संशये श्राविणं वक्ष्यति, तत्रापि द्विगोर्लुगेव यथा स्यात्। द्वे दिष्टी स्यातां वा न वा द्विदिष्टिः॥ डट् स्तोमे वक्तव्यः॥ पञ्चदशः स्तोमः। सप्तदशी[२] रात्रिः। टित्त्वाद् ङीप्॥ शनूशतोर्डिनिर्वक्तव्यः॥ पंञ्चदशिनोऽर्धमासाः त्रिंशिनो मासाः ( तै० सं० ७.५.२०.१ ) ॥ विंशतेश्चेति वक्तव्यम्॥ विंशिनोऽङ्गिरसः ( गो० ब्रा० १.१.८ )॥ प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज् वक्तव्यः॥ शममात्रम्। दिष्टिमात्रम्। प्रस्थमात्रम्। कुडवमात्रम्। पञ्चमात्रम्। दशमात्रा गावः॥ वत्वन्तात् स्वार्थे द्वयसज्मात्रचौ बहुलम्॥ तावदेव तावद्द्वयसम्। तावन्मात्रम्। एतावद्द्वयसम्। एतावन्मात्रम्। यावद्द्वयसम्। यावन्मात्रम्॥

## पुरुषहस्तिभ्यामण् च ॥ ३८ ॥

तदस्येत्येव, प्रमाण इति च। पुरुषहस्तिभ्यां प्रथमासमर्थाभ्यां प्रमाणोपाधिकाभ्यामस्येति षष्ठ्यर्थेऽण् प्रत्ययो भवति, चकाराद् द्वयसजादयश्च[३]। पुरुषः प्रमाणमस्य पौरुषम्। पुरुषद्वयसम्। पुरुषदघ्नम्। पुरुषमात्रम्। हास्तिनम्। हस्तिद्वयसम्। हस्तिदघ्नम्। हस्तिमात्रम्। द्विगोर्नित्यं लुक्। द्विपुरुषमुदकम्। त्रिपुरुषमुदकम्। द्विहस्ति। त्रिहस्ति। द्विपुरुषी। त्रिपुरुषी। द्विहस्तिनी। त्रिहस्तिनी॥

## यत्तदेतेभ्यः परिमाणे वतुप् ॥ ३९ ॥

तदस्येत्येव। यत्तदेतेभ्यः प्रथमासमर्थेभ्यः परिमाणोपाधिकेभ्योऽस्येति षष्ठ्यर्थे

१ – 'बुभुक्षा' इत्यधिकं क्वचित्। २ – 'पञ्चदशी' इति पाठान्तरम्।
३ – 'च' इति नास्ति है०।

वतुप् प्रत्ययो भवति। यत् परिमाणमस्य यावान्। तावान्। एतावान्। प्रमाणग्रहणेऽनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात्।

डावतावर्थवैशेष्यान् निर्देशः पृथगुच्यते।
मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः॥

॥ वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ॥ न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ( ऋ० ७.३२.२३ )। त्वावतः पुरूवसो ( ऋ० ८.४६.१ )। युज्ञं विप्रस्य मावतः ( ऋ० १.१४२.२ )। त्वत्सदृशस्य मत्सदृशस्येत्यर्थः॥

## किमिदम्भ्यां वो घः ॥ ४० ॥

किमिदंभ्यामुत्तरस्य वतुपो वकारस्य घकारादेशो भवति। कियान्। इयान्। एतदेव चादेशविधानं ज्ञापकं किमिदंभ्यां वतुप् प्रत्ययो भवतीति। अथ वा योगविभागेन वतुपं विधाय पश्चाद् वो घो विधीयते॥

## किमः संख्यापरिमाणे डति च ॥ ४१ ॥

संख्यायाः परिमाणं संख्यापरिच्छेद इत्यर्थः। संख्यापरिमाणे वर्तमानात् किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिः प्रत्ययो भवति। चकाराद् वतुप्। तस्य च वकारस्य घादेशो भवति। पृच्छ्यमानत्वात् परिच्छेदोपाधिकायां संख्यायां वर्तमानात् किमः प्रत्ययो विज्ञायते। का संख्या परिमाणमेषां ब्राह्मणानां कति ब्राह्मणाः। कियन्तो ब्राह्मणाः। अथवा संख्यैव परिमाणात्मिका परिच्छेदस्वभावा गृह्यते—का संख्या परिमाणं येषामिति। ननु च संख्या एवमात्मिकैव परिच्छेदस्वभावा, सा किमर्थं परिमाणेन विशेष्यते ? यत्रापरिच्छेदकत्वेन विवक्ष्यते तत्र मा भूदिति। क्षेपे हि परिच्छेदो नास्ति—केयमेषां संख्या दशानामिति॥

## संख्याया अवयवे तयप् ॥ ४२ ॥

तदस्येत्येव। संख्याया अवयवे वर्तमानाया अस्येति षष्ठ्यर्थे तयप् प्रत्ययो भवति। अवयवा अवयविनः[1] संबन्धिन इति सामर्थ्यादवयवी प्रत्ययार्थो विज्ञायते। पञ्च अवयवा अस्य[2] पञ्चतयम्। दशतयम्। चतुष्टयम्। चतुष्टयी॥

## द्वित्रिभ्यां तयस्यायज् वा ॥ ४३ ॥

---

१ - 'अवयवावयविनः' इति है०। २ - 'यस्य' इति है०।

पूर्वेण विहितस्य तयस्य द्वित्रिभ्यां परस्य वायजादेशो भवति। द्वाववयवावस्य द्वयम्, द्वितयम्। त्रयम्, त्रितयम्। तयग्रहणं स्थानिनिर्देशार्थम्। अन्यथा प्रत्ययान्तरमयज् विज्ञायेत। तत्र को दोषः ? त्रयी गतिरिति तयनिबन्धन ईकारो न स्यात्, 'प्रथमचरमतया०' ( १.१.३३ ) इत्येष विधिर्न स्यात्। द्वये। द्वयाः। चकारः स्वरार्थः॥

## उभादुदात्तो नित्यम् ॥ ४४ ॥

उभशब्दात् परस्य तयपो नित्यमयजादेशो भवति, स चोदात्तः। वचनसामर्थ्यादादेरुदात्तत्वं विज्ञायते। उभशब्दो यदि लौकिकी संख्या, ततः पूर्वेणैव विहितस्य तयप आदेशविधानार्थं वचनम्। अथ न संख्या, ततो योगविभागेन तयपं विधाय तस्य नित्यमयजादेशो विधीयते। उभयो मणिः। उभयेऽस्य देवमनुष्याः ( तै० सं० १.६.८.१)॥

## तदस्मिन्नधिकमिति दशान्ताड् डः ॥ ४५ ॥

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे दशान्तात् प्रातिपदिकाद् डः प्रत्ययो भवति, यत् तत् प्रथमासमर्थमधिकं चेत् तद् भवति। इतिकरणस्ततश्चेद् विवक्षा। एकादश अधिका अस्मिन् शत एकादशं शतम्। एकादशं सहस्रम्। द्वादशं शतम्। द्वादशं सहस्रम्। दशान्तादिति किम् ? पञ्चाधिका अस्मिन् शते। अन्तग्रहणं किम् ? दशाधिका अस्मिन् शते। प्रत्ययार्थेन च समानजातीये प्रकृत्यर्थे सति प्रत्यय इष्यते। एकादश कार्षापणा अधिका अस्मिन् कार्षापणशत एकादशं कार्षापणशतमिति। इह तु न भवति—एकादश माषा अधिका अस्मिन् कार्षापणशत इति। शतसहस्रयोश्चेष्यते। इह न भवति—एकादशाधिका अस्यां त्रिंशतीति। इतिकरणो विवक्षार्थ इत्युक्तम्, तत इदं सर्वं लभ्यते। कथमेकादशं शतसहस्रमिति ? शतानां सहस्रं सहस्राणां वा शतमिति शतसहस्रमित्युच्यते। तत्र शतसहस्रयोरित्येव सिद्धम्।

अधिके समानजाताविष्टं शतसहस्रयोः।
यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम॥

## शदन्तविंशतेश्च ॥ ४६ ॥

तदस्मिन्नधिकमित्यनुवर्तते, ड इति च। शदन्तात् प्रातिपदिकाद् विंशतेश्च डः प्रत्ययो भवति तदस्मिन्नधिकमित्येतस्मिन् विषये। त्रिंशदधिका अस्मिञ् छते त्रिंशं शतम्। शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात् स तदादेः ( परि० २३ ) अधिकार्थम्। एकत्रिंशं शतम्। एकचत्वारिंशं शतम्॥ संख्याग्रहणं च कर्तव्यम्॥ इह मा भूद्—गोत्रिंशदधिका अस्मिन् गोशत इति॥ विंशतेश्च॥ विंशं शतम्॥ तदन्तादपीति वक्तव्यम्॥ एकविंशं शतम्। संख्याग्रहणं च कर्तव्यम्। इह मा भूत्—गोविंशतिरधिकास्मिन् गोशत इति॥

## संख्याया गुणस्य निमाने मयट् ॥ ४७ ॥

तदस्येत्यनुवर्तते 'तदस्य संजातम्' ( ५.२.३६ ) इत्यतः। तदिति प्रथमासमर्थात् संख्यावाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे मयट् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं गुणस्य चेद् निमाने वर्तते। गुणो भागः। निमानं मूल्यम्। गुणो येन निमीयते मूल्यभूतेन, सोऽपि सामर्थ्याद् भाग एव विज्ञायते। यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य - द्विमयमुदश्विद् यवानाम्। त्रिमयम्। चतुर्मयम्। भागेऽपि तु विधीयमानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे। तेन सामानाधिकरण्यं भवति द्विमयमुदश्विदिति। गुणस्येति चैकत्वं विवक्षितम्, तेनेह न भवति—द्वौ भागौ यवानां त्रय उदश्वित इति ॥ भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते ॥ इह न भवति—एको भागो निमानमस्येति। भूयस इति च प्रत्ययार्थात् प्रकृत्यर्थस्याधिक्यमात्रं विवक्षितम्, बहुत्वमतन्त्रम्। तेन द्विशब्दादपि भवति। गुणशब्दः समानावयववचनः। तेनेह न भवति—द्वौ भागौ यवानामध्यर्ध उदश्वित इति ॥ निमेये चापि दृश्यते ॥ निमेये वर्तमानायाः संख्याया निमाने प्रत्ययो दृश्यते। उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः। त्रिमया यवा उदश्वितः। चतुर्मयाः। गुणस्येति किम् ? द्वौ व्रीहियवौ निमानमस्योदश्वितः। निमान इति किम् ? द्वौ गुणौ क्षीरस्यैकस्तैलस्य, द्विगुणं पच्यते तैलं क्षीरेणेत्यत्र मा भूत् ॥

## तस्य पूरणे डट् ॥ ४८ ॥

तस्येति षष्ठीसमर्थात् संख्यावाचिनः प्रातिपदिकात् पूरण इत्यस्मिन्नर्थे डट् प्रत्ययो भवति। पूर्यतेऽनेनेति पूरणम्। येन संख्या संख्यानं पूर्यते संपद्यते, स तस्याः पूरणः। एकादशानां पूरण एकादशः। त्रयोदशः। यस्मिन्नुपसंजातेऽन्या संख्या संपद्यते, स प्रत्ययार्थः। इह न भवति—पञ्चानां मुष्टिकानां पूरणो घट इति ॥

## नान्तादसंख्यादेर्मट् ॥ ४९ ॥

डडिति वर्तते। नकारान्तात् संख्यावाचिनः प्रातिपदिकादसंख्यादेः परस्य डटो मडागमो भवति। नान्तादिति पञ्चमी डट आगमसंबन्धे षष्ठीं प्रकल्पयति। पञ्चानां पूरणः पञ्चमः। सप्तमः। नान्तादिति किम् ? विंशतेः पूरणो विंशः। असंख्यादेरिति किम् ? एकादशानां पूरण एकादशः ॥

## थट् च छन्दसि ॥ ५० ॥

नान्तादसंख्यादेः परस्य डटश्छन्दसि विषये थडागमो भवति चकारात् पक्षे मडपि भवति। पर्णमयानि पञ्चथानि भवन्ति ( काठ० सं० ८.२ )। पञ्चथः ( काठ० सं० ९.

३ )। सप्तथः ( काठ० सं० ३७.११ )। मट्—पञ्चमंमिन्द्रियंस्यांपाक्रामत् ( काठ० सं० ९.१२ )॥

## षट्कतिकतिपयचतुरां थुक् ॥ ५१ ॥

डडित्यनुवर्तते, तदिह सप्तम्या विपरिणम्यते। षट् कति कतिपय चतुर् इत्येतेषां डटि परतस्थुगागमो भवति। कतिपयशब्दो न संख्या, तस्यास्मादेव ज्ञापकाद् डट् प्रत्ययो विज्ञायते। षण्णां पूरणः षष्ठः। कतिथः। कतिपयथः। चतुर्थः ॥ चतुरश्छयतावाद्यक्षर-लोपश्च ॥ चतुर्णां पूरणः तुरीयः। तुर्यः॥

## बहुपूगगणसङ्घस्य तिथुक् ॥ ५२ ॥

डडित्येव। बहु पूग गण संघ इत्येतेषां डटि परतस्तिथुगागमो भवति। पूगसंघ-शब्दयोरसंख्यात्वादिदमेव ज्ञापकं डटो भावस्य। बहूनां पूरणो बहुतिथः। पूगतिथः। गणतिथः। संघतिथः॥

## वतोरिथुक् ॥ ५३ ॥

डडित्येव। वतोर्डटि परत इथुगागमो भवति। वत्वन्तस्य संख्यात्वात् पूर्वेण डड् विहितः, तस्मिन्नयमागमो विधीयते। यावतां पूरणो यावतिथः। तावतिथः। एतावतिथः॥

## द्वेस्तीयः ॥ ५४ ॥

द्विशब्दात् तीयः प्रत्ययो भवति तस्य पूरण इत्यस्मिन् विषये। डटोऽपवादः। द्वयोः पूरणो द्वितीयः॥

## त्रेः संप्रसारणं च ॥ ५५ ॥

त्रिशब्दात् तीयः प्रत्ययो भवति तस्य पूरण इत्येतद्विषये। डटोऽपवादः। तत्सन्नियोगेन त्रेः संप्रसारणं च भवति। त्रयाणां पूरणः तृतीयः। 'हलः' ( ६.४.२ ) इति संप्रसारणस्य दीर्घत्वं न भवति। अण इति तत्रानुवर्तते 'ढ्रलोपे०' ( ६.३.१११ ) इत्यतः, पूर्वेण च णकारेणाण्ग्रहणम् ॥

## विंशत्यादिभ्यस्तमडन्यतरस्याम् ॥ ५६ ॥

विंशत्यादिभ्यः परस्य डटस्तमडागमो भवत्यन्यतरस्याम्। पूरणाधिकाराद् डट् प्रत्यय आगमी विज्ञायते। विंशतेः पूरणो विंशतितमः, विंशः। एकविंशतितमः, एकविंशः।

त्रिविंशतितमः, त्रिविंशः। त्रिंशत्तमः, त्रिंशः। एकत्रिंशत्तमः, एकत्रिंशः। विशंत्यादयो लौकिकाः संख्याशब्दा गृह्यन्ते, न पङ्क्त्यादिसूत्रसंनिविष्टाः। तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात्, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् (परि० ३१)। एवं च सति 'षष्ट्यादेश्चासंख्यादेः' (५.२.५८) इति पर्युदासो युज्यत एव॥

## नित्यं शतादिमासार्धमाससंवत्सराच्च ॥ ५७ ॥

शतादयः संख्याशब्दा लौकिका गृह्यन्ते। शतादिभ्यो मासार्धमाससंवत्सरशब्देभ्यश्च परस्य डटो नित्यं तमडागमो भवति। मासादयः संख्याशब्दा न भवन्ति, तेभ्योऽस्मादेव ज्ञापकाद् डट् प्रत्ययो विज्ञायते। शतस्य पूरणः शततमः। सहस्रतमः। लक्षतमः। मासस्य पूरणो मासतमो दिवसः। अर्धमासतमः। संवत्सरतमः। 'षष्ट्यादेश्चासंख्यादेः' (५.२.५८) इति वक्ष्यमाणेन सिद्धे शतादिग्रहणं संख्याद्यर्थम्। एकशततमः। द्विशततमः॥

## षष्ट्यादेश्चासंख्यादेः ॥ ५८ ॥

षष्ट्यादेः संख्याशब्दादसंख्यादेः परस्य डटो नित्यं तमडागमो भवति। 'विंशत्यादिभ्यः०' (५.२.५६) इति विकल्पेन प्राप्ते नित्यार्थम्। षष्टितमः। सप्ततितमः। असंख्यादेरिति किम्? एकषष्टः, एकषष्टितमः। एकसप्ततः, एकसप्ततितमः॥

## मतौ छः सूक्तसाम्नोः ॥ ५९ ॥

मताविति मत्वर्थ उच्यते। प्रातिपदिकाद् मत्वर्थे छः प्रत्ययो भवति सूक्ते सामनि चाभिधेये। मत्वर्थग्रहणेन समर्थविभक्तिः, प्रकृतिविशेषणं प्रत्ययार्थ इति सर्वमाक्षिप्यते। अच्छावाकशब्दोऽस्मिन्निति अच्छावाकीयं सूक्तम्। मित्रावरुणीयम्। यज्ञायज्ञीयं साम। वारवन्तीयम्। अनुकरणशब्दाश्च स्वरूपमात्रप्रधानाः प्रत्ययमुत्पादयन्ति। तेनानेकपदादपि सिद्धम्। अस्यवामीयम्। कयाशुभीयम्[1]॥

## अध्यायानुवाकयोर्लुक् ॥ ६० ॥

मतावित्येव। मत्वर्थ उत्पन्नस्य छस्य लुग् भवत्यध्यायानुवाकयोरभिधेययोः। केन पुनरध्यायानुवाकयोः प्रत्ययः? इदमेव लुग्वचनं ज्ञापकं तद्विधानस्य। विकल्पेन च लुगयमिष्यते। गर्दभाण्डशब्दोऽस्मिन्नस्ति गर्दभाण्डोऽध्यायोऽनुवाको वा, गर्दभाण्डीयः। दीर्घजीवितः, दीर्घजीवितीयः। पलितस्तम्भः, पलितस्तम्भीयः॥

---

१ – 'कयापुभीयम्' इत्यपपाठो मुद्रितेषु।

## विमुक्तादिभ्योऽण् ॥ ६१ ॥

मतावित्येव, अध्यायानुवाकयोरिति च। विमुक्तादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति मत्वर्थेऽध्यायानुवाकयोरभिधेययोः। विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायोऽनुवाको वा। दैवासुरः॥ विमुक्त। देवासुर। वसुमत्। सत्वत्। उपसत्। दशार्हपयस्। हविर्धान। मित्री। सोमापूषन्। अग्नाविष्णु। वृत्रहति। इडा। रक्षोसुर। सदसत्। परिषादक्। वसु। मरुत्वत्। पत्नीवत्। महीयल। दशार्ह। वयस्। पतत्रि। सोम। महित्री। हेतु। विमुक्तादिः॥

## गोषदादिभ्यो वुन् ॥ ६२ ॥

मतावित्येव, अध्यायानुवाकयोरिति च। गोषदादिभ्यः प्रातिपदिकेभ्यो वुन् प्रत्ययो भवति मत्वर्थेऽध्यायानुवाकयोः। गोषदशब्दोऽस्मिन्निति गोषदकोऽध्यायोऽनुवाको वा। इषेत्वकः। मातरिश्वकः॥ गोषद। इषेत्वा। मातरिश्वन्। देवस्यत्वा। देवीरापः। कृष्णोस्याखरेष्टः। दैवींधियम्। रक्षोहण। अञ्जन। प्रभूत। प्रतूर्त। कृशानु। गोषदादिः॥

## तत्र कुशलः पथः ॥ ६३ ॥

वुनित्येव। तत्रेति सप्तमीसमर्थात् पथिन्शब्दात् कुशल इत्यस्मिन्नर्थे वुन् प्रत्ययो भवति। पथि कुशलः पथकः॥

## आकर्षादिभ्यः कन् ॥ ६४ ॥

तत्रेत्येव, कुशल इति च। आकर्षादिभ्यः प्रातिपदिकेभ्यः सप्तमीसमर्थेभ्यः कुशल इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। आकर्षे कुशल आकर्षकः। त्सरुकः॥ आकर्ष। त्सरु। पिपासा। पिचण्ड। अशनि। अश्मन्। विचय। चय। जय। आचय। अय। नय। निपाद। गद्गद। दीप। ह्रद। ह्राद। ह्लाद। शकुनि। आकर्षादिः॥

## धनहिरण्यात् कामे ॥ ६५ ॥

तत्रेत्येव, कनिति च। धनहिरण्यशब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्यां काम इत्यस्मिन्नर्थे कन् प्रत्ययो भवति। काम इच्छा अभिलाषः। धने कामो धनको देवदत्तस्य। हिरण्यको देवदत्तस्य॥

## स्वाङ्गेभ्यः प्रसिते ॥ ६६ ॥

तत्रेत्येव, कनिति च। स्वाङ्गवाचिभ्यः शब्देभ्यस्तत्रेति सप्तमीसमर्थेभ्यः प्रसित

इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। प्रसितः प्रसक्तस्तत्पर इत्यर्थः। केशेषु प्रसितः केशकः। केशादिरचनायां प्रसक्त एवमुच्यते। बहुवचनं स्वाङ्गसमुदायशब्दादपि यथा स्यात्। दन्तौष्ठकः। केशनखकः॥

## उदराट्ठगाद्यूने ॥ ६७ ॥

तत्रेत्येव, प्रसित इति च। उदरशब्दात् सप्तमीसमर्थात् प्रसित इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। आद्यून इति प्रत्ययार्थविशेषणम्। उदरेऽविजिगीषुर्भण्यते। यो बुभुक्षयात्यन्तं पीड्यते, स एवमुच्यते। उदरे प्रसित औदरिक आद्यूनः। आद्यून इति किम्? उदरकः॥

## सस्येन परिजातः ॥ ६८ ॥

कन् प्रत्यय इत्येव स्वर्यते, न ठक्। निर्देशादेव तृतीया समर्थविभक्तिः। सस्यशब्दात् तृतीयासमर्थात् परिजात इत्यस्मिन्नर्थे कन् प्रत्ययो भवति। सस्यशब्दोऽयं गुणवाची। परिः सर्वतो भावे वर्तते। यो गुणैः संबद्धो जायते, यस्य किंचिदपि वैगुण्यं नास्ति, तस्येदमभिधानम्। सस्येन परिजातः सस्यकः शालिः। सस्यकः साधुः। सस्यको मणिः। आकरशुद्ध[1] इत्यर्थः॥

## अंशं हारी ॥ ६९ ॥

अंशशब्दाद् निर्देशादेव द्वितीयासमर्थाद् हारीत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। अंशं हारी अंशको दायादः। अंशकः पुत्रः। हारीत्यावश्यके णिनिः (३.३.१७०)। तत्र षष्ठीप्रतिषेधात् कर्मणि द्वितीयैव भवति॥

## तन्त्रादचिरापहृते ॥ ७० ॥

तन्त्रशब्दाद् निर्देशादेव पञ्चमीसमर्थादचिरापहृत इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। अचिरापहृतः स्तोककालापहृत इत्यर्थः। तन्त्रादचिरापहृतः तन्त्रकः पटः। तन्त्रकः प्रावारः। प्रत्यग्रो नव उच्यते॥

## ब्राह्मणकोष्णिके संज्ञायाम् ॥ ७१ ॥

ब्राह्मणक उष्णिक इत्येतौ शब्दौ निपात्येते कन्प्रत्ययान्तौ संज्ञायां विषये। ब्राह्मणको देशः। उष्णिका यवागूः। यत्रायुधजीविनो ब्राह्मणाः सन्ति, तस्य[2] ब्राह्मणक इति संज्ञा।

---

१ – 'आकार०' इति बाल०। २ – 'तत्र' इति मुद्रितेषु।

अल्पान्ना यवागूरुष्णिकेत्युच्यते ॥

## शीतोष्णाभ्यां कारिणि ॥ ७२ ॥

शीतोष्णशब्दाभ्यां कारिण्यभिधेये कन् प्रत्ययो भवति। क्रियाविशेषणाद् द्वितीया-समर्थादयं प्रत्ययः। शीतं करोति शीतकः। अलसो जड उच्यते। उष्णं करोति उष्णकः। शीघ्रकारी दक्ष उच्यते ॥

## अधिकम् ॥ ७३ ॥

अधिकमिति निपात्यते। अध्यारूढशब्दस्योत्तरपदलोपः कंश्च प्रत्ययः। अधिको द्रोणः खार्याम्। अधिका खारी द्रोणेन। कर्तरि कर्मणि चाध्यारूढशब्दः[1] ॥

## अनुकाभिकाभीकः कमिता ॥ ७४ ॥

अनुक अभिक अभीक इत्येते शब्दाः कन्प्रत्ययान्ता निपात्यन्ते कमितेत्यस्मिन्नर्थे। अभेः पक्षे दीर्घत्वं च निपात्यते। अनुकामयत अनुकः। अभिकः। अभीकः ॥

## पार्श्वेनान्विच्छति ॥ ७५ ॥

पार्श्वशब्दात् तृतीयासमर्थादन्विच्छतीत्यस्मिन्नर्थे कन् प्रत्ययो भवति। अनृजुरुपायः पार्श्वम्। तेनार्थानन्विच्छति पार्श्वकः। मायावी कौसृतिको जालिक उच्यते ॥

## अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ७६ ॥

अन्विच्छतीत्येव। अयःशूलदण्डाजिनाभ्यां तृतीयासमर्थाभ्यामन्विच्छतीत्येतस्मिन्नर्थे ठक्ठञौ प्रत्ययौ भवतः। तीक्ष्ण उपायोऽयःशूलमुच्यते। तेनान्विच्छति आयःशूलिकः। साहसिक इत्यर्थः। दम्भो दण्डाजिनम् , तेनान्विच्छति दाण्डाजिनिकः। दाम्भिक इत्यर्थः ॥

## तावतिथं ग्रहणमिति लुग् वा ॥ ७७ ॥

तावतां पूरणं तावतिथम्। गृह्यतेऽनेनेति ग्रहणम्। प्रकृतिविशेषणं चैतत्। पूरण-प्रत्ययान्तात् प्रातिपदिकाद् ग्रहणोपाधिकात् स्वार्थे कन् प्रत्ययो भवति। पूरणप्रत्ययस्य[2] वा लुक्। द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं ग्रहणम्, द्वितीयकम्। त्रिकम्, तृतीयकम्। चतुष्कम्, चतुर्थकम् ॥ तावतिथेन गृह्णातीति कन् वक्तव्यः, पूरणप्रत्ययस्य च नित्यं लुक् ॥ षष्ठेन रूपेण ग्रन्थं गृह्णाति षट्को देवदत्तः। पञ्चकः। चतुष्कः। इतिकरणो

---

१ - 'वाध्या०' इति बाल०। २ - 'पूरणस्य प्रत्ययस्य' इति मुद्रितेषु।

विवक्षार्थः। तेन ग्रन्थविषयमेव ग्रहणं विज्ञायते, नान्यविषयम् ॥

## स एषां ग्रामणीः ॥ ७८ ॥

स इति प्रथमासमर्थादेषामिति षष्ठ्यर्थे कन् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं ग्रामणीश्चेत् स भवति। ग्रामणीः प्रधानो मुख्य इत्यर्थः। देवदत्तो ग्रामणीरेषां देवदत्तकाः। यज्ञदत्तकाः[1]। ग्रामणीरिति किम्? देवदत्तः शत्रुरेषाम् ॥

## शृङ्खलमस्य बन्धनं करभे ॥ ७९ ॥

शृङ्खलशब्दात् प्रथमासमर्थादस्येति षष्ठ्यर्थे कन् प्रत्ययो भवति। यत् तत् प्रथमासमर्थं बन्धनं चेत् तद् भवति, यत् तदस्येति निर्दिष्टं करभश्चेत् स भवति। शृङ्खलं बन्धनमस्य करभस्य शृङ्खलकः। उष्ट्राणां बालकाः करभाः। तेषां काष्ठमयं पाशकं पादे व्यतिषज्यते, तदुच्यते शृङ्खलमिति। यद्यपि रज्ज्वादिकमपि तत्रास्ति तथापि शृङ्खलमस्यास्वतन्त्रीकरणे भवति साधनमिति बन्धनमित्युच्यते ॥

## उत्क उन्मनाः ॥ ८० ॥

उत्क इति निपात्यते, उन्मनाश्चेत् स भवति। उद्गतं मनो यस्य स उन्मनाः। उच्छब्दात् ससाधनक्रियावचनात् तद्वति कन् प्रत्ययो निपात्यते। उत्को देवदत्तः। उत्कः प्रवासी। उत्सुक इत्यर्थः ॥

## कालप्रयोजनाद् रोगे ॥ ८१ ॥

अर्थलभ्या समर्थविभक्तिः। कालात् प्रयोजनात् च यथायोगं समर्थविभक्तियुक्ताद् रोगेऽभिधेये कन् प्रत्ययो भवति। कालो दिवसादिः। प्रयोजनं कारणं रोगस्य फलं वा। द्वितीयेऽह्नि भवो द्वितीयको ज्वरः। चतुर्थकः। प्रयोजनात्—विषपुष्पैर्जनितो विषपुष्पको ज्वरः। काशपुष्पकः। उष्णं कार्यमस्य उष्णको ज्वरः। शीतको ज्वरः। उत्तरसूत्रादिह[2] संज्ञाग्रहणमपकृष्यते। तेनायं प्रकारनियमः सर्वो लभ्यते ॥

## तदस्मिन्नन्नं प्राये संज्ञायाम् ॥ ८२ ॥

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे कन् प्रत्ययो भवति, यत् तत् प्रथमासमर्थमन्नं चेत् प्रायविषयं तद् भवति। प्रायो बाहुल्यम्। संज्ञाग्रहणं तदन्तोपाधिः। गुडापूपाः प्रायेणान्नमस्यां पौर्णमास्यां गुडापूपिका। तिलापूपिका पौर्णमासी ॥ वटकेभ्य इनिर्वक्तव्यः ॥

---

१ - 'ब्रह्मदत्तकाः' इति है०। २ - 'इह' इति नास्ति बाल०।

वटकिनी पौर्णमासी ॥

## कुल्माषादञ् ॥ ८३ ॥

कुल्माषशब्दादञ् प्रत्ययो भवति तदस्मिन्नन्नं प्राये संज्ञायामित्येतस्मिन्नर्थे। ञकारो वृद्धिस्वरार्थः। कुल्माषाः प्रायेणान्नमस्यां कौल्माषी पौर्णमासी ॥

## श्रोत्रियंश्छन्दोऽधीते ॥ ८४ ॥

श्रोत्रियन्निति निपात्यते छन्दोऽधीत इत्यस्मिन्नर्थे। नकारः स्वरार्थः। श्रोत्रियो ब्राह्मणः। श्रोत्रियंश्छन्दोऽधीत इति वाक्यार्थे पदवचनम् , छन्दसो वा श्रोत्रभावः, तदधीत इति घंश्च प्रत्ययः। कथं छन्दोऽधीते छान्दसः ? वाग्रहणमनुवर्तते 'तावतिथं ग्रहणमिति लुग् वा' ( ५.२.७७ ) इत्यतः॥

## श्राद्धमनेन भुक्तमिनिठनौ ॥ ८५ ॥

श्राद्धमिति प्रकृतिः। अनेनेति प्रत्ययार्थः। भुक्तमिति प्रकृतिविशेषणम्। श्राद्ध-शब्दाद् भुक्तोपाधिकादनेनेत्यस्मिन्नर्थ इनिठनौ प्रत्ययौ भवतः। श्राद्धशब्दः कर्मनामधेयं तत्साधने द्रव्ये वर्तित्वा प्रत्ययमुत्पादयति। श्राद्धं भुक्तमनेन श्राद्धी, श्राद्धिकः। इनिठनोः समानकालग्रहणम्[1]। अद्य भुक्ते श्राद्धे श्वः श्राद्धिक इति प्रयोगो मा भूत्॥

## पूर्वादिनिः ॥ ८६ ॥

अनेनेति प्रत्ययार्थः कर्तानुवर्तते। न च क्रियामन्तरेण कर्ता संभवतीति यां कांचित् क्रियामध्याहृत्य प्रत्ययो विधेयः। पूर्वादनेनेत्यस्मिन्नर्थ इनिः प्रत्ययो भवति। पूर्वं गतमनेन भुक्तं पीतं वा पूर्वी, पूर्विणौ, पूर्विणः॥

## सपूर्वाच्च ॥ ८७ ॥

विद्यमानं पूर्वं यस्मादिति सपूर्वं प्रातिपदिकम्। तस्य पूर्वशब्देन तदन्तविधिः। सपूर्वात् प्रातिपदिकात् पूर्वशब्दान्तादनेनेत्यस्मिन्नर्थ इनिः प्रत्ययो भवति। पूर्वं कृतमनेन कृतपूर्वी कटम्। भुक्तपूर्वी ओदनम्। सुप्सुपेति समासं कृत्वा तद्धित उत्पाद्यते। योगद्वयेन चानेन पूर्वादिनिः सपूर्वाच्चेति परिभाषाद्वयं ज्ञाप्यते— 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ( परि० ३२ ), 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' ( परि० ३१ ) इति॥

---

१ – 'कर्तव्यम्' इत्यधिकं है०।

## इष्टादिभ्यश्च ॥ ८८ ॥

अनेनेत्येव। इष्टादिभ्यः प्रातिपदिकेभ्योऽनेनेत्यस्मिन्नर्थ इनिः प्रत्ययो भवति। इष्टमनेन इष्टी यज्ञे। पूर्ती श्राद्धे। 'क्तस्येन्विषयस्य कर्मणि' (वा० २.३.३६) इति सप्तम्युपसंख्यायते॥ इष्ट। पूर्त। उपसादित। निगदित। परिवादित। निकथित। परिकथित। संकलित। निपठित। संकल्पित। अनर्चित। विकलित। संरक्षित। निपतित। पठित। परिकलित। अर्चित। परिरक्षित। पूजित। परिगणित। उपगणित। अवकीर्ण। परित[1]। आयुक्त। आम्नात। श्रुत। अधीत। आसेवित। अपवारित। अवकल्पित। निराकृत। उपकृत। उपाकृत। अनुयुक्त। उपनत। अनुगुणित। अनुपठित। व्याकुलित। निगृहीत। इष्टादिः॥

## छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ॥ ८९ ॥

परिपन्थिन् परिपरिन् इत्येतौ शब्दौ छन्दसि विषये निपात्येते पर्यवस्थातरि वाच्ये। पर्यवस्थाता प्रतिपक्षः सपत्न[2] उच्यते। मा त्वा परिपरिणो विदन् मा त्वा परिपन्थिनो विदन् (मा० सं० ४.३४)॥

## अनुपद्यन्वेष्टा ॥ ९० ॥

अनुपदीति निपात्यतेऽन्वेष्टा चेत् स भवति। पदस्य पश्चादनुपदम्। अनुपदी गवाम्। अनुपदी उष्ट्राणाम्॥

## साक्षाद् द्रष्टरि संज्ञायाम् ॥ ९१ ॥

साक्षाच्छब्दोऽव्ययम्। तस्मादिनिः प्रत्ययो भवति द्रष्टरि वाच्ये। संज्ञाग्रहणमभिधेय-नियमार्थम्। साक्षाद् द्रष्टा साक्षी, साक्षिणौ, साक्षिणः। संज्ञाग्रहणादुपद्रष्टैवोच्यते, न दाता ग्रहीता वा॥

## क्षेत्रियच् परक्षेत्रे चिकित्स्यः ॥ ९२ ॥

क्षेत्रियजिति निपात्यते। परक्षेत्रे चिकित्स्य इत्येतस्मिन् वाक्यार्थे पदवचनम्। पर-क्षेत्राद् वा[3] तत्रेति सप्तमीसमर्थात् चिकित्स्य इत्येतस्मिन्नर्थे घच् प्रत्ययः परशब्दलोपश्च निपात्यते। परक्षेत्रे चिकित्स्यः क्षेत्रियो व्याधिः। क्षेत्रियं कुष्ठम्। परक्षेत्रं जन्मान्तर-शरीरम्, तत्र चिकित्स्यः क्षेत्रियः। असाध्योऽप्रत्याख्येयो[4] व्याधिरुच्यते। नामृतस्य निवर्तत

१ – सन्दिग्धम्। २ – 'संपन्न' इति बाल०। ३ – 'वा' इति नास्ति है०। ४ – 'असाध्यः प्रत्याख्येयो' इति है०।

इत्यर्थः। अथ वा क्षेत्रियं विषम्, यत् परक्षेत्रे परशरीरे संक्रमय्य चिकित्स्यते[1]। अथवा क्षेत्रियाणि तृणानि, यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि नाशयितव्यानि। अथ वा क्षेत्रियः पारदारिकः। परदाराः परक्षेत्रम्, तत्र चिकित्स्यो निग्रहीतव्यः। सर्वं चैतत् प्रमाणम्॥

## इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥ ९३ ॥

इन्द्रियमित्यन्तोदात्तं शब्दरूपं निपात्यते। रूढिरेषा चक्षुरादीनां करणानाम्। तथा च व्युत्पत्तेरनियमं दर्शयति। इन्द्रशब्दात् षष्ठीसमर्थात् लिङ्गमित्येतस्मिन्नर्थे घच् प्रत्ययो भवति। इन्द्रस्य लिङ्गमिन्द्रियम्। इन्द्र आत्मा, स चक्षुरादिना करणेनानुमीयते। नाकर्तृकं करणमस्ति। इन्द्रेण दृष्टम्। तृतीयासमर्थात् प्रत्ययः। आत्मना दृष्टमित्यर्थः। इन्द्रेण सृष्टम्। आत्मना सृष्टम्। तत्कृतेन शुभाशुभेन कर्मणोत्पन्नमिति कृत्वा। इन्द्रेण जुष्टम्। आत्मना जुष्टम्, सेवितम्, तद्द्वारेण विज्ञानोत्पादनात्। इन्द्रेण दत्तम् आत्मना विषयेभ्यो दत्तं यथायथं ग्रहणाय। इतिकरणः प्रकारार्थः। सति संभवे व्युत्पत्तिरन्यथापि कर्तव्या, रूढेरनियमादिति। वाशब्दः प्रत्येकमभिसंबध्यमानो विकल्पानां स्वातन्त्र्यं दर्शयति॥

## तदस्यास्त्यस्मिन्निति मतुप् ॥ ९४ ॥

तदिति प्रथमा समर्थविभक्तिः। अस्यास्मिन्निति प्रत्ययार्थौ। अस्तीति प्रकृति-विशेषणम्। इतिकरणो विवक्षार्थः। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे वा मतुप् प्रत्ययो भवति, यत् तत् प्रथमासमर्थमस्ति चेत् तद् भवति। अस्त्यर्थोपाधिकं चेत् तद् भवतीत्यर्थः। इतिकरणस्ततश्चेद् विवक्षा। गावोऽस्य सन्ति गोमान् देवदत्तः। वृक्षा अस्मिन् सन्ति वृक्षवान् पर्वतः। यवमान्। प्लक्षवान्। इतिकरणाद् विषयनियमः।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥

भूम्नि तावत्—गोमान्। निन्दायाम्—कुष्ठी। ककुदावर्तिनी। प्रशंसायाम्—रूपवती कन्या। नित्ययोगे—क्षीरिणो वृक्षाः। अतिशायने—उदरिणी कन्या। संसर्गे—दण्डी। छत्री। अस्तिविवक्षायाम्—अस्तिमान्॥ गुणवचनेभ्यो मतुपो लुग् वक्तव्यः॥ शुक्लो गुणोऽस्यास्ति शुक्लः पटः। कृष्णः। श्वेतः॥

## रसादिभ्यश्च ॥ ९५ ॥

रसादिभ्यः प्रातिपदिकेभ्यो मतुप् प्रत्ययो भवति तदस्यास्त्यस्मिन्नित्येतस्मिन् विषये।

---

१ – 'चिकित्सते' इति है०।

रसवान्। रूपवान्। किमर्थमिदमुच्यते, न पूर्वसूत्रेणैव मतुप् सिद्धः? रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम्। अन्ये मत्वर्थीया मा भूवन्निति। कथं रूपिणी कन्या, रूपिको दारकः? प्रायिकमेतद् वचनम्। इतिकरणो विवक्षार्थोऽनुवर्तते। अथ वा गुणादित्यत्र पठ्यते। तेन ये रसनेन्द्रियादिग्राह्या गुणाः, तेषामेवायं[1] पाठः। इह मा भूत्—रूपिणी, रूपिक इति। शोभायोगो[2] गम्यते। रसिको नट इत्यत्र भावयोगः॥ रस। रूप। गन्ध। स्पर्श। शब्द। स्नेह। गुणात्(ग० सू० १२४)। एकाचः(ग० सू० १२५)। गुणग्रहणं रसादीनां विशेषणम्॥

## प्राणिस्थादातो लजन्यतरस्याम् ॥ ९६ ॥

प्राणिस्थवाचिनः शब्दादाकारान्तात् लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे। चूडालः, चूडावान्। कर्णिकालः, कर्णिकावान्। प्राणिस्थादिति किम्? शिखावान् प्रदीपः। आदिति किम्? हस्तवान्। पादवान्॥ प्राण्यङ्गादिति वक्तव्यम्॥ इह मा भूत्—चिकीर्षास्यास्ति चिकीर्षावान्, जिहीर्षास्यास्ति जिहीर्षावान्। प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चकारश्चूडालोऽस्तीत्यत्र 'स्वरितो वानुदात्ते पदादौ' (८.२.६) इति स्वरितबाधनार्थः॥

## सिध्मादिभ्यश्च ॥ ९७ ॥

लजन्यतरस्यामिति वर्तते। सिध्मादिभ्यः प्रातिपदिकेभ्यो लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे। सिध्मलः, सिध्मवान्। गडुलः, गडुमान्। अन्यतरस्यांग्रहणेन मतुप् समुच्चीयते न तु प्रत्ययो विकल्प्यते। तस्मादकारान्तेभ्य इनिठनौ प्रत्ययौ न भवतः॥ सिध्म। गडु। मणि। नाभि। जीव। निष्पाव। पांसु। सक्तु। हनु। मांस। परशु। पार्ष्णिधमन्योर्दीर्घश्च (ग० सू० १२६)। पार्ष्णीलः। धमनीलः। पर्ण। उदक। प्रज्ञा। मण्ड। पार्श्व। गण्ड। ग्रन्थि। वातदन्तबलललाटानामूङ् च (ग० सू० १२७)। वातूलः। दन्तूलः। बलूलः। ललाटूलः। जटाघटाकलाः क्षेपे (ग० सू० १२८)। जटालः। घटालः। कलालः। सक्थि। कर्ण। स्नेह। शीत। श्याम। पिङ्ग। पित्त। शुष्क। पृथु। मृदु। मञ्जु। पत्र। चटु। कपि। कण्डु। संज्ञा। क्षुद्रजन्तूपतापाच्चेष्यते (ग० सू० १२९)। क्षुद्रजन्तु—यूकालः। मक्षिकालः। उपतापं—विचर्चिकालः। विपादिकालः। मूर्छालः। सिध्मादिः॥

## वत्सांसाभ्यां कामबले ॥ ९८ ॥

वत्सांसशब्दाभ्यां लच् प्रत्ययो भवति यथासंख्यं कामवति बलवति चार्थे। वत्सलः।

---

१ – 'तेषामत्र' इति है०। २ – 'शोभायोग्यता' इति बाल०।

अंसलः। वृत्तिविषये वत्सांसशब्दौ स्वभावात् कामबलयोर्वर्तमानौ तद्वति प्रत्ययमुत्पादयतः। न ह्यत्र वत्सार्थोऽसार्थो वा विद्यते। वत्सल इति स्नेहवानुच्यते—वत्सलः स्वामी, वत्सलः पितेति। अंसल इति चोपचितमांसो बलवानुच्यते। न चायमर्थो मतुपि संभवतीति नित्यं लजेव भवति। अन्यत्र वत्सवती[1] गौः। अंसवान् दुर्बलः॥

## फेनादिलच्च ॥ ९९ ॥

फेनशब्दादिलच् प्रत्ययो भवति मत्वर्थे, चकारात् लच्च। अन्यतरस्यांग्रहणं मतुप्-समुच्चयार्थं सर्वत्रैवानुवर्तते। फेनिलः, फेनलः, फेनवान्॥

## लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ १०० ॥

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च त्रिभ्यो गणेभ्यो यथासंख्यं श न इलच् इत्येते प्रत्यया भवन्ति मत्वर्थे, मतुप् च। लोमादिभ्यः शो भवति। लोमशः, लोमवान्। पामादिभ्यो नो भवति। पामनः, पामवान्। पिच्छादिभ्य इलच् भवति। पिच्छिलः, पिच्छवान्। उरसिलः, उरस्वान्॥ लोमन्। रोमन्। वल्गु। बभ्रु। हरि। कपि। शुनि। तरु। लोमादिः॥ पामन्। वामन्। हेमन्। श्लेष्मन्। कद्रु। बलि। श्रेष्ठ। पलल। सामन्। अङ्गात् कल्याणे ( ग० सू० १३० )। शाकीपलालीदद्र्वां ह्रस्वत्वं च ( ग० सू० १३१ )। विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ( ग० सू० १३२ )। लक्ष्म्या अच्च ( ग० सू० १३३ )। पामादिः॥ पिच्छ। उरस्। ध्रुवका। क्षुवका। जटाघटाकलाः क्षेपे ( ग० सू० १३४ )। वर्ण। उदक। पङ्क। प्रज्ञा। पिच्छादिः॥

## प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ॥ १०१ ॥

प्रज्ञा श्रद्धा अर्चा वृत्ति इत्येतेभ्यो णः प्रत्ययो भवति मतुबर्थे। मतुप् सर्वत्र समुच्चीयते। प्राज्ञः, प्रज्ञावान्। श्राद्धः, श्रद्धावान्। आर्चः, अर्चावान्। वार्त्तः, वृत्तिमान्॥

## तपःसहस्राभ्यां विनीनी ॥ १०२ ॥

तपःसहस्रशब्दाभ्यां विनि इनि इत्येतौ प्रत्ययौ भवतो मत्वर्थे। प्रत्ययार्थयोस्तु यथासंख्यं सर्वत्रैवास्मिन् प्रकरणे नेष्यते। तपोऽस्यास्मिन् वा विद्यते तपस्वी। सहस्री। असन्तत्वाददन्तत्वात् च सिद्धे प्रत्यये पुनर्वचनमणा वक्ष्यमाणेन बाधा मा भूदिति। सहस्रात् तु ठनपि बाध्यते॥

---

१ – ' अंसवती ' इति मुद्रितः पाठः।

## अण् च ॥१०३॥

तपःसहस्राभ्यामण् च प्रत्ययो भवति। तापसः। साहस्रः। योगविभाग उत्तरार्थो यथासंख्यार्थश्च ॥अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम्॥ ज्योत्स्ना विद्यतेऽस्मिन् पक्षे ज्यौत्स्नः पक्षः। तामिस्रः। कौण्डलः। कौतपः। वैसर्पः। वैपादिकः॥

## सिकताशर्कराभ्यां च॥ १०४ ॥

सिकताशर्कराभ्यामण् प्रत्ययो भवति मत्वर्थे। सैकतो घटः। शार्करं मधु। अदेश इहोदाहरणम्। देशे तु लुबिलचौ भविष्यतः॥

## देशे लुबिलचौ च ॥१०५॥

सिकताशर्कराभ्यां देशेऽभिधेये लुबिलचौ भवतः, चकारादण् च, मतुप् च। कस्य पुनरयं लुप्? मतुबादीनामन्यतमस्य, विशेषाभावात्। सिकता अस्मिन् विद्यन्ते सिकता देशः, सिकतिलः, सैकतः, सिकतावान्। एवं शर्करा देशः, शर्करिलः, शार्करः, शर्करावान्। देश इति किम्? सैकतो घटः। शार्करं मधु॥

## दन्त उन्नत उरच् ॥१०६॥

उन्नत इति प्रकृतिविशेषणम्। दन्तशब्दादुन्नतोपाधिकादुरच् प्रत्ययो भवति मत्वर्थे। दन्ता उन्नता अस्य सन्ति दन्तुरः। उन्नत इति किम्? दन्तवान्॥

## ऊषसुषिमुष्कमधो रः ॥१०७॥

ऊष सुषि मुष्क मधु इत्येतेभ्यो रः प्रत्ययो भवति मत्वर्थे। ऊषरं क्षेत्रम्। सुषिरं काष्ठम्। मुष्करः पशुः। मधुरो गुडः। इतिकरणो विवक्षार्थः सर्वत्राभिधेयनियमं करोति। इह न भवति—ऊषोऽस्मिन् घटे विद्यते, मध्वस्मिन् घटे विद्यत इति ॥रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्॥ खमस्यास्ति कण्ठविवरं महत् खरः। मुखमस्यास्तीति सर्वस्मिन् वक्तव्ये मुखरः। कुञ्जावस्य स्तः कुञ्जरः। हस्तिहनू कुञ्जशब्देनोच्येते ॥नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्॥ नगरम्। पांसुरम्। पाण्डुरम्॥ कच्छ्वा ह्रस्वत्वं च॥ कच्छुरम्॥

## द्युद्रुभ्यां मः ॥१०८॥

द्युद्रुशब्दाभ्यां मः प्रत्ययो भवति मत्वर्थे। द्युमः। द्रुमः। रूढिशब्दावेतौ। रूढिषु मतुप् पुनर्न विकल्प्यते॥

## केशाद् वोऽन्यतरस्याम् ॥ १०९ ॥

केशशब्दाद् वः प्रत्ययो भवति मत्वर्थेऽन्यतरस्याम्। ननु च प्रकृतमन्यतरस्यांग्रहणमनुवर्तत एव ? मतुप्समुच्चयार्थं तदित्युक्तम्। अनेन त्विनिठनौ प्राप्येते। ततश्चातूरूप्यं भवति। केशवः, केशी, केशिकः, केशवानिति॥ वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्॥ मणिवः। हिरण्यवः। कुररावः। कुमारावः। कुब्जावः। राजीवम्। इष्टकावः। विम्बावः॥ अर्णसो लोपश्च॥ अर्णवः॥ छन्दसीवनिपौ च वक्तव्यौ॥ वश्च मतुप् च[1]। रथीरभूम्मुद्गलानी गविष्टौ ( ऋ० १०.१०२.२ )। सुमङ्गलीरियं वधूः ( ऋ० १०.८५.३३)। वनिप्—मघवानमीमहे ( ऋ० १०.१६७.२ )। वकारमतुपौ च। उद्वा च उद्वती च॥ मेधारथाभ्यामिरन्निरचौ वक्तव्यौ॥ मेधिरः ( ऋ० १.३१.२ )। रथिरः ( ऋ० ३.१.१७ )॥

## गाण्ड्यजगात् संज्ञायाम् ॥ ११० ॥

गाण्डी अजग इत्येताभ्यां वः प्रत्ययो भवति संज्ञायां विषये मत्वर्थे। गाण्डीवं धनुः। अजगवं धनुः। ह्रस्वादपि भवति—गाण्डिवं धनुरिति। तत्र तुल्या हि संहिता दीर्घह्रस्वयोः। उभयथा च सूत्रं प्रणीतम्॥

## काण्डाण्डादीरन्नीरचौ ॥ १११ ॥

काण्ड अण्ड इत्येताभ्यां यथासंख्यमीरन्नीरचौ प्रत्ययौ भवतो मत्वर्थे। काण्डीरः। अण्डीरः॥

## रजःकृष्यासुतिपरिषदो वलच् ॥ ११२ ॥

रजःप्रभृतिभ्यः प्रातिपदिकेभ्यो वलच् प्रत्ययो भवति मत्वर्थे। रजस्वला स्त्री। कृषीवलः कुटुम्बी। आसुतीवलः शौण्डिकः। परिषद्वलो राजा। 'वले' ( ६.३.११८) इति दीर्घत्वम्। इतिकरणो विषयनियमार्थः सर्वत्र संबध्यते। तेनेह न भवति—रजोऽस्मिन् ग्रामे विद्यत इति॥ वलच्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्॥ भ्रातृवलः। पुत्रवलः। उत्साहवलः॥

## दन्तशिखात् संज्ञायाम् ॥ ११३ ॥

दन्तशिखाशब्दाभ्यां वलच् प्रत्ययो भवति मत्वर्थे संज्ञायां विषये। दन्तावलः सैन्यः।

---

१ – 'वश्च मतुप् च' इति नास्ति है०।

दन्तावलो गजः। शिखावलं नगरम्। शिखावला स्थूणा॥

## ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ॥ ११४ ॥

ज्योत्स्नादयः शब्दा निपात्यन्ते मत्वर्थे संज्ञायां विषये। ज्योतिष उपधालोपो नश्च प्रत्ययो निपात्यते। ज्योत्स्ना चन्द्रप्रभा। तमस उपधाया इकारो रश्च। तमिस्रा रात्रिः। स्त्रीत्वमतन्त्रम्। अन्यत्रापि दृश्यते। तमिस्रं नभः। शृङ्गादिनच् प्रत्ययो निपात्यते। शृङ्गिणः। ऊर्जोऽसुगागमो निपात्यते विनिवलचौ प्रत्ययौ। ऊर्जस्वी। ऊर्जस्वलः। गोर्मिनिप्रत्ययो निपात्यते। गोमी। मलशब्दादिनजीमसचौ प्रत्ययौ निपात्येते। मलिनः। मलीमसः॥

## अत इनिठनौ ॥ ११५ ॥

अकारान्तात् प्रातिपदिकादिनिठनौ प्रत्ययौ भवतः। दण्डी। दण्डिकः। छत्री। छत्रिकः। अन्यतरस्यामित्यधिकाराद् मतुबपि भवति। दण्डवान्। छत्रवान्। तपरकरणं किम्? श्रद्धावान्[1]।

एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ ॥

एकाक्षरात् तावत्—स्ववान्। खवान्। कृतः—कारकवान्। जातेः—व्याघ्रवान्। सिंहवान्। सप्तम्याम्—दण्डा अस्यां सन्ति दण्डवती शालेति। इतिकरणो विषयनियमार्थः सर्वत्र संबध्यत इत्युक्तम्, तेन क्वचिद् भवत्यपि—कार्यी, हार्यी, तण्डुली, तण्डुलिक इति॥

## व्रीह्यादिभ्यश्च ॥ ११६ ॥

व्रीह्यादिभ्यः प्रातिपदिकेभ्य इनिठनौ प्रत्ययौ भवतो मत्वर्थे। मतुब् भवत्येव। व्रीही, व्रीहिकः, व्रीहिमान्। मायी, मायिकः, मायावान्। न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयमिष्यते। किं तर्हि? शिखादिभ्य इनिर्वाच्य इकन् यवखदादिषु। परिशिष्टेभ्य उभयम्। शिखा, मेखला, संज्ञा, बलाका, माला, वीणा, वडवा, अष्टका, पताका, कर्मन्, चर्मन्, हंसा इत्येतेभ्य इनिरेवेष्यते। यवखद, कुमारी, नौ इत्येतेभ्य इकन्नेवेष्यते। परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः। व्रीहिग्रहणं किमर्थम्, यावता तुन्दादिषु व्रीहिशब्दः पठ्यते, तत्र इनिठनौ चकारेण विधीयेते? एवं तर्हि तुन्दादिषु व्रीहिग्रहणमर्थग्रहणं विज्ञायते। शालयोऽस्य सन्ति शालिलः[2], शाली, शालिकः, शालिमान् इति। व्रीहिशिखादयः पूर्वं पठिताः। यवखद। कुमारी। नौ। शीर्षाद् नञः (ग० सू० १३५)—अशीर्षी। अशीर्षिकः॥

---

१ – 'खट्वावान्' इति बाल०।
२ – 'शालिनः' इत्यपपाठो मुद्रितेषु।

## तुन्दादिभ्य इलच्च ॥ ११७ ॥

तुन्दादिभ्य प्रातिपदिकेभ्य इलच् प्रत्ययो भवति मत्वर्थे। चकारादिनिठनौ मतुप् च। तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान्। उदरिलः, उदरी, उदरिकः, उदरवान्॥ तुन्द। उदर। पिचण्ड। घट। यव। व्रीहि। स्वाङ्गाद् विवृद्धौ च ( ग० सू० १३६ )। तुन्दादिः॥

## एकगोपूर्वाट्ठञ् नित्यम् ॥ ११८ ॥

एकपूर्वात् गोपूर्वात् च प्रातिपदिकाद् नित्यं ठञ् प्रत्ययो भवति मत्वर्थे। एकशतमस्यास्तीति ऐकशतिकः। ऐकसहस्रिकः। गोपूर्वात् च—गौशतिकः। गौसहस्रिकः। अत इत्येव—एकविंशतिरस्यास्तीति न भवति। कथमैकगविकः ? समासान्ते कृते भविष्यति। कथं गौशकटिकः ? शकटीशब्देन समानार्थः शकटशब्दोऽस्ति, ततो भविष्यति। अवश्यं चात इत्यनुवर्त्यम्, 'द्वन्द्वोपतापगर्ह्यात्०' ( ५.२.१२८ ) इत्येवमाद्यर्थम्। नित्यग्रहणं मतुपो बाधनार्थम्। कथमेकद्रव्यवत्त्वादिति ? नैवायं साधुः। एकेन वा द्रव्यवत्त्वादिति समर्थनीयम्॥

## शतसहस्रान्ताच्च निष्कात् ॥ ११९ ॥

शतान्तात् सहस्रान्तात् च प्रातिपदिकात् ठञ् प्रत्ययो भवति मत्वर्थे, तौ चेच्छतसहस्रशब्दौ निष्कात् परौ भवतः। निष्कशतमस्यास्ति नैष्कशतिकः। नैष्कसहस्रिकः। सुवर्णनिष्कशतमस्यास्तीत्यनभिधानाद् न भवति॥

## रूपादाहतप्रशंसयोर्यप् ॥ १२० ॥

आहतप्रशंसे प्रकृत्युपाधी। आहतप्रशंसाविशिष्टार्थे वर्तमानाद् रूपशब्दाद् यप् प्रत्ययो भवति मत्वर्थे। आहतं रूपमस्य रूप्यो दीनारः। रूप्यः केदारः। रूप्यं कार्षापणम्। प्रशस्तं रूपमस्यास्ति रूप्यः पुरुषः। निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतमित्युच्यते। आहतप्रशंसयोरिति किम् ? रूपवान्॥ यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्॥ हिम्याः पर्वताः। गुण्या ब्राह्मणाः॥

## अस्मायामेधास्रजो विनिः ॥ १२१ ॥

असन्तात् प्रातिपदिकाद् माया मेधा स्रज् इत्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे। मतुप् सर्वत्र समुच्चीयत एव। असन्तात् तावत्—यशस्वी। तपस्वी। पयस्वी। मायावी। मेधावी। स्रग्वी। मायाशब्दाद् व्रीह्यादिषु पाठादिनिठनावपि भवतः। मायी। मायिकः॥

## बहुलं छन्दसि ॥ १२२ ॥

छन्दसि विषये बहुलं विनिः प्रत्ययो भवति मत्वर्थे। अग्नें तेजस्विन् ( तै० सं० ३.३.१.१ )। न भवति, सूर्यो वर्चस्वान् ॥ छन्दसि विनिप्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घत्वं चेति[1] वक्तव्यम् ॥ अष्ट्रावी ( ऋ० १०.१०२.८ )। मेखलावी। द्वयावी। उभयावी ( ऋ० ८.१.२ )। रुजावी। हृदयावी। द्वयोभयहृदयानि दीर्घत्वं प्रयोजयन्ति ॥ मर्मणश्चेति वक्तव्यम् ॥ मर्मावी ॥ सर्वत्रामयस्योपसंख्यानम् ॥ छन्दसि भाषायां च। आमयावी ( तै० सं० ३.२.३.३ ) ॥ शृङ्गवृन्दाभ्यामारकन् वक्तव्यः ॥ शृङ्गारकः। वृन्दारकः ( श० ब्रा० १४.६.११.१ ) ॥ फलबर्हाभ्यामिनज् वक्तव्यः ॥ फलिनः। बर्हिणः ॥ हृदयाच्चालुरन्यतरस्याम् ॥ हृदयालुः, हृदयी, हृदयिकः, हृदयवान् ॥ शीतोष्णतृप्रेभ्यस्तद् न सहत इत्यालुज् वक्तव्यः ॥ शीतं न सहते शीतालुः। उष्णालुः। तृप्रालुः ॥ तद् न सहत इति हिमाच्चेलुः ॥ हिमं न सहते हिमेलुः ॥ बलादूलच् ॥ बलं न सहते बलूलः ॥ वातात् समूहे च वातं न सहत इति च ॥ वातानां समूहः, वातं न सहत इति वा वातूलः ॥ पर्वमरुद्भ्यां तन् वक्तव्यः ॥ पर्वतः ( मै० सं० ४.१२.५ )। मरुत्तः ॥ अर्थात् तदभाव इनिर्वक्तव्यः ॥ अर्थी। तदभाव इत्येव—अर्थवान्। तदेतत् सर्वं बहुलग्रहणेन सम्पद्यते ॥

## ऊर्णाया युस् ॥ १२३ ॥

ऊर्णाशब्दाद् युस् प्रत्ययो भवति मत्वर्थे। सकारः पदसंज्ञार्थः। ऊर्णास्य विद्यत ऊर्णायुः ( मा० सं० १३.५० )। केचिच्छन्दोग्रहणमनुवर्तयन्ति ॥

## वाचो ग्मिनिः ॥ १२४ ॥

वाच्शब्दाद् ग्मिनिः प्रत्ययो भवति मत्वर्थे। वाग्ग्मी, वाग्ग्मिनौ, वाग्ग्मिनः ॥

## आलजाटचौ बहुभाषिणि ॥ १२५ ॥

वाच्शब्दात् प्रथमासमर्थादालच् आटच् इत्येतौ प्रत्ययौ भवतो मत्वर्थे बहुभाषिण्यभिधेये। ग्मिनेरपवादः। वाचालः। वाचाटः ॥ कुत्सित इति वक्तव्यम् ॥ यो हि सम्यग् बहु भाषते, वाग्ग्मीत्येव स भवति ॥

---

१ - 'वेति' इति है०।

## स्वामिन्नैश्वर्ये ॥ १२६ ॥

स्वामिन्निति निपात्यत ऐश्वर्ये गम्यमाने। स्वशब्दादैश्वर्यवाचिनो मत्वर्थ आमिन् प्रत्ययो निपात्यते। स्वमस्यास्तीति, ऐश्वर्यमस्यास्तीति स्वामी, स्वामिनौ, स्वामिनः। ऐश्वर्य इति किम् ? स्ववान् ॥

## अर्शआदिभ्योऽच् ॥ १२७ ॥

अर्शस् इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच् प्रत्ययो भवति मत्वर्थे। अर्शांसि अस्य विद्यन्त अर्शसः। उरसः। आकृतिगणश्चायम्। यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत् सर्वमिह द्रष्टव्यम् ॥ अर्शस्। उरस्। तुन्द। चतुर। पलित। जटा। घटा। अभ्र। कर्दम। आम। लवण। स्वाङ्गाद् हीनात् ( ग० सू० १३७ )। वर्णात् ( ग० सू० १३८)। अर्शआदिः ॥

## द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः ॥ १२८ ॥

द्वन्द्वः समासः। उपतापो रोगः। गर्ह्यं निन्द्यम्। तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्य इनिः प्रत्ययो भवति मत्वर्थे। द्वन्द्वात् तावत्—कटकवलयिनी। शङ्खनूपुरिणी। उपतापात्—कुष्ठी। किलासी। गर्ह्यात्—ककुदावर्ती। काकतालुकी। प्राणिस्थादिति किम् ? पुष्पफलवान् वृक्षः। प्राण्यङ्गाद् नेष्यते। पाणिपादवती। अत इत्यनुवर्तते। तेनेह न भवति—चित्रललाटिकावती। सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् ॥

## वातातिसाराभ्यां कुक् च ॥ १२९ ॥

वातातिसारशब्दाभ्यामिनिः प्रत्ययो भवति; तत्संनियोगेन च तयोः कुगागमो भवति। वातातिसारयोरुपतापत्वात् पूर्वेणैव सिद्धे प्रत्यये कुगर्थमेवेदं वचनम्। वातकी। अतिसारकी ॥ पिशाचाच्चेति वक्तव्यम् ॥ पिशाचकी वैश्रवणः। रोगे चायमिष्यते। इह न भवति—वातवती गुहेति ॥

## वयसि पूरणात् ॥ १३० ॥

इनिरनुवर्तते। पूरणप्रत्ययान्तात् प्रातिपदिकादिनिः प्रत्ययो भवति मत्वर्थे वयसि द्योत्ये। पञ्चमोऽस्यास्ति मासः संवत्सरो वा पञ्चमी उष्ट्रः। नवमी। दशमी। सिद्धे सति नियमार्थं वचनम्—इनिरेव भवति, ठन् न भवतीति। वयसीति किम् ? पञ्चमवान् ग्रामरागः ॥

## सुखादिभ्यश्च ॥ १३१ ॥

सुख इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो नियम्यते मत्वर्थे। सुखी। दुःखी। माला क्षेप इति पठ्यते, व्रीह्यादिषु (५.२.११६) च मालाशब्दोऽस्ति, तदिह क्षेपे मतुब्बाधनार्थं वचनम्॥ सुख। दुःख। तृप्र। कृच्छ्र। आम्र। अलीक। करुणा। कृपण। सोढ। प्रमीप। शील। हल। माला क्षेपे (ग० सू० १३९)। प्रणय। सुखादिः॥

## धर्मशीलवर्णान्ताच्च ॥ १३२ ॥

अन्तशब्दः प्रत्येकमभिसंबध्यते। धर्माद्यन्तात् प्रातिपदिकादिनिः प्रत्ययो नियम्यते। ब्राह्मणानां धर्मो ब्राह्मणधर्मः, सोऽस्यास्तीति ब्राह्मणधर्मी। ब्राह्मणशीली। ब्राह्मणवर्णी॥

## हस्ताज्जातौ ॥ १३३ ॥

हस्तशब्दादिनिः प्रत्ययो नियम्यते मत्वर्थे, समुदायेन चेज् जातिरभिधीयते। हस्तोऽस्यास्तीति हस्ती, हस्तिनौ, हस्तिनः। जाताविति किम् ? हस्तवान् पुरुषः॥

## वर्णाद् ब्रह्मचारिणि ॥ १३४ ॥

वर्णशब्दादिनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेद् ब्रह्मचारी भण्यते। ब्रह्मचारीति त्रैवर्णिकोऽभिप्रेतः। स हि विद्याग्रहणार्थमुपनीतो ब्रह्म चरति, नियममासेवत इत्यर्थः। वर्णी, वर्णिनौ, वर्णिनः। ब्रह्मचारिणीति किम् ? वर्णवान्। ब्राह्मणादयस्त्रयो वर्णा वर्णिन उच्यन्ते॥

## पुष्करादिभ्यो देशे ॥ १३५ ॥

पुष्कर इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो भवति, समुदायेन चेद् देशोऽभिधीयते। पुष्करिणी। पद्मिनी। देश इति किम् ? पुष्करवान् हस्ती॥ इनिप्रकरणे बलाद् बाहूरुपूर्वादुपसंख्यानम्॥ बाहुबली। ऊरुबली॥ सर्वादेश्चेति वक्तव्यम्[1]॥ सर्वधनी। सर्वबीजी। सर्वकेशी नटः॥ अर्थाच्चासन्निहिते॥ अर्थी। असन्निहित इति किम् ? अर्थवान्॥ तदन्ताच्चेति वक्तव्यम्॥ धान्यार्थी। हिरण्यार्थी॥ पुष्कर। पद्म। उत्पल। तमाल। कुमुद। नड। कपित्थ। बिस। मृणाल। कर्दम। शालूक। विगर्ह। करीष। शिरीष। यवास। प्रवास। हिरण्य। पुष्करादिः॥

---

१ - 'इति वक्तव्यम्' इति नास्ति है०।

## बलादिभ्यो मतुबन्यतरस्याम् ॥ १३६ ॥

बलादिभ्यः प्रातिपदिकेभ्यो मतुप् प्रत्ययो भवति। अन्यतरस्यांग्रहणेन प्रकृत इनिः समुच्चीयते। बलवान्, बली। उत्साहवान्, उत्साही॥ बल। उत्साह। उद्भाव। उद्वास। उद्वाम। शिखा। पूग। मूल। दंश। कुल। आयाम। व्यायाम। उपयाम। आरोह। अवरोह। परिणाह। युद्ध। बलादिः॥

## संज्ञायां मन्माभ्याम् ॥ १३७ ॥

मन्नन्तात् प्रातिपदिकाद् मशब्दान्तात् चेनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेत् संज्ञा गम्यते। प्रथिमिनी। दामिनी। मशब्दान्तात्—होमिनी। सोमिनी। संज्ञायामिति किम् ? सोमवान्। होमवान्॥

## कंशंभ्यां बभयुस्तितुतयसः ॥ १३८ ॥

कम् शमिति मकारान्तावुदकसुखयोर्वाचकौ, ताभ्यां ब भ युस् ति तु त यस् इत्येते सप्त प्रत्यया भवन्ति मत्वर्थे। कम्बः। शम्बः। कम्भः। शम्भः। कंयुः। शंयुः। कन्तिः। शन्तिः। कन्तुः। शन्तुः। कन्तः। शन्तः। कंयः। शंयः। सकारः पदसंज्ञार्थः, तेनानुस्वार-परसवर्णौ सिद्धौ भवतः। संज्ञायां हि असत्यां कम्यः शम्य इति स्यात्॥

## तुन्दिबलिवटेर्भः ॥ १३९ ॥

तुन्दि बलि वटि इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे। तुन्दिरिति वृद्धा नाभिरुच्यते, सास्यास्तीति तुन्दिभः। बलिभः। वटिभः। बलिशब्दः पामादिषु पठ्यते, तेन बलिन इत्यपि भवति॥

## अहंशुभमोर्युस् ॥ १४० ॥

अहमिति शब्दान्तरमहंकारे वर्तते, शुभमित्यव्ययं शुभपर्यायः, ताभ्यां युस् प्रत्ययो भवति मत्वर्थे। सकारः पदसंज्ञार्थः। अहंयुः। अहंकारवानित्यर्थः। शुभंयुः। कल्याणवा-नित्यर्थः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य द्वितीयः पादः॥

—  —

# ॥ पञ्चमाध्यायस्य तृतीयः पादः ॥

## प्राग् दिशो विभक्तिः ॥ १ ॥

'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो०' (५.३.२७) इति वक्ष्यति। प्रागेतस्माद् दिक्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामो विभक्तिसंज्ञास्ते वेदितव्याः। वक्ष्यति—'पञ्चम्यास्तसिल्' (५.३.७)—ततः। यतः। कुतः। तसिलादीनां विभक्तित्वे प्रयोजनं त्यदादिविधयः, इदमो विभक्तिस्वरश्च। इह। 'ऊडिदम्०' (६.१.१७१) इति विभक्त्युदात्तत्वं सिद्धं भवति। अतः परं स्वार्थिकाः प्रत्ययाः, तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वाद् नोपयुज्यत इति द्वयमपि[1] निवृत्तम्। वावचनं तु वर्तत एव, तेन विकल्पेन तसिलादयो भवन्ति। कुतः, कस्मात्। कुत्र, कस्मिन्निति॥

## किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ २ ॥

प्राग् दिश इत्येव। किमः सर्वनाम्नो बहुशब्दात् च प्राग् दिशः प्रत्यया वेदितव्याः। सर्वनामत्वात् प्राप्ते ग्रहणे द्व्यादिपर्युदासः क्रियते। कुतः। कुत्र। यतः। यत्र। ततः। तत्र। बहुतः। बहुत्र। अद्व्यादिभ्य इति किम्? द्वाभ्याम्। द्वयोः। प्रकृतिपरिसंख्यानं किम्? वृक्षात्। वृक्षे। प्राग् दिश इत्येव—वैयाकरणपाशः। सर्वनामत्वादेव सिद्धे किमो ग्रहणं द्व्यादिपर्युदासाद्॥ बहुग्रहणे संख्याग्रहणम्॥ इह न भवति—बहोः सूपात्। बहौ सूप इति॥

## इदम इश् ॥ ३ ॥

प्राग् दिश इत्येव। इदम इश् इत्ययमादेशो भवति प्राग्दिशीयेषु प्रत्ययेषु परतः। शकारः सर्वादेशार्थः। इह॥

## एतेतौ रथोः ॥ ४ ॥

रेफथकारादौ प्राग्दिशीये प्रत्यये परत इदम एतेतावादेशौ भवतः। इशोऽपवादः। रेफेऽकार उच्चारणार्थः। 'इदमो र्हिल्' (५.३.१६)—एतर्हि। 'इदमस्थमुः' (५.३.२४)—इत्थम्॥

## एतदोऽश्[2] ॥ ५ ॥

१ - 'द्वयमपि' इति नास्ति बाल०, है०। २ - 'एतदोऽन्' इति यथामहाभाष्यम्।

प्राग् दिश इत्येव। एतदः प्राग्दिशीये परतोऽशित्ययमादेशो भवति। शकारः सर्वादेशार्थः। अतः। अत्र। एतद इति योगविभागः कर्तव्यः। एतदो रथोः परत एत इत् इत्येतावादेशौ भवतः। एतर्हि। इत्थम्। रेफादिः 'अनद्यतने र्हिलन्यतरस्याम्' ( ५.३.२१) इति विद्यत एव। थमुप्रत्ययः पुनरेतद उपसंख्येयः॥

## सर्वस्य सोऽन्यतरस्यां दि ॥ ६ ॥

सर्वस्य स इत्ययमादेशो भवति प्राग्दिशीये दकारादौ प्रत्यये परतोऽन्यतरस्याम्। सर्वदा, सदा। प्राग्दिशीयं इत्येंव—सर्वं ददातीति सर्वदा ब्राह्मणी॥

## पञ्चम्यास्तसिल् ॥ ७ ॥

पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यस्तसिल् प्रत्ययो भवति। कुतः। यतः। ततः। बहुतः॥

## तसेश्च ॥ ८ ॥

'प्रतियोगे पञ्चम्यास्तसिः' ( ५.४.४४ ), 'अपादाने चाहीयरुहोः' ( ५.४.४५ ) इति वक्ष्यति। तस्य तसेः किंसर्वनामबहुभ्यः परस्य तसिलादेशो भवति। कुत आगतः। यतः। ततः। बहुत आगतः। तसेस्तसिल्वचनं स्वरार्थं विभक्त्यर्थं च॥

## पर्यभिभ्यां च ॥ ९ ॥

परि अभि इत्येताभ्यां तसिल् प्रत्ययो भवति। सर्वोभयार्थे वर्तमानाभ्यां प्रत्यय इष्यते। परितः। सर्वत इत्यर्थः। अभितः। उभयत इत्यर्थः॥

## सप्तम्यास्त्रल् ॥ १० ॥

किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति। कुत्र। यत्र। तत्र। बहुत्र॥

## इदमो हः ॥ ११ ॥

इदमः सप्तम्यन्ताद् हः प्रत्ययो भवति। त्रलोऽपवादः। इह॥

## किमोऽत् ॥ १२ ॥

किमः सप्तम्यन्तादत् प्रत्ययो भवति। त्रलोऽपवादः। क्व भोक्ष्यसे। क्वाध्येष्यसे। त्रलमपि केचिदिच्छन्ति। कुत्र। तत्कथम् ? उत्तरसूत्राद् वावचनं पुरस्तादपकृष्यते॥

## वा ह चच्छन्दसि ॥ १३ ॥

किमः सप्तम्यन्ताद् वा हः प्रत्ययो भवति छन्दसि विषये। यथाप्राप्तं च। क्व। कुहं (ऋ० ८.७३.४)। कुत्रचिदस्य सा दूरे क्व ब्राह्मणस्य चावकाः॥

## इतराभ्योऽपि दृश्यन्ते ॥ १४ ॥

पञ्चमीसप्तम्यपेक्षमितरत्वम्। इतराभ्यो विभक्तिभ्यस्तसिलादयो दृश्यन्ते। दृशि-ग्रहणं प्रायिकविध्यर्थम्, तेन भवदादिभिर्योग एवैतद्विधानम्। के पुनर्भवदादयः ? भवान् दीर्घायुरायुष्मान् देवानां प्रिय इति। स भवान्, ततो भवान्, तत्र भवान्। तं भवन्तम्, ततो भवन्तम्, तत्र भवन्तम्। तेन भवता, ततो भवता, तत्र भवता। तस्मै भवते, ततो भवते, तत्र भवते। तस्माद् भवतः, ततो भवतः, तत्र भवतः। तस्य भवतः, ततो भवतः, तत्र भवतः। तस्मिन् भवति, ततो भवति, तत्र भवति। एवं दीर्घायुःप्रभृतिष्वप्युदाहार्यम्॥

## सर्वैकान्यकिंयत्तदः काले दा ॥ १५ ॥

सप्तम्या इति वर्तते, न त्वितराभ्य इति। सर्वादिभ्यः प्रातिपदिकेभ्यो दा प्रत्ययो भवति। त्रलोऽपवादः। सर्वस्मिन् काले सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा। काल इति किम् ? सर्वत्र देशे॥

## इदमोर्हिल् ॥ १६ ॥

सप्तम्या इत्येव, काल इति च। इदमः सप्तम्यन्तात् काले वर्तमानाद् र्हिल् प्रत्ययो भवति। हस्यापवादः। लकारः स्वरार्थः। अस्मिन् काल एतर्हि। काल इत्येव—इह देशे॥

## अधुना ॥ १७ ॥

अधुनेति निपात्यते। इदमोऽशूभावो धुना च प्रत्ययः। अस्मिन् काले अधुना॥

## दानीं च ॥ १८ ॥

इदमः सप्तम्यन्तात् काले वर्तमानाद् दानीं प्रत्ययो भवति। अस्मिन् काल इदानीम्॥

## तदो दा च ॥ १९ ॥

तदः सप्तम्यन्तात् काले वर्तमानाद् दा प्रत्ययो भवति, चकाराद् दानीं च। तस्मिन् काले तदा, तदानीम्। तदो दावचनमनर्थकम्, विहितत्वात्॥

## तयोर्दार्हिलौ चच्छन्दसि ॥ २० ॥

तयोरिति प्रातिपदिकनिर्देशः। तयोरिदमः तदश्च यथासंख्यं दार्हिलौ प्रत्ययौ भवतश्छन्दसि विषये। चकाराद् यथाप्राप्तं च। इदावत्सरीयः ( काठ० सं० १३.१५ )। इदं तर्हि। इदानीम्। तदानीम्॥

## अनद्यतने र्हिलन्यतरस्याम् ॥ २१ ॥

छन्दसीति न स्वर्यते। सामान्येन विधानम्। किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्तमानेभ्यो र्हिल् प्रत्ययो भवत्यन्यतरस्याम्। कर्हि, कदा। यर्हि, यदा। तर्हि, तदा॥

## सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥

सप्तम्या इति काल इति च वर्तते। सद्यःप्रभृतयः शब्दा निपात्यन्ते। प्रकृतिः, प्रत्ययः, आदेशः, कालविशेष इति सर्वमेतद् निपातनाद् लभ्यते। समानस्य सभावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये। समानेऽहनि सद्यः। पूर्वपूर्वतरयोः परभावो निपात्यत उदारी च प्रत्ययौ संवत्सरेऽभिधेये। पूर्वस्मिन् संवत्सरे परुत्। पूर्वतरे संवत्सरे परारी। इदम इश्भावः समसण् प्रत्ययो निपात्यते संवत्सरेऽभिधेये। अस्मिन् संवत्सर ऐषमः। परस्मादेद्यविः प्रत्ययोऽहनि। परस्मिन्नहनि परेद्यवि। इदमोऽश्भावो द्यश्च प्रत्ययोऽहनि। अस्मिन्नहनि अद्य। पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् प्रत्ययो निपात्यतेऽहन्यभिधेये। पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। अन्यतरस्मिन्नहनि अन्यतरेद्युः। इतरस्मिन्नहनि इतरेद्युः। अपरस्मिन्नहनि अपरेद्युः। अधरस्मिन्नहनि अधरेद्युः। उभयोरह्नोरुभयेद्युः। उत्तरस्मिन्नहनि उत्तरेद्युः॥ द्युश्चोभयाद् वक्तव्यः॥ उभयद्युः ( शौ० सं० १.२५.४ )॥

## प्रकारवचने थाल् ॥ २३ ॥

'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' ( ५.३.२ ) इति वर्तते। सप्तम्या इति काल इति च निवृत्तम्। सामान्यस्य भेदको विशेषः प्रकारः। प्रकृत्यर्थविशेषणं चैतत्। प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति। तेन प्रकारेण तथा। यथा। सर्वथा। जातीयरोऽपीदृशमेव लक्षणम्। स तु स्वभावात् प्रकारवति वर्तते, थाल् पुनः प्रकारमात्रे॥

## इदमस्थमुः ॥ २४ ॥

इदंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति। थालोऽपवादः। अनेन प्रकारेण इत्थम्। उकारो मकारपरित्राणार्थः॥

## किमश्च ॥ २५ ॥

किंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति। केन प्रकारेण कथम्। योगविभाग उत्तरार्थः[1]॥

## था हेतौ चच्छन्दसि ॥ २६ ॥

किंशब्दाद् हेतौ वर्तमानात् था प्रत्ययो भवति, चकारात् प्रकारवचने छन्दसि विषये। हेतौ तावत्—कुथा ग्रामं न पृच्छसि (ऋ० १०.१४६.१)। केन हेतुना न पृच्छसीत्यर्थः। प्रकारवचने—कथा देवा आसन् पुराविदः। विभक्तिसंज्ञायाः पूर्णोऽवधिः॥

## दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २७ ॥

दिशां शब्दा दिक्शब्दाः। तेभ्यो दिक्शब्देभ्यो दिग्देशकालेषु वर्तमानेभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्योऽस्तातिः प्रत्ययो भवति स्वार्थे। यथासंख्यमत्र नेष्यते। पुरस्ताद् वसति। पुरस्तादागतः। पुरस्ताद् रमणीयम्। अधस्ताद् वसति। अधस्तादागतः। अधस्ताद् रमणीयम्। दिक्शब्देभ्य इति किम्? ऐन्द्र्यां दिशि वसति। सप्तमीपञ्चमीप्रथमाभ्य इति किम्? पूर्वं ग्रामं गतः। दिग्देशकालेष्विति किम्? पूर्वस्मिन् गुरौ वसति। इकारस्तकारपरित्राणार्थः॥

## दक्षिणोत्तराभ्यामतसुच् ॥ २८ ॥

दक्षिणोत्तराभ्यां दिग्देशकालेषु वर्तमानाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां स्वार्थेऽतसुच् प्रत्ययो भवति। अस्तातेरपवादः। दक्षिणाशब्दः काले न संभवतीति दिग्देशवृत्तिः परिगृह्यते। दक्षिणतो वसति। दक्षिणत आगतः। दक्षिणतो रमणीयम्। उत्तरतो वसति। उत्तरत आगतः। उत्तरतो रमणीयम्। अकारो विशेषणार्थः 'षष्ठ्यतसर्थप्रत्ययेन' (२.३.३०) इति॥

## विभाषा परावराभ्याम् ॥ २९ ॥

---

१ – 'योगविभाग उत्तरार्थः' इति नास्ति बाल०।

परावरशब्दाभ्यां विभाषातसुच् प्रत्ययो भवत्यस्तातेरर्थे। परतो वसति। परत आगतः। परतो रमणीयम्। परस्ताद् वसति। परस्तादागतः। परस्ताद् रमणीयम्। अवरतो वसति। अवरत आगतः। अवरतो रमणीयम्। अवस्ताद्[1] वसति। अवस्ताद्[1] आगतः। अवस्ताद्[1] रमणीयम्॥

## अञ्चेर्लुक् ॥ ३० ॥

अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्यास्तातिप्रत्ययस्य लुग् भवति। प्राच्यां दिशि वसति। 'लुक् तद्धितलुकि' (१.२.४९) इति स्त्रीप्रत्ययोऽपि निवर्तते। प्राग् वसति। प्राग् आगतः। प्राग् रमणीयम्। प्रत्यग् वसति। प्रत्यग् आगतः। प्रत्यग् रमणीयम्॥

## उपर्युपरिष्टात् ॥ ३१ ॥

उपरि उपरिष्टाद् इत्येतौ शब्दौ निपात्येते अस्तातेरर्थे। ऊर्ध्वस्योपभावो रिल्-रिष्टातिलौ च प्रत्ययौ निपात्येते। ऊर्ध्वायां दिशि वसति उपरि वसति। उपर्यागतः। उपरि रमणीयम्। उपरिष्टाद् वसति। उपरिष्टादागतः। उपरिष्टाद् रमणीयम्॥

## पश्चात् ॥ ३२ ॥

पश्चादित्ययं शब्दो निपात्यतेऽस्तातेरर्थे। अपरस्य पश्चभाव आतिश्च प्रत्ययः। अपरस्यां दिशि वसति पश्चाद् दिशि वसति। पश्चादागतः। पश्चाद् रमणीयम्॥ दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः॥ दक्षिणपश्चात्। उत्तर-पश्चात्॥ अर्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यः॥ दक्षिणपश्चार्धः। उत्तर-पश्चार्धः॥ विनापि पूर्वपदेन पश्चभावो वक्तव्यः॥ पश्चार्धः॥

## पश्च पश्चा चच्छन्दसि ॥ ३३ ॥

पश्चपश्चाशब्दौ निपात्येते छन्दसि विषयेऽस्तातेरर्थे। चकारात् पश्चादित्यपि भवति। अपरस्य पश्चभावोऽकाराकारौ च प्रत्ययौ निपात्येते। पुरा व्याघ्रो[2] जायते पश्च सिंहः। पश्चा सिंहः। पश्चात् सिंहः॥

## उत्तराधरदक्षिणादातिः ॥ ३४ ॥

उत्तराधरदक्षिणशब्देभ्य आतिः प्रत्ययो भवत्यस्तातेरर्थे। उत्तरस्यां दिशि वसति उत्तराद् वसति। उत्तरादागतः। उत्तराद् रमणीयम्। अधराद् वसति। अधरादागतः।

---

१ - 'अवरस्ताद्' इति हैं०।  २ - 'पुरो व्याप्तो' इति बाल०।

अधराद् रमणीयम्। दक्षिणाद् वसति। दक्षिणादागतः। दक्षिणाद् रमणीयम्॥

## एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ ३५ ॥

उत्तराधरदक्षिणशब्देभ्य एनप् प्रत्ययो भवत्यन्यतरस्यामस्तातेरर्थे, अदूरे चेदवधिमानवधेर्भवति। विभक्तित्रये प्रकृतेऽपञ्चम्या इति पञ्चमी पर्युदस्यते। तेनायं सप्तमीप्रथमान्ताद् विज्ञायते प्रत्ययः। उत्तरेण वसति, उत्तराद् वसति, उत्तरतो वसति। उत्तरेण रमणीयम्, उत्तराद् रमणीयम्, उत्तरतो रमणीयम्। अधरेण वसति, अधराद् वसति, अधस्ताद् वसति। अधरेण रमणीयम्, अधराद् रमणीयम्, अधस्ताद् रमणीयम्। दक्षिणेन वसति, दक्षिणाद् वसति, दक्षिणतो वसति। दक्षिणेन रमणीयम्, दक्षिणाद् रमणीयम्, दक्षिणतो रमणीयम्। अदूर इति किम्? उत्तराद् वसति। अपञ्चम्या इति किम्? उत्तरादागतः। अपञ्चम्या इति प्रागसेः (५.३.३९)। असिप्रत्ययस्तु पञ्चम्यन्तादपि भवति। केचिदिहोत्तरादिग्रहणं नानुवर्तयन्ति। दिक्छब्दमात्रात् प्रत्ययं मन्यन्ते। पूर्वेण ग्रामम्। अपरेण ग्रामम्॥

## दक्षिणादाच् ॥ ३६ ॥

अदूर इति न स्वर्यते। अपञ्चम्या इति वर्तते। दक्षिणशब्दादाच् प्रत्ययो भवत्यस्तातेरर्थे। दक्षिणा वसति। दक्षिणा रमणीयम्। अपञ्चम्या इत्येव—दक्षिणत आगतः। चकारो विशेषणार्थः, अञ्चूत्तरपदाजाहियुक्ते (२.३.२९) इति॥

## आहि च दूरे ॥ ३७ ॥

दक्षिणशब्दादाहिः प्रत्ययो भवत्यस्तातेरर्थे, चकारादाच्, दूरे चेदवधिमानवधेर्भवति। दक्षिणाहि वसति। दक्षिणा वसति। दक्षिणाहि रमणीयम्। दक्षिणा रमणीयम्। दूर इति किम्? दक्षिणतो वसति। अपञ्चम्या इत्येव—दक्षिणत आगतः॥

## उत्तराच्च ॥ ३८ ॥

उत्तरशब्दादाजाही प्रत्ययौ भवतोऽस्तातेरर्थे, दूरे चेदवधिमानवधेर्भवति। उत्तरा वसति। उत्तराहि वसति। उत्तरा रमणीयम्। उत्तराहि रमणीयम्। दूर इत्येव—उत्तरेण प्रयाति। अपञ्चम्या इत्येव—उत्तरादागतः॥

## पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥ ३९ ॥

अपञ्चम्या इति निवृत्तम्। तिसृणां विभक्तीनामिह ग्रहणम्। पूर्वाधरावराणामसिः

प्रत्ययो भवत्यस्तातेरर्थे, तत्सन्नियोगेन चैषां यथासंख्यं पुर् अध् अव् इत्येत आदेशा भवन्ति। असीत्यविभक्तिको निर्देशः। पुरो वसति। पुर आगतः। पुरो रमणीयम्। अधो वसति। अध आगतः। अधो रमणीयम्। अवो वसति। अव आगतः। अवो रमणीयम्॥

## अस्ताति च ॥ ४० ॥

सप्तम्यन्तमेतत्। अस्तातिप्रत्यये परतः पूर्वादीनां यथासंख्यं पुरादय आदेशा भवन्ति। इदमेवादेशविधानं ज्ञापकम्—अस्तातिरेभ्यो भवति, असिप्रत्ययेन न बाध्यत इति। पुरस्ताद् वसति। पुरस्तादागतः। पुरस्ताद् रमणीयम्। अधस्ताद् वसति। अधस्तादागतः। अधस्ताद् रमणीयम्॥

## विभाषावरस्य ॥ ४१ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। अवरस्यास्तातौ परतो विभाषा अव् इत्ययमादेशो भवति। अवस्ताद् वसति। अवस्तादागतः। अवस्ताद् रमणीयम्। अवरस्ताद् वसति। अवरस्तादागतः। अवरस्ताद् रमणीयम्॥

## संख्याया विधार्थे धा ॥ ४२ ॥

संख्यावाचिभ्यः प्रातिपदिकेभ्यो विधार्थे वर्तमानेभ्यो धा प्रत्ययो भवति स्वार्थे। विधा प्रकारः, स च सर्वक्रियाविषय[1] एव गृह्यते। क्रियाप्रकारे वर्तमानायाः संख्याया धा प्रत्ययः। एकधा भुङ्क्ते। द्विधा गच्छति। त्रिधा। चतुर्धा। पञ्चधा॥

## अधिकरणविचाले च ॥ ४३ ॥

संख्याया इत्येव। अधिकरणं द्रव्यम्, तस्य विचालः संख्यान्तरापादनम्। एकस्यानेकीकरणमनेकस्य वैकीकरणम्। अधिकरणविचाले गम्यमाने संख्यायाः स्वार्थे धा प्रत्ययो भवति। एकं राशिं पञ्चधा कुरु। अष्टधा कुरु। अनेकमेकधा कुरु॥

## एकाद्धो ध्यमुञन्यतरस्याम् ॥ ४४ ॥

एकशब्दात् परस्य धाप्रत्ययस्य ध्यमुञादेशो भवत्यन्यतरस्याम्। एकधा राशिं कुरु, ऐकध्यं कुरु। एकधा भुङ्क्ते, ऐकध्यं भुङ्क्ते। प्रकरणादेव लब्धे पुनर्धाग्रहणं विधार्थे विहितस्यापि यथा स्यात्। अनन्तरस्यैव ह्येतत् प्राप्नोति॥

---

१ – 'सर्व' इति न स्यात् यथान्यासपदमञ्जरि।

## द्वित्र्योश्च धमुञ् ॥ ४५ ॥

धा इत्यनुवर्तते। द्वित्र्योः संबन्धिनो धाप्रत्ययस्य विधार्थेऽधिकरणविचाले च विहितस्य धमुञादेशो भवत्यन्यतरस्याम्। चकारो विकल्पानुकर्षणार्थः। द्विधा, द्वैधम्। त्रिधा, त्रैधम्॥ धमुञन्तात् स्वार्थे डदर्शनम्॥ मतिद्वैधानि[1] संश्रयन्ते। मतित्रैधानि[1] संश्रयन्ते॥

## एधाच्च ॥ ४६ ॥

द्वित्र्योः संबन्धिनो धाप्रत्ययस्य एधाजादेशो भवत्यन्यतरस्याम्। चकारो विकल्पानुकर्षणार्थः। द्वेधा, द्वैधम्, द्विधा। त्रेधा, त्रैधम्, त्रिधा॥

## याप्ये पाशप् ॥ ४७ ॥

याप्यः कुत्सित इत्युच्यते। याप्ये वर्तमानात् प्रातिपदिकात् स्वार्थे पाशप् प्रत्ययो भवति। याप्यो वैयाकरणः[2], कुत्सितो वैयाकरणो वैयाकरणपाशः। याज्ञिकपाशः। यो व्याकरणशास्त्रे प्रवीणो दुःशीलः, तत्र कस्माद् न भवति ? यस्य गुणस्य सद्भावाद् द्रव्ये शब्दनिवेशः, तस्य कुत्सायां प्रत्ययः॥

## पूरणाद् भागे तीयादन् ॥ ४८ ॥

पूरणप्रत्ययो यस्तीयः, तदन्ताद् प्रातिपदिकाद् भागे वर्तमानात् स्वार्थेऽन् प्रत्ययो भवति। स्वरार्थं वचनम्। द्वितीयो भागो द्वितीयः। तृतीयः। भाग इति किम् ? द्वितीयम्। तृतीयम्। पूरणग्रहणमुत्तरार्थम्, न ह्यपूरणस्तीयोऽस्ति। मुखतीयादिरनर्थकः॥

## प्रागेकादशभ्योऽच्छन्दसि ॥ ४९ ॥

पूरणाद् भाग इत्येव। प्रागेकादशभ्यः संख्याशब्देभ्यः[3] पूरणप्रत्ययान्तेभ्यो भागे वर्तमानेभ्यः स्वार्थेऽन् प्रत्ययो भवति अच्छन्दसि विषये। स्वरार्थं वचनम्। पञ्चमः। सप्तमः। नवमः। दशमः। प्रागेकादशभ्य इति किम् ? एकादशः। द्वादशः। अच्छन्दसीति किम् ? तस्य॑ पञ्च॒मम्मि॑न्द्रि॒यस्या॑पा॒क्राम॑त् ( मै० सं० १.९.४ )॥

---

१ – 'पथि०' इति बाल०।

२ – 'याप्यो वैयाकरणः' इति नास्ति तारा०।

३ – 'संख्यावाचिभ्यः' इति बाल०।

## षष्ठाष्टमाभ्यां ञ च ॥ ५० ॥

भाग इत्येव, अच्छन्दसीति च। षष्ठाष्टमाभ्यां भागेऽभिधेयेऽच्छन्दसि विषये ञः प्रत्ययो भवति, चकारादन् च। षष्ठो भागः षाष्ठः, षष्ठः। आष्टमः, अष्टमः॥

## मानपश्वङ्गयोः कन्लुकौ च ॥ ५१ ॥

भाग इत्येव। षष्ठाष्टमाभ्यां यथासंख्यं कन्लुकौ च भवतो मानपश्वङ्गयोर्भाग-योरभिधेययोः। षष्ठको भागो मानं चेत् तद् भवति। अष्टमो भागः पश्वङ्गं चेत् तद् भवति। कस्य लुक्? ञस्य लुक्, अनो वा। चकाराद् यथाप्राप्तं च। षाष्ठः, षष्ठः। आष्टमः, अष्टमः। मानपश्वङ्गयोरिति किम्? षाष्ठः। षष्ठः। आष्टमः। अष्टमः॥

## एकादाकिनिच्चासहाये ॥ ५२ ॥

एकशब्दादसहायवाचिनः स्वार्थ आकिनिच् प्रत्ययो भवति, चकारात् कन्लुकौ च। आकिनिचः कनो वा लुग् विज्ञायते। स च विधानसामर्थ्यात् पक्षे भवति। एकाकी, एककः, एकः। असहायग्रहणं संख्याशब्दनिरासार्थम्[१]। तदुपादाने हि द्विबह्वोर्न स्यात्। एकाकिनौ, एकाकिनः॥

## भूतपूर्वे चरट् ॥ ५३ ॥

पूर्वं भूत इति विगृह्य सुप्सुपेति समासः। भूतपूर्वशब्दोऽतिक्रान्तकालवचनः। प्रकृतिविशेषणं चैतत्। भूतपूर्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे चरट् प्रत्ययो भवति। आढ्यो भूतपूर्व आढ्यचरः। सुकुमारचरः। टकारो ङीबर्थः। आढ्यचरी॥

## षष्ठ्या रूप्य च ॥ ५४ ॥

षष्ठ्यन्तात् प्रातिपदिकाद् रूप्यः प्रत्ययो भवति, चकारात् चरट् च। षष्ठ्यन्तात् प्रत्ययविधानात् संप्रति भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणम्, न तु प्रकृत्यर्थविशेषणम्। देवदत्तस्य भूतपूर्वो गौर्देवदत्तरूप्यः। देवदत्तचरः॥

## अतिशायने तमबिष्ठनौ ॥ ५५ ॥

अतिशयनमतिशायनम्, प्रकर्षः। निपातनाद् दीर्घत्वम्। प्रकृत्यर्थविशेषणं चैतत्। अतिशायनविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे तमबिष्ठनौ प्रत्ययौ भवतः। प्रकृत्यर्थ-

---

१ – 'शब्द' इति नास्ति बाल०।

विशेषणं च स्वार्थिकानां द्योत्यं भवति। सर्व इम आढ्याः, अयमेषामतिशयेनाढ्य आढ्यतमः। दर्शनीयतमः। सुकुमारतमः। सर्व इमे पटवः, अयमेषामतिशयेन पटुः पटिष्ठः। लघिष्ठः। गरिष्ठः। यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते, तदातिशायिकान्तादपरः प्रत्ययो भवत्येव। देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ( मा० सं० १. १ )। युधिष्ठिरः श्रेष्ठतमः कुरूणामिति॥

## तिङश्च ॥ ५६ ॥

तिङन्तात् चातिशायने द्योत्ये तमप् प्रत्ययो भवति। 'ङ्याप्प्रातिपदिकात्' ( ४.१.१) इत्यधिकारात् तिङो न प्राप्नोतीतीदं वचनम्। सर्व इमे पचन्तीति, अयमेषामतिशयेन पचति पचतितमाम्। जल्पतितमाम्। इष्ठन् नोदाह्रियते, गुणवचने तस्य नियतत्वात्[१]॥

## द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५७ ॥

द्वयोरर्थयोर्वचनं द्विवचनम्। विभक्तव्यो विभज्यः। निपातनाद् यद् भवति। द्व्यर्थे विभज्ये चोपपदे प्रातिपदिकात् तिङन्तात् चातिशायने तरबीयसुनौ प्रत्ययौ भवतः। तमबिष्ठनोरपवादौ। यथासंख्यमत्र नेष्यते। द्वाविमावाढ्यौ, अयमनयोरतिशयेनाढ्य[२] आढ्यतरः। सुकुमारतरः। पचतितराम्। जल्पतितराम्। ईयसुन् खल्वपि—द्वाविमौ पटू, अयमनयोरतिशयेन पटुः पटीयान्। लघीयान्। विभज्ये चोपपदे—माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। दर्शनीयतराः। पटीयांसः। लघीयांसः॥

## अजादी गुणवचनादेव ॥ ५८ ॥

इष्ठन्नीयसुनावजादी सामान्येन विहितौ, तयोरयं विषयनियमः क्रियते—गुणवचनादेव भवतस्तौ, नान्यस्मादिति। पटीयान्। लघीयान्। पटिष्ठः। लघिष्ठः। इह न भवतः—पाचकतरः, पाचकतम इति। एवकार इष्टतोऽवधारणार्थः, प्रत्ययनियमोऽयं न प्रकृतिनियम इति। पटुतरः। पटुतमः॥

## तुश्छन्दसि ॥ ५९ ॥

तुरिति तृन्तृचोः सामान्येन ग्रहणम्। त्रन्तात् छन्दसि विषयेऽजादी प्रत्ययौ भवतः। पूर्वेण गुणवचनादेव नियमे कृते छन्दसि प्रकृत्यन्तराण्यभ्यनुज्ञायन्ते, त्रन्तादप्यजादी भवत इति। आसुतिं करिष्ठः ( ऋ० ७.९७.७ )। दोहीयसी धेनुः। 'भस्याढे तद्धिते०' ( वा० ६. ३.३५ ) इति पुंवद्भावे कृते 'तुरिष्ठेमेयःसु' ( ६.४.१५४ ) इति तृचो निवृत्तिः॥

१ - 'गुणवचने नियमितत्वात्' इति बाल०। २ - 'आढ्य' इति नास्ति बाल०।

## प्रशस्यस्य श्रः ॥ ६० ॥

प्रशस्यशब्दस्य श्र इत्ययमादेशो भवत्यजाद्योः प्रत्यययोः परतः। अजादी इति प्रकृतस्य सप्तमी विभक्तिर्विपरिणम्यते। ननु च प्रशस्यशब्दस्यागुणवचनत्वादजादी न संभवतः ? एवं तर्ह्यादेशविधानसामर्थ्यात् तद्विषयो नियमो न प्रवर्तते, अजादी गुणवचनादेवेति। एवमुत्तरेष्वपि योगेषु विज्ञेयम्। सर्व इमे प्रशस्याः, अयमेषामतिशयेन प्रशस्यः श्रेष्ठः। उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्यः श्रेयान्। अयमस्मात् श्रेयान्[१]। 'प्रकृत्यैकाच्' ( ६.४.१६३ ) इति प्रकृतिभावात् श्रशब्दस्य टिलोपयस्येतिलोपौ न भवतः॥

## ज्य च ॥ ६१ ॥

प्रशस्यशब्दस्य ज्य इत्ययमादेशो भवत्यजाद्योः प्रत्यययोः परतः। सर्व इमे प्रशस्याः, अयमेषामतिशयेन प्रशस्यो ज्येष्ठः। उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्यो ज्यायान्। अयमस्मात् ज्यायान्। 'ज्यादादीयसः' ( ६.४.१६० ) इत्याकारः॥

## वृद्धस्य च ॥ ६२ ॥

वृद्धशब्दस्य च ज्य इत्ययमादेशो भवत्यजाद्योः प्रत्यययोः परतः। तयोश्च सत्त्वं नियमाभावेन पूर्ववद् ज्ञाप्यते। सर्व इमे वृद्धाः, अयमेषामतिशयेन वृद्धो ज्येष्ठः। उभाविमौ वृद्धौ, अयमनयोरतिशयेन वृद्धो ज्यायान्। अयमस्माद् ज्यायान्। 'प्रियस्थिर०' ( ६.४.१५७ ) इत्यादिना वृद्धशब्दस्य वर्षादेशो विधीयते। वचनसामर्थ्यात् पक्षे सोऽपि भवति—वर्षिष्ठः, वर्षीयानिति॥

## अन्तिकबाढयोर्नेदसाधौ ॥ ६३ ॥

अन्तिकबाढयोर्यथासंख्यं नेद साध इत्येतावादेशौ भवतोऽजाद्योः परतः। तयोश्च सत्त्वं पूर्ववद् विज्ञेयम्। निमित्तयोर्यथासंख्यमत्र नेष्यते। सर्वाणीमान्यन्तिकानि, इदमेषामतिशयेनान्तिकं नेदिष्ठम्। उभे इमे अन्तिके, इदमनयोरतिशयेनान्तिकं नेदीयः। इदमस्माद् नेदीयः। सर्व इमे बाढमधीयते, अयमेषामतिशयेन बाढमधीते साधिष्ठम्[२]। उभाविमौ बाढमधीयाते, अयमनयोरतिशयेन बाढमधीते साधीयः। अयमस्मात् साधीयोऽधीते॥

---

१ - 'अयमस्मात् श्रेयान्' इति नास्ति बाल० ।

२ - 'साधिष्ठः' इति मुद्रितेषु ।

## युवाल्पयोः कनन्यतरस्याम् ॥ ६४ ॥

युवाल्पशब्दयोः कनित्ययमादेशो भवत्यन्यतरस्यामजाद्योः परतः। तयोश्च सत्त्वं पूर्ववत् ज्ञेयम्। सर्व इमे युवानः, अयमेषामतिशयेन युवा कनिष्ठः। द्वाविमौ युवानौ, अयमनयोरतिशयेन युवा कनीयान्। अयमस्मात् कनीयान्। यविष्ठः, यवीयान् इति वा। सर्व इमेऽल्पाः, अयमेषामतिशयेनाल्पः कनिष्ठः। उभाविमावल्पौ, अयमनयोरतिशयेनाल्पः कनीयान्। अयमस्मात् कनीयान्। अल्पिष्ठः, अल्पीयानिति वा॥

## विन्मतोर्लुक् ॥ ६५ ॥

विनो मतुपश्च लुग् भवत्यजाद्योः प्रत्यययोः परतः। इदमेव वचनं ज्ञापकमजादिसद्भावस्य। सर्व इमे स्रग्विणः, अयमेषामतिशयेन स्रग्वी स्रजिष्ठः। उभाविमौ स्रग्विणौ, अयमनयोरतिशयेन स्रग्वी स्रजीयान्। अयमस्मात् स्रजीयान्। सर्व इमे त्वग्वन्तः, अयमेषामतिशयेन त्वग्वान् त्वचिष्ठः। उभाविमौ त्वग्वन्तौ, अयमनयोरतिशयेन त्वग्वान् त्वचीयान्। अयमस्मात् त्वचीयान्॥

## प्रशंसायां रूपप् ॥ ६६ ॥

प्रशंसा स्तुतिः। प्रकृत्यर्थस्य विशेषणं चैतत्। प्रशंसाविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे रूपप् प्रत्ययो भवति। स्वार्थिकाश्च प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति। प्रशस्तो वैयाकरणो वैयाकरणरूपः। याज्ञिकरूपः। प्रकृत्यर्थस्य वैशिष्ट्ये प्रशंसा भवति। वृषलरूपोऽयम्, यः पलाण्डुना सुरां पिबति। चोररूपः, दस्युरूपः, योऽक्ष्णोरप्यञ्जनं हरेत्[1]। 'तिङश्च' ( ५.३.५६ ) इत्यनुवर्तते। पचतिरूपम्, पचतोरूपम्, पचन्तिरूपम्। क्रियाप्रधानमाख्यातम्। एका च क्रियेति रूपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भवतः। नपुंसकलिङ्गं तु भवति, लोकाश्रयत्वाल्लिङ्गस्य॥

## ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ६७ ॥

संपूर्णता पदार्थानां समाप्तिः। स्तोकेनासंपूर्णता ईषदसमाप्तिः। प्रकृत्यर्थविशेषणं चैतत्। ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् कल्पब् देश्य देशीयर् इत्येते प्रत्यया भवन्ति। ईषदसमाप्तः पटुः पटुकल्पः। पटुदेश्यः। पटुदेशीयः। मृदुकल्पः। मृदुदेश्यः। मृदुदेशीयः। तिङश्चेत्येव—पचतिकल्पम्। जल्पतिकल्पम्॥

---

१ – 'अपहरेत्' इति बाल०।

## विभाषा सुपो बहुच् पुरस्तात्तु ॥ ६८ ॥

ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्ताद् विभाषा बहुच् प्रत्ययो भवति, स तु[1] पुरस्तादेव भवति न परतः। चित्करणमन्तोदात्तार्थम्। ईषदसमाप्तः पटुः बहुपटुः। बहुमृदुः। बहुगुडो द्राक्षा। विभाषावचनात् कल्पबादयोऽपि भवन्ति। सुब्ग्रहणं तिङन्ताद् मा भूदिति ॥

## प्रकारवचने जातीयर् ॥ ६९ ॥

सामान्यस्य भेदको विशेषः प्रकारः, तस्य वचने। प्रकृत्यर्थविशेषणं चैतत्। सुबन्तात् प्रकारविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे जातीयर् प्रत्ययो भवति। प्रकारवति चायं प्रत्ययः। थाल् पुनः प्रकारमात्र एव भवति। पटुप्रकारः पटुजातीयः। मृदुजातीयः। दर्शनीयजातीयः॥

## प्रागिवात् कः ॥ ७० ॥

'इवे प्रतिकृतौ' ( ५.३.९६ ) इति वक्ष्यति। प्रागेतस्मादिवसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, कप्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—'अज्ञाते' ( ५.३.७३ ) इति। अश्वकः। गर्दभकः। तिङन्तादयं प्रत्ययो नेष्यते, अकजिष्यते। 'तिङश्च' ( ५.३.५६ ) इत्यनुवृत्तमुत्तरसूत्रेणैव संबन्धनीयम् ॥

## अव्ययसर्वनाम्नामकच् प्राक् टेः ॥ ७१ ॥

'तिङश्च' ( ५.३.५६ ) इत्येव। अव्ययानां सर्वनाम्नां च प्रागिवीयेष्वर्थेष्वकच् प्रत्ययो भवति, स च प्राक् टेः, न परतः। कस्यापवादः। उच्चकैः। नीचकैः। शनकैः। सर्वनाम्नः खल्वपि—सर्वके। विश्वके। उभयके। प्रातिपदिकात् सुप इति द्वयमपीहानुवर्तते। तत्राभिधानतो व्यवस्था भवति। क्वचित् प्रातिपदिकस्य प्राक् टेः प्रत्ययो भवति, क्वचित् सुबन्तस्य। युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोरित्यत्र प्रातिपदिकस्य। त्वयका, मयका, त्वयकि, मयकीत्यत्र सुबन्तस्य ॥ अकच्प्रकरणे तूष्णीमः काम् प्रत्ययो वक्तव्यः ॥ स च मित्त्वादन्त्यादचः परो भवति। तूष्णीकामास्ते। तूष्णीकां तिष्ठति ॥ शीले को मलोपश्च वक्तव्यः ॥ तूष्णींशीलः, तूष्णीकः। 'तिङश्च' ( ५.३.५६) इति प्रकृतमत्र संबध्यते। पचतकि। जल्पतकि ॥

---

१ - 'च' इति बाल०।

## कस्य च दः ॥ ७२ ॥

ककारान्तस्य प्रातिपदिकस्याकच्सन्नियोगेन दकारादेशो भवति। चकारः सन्नियोगार्थः। सामर्थ्याच्चाव्ययग्रहणमनुवर्तते, न सर्वनामग्रहणम्, ककारान्तस्य सर्वनाम्नोऽसंभवात्। धिक्—धकित्। हिरुक्—हिरकुत्। पृथक्—पृथकत्॥

## अज्ञाते ॥ ७३ ॥

अज्ञातविशेषोऽज्ञातः। अज्ञातत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् तिङन्तात् च स्वार्थे यथाविहितं प्रत्ययो भवति। स्वेन रूपेण ज्ञाते पदार्थे विशेषरूपेणाज्ञाते प्रत्ययविधान-मेतत्। कस्यायमश्व इति स्वस्वामिसंबन्धेनाज्ञातेऽश्वे प्रत्ययः, अश्वकः। गर्दभकः। उष्ट्रकः। एवमन्यत्रापि यथायोगमज्ञातता विज्ञेया। उच्चकैः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि॥

## कुत्सिते ॥ ७४ ॥

कुत्सितो गर्हितो निन्दितः। प्रकृत्यर्थविशेषणं चैतत्। कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे यथाविहितं प्रत्ययो भवति। कुत्सितोऽश्वः अश्वकः। उष्ट्रकः। गर्दभकः। उच्चकैः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि॥

## संज्ञायां कन् ॥ ७५ ॥

कुत्सित इत्येव। कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति, कस्यापवादः, प्रत्ययान्तेन चेत् संज्ञा गम्यते। शूद्रकः। धारकः। पूर्णकः॥

## अनुकम्पायाम् ॥ ७६ ॥

कारुण्येनाभ्युपपत्तिः परस्यानुकम्पा। तस्यां गम्यमानायां सुबन्तात् तिङन्तात् च यथाविहितं प्रत्ययो भवति। पुत्रकः। वत्सकः। दुर्बलकः। बुभुक्षितकः। स्वपितकि। श्वसितकि॥

## नीतौ च तद्युक्तात् ॥ ७७ ॥

सामदानादिरुपायो नीतिः। नीतौ च गम्यमानायां तद्युक्तादनुकम्पायुक्ताद् यथाविहितं प्रत्ययो भवति। हन्त ते धानकाः। हन्त ते तिलकाः। एहकि। अद्धकि। अनुकम्प्यमानो दानेनाराधयति[1]। पूर्वेण प्रत्यासन्नानुकम्पासंबन्धादनुकम्प्यमानादेव प्रत्ययो विहितः। सम्प्रति

१ – 'परस्यानुकम्पामात्रोपादानेनाराधयति' इति है०।

व्यवहितादपि यथा स्यादिति वचनम् ॥

## बह्वचो मनुष्यनाम्नष्ठज् वा ॥ ७८ ॥

अनुकम्पायाम्, नीतौ च तद्युक्तादिति वर्तते। बह्वचः प्रातिपदिकाद् मनुष्यनामधेयाद् वा ठच् प्रत्ययो भवत्यनुकम्पायां गम्यमानायां नीतौ च। देविकः, देवदत्तकः। यज्ञिकः, यज्ञदत्तकः। बह्वच इति किम् ? दत्तकः। गुप्तकः। मनुष्यनाम्न इति किम् ? मद्रबाहुकः। भद्रबाहुकः॥

## घनिलचौ च ॥ ७९ ॥

अनुकम्पायामित्यादि सर्वमनुवर्तते। पूर्वेण ठचि विकल्पेन प्राप्ते वचनम्। बह्वचो मनुष्यनाम्नो घन् इलच् इत्येतौ प्रत्ययौ भवतः, चकाराद् यथाप्राप्तं च। देवियः। देविलः। देविकः। देवदत्तकः। यज्ञियः। यज्ञिलः। यज्ञिकः। यज्ञदत्तकः॥

## प्राचामुपादेरडज्वुचौ च ॥ ८० ॥

पूर्ववत् सर्वमनुवर्तते। उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् बह्वचो मनुष्यनाम्नोऽडज्वुचूप्रत्ययौ भवतः। चकाराद् घनिलचौ प्रत्ययौ भवतः, ठच् च वा। उपडः। उपकः। उपियः। उपिलः। उपिकः। उपेन्द्रदत्तकः। प्राचांग्रहणं पूजार्थम्। वेत्येव हि वर्तते॥

## जातिनाम्नः कन् ॥ ८१ ॥

बह्वच इति नानुवर्तते। सामान्येन विधानम्। जातिशब्दो यो मनुष्यनामधेयो व्याघ्र सिंह इत्येवमादिः, तस्मादनुकम्पायां नीतौ च कन् प्रत्ययो भवति। व्याघ्रकः। सिंहकः। शरभकः। वावचनानुवृत्तेर्यथादर्शनमन्योऽपि भवति। व्याघ्रिलः। सिंहिलः। नामग्रहणं स्वरूपनिवृत्त्यर्थम् ॥

## अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥

कनित्यनुवर्तते, मनुष्यनाम्न इति च। अजिनशब्दान्तात् प्रातिपदिकाद् मनुष्यनाम्नोऽनुकम्पायां कन् प्रत्ययो भवति, तस्य चोत्तरपदलोपः। व्याघ्राजिनो नाम कश्चिद् मनुष्यः, सोऽनुकम्पितो व्याघ्रकः। सिंहकः॥

## ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥

लोप इत्यनुवर्तते। अस्मिन् प्रकरणे यष्ठोऽजादिश्च प्रत्ययः, तस्मिन् परतः प्रकृतेर्द्वितीयादच ऊर्ध्वं यच्छब्दरूपं तस्य लोपो भवति। ऊर्ध्वग्रहणं सर्वलोपार्थम्। अनुकम्पितो देवदत्तो देविकः। देवियः। देविलः। यज्ञिकः। यज्ञियः। यज्ञिलः। उपडः। उपकः। उपियः। उपिलः। उपिकः। उपेन्द्रदत्तकः।[1] ठग्रहणमुको द्वितीयत्वे कविधानार्थम्। अजादिलक्षणे हि माथितिकादिवत् प्रसङ्गः। वायुदत्तो वायुकः। पितृदत्तः पितृकः॥ चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः॥ अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः। बृहस्पतियः। बृहस्पतिलः ॥ अनजादौ विभाषा लोपो वक्तव्यः॥ देवदत्तकः, देवकः। यज्ञदत्तकः, यज्ञकः॥ लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः॥ दत्तिकः। दत्तिलः। दत्तियः। दत्तकः ॥ विनापि प्रत्ययेन पूर्वोत्तरपदयोर्विभाषा लोपो वक्तव्यः॥ देवदत्तो दत्तः, देव इति वा॥ उवर्णाल् ल इलस्य च॥ भानुदत्तो भानुलः। वसुदत्तो वसुलः।

चतुर्थादनजादौ च लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च॥

॥ द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम्॥ लहोडो लहिकः। कहोडः कहिकः॥ एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः॥ वागाशीर्वाचिकः। स्रुचिकः। त्वचिकः। कथं षडङ्गुलिदत्तः षडिक इति ? ॥ षषष्ठाजादिवचनात् सिद्धम्॥

## शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥ ८४ ॥

शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतः तृतीयादच ऊर्ध्वस्य लोपो भवति। पूर्वस्यायमपवादः। अनुकम्पितः शेवलदत्तः शेवलिकः। शेवलियः। शेवलिलः। सुपरिकः। सुपरियः। सुपरिलः। विशालिकः। विशालियः। विशालिलः। वरुणिकः। वरुणियः। वरुणिलः। अर्यमिकः। अर्यमियः। अर्यमिलः॥ शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनामिति वक्तव्यम्॥ शेवलेन्द्रदत्तः, सुपर्याशीर्दत्तः, शेवलिकः, सुपरिक इति यथा स्यात्। शेवलयिकः, सुपर्यिक इति मा भूत्॥

## अल्पे ॥ ८५ ॥

परिमाणापचयेऽल्पशब्दः। प्रकृतिविशेषणं चैतत्। अल्पत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकाद् यथाविहितं प्रत्ययो भवति। अल्पं तैलं तैलकम्। घृतकम्। सर्वकम्। विश्वकम्। उच्चकैः। नीचकैः। पचतकि। जल्पतकि॥

---

१ – 'उपियः। उपिलः। उपिकः' इति नास्ति बाल०। 'उपेन्द्रदत्तकः' इति नास्ति है०।

## ह्रस्वे ॥ ८६ ॥

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकाद् यथाविहितं प्रत्ययो भवति। दीर्घप्रतियोगी ह्रस्वः। ह्रस्वो वृक्षो वृक्षकः। प्लक्षकः। स्तम्भकः॥

## संज्ञायां कन् ॥ ८७ ॥

ह्रस्व इत्येव। ह्रस्वत्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् प्रत्ययो भवति। पूर्वस्यायमपवादः। वंशकः। वेणुकः। दण्डकः॥

## कुटीशमीशुण्डाभ्यो रः ॥ ८८ ॥

ह्रस्व इत्येव। संज्ञाग्रहणं नानुवर्तते, सामान्येन विधानम्। कुटीशमीशुण्डाभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः। स्वार्थिकत्वेऽपि पुँल्लिङ्गता, लोकाश्रयत्वाल् लिङ्गस्य॥

## कुत्वा डुपच् ॥ ८९ ॥

ह्रस्व इत्येव। कुतूशब्दाद् ह्रस्वत्वे द्योत्ये डुपच् प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कुतूः कुतुपम्। चर्ममयं स्नेहभाजनमुच्यते। कुतूरित्यावपनस्याख्या॥

## कासूगोणीभ्यां ष्टरच् ॥ ९० ॥

ह्रस्व इत्येव। कासूगोणीशब्दाभ्यां ह्रस्वत्वे द्योत्ये ष्टरच् प्रत्ययो भवति। कस्यापवादः। षकारो ङीषर्थः। ह्रस्वा कासूः कासूतरी। गोणीतरी। कासूरिति शक्तिरायुधविशेष उच्यते॥

## वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ९१ ॥

ह्रस्व इति निवृत्तम्। वत्स उक्षन् अश्व ऋषभ इत्येतेभ्यस्तनुत्वे द्योत्ये ष्टरच् प्रत्ययो भवति। यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः, तस्य तनुत्वे प्रत्ययः। वत्सतरः। उक्षतरः। अश्वतरः। ऋषभतरः। प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयःप्राप्तिः। तरुण उक्षा, तस्य तनुत्वं तृतीयवयःप्राप्तिः। अश्वेनाश्वायामुत्पन्नोऽश्वः, तस्य तनुत्वमन्यपितृकता। अनड्वानृषभः, तस्य तनुत्वं भारवहने मन्दशक्तिता॥

## किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ॥ ९२ ॥

किं यत् तद् इत्येतेभ्यः प्रातिपदिकेभ्यो द्वयोरेकस्य निर्धारणे डतरच् प्रत्ययो भवति।

निर्धार्यमाणवाचिभ्यः स्वार्थे प्रत्ययः। जात्या[१] क्रियया गुणेन संज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। कतरो भवतोः कठः। कतरो भवतोः कारकः। कतरो भवतोः पटुः। कतरो भवतोर्देवदत्तः।[२] यतरो भवतोः कारकः। यतरो भवतोः पटुः। यतरो भवतोर्देवदत्तः, ततर आगच्छतु। महाविभाषया चात्र प्रत्ययो विकल्प्यते। को भवतोर्देवदत्तः, स आगच्छतु। निर्धारण इति विषयसप्तमीनिर्देशः। द्वयोरिति समुदायाद् निर्धारणविभक्तिः। एकस्येति[३] निर्धार्यमाणनिर्देशः॥

## वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ९३ ॥

किंयत्तद इति वर्तते, निर्धारणे, एकस्येति च। बहूनामिति निर्धारणे षष्ठी। बहूनां मध्य एकस्य निर्धारणे गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यो वा डतमच् प्रत्ययो भवति। कतमो भवतां कठः। यतमो भवतां कठः, ततम आगच्छतु। वावचनमकजर्थम्। यको भवतां कठः, सक आगच्छतु। महाविभाषा च प्रत्ययविकल्पार्थानुवर्तत एव। को भवतां कठः। यो भवतां कठः, स आगच्छतु। जातिपरिप्रश्न इति किम्? को भवतां देवदत्तः। परिप्रश्नग्रहणं च किम एव विशेषणम्, न यत्तदोरसंभवात्। जातिग्रहणं तु सर्वैरेव संबध्यते। किमोऽस्मिन् विषये डतरमपीच्छन्ति केचित्। कतरो भवतां कठः[४]। कतरो भवतां कालाप इति। तत्र 'कतरकतमौ जातिपरिप्रश्ने' (२.१.६३) इति वचनात् सिद्धम्॥

## एकाच्च प्राचाम् ॥ ९४ ॥

एकशब्दात् प्राचामाचार्याणां मतेन डतरच् डतमच् इत्येतौ प्रत्ययौ भवतः स्वस्मिन् विषये। चकारो डतरचोऽनुकर्षणार्थः। द्वयोर्निर्धारणे डतरच्, बहूनां निर्धारणे डतमच्। जातिपरिप्रश्न इति नानुवर्तते। सामान्येन विधानम्। एकतरो भवतोर्देवदत्तः। एकतमो भवतां देवदत्तः। प्राचांग्रहणं पूजार्थम्, विकल्पोऽनुवर्तत एव॥

## अवक्षेपणे कन् ॥ ९५ ॥

अवक्षिप्यते येन तदवक्षेपणम्। तस्मिन् वर्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति। व्याकरणकेन नाम त्वं गर्वितः। याज्ञिक्यकेन नाम त्वं गर्वितः। परस्य कुत्सार्थं यदुपादीयते, तदिहोदाहरणम्। यत् पुनः स्वयमेव कुत्सितम्, तत्र 'कुत्सिते' (५.३.७४) इत्यनेन कन् प्रत्ययो भवति—देवदत्तकः, यज्ञदत्तक इति। प्रागिवीयस्य पूर्णोऽवधिः॥

---

१ – 'जात्या' इति नास्ति क्वचित्, द्र० पद०।
२ – 'यतरो भवतोः कठः' इत्यप्यत्र स्यात्।
३ – 'निर्देशः' इत्यधिकं मुद्रितेषु। न्यासे नास्ति।
४ – 'कतरो भवतां कठः' इति नास्ति है०।

## इवे प्रतिकृतौ ॥ ९६ ॥

कनित्यनुवर्तते। इवार्थे यत् प्रातिपदिकं वर्तते, तस्मात् कन् प्रत्ययो भवति। इवार्थः सादृश्यम्, तस्य विशेषणं प्रतिकृतिग्रहणम्। प्रतिकृतिः प्रतिरूपकं प्रतिच्छन्दकम्। अश्व इवायमश्वप्रतिकृतिरश्वकः। उष्ट्रकः। गर्दभकः। प्रतिकृताविति किम् ? गौरिव गवयः॥

## संज्ञायां च ॥ ९७ ॥

इवेत्यनुवर्तते, कनिति च। इवार्थे गम्यमाने कन् प्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते। अप्रतिकृत्यर्थ आरम्भः। अश्वसदृशस्य संज्ञा अश्वकः। उष्ट्रकः। गर्दभकः॥

## लुम्मनुष्ये ॥ ९८ ॥

संज्ञायामित्येव। संज्ञायां विहितस्य कनो मनुष्येऽभिधेये लुब् भवति। चञ्चेव मनुष्यः चञ्चा। दासी। खरकुटी। मनुष्य इति किम् ? अश्वकः। उष्ट्रकः। गर्दभकः। देवपथादेराकृतिगणत्वात् तस्यैवायं प्रपञ्चो वेदितव्यः॥

## जीविकार्थे चापण्ये ॥ ९९ ॥

जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुब् भवति। विक्रीयते यत् तत् पण्यम्। वासुदेवः। शिवः। स्कन्दः। विष्णुः। आदित्यः। देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते। अपण्य इति किम् ? हस्तिकान् विक्रीणीते। अश्वकान्। रथकान्। देवपथादेरेवायं प्रपञ्चः॥

## देवपथादिभ्यश्च ॥ १०० ॥

'इवे प्रतिकृतौ' ( ५.३.९६ ) 'संज्ञायां च' ( ५.३.९७ ) विहितस्य कनो देवपथादिभ्य उत्तरस्य लुब् भवति। आदिशब्दः प्रकारे। आकृतिगणश्चायम्। देवपथः। हंसपथः।

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु॥

अर्चासु तावत्—शिवः। विष्णुः। चित्रकर्मणि—अर्जुनः। दुर्योधनः। ध्वजेषु—कपिः। गरुडः। सिंहः॥ देवपथ। हंसपथ। वारिपथ। जलपथ। राजपथ। शतपथ। सिंहगति। उष्ट्रग्रीवा। चामरज्जु। रज्जु। हस्त। इन्द्र। दण्ड। पुष्प। मत्स्य॥

## वस्तेर्ढञ् ॥ १०१ ॥

इवेत्यनुवर्तते। इतः प्रभृति प्रत्यया सामान्येन भवन्ति, प्रतिकृतौ चाप्रतिकृतौ च। वस्तिशब्दादिवार्थे द्योत्ये ढञ् प्रत्ययो भवति। वस्तिरिव वास्तेयः। वास्तेयी॥

## शिलाया ढः ॥ १०२ ॥

शिलाशब्दादिवार्थे ढः प्रत्ययो भवति। शिलेव शिलेयं दधि। केचिदत्र ढञमपीच्छन्ति, तदर्थं योगविभागः कर्तव्यः। शिलाया ढञ् प्रत्ययो भवति। शैलेयम्। ततो ढः। शिलेयम्॥

## शाखादिभ्यो यत् ॥ १०३ ॥

शाखा इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत् प्रत्ययो भवति इवार्थे। शाखेव शाख्यः। मुख्यः। जघन्यः॥ शाखा। मुख। जघन। शृङ्ग। मेघ। चरण। स्कन्ध। शिरस्। उरस्। अग्र। शरण। शाखादिः॥

## द्रव्यं च भव्ये ॥ १०४ ॥

द्रव्यशब्दो निपात्यते भव्येऽभिधेये। द्रुशब्दादिवार्थे यत् प्रत्ययो निपात्यते। द्रव्यं भव्यः, आत्मवान्, अभिप्रेतानामर्थानां पात्रभूत उच्यते। द्रव्योऽयं राजपुत्रः। द्रव्योऽयं माणवकः॥

## कुशाग्राच्छः ॥ १०५ ॥

कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति। कुशाग्रमिव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः। कुशाग्रीयं शस्त्रम्॥

## समासाच्च तद्विषयात् ॥ १०६ ॥

तदित्यनेन प्रकृत इवार्थो निर्दिश्यते। इवार्थविषयात् समासादपरस्मिन्निवार्थ एव छः प्रत्ययो भवति। काकतालीयम्। अजाकृपाणीयम्। अन्धकवर्तकीयम्। अतर्कितोपनतं चित्रीकरणमुच्यते। तत्कथम्? काकस्यागमनं यादृच्छिकम्, तालस्य पतनं च। तेन तालेन पतता काकस्य वधः कृतः। एवमेव देवदत्तस्य तत्रागमनम्, दस्यूनां चोपनिपातः। तैश्च तस्य वधः कृतः। तत्र यो देवदत्तस्य दस्यूनां च समागमः स काकतालसमागमसदृश इत्येक उपमार्थः। अतश्च देवदत्तस्य वधः, स काकतालवधसदृश इति द्वितीय

उपमार्थः। तत्र प्रथमे समासः, द्वितीये प्रत्ययः। समासश्चायमस्मादेव ज्ञापकात्, नह्यस्यापरं लक्षणमस्ति। सुप्सुपेति वा समासः। स चैवंविषय एव॥

## शर्करादिभ्योऽण् ॥ १०७ ॥

शर्करा इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थेऽण् प्रत्ययो भवति। शर्करेव शार्करम्। कापालिकम्॥ शर्करा। कपालिका। पिष्टिक। पुण्डरीक। शतपत्र। गोलोमन्। गोपुच्छ। नरालि। नकुला। सिकता। शर्करादिः॥

## अङ्गुल्यादिभ्यष्ठक् ॥ १०८ ॥

अङ्गुल्यादिभ्य इवार्थे ठक् प्रत्ययो भवति। अङ्गुलीवाङ्गुलिकः। भारुजिकः॥ अङ्गुलि। भरुज। बभ्रु। वल्गु। मण्डर। मण्डल। शष्कुल। कपि। उदश्वित्। गोणी। उरस्। शिखर। कुलिश। अङ्गुल्यादिः॥

## एकशालायाष्ठजन्यतरस्याम् ॥ १०९ ॥

एकशालाशब्दादिवार्थेऽन्यतरस्यां ठच् प्रत्ययो भवति। अन्यतरस्यांग्रहणेनानन्तर-ष्ठक् प्राप्यते। एकशालेव एकशालिकः, ऐकशालिकः॥

## कर्कलोहितादीकक् ॥ ११० ॥

कर्कलोहितशब्दाभ्यामिवार्थ ईकक् प्रत्ययो भवति। कर्कः शुक्लोऽश्वः, तेन सदृशः कार्कीकः। लौहितीकः स्फटिकः। स्वयमलोहितोऽप्युपाश्रयवशात् तथा प्रतीयते॥

## प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ॥ १११ ॥

प्रत्न पूर्व विश्व इम इत्येतेभ्य इवार्थे थाल् प्रत्ययो भवति छन्दसि विषये। तं प्रत्नथां पूर्वथां विश्वथेमथां ( ऋ० ५.४४.१ )॥

## पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ११२ ॥

इवार्थ इति निवृत्तम्। नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः संघाः पूगाः। पूगवाचिनः प्रातिपदिकादग्रामणीपूर्वात् स्वार्थे ञ्यः प्रत्ययो भवति। लौहध्वज्यः, लौहध्वज्यौ, लोहध्वजाः। शैब्यः, शैब्यौ, शिबयः। चातक्यः, चातक्यौ, चातकाः। अग्रामणी-पूर्वादिति किम्? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः। यज्ञदत्तकाः॥

## व्रातच्फञोरस्त्रियाम् ॥ ११३ ॥

नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः। व्रातवाचिभ्यः प्रातिपदिकेभ्यः च्फञन्तेभ्यः[1] च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियाम्। कापोतपाक्यः, कापोतपाक्यौ, कपोतपाकाः। व्रैहिमत्यः, व्रैहिमत्यौ, व्रीहिमन्तः। च्फञः खल्वपि—कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः। ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः। अस्त्रियामिति किम्? कपोतपाकी। व्रीहिमती। कौञ्जायनी। ब्राध्नायनी॥

## आयुधजीविसंघाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात् ॥ ११४ ॥

आयुधजीविनां संघ आयुधजीविसंघः। स वाहीकैर्विशेष्यते। वाहीकेषु य आयुधजीविसंघः, तद्वाचिनः प्रातिपदिकाद् ब्राह्मणराजन्यवर्जितात् स्वार्थे ञ्यट् प्रत्ययो भवति। ब्राह्मणे तद्विशेषग्रहणम्। राजन्ये तु स्वरूपग्रहणमेव। टकारो ङीबर्थः। तेनास्त्रियामिति नानुवर्तते। कौण्डीबृस्यः, कौण्डीबृस्यौ, कौण्डीबृसाः। क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः। मालव्यः, मालव्यौ, मालवाः। स्त्रियाम्—कौण्डीबृसी। क्षौद्रकी। मालवी। आयुधजीविग्रहणं किम्? मल्लाः। शयण्डाः। संघग्रहणं किम्? सम्राट्। वाहीकेष्विति किम्? शबराः। पुलिन्दाः। अब्राह्मणराजन्यादिति किम्? गोपालवा ब्राह्मणाः। शालङ्कायना राजन्याः॥

## वृकाट्टेण्यण् ॥ ११५ ॥

आयुधजीविसंघादिति वर्तते। वृकशब्दादायुधजीविनः स्वार्थे टेण्यण् प्रत्ययो भवति। टकारो ङीबर्थः, णकारो वृद्ध्यर्थः। वार्केण्यः, वार्केण्यौ, वृकाः। आयुधजीविसंघविशेषणं जातिशब्दाद् मा भूत्—कामक्रोधौ मनुष्याणां खादितारौ वृकाविव॥

## दामन्यादित्रिगर्तषष्ठाच्छः ॥ ११६ ॥

आयुधजीविसंघादिति वर्तते। दामन्यादिभ्यः प्रातिपदिकेभ्यः त्रिगर्तषष्ठेभ्यश्चायुधजीविसंघवाचिभ्यः स्वार्थे छः प्रत्ययो भवति। येषामायुधजीविनां संघानां षडन्तवर्गास्तत्र[2] च त्रिगर्तः षष्ठः। त्रिगर्तः षष्ठो येषाम्, ते त्रिगर्तषष्ठा इत्युच्यन्ते। तेषु चेयं स्मृतिः—

आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी।
क्रौष्टकिर्जालमानिश्च ब्राह्मगुप्तोऽथ जानकिः॥

इति। दामन्यादिभ्यस्तावत्—दामनीयः, दामनीयौ, दामनयः। औलपीयः, औलपीयौ,

१ – 'च्फञन्तेभ्यः' इति नास्ति मुद्रितेषु। २ – 'तेषां' इति है०।

औलपयः[1]। त्रिगर्तषष्ठेभ्यः खल्वपि—कौण्डोपरथीयः, कौण्डोपरथीयौ, कौण्डोपरथाः। दाण्डकीयः, दाण्डकीयौ, दाण्डकयः। क्रौष्टकीयः। जालमानीयः। ब्राह्मगुप्तीयः। जानकीयः॥ दामनी। औलपि। आकिदन्ती। काकरन्ति। काकदन्ति। शत्रुन्तपि। सार्वसेनि। बिन्दु। मौञ्जायन। उलभ। सावित्रीपुत्र। दामन्यादिः॥

## पर्श्वादियौधेयादिभ्यामणञौ ॥ ११७ ॥

आयुधजीविसंघादित्येव। पर्श्वादिभ्यो यौधेयादिभ्यश्च प्रातिपदिकेभ्य आयुधजीविसंघवाचिभ्यः स्वार्थेऽणञौ प्रत्ययौ भवतः। पार्शवः, पार्शवौ, पर्शवः। आसुरः, आसुरौ, असुराः। यौधेयः। शौक्रेयः॥ पर्शु। असुर। रक्षस्। बाह्लीक। वयस्। मरुत्। दशार्ह। पिशाच। विशाल। अशनि। कार्षापण। सत्वत्। वसु। पर्श्वादिः॥ यौधेय। कौशेय। क्रौशेय। शौक्रेय। शौभ्रेय। धार्तेय। वार्तेय। जाबालेय। त्रिगर्त। भरत। उशीनर। यौधेयादिः॥

## अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥ ११८ ॥

आयुधजीविसंघादिति निवृत्तम्। अभिजिदादिभ्योऽणन्तेभ्यः प्रातिपदिकेभ्यः स्वार्थे यञ् प्रत्ययो भवति। अभिजितोऽपत्यमित्यण्। तदन्ताद् यञ्। आभिजित्यः, आभिजित्यौ, आभिजिताः। वैदभृत्यः, वैदभृत्यौ, वैदभृताः। शालावत्यः, शालावत्यौ, शालावताः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः। गोत्रप्रत्ययस्यात्राणो ग्रहणमिष्यते। आभिजितो मुहूर्तः, आभिजितः स्थालीपाक इत्यत्र न भवति॥

## ञ्यादयस्तद्राजाः ॥ ११९ ॥

'पूगाञ्ञ्योऽग्रामणीपूर्वात्' (५.३.११२) इत्यतः प्रभृति ये प्रत्ययाः, ते तद्राजसंज्ञा भवन्ति। तथा चैवोदाहृतम्। तद्राजप्रदेशाः—'तद्राजस्य बहुषु०' (२.४.६२) इत्येवमादयः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य तृतीयः पादः॥



१ – 'उलपयः' इति मुद्रितेषु।

# ॥ पञ्चमाध्यायस्य चतुर्थः पादः ॥

## पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ॥ १ ॥

पादशतान्तस्य संख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् प्रत्ययो भवति, तत्सन्नियोगेन चान्तस्य लोपो भवति। यस्येति-( ६.४.१४८ )-लोपेनैव सिद्धे पुनर्वचनमनैमित्तिकार्थम्। यस्येतिलोपः परनिमित्तकः। तस्य स्थानिवद्भावात् 'पादः पत्' ( ६.४.१३० ) इति पद्भावो न स्यात्। अस्य त्वनैमित्तिकत्वाद् न स्थानिवत्त्वम्। द्वौद्वौ पादौ ददाति, द्विपदिकां ददाति। द्वेद्वे शते ददाति, द्विशतिकां ददाति। 'तद्धितार्थो०' ( २.१.५१ ) इति समासः। ततः प्रत्ययः। स्वभावात् च वुन्प्रत्ययान्तं स्त्रियामेव वर्तते। पादशतस्येति किम् ? द्वौद्वौ माषौ ददाति। संख्यादेरिति किम् ? पादंपादं ददाति। वीप्सायामिति किम्? द्वौ पादौ ददाति। द्वे शते ददाति। पादशतग्रहणमनर्थकम्, अन्यत्रापि दर्शनात्। द्विमोदकिकां ददाति। त्रिमोदकिकां ददाति॥

## दण्डव्यवसर्गयोश्च ॥ २ ॥

दमनं दण्डः। दानं व्यवसर्गः। दण्डव्यवसर्गयोर्गम्यमानयोः पादशतान्तस्य प्रातिपदिकस्य संख्यादेर्वुन् प्रत्ययो भवति, अन्तलोपश्च। अवीप्सार्थोऽयमारम्भः। द्वौ पादौ दण्डितो द्विपदिकां दण्डितः। द्वौ पादौ व्यवसृजति द्विपदिकां व्यवसृजति। द्विशतिकां दण्डितः। त्रिशतिकाम्। द्विशतिकां व्यवसृजति। त्रिशतिकाम्॥

## स्थूलादिभ्यः प्रकारवचने कन् ॥ ३ ॥

स्थूलादिभ्यः प्रकारवचने द्योत्ये कन् प्रत्ययो भवति। जातीयरोऽपवादः। प्रकारो विशेषः। स्थूलप्रकारः स्थूलकः। अणुकः। माषकः॥ कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम्॥ चञ्चत्प्रकारः चञ्चत्कः। बृहत्कः। चञ्चबृहयोरिति केचित् पठन्ति। तेषां चञ्चकः, बृहक इति उदाहरणं द्रष्टव्यम्॥ स्थूल। अणु। माष। इषु। कृष्ण तिलेषु ( ग० सू० १४० )। यव व्रीहिषु ( ग० सू० १४१ )। पाद्यकालावदाताः[1] सुरायाम्[2] ( ग० सू० १४२ )। गोमूत्र आच्छादने ( ग० सू० १४३ )। सुरा अहौ ( ग० सू० १४४ )। जीर्ण शालिषु ( ग० सू० १४५ )। पत्रमूले समस्तव्यस्ते ( ग० सू० १४६ )। कुमारीपुत्र। कुमार। श्वशुर। मणि। स्थूलादिः॥

---

१ - 'इक्षुतिलपाद्य०' इति बाल०। २ - 'सुराया' इत्यपपाठो मुद्रितेषु।

## अनत्यन्तगतौ क्तात् ॥ ४ ॥

अत्यन्तगतिरशेषसंबन्धः[1], तदभावोऽनत्यन्तगतिः। अनत्यन्तगतौ गम्यमानायां क्तान्तात् कन् प्रत्ययो भवति। भिन्नकः। छिन्नकः। अनत्यन्तगताविति किम् ? भिन्नम्। छिन्नम् ॥

## न सामिवचने ॥ ५ ॥

सामिवचन उपपदे क्तान्तात् कन् प्रत्ययो न भवति। सामिकृतम्। सामिभुक्तम्। वचनग्रहणं पर्यायार्थम्। अर्धकृतम्। नेमकृतम्। सामिवचने प्रतिषेधानर्थक्यम्, प्रकृत्याभिहितत्वात्। एवं तर्हि नैवायमनत्यन्तगतौ विहितस्य कनः प्रतिषेधः। किं तर्हि ? स्वार्थिकस्य। केन पुनः स्वार्थिकः कनं विहितः ? एतदेव ज्ञापकम्—भवति स्वार्थे कन्निति। तत्र यदेतदुच्यते—'एवं हि सूत्रमभिन्नतरकं भवति' ( महाभाष्य १.१७२ ), 'एतैर्हि बहुतरकं व्याप्यते' ( महाभाष्य १.३५९ ) इत्येवमादि, तदुपपन्नं भवति ॥

## बृहत्या आच्छादने ॥ ६ ॥

कन्ननुवर्तते, न प्रतिषेधः। बृहतीशब्दादाच्छादने वर्तमानात् स्वार्थे कन् प्रत्ययो भवति। बृहतिका। आच्छादन इति किम् ? बृहती छन्दः ॥

## अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः ॥ ७ ॥

अषडक्ष आशितङ्गु अलंकर्म अलंपुरुष इत्येतेभ्योऽध्युत्तरपदात् च स्वार्थे खः प्रत्ययो भवति। अविद्यमानानि षडक्षीण्यस्येति बहुव्रीहिः। 'बहुव्रीहौ सक्थ्यक्ष्णोः०' ( ५.४.११३ ) इति षच्, ततः खप्रत्ययः। अषडक्षीणो मन्त्रः। यो द्वाभ्यामेव क्रियते न बहुभिः। आशिता गावोऽस्मिन्नरण्य आशितंगवीनमरण्यम्। निपातनात् पूर्वपदस्य मुमागमः। अलंकर्मन्, अलंपुरुष इति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' ( वा० २.२.१८) इति समासः। अलं कर्मणे अलंकर्मीणः। अलं पुरुषाय अलंपुरुषीणः। अध्युत्तरपदस्तत्पुरुषः—अधिशब्दः शौण्डादिषु पठ्यते। राजाधीनः। नित्यश्चायं प्रत्ययः, उत्तरत्र विभाषाग्रहणात्। अन्येऽपि स्वार्थिका नित्याः प्रत्ययाः स्मर्यन्ते—तमबादयः ( ५.३.५५) प्राक् कनः ( ५.३.६४ ), ञ्यादयः ( ५.३.११२ ) प्रागु वुनः ( ५.४.१ ), आमादयः ( ५.४.११ ) प्राङ् मयटः ( ५.४.२१ ), बृहतीजात्यन्ताः ( ५.४.६,९ ) समासान्ताश्चेति ॥

---

१ – 'अशेषेण संबन्धः' इति बाल०।

## विभाषाञ्चेरदिक्स्त्रियाम् ॥ ८ ॥

अञ्चत्यन्तात् प्रातिपदिकाददिक्स्त्रियां वर्तमानात् स्वार्थे विभाषा खः प्रत्ययो भवति। प्राक्, प्राचीनम्। अर्वाक्, अर्वाचीनम्। अदिक्स्त्रियामिति किम् ? प्राची दिक्। प्रतीची दिक्। दिग्ग्रहणं किम् ? प्राचीना ब्राह्मणी। अर्वाचीना शिखा। स्त्रीग्रहणं किम्? प्राचीनं दिग् रमणीयम्। उदीचीनं दिग् रमणीयम्॥

## जात्यन्ताच्छ बन्धुनि ॥ ९ ॥

जात्यन्तात् प्रातिपदिकाद् बन्धुनि वर्तमानात् स्वार्थे छः प्रत्ययो भवति। बध्यतेऽस्मिन् जातिरिति बन्धुशब्देन द्रव्यमुच्यते। येन ब्राह्मणत्वादिजातिर्व्यज्यते तद् बन्धु द्रव्यम्। ब्राह्मणजातीयः, क्षत्रियजातीयः, वैश्यजातीय इति ब्राह्मणादिरेवोच्यते। बन्धुनीति किम्? ब्राह्मणजातिः शोभना॥

## स्थानान्ताद् विभाषा सस्थानेनेति चेत् ॥ १० ॥

स्थानान्तात् प्रातिपदिकाद् विभाषा छः प्रत्ययो भवति, सस्थानेन चेत् स्थानान्तमर्थवद् भवति। सस्थान इति तुल्य उच्यते, समानं स्थानमस्येति कृत्वा। पित्रा तुल्यः पितृस्थानीयः, पितृस्थानः। मातृस्थानीयः, मातृस्थानः। राजस्थानीयः, राजस्थानः। सस्थानेनेति किम् ? गोस्थानम्। अश्वस्थानम्। इतिकरणो विवक्षार्थः। तेन बहुव्रीहिः सस्थानशब्दार्थमुपस्थापयति, न तत्पुरुषः। चेच्छब्दः संबन्धार्थः। द्वयोर्विभाषयोर्मध्ये नित्या विधय इति पूर्वत्र नित्यः प्रत्ययः[१]॥

## किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥ ११ ॥

किम एकारान्तात् तिङन्तादव्ययेभ्यश्च यो विहितो घः स किमेत्तिङव्ययघः, तदन्तात् प्रातिपदिकादद्रव्यप्रकर्ष आमुप्रत्ययो भवति। यद्यपि द्रव्यस्य स्वतः प्रकर्षो नास्ति, तथापि क्रियागुणस्थः प्रकर्षो यदा द्रव्य उपचर्यते तदायं प्रतिषेधः। क्रियागुणयोरेवायं प्रकर्षे प्रत्ययः। किंतराम्। किंतमाम्। पूर्वाह्णेतराम्। पूर्वाह्णेतमाम्। पचतितराम्। पचतितमाम्। उच्चैस्तराम्। उच्चैस्तमाम्। अद्रव्यप्रकर्ष इति किम् ? उच्चैस्तरः। उच्चैस्तमः॥

## अमु चच्छन्दसि ॥ १२ ॥

किमेत्तिङव्ययघादद्रव्यप्रकर्षेऽमुप्रत्ययो भवति छन्दसि विषये। चकारादामु च।

---

१ – 'नित्यविधयः' इति मुद्रितः पाठः।

प्रतरं नु आयुः ( ऋ० ४.१२.६ )। प्रतरां नय ( मा० सं० १७.५१ )। स्वरादिषु अम् आम् इति पठ्यते। तस्मात् तदन्तस्याव्ययत्वम् ॥

## अनुगादिनष्ठक् ॥ १३ ॥

अनुगदतीत्यनुगादी। अनुगादिन्शब्दात् स्वार्थे ठक् प्रत्ययो भवति। आनुगादिकः॥

## णचः स्त्रियामञ् ॥ १४ ॥

'कर्मव्यतिहारे णच् स्त्रियाम्' ( ३.३.४३ ) इति णज् विहितः, तदन्तात् स्वार्थेऽञ् प्रत्ययो भवति स्त्रियां विषये। व्यावक्रोशी। व्यावहासी वर्तते। स्त्रीग्रहणं किमर्थं यावता णच् स्त्रियामेव विहितः, ततः स्वार्थिकस्तत्रैव भविष्यति ? एवं तर्ह्येतज् ज्ञापयति—'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि' ( परि० ८३ ) इति। तेन गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, देव एव देवतेत्येवमादि उपपन्नं भवति॥

## अणिनुणः ॥ १५ ॥

'अभिविधौ भाव इनुण्' ( ३.३.४४ ) विहितः, तदन्तात् स्वार्थेऽण् प्रत्ययो भवति। सांराविणं वर्तते। सांकूटिनम्॥

## विसारिणो मत्स्ये ॥ १६ ॥

विसरतीति विसारी। विसारिन्शब्दात् स्वार्थेऽण् प्रत्ययो भवति मत्स्येऽभिधेये। वैसारिणो मत्स्यः। मत्स्य इति किम् ? विसारी देवदत्तः॥

## संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥ १७ ॥

संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति। पौनःपुन्यम् अभ्यावृत्तिः। एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसंख्यानं क्रियाभ्यावृत्तिगणनम् , तत्र प्रत्ययः। पञ्च वारान् भुङ्क्ते पञ्चकृत्वः। सप्तकृत्वः। संख्याया इति किम् ? भूरीन् वारान् भुङ्क्ते। क्रियाग्रहणं किमर्थम् , यावताभ्यावृत्तिः क्रियाया एव संभवति, न द्रव्यगुणयोः ? उत्तरार्थं क्रियाग्रहणम्। 'एकस्य सकृच्च' ( ५.४.१९ ) इत्यत्र क्रियैव गण्यते, नाभ्यावृत्तिः, असंभवात्। अभ्यावृत्तिग्रहणं किम् ? क्रियामात्रगणने मा भूत्। पञ्च पाकाः। दश पाकाः। गणनग्रहणं किमर्थम्, यावता गणनात्मिकैव संख्या ? अक्रियमाणे गणनग्रहणे क्रियाभ्यावृत्तौ वर्तमानेभ्यः संख्येयवचनेभ्य एव प्रत्ययः स्यात्— शतं[1] वारान् भुङ्क्ते शतकृत्व इति। इह न स्यात्—शतं वाराणां भुङ्क्त इति। न ह्यत्राभ्यावृत्तौ शतशब्दः, संख्यानमात्रवृत्तित्वात्। गणनग्रहणात् तु सर्वत्र सिद्धं भवति॥

१ – 'शतवारान्' इत्यपपाठो मुद्रितेषु।

## द्वित्रिचतुर्भ्यः सुच् ॥ १८ ॥

द्वि त्रि चतुर् इत्येतेभ्यः संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः सुच् प्रत्ययो भवति। कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते। चतुर्भुक्तम्। चकारः स्वरार्थः॥

## एकस्य सकृच्च ॥ १९ ॥

एकशब्दस्य सकृदित्ययमादेशो भवति सुच् च प्रत्ययः क्रियागणने। कृत्वसुचोऽपवादः। अभ्यावृत्तिस्त्विह न संभवति। सकृद् भुङ्क्ते। सकृदधीते। एकः पाक इत्यत्र न भवति, अनभिधानात्॥

## विभाषा बहोर्धाविप्रकृष्टकाले ॥ २० ॥

बहुशब्दात् क्रियाभ्यावृत्तिगणने वर्तमानाद् विभाषा धा प्रत्ययो भवति। कृत्वसुचोऽपवादः। पक्षे सोऽपि भवति। अविप्रकृष्टग्रहणं क्रियाभ्यावृत्तिविशेषणम्। क्रियाणामुत्पत्तयश्चेदासन्नकाला भवन्ति, न विप्रकृष्टकालाः। बहुधा दिवसस्य भुङ्क्ते, बहुकृत्वो दिवसस्य भुङ्क्ते। अविप्रकृष्टकाल इति किम्? बहुकृत्वो मासस्य भुङ्क्ते॥

## तत्प्रकृतवचने मयट् ॥ २१ ॥

तदिति प्रथमा समर्थविभक्तिः। प्राचुर्येण प्रस्तुतं प्रकृतम्। प्रथमासमर्थात् प्रकृतोपाधिकेऽर्थे वर्तमानात् स्वार्थे मयट् प्रत्ययो भवति। टकारो ङीबर्थः। अन्नं प्रकृतम् अन्नमयम्। अपूपमयम्। अपरे पुनरेवं सूत्रार्थमाहुः। प्रकृतमित्युच्यतेऽस्मिन्निति प्रकृतवचनम्। तदिति प्रथमासमर्थात् प्रकृतवचनेऽभिधेये मयट् प्रत्ययो भवति। अन्नं प्रकृतमस्मिन् अन्नमयो यज्ञः। अपूपमयं पर्व। वटकमयी यात्रा। द्वयमपि प्रमाणम्, उभयथा सूत्रप्रणयनात्॥

## समूहवच्च बहुषु ॥ २२ ॥

तत् प्रकृतवचन इत्येव। बहुषु प्रकृतेषूच्यमानेषु समूहवत् प्रत्यया भवन्ति। चकाराद् मयट् च। मोदकाः प्रकृताः प्राचुर्येण प्रस्तुता मौदकिकम्, मोदकमयम्। शाष्कुलिकम्, शष्कुलीमयम्। 'अतिवर्तन्तेऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनानि' (परि० ८३)। द्वितीये सूत्रार्थे—मोदकाः प्रकृता अस्मिन् यज्ञे मौदकिको यज्ञः, मोदकमयः। शाष्कुलिकः, शष्कुलीमयः॥

## अनन्तावसथेतिहभेषजाञ् ञ्यः ॥ २३ ॥

अनन्तादिभ्यः स्वार्थे ञ्यः प्रत्ययो भवति। अनन्त एव आनन्त्यम्। आवसथ एवावसथ्यम्। इति ह ऐतिह्यम्। निपातसमुदायोऽयमुपदेशपारम्पर्ये वर्तते। भेषजमेव भैषज्यम्। महाविभाषया विकल्पते प्रत्ययः॥

## देवतान्तात्तादर्थ्ये यत् ॥ २४ ॥

देवताशब्दान्तात् प्रातिपदिकात् चतुर्थीसमर्थात् तादर्थ्ये यत् प्रत्ययो भवति। तदर्थ एव तादर्थ्यम्। चातुर्वर्ण्यादित्वात् ष्यञ्। तदिति प्रकृत्यर्थो निर्दिश्यते। अग्निदेवतायै इदम् अग्निदेवत्यम्। पितृदेवत्यम्। वायुदेवत्यम्॥

## पादार्घाभ्यां च ॥ २५ ॥

तादर्थ्य इत्येव। पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां तादर्थ्येऽभिधेये यत् प्रत्ययो भवति। पादार्थमुदकं पाद्यम्। अर्घ्यम्। अनुक्तसमुच्चयार्थश्चकारः। यथादर्शनमन्यत्रापि प्रत्ययो भवति। एष वै छंन्दस्यंः प्रजापंतिः ( तै० सं० १.६.११.४ )। वसु, अपस्,[1]ओक, कवि, क्षेम, उदक, वर्चस्, निष्केवल, उक्थ, जन, पूर्व, नव, सूर, मर्त, यविष्ठ इत्येतेभ्यः छन्दसि स्वार्थे यत् प्रत्ययो भवति। अग्निरींशे वसव्यंस्य ( ऋ० ४.५५.८ )। अप३स्यो वंसानाः ( मै० सं० २.६.८ )। द्वितीयाबहुवचनस्यालुक्। अपो वसाना इत्यर्थः। स्व ओक्यें ( ऋ० १.९१.१३ )। कुव्योऽसि कव्यवांहनः ( मै० सं० १.२.१२ )। क्षेम्यमध्यवंस्यति ( तै० सं० ५.२.१.७ )। वायुर्वर्चस्यः। निष्केवल्यं ( काठ० सं० २८.१० ) शंसन्ति। उक्थ्यं शंसति। जन्यं ताभिः। पूर्व्या विंदुः ( शौ० सं० १९.३४.६ )। स्तोमं जनयामि नव्यंम् ( ऋ० १.१०९.२ )। सूर्यंः ( ऋ० १.२३.१७ )। मर्त्यंः ( ऋ० १.१९.२ )। यविष्ठ्यंः ( ऋ० १.३६.६ )॥ आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम् ( द्र०—शौ० सं० १०.५.३६ )॥ समशब्दादावतुप्रत्ययो वक्तव्यः॥ समांवद्वसति ( मै० सं० २.२.७ )॥ नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्ययाः॥ नूत्नम्। नूतनम्। नवीनम् ॥ नश्च पुराणे प्रात्॥ पुराणे वर्तमानात् प्रशब्दाद् नः प्रत्ययो भवति, चकारात् त्नप्तनप्खाश्च। प्रणम्। प्रत्नम् ( ऋ० १.३६.४ )। प्रतनम्। प्रीणम्॥ भागरूपनामभ्यो धेयः प्रत्ययो वक्तव्यः॥ भागधेयम्। रूपधेयम्। नामधेयम्॥ मित्राच्छन्दसि॥ मित्रधेयें यतस्व ( तै० सं० ४.१.७.२ )॥ आग्नीध्रसाधारणादञ्॥ आग्नींध्रम् ( तै० सं० ३.१.६.१ )। साधांरणम् (तै० सं० २.६.१.६ )। स्त्रियां ङीप्—आग्नीध्री। सांधारणी ( ऋ० १.१६७.४ )। वाप्रकरणाच्च विकल्पन्त एतान्युपसंख्यानानि, तेन यथाप्राप्तमपि भवति। आग्नीध्रा शाला। साधारणा भूरिति॥ अयवसमरुद्भ्यां छन्दस्यञ् वक्तव्यः॥ आयंवसे रमन्ते

१ – ' अयस् ' इति बाल०।

(तै० सं० ५.२.८.३)। मारुतं शर्धः ( ऋ० १.१०६.१ )॥

## अतिथेर्ञ्यः ॥ २६ ॥

तादर्थ्य इत्येव। अतिथिशब्दात् चतुर्थीसमर्थात् तादर्थ्येऽभिधेये ञ्यः प्रत्ययो भवति। अतिथय इदम् आतिथ्यम्॥

## देवात्तल् ॥ २७ ॥

तादर्थ्य इति निवृत्तम्। देवशब्दात् स्वार्थे तल् प्रत्ययो भवति। देव एव देवता॥

## अवेः कः ॥ २८ ॥

अविशब्दात् स्वार्थे कः प्रत्ययो भवति। अविरेव अविकः॥

## यावादिभ्यः कन् ॥ २९ ॥

याव इत्येवमादिभ्यः स्वार्थे कन् प्रत्ययो भवति। याव एव यावकः। मणिकः॥ याव। मणि। अस्थि। चण्ड। पीत। स्तम्ब। ऋतावुष्णशीते ( ग० सू० १४७ )। पशौ लूनवियाते ( ग० सू० १४८ )। अणु निपुणे ( ग० सू० १४९ )। पुत्र कृत्रिमे ( ग० सू० १५० )। स्नात वेदसमाप्तौ ( ग० सू० १५१ )। शून्य रिक्ते ( ग० सू० १५२ )। दान कुत्सिते ( ग० सू० १५३ )। तनु सूत्रे ( ग० सू० १५४ )। ईयसश्च ( ग० सू० १५५)। श्रेयस्कः। ज्ञात। कुमारीक्रीडनकानि च ( ग० सू० १५६ )। यावादिः॥

## लोहितान् मणौ ॥ ३० ॥

लोहितशब्दाद् मणौ वर्तमानात् स्वार्थे कन् प्रत्ययो भवति। लोहितो मणिर्लोहितकः। मणाविति किम् ? लोहितः॥

## वर्णे चानित्ये ॥ ३१ ॥

अनित्ये वर्णे वर्तमानात् लोहितशब्दात् स्वार्थे कन् प्रत्ययो भवति। लोहितकः कोपेन। लोहितकः पीडनेन। अनित्य इति किम् ? लोहितो गौः। लोहितं रुधिरम्॥ लोहिताल्लिङ्गबाधनं वा वक्तव्यम्॥ लोहितिका कोपेन, लोहिनिका कोपेन॥

## रक्ते ॥ ३२ ॥

लाक्षादिना रक्ते यो लोहितशब्दः, तस्मात् कन् प्रत्ययो भवति। लोहितकः कम्बलः।

लोहितकः पटः। लिङ्गबाधनं वेत्येव। लोहितिका, लोहिनिका शाटी॥

## कालाच्च ॥ ३३ ॥

वर्णे चानित्ये रक्त इति द्वयमप्यनुवर्तते। कालशब्दादनित्ये वर्तमानाद् रक्ते च कन् प्रत्ययो भवति। कालकं मुखं वैलक्ष्येण। रक्ते—कालकः पटः। कालिका शाटी॥

## विनयादिभ्यष्ठक् ॥ ३४ ॥

विनय इत्येवमादिभ्यः स्वार्थे ठक् प्रत्ययो भवति। विनय एव वैनयिकः। सामयिकः। औपयिकः। विभाषाग्रहणेन विकल्प्यते प्रत्ययः॥ विनय। समय। उपायाद् ध्रस्वत्वं च (ग० सू० १५७)। संगति। कथंचित्। अकस्मात्। समयाचार। उपचार। समाचार। व्यवहार। संप्रदान। समुत्कर्ष। समूह। विशेष। अत्यय। विनयादिः॥

## वाचो व्याहृतार्थायाम् ॥ ३५ ॥

व्याहृतः प्रकाशितोऽर्थो यस्यास्तस्यां वाचि वर्तमानाद् वाच्शब्दात् स्वार्थे ठक् प्रत्ययो भवति। पूर्वमन्येनोक्तार्थत्वात् संदेशवाग् व्याहृतार्थेत्युच्यते। वाचिकं कथयति। वाचिकं श्रद्दधे। व्याहृतार्थायामिति किम् ? मधुरा वाक् देवदत्तस्य॥

## तद्युक्तात् कर्मणोऽण् ॥ ३६ ॥

व्याहृतार्थया वाचा यत् कर्म युक्तम् , तदभिधायिनः कर्मशब्दात् स्वार्थेऽण् प्रत्ययो भवति। कर्मैव कार्मणम्। वाचिकं श्रुत्वा तथैव यत् कर्म क्रियते तत् कार्मणमित्युच्यते ॥ अण्प्रकरणे कुलालवरुडनिषादकर्मारचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानम् ॥ कुलाल एव कौलालः (मा० सं० ३०.७)। वारुडः। नैषादः (मा० सं० ३०.८)। कार्मारः (ऋ० ९.११२.२)। चाण्डालः (मा० सं० ३०.२१)। मैत्रः (मा० सं० ३९.५)। आमित्रः (ऋ० ६.२८.३)। सान्नाय्यानुजावरानुषूकाष्टुभचातुष्प्राश्यराक्षोघ्न-वैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाः[1] एतेऽणन्ताः स्वार्थिकाश्छन्दसि भाषायां चेष्यन्ते। सांनाय्यम् (तै० सं० २.५.३.७)। आनुजावरः (तै० सं० २.३.४.२)। आनुषूकः (तै० सं. २.३.४.४)। आष्टुभः[1] चातुष्प्राश्यः (काठ० सं० ८.१०)। राक्षोघ्नम् (तै० सं० ५.१.१०.२)। वैयातः। वैकृतः। वारिवस्कृतः (तै० सं० ४.५.२.२)। आग्रायणः (मै० सं० २.७.१९)। आग्रहायणः। सान्तपनः (मा० सं० १७.८५)[2]॥

---

१ – 'आष्टुभ' इति सार्वत्रिकः पाठः। न्यासे तु 'आनुष्टुभ' इति। महाभाष्यपदमञ्जर्योस्तु नास्ति पाठद्वयमपि। २ – 'सांनाय्यम् .........सान्तपनः' इति नास्ति बाल०, तारा०।

## ओषधेरजातौ ॥ ३७ ॥

ओषधिशब्दादजातौ वर्तमानात् स्वार्थेऽण् प्रत्ययो भवति। औषधं पिबति। औषधं ददाति। अजाताविति किम् ? ओषधयः क्षेत्रे रूढा भवन्ति॥

## प्रज्ञादिभ्यश्च ॥ ३८ ॥

प्रजानातीति प्रज्ञः। प्रज्ञ इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थेऽण् प्रत्ययो भवति। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। यस्यास्तु प्रज्ञा विद्यते सा प्राज्ञा भवति—'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' (५.२.१०१) इति। विदन्नित्यत्र पठ्यते। विदेः शत्रन्तस्य ग्रहणम्, 'विदेः शतुर्वसुः' (७.१.३६) इत्यत एव ज्ञापकात् पाक्षिको वस्वादेशः। अन्यतरस्यांग्रहणं वा तत्रानुवर्तते—'तुह्योस्तातङाशिष्यन्यतरस्याम्' (७.१.३५) इति॥ प्रज्ञ। वणिज्। उशिज्। उष्णिज्। प्रत्यक्ष। विद्वस्। विदन्। षोडन्। षोडश। विद्या। मनस्। श्रोत्र शरीरे (ग० सू० १५८)। श्रौत्रम्। जुह्वत् कृष्णमृगे (ग० सू० १५९)। चिकीर्षत्। चोर। शत्रु। योध। चक्षुस्। वक्षस्। धूर्त। वसु। एत्। मरुत्। क्रुङ्। राजा। सत्वन्तु। दशार्ह। वयस्। आतुर। रक्षस्। पिशाच। अशनि। कार्षापण। देवता। बन्धु। प्रज्ञादिः॥

## मृदस्तिकन् ॥ ३९ ॥

मृच्छब्दात् स्वार्थे तिकन् प्रत्ययो भवति। विकल्पः सर्वत्रानुवर्तते। मृदेव मृत्तिका॥

## सस्नौ प्रशंसायाम् ॥ ४० ॥

प्रशंसोपाधिकेऽर्थे वर्तमानाद् मृच्छब्दात् स स्न इत्येतौ प्रत्ययौ भवतः। रूपपोऽपवादः। प्रशस्ता मृद् मृत्सा। मृत्स्ना। नित्यश्चायं प्रत्ययः, उत्तरसूत्रेऽन्यतरस्यांग्रहणात्॥

## वृकज्येष्ठाभ्यां तिल्तातिलौ चच्छन्दसि ॥ ४१ ॥

प्रशंसायामित्येव। वृकज्येष्ठाभ्यां प्रशंसोपाधिकेऽर्थे वर्तमानाभ्यां यथासंख्यं तिल्तातिलौ प्रत्ययौ भवतश्छन्दसि विषये। रूपपोऽपवादौ। वृकतिः (ऋ० ४.४१.४)। ज्येष्ठतातिः (ऋ० ५.४४.१)॥

## बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ४२ ॥

बह्वर्थादल्पार्थात् च कारकाभिधायिनः शब्दात् शस् प्रत्ययो भवत्यन्यतरस्याम्। विशेषानभिधानात् च सर्वं कर्मादिकारकं गृह्यते। बहूनि ददाति, बहुशो ददाति। अल्पं

ददाति, अल्पशो ददाति। बहुभिर्ददाति, बहुशो ददाति। अल्पेन, अल्पशः। बहुभ्यः, बहुशः। अल्पाय, अल्पश इत्येवमाद्युदाहार्यम्। बह्वल्पार्थादिति किम्? गां ददाति। अश्वं ददाति। कारकादिति किम्? बहूनां स्वामी। अल्पानां स्वामी। अर्थग्रहणात् पर्यायेभ्योऽपि भवति। भूरिशो ददाति। स्तोकशो ददाति॥ बह्वल्पार्थान् मङ्गलवचनम्[1]॥ यत्र मङ्गलं गम्यते तत्रायं प्रत्यय इष्यते। बहुशो ददातीत्याभ्युदयिकेषु कर्मसु। अल्पशो ददातीत्यनेष्टेषु कर्मसु॥

## संख्यैकवचनाच्च वीप्सायाम् ॥ ४३ ॥

संख्यावाचिभ्यः प्रातिपदिकेभ्य एकवचनात् च वीप्सायां द्योत्यायां शस् प्रत्ययो भवत्यन्यतरस्याम्। द्वौद्वौ मोदकौ ददाति द्विशः। त्रिशः। एकवचनात् खल्वपि—कार्षापणंकार्षापणं ददाति कार्षापणशः। माषशः। पादशो ददाति। एकोऽर्थ उच्यते येन तदेकवचनम्। कार्षापणादयश्च परिमाणशब्दा वृत्तावेकार्था एव भवन्ति। संख्यैकवचनादिति किम्? घटंघटं ददाति। वीप्सायामिति किम्? द्वौ ददाति। कार्षापणं ददाति। कारकादित्येव—द्वयोर्द्वयोः स्वामी। कार्षापणस्यकार्षापणस्य स्वामी॥

## प्रतियोगे पञ्चम्यास्तसिः ॥ ४४ ॥

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात् तसिः प्रत्ययो भवति। प्रद्युम्नो वासुदेवतः प्रति। अभिमन्युरर्जुनतः प्रति। वाग्रहणानुवृत्तेर्विकल्पेन भवति। वासुदेवादर्जुनादित्यपि भवति॥ तसिप्रकरण आद्यादिभ्य उपसंख्यानम्॥ आदौ आदितः। मध्यतः। पार्श्वतः। पृष्ठतः। आकृतिगणश्चायम्॥

## अपादाने चाहीयरुहोः ॥ ४५ ॥

अपादाने या पञ्चमी तस्याः पञ्चम्या वा तसिः प्रत्ययो भवति, तच्चेदपादानं हीयरुहोः संबन्धि न भवति। ग्रामत आगच्छति, ग्रामात्। चोरतो बिभेति, चोरात्। अध्ययनतः पराजयते, अध्ययनात्। अहीयरुहोरिति किम्? सार्थाद् हीयते। पर्वतादवरोहति। हीयत इति विकारनिर्देशो जहातेः प्रतिपत्त्यर्थः, जिहीतेर्मा[2] भूत्। भूमित उज्जिहीते। भूमेरुज्जिहीते। कथं 'मन्त्रो हीनः स्वरतो वर्णतो वा' (पा० श्लो० शि० ५२) इति। नैषा पञ्चमी। किं तर्हि? तृतीया। स्वरेण वर्णेन वा हीन इत्यर्थः॥

---

१ – 'मङ्गलामङ्गलवचनम्' इति मुद्रितेषु पाठः। स काशिकान्यासपदमञ्जरीभिर्न संवदते।

२ – जिहीतेरिति तिङन्तानुकरणम्, श्तिपि जिहातेरिति स्यात्।

## अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ॥ ४६ ॥

अतिक्रम्य ग्रहोऽतिग्रहः। अचलनमव्यथनम्। क्षेपो निन्दा। अतिग्रहादिविषये या तृतीया तदन्ताद् वा तसिः प्रत्ययो भवति, सा चेत् कर्तरि न भवति। वृत्तेनातिगृह्यते, वृत्ततोऽतिगृह्यते। चारित्रेणातिगृह्यते, चारित्रतोऽतिगृह्यते। सुष्ठुवृत्तवानन्यानतिक्रम्य वृत्तेन गृह्यत इत्यर्थः। अव्यथने—वृत्तेन न व्यथते, वृत्ततो न व्यथते। चारित्रेण न व्यथते, चारित्रतो न व्यथते। वृत्तेन न चलतीत्यर्थः। क्षेपे—वृत्तेन क्षिप्तः, वृत्ततः क्षिप्तः। चारित्रेण क्षिप्तः, चारित्रतः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः। अकर्तरीति किम्? देवदत्तेन क्षिप्तः॥

## हीयमानपापयोगाच्च ॥ ४७ ॥

अकर्तरि तृतीयाया इत्येव। हीयमानेन पापेन च योगो यस्य तद्वाचिनः शब्दात् परा या तृतीया विभक्तिरकर्तरि तदन्ताद् वा तसिः प्रत्ययो भवति। वृत्तेन हीयते, वृत्ततो हीयते। चारित्रेण हीयते, चारित्रतो हीयते। पापयोगात्—वृत्तेन पापः, वृत्ततः पापः। चारित्रेण पापः, चारित्रतः पापः। क्षेपस्य चाविवक्षायां तत्त्वाख्यायामिदमुदाहरणम्। क्षेपे हि पूर्वेणैव सिद्धम्। अकर्तरीत्येव—देवदत्तेन हीयते॥

## षष्ठ्या व्याश्रये ॥ ४८ ॥

नानापक्षसमाश्रयो व्याश्रयः। व्याश्रये गम्यमाने षष्ठ्यन्ताद् वा तसिः प्रत्ययो भवति। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्। षष्ठी चात्र पक्षापेक्षैव। अर्जुनस्य पक्षे, कर्णस्य पक्ष इत्यर्थः। व्याश्रय इति किम्? वृक्षस्य शाखा॥

## रोगाच्चापनयने ॥ ४९ ॥

रोगो व्याधिः, तद्वाचिनः शब्दाद् या षष्ठी विभक्तिः, तदन्ताद् वा तसिः प्रत्ययो भवत्यपनयने गम्यमाने। अपनयनं प्रतीकारः, चिकित्सेत्यर्थः। प्रवाहिकातः कुरु। कासतः कुरु। छर्दिकातः कुरु। प्रतीकारमस्याः कुर्वित्यर्थः। अपनयन इति किम्? प्रवाहिकायाः प्रकोपनं कुरु॥

## अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः ॥ ५० ॥

कारणस्य विकाररूपेणाभूतस्य तदात्मना भावोऽभूततद्भावः। संपद्यतेः कर्ता संपद्यकर्ता। संपद्यकर्तरि वर्तमानात् प्रातिपदिकादभूततद्भावे गम्यमाने कृभ्वस्तिभिर्धातुभिर्योगे च्विः प्रत्ययो भवति। अशुक्लः शुक्लः संपद्यते, तं करोति शुक्लीकरोति।

मलिनं शुक्लीकरोति। शुक्लीभवति। शुक्लीस्यात्। घटीकरोति मृदम्। घटीभवति। घटीस्यात्। अभूततद्भाव इति किम्? शुक्लं करोति। नात्र प्रकृतिर्विवक्षिता। कृभ्वस्तियोग इति किम्? अशुक्लः शुक्लो जायते। संपद्यकर्तरीति किम्, यावता अभूततद्भावसामर्थ्याद् लब्धमेव संपद्यकर्तृत्वम्? कारकान्तरसंपत्तौ मा भूत्। अदेवगृहे देवगृहे संपद्यते। देवगृहस्याधेयविशेषसंबन्धेनाभूततद्भावः, स त्वधिकरणस्य[1] न कर्तुरिति॥

## अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ॥ ५१ ॥

अरुःप्रभृतीनामन्तस्य लोपो भवति च्विश्च प्रत्ययः। अत्र सर्वविशेषणसंबन्धात् पूर्वेणैव प्रत्ययः सिद्धः, लोपमात्रार्थ आरम्भः। अनरुररुः संपद्यते, तं करोति अरूकरोति। अरूभवति। अरूस्यात्। मनस्—उन्मनीकरोति। उन्मनीभवति। उन्मनीस्यात्। चक्षुस्—उच्चक्षूकरोति। उच्चक्षूभवति। उच्चक्षूस्यात्। चेतस्—विचेतीकरोति। विचेतीभवति। विचेतीस्यात्। रहस्—विरहीकरोति। विरहीभवति। विरहीस्यात्। रजस्—विरजीकरोति। विरजीभवति। विरजीस्यात्॥

## विभाषा साति कात्स्न्र्ये ॥ ५२ ॥

अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरीति सर्वमनुवर्तते। अस्मिन् विषये विभाषा सातिः प्रत्ययो भवति कात्स्न्र्ये गम्यमाने। यदि प्रकृतिः कृत्स्नां विकारात्मतामापद्यत इत्यर्थः। अग्निसाद्भवति शस्त्रम्, अग्नीभवति शस्त्रम्। उदकसाद्भवति लवणम्, उदकीभवति लवणम्। कात्स्न्र्य इति किम्? एकदेशेन पटः शुक्लीभवति। विभाषाग्रहणं च्वेः प्रापकम्। प्रत्ययविकल्पस्तु महाविभाषयैव सिद्धः॥

## अभिविधौ संपदा च ॥ ५३ ॥

अभिविधिरभिव्याप्तिः। अभिविधौ गम्यमाने च्विविषये सातिः प्रत्ययो भवति संपदा योगे, चकारात् कृभ्वस्तिभिश्च। विभाषाग्रहणानुवृत्तेश्च्विरप्यभ्यनुज्ञायते। स तु कृभ्वस्तिभिरेव योगे भवति, न संपदा। अग्निसात्संपद्यते। अग्निसाद्भवति। उदकसात्संपद्यते। उदकसाद्भवति लवणम्। अग्नीभवति। उदकीभवति। अथाभिविधेः कात्स्न्र्यस्य च को विशेषः? यत्रैकदेशेनापि सर्वा प्रकृतिर्विकारमापद्यते सोऽभिविधिः। यथास्यां सेनायामुत्पातेन सर्वं शस्त्रमग्निसात्संपद्यते, वर्षासु सर्वं लवणमुदकसात्संपद्यत इति। कात्स्न्र्यं तु सर्वात्मना द्रव्यस्य विकाररूपापत्तौ भवति॥

---

१ - 'सत्त्वाधिकरणस्य' इति मुद्रितः पाठः।

## तदधीनवचने ॥ ५४ ॥

अभूततद्भाव इति निवृत्तम्, अर्थान्तरोपादानात्। कृभ्वस्तियोगे संपदा चेति वर्तते। तदधीनं तदायत्तं तत्स्वामिकमित्यर्थः। स्वामिसामान्यमीशितव्यसामान्यं च तदधीनशब्देन निर्दिश्यते। स्वामिविशेषवाचिनः प्रातिपदिकादीशितव्येऽभिधेये सातिः प्रत्ययो भवति कृभ्वस्तिभिः संपदा च योगे। राजाधीनं करोति, राजसात्करोति। राजसाद्भवति। राजसात्स्यात्। राजसात्संपद्यते। ब्राह्मणसात्करोति। ब्राह्मणसाद्भवति। ब्राह्मणसात्स्यात्। ब्राह्मणसात्संपद्यते ॥

## देये त्रा च ॥ ५५ ॥

तदधीनवचन इत्यनुवर्तते। तस्य विशेषणं देयग्रहणम्। दातव्यं देयम्। तदधीने देये त्रा प्रत्ययो भवति, चकारात् सातिश्च कृभ्वस्तिभिः संपदा च योगे। ब्राह्मणेभ्यो देयमिति यद् विज्ञातम् , तद् यदा तेषां समर्पणेन तदधीनं क्रियते तदा त्रा प्रत्ययः। ब्राह्मणाधीनं देयं करोति, ब्राह्मणसात्करोति। ब्राह्मणत्राकरोति। ब्राह्मणत्राभवति। ब्राह्मणत्रास्यात्। ब्राह्मणत्रासंपद्यते। देय इति किम् ? राजसाद्भवति राष्ट्रम् ॥

## देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥ ५६ ॥

सातिर्निवृत्तः, त्राप्रत्ययोऽनुवर्तते। देवादिभ्यः प्रातिपदिकेभ्यो द्वितीयासप्तम्यन्तेभ्यः त्रा प्रत्ययो भवति बहुलम्। कृभ्वस्तिभिरिति नात्र संबध्यते। सामान्येन विधानम्। देवान् गच्छति देवत्रा गच्छति। देवेषु वसति देवत्रा वसति। मनुष्यान् गच्छति मनुष्यत्रा गच्छति। मनुष्येषु वसति मनुष्यत्रा वसति[1]। पुरुषान् गच्छति पुरुषत्रा गच्छति। पुरुषेषु वसति पुरुषत्रा वसति। पुरून् गच्छति पुरुत्रा गच्छति। पुरुषु वसति पुरुत्रा वसति। मर्त्यान् गच्छति मर्त्यत्रा गच्छति। मर्त्येषु वसति मर्त्यत्रा वसति। बहुलवचनादन्यत्रापि भवति। बहुत्रा जीवंतो मनः ( ऋ० १०.१६४.२ ) इति ॥

## अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ॥ ५७ ॥

यत्र ध्वनावकारादयो वर्णा विशेषरूपेण न व्यज्यन्ते सोऽव्यक्तः। तस्यानुकरणमव्यक्तानुकरणम्। द्व्यज् अवरार्धं यस्य तद् द्व्यजवरार्धम्। अवरशब्दोऽपकर्षे। यस्यापकर्षे क्रियमाणे सुष्ठु न्यूनमर्धं द्व्यच्कं संपद्यते, तस्मादव्यक्तानुकरणादनितिपराड् डाच् प्रत्ययो भवति। कृभ्वस्तियोग इत्यनुवर्तते। यस्य च द्विर्वचने कृते द्व्यजवरार्धं ततः प्रत्ययः।

---

१ – अतोऽग्रे ' एवमन्येऽप्युदाहार्याः ' इत्यनावश्यकः पाठः प्रायिकः।

'डाचि बहुलं द्वे भवतः' ( वा० ८.१.१२ ) इति विषयसप्तमी। डाचि विवक्षिते द्विर्वचनमेव पूर्वं क्रियते, पश्चात् प्रत्ययः। पटपटाकरोति। पटपटाभवति। पटपटास्यात्। दमदमाकरोति। दमदमाभवति। दमदमास्यात्। अव्यक्तानुकरणादिति किम् ? दृषत्करोति। द्व्यजवरार्धादिति किम् ? श्रत्करोति। अवरग्रहणं किम् ? खरटखरटाकरोति। त्रपटत्रपटाकरोति। अनिताविति किम् ? पटिति करोति। चकारः स्वरार्थः स्वरितबाधनार्थः। पटपटासि। अत्र 'स्वरितो वानुदात्ते पदादौ' ( ८.२.६ ) इति स्वरितो न भवति। केचिद् द्व्यजवरार्ध्यादिति यकारं पठन्ति, स स्वार्थिको विज्ञेयः॥

## कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ॥ ५८ ॥

द्वितीयतृतीयादिभ्यः शब्देभ्यः कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे, नान्यत्र। पुनः कृञ्ग्रहणं भ्वस्त्योर्निवृत्त्यर्थम्। द्वितीयाकरोति। द्वितीयं कर्षणं विलेखनं करोतीत्यर्थः। तृतीयाकरोति। शम्बाकरोति। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषतीत्यर्थः। बीजाकरोति। सह बीजेन विलेखनं करोतीत्यर्थः। कृषाविति किम् ? द्वितीयं करोति पदम्॥

## संख्यायाश्च गुणान्तायाः ॥ ५९ ॥

कृञ इत्यनुवर्तते, कृषाविति च। संख्यावाचिनः शब्दस्य गुणशब्दोऽन्ते समीपे यत्र संभवति, सा संख्या गुणान्तेत्युच्यते। तादृशात् प्रातिपदिकात् कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे। द्विगुणं विलेखनं करोति क्षेत्रस्य, द्विगुणाकरोति क्षेत्रम्। त्रिगुणाकरोति। कृषाविति किम् ? द्विगुणां करोति रज्जुम्॥

## समयाच्च यापनायाम् ॥ ६० ॥

कृञ इत्येव। कृषाविति निवृत्तम्। कर्तव्यस्यावसरप्राप्तिः समयः, तस्यातिक्रमणं यापना। समयशब्दाद् यापनायां गम्यमानायां डाच् प्रत्ययो भवति कृञो योगे। समयाकरोति। समयं यापयति, कालक्षेपं करोतीत्यर्थः। यापनायामिति किम् ? समयं करोति॥

## सपत्रनिष्पत्रादतिव्यथने ॥ ६१ ॥

कृञ इत्येव। सपत्रनिष्पत्रशब्दाभ्यामतिव्यथने डाच् प्रत्ययो भवति कृञो योगे सति। अतिव्यथनमतिपीडनम्। सपत्राकरोति मृगं व्याधः। सपत्रं शरमस्य शरीरे प्रवेशयतीत्यर्थः। निष्पत्राकरोति। शरीराच्छरमपरपार्श्वे निष्क्रामयतीत्यर्थः। अतिव्यथन इति किम् ? सपत्रं वृक्षं करोति जलसेचकः। निष्पत्रं वृक्षतलं करोति भूमिशोधकः॥

## निष्कुलान्निष्कोषणे ॥ ६२ ॥

कृञ इत्येव। निष्कुलशब्दाद् निष्कोषणे वर्तमानात् कृञो योगे डाच् प्रत्ययो भवति। निष्कोषणमन्तरवयवानां बहिर्निष्कासनम्। निष्कुलाकरोति पशून्। निष्कुष्णातीत्यर्थः। निष्कोषण इति किम्? निष्कुलान् करोति शत्रून्॥

## सुखप्रियादानुलोम्ये ॥ ६३ ॥

सुखप्रियशब्दाभ्यामानुलोम्ये वर्तमानाभ्यां कृञो योगे डाच् प्रत्ययो भवति। आनुलोम्यमनुकूलता, आराध्यचित्तानुवर्तनम्। सुखाकरोति। प्रियाकरोति। स्वाम्यादेश्चित्तमाराधयतीत्यर्थः। सुखं प्रियं वा कुर्वन्नप्यानुलोम्येऽवस्थित एवमुच्यते। आनुलोम्य इति किम्? सुखं करोति, प्रियं करोत्यौषधपानम्॥

## दुःखात् प्रातिलोम्ये ॥ ६४ ॥

कृञ इत्येव। दुःखशब्दात् प्रातिपदिकात् प्रातिलोम्ये गम्यमाने डाच् प्रत्ययो भवति कृञो योगे। प्रातिलोम्यं प्रतिकूलता। स्वाम्यादेश्चित्तपीडनम्। दुःखाकरोति भृत्यः। प्रातिलोम्य इति किम्? दुःखं करोति कदन्नम्॥

## शूलात् पाके ॥ ६५ ॥

कृञ इत्येव। शूलशब्दात् पाकविषये डाच् प्रत्ययो भवति कृञो योगे। शूले पचति, शूलाकरोति मांसम्। पाक इति किम्? शूलं करोति कदन्नम्॥

## सत्यादशपथे ॥ ६६ ॥

कृञ इत्येव। सत्यशब्दादशपथे डाच् प्रत्ययो भवति कृञो योगे। सत्यशब्दोऽनृतप्रतिपक्षवचनः। क्वचित् तु शपथे च वर्तते—सत्येन शापयेद् विप्रम्[1] ( मनु० ८.११३ ) इति, तस्यायं प्रतिषेधः। सत्याकरोति वणिक् भाण्डम्। मयैतत् क्रेतव्यमिति तथ्यं करोति। अशपथ इति किम्? सत्यं करोति ब्राह्मणः॥

## मद्रात् परिवापणे ॥ ६७ ॥

कृञ इत्येव। मद्रशब्दात् परिवापणे डाच् प्रत्ययो भवति कृञो योगे। परिवापणं मुण्डनम्। मद्रशब्दो मङ्गलार्थः। मङ्गलं मुण्डनं करोति, मद्राकरोति॥ भद्राच्चेति वक्तव्यम्॥

---

१ – ' द्विजम् ' इति है०।

भद्राकरोति नापितः कुमारम्। परिवापण इति किम् ? भद्रं करोति ॥

## समासान्ताः ॥ ६८ ॥

अधिकारोऽयम्। आ पादपरिसमाप्तेर्ये प्रत्यया विहितास्ते समासस्यान्ता अवयवा[१] एकदेशा भवन्ति, तद्ग्रहणेन गृह्यन्ते ( व्या० प० ८० ) इति वेदितव्यम्। प्रयोजनम्— अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः। उपराजम्। अधिराजम्। 'नाव्ययीभावाद्०' ( २.४.८३ ) इत्येष विधिर्भवति। 'अनश्च' ( ५.४.१०८ ) इति टच्। द्विपुरी, त्रिपुरीति। 'द्विगोः' ( ४.१.२१ ) इति ङीब् भवति। कोशनिषदिनी। स्रक्त्वचिनी[२]। 'द्वन्द्वोपतापगर्ह्याद्०' ( ५.२.१२८ ) इतीनिर्भवति। विधुरः। प्रधुरः। 'तत्पुरुषे तुल्यार्थ०' ( ६.२.२ )—इत्येष स्वरो भवति। उच्चैर्धुरः। नीचैर्धुरः। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( ६.२.१ ) इत्येतद् भवति ॥

## न पूजनात् ॥ ६९ ॥

यान् शब्दानुपादाय समासान्ता विधीयन्ते 'राजाहःसखिभ्यष्टच्' ( ५.४.९१ ) इत्येवमादीन्, यदा ते पूजनात् पूजनवचनात् परे भवन्ति तदा समासान्तो न भवति। सुराजा। अतिराजा। सुगौः। अतिगौः ॥ पूजायां स्वतिग्रहणं कर्तव्यम् ॥ इह मा भूत्— परमराजः, परमगव इति ॥ प्राग्बहुव्रीहिग्रहणं च कर्तव्यम् ॥ 'बहुव्रीहौ सक्थ्यक्ष्णोः०' ( ५.४.११३ ) इत्येवमादौ प्रतिषेधो न भवति। सुसक्थः। अतिसक्थः। स्वक्षः। अत्यक्षः ॥

## किमः क्षेपे ॥ ७० ॥

क्षेपे यः किंशब्दस्ततः परस्य समासान्तो न भवति। किंराजा यो न रक्षति। किंसखा योऽभिद्रुह्यति। किंगौर्यो न वहति। 'किं क्षेपे' ( २.१.६४ ) इति समासः। क्षेप इति किम्? कस्य राजा किंराजः। किंसखः। किंगवः ॥

## नञस्तत्पुरुषात् ॥ ७१ ॥

नञः परे वक्ष्यमाणा ये राजादयस्तदन्तात् तत्पुरुषात् समासान्तो न भवति। अराजा। असखा। अगौः। तत्पुरुषादिति किम् ? अनृचो माणवकः। अधुरं शकटम् ॥

---

१ - 'समासस्यान्तावयवा' इति बाल०, 'समासान्तावयवा' इति है०।

२ - 'कटकवलयिनी। शङ्खनूपुरिणी' इत्यधिकं मुद्रितेषु। स त्वपपाठः।

## पथो विभाषा ॥ ७२ ॥

नञस्तत्पुरुषादिति वर्तते[1]। नञः परो यः पथिन्शब्दः, तदन्तात् तत्पुरुषात् समासान्तो विभाषा न भवति। पूर्वेण नित्यः प्रतिषेधः प्राप्तो विकल्प्यते। अपथम्, अपन्थाः॥

## बहुव्रीहौ संख्येये डजबहुगणात् ॥ ७३ ॥

संख्येये यो बहुव्रीहिर्वर्तते, तस्मादबहुगणान्ताद् डच् प्रत्ययो भवति। 'संख्ययाव्ययासन्ना०' ( २.२.२५ ) इति यो बहुव्रीहिः, तस्येदं ग्रहणम्। उपदशाः। उपविंशाः। उपत्रिंशाः। आसन्नदशाः। अदूरदशाः। अधिकदशाः। द्वित्राः। पञ्चषाः। पञ्चदशाः। संख्येय इति किम् ? चित्रगुः। शबलगुः। अबहुगणादिति किम् ? उपबहवः। उपगणाः। अत्र स्वरे विशेषः ॥ डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं कर्तव्यं निस्त्रिंशाद्यर्थम् ॥ निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि देवदत्तस्य। निश्चत्वारिंशानि यज्ञदत्तस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः॥

## ऋक्पूरब्धूःपथामानक्षे ॥ ७४ ॥

बहुव्रीहाविति न स्वर्यते। सामान्येन विधानम्। ऋक् पुर् अप् धुर् पथिन् इत्येवमन्तानां समासानामकारः प्रत्ययो भवति समासान्तोऽक्षे न। सामर्थ्याद् धुर एतद्विशेषणम्, ऋगादीनां न भवति। अक्षसंबन्धिनी या धूस्तदन्तस्य न भवति। अनृचः। बह्वृचः। अर्धर्चः। पुर्—ललाटपुरम्। नान्दीपुरम्। अप्—द्वीपम्। अन्तरीपम्। समीपम्। धुर्—राजधुरा। महाधुरः। पथिन्—स्थलपथः। जलपथः। अनक्ष इति किम् ? अक्षस्य धूः अक्षधूः। दृढधूरक्षः। अनृचो माणवके[2] ज्ञेयः, बह्वृचश्चरणाख्यायाम् ( महाभाष्य २. ४४४)। अनृचो माणवकः। बह्वृचो ब्राह्मणः। अनृक्कं साम, बह्वृक्कं सूक्तमित्यत्र न भवति॥

## अच् प्रत्यन्ववपूर्वात् सामलोम्नः ॥ ७५ ॥

प्रति अनु अव इत्येवंपूर्वात् सामान्तात् लोमान्तात् च समासादच् प्रत्ययो भवति। प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। अवलोमम्।

---

१ - इदं वाक्यं नास्ति है०।

२ - 'माणवको ' इति है०।

कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥

कृष्णभूमः। पाण्डुभूमः। उदग्भूमः। पञ्चनदम्। पञ्चगोदावरम्। 'नदीभिश्च' (२.१.२०) इत्यव्ययीभावः। भूमेरपि संख्यापूर्वाया अच् प्रत्यय इष्यते। द्विभूमः प्रासादः। त्रिभूमः। दशभूमकं सूत्रम्। अन्यत्रापि च दृश्यते। पद्मनाभः। ऊर्णनाभः। दीर्घरात्रः। समरात्रः। अरात्रः। तदेतत् सर्वमिह योगविभागं कृत्वा साधयन्ति ॥

## अक्ष्णोऽदर्शनात् ॥ ७६ ॥

अजित्यनुवर्तते। दर्शनादन्यत्र योऽक्षिशब्दस्तदन्तादच् प्रत्ययो भवति। लवणाक्षम्। पुष्कराक्षम्। 'उपमितं व्याघ्रादिभिः०' (२.१.५६) इति समासः। अदर्शनादिति किम्? ब्राह्मणाक्षि। कथं कबराक्षं गवाक्षमिति। अश्वादीनां मुखप्रच्छादनार्थं बहुच्छिद्रं कबराक्षम्, तेनापि हि दृश्यते, गवाक्षेण च? नैष दोषः। चक्षुःपर्यायवचनो दर्शनशब्दः, प्राण्यङ्गवचन इहाश्रीयते ॥

## अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिश्श्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ ७७ ॥

अच्प्रत्ययान्ता एते शब्दा निपात्यन्ते। समासे व्यवस्थापि निपातनादेव प्रतिपत्तव्या। आद्यास्त्रयो बहुव्रीहयः। अदृश्यान्यविद्यमानानि वा चत्वारि यस्य सोऽचतुरः। विगतानि चत्वारि यस्य स विचतुरः। शोभनानि चत्वारि यस्य स सुचतुरः। ततः पर एकादश द्वन्द्वाः। स्त्री च पुमांश्च स्त्रीपुंसौ। इह न भवति—स्त्रियाः पुमान् स्त्रीपुमानिति। धेनुश्च अनड्वांश्च धेन्वनडुहौ। ऋक् च साम च ऋक्सामे। वाक् च मनश्च वाङ्मनसे। अक्षि च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम्। टिलोपो निपात्यते। पादौ च अष्ठीवन्तौ च पदष्ठीवम्। पादस्य पद्भावो निपात्यते। नक्तं च दिवा च नक्तंदिवम्। सप्तम्यर्थवृत्तयोरव्यययोः समासोऽपि निपातनादेव। रात्रौ च दिवा च रात्रिंदिवम्। पूर्वपदस्य मान्तत्वं निपात्यते। अहनि च दिवा च अहर्दिवम्। ननु च पर्यायावेतौ कथमनयोर्द्वन्द्वः? वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः। एकोऽव्ययीभावः साकल्ये—सरजसमभ्यवहरति। बहुव्रीहौ न भवति। सह रजसा सरजः पङ्कजमिति। ततस्तत्पुरुषः—निश्चितं श्रेयो निश्श्रेयसम्। निश्श्रेयस्कः पुरुष इत्यत्र न भवति। ततः षष्ठीसमासः। पुरुषस्यायुः पुरुषायुषम्। द्वन्द्वे न भवति—पुरुषश्च आयुश्च पुरुषायुषी। ततो द्विगू—द्वे आयुषी समाहृते द्व्यायुषम्। त्र्यायुषम्। इह न भवति—

द्वयोरायुर्द्व्यायुः, त्र्यायुरिति। ततो द्वन्द्वः—ऋक् च यजुश्च ऋग्यजुषम्। इह न भवति—ऋग् यजुरस्योन्मुग्धस्य ऋग्यजुरुन्मुग्धः। जातादिपूर्वपदा उक्षशब्दान्तास्त्रयः कर्मधारयाः—जातोक्षः। महोक्षः। वृद्धोक्षः। बहुव्रीहौ न भवति—जातोक्षा ब्राह्मणः, महोक्षा, वृद्धोक्षेति। ततोऽव्ययीभावः—शुनः समीपमुपशुनम्। टिलोपाभावः संप्रसारणं च निपातनादेव। ततः सप्तमीसमासः—गोष्ठे श्वा गोष्ठश्वः॥ चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्॥ त्रिचतुराः। उपचतुराः॥

## ब्रह्महस्तिभ्यां वर्चसः ॥ ७८ ॥

ब्रह्महस्तिभ्यां परो यो वर्चःशब्दस्तदन्तात् समासादच् प्रत्ययो भवति। ब्रह्मवर्चसम्। हस्तिवर्चसम्॥ पल्यराजभ्यां चेति वक्तव्यम्॥ पल्यवर्चसम्। राजवर्चसम्॥

## अवसमन्धेभ्यस्तमसः ॥ ७९ ॥

अव सम् अन्ध इत्येतेभ्यो यः परस्तमःशब्दः, तदन्तात् समासादच् प्रत्ययो भवति। अवतमसम्। सन्तमसम्। अन्धतमसम्॥

## श्वसो वसीयःश्रेयसः ॥ ८० ॥

श्वसः परौ यौ वसीयःश्रेयःशब्दौ तदन्तात् समासादच् प्रत्ययो भवति। श्वोवसीयसम्। श्वःश्रेयसम्। मयूरव्यंसकादित्वात् समासः। स्वभावात् चेह श्वःशब्द उत्तरपदार्थस्य प्रशंसामाशीर्विषयामाचष्टे—श्वःश्रेयसं ते भूयात्। शोभनं श्रेयस्ते भूयादित्यर्थः। श्वोवसीयसमित्यस्यैवायं पर्यायः॥

## अन्ववतप्ताद्रहसः ॥ ८१ ॥

अनु अव तप्त इत्येतेभ्यः परो यो रहश्शब्दस्तदन्तात् समासादच् प्रत्ययो भवति। अनुरहसम्। अवरहसम्। तप्तरहसम्॥

## प्रतेरुरसः सप्तमीस्थात् ॥ ८२ ॥

प्रतेः परो य उरःशब्दस्तदन्तात् समासादच् प्रत्ययो भवति, स चेदुरःशब्दः सप्तमीस्थो भवति। सप्तम्यर्थे वर्तत इत्यर्थः। उरसि वर्तते। विभक्त्यर्थे 'अव्ययम्०' (२.१.६) इति समासः। प्रत्युरसम्। सप्तमीस्थादिति किम्? प्रतिगतमुरः प्रत्युरः॥

## अनुगवमायामे ॥ ८३ ॥

अनुगवमित्यच्प्रत्ययान्तं निपात्यत आयामेऽभिधेये। अनुगवं यानम्। 'यस्य चायामः' ( २.१.१६ ) इति समासः। आयाम इति किम् ? गवां पश्चादनुगु॥

## द्विस्तावा त्रिस्तावा वेदिः ॥ ८४ ॥

द्विस्तावा त्रिस्तावेति निपात्यते, वेदिश्चेदभिधेया भवति। अच्प्रत्ययष्टिलोपः समासश्च निपात्यते। यावती प्रकृतौ वेदिस्ततो द्विगुणा वा त्रिगुणा वा कस्याञ्चिद् विकृतौ, तत्रेदं निपातनम्। द्विस्तावा वेदिः। त्रिस्तावा वेदिः। वेदिरिति किम् ? द्विस्तावती, त्रिस्तावती रज्जुः॥

## उपसर्गादध्वनः ॥ ८५ ॥

उपसर्गात् परो योऽध्वन्शब्दस्तदन्तात् समासाद् अच् प्रत्ययो भवति। प्रगतोऽध्वानं प्राध्वो रथः। प्राध्वं शकटम्। निरध्वम्। प्रत्यध्वम्। उपसर्गादिति किम् ? परमाध्वा। उत्तमाध्वा॥

## तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ॥ ८६ ॥

अङ्गुलिशब्दान्तस्य तत्पुरुषस्य संख्यादेरव्ययादेश्चाच् प्रत्ययो भवति। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। त्र्यङ्गुलम्। 'तद्धितार्थो०' ( २.१.५१ ) इति समासः। 'प्रमाणे लो द्विगोर्नित्यम्' ( वा० ५.२.३७ ) इति मात्रचो लोपः। अव्ययादेः—निर्गतमङ्गुलिभ्यो निरङ्गुलम्। अत्यङ्गुलम्। तत्पुरुषस्येति किम् ? पञ्चाङ्गुलिः। अत्यङ्गुलिः पुरुषः। तत्पुरुषाधिकारश्च 'द्वन्द्वाच्चुदषहान्ताद्०' ( ५.४.१०६ ) इति यावत्॥

## अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥ ८७ ॥

अहरादिभ्यः परो यो रात्रिशब्दः तदन्तस्य तत्पुरुषस्याच् प्रत्ययो भवति, चकारात् संख्यादेरव्ययादेश्च। अहर्ग्रहणं द्वन्द्वार्थम्। अहश्च रात्रिश्च अहोरात्रः। सर्वरात्रः। एकदेशे—पूर्वं रात्रेः पूर्वरात्रः। अपररात्रः। 'पूर्वापराधरो०' ( २.२.१ ) इति समासः। संख्याता रात्रिः संख्यातरात्रः। 'विशेषणं विशेष्येण०' ( २.१.५७ ) इति समासः। एवं पुण्या रात्रिः पुण्यरात्रः। संख्याव्ययादेः खल्वपि—द्वे रात्री समाहृते द्विरात्रः। त्रिरात्रः। अतिक्रान्तो रात्रिम् अतिरात्रः। नीरात्रः॥

## अह्नोऽह्न एतेभ्यः ॥ ८८ ॥

'राजाहःसखिभ्यष्टच्' ( ५.४.९१ ) इति वक्ष्यति। तस्मिन् परभूतेऽहन्नित्ये-

तस्याह्न इत्ययमादेशो भवत्येतेभ्य उत्तरस्य। संख्याव्ययादयः प्रक्रान्ताः सर्वनाम्ना प्रत्यवमृश्यन्ते। सामर्थ्याच्चाहःशब्दः पूर्वत्वेन नाश्रीयते। परिशिष्टानां ग्रहणम्। न ह्यहःशब्दात् परोऽहः शब्दः संभवति। संख्यायास्तावत्—द्वयोरह्नोर्भवो द्व्यह्नः, त्र्यह्नः। अव्ययात्—अहरतिक्रान्तोऽत्यह्नः। निरह्नः। सर्वाह्णः। पूर्वाह्णः। अपराह्णः। संख्याताह्नः। पुण्यशब्दात् प्रतिषेधं वक्ष्यति॥

## न संख्यादेः समाहारे ॥ ८९ ॥

संख्यादेस्तत्पुरुषस्य समाहारे वर्तमानस्याहःशब्दस्याह्नादेशो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। द्वे अहनी समाहृते द्व्यहः। त्र्यहः। समाहार इति किम्? द्वयोरह्नोर्भवो द्व्यह्नः। त्र्यह्नः। 'तद्धितार्थो०' (२.१.५१) इति समासे कृतेऽण आगतस्य 'द्विगोः०' (४.१.८८) इति लुक्॥

## उत्तमैकाभ्यां च ॥ ९० ॥

उत्तमैकशब्दाभ्यां च परस्याह्न इत्ययमादेशो न भवति। उत्तमशब्दोऽन्त्यवचनः पुण्यशब्दमाचष्टे। पुण्यग्रहणमेव न कृतं वैचित्र्यार्थम्। पुण्याहः। एकाहः। केचित् तु उपोत्तमस्यापि प्रतिपत्त्यर्थं वर्णयन्ति। तेन संख्यातशब्दादपि परस्य न भवति—संख्याताह इति॥

## राजाहःसखिभ्यष्टच् ॥ ९१ ॥

राजन् अहन् सखि इत्येवमन्तात् तत्पुरुषात्[1] प्रातिपदिकात् टच् प्रत्ययो भवति। महाराजः। मद्रराजः। परमाहः। उत्तमाहः। राज्ञः सखा राजसखः। ब्राह्मणसखः। इह कस्माद् न भवति—मद्राणां राज्ञी मद्रराज्ञी, लिङ्गविशिष्टपरिभाषया (परि० ७१) प्राप्नोति? लघ्वक्षरस्य पूर्वनिपाते प्राप्ते राजशब्दस्य सवर्णदीर्घार्थं प्रथमं प्रयोगं कुर्वन्नेतद् ज्ञापयति—यस्याकारेण सवर्णदीर्घत्वं संभवति तस्येदं ग्रहणमिति॥

## गोरतद्धितलुकि ॥ ९२ ॥

गोशब्दान्तात् तत्पुरुषात् टच् प्रत्ययो भवति, स चेत् तत्पुरुषस्तद्धितलुग्विषयो न भवति। परमगवः। उत्तमगवः। पञ्चगवम्। दशगवम्। अतद्धितलुकीति किम्? पञ्चभिर्गोभिः क्रीतः पञ्चगुः। दशगुः। 'तेन क्रीतम्' (५.१.३७) इत्यागतस्यार्हीयस्य ठको 'अध्यर्धपूर्वद्विगोः०' (५.१.२८) इति लुक्। तद्धितग्रहणं किम्? सुब्लुकि प्रतिषेधो

१ – 'तत्पुरुषात्' इति नास्ति मुद्रितेषु।

मा भूत्। राजगवमिच्छति राजगवीयति। लुग्ग्रहणं किम् ? तद्धित एव मा भूत्। पञ्चभ्यो गोभ्य आगतं पञ्चगवरूप्यम्। पञ्चगवमयम्। दशगवरूप्यम्। दशगवमयम्॥

## अग्राख्यायामुरसः ॥ ९३ ॥

उरःशब्दान्तात् तत्पुरुषात् टच् प्रत्ययो भवति, स चेदुरःशब्दोऽग्राख्यायां भवति। अग्रं प्रधानमुच्यते। यथा शरीरावयवानामुच्यत उरः प्रधानम्, एवमन्योऽपि प्रधानभूत उरःशब्देनोच्यते। अश्वानामुरः अश्वोरसम्। हस्त्युरसम्। रथोरसम्। अग्राख्यायामिति किम् ? देवदत्तस्योरः देवदत्तोरः॥

## अनोऽश्मायःसरसां जातिसंज्ञयोः ॥ ९४ ॥

अनस् अश्मन् अयस् सरस् इत्येवमन्तात् तत्पुरुषात् टच् प्रत्ययो भवति जातौ संज्ञायां च विषये। उपानसमिति जातिः। महानसमिति संज्ञा। अमृताश्म इति जातिः। पिण्डाश्म इति संज्ञा। कालायसमिति जातिः। लोहितायसमिति संज्ञा। मण्डूकसरसमिति जातिः। जलसरसमिति संज्ञा। जातिसंज्ञयोरिति किम् ? सदनः। सदश्मा। सत्सरः॥

## ग्रामकौटाभ्यां च तक्ष्णः ॥ ९५ ॥

जातिसंज्ञयोरिति नानुवर्तते। ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। ग्रामस्य तक्षा ग्रामतक्षः। बहूनां साधारण इत्यर्थः। कुट्यां भवः कौटः, तस्य तक्षा कौटतक्षः। स्वतन्त्रः कर्मजीवी, न कस्यचित् प्रतिबद्ध इत्यर्थः। ग्रामकौटाभ्यामिति किम् ? राजतक्षा॥

## अतेः शुनः ॥ ९६ ॥

अतिशब्दात् परो यः श्वन्शब्दस्तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। अतिक्रान्तः श्वानम् अतिश्वो वराहः। जववानित्यर्थः। अतिश्वः सेवकः। सुष्ठु स्वामिभक्त इत्यर्थः। अतिश्वी सेवा। अतिनीचेत्यर्थः॥

## उपमानादप्राणिषु ॥ ९७ ॥

उपमानवाची यः श्वन्शब्दोऽप्राणिषु वर्तते, तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। आकर्षः श्वेव आकर्षश्वः। फलकश्वः। 'उपमितं व्याघ्रादिभिः०' ( २.१.५६ ) इति समासः। उपमानादिति किम् ? न श्वा अश्वा लोष्टः। अप्राणिष्विति किम् ? वानरः श्वेव वानरश्वा॥

## उत्तरमृगपूर्वाच्च सक्थ्नः ॥ ९८ ॥

उत्तर मृग पूर्व इत्येतेभ्यः परो यः सक्थिशब्दः, चकारादुपमानात्[1] च, तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति समासान्तः। उत्तरसक्थम्। मृगसक्थम्। पूर्वसक्थम्। उपमानात् खल्वपि—फलकमिव सक्थि फलकसक्थम्॥

## नावो द्विगोः ॥ ९९ ॥

नौशब्दान्ताद् द्विगोष्टच् प्रत्ययो भवति समासान्तः। द्वे नावौ समाहृते द्विनावम्। त्रिनावम्। द्विनावधनः। पञ्चनावप्रियः। द्वाभ्यां नौभ्यामागतं द्विनावरूप्यम्। द्विनावमयम्। द्विगोरिति किम्? राजनौः। अतद्धितलुकीत्येव—पञ्चभिर्नौभिः क्रीतः पञ्चनौः। दशनौः॥

## अर्धाच्च ॥ १०० ॥

अर्धशब्दात् परो यो नौशब्दस्तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। अर्धं नावोऽर्धनावम्। 'अर्धं नपुंसकम्' (२.२.२) इति समासः। परवल्लिङ्गं न भवति, लोकाश्रयत्वाल्लिङ्गस्य॥

## खार्याः प्राचाम् ॥ १०१ ॥

द्विगोरर्धाच्चेति द्वयमप्यनुवर्तते। खारीशब्दान्ताद् द्विगोरर्धात् च परो यः खारीशब्दस्तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति प्राचामाचार्याणां मतेन। द्वे खार्यौ समाहृते द्विखारम्, द्विखारि। त्रिखारम्, त्रिखारि। अर्धं खार्या अर्धखारम्, अर्धखारी[2]॥

## द्वित्रिभ्यामञ्जलेः ॥ १०२ ॥

द्वित्रिभ्यां परो योऽञ्जलिशब्दस्तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। द्वावञ्जली समाहृतौ द्व्यञ्जलम्। त्र्यञ्जलम्। द्विगोरित्येव—द्वयोरञ्जलिर्द्व्यञ्जलिः। अतद्धितलुकीत्येव—द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः। त्र्यञ्जलिः। प्राचामित्येव—द्व्यञ्जलिप्रियः॥

## अनसन्तान्नपुंसकाच्छन्दसि ॥ १०३ ॥

अन्नन्तादसन्तात् च नपुंसकलिङ्गात् तत्पुरुषात् टच् प्रत्ययो भवति छन्दसि विषये। हस्तिचर्मे जुहोति। ऋषभचर्मेऽध्यभिषिच्यते (काठ० सं० ३७.३)। असन्तात्—

---

१ – 'उपमानम्' इत्यपपाठो मुद्रितेषु।

२ – 'अर्धखारि' इति है०। तत्राभिधेयस्य नपुंसकत्वाद् लौकिकं ह्रस्वत्वम्।

देवच्छन्दसानि (मै० सं० ३.२.९)। मनुष्यच्छन्दसम् (तै० सं० ५.४.८.६)। अनसन्तादिति किम्? बिल्वदारु जुहोति। नपुंसकादिति किम्? सुत्रामाणं पृथिवीं द्यामनेहसम् (ऋ० १०.६३.१०)॥ अनसन्तान्नपुंसकाच्छन्दसि वावचनम्॥ ब्रह्मसाम (ता० ब्रा० ४.३.१)। देवच्छन्दः (शां० ब्रा० १.५)। ब्रह्मसामम् (तै० सं० १.८.१८.१)। देवच्छन्दसम् (तै० सं० ५.४.८.५)॥

## ब्रह्मणो जानपदाख्यायाम् ॥ १०४ ॥

ब्रह्मन्शब्दान्तात् तत्पुरुषात् टच् प्रत्ययो भवति, समासेन चेद् ब्रह्मणो जानपदत्वमाख्यायते। जनपदेषु भवो जानपदः। यस्य तत्पुरुषस्य जनपदशब्दः पूर्वपदं तस्मादेतत् प्रत्ययविधानम्। सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रह्मः। अवन्तिब्रह्मः। योगविभागात् सप्तमीसमासः। जानपदाख्यायामिति किम्? देवब्रह्मा नारदः॥

## कुमहद्भ्यामन्यतरस्याम् ॥ १०५ ॥

कुमहद्भ्यां परो यो ब्रह्मा तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवत्यन्यतरस्याम्। कुब्रह्मः, कुब्रह्मा। महाब्रह्मः, महाब्रह्मा। ब्राह्मणपर्यायो ब्रह्मन्शब्दः॥

## द्वन्द्वाच्चुदषहान्तात् समाहारे ॥ १०६ ॥

तत्पुरुषाधिकारो निवृत्तः। द्वन्द्वात् चवर्गान्ताद् दकारान्तात् षकारान्तात् हकारान्तात् च टच् प्रत्ययो भवति, स चेद् द्वन्द्वः समाहारे वर्तते, नेतरेतरयोगे। वाक् च त्वक् च वाक्त्वचम्। स्रक् च त्वक् च स्रक्त्वचम्। श्रीस्रजम्। इडूर्जम्। वागूर्जम्। समिद्दृषदम्। संपद्विपदम्। वाग्विप्रुषम्। छत्रोपानहम्। धेनुगोदुहम्। द्वन्द्वादिति किम्? तत्पुरुषाद् मा भूत्—पञ्च वाचः समाहृताः पञ्चवाक्। चुदषहान्तादिति किम्? वाक्समित्। समाहार इति किम्? प्रावृट्शरदौ॥

## अव्ययीभावे शरत्प्रभृतिभ्यः ॥ १०७ ॥

शरदित्येवमादिभ्यः प्रातिपदिकेभ्यष्टच् प्रत्ययो भवत्यव्ययीभावे। शरदः समीपम् उपशरदम्। प्रतिशरदम्। उपविपाशम्। प्रतिविपाशम्। अव्ययीभाव इति किम्? परमशरत्। येऽत्र झयन्ताः पठ्यन्ते तेषां नित्यार्थं ग्रहणम्। स्वर्यते चेदमव्ययीभावग्रहणं प्राग् बहुव्रीहेः॥ शरत्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। चतुर्। यद्। तद्। जराया जरश्च (ग० सू० १६०)। प्रतिपरसमनुभ्योऽक्ष्णः (ग० सू० १६१)। पथिन्। प्रत्यक्षम्। परोक्षम्। समक्षम्। अन्वक्षम्। प्रतिपथम्। परपथम्। संपथम्। अनुपथम्॥

## अनश्च ॥ १०८ ॥

अन्नन्तादव्ययीभावात् टच् प्रत्ययो भवति समासान्तः। उपराजम्। प्रतिराजम्। अध्यात्मम्। प्रत्यात्मम्॥

## नपुंसकादन्यतरस्याम् ॥ १०९ ॥

अन इत्येव। नपुंसकग्रहणमुत्तरपदविशेषणम्। अन्नन्तं यद् नपुंसकं तदन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति समासान्तः। पूर्वेण नित्ये प्राप्ते विकल्प्यते। प्रतिचर्मम्, प्रतिचर्म। उपचर्मम्, उपचर्म॥

## नदीपौर्णमास्याग्रहायणीभ्यः ॥ ११० ॥

नदी पौर्णमासी आग्रहायणी इत्येवमन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति। नद्याः समीपम् उपनदम्, उपनदि। उपपौर्णमासम्, उपपौर्णमासि। उपाग्रहायणम्, उपाग्रहायणि॥

## झयः ॥ १११ ॥

झय इति प्रत्याहारग्रहणम्। झयन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति। उपसमिधम्। उपसमित्। उपदृषदम्। उपदृषत्॥

## गिरेश्च सेनकस्य ॥ ११२ ॥

गिरिशब्दान्तादव्ययीभावात् टच् प्रत्ययो भवति सेनकस्याचार्यस्य मतेन। अन्तर्गिरम्, अन्तर्गिरि। उपगिरम्, उपगिरि। सेनकग्रहणं पूजार्थम्। विकल्पोऽनुवर्तत एव॥

## बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ॥ ११३ ॥

स्वाङ्गवाची यः सक्थिशब्दोऽक्षिशब्दश्च तदन्ताद् बहुव्रीहेः षच् प्रत्ययो भवति समासान्तः। अयमर्थोऽभिप्रेतः। सूत्रे तु दुःश्लिष्टविभक्तीनि पदानि। दीर्घं सक्थि यस्य दीर्घसक्थः। कल्याणाक्षः। लोहिताक्षः। विशालाक्षः। बहुव्रीहाविति किम्? परमसक्थि[1]। परमाक्षि[1]। सक्थ्यक्ष्णोरिति किम्? दीर्घजानुः। सुबाहुः। स्वाङ्गादिति किम्? दीर्घसक्थि शकटम्। स्थूलाक्षिः इक्षुः। टचि प्रकृते षज्ग्रहणं स्वरार्थम्। [2] दीर्घसक्थी स्त्री। 'सक्थं

---

१ - सविसर्जनीयोऽपपाठो मुद्रितेषु। २ - इतः पूर्वं 'चक्रसक्थी स्त्री' इत्यधिकः पाठो मुद्रितेषु। स तु न युक्तः, न्यासपदमञ्जर्योरव्याख्यातत्वात्। कैयटोऽप्यत्रानुसन्धेयः।

चाक्रान्तात्' ( ६.२.१९८ ) इति विभाषयोत्तरपदस्यान्तोदात्तता विधीयते। तत्र यस्मिन् पक्षे नास्त्युदात्तत्वं तत्र ङीपि सत्युदात्तनिवृत्तिस्वरस्याभावादनुदात्तः श्रूयेत। ङीषि तु सर्वत्रोदात्तः सिद्धो भवति। बहुव्रीहिग्रहणम् आ पादपरिसामाप्तेरनुवर्तते॥

## अङ्गुलेर्दारुणि ॥ ११४ ॥

अङ्गुलिशब्दान्ताद् बहुव्रीहेः षच् प्रत्ययो भवति समासान्तो दारुणि समासार्थे। द्व्यङ्गुलं दारु। त्र्यङ्गुलं दारु। पञ्चाङ्गुलं दारु। अङ्गुलिसदृशावयवं धान्यादीनां विक्षेपणकाष्ठमुच्यते। यस्य तु द्वे अङ्गुली प्रमाणं दारुणस्तत्र 'तद्धितार्थो०' ( २.१.५१) इति समासे कृते 'तत्पुरुषस्याङ्गुलेः०' ( ५.४.८६ ) इत्यचा भवितव्यम्। दारुणीति किम्? पञ्चाङ्गुलिर्हस्तः॥

## द्वित्रिभ्यां ष मूर्ध्नः ॥ ११५ ॥

द्वित्रिभ्यां परो यो मूर्धन्शब्दस्तदन्ताद् बहुव्रीहेः षः प्रत्ययो भवति समासान्तः। द्विमूर्धः। त्रिमूर्धः। द्वित्रिभ्यामिति किम् ? उच्चैर्मूर्धा॥

## अप् पूरणीप्रमाण्योः ॥ ११६ ॥

पूरणप्रत्ययान्ताः स्त्रीलिङ्गाः शब्दाः पूरणीग्रहणेन गृह्यन्ते। प्रमाणीति स्वरूपग्रहणम्। पूरण्यन्तात् प्रमाण्यन्तात् च बहुव्रीहेरप् प्रत्ययो भवति समासान्तः। कल्याणी पञ्चमी आसां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। कल्याणीदशमा रात्रयः। स्त्री प्रमाणी एषां स्त्रीप्रमाणाः कुटुम्बिनः। भार्याप्रधाना इत्यर्थः॥ अपि प्रधानपूरणीग्रहणं कर्तव्यम्॥ यत्रान्यपदार्थे पूरण्यनुप्रविशति न केवलं वर्तिपदार्थ एव, तत्र पूरण्याः प्राधान्यम्। पुंवद्भावप्रतिषेधेऽपि प्रधानपूरण्येव गृह्यते। इह न भवति—कल्याणी पञ्चमी अस्मिन् पक्षे कल्याणपञ्चमीकः पक्ष इति ॥ नेतुर्नक्षत्र उपसंख्यानम्॥ मृगो नेता आसां रात्रीणां मृगनेत्रा रात्रयः। पुष्यनेत्राः। नक्षत्र इति किम् ? देवदत्तनेतृकाः॥ छन्दसि च नेतुरुपसंख्यानम्॥ बृहस्पतिंनेत्रा देवाः ( तै० सं० १.८.७.१ )। सोमनेत्राः ( मै० सं० २. ६.३ ) ॥ मासाद् भृतिप्रत्ययपूर्वपदाट् ठज्विधिः॥ पञ्चको मासोऽस्य पञ्चकमासिकः कर्मकरः। दशकमासिकः। 'सोऽस्यांशवस्नभृतयः' ( ५.१.५६ ) इति 'संख्याया अतिशदन्तायाः कन्' ( ५.१.२२ )॥

## अन्तर्बहिर्भ्यां च लोम्नः ॥ ११७ ॥

अन्तर् बहिस् इत्येताभ्यां परो यो लोमन्शब्दस्तदन्ताद् बहुव्रीहेरप् प्रत्ययो भवति।

अन्तर्गतानि लोमान्यस्य अन्तर्लोमः प्रावारः। बहिर्लोमः पटः॥

## अञ् नासिकायाः संज्ञायां नसं चास्थूलात् ॥ ११८ ॥

नासिकान्ताद् बहुव्रीहेरच् प्रत्ययो भवति नासिकाशब्दश्च नसमादेशमापद्यते। अस्थूलादिति नासिकाविशेषणम्, न चेत् स्थूलशब्दात् परा नासिका भवतीति। संज्ञायामिति समुदायोपाधिः। द्रुरिव नासिकास्य द्रुणसः[1]। वाद्ध्रीणसः। 'पूर्वपदात् संज्ञायामगः' (८.४.३) इति णत्वम्। गोनसः। संज्ञायामिति किम्? तुङ्गनासिकः। अस्थूलादिति किम्? स्थूलनासिको वराहः॥ खुरखराभ्यां नस् वक्तव्यः॥ खुरणाः। खरणाः। पक्षेऽच्प्रत्ययोऽपीष्यते। खुरणसः। खरणसः। शितिनाः, अहिनाः, अर्चना इति निगम इष्यते॥

## उपसर्गाच्च ॥ ११९ ॥

उपसर्गात् परो यो नासिकाशब्दस्तदन्ताद् बहुव्रीहेरच् प्रत्ययो भवति, नासिकाशब्दश्च नसमापद्यते। असंज्ञार्थं वचनम्। उन्नता नासिकास्य उन्नसः। प्रणसः। 'उपसर्गाद् बहुलम्' (८.४.२८) इति णत्वम् ॥ वेर्ग्रो वक्तव्यः॥ विगता नासिकास्य विग्रः॥

## सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ १२० ॥

सुप्रातादयो बहुव्रीहिसमासा अच्प्रत्ययान्ता निपात्यन्ते। अन्यदपि च टिलोपादिकं निपातनादेव सिद्धम्। शोभनं प्रातरस्य सुप्रातः (शौ० सं० १९.८.३)। शोभनं श्वोऽस्य सुश्वः। शोभनं दिवास्य सुदिवः (ऋ० १०.३.५)। शारेरिव कुक्षिरस्य शारिकुक्षः। चतस्रोऽश्रयोऽस्य चतुरश्रः। एण्या इव पादावस्य एणीपदः। अजस्येव पादावस्य अजपदः। प्रोष्ठो गौः, तस्येव पादावस्य प्रोष्ठपदः (तै० सं० ४.४.१०.३)॥

## नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥ १२१ ॥

नञ् दुस् सु इत्येतेभ्यः परौ यौ हलिसक्थिशब्दौ तदन्तात् बहुव्रीहेरन्यतरस्यामच् प्रत्ययो भवति समासान्तः। अविद्यमाना हलिरस्य अहलः, अहलिः। दुर्हलः, दुर्हलिः। सुहलः, सुहलिः। अविद्यमानं सक्थ्यस्य असक्थः, असक्थिः। दुःसक्थः, दुःसक्थिः। सुसक्थः, सुसक्थिः। हलिशक्त्योरिति केचित् पठन्ति। अविद्यमाना शक्तिरस्य अशक्तः, अशक्तिः। विरूपा शक्तिरस्य दुःशक्तः, दुःशक्तिः। शोभना शक्तिरस्य सुशक्तः, सुशक्तिः॥

---

१ – 'खरणसः' इत्यधिकं क्वचित्।

## नित्यमसिच् प्रजामेधयोः ॥ १२२ ॥

नञ्दुस्सुभ्य इत्येव। नञ् दुस् सु इत्येतेभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद् बहुव्रीहे-र्नित्यमसिच् प्रत्ययो भवति समासान्तः। अविद्यमाना प्रजास्य अप्रजाः। दुष्प्रजाः। सुप्रजाः। अविद्यमाना मेधास्य अमेधाः। दुर्मेधाः। सुमेधाः। नित्यग्रहणं किम्, यावता पूर्वसूत्रेऽन्यतरस्यांग्रहणं नैव स्वर्यते ? एवं तर्हि नित्यग्रहणादन्यत्रापि भवतीति सूच्यते।

श्रोत्रियस्येव ते राजन् मन्दकस्याल्पमेधसः।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी॥

## बहुप्रजाश्छन्दसि ॥ १२३ ॥

बहुप्रजा इति छन्दसि निपात्यते। बहुप्रजा निर्ऋतिमाविवेश (ऋ० १.१६४.३२)। छन्दसीति किम् ? बहुप्रजो ब्राह्मणः॥

## धर्मादनिच् केवलात् ॥ १२४ ॥

केवलाद्[१]यो धर्मशब्दः[२] तदन्ताद् बहुव्रीहेरनिच्प्रत्ययो भवति समासान्तः। कल्याणो धर्मोऽस्य कल्याणधर्मा। प्रियधर्मा। केवलादिति किम् ? परमः स्वो धर्मोऽस्य[३]परम-स्वधर्मः। यद्येवं त्रिपदे बहुव्रीहौ प्राप्नोति—परमः स्वो धर्मोऽस्येति ? एवं तर्हि केवला-दिति पूर्वपदं निर्दिश्यते, केवलाद् पदाद् यो धर्मशब्दो न पदसमुदायात्, तदन्ताद् बहुव्रीहेः प्रत्ययः॥

## जम्भा सुहरिततृणसोमेभ्यः ॥ १२५ ॥

बहुव्रीहौ समासे स्वादिभ्यः परं जम्भेति कृतसमासान्तमुत्तरपदं निपात्यते। जम्भ-शब्दोऽभ्यवहार्यवाची दन्तविशेषवाची च। शोभनो जम्भोऽस्य सुजम्भा देवदत्तः। शोभनाभ्यव-हार्यः शोभनदन्तो वा। एवं हरितजम्भा। तृणजम्भा। सोमजम्भा। दन्तवचने—तृणमिव जम्भोऽस्य, सोम इव जम्भोऽस्येति विग्रहीतव्यम्। सुहरिततृणसोमेभ्य इति किम्? पतितजम्भः॥

---

१ - 'केवलः' इति पाठान्तरम्।

२ - 'असमस्तः' इत्यधिकं यथान्यासम्।

३ - द्विपदोऽत्र बहुव्रीहिरभिप्रेतः।

## दक्षिणेर्मा लुब्धयोगे ॥ १२६ ॥

दक्षिणेर्मेति कृतसमासान्तो निपात्यते बहुव्रीहौ समासे लुब्धयोगे। लुब्धो व्याधः[1]। दक्षिणमीर्ममस्य दक्षिणेर्मा मृगः। ईर्मं व्रणमुच्यते। दक्षिणमङ्गं व्रणितमस्य व्याधेनेत्यर्थः। लुब्धयोग इति किम् ? दक्षिणेर्मं शकटम् ॥

## इच् कर्मव्यतिहारे ॥ १२७ ॥

कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् प्रत्ययो भवति। 'तत्र तेनेदमिति सरूपे' ( २.२.२७ ) इत्ययं बहुव्रीहिर्गृह्यते। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। कचाकचि। मुसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं मुसलामुसलि। दण्डादण्डि। तिष्ठद्गुप्रभृतिषु ( २.१.१७ ) अयमिच् प्रत्ययः पठ्यते ॥

## द्विदण्ड्यादिभ्यश्च ॥ १२८ ॥

द्विदण्ड्यादयः शब्दा इच्प्रत्ययान्ताः साधवो भवन्ति। द्विदण्ड्यादिभ्य इति तादर्थ्ये एषा चतुर्थी, न पञ्चमी। द्विदण्ड्याद्यर्थमिच् प्रत्ययो भवति। तथा भवति यथा द्विदण्ड्यादयः सिध्यन्तीत्यर्थः। समुदायनिपातनाच्चार्थविशेषेऽवरुध्यन्ते। द्विदण्डि प्रहरति। द्विमुसलि प्रहरति। इह न भवति—द्विदण्डा शालेति। बहुव्रीह्यधिकारेऽपि तत्पुरुषात् क्वचिद् विधानमिच्छन्ति। निकुच्य कर्णौ धावति। निकुच्यकर्णि धावति। प्रोह्य पादौ हस्तिनं वाहयति। प्रोह्यपादि हस्तिनं वाहयति। मयूरव्यंसकादित्वात् ( २.१.७२ ) समासः॥ द्विदण्डि। द्विमुसलि। उभाञ्जलि। उभयाञ्जलि। उभाकर्णि। उभयाकर्णि। उभादन्ति। उभयादन्ति। उभाहस्ति। उभयाहस्ति। उभापाणि। उभयापाणि। उभाबाहु। उभयाबाहु। एकपदि। प्रोह्यपदि। आढ्यपदि। सपदि। निकुच्यकर्णि। संहतपुच्छि। उभाबाहु, उभयाबाह्विति निपातनादिच्प्रत्ययलोपः। प्रत्ययलक्षणेनाव्ययीभावसंज्ञा ॥

## प्रसम्भ्यां जानुनोर्ज्ञुः ॥ १२९ ॥

प्र सम् इत्येताभ्यामुत्तरस्य जानुशब्दस्य ज्ञुरादेशो भवति समासान्तो बहुव्रीहौ। प्रकृष्टे जानुनी अस्य प्रज्ञुः। संज्ञुः॥

## ऊर्ध्वाद् विभाषा ॥ १३० ॥

ऊर्ध्वशब्दादुत्तरस्य जानुशब्दस्य विभाषा ज्ञुरित्ययमादेशो भवति। ऊर्ध्वे जानुनी अस्य ऊर्ध्वजानुः, ऊर्ध्वज्ञुः॥

---

१ – 'लुब्धो व्याधः' इति पाठः पदमञ्जर्यां सन्नपि है० सं० त्यक्तः।

## ऊधसोऽनङ् ॥ १३१ ॥

ऊधःशब्दान्तस्य बहुव्रीहेरनङादेशो भवति समासान्तः। कुण्डमिव ऊधोऽस्याः सा कुण्डोध्नी। घटोध्नी ॥ ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम् ॥ इह मा भूत्—महोधाः पर्जन्यः। घटोधो धैनुकम् ॥

## धनुषश्च ॥ १३२ ॥

धनुःशब्दान्तस्य बहुव्रीहेरनङादेशो भवति समासान्तः। शार्ङ्गं धनुरस्य शार्ङ्गधन्वा। गाण्डीवधन्वा। पुष्पधन्वा। अधिज्यधन्वा ॥

## वा संज्ञायाम् ॥ १३३ ॥

धनुःशब्दान्ताद् बहुव्रीहेरनङादेशो वा भवति संज्ञायां विषये। पूर्वेण नित्यः प्राप्तो विकल्प्यते। शतधनुः, शतधन्वा। दृढधनुः, दृढधन्वा ॥

## जायाया निङ् ॥ १३४ ॥

जायाशब्दान्तस्य बहुव्रीहेर्निङादेशो भवति। युवतिर्जाया यस्य युवजानिः। वृद्ध-जानिः ॥

## गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ १३५ ॥

उत् पूति सु सुरभि इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे। तकार उच्चारणार्थः। उद्गतो गन्धोऽस्य उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः। एतेभ्य इति किम् ? तीव्रगन्धो वातः ॥ गन्धस्येत्वे तदेकान्तग्रहणम् ॥ तेन शोभनो गन्धोऽस्य सुगन्ध आपणिकः ॥

## अल्पाख्यायाम् ॥ १३६ ॥

अल्पाख्यायां यो गन्धशब्दस्तस्येकारादेशो भवति समासान्तो बहुव्रीहौ समासे। सूपोऽल्पोऽस्मिन् सूपगन्धि भोजनम्। अल्पमस्मिन् भोजने घृतं घृतगन्धि। क्षीरगन्धि। अल्पपर्यायो गन्धशब्दः ॥

## उपमानाच्च ॥ १३७ ॥

उपमानात् परो यो गन्धशब्दस्तस्येकारादेशो भवति समासान्तो बहुव्रीहौ समासे।

पद्मस्येव गन्धोऽस्य पद्मगन्धिः। उत्पलगन्धिः। करीषगन्धिः॥

## पादस्य लोपोऽहस्त्यादिभ्यः ॥ १३८ ॥

उपमानादित्येव। उपमानाद् हस्त्यादिवर्जितात् परस्य पादशब्दस्य लोपो भवति समासान्तो बहुव्रीहौ समासे। स्थानिद्वारेण लोपस्य समासान्तता विज्ञायते। व्याघ्रस्येव पादावस्य व्याघ्रपात्। सिंहपात्। अहस्त्यादिभ्य इति किम्? हस्तिपादः। कटोलपादः॥ हस्तिन्। कटोल। गण्डोल। गण्डोलक। महिला। दासी। गणिका। कुसूल॥

## कुम्भपदीषु च ॥ १३९ ॥

कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ्यन्ते। तत्रैवं सूत्रं ज्ञेयम्। पादस्य लोपो भवति कुम्भपद्यादिविषये, यथा कुम्भपद्यादयः सिध्यन्ति। समुदायपाठस्य च प्रयोजनं विषयनियमः—स्त्रियामेव, तत्र ङीप्रत्यय एव, नान्यदा[1]। कुम्भपदी। शतपदी। यच्चेहोपमानपूर्वं संख्यापूर्वं च पठ्यते, तस्य सिद्धे लोपे नित्यङीबर्थं वचनम्। 'पादोऽन्यतरस्याम्' (४.१.८) इति विकल्पो न भवति॥ कुम्भपदी। शतपदी। अष्टापदी। जालपदी। एकपदी। मालापदी। मुनिपदी। गोधापदी। गोपदी। कलशीपदी। घृतपदी। दासीपदी। निष्पदी। आर्द्रपदी। कुणपदी। कृष्णपदी। द्रोणपदी। द्रुपदी। शकृत्पदी। सूपपदी। पञ्चपदी। अर्वपदी। स्तनपदी। कुम्भपद्यादिः॥

## संख्यासुपूर्वस्य ॥ १४० ॥

संख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेः पादशब्दान्तस्य लोपो भवति समासान्तः। द्वौ पादावस्य द्विपात्। त्रिपात्। शोभनौ पादावस्य सुपात्॥

## वयसि दन्तस्य दतृ ॥ १४१ ॥

संख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेर्यो दन्तशब्दस्तस्य दतृ इत्ययमादेशो भवति समासान्तो वयसि गम्यमाने। ऋकार उगित्कार्यार्थः। द्वौ दन्तावस्य द्विदन्। त्रिदन्। चतुर्दन्। शोभना दन्ता अस्य समस्ता जाताः। सुदन् कुमारः। वयसीति किम्? द्विदन्तः कुञ्जरः। सुदन्तो दाक्षिणात्यः॥

## छन्दसि च ॥ १४२ ॥

छन्दसि च दन्तशब्दस्य दतृ इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे।

---

१ - 'नान्यत्र' इति बाल०।

पत्रदतमालभेत। उभयादंतः[1] ( ऋ० १०.९०.१० ) आलभते॥

## स्त्रियां संज्ञायाम् ॥ १४३ ॥

स्त्रियामन्यपदार्थे संज्ञायां विषये दन्तशब्दस्य दतृ इत्ययमादेशो भवति। अयोदती। फालदती। संज्ञायामिति किम् ? समदन्ती। स्निग्धदन्ती॥

## विभाषा श्यावारोकाभ्याम् ॥ १४४ ॥

श्याव अरोक इत्येताभ्यां परस्य दन्तशब्दस्य दतृ इत्ययमादेशो भवति विभाषा समासान्तो बहुव्रीहौ। श्यावदन्, श्यावदन्तः। अरोकदन्, अरोकदन्तः। अरोको निर्दीप्तिः। संज्ञायामित्येव—श्यावदन्तः। अरोकदन्तः॥

## अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ॥ १४५ ॥

विभाषेत्येव। अग्रान्ताच्छब्दात् शुद्ध शुभ्र वृष वराह इत्येतेभ्यश्च परस्य दन्तशब्दस्य विभाषा दतृ इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे। कुड्मलाग्रदन्, कुड्मलाग्रदन्तः। शुद्धदन्, शुद्धदन्तः। शुभ्रदन्, शुभ्रदन्तः। वृषदन्, वृषदन्तः। वराहदन्, वराहदन्तः। अनुक्तसमुच्चयार्थश्चकारः। अहिदन्, अहिदन्तः। मूषिकदन्, मूषिकदन्तः। गर्दभदन्, गर्दभदन्तः। शिखरदन्, शिखरदन्तः॥

## ककुदस्यावस्थायां लोपः ॥ १४६ ॥

ककुदशब्दान्तस्य बहुव्रीहेर्लोपो भवति समासान्तोऽवस्थायां गम्यमानायाम्। कालादिकृता वस्तुधर्मा वयःप्रभृतयोऽवस्थेत्युच्यते। असञ्जातं ककुदमस्य असंजातककुत्। बाल इत्यर्थः। पूर्णककुत्। मध्यमवया इत्यर्थः। उन्नतककुत्। वृद्धवया इत्यर्थः। स्थूलककुत्। बलवानित्यर्थः। यष्टिककुत्। नातिस्थूलो नातिकृश इत्यर्थः। अवस्थायामिति किम् ? श्वेतककुदः॥

## त्रिककुत् पर्वते ॥ १४७ ॥

त्रिककुदि बहुव्रीहौ ककुदशब्दस्य लोपः समासान्तो निपात्यते पर्वतेऽभिधेये। त्रीणि ककुदान्यस्य त्रिककुत् पर्वतः। ककुदाकारं पर्वतस्य शृङ्गं ककुदमित्युच्यते। न च सर्वस्त्रिशिखरः पर्वतस्त्रिककुत्। किं तर्हि ? संज्ञैषा पर्वतविशेषस्य। पर्वत इति किम् ? त्रिककुदोऽन्यः॥

---

१ - 'उभयतोदतः' इति न्यासे।

## उद्विभ्यां काकुदस्य ॥ १४८ ॥

उद् वि इत्येताभ्यां परस्य काकुदशब्दस्य लोपो भवति बहुव्रीहौ समासे। उद्गतं काकुदमस्य उत्काकुत्। विकाकुत्। तालु काकुदमुच्यते॥

## पूर्णाद् विभाषा ॥ १४९ ॥

पूर्णात् परस्य काकुदशब्दस्य विभाषा लोपो भवति बहुव्रीहौ समासे। पूर्णं काकुदमस्य पूर्णकाकुत्, पूर्णकाकुदः॥

## सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ १५० ॥

सुहृद् दुर्हृद् इति निपात्यते यथासंख्यं मित्रामित्रयोरभिधेययोः। सुशब्दात् परस्य हृदयशब्दस्य हृद्भावो निपात्यते बहुव्रीहौ, तथा दुःशब्दात् परस्य। शोभनं हृदयमस्य सुहृद् मित्रम्। दुष्टं हृदयमस्य दुर्हृद् अमित्रम्। मित्रामित्रयोरिति किम्? सुहृदयः कारुणिकः। दुर्हृदयश्चोरः॥

## उरःप्रभृतिभ्यः कप् ॥ १५१ ॥

उरःप्रभृत्यन्ताद् बहुव्रीहेः कप् प्रत्ययो भवति। व्यूढमुरोऽस्य व्यूढोरस्कः। प्रियसर्पिष्कः। अवमुक्तोपानत्कः। पुमान् अनड्वान् पयो नौर्लक्ष्मीरिति विभक्त्यन्ताः पठ्यन्ते, न प्रातिपदिकानि। तत्रेदं प्रयोजनम्—एकवचनान्तानामेव ग्रहणमिह विज्ञायेत, द्विवचनबहुवचनान्तानां मा भूदिति। तत्र 'शेषाद् विभाषा' (५.४.१५४) इति विकल्प एव भवतीति। द्विपुमान्, द्विपुंस्कः। बहुपुमान्, बहुपुंस्कः॥ उरस्। सर्पिस्। उपानह्। पुमान्। अनड्वान्। नौः। पयः। लक्ष्मीः। दधि। मधु। शालि। अर्थान्नञः (ग० सू० १६२)। अनर्थकः॥

## इनः स्त्रियाम् ॥ १५२ ॥

इन्नन्ताद् बहुव्रीहेः कप् प्रत्ययो भवति स्त्रियां विषये। बहवो दण्डिनोऽस्यां शालायां बहुदण्डिका शाला। बहुच्छत्रिका। बहुस्वामिका नगरी। बहुवाग्मिका सभा। स्त्रियामिति किम्? बहुदण्डी राजा, बहुदण्डिकः। 'शेषाद् विभाषा' (५.४.१५४) इत्येतद् भवति॥

## नद्यृतश्च ॥ १५३ ॥

नद्यन्ताद् बहुव्रीहेर्ऋकारान्तात् च कप् प्रत्ययो भवति। बह्व्यः कुमार्योऽस्मिन् देशे बहुकुमारीको देशः। बहुब्रह्मबन्धूकः। ऋतः खल्वपि—बहुकर्तृकः। तकारो मुखसुखो-

च्चारणार्थः[१]॥

## शेषाद् विभाषा ॥ १५४ ॥

यस्माद् बहुव्रीहेः समासान्तो न विहितः स शेषः, तस्माद् विभाषा कप्प्रत्ययो भवति। बह्व्यः खट्वा अस्मिन् बहुखट्वकः। बहुमालकः। बहुवीणकः। बहुखट्वाकः। बहुमालाकः। बहुवीणाकः। बहुखट्वः। बहुमालः। बहुवीणः। कथमनृक्कं साम बह्वृक्कं सूक्तमिति, यावता विहितोऽत्र सामान्येन समासान्त 'ऋक्पूः०' ( ५.४.७४ ) इति? नैतदस्ति। विशेषे स इष्यते, अनृचो माणवके ज्ञेयो बह्वृचश्चरणाख्यायाम् ( ५.४.७४) इति। शेषादिति किम्? प्रियपथः। प्रियधुरः॥

## न संज्ञायाम् ॥ १५५ ॥

संज्ञायां विषये बहुव्रीहौ समासे कप् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। विश्वे देवा अस्य विश्वदेवः। विश्वयशाः॥

## ईयसश्च ॥ १५६ ॥

ईयसन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। सर्वा प्राप्तिः प्रतिषिध्यते। बहवः श्रेयांसोऽस्य बहुश्रेयान्। 'शेषाद् विभाषा' ( ५.४.१५४ ) इत्यस्य प्रतिषेधः। बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी। 'नद्यृतश्च' ( ५.४.१५३ ) इत्यस्य प्रतिषेधः। ह्रस्वत्वमपि न भवति। ईयसो बहुव्रीहौ पुंवदिति वचनात् ( महाभाष्य १.२२४ )॥

## वन्दिते भ्रातुः ॥ १५७ ॥

वन्दितेऽर्थे यो भ्रातृशब्दो वर्तते तदन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। वन्दितः स्तुतः पूजित इत्युच्यते। शोभनो भ्रातास्य सुभ्राता। वन्दित इति किम् ? मूर्खभ्रातृकः। दुष्टभ्रातृकः॥

## ऋतश्छन्दसि ॥ १५८ ॥

ऋवर्णान्ताद् बहुव्रीहेश्छन्दसि विषये कप् प्रत्ययो न भवति। हता मातास्य हुतमा॑ता ( शौ० सं० २.३२.४ )। हतपिता। हुतस्व॑सा ( शौ० सं० २.३२.४ )। सुहो॑ता ( ऋ० ७.६७.३ )॥

---

१ - 'मुखसुखार्थः' इति है०।

## नाडीतन्त्र्योः स्वाङ्गे ॥ १५९ ॥

स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। बह्व्यो नाड्योऽस्य बहुनाडिः कायः। बहुतन्त्रीर्ग्रीवा। धमनीवचनस्तन्त्रीशब्दः। स्वाङ्ग इति किम्? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा॥

## निष्प्रवाणिश्च ॥ १६० ॥

निष्प्रवाणिरिति नदीलक्षणस्य कपः प्रतिषेधो निपात्यते। प्रोयतेऽस्यामिति प्रवाणी। प्रवयन्ति तयेति वा प्रवाणी। करणसाधनोऽयं ल्युट्। तन्तुवायशलाका भण्यते। निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः। निष्प्रवाणिः कम्बलः। अपनीतशलाकः समाप्तवानः प्रत्यग्रो नवक उच्यते॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य चतुर्थः पादः॥



# ॥ षष्ठाध्यायस्य प्रथमः पादः ॥

## एकाचो द्वे प्रथमस्य ॥ १ ॥

अधिकारोऽयम् । एकाच इति च, द्वे इति च, प्रथमस्येति च त्रितयमधिकृतं वेदितव्यम्। इत उत्तरं यद् वक्ष्यामः प्राक् संप्रसारणविधानात् तत्रैकाचः प्रथमस्य द्वे भवत इत्येवं तद् वेदितव्यम्। वक्ष्यति—'लिटि धातोरनभ्यासस्य' (६.१.८) इति। तत्र धातोरवयवस्यानभ्यासस्य प्रथमस्यैकाचो द्वे भवतः। जजागार। पपाच। इयाय। आर। एकाच इति बहुव्रीहिनिर्देशः। एकोऽच् यस्य सोऽयमेकाच् इत्यवयवेन विग्रहः। तत्र समुदायः समासार्थः। अभ्यन्तरश्च समुदायेऽवयवो भवतीति साच्कस्यैव द्विर्वचनं भवति। एवं च पच् इत्यत्र येनैवाचा समुदाय एकाच् तेनैव तदवयवोऽच्शब्दः पशब्दश्च। तत्र पृथगवयवैकाचो न द्विरुच्यन्ते। किं तर्हि ? समुदायैकाजेव। तथा हि सकृच्छास्त्रप्रवृत्त्या सावयवः समुदायोऽनुगृह्यते। पपाचेत्यत्र प्रथमत्वं व्यपदेशिवद्भावात्। इयाय आरेत्यत्रैकाच्त्वमपि व्यपदेशिवद्भावादेव। द्विःप्रयोगश्च द्विर्वचनमिदम्, आवृत्तिसंख्या हि द्वे इति विधीयते। तेन स एव शब्दो द्विरुच्चार्यते, न च शब्दान्तरं तस्य स्थाने विधीयते॥

## अजादेर्द्वितीयस्य ॥ २ ॥

प्रथमद्विर्वचनापवादोऽयम्। अजादेर्द्वितीयस्यैकाचो द्विर्वचनमधिक्रियते। अच् आदिर्यस्य धातोस्तदवयवस्य द्वितीयस्यैकाचो द्वे भवतः। अटिटिषति। अशिशिषति। अरिरिषति। अर्तेः 'स्मिपूङ्रञ्ज्वशां सनि' (७.२.७४) इतीट् क्रियते। तस्मिन् कृते गुणे च रपरत्वे च 'द्विर्वचनेऽचि' (१.१.५९) इति स्थानिवद्भावः प्राप्नोति। तत्र प्रतिविधानं द्विर्वचननिमित्तेऽचीत्युच्यते। न चात्र द्विर्वचननिमित्तमिट्। किं तर्हि? कार्यी। 'न च कार्यी निमित्तत्वेनाश्रीयते' (सीर० प० २)। तथा हि क्ङिन्निमित्तयोर्गुणवृद्ध्योः प्रतिषेधो विधीयमानः शयितेत्यत्र न भवति, न हि कार्यिणः शीङो गुणं प्रति निमित्तभाव इति। अत्र केचिदजादेरिति कर्मधारयात् पञ्चमीमिच्छन्ति—अच्चासावादिश्चेत्यजादिः, तस्माद् अजादेरुत्तरस्यैकाचो द्वे भवत इति। तेषां द्वितीयस्येति विस्पष्टार्थं द्रष्टव्यम्॥

## न न्द्राः संयोगादयः ॥ ३ ॥

द्वितीयस्येति वर्तते। द्वितीयस्यैकाचोऽवयवभूतानां न्द्राणां तदन्तर्भावात् प्राप्तं द्विर्वचनं प्रतिषिध्यते। नकारदकाररेफा द्वितीयैकाचोऽवयवभूताः संयोगादयो न द्विरुच्यन्ते। उन्दिदिषति। अड्डिडिषति। अर्चिचिषति। न्द्रा इति किम् ? ईचिक्षिषते। संयोगादय इति किम् ? प्राणिणिषति। अनितेः 'उभौ साभ्यासस्य' (८.४.२१) इति णत्वम्।

अजादेरित्येव[1]—दिद्रासति। केचिदजादेरित्यपि पञ्चम्यन्तं कर्मधारयमनुवर्तयन्ति। तस्य प्रयोजनम्—इन्दिद्रीयिषति इति। अजादेरनन्तरत्वाभावाद् दकारो द्विरुच्यत एव, नकारो न द्विरुच्यते। इन्द्रमिच्छति इति क्यच्, तदन्ताद् इन्द्रीयितुमिच्छतीति सन् ॥ बकारस्याप्ययं प्रतिषेधो वक्तव्यः॥ उब्जिजिषति। यदा बकारोपध उब्जिरुपदिश्यते तदायं प्रतिषेधः। दकारोपधोपदेशे तु न वक्तव्यः। बत्वं तु दकारस्य विधातव्यम् ॥ यकारपरस्य रेफस्य प्रतिषेधो न भवतीति वक्तव्यम्॥ अरार्यते। अर्तेः अट्यर्त्यशूर्णोतीनामुपसंख्यानम् (३.१.२२ वा०) इति यङ्। तत्र 'यङि च' (७.४.३०) इति गुणः, ततो द्विर्वचनम् ॥ ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम्॥ कस्य तृतीयस्य ? केचिदाहुर्व्यञ्जनस्येति। ईर्ष्यियिषति। अपरे पुनस्तृतीयस्यैकाच इति व्याचक्षते। ईर्ष्यिषिषति ॥ कण्डूवादीनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम्॥ कण्डूयियिषति। असूयियिषति ॥ वा नामधातूनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम्॥ अश्वीयियिषति। अशिश्वीयिषति। अपर आह ॥ यथेष्टं नामधातुष्विति वक्तव्यम्॥ पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। पुपुतित्रीयियिषति[2]। पुत्रीयिषिषति ॥

## पूर्वोऽभ्यासः ॥ ४ ॥

द्वे इति प्रथमान्तं यदनुवर्तते, तदर्थादिह षष्ठ्यन्तं जायते। तत्र प्रत्यासत्तेरस्मिन् प्रकरणे ये द्वे विहिते, तयोर्यः पूर्वोऽवयवः सोऽभ्याससंज्ञो भवति। पपाच। पिपक्षति। पापच्यते। जुहोति। अपीपचत्। अभ्यासप्रदेशास्तु—'अत्र लोपोऽभ्यासस्य' (७.४.५८) इत्येवमादयः॥

## उभे अभ्यस्तम् ॥ ५ ॥

द्वे इति वर्तमान उभेग्रहणं समुदायसंज्ञाप्रतिपत्त्यर्थम्। ये द्वे विहिते, ते उभे अपि समुदिते अभ्यस्तसंज्ञे भवतः। ददति। ददत्। दधतु। उभेग्रहणं किम् ? नेनिजतीत्यत्र 'अभ्यस्तानामादिः' (६.१.१८९) इति समुदाय उदात्तत्वं यथा स्यात् प्रत्येकं पर्यायेण वा मा भूदिति। अभ्यस्तप्रदेशाः—'अभ्यस्तानामादिः' (६.१.१८९) इत्येवमादयः॥

## जक्षित्यादयः षट् ॥ ६ ॥

---

१ - अत्र 'द्वितीयस्येत्येव' इति पाठो युक्तः स्यात्, अन्यथाग्रिमवाक्यानुपपत्तेः, वृत्त्युपक्रमे चाजादि-पदानुवृत्त्यप्रदर्शनाच्च ।

२ - इमं पाठं न युक्तं प्रतीमः। भाषावृत्तिकारः खल्वेनमनार्षमाह। वस्तुत आदिमोदाहरणत्रयमेव युक्तम्।

अभ्यस्तमिति वर्तते। जक्ष इत्ययं धातुरित्यादयश्चान्ये षड् धातवोऽभ्यस्तसंज्ञा भवन्ति। सेयं सप्तानां धातूनामभ्यस्तसंज्ञा विधीयते—'जक्ष भक्षहसनयोः' ( अदा० ६४) इत्यतः प्रभृति 'वेवीङ् वेतिना तुल्ये' ( अदा० ७० ) इति यावत्। जक्षति। जाग्रति। दरिद्रति। चकासति। शासति। दीध्यते, वेव्यत इत्यत्र 'अभ्यस्तानामादिः' ( ६.१.१८९) इत्येष स्वरः प्रयोजनम्। दीध्यदिति च शतरि व्यत्ययेन संपादिते 'नाभ्यस्ताच्छतुः' ( ७.१. ७८ ) इति नुमः प्रतिषेधः॥

## तुजादीनां दीर्घोऽभ्यासस्य ॥ ७ ॥

तुजादीनामिति प्रकार आदिशब्दः। कश्च प्रकारः ? तुजेर्दीर्घोऽभ्यासस्य न विहितः, दृश्यते च। ये तथाभूतास्ते तुजादयस्तेषामभ्यासस्य दीर्घः साधुर्भवति। तूतुंजानः ( ऋ० १.३.६ )। मामहानः ( तै० सं० ४.६.३.२ ) । दाधान। मींमाय ( शौ० सं० ५.११.३ )। अनड्वान् दांधार ( शौ० सं० ४.११.१ )। स तूंताव ( ऋ० १.९४.२)। दीर्घश्चैषां छन्दसि प्रत्ययविशेष एव दृश्यते, ततोऽन्यत्र न भवति। तुतोज शबलान् हरीन्॥

## लिटि धातोरनभ्यासस्य ॥ ८ ॥

लिटि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पपाच। पपाठ। प्रोर्णुनाव। 'वाच्य ऊर्णोर्णुवद्भावः०' ( का० ३.१.३६ ) इति वचनाद् ऊर्णोतेः 'इजादेः०' ( ३.१.३६ ) इत्याम् न भवति। लिटीति किम् ? कर्ता। हर्ता। धातोरिति किम् ? ससुवांसो विशृंण्विरे ( ऋ० ४.८.६ )। इम इन्द्रांय सुन्विरे ( ऋ० ७.३२.४ )। अनभ्यासस्येति किम् ? कृष्णो नोंनाव वृषभो यदीदम् ( ऋ० १.७९. २ )। नोनूयतेर्नोनाव। समान्या मरुतः संमिमिक्षुः ( ऋ० १.१६५.१ )। लिटि उसन्तः ॥ द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्॥ यो जागार तमृचंः कामयन्ते (ऋ० ५.४४. १४ )। दातिं प्रियाणिं ( ऋ० ४.८.३ ) इति॥

## सन्यङोः ॥ ९ ॥

धातोरनभ्यासस्येति वर्तते। सन्यङोरिति च षष्ठ्यन्तमेतत्। सन्नन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पिपक्षति। पिपतिषति। अरिरिषति। उन्दिदिषति। यङन्तस्य—पापच्यते। अटाट्यते। यायज्यते। अरार्यते। प्रोर्णोनूयते। अनभ्यासस्येत्येव—जुगुप्सिषते। लोलूयिषते॥

## श्लौ ॥ १० ॥

श्लौ परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। जुहोति। बिभेति। जिह्रेति॥

## चङि ॥ ११ ॥

चङि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। अपीपचत्। अपीपठत्। आटिटत्। आशिशत्। आर्दिदत्। पचादीनां ण्यन्तानां चङि कृते णिलोप उपधाह्रस्वत्वं द्विर्वचनमित्येषां कार्याणां प्रवृत्तिक्रमः। तथा च 'सन्वल्लघुनि चङ्परे०' ( ७.४.९३ ) इति सन्वद्भावो विधीयमानो ह्रस्वस्य स्थानिवद्भावाद् न प्रतिषिध्यते। यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावो भवति। न चास्मिन् कार्याणां क्रमेणानादिष्टादचः[1] पूर्वोऽभ्यासो भवतीति। आटिटदिति 'द्विर्वचनेऽचि' ( १.१.५९ ) इति स्थानिवद्भावाद् द्वितीयस्यैकाचो द्विर्वचनं भवति॥

## दाश्वान् साह्वान् मीढ्वांश्च ॥ १२ ॥

दाश्वान् साह्वान् मीढ्वानित्येते शब्दाश्छन्दसि भाषायां चाविशेषेण निपात्यन्ते। दाश्वानिति 'दाशृ दाने' ( भ्वा० ६२२ ) इत्येतस्य धातोः क्वसावद्विर्वचनमनिट्त्वं च निपात्येते। दाश्वांसो दाशुषः सुतम् ( ऋ० १.३.७ ) इति। साह्वानिति 'षह मर्षणे' ( भ्वा० ५९१ ) इत्येतस्य परस्मैपदमुपधादीर्घत्वमद्विर्वचनमनिट्त्वं च निपातनात्। साह्वान् बलाहकः। मीढ्वानिति 'मिह सेचने' ( भ्वा० ७१८ ) इत्येतस्याद्विर्वचनमनिट्त्वमुपधादीर्घत्वं ढत्वं च निपातनात्। मीढ्वस्तोकाय तनयाय मृड ( ऋ० २.३३.१४ )। एकवचनमतन्त्रम् ॥ कृञादीनां के द्वे भवत इति वक्तव्यम्॥ क्रियतेऽनेनेति चक्रम्। चिक्लिदम्। कृञः क्लिदेश्च 'घञर्थे कविधानम्०' ( ३.३.५८. वा० ) इति कः प्रत्ययः ॥ चरिचलिपतिवदीनां द्वित्वमच्याक्चाभ्यासस्य॥ चरादीनां धातूनामचि[2] प्रत्यये परतो द्वे भवतः। अभ्यासस्यागागमो भवति। आगागमविधानसामर्थ्याच्च हलादिशेषो न भवति। हलादिशेषे हि सत्यागमस्यादेशस्य च विशेषो नास्ति। चराचरः। चलाचलः। पतापतः। वदावदः ॥ वेति वक्तव्यम्॥ तेन चरः पुरुषः, चलो रथः, पतं यानम्, वदो मनुष्य इत्येवमाद्यपि सिद्धं भवति ॥ हन्तेर्घत्वं च॥ हन्तेरचि प्रत्यये परतो द्वे भवतोऽभ्यासस्य च हकारस्य च घत्वमाक् चागमो भवति। परस्य 'अभ्यासाच्च' ( ७.३.५५)

---

१ – 'क्रमेणादिष्टादचः' इति बाल०, क्रमेणानिष्टादचः' इति है० अपपाठः।

२ – 'धातूनामपि' इत्यपपाठः सार्वत्रिकः।

इति कुत्वम्। घंनाघुनः क्षोभंणश्चर्षणीनाम् ( ऋ० १०.१०३.१ ) ॥ पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य ॥ पाटेरचि परतो द्वे भवतो णिलुक् च भवति। अभ्यासस्य चोगागमो दीर्घश्च भवति। पाटूपटः॥

## ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ १३ ॥

पुत्र पति इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे ष्यङः संप्रसारणं भवति। यणः स्थान इग् भवतीत्यर्थः। कारीषगन्धीपुत्रः। कारीषगन्धीपतिः। कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। करीषस्येव गन्धोऽस्य, कुमुदस्येव गन्धोऽस्येति बहुव्रीहिः, तत्र 'उपमानाच्च' ( ५.४.१३७ ) इति गन्धस्येदन्तादेशः। करीषगन्धेरपत्यमित्यण्, तदन्तात् स्त्रियाम् 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' ( ४.१.७८ ) इति ष्यङ्, ततश्चापि विहिते षष्ठीसमासः, 'संप्रसारणस्य' ( ६.३.१३९ ) इति दीर्घत्वम्। ष्यङ इति किम् ? इभ्यापुत्रः। क्षत्रियापुत्रः। पुत्रपत्योरिति किम् ? कारीषगन्ध्याकुलम्। कौमुदगन्ध्याकुलम्। तत्पुरुष इति किम् ? कारीषगन्ध्या पतिरस्य ग्रामस्य, कारीषगन्ध्यापतिरयं ग्रामः। ष्यङ इति स्त्रीप्रत्ययग्रहणं 'न स्त्रीप्रत्यये चानुपसर्जने' ( परि० २६ ) इति प्रत्ययग्रहणपरिभाषया 'यस्मात् स विहितस्तदादेः०' ( परि० २३ ) इत्येष नियमो नास्ति। तेन परमकारीषगन्ध्यायाः पुत्रः परमकारीषगन्धीपुत्रः, परमकारीषगन्धीपतिरित्यपि भवति। उपसर्जने तु ष्यङि न भवति—अतिक्रान्ता कारीषगन्ध्यामतिकारीषगन्ध्या, तस्याः पुत्रोऽतिकारीषगन्ध्यापुत्रः, अतिकारीषगन्ध्यापतिः। पुत्रपत्योः केवलयोरुत्तरपदयोरिदं संप्रसारणम्, तदादौ तदन्ते च न भवति—कारीषगन्ध्यापुत्रकुलम्, कारीषगन्ध्यापरमपुत्र इति। ष्यङन्ते च यद्यप्यन्ये यणः सन्ति, तथापि ष्यङ एव संप्रसारणम्—'निर्दिश्यमानस्यादेशा भवन्ति' ( परि० १२ ) इति। संप्रसारणमिति चाधिक्रियते 'विभाषा परेः' ( ६.१.४४ ) इति यावत्॥

## बन्धुनि बहुव्रीहौ ॥ १४ ॥

ष्यङः संप्रसारणमित्यनुवर्तते। बन्धुशब्द उत्तरपदे बहुव्रीहौ समासे ष्यङः संप्रसारणं भवति। कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः। कौमुदगन्धीबन्धुः। बहुव्रीहाविति किम् ? कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। अत्रापि पूर्ववदेव। परमकारीषगन्धीबन्धुरित्यत्र भवति। अतिकारीषगन्ध्याबन्धुरिति च न भवति, तथा कारीषगन्ध्याबन्धुधनः कारीषगन्ध्यापरमबन्धुरिति। बन्धुनीति नपुंसकलिङ्गनिर्देशः शब्दरूपापेक्षया, पुँल्लिङ्गाभिधेयस्त्वयं बन्धुशब्दः ॥ मातचूमातृकमातृषु वा[1]॥ ष्यङः संप्रसारणं भवति विभाषया बहुव्रीहावेव। कारीषगन्ध्या मातास्येत्येवं बहुव्रीहौ कृत एतस्मादेवोपसंख्यानात्

---

१ – 'वा' इति त्यक्तं सर्वत्र मुद्रितेषु।

पक्षे मातृशब्दस्य मातजादेशः। तत्र चित्करणसामर्थ्याद् बहुव्रीहिस्वरमन्तोदात्तत्वं बाधते। मातृमातृकशब्दयोश्च भेदेनोपादानाद् 'नद्यृतश्च' (५.४.१५३) इति कबपि विकल्प्यते। कारीषगन्धीमातः, कारीषगन्ध्यामातः। कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः। कारीषगन्धीमाता, कारीषगन्ध्यामाता॥

## वचिस्वपियजादीनां किति ॥ १५ ॥

संप्रसारणमिति वर्तते। ष्यङ इति निवृत्तम्। वचि—'वच परिभाषणे' (अदा० ५६) 'ब्रुवो वचिः' (२.४.५३) इति च। स्वपि—'ञिष्वप् शये' (अदा० ६१)। यजादयो 'यज देवपूजासंगतिकरणदानेषु' (भ्वा० ७२८) इत्यतः प्रभृति आगणान्ताः। तेषां वचिस्वपियजादीनां किति प्रत्यये परतः संप्रसारणं भवति। वचि—उक्तः। उक्तवान्। स्वपि—सुप्तः। सुप्तवान्। यज—इष्टः। इष्टवान्। वप—उप्तः। उप्तवान्। वह—ऊढः। ऊढवान्। वस—उषितः। उषितवान्। वेञ्—उतः। उतवान्। व्येञ्—संवीतः। संवीतवान्। ह्वेञ्—आहूतः। आहूतवान्। वद—उदितः। उदितवान्। टुओश्वि—शूनः। शूनवान्। 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते' (परि० ८८)। तेनेह न भवति—वाच्यति, वाचिक इति॥

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ १६ ॥

'ग्रह उपादाने' (क्र्या० ६४), 'ज्या वयोहानौ' (क्र्या० ३०), 'वेञो वयिः' (२.४.४१), 'व्यध ताडने' (दिवा० ७०), 'वश कान्तौ' (अदा० ७२), 'व्यच व्याजीकरणे' (तुदा० १२), 'ओव्रश्चू छेदने' (तुदा० ११), 'प्रच्छ ज्ञीप्सायाम्' (तुदा० १२२), 'भ्रस्ज पाके' (तुदा० ४) इत्येतेषां धातूनां ङिति प्रत्यये परतश्चकारात् किति च संप्रसारणं भवति। ग्रह—गृहीतः। गृहीतवान्। ङिति—गृह्णाति। जरीगृह्यते। ज्या—जीनः। जीनवान्। 'ल्वादिभ्यः' (८.२.४४) इति निष्ठानत्वम्। ङिति—जिनाति। जेजीयते। 'हलः' (६.४.२) इति संप्रसारणदीर्घे कृते 'प्वादीनां०' (७.३.८०) इति ह्रस्वः क्रियते। वयि—लिटि परतो 'वेञो वयिः' (२.४.४१) आदेशस्तस्य ङिदभावात् किदेवोदाह्रियते। ऊयतुः। ऊयुः। यद्येवं वयिग्रहणमनर्थकम्, यजादिषु वेञ् पठ्यते। नैवं शक्यम्। लिटि तस्य 'वेञः' (६.१.४०) इति प्रतिषेधो वक्ष्यते। तत्र यथैव स्थानिवद्भावाद् वयेर्विधिरेवं प्रतिषेधोऽपि प्राप्नोति? नैष दोषः। 'लिटि वयो यः' (६.१.३८) इति यकारस्य संप्रसारणप्रतिषेधाद् वयेर्विधौ ग्रहणं प्रतिषेधे चाग्रहणमनुमास्यते। सत्यमेतत्। एष एवार्थः साक्षाद् निर्देशेन वयेः स्पष्टीक्रियते। व्यध—विद्धः। विद्धवान्। ङिति—विध्यति। वेविध्यते। वश—उशितः। उशितवान्। ङिति—उष्टः। उशन्ति। व्यच—

विचितः। विचितवान्। ङिति—विचति। वेविच्यते। व्यचेः कुटादित्वमनसि ( १.२.१ वा० ) प्रतिपादितम्। तेन सर्वत्राञ्णिति प्रत्यये संप्रसारणं भवति—उद्विचिता। उद्विचितुम्। उद्विचितव्यमिति। व्रश्चेः—वृक्णः। वृक्णवान्। अथ कथमत्र कुत्वम्, 'व्रश्चभ्रस्ज०' ( ८.२.३६ ) इति हि षत्वेन भवितव्यम् ? 'निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः' ( ८.२.३ वा० )। तत्र षत्वं प्रति नत्वस्य सिद्धत्वाद् झलादिर्निष्ठा न भवति। कुत्वे तु कर्तव्ये तदसिद्धमेवेति प्रवर्तते कुत्वम्। ङिति—वृश्चति। वरीवृश्च्यते। प्रच्छ—पृष्टः। पृष्टवान्। ङिति—पृच्छति। परीपृच्छ्यते। प्रश्नः। नङि तु 'प्रश्ने चासन्नकाले' ( ३.२.११७ ) इति निपातनादसंप्रसारणम्। भ्रस्ज—भृष्टः। भृष्टवान्। ङिति—भृज्जति। बरीभृज्ज्यते। सकारस्य 'झलां जश् झशि' ( ८.४.५३ ) इति जश्त्वेन दकारः, 'स्तोः श्चुना श्चुः' ( ८.४.४० ) इति श्चुत्वेन जकारः[1]॥

## लिट्यभ्यासस्योभयेषाम् ॥ १७ ॥

उभयेषां वच्यादीनां ग्रह्यादीनां च लिटि परतोऽभ्यासस्य संप्रसारणं भवति। वचि—उवाच। उवचिथ। स्वप्—सुष्वाप। सुष्वपिथ। यज—इयाज। इयजिथ। डुवप्—उवाप। उवपिथ। ग्रह्यादीनाम्—तत्र ग्रहेरविशेषः। जग्राह। जग्रहिथ। ज्या—जिज्यौ। जिज्यिथ। वयि—उवाय। उवयिथ। व्यध—विव्याध। विव्यधिथ। वश—उवाश। उवशिथ। व्यच—विव्याच। विव्यचिथ। वृश्चतेः सत्यसति वा योगे नास्ति विशेषः। योगारम्भे तु सति यदि संप्रसारणमकृत्वा हलादिशेषेण ( ७.४.६० ) रेफो निवर्त्यते, तदा वकारस्य संप्रसारणं प्राप्नोति। अथ रेफस्य संप्रसारणं कृत्वा उरदत्वं रपरत्वं च क्रियते, तदानीमुरदत्वस्य स्थानिवद्भावाद् 'न संप्रसारणे संप्रसारणम्' ( ६.१.३७ ) इति प्रतिषेधो भवतीत्यस्ति विशेषः। वव्रश्च। वव्रश्चिथ। पृच्छतिभृज्जत्योरविशेषः। अकिदर्थं चेदमभ्यासस्य संप्रसारणं विधीयते। किति हि परत्वाद् धातोः संप्रसारणे कृते 'पुनः प्रसङ्गविज्ञानाद्०' ( परि० ३९ ) द्विर्वचनम्—ऊचतुः, ऊचुरिति। अधिकारादेवोभयेषां ग्रहणे सिद्धे पुनरुभयेषामिति वचनं हलादिशेषम् ( ७.४.६० ) अपि बाधित्वा संप्रसारणमेव यथा स्यादिति। विव्याध॥

## स्वापेश्चङि ॥ १८ ॥

स्वापेरिति स्वपेर्ण्यन्तस्य ग्रहणम्, तस्य चङि परतः संप्रसारणं भवति। असूषुपत्, असूषुपताम्, असूषुपन्। द्विर्वचनात् पूर्वमत्र संप्रसारणम्, तत्र कृते लघूपधगुणः, तस्य णौ चङ्युपधाया ह्रस्वत्वम् ( ७.४.१ ) ततो द्विर्वचनम्, 'दीर्घो लघोः' ( ७.४.९४ ), इति

---

१ - प्रक्रियावादिनस्तु—सकारस्य श्चुत्वे शकारः, ततो जश्त्वे जकारः—इत्याहुः।

दीर्घत्वम्। चङीति किम् ? स्वाप्यते। स्वापितः। कितीति निवृत्तम्, ङितीति केवलमिहानुवर्तत इत्येतद् दुर्विज्ञानम्॥

## स्वपिस्यमिव्येञां यङि ॥ १९ ॥

'ञिष्वप शये' ( अदा० ६१ ), 'स्यमु स्वन ध्वन शब्दे' ( भ्वा० ५७१ ), 'व्येञ् संवरणे' ( भ्वा० ७३३ ) इत्येतेषां धातूनां यङि परतः संप्रसारणं भवति। सोषुप्यते। सेसिम्यते। वेवीयते। यङीति किम् ? स्वप्नक्॥

## न वशः ॥ २० ॥

यङीति वर्तते। वशेर्धातोर्यङि परतः संप्रसारणं न भवति। वावश्यते, वावश्येते, वावश्यन्ते। यङीति किम् ? उष्टः, उशन्ति॥

## चायः की ॥ २१ ॥

यङीति वर्तते। 'चायृ पूजानिशामनयोः' ( भ्वा० ६२० ) इत्येतस्य धातोर्यङि परतः कीत्ययमादेशो भवति। चेकीयते, चेकीयेते, चेकीयन्ते। दीर्घोच्चारणं यङ्लुगर्थम्। चेकीतः॥

## स्फायः स्फी निष्ठायाम् ॥ २२ ॥

'स्फायी ओप्यायी वृद्धौ' ( भ्वा० ३२८ ) इत्यस्य धातोर्निष्ठायां परतः स्फीत्ययमादेशो भवति। स्फीतः। स्फीतवान्। निष्ठायामिति किम् ? स्फातिः। स्फातीभवतीत्येतदपि क्तिन्नन्तस्यैव रूपम्, न निष्ठान्तस्य। निष्ठायामित्येतदधिक्रियते 'लिड्यङोश्च' ( ६.१.२९ ) इति प्रागेतस्मात् सूत्रात्॥

## स्त्यः प्रपूर्वस्य ॥ २३ ॥

निष्ठायामिति वर्तते संप्रसारणमिति च। स्फी इत्येतद् न स्वर्यते। 'स्त्यै ष्ट्यै शब्दसंघातयोः' ( भ्वा० ६५० ) द्वयोरप्येतयोर्धात्वोः स्त्यारूपमापन्नयोः सामान्येन ग्रहणम्। स्त्या इत्येतस्य प्रपूर्वस्य धातोर्निष्ठायां परतः संप्रसारणं भवति। प्रस्तीतः। प्रस्तीतवान्। संप्रसारणे कृते यण्वत्त्वं विहतमिति निष्ठानत्वं न भवति। 'प्रस्त्योऽन्यतरस्याम्' ( ८.२.५४ ) इति तु पक्षे मकारः क्रियते। प्रस्तीमः। प्रस्तीमवान्। प्रपूर्वस्येति किम् ? संस्त्यानः। संस्त्यानवान्। प्रस्त्य इत्येव सिद्धे पूर्वग्रहणमिहापि यथा स्यात्—प्रसंस्तीतः। प्रसंस्तीतवान्। तत्कथम् ? प्रपूर्वस्येति षष्ठ्यर्थे बहुव्रीहिः। प्रः पूर्वो यस्य धातूपसर्गसमुदायस्य स प्रपूर्वः, तदवयवस्य स्त्य इति व्यधिकरणे षष्ठ्यौ। तत्र प्रसंस्तीत इत्यत्रापि

प्रपूर्वसमुदायावयवः स्त्याशब्दो भवति ॥

## द्रवमूर्तिस्पर्शयोः श्यः ॥ २४ ॥

द्रवमूर्तौ द्रवकाठिन्ये, स्पर्शे च[1] वर्तमानस्य 'श्यैङ् गतौ' ( भ्वा० ६९० ) इत्यस्य धातोर्निष्ठायां परतः संप्रसारणं भवति। शीनं घृतम्। शीना वसा। शीनं मेदः। द्रवावस्थायाः काठिन्यं गतमित्यर्थः। 'श्योऽस्पर्शे' ( ८.२.४७ ) इति निष्ठानत्वम्। स्पर्शे—शीतं वर्तते। शीतो वायुः। शीतमुदकम्। गुणमात्रे तद्वति चास्य शीतशब्दस्य वृत्तिर्द्रष्टव्या। द्रवमूर्तिस्पर्शयोरिति किम्? संश्यानो वृश्चिकः॥

## प्रतेश्च ॥ २५ ॥

श्य इति वर्तते। प्रतेरुत्तरस्य श्यायतेर्निष्ठायां परतः संप्रसारणं भवति। प्रतिशीनः। प्रतिशीनवान्। द्रवमूर्तिस्पर्शाभ्यामन्यत्रापि यथा स्यादिति सूत्रारम्भः॥

## विभाषाभ्यवपूर्वस्य ॥ २६ ॥

श्य इति वर्तते। अभि अव इत्येवंपूर्वस्य श्यायतेर्निष्ठायां विभाषा संप्रसारणं भवति। अभिशीनम्, अभिश्यानम्। अवशीनम्, अवश्यानम्। द्रवमूर्तिस्पर्शविवक्षायामपि विकल्पो भवति। अभिशीनं घृतम्, अभिश्यानं घृतम्। अवशीनं मेदः, अवश्यानं मेदः। अभिशीतो वायुः, अभिश्यानः। अवशीतमुदकम्, अवश्यानमुदकम्। सेयमुभयत्रविभाषा द्रष्टव्या। पूर्वग्रहणस्य च प्रयोजनं समभिश्यानं समवश्यानमित्यत्र मा भूदिति केचिद् व्याचक्षते, न किलायमभ्यवपूर्वः समुदाय इति। योऽत्राभ्यवपूर्वः समुदायस्तदाश्रयो विकल्पः कस्माद् न भवति? तस्मादत्र भवितव्यमेव। यदि तु नेष्यते ततो यत्नान्तरमास्थेयम्— अस्माद् विभाषाविज्ञानाद् व्यवस्थेयम्। पूर्वग्रहणस्य चान्यत् प्रयोजनं वक्तव्यम्[2]॥

## शृतं पाके ॥ २७ ॥

विभाषेत्यनुवर्तते। 'श्रा पाके' ( अदा० ४६ ) इत्येतस्य धातोर्ण्यन्तस्याण्यन्तस्य च पाकेऽभिधेये क्तप्रत्यये परतः शृभावो निपात्यते विभाषा। शृतं क्षीरम्। शृतं हविः। व्यवस्थितविभाषा चेयम्, तेन क्षीरहविषोर्नित्यं शृभावो भवति। अन्यत्र न भवति— श्राणा यवागूः, श्रपिता यवागूरिति। यदापि बाह्ये प्रयोजके द्वितीयो णिजुत्पद्यते तदापि

---

१ - 'च' इति त्यक्तं सर्वत्र।

२ - इतोऽग्रे 'अभिसंशीनमभिसंश्यानं वा। अवसंशीनमवसंश्यानं वा। अत्र विकल्पो यथा स्यादिति पूर्वग्रहणं स्त्यः प्रपूर्वस्येतिवत्' इत्यधिकं बाल०।

नेष्यते—श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति। श्रातिरयमकर्मकः कर्मकर्तृविषयस्य पचेरर्थे वर्तते, स ण्यन्तोऽपि प्राकृतं पच्यर्थमाह। तदत्र द्वयोरपि शृतमितीष्यते। शृतं क्षीरं स्वयमेव। शृतं क्षीरं देवदत्तेन। पाकग्रहणं निपातनविषयप्रदर्शनार्थम्, तेन क्षीरहविषोरेव ॥

## प्यायः पी ॥ २८ ॥

विभाषेत्येव। 'ओप्यायी वृद्धौ' (भ्वा० ३२८) इत्यस्य धातोर्निष्ठायां विभाषा पीत्ययमादेशो भवति। पीनं मुखम्। पीनौ बाहू। पीनमुरः। इयमपि व्यवस्थित-विभाषैव। तेनानुपसर्गस्य नित्यं भवति, सोपसर्गस्य तु नैव भवति। आप्यानश्चन्द्रमाः[1]। आङ्पूर्वस्यान्धूधसोर्भवत्येव—आपीनोऽन्धुः, आपीनमूध इति ॥

## लिड्यङोश्च ॥ २९ ॥

विभाषेति निवृत्तम्। प्यायः पीत्येतत् चशब्देनानुकृष्यते। लिटि यङि च परतः प्यायः पीत्ययमादेशो भवति। आपिप्ये, आपिप्याते, आपिप्यिरे। परत्वात् पीभावे कृते 'पुनः प्रसङ्गविज्ञानाद्०' ( परि० ३९ ) द्विर्वचनम्, 'एरनेकाचो०' ( ६.४.८२ ) इति यणादेशः। यङि—आपेपीयते, आपेपीयेते, आपेपीयन्ते ॥

## विभाषा श्वेः ॥ ३० ॥

लिड्यङोरिति वर्तते, संप्रसारणमिति च। लिटि यङि च श्वयतेर्धातोर्विभाषा संप्रसारणं भवति। शुशाव, शिश्वाय। शुशुवतुः, शिश्वियतुः। यङि—शोशूयते, शेश्वीयते। तदत्र यङि संप्रसारणमप्राप्तं विभाषा विधीयते, लिटि तु किति यजादित्वाद् नित्यं प्राप्तम्, तत्र सर्वत्र विकल्पो भवतीत्येषोभयत्रविभाषा। यदा च धातोर्न भवति, तदा 'लिट्यभ्यास-स्योभयेषाम्' ( ६.१.१७ ) इत्यभ्यासस्यापि न भवति ॥

## णौ च संश्चङोः ॥ ३१ ॥

विभाषा श्वेरिति वर्तते। सन्परे चङ्परे च णौ परतः श्वयतेर्धातोर्विभाषा संप्रसारणं भवति। शुशावयिषति, शिश्वाययिषति। चङि—अशूशवत्, अशिश्वयत्। 'संप्रसारणं संप्रसारणाश्रयं च बलीयो भवति' ( परि० ११९ ) इति वचनादन्तरङ्गमपि वृद्ध्यादिकं संप्रसारणेन बाध्यते। कृते तु संप्रसारणे वृद्धिरावादेशश्च। तत 'ओः पुयण्ज्यपरे' ( ७.४.८० ) इत्येतद् वचनं ज्ञापकं णौ कृतस्थानिवद्भावस्येति स्थानिवद्भावात् शुशब्दो द्विरुच्यते ॥

---

१ – इतः पूर्वं 'प्रप्यानः' इति बाल०।

## ह्वः संप्रसारणम् ॥ ३२ ॥

णौ च संश्चङोरिति वर्तते। सन्परे चङ्परे च णौ परतो ह्वः संप्रसारणं भवति। जुहावयिषति, जुहावयिषतः, जुहावयिषन्ति। अजूहवत्, अजूहवताम्, अजूहवन्। संप्रसारणस्य बलीयस्त्वात् 'शाच्छासाह्वाव्यावेपां युक्' (७.३.३७) इति प्रागेव युग् न भवति। संप्रसारणमिति वर्तमाने पुनः संप्रसारणमित्युक्तं विभाषेत्यस्य निवृत्त्यर्थम्। ह्वः संप्रसारणमभ्यस्तस्येत्येकयोगेन सिद्धे पृथग्योगकरणमनभ्यस्तनिमित्तप्रत्ययव्यवधाने संप्रसारणाभावज्ञापनार्थम्। ह्वायकमिच्छति ह्वायकीयति। ह्वायकीयतेः सन् जिह्वायकीयिषति॥

## अभ्यस्तस्य च ॥ ३३ ॥

ह्व इति वर्तते, तदभ्यस्तस्य इत्यनेन व्यधिकरणम्—अभ्यस्तस्य यो ह्वयतिः। कश्चाभ्यस्तस्य ह्वयतिः? कारणम्। तेनाभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात् संप्रसारणं भवति। जुहाव। जोहूयते[1]। जुहूषति॥

## बहुलं छन्दसि ॥ ३४ ॥

ह्व इति वर्तते। छन्दसि विषये ह्वयतेर्धातोर्बहुलं संप्रसारणं भवति। इन्द्राग्नी .. ... हुवे (ऋ० ५.४६.३)। देवीं सरस्वतीं हुवे। ह्वेञो लट्यात्मनेपदोत्तमैकवचने 'बहुलं छन्दसि' (२.४.७३) इति शपो लुकि कृते संप्रसारणमुवङादेशश्च। न च भवति—ह्वयामि मरुतः शिवान्। ह्वयामि [विश्वान्] देवान् (ऋ० ७.३४.८)॥

## चायः की ॥ ३५ ॥

बहुलं छन्दसीति वर्तते। चायतेर्धातोश्छन्दसि विषये बहुलं कीत्ययमादेशो भवति। वियन्ता न्य१न्यं चिक्युर्न नि चिक्युरन्यम् (ऋ० १.१६४.३८)। लिट्युसि रूपम्। न भवति—अग्निर्ज्योतिर्निचाय्य (मा० सं० ११.१)॥

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताःश्रितमाशीराशीर्ताः ॥ ३६ ॥

छन्दसीति वर्तते। अपस्पृधेथामिति 'स्पर्ध संघर्षे' (भ्वा० ३) इत्यस्य लङि आथामि द्विर्वचनं रेफस्य संप्रसारणमकारलोपश्च निपातनात्। इन्द्रश्च विष्णो यदपस्पृधेथाम् (ऋ० ६.६९.८)। अस्पर्धेथामिति भाषायाम्। अपर आह—स्पर्धेरपपूर्वस्य लङ्या-

---

१ - 'जुहूयते' इत्यपपाठो है०।

थामि संप्रसारणमकारलोपश्च निपातनात्। 'बहुलं छन्दस्यमाङ्योगेऽपि' ( ६.४.७५) इत्यडागमाभावः। अत्र प्रत्युदाहरणमपास्पर्धेथामिति भाषायाम्। आनृचुरानृहुरिति। 'अर्च पूजायाम्' ( भ्वा० १२० ) 'अर्ह पूजायाम्' ( भ्वा० ४९२ ) इत्यनयोर्धात्वोर्लिट्युसि संप्रसारणमकारलोपश्च निपातनात्। ततो द्विर्वचनमुरदत्वम् 'अत आदेः' ( ७.४.७० ) इति दीर्घत्वम्। 'तस्मान्नुड् द्विहलः' ( ७.४.७१ ) इति नुडागमः। य उ॒ग्रा अ॒र्कमा॑नृ॒चुः ( ऋ० १.१९.४ )। न वसू॑न्यानृ॒हुः ( शौ० सं० २.३५.१ )। आनर्चुः, आनर्हुरिति भाषायाम्। चिच्युषे। 'च्युङ् गतौ' ( भ्वा० ६८४ ) इत्यस्य धातोर्लिटि सेशब्देऽभ्यासस्य संप्रसारणमनिट् च निपातनात्। चिच्यु॒षे ( ऋ० ४.३०.२२ )। चुच्युविष इति भाषायाम्। तित्याज। 'त्यज हानौ' ( भ्वा० ७१२ ) इत्यस्य धातोर्लिट्यभ्यासस्य संप्रसारणं निपात्यते। ति॒त्याज॑ ( ऋ० १०.७१.६ )। तत्याजेति भाषायाम्। श्राता इति। 'श्रीञ् पाके' ( क्र्या० ३ ) इत्येतस्य धातोर्निष्ठायां श्राभावः। श्रा॒तास्त॒ इन्द्र॒ सोमा॑ः ( मै० सं० १.९.१)। श्रितमिति। तस्यैव श्रीणातेर्ह्रस्वत्वम्। सोमो॒ गौ॒री अधि॒श्रि॒तः ( ऋ० ९.१२.३)। श्रिता नो गृहाः। अनयोः श्राभावश्रिभावयोर्विषयविभागमिच्छन्ति—सोमेषु बहुषु श्राभाव एव, अन्यत्र श्रिभाव इति। सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावो दृश्यते। यदिं श्रा॒तो जु॒होत॑न॒ ( ऋ० १०.१७९.१ )। तस्य श्राता इति बहुवचनस्याविवक्षितत्वादुपसंग्रहो द्रष्टव्यः। आशीराशीर्त इति। तस्यैव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठायां च शीरादेशः, निष्ठायाश्च नत्वाभावो निपातनात्। तामाशीरा दुहन्ति। आशीर्त ऊर्जम्। क्षी॒रैर्म॑ध्यु॒त आशी॑र्तः ( ऋ० ८.२.९ )॥

## न संप्रसारणे संप्रसारणम् ॥ ३७ ॥

संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न भवति। व्यध—विद्धः। व्यच—विचितः। व्येञ्—संवीतः। एकयोगलक्षणमपि संप्रसारणमत एव वचनात् प्रथमं परस्य यणः क्रियते, पूर्वस्य च प्रसक्तं प्रतिषिध्यते। संप्रसारणमिति वर्तमाने पुनः संप्रसारणग्रहणं विदेशस्थस्यापि संप्रसारणस्य प्रतिषेधो यथा स्यादिति। 'श्वयुवमघोनामतद्धिते' ( ६.४.१३३ )—यूनः। यूना। संप्रसारणग्रहणसामर्थ्यदिव पूर्वस्य प्रतिषेधे वक्तव्ये सवर्णदीर्घत्वमेकादेशो न स्थानिवद् भवति। सति वा स्थानिवत्त्वे व्यवधानमेतावदाश्रयिष्यते ॥ ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि ॥ ऋचि परतस्त्रेः संप्रसारणं भवति, उत्तरपदादिलोपश्च छन्दसि विषये। तिस्र ऋचो यस्मिन् तत् तृचं सूक्तम् , तृचं साम। 'ऋक्पूरब्धूःपथामानक्षे' ( ५.४.७४ ) इति समासान्तः। छन्दसीति किम् ? त्र्यृचं[1] कर्म ॥ रयेर्मतौ बहुलम् ॥ रयिशब्दस्य छन्दसि विषये मतौ परतो बहुलं संप्रसारणं भवति। आ रेवानेतु नो विशः। न च भवति—र॒यि॒मान् पु॒ष्टि॒वर्धनः ( मा० सं० ३.४० )॥

---

१ – 'त्यृचम्' इत्यपपाठो मुद्रितेषु।

## लिटि वयो यः ॥ ३८ ॥

न संप्रसारणमित्यनुवर्तते। लिटि परतो वयो यकारस्य संप्रसारणं न भवति। उवाय, ऊयतुः, ऊयुः। लिड्ग्रहणमुत्तरार्थम् ॥

## वश्चास्यान्यतरस्यां किति ॥ ३९ ॥

अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवत्यन्यतरस्याम्। ऊवतुः, ऊवुः। ऊयतुः, ऊयुः। कितीति किम् ? उवाय। उवयिथ ॥

## वेञः ॥ ४० ॥

लिटीत्यनुवर्तते। 'वेञ् तन्तुसन्ताने' ( भ्वा ७३२ ) इत्यस्य धातोर्लिटि परतः संप्रसारणं न भवति। ववौ, ववतुः, ववुः। किति यजादित्वाद् धातोः प्राप्तमकित्यपि 'लिट्यभ्यासस्योभयेषाम्' ( ६.१.१७ ) इत्यभ्यासस्य, अत उभयं प्रतिषिध्यते ॥

## ल्यपि च ॥ ४१ ॥

वेञ इत्यनुवर्तते। ल्यपि च परतो वेञः संप्रसारणं न भवति। प्रवाय। उपवाय। पृथग्योगकरणमुत्तरार्थम् ॥

## ज्यश्च ॥ ४२ ॥

ल्यपीत्येव। 'ज्या वयोहानौ' ( क्र्या० ३० ) इत्यस्य धातोर्ल्यपि परतः संप्रसारणं न भवति। प्रज्याय। उपज्याय ॥

## व्यश्च ॥ ४३ ॥

ल्यपीत्येव। 'व्येञ् संवरणे' ( भ्वा० ७३३ ) इत्येतस्य धातोर्ल्यपि परतः संप्रसारणं न भवति। प्रव्याय। उपव्याय। योगविभाग उत्तरार्थः ॥

## विभाषा परेः ॥ ४४ ॥

ल्यपि च व्यश्चेत्यनुवर्तते। परेरुत्तरस्य व्येञित्येतस्य धातोर्ल्यपि परतो विभाषा संप्रसारणं न भवति। परिवीय यूपम्, परिव्याय। संप्रसारणे कृते परपूर्वत्वे च 'ह्रस्वस्य०' ( ६.१.७१ ) इति तुक् प्राप्नोति, स 'हलः' ( ६.४.२ ) इति दीर्घत्वेन परत्वाद् बाध्यते ॥

## आदेच उपदेशेऽशिति ॥ ४५ ॥

'धातोः' ( ६.१.८ ) इति वर्तते। एजन्तो यो धातुरुपदेशे तस्याकारादेशो भवति, शिति तु प्रत्यये न भवति। ग्लै—ग्लाता। ग्लातुम्। ग्लातव्यम्। शो—निशाता। निशातुम्। निशातव्यम्। एच इति किम् ? कर्ता। हर्ता। उपदेश इति किम् ? चेता। स्तोता। अशितीति किम् ? ग्लायति। म्लायति। कथं जग्ले, मम्ले ? नैवं विज्ञायते—शकार इद् यस्य सोऽयं शिदिति। किं तर्हि ? श एव इत् शित्। तत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' ( परि० ३३ ) इति शिदादौ प्रत्यये प्रतिषेधः। एशु शकारान्तो भवति। अशितीति प्रसज्यप्रतिषेधोऽयम्। तेनैतदात्वमनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर्भवतीति सुग्लः सुम्ल इति 'आतश्चोपसर्गे' ( ३.१.१३६ ) इति कप्रत्ययः, सुग्लानः सुम्लान इति 'आतो युच्' ( ३.३.१२८ ) इत्येवमादि सिद्धं भवतीति। आकाराधिकारस्त्वयं 'नित्यं स्मयतेः' ( ६.१.५७ ) इति यावत्॥

## न व्यो लिटि ॥ ४६ ॥

व्येञ् इत्येतस्य धातोर्लिटि परत आकारादेशो न भवति। संविव्याय। संविव्ययिथ। 'लिट्यभ्यासस्योभयेषाम्' ( ६.१.१७ ) इत्यभ्यासस्य संप्रसारणम्। णलि 'अचो ञ्णिति' ( ७.२.११५ ) इति वृद्धिः॥

## स्फुरतिस्फुलत्योर्घञि ॥ ४७ ॥

आदेच इति वर्तते। 'स्फुर स्फुल चलने' ( तुदा० ९९, १०१ ) इत्येतयोर्धात्वोरेचः स्थाने घञि परत आकारादेशो भवति। विस्फारः। विस्फालः। विष्फारः। विष्फालः। 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' ( ८.३.७६ ) इति वा षत्वम्॥

## क्रीङ्जीनां णौ ॥ ४८ ॥

'डुक्रीञ् द्रव्यविनिमये' ( क्र्या० १ ) 'इङ् अध्ययने' ( अदा० ३९ ) 'जि जये' ( भ्वा० ३७८ ) इत्येतेषां धातूनामेचः स्थाने णौ परत आकारादेशो भवति। क्रापयति। अध्यापयति। जापयति॥

## सिध्यतेरपारलौकिके ॥ ४९ ॥

णाविति वर्तते। 'षिधु हिंसासंराध्योः' ( दिवा० ८१ ) इत्यस्य धातोरपारलौकिकेऽर्थे वर्तमानस्यैचः स्थाने णौ परत आकारादेशो भवति। अन्नं साधयति। ग्रामं साधयति। अपारलौकिक इति किम् ? तपस्तापसं सेधयति। स्वान्येवैनं कर्माणि सेधयन्ति। अत्र हि

सिध्यतिः पारलौकिके ज्ञानविशेषे वर्तते। तापसः सिध्यति ज्ञानविशेषमासादयति। तं तपः प्रयुङ्क्ते। स च ज्ञानविशेष उत्पन्नः परलोके जन्मान्तरे फलमभ्युदयलक्षणमुपसंहरन् परलोकप्रयोजनो भवति। इह कस्माद् न भवति—अन्नं साधयति, ब्राह्मणेभ्यो दास्यामीति? सिध्यतेरत्रार्थो निष्पत्तिः। तस्याः प्रयोजनमन्नम्। तस्य यद् दानं तत् पारलौकिकम्, न पुनः सिद्धिरेवेति न आत्वं पर्युदस्यते। साक्षात् परलोकप्रयोजने च सिध्यर्थे कृतावकाशं वचनमेवंविषयं नावगाहते। सिध्यतेरिति श्यना निर्देशः 'षिधु गत्याम्' (भ्वा० ३७) इत्यस्य भौवादिकस्य निवृत्त्यर्थः॥

## मीनातिमिनोतिदीङां ल्यपि च ॥ ५० ॥

आदेच उपदेश इति वर्तते। 'मीञ् हिंसायाम्' (क्र्या० ४) 'डुमिञ् प्रक्षेपणे' (स्वा० ४) 'दीङ् क्षये' (दिवा० २४) इत्येतेषां धातूनां ल्यपि विषये, चकारादेचश्च विषये, उपदेश एव प्राक्प्रत्ययोत्पत्तेः 'अलोऽन्त्यस्य' (१.१.५२) स्थान आकारादेशो भवति। प्रमाता। प्रमातव्यम्। प्रमातुम्। प्रमाय। निमाता। निमातव्यम्। निमातुम्। निमाय। उपदाता। उपदातव्यम्। उपदातुम्। उपदाय। उपदेश एवात्वविधानादिवर्णान्त-लक्षणः प्रत्ययो न भवति, आकारान्तलक्षणश्च भवति। उपदायो वर्तते, ईषदुपदानमिति घञ्युचौ भवतः॥

## विभाषा लीयतेः ॥ ५१ ॥

ल्यपीति वर्तते, आदेच उपदेश इति च। 'लीङ् श्लेषणे' (दिवा० २९) इति दिवादिः, 'ली श्लेषणे' (क्र्या० ३३) इति क्र्यादिस्तयोरुभयोरपि यका निर्देशः स्मर्यते। लीयतेर्धातोर्ल्यपि चैचश्च विषय उपदेश एवालोऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति। विलाता। विलातुम्। विलातव्यम्। विलाय। विलेता। विलेतुम्। विलेतव्यम्। विलीय ॥ निमिमीलियां खलचोः प्रतिषेधो वक्तव्यः॥ ईषन्निमयः। निमयो वर्तते। ईषत्प्रमयः। प्रमयो वर्तते। ईषद्विलयः। विलयो वर्तते। अत्र तु लियो व्यवस्थितविभाषा-विज्ञानात् सिद्धम्। एवं च प्रलम्भनशालीनीकरणयोश्च णौ नित्यमात्वं भवति। कस्त्वा-मुल्लापयते। श्येनो वर्तिकामुल्लापयते॥

## खिदेश्छन्दसि ॥ ५२ ॥

विभाषेति वर्तते। 'खिद दैन्ये' (रुधा० १२) इत्यस्य धातोरेचः स्थाने छन्दसि विषये विभाषा आकार आदेशो भवति। चित्तं चखाद[1]। चित्तं चिखेद। छन्दसीति किम्? चित्तं खेदयति॥

---

१ - 'चिखाद' इत्यपपाठो मुद्रितेपु।

## अपगुरो णमुलि ॥ ५३ ॥

'गुरी उद्यमने' ( तुदा० १०४ ) इत्यस्य धातोरपपूर्वस्य णमुलि परत एचः स्थाने विभाषा आकार आदेशो भवति। अपगारमपगारम्, अपगोरमपगोरम्। 'आभीक्ष्ण्ये णमुल् च' ( ३.४.२२ ) इति णमुल्। अस्यपगारं युध्यन्ते, अस्यपगोरं युध्यन्त इत्यत्र 'द्वितीयायां च' ( ३.४.५३ ) इति णमुल् ॥

## चिस्फुरोर्णौ ॥ ५४ ॥

चिञ् स्फुर इत्येतयोर्धात्वोर्णौ परत एचः स्थाने विभाषा आकारादेशो भवति। चापयति, चाययति। स्फारयति, स्फोरयति ॥

## प्रजने वीयतेः ॥ ५५ ॥

णाविति वर्तते। 'वी गतिप्रजनकान्त्यसनखादनेषु ( अदा० ४१ ) इत्यस्य धातोः प्रजने वर्तमानस्य णौ परतो विभाषा आकारादेशो भवति। पुरोवातो गाः प्रवापयति, पुरोवातो गाः प्रवाययति। गर्भं ग्राहयतीत्यर्थः। प्रजनो हि जन्मन उपक्रमो गर्भग्रहणम् ॥

## बिभेतेर्हेतुभये ॥ ५६ ॥

णाविति वर्तते, विभाषेति च। हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकस्ततो यद् भयम्, स यस्य भयस्य साक्षाद् हेतुः तद्भयं हेतुभयम्। तत्र वर्तमानस्य 'ञिभी भये' ( जु० २ ) इत्यस्य धातोर्णौ परतो विभाषाकारादेशो भवति। मुण्डो भापयते, मुण्डो भीषयते। जटिलो भापयते, जटिलो भीषयते। 'भीस्म्योर्हेतुभये' ( १.३.६८ ) इत्यात्मनेपदम्। 'भियो हेतुभये षुक्' ( ७.३.४० )। स चात्वपक्षे न भवति। लीभियोरीकारप्रश्लेषनिर्देशा-दीकारान्तस्य भियः षुग् विधीयते। हेतुभय इति किम्? कुञ्चिकयैनं भाययति। अत्र हि कुञ्चिकातो भयं करणात्, न हेतोर्देवदत्तात् ॥

## नित्यं स्मयतेः ॥ ५७ ॥

णाविति वर्तते, हेतुभय इति च। नित्यग्रहणाद् विभाषेति निवृत्तम्। 'ष्मिङ् ईषद्धसने' ( भ्वा० ६७९ ) इत्यस्य धातोर्हेतुभयेऽर्थे णौ परतो नित्यमाकारादेशो भवति। मुण्डो विस्मापयते। जटिलो विस्मापयते। भय इत्येव[1]—कुञ्चिकयैनं विस्माययति[2]। भयशब्देन धात्वर्थसामान्याद्[3] इह स्मयतेरर्थोऽभिधीयते। न हि मुख्ये भये स्मयतेर्वृत्तिरस्ति ॥

---

१ – 'इति किम्' इति मुद्रितेषु। २ – 'विस्मापयति' इत्यपपाठो मुद्रितेषु।
३ – 'हेत्वर्थसामान्यात्' इत्यपपाठो मुद्रितेषु।

## सृजिदृशोर्झल्यमकिति ॥ ५८ ॥

'सृज विसर्गे' ( तुदा० १२४ ) 'दृशिर् प्रेक्षणे' ( भ्वा० ७१४ ) इत्येतयोर्धात्वोर्झलादावकिति प्रत्यये परतोऽमागमो भवति। स्रष्टा। स्रष्टुम्। स्रष्टव्यम्। द्रष्टा। द्रष्टुम्। द्रष्टव्यम्। लघूपधगुणापवादोऽयममागमः। अस्राक्षीत्। अद्राक्षीत्। 'सिचि वृद्धिः०' ( ७.२.१ ) अमि कृते भवति, पूर्वं तु बाध्यते। झलीति किम् ? सर्जनम्। दर्शनम्। अकितीति किम् ? सृष्टः। दृष्टः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानाद् ( परि० ८८ ) इह न भवति—रज्जुसृड्भ्याम्, देवदृग्भ्यामिति ॥

## अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ ५९ ॥

उपदेश इति वर्तते, झल्यमकितीति च। उपदेशेऽनुदात्तस्य धातोर्ऋकारोपधस्य झलादावकिति प्रत्यये परतोऽन्यतरस्याममागमो भवति। त्रप्ता, तर्पिता, तर्प्ता। द्रप्ता, दर्पिता, दर्प्ता। 'तृप प्रीणने' ( दिवा० ८४ ) 'दृप हर्षणमोचनयोः' ( दिवा० ८५ ) इत्येतौ रधादी धातू, तयोरिडागमो 'रधादिभ्यश्च' ( ७.२.४५ ) इति विकल्प्यते। अनुदात्तोपदेशः पुनरमर्थ एव। अनुदात्तस्येति किम् ? वर्ढा। वर्ढुम्। वर्ढव्यम्। 'वृहू उद्यमने' ( तुदा० ५८ ) इत्ययमुदात्तोपदेश ऊदित्वात् चास्येड् विकल्प्यते। ऋदुपधस्येति किम् ? भेत्ता। छेत्ता। झलीत्येव—तर्पणम्। दर्पणम्। अकितीत्येव—तृप्तः। दृप्तः॥

## शीर्षंश्छन्दसि ॥ ६० ॥

शीर्षन्निति शब्दान्तरं शिरःशब्देन समानार्थं छन्दसि विषये निपात्यते, न पुनरयमादेशः शिरःशब्दस्य, सोऽपि हि छन्दसि प्रयुज्यत एव। शीर्ष्णा हि तत्र सोमं क्रीतं हरन्ति। यत्ते शीर्ष्णो दौर्भाग्यम्। छन्दसीति किम् ? शिरः॥

## ये च तद्धिते ॥ ६१ ॥

शीर्षन्निति वर्तते। आदेशोऽयमिष्यते। स कथम् ? तद्धित इति हि परं निमित्तमुपादीयते, स तदनुरूपां प्रकृतिं शिरःशब्दमाक्षिपति। यकारादौ तद्धिते परतः शिरःशब्दस्य शीर्षन्नादेशो भवति। शीर्षण्यो हि मुख्यो भवति। शीर्षण्यः स्वरः। शिरसि भव इति 'शरीरावयवाच्च' ( ४.३.५५ ) इति यत्। 'ये चाभावकर्मणोः' ( ६.४.१६८ ) इति प्रकृतिभावः। तद्धित इति किम् ? शिर इच्छति शिरस्यति ॥ वा केशेषु॥ शिरसः शीर्षन्नादेशो वक्तव्यः। शीर्षण्याः केशाः, शिरस्याः केशाः॥

## अचि शीर्षः ॥ ६२ ॥

अजादौ तद्धिते शिरसः शीर्षशब्द आदेशो भवति। हस्तिशिरसोऽपत्यं हास्तिशीर्षिः। 'बाह्वादिभ्यश्च' (४.१.९६) इति इञ्। स्थूलशिरस इदं स्थौलशीर्षम्। शीर्षन्भावे हि 'अन्' (६.४.१६७) इति प्रकृतिभावः स्यात्। हास्तिशीर्षिशब्दात् स्त्रियामिञः 'अणिञोरनार्षयोः०' (४.१.७८) ष्यङादेशे कृते शीर्षस्य शिरःशब्दग्रहणेन ग्रहणात् शीर्षन्नादेशः प्राप्नोति। तत्र प्रकृतिभावे सति हास्तिशीर्षण्येत्यनिष्टं रूपं स्यात्। इष्यते तु हास्तिशीर्ष्येति। तत् कथम्? कर्तव्योऽत्र यत्नः। अणिञन्ताद् वा परः प्रत्ययः ष्यङाश्रयितव्यः, तत्र यस्येतिलोपस्य स्थानिवद्भावाद् व्यवधानम्॥

## पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥ ६३ ॥

पाद दन्त नासिका मास हृदय निशा असृज् यूष दोष यकृत् शकृत् उदक आसन[1] इत्येतेषां शब्दानां स्थाने शस्प्रभृतिप्रत्ययेषु परतः पद् दत् नस् मास् हृद् निश् असन् यूषन् दोषन् यकन् शकन् उदन् आसन् इत्येत आदेशा यथासंख्यं भवन्ति। पद—निपदश्चतुरो जहि। पदा वर्तय गोदुहम्। पादस्य पत्। दत्—या दतो धावते तस्यै श्यावदन् (तै० सं० २.५.१.७)। नस्—सूकरस्त्वां खनन्नसा (शौ० सं० २.२७.२)। मास्—मासि (तै० सं० २.५.६.६) त्वा पश्यामि चक्षुषा। हृद्—हृदा पूतं मनसा जातवेदो (शौ० सं० ४.३९.१०)। निश्—अमावास्यायां निशि (खि० २.१.८) यजेत। असन्—असिक्तोऽस्नां (मै० सं० ३.१५.८) अवरोहति। यूषन्—या पात्राणि यूष्ण आसेचनानि (ऋ० १.१६२.१३)। दोषन्—यत्ते दोष्णो (मै० सं० ३.१०.३) दौर्भाग्यम्। यकन्—यक्नोऽवद्यति (मै० सं० ३.१०.३)। शकन्—शक्नो (शौ० सं० १२.४.४) अवद्यति। उदन्—उद्नो दिव्यस्य (तै० सं० २.४.८.२) नावा ते। आसन्—आसनि (ऋ० १.७५.१) किं लभे मधूनि। शस्प्रभृतिष्विति किम्? पादौ ते प्रतिपीड्यौ। नासिके ते कृशे। केचिदत्र छन्दसीत्यनुवर्तयन्ति। अपरे पुनरविशेषेणेच्छन्ति। तथा हि भाषायामपि पदादयः शब्दाः प्रयुज्यन्ते।

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः॥

(तु०—सुश्रुत चि० २४.४२)

इत्येवमादयः। अन्यतरस्यामित्येतदनुवर्तयन्ति। तेन पादादयोऽपि प्रयुज्यन्ते। शस्प्रभृतिष्विति प्रकारार्थे प्रभृतिशब्द इति 'शलां दोषणी' (काठ० सं० १६.२१) इत्यत्रापि

---

१ - 'आस्य' इत्यन्ये।

दोषन्नादेशो भवति ॥ पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् ॥ मांस पृतना सानु इत्येतेषां स्थाने यथासंख्यं मांस् पृत् स्नु इत्येत आदेशा भवन्ति। मांस्पचन्या उखायाः (ऋ० १.१६२.१३)। मांसपचन्या इति प्राप्ते। पृत्सु मर्त्यम् (ऋ० १.२७.७)। पृतनासु मर्त्यमिति प्राप्ते। न ते दिवो न पृथिव्या अधि स्नुषुं (मा० सं० १७.१४)। अधि सानुष्विति प्राप्ते ॥ नस् नासिकाया यत्तस्क्षुद्रेषु ॥ नासिकाया नस्भावो वक्तव्यो यत् तस् क्षुद्र इत्येतेषु परतः। नस्यम्। नस्तः (काठ० सं० १२.१०)। नःक्षुद्रः ॥ यति वर्णनगरयोर्नेति वक्तव्यम् ॥ नासिक्यो वर्णः। नासिक्यं नगरम् ॥

## धात्वादेः षः सः ॥ ६४ ॥

धातोरादेः षकारस्य स्थाने सकारादेशो भवति। षह—सहते। षिच—सिञ्चति। धातुग्रहणं किम्? षोडश। षोडन्। षण्डः। षडिकः। आदेरिति किम्? कषति। लषति। कृषति। 'आदेशप्रत्यययोः' (८.३.५९) इत्यत्र षत्वव्यवस्थार्थं षादयो धातवः केचिदुपदिष्टाः। के पुनस्ते? ये तथा पठ्यन्ते। अथवा लक्षणं क्रियते—अज्दन्त्यपराः सादयः षोपदेशाः स्मिस्विदिस्वदिस्वञ्जिस्वपितयश्च। सृपिसृजिस्तृस्त्यासेक्सृवर्जम् ॥ सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः॥ षोडीयति। षण्डीयति। ष्ठीवति। ष्वष्कते। ष्ठिवु इत्यस्य द्वितीयस्थकारष्ठकारश्चेष्यते। तेन तेष्ठीव्यते टेष्ठीव्यत इति चाभ्यासरूपं द्विधा भवति ॥

## णो नः ॥ ६५ ॥

धातोरादेरित्यनुवर्तते। धातोरादेर्णकारस्य नकार आदेशो भवति। णीञ्—नयति। णम—नमति। णह—नह्यति। धात्वादेरित्येव—अणति। सुब्धातोरयमपि नेष्यते। णकारमिच्छति णकारीयति। 'उपसर्गादसमासेऽपि णोपदेशस्य' (८.४.१४) इत्यत्र णत्वविधेर्व्यवस्थार्थं णादयो धातवः केचिदुपदिश्यन्ते। के पुनस्ते ? ये तथा पठ्यन्ते। अथ वा लक्षणं क्रियते—सर्वे नादयो णोपदेशाः, नृतीनन्दिनर्दिनक्कनाटिनाथृनाधृनृवर्जम्[1] ॥

## लोपो व्योर्वलि ॥ ६६ ॥

धातोरिति प्रकृतं यत् तद् धात्वादेरिति पुनर्धातुग्रहणाद् निवृत्तम्। तेन धातोरधातोश्च वकारयकारयोर्वलि परतो लोपो भवति। दिवु—दिदिवान्, दिदिवांसौ, दिदिवांसः। ऊयी—ऊतम्। क्नूयी—क्नूतम्। 'गोधाया ढ्रक्' (४.१.१२९)—गौधेरः। पचेरन्।

---

१ - 'नृ' इति नास्ति मुद्रितेषु।

यजेरन्। वकारस्य—'जीवे रदानुक्' ( द० उ० १.१६३ )—जीरदानुः। स्रिवेः—आस्रेमाणम्। 'उणादयो बहुलम्' ( ३.३.१ ) इति बहुलवचनात् 'च्छ्वोः शूडनुनासिके च' ( ६.४.१९ ) इत्यूठ् न भवति। वलीति किम् ? ऊय्यते। क्नूय्यते। पूर्वं लोपग्रहणं किम्? वेरपृक्तलोपात् पूर्वं वलि लोपो यथा स्यात्। कण्डूयतेः क्विप्—कण्डूः। लोलूयतेः—लोलूः। व्रश्चादीनामुपदेशसामर्थ्याद् वलि लोपो न भवति। वृश्चति। वव्रश्चेत्यत्रापि हि संप्रसारणहलादिःशेषयोर्बहिरङ्गत्वात् प्राप्नोति॥

## वेरपृक्तस्य ॥ ६७ ॥

लोप इति वर्तते। वेरिति क्विबादयो विशेषाननुबन्धानुत्सृज्य सामान्येन गृह्यन्ते। वेरपृक्तस्य लोपो भवति। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ( ३.२.८७ )—ब्रह्महा। भ्रूणहा। 'स्पृशोऽनुदके क्विन्' ( ३.२.५८ )—घृतस्पृक्। तैलस्पृक्। 'भजो ण्विः' ( ३.२.६२ )—अर्धभाक्। पादभाक्। तुरीयभाक्। अपृक्तस्येति किम् ? 'वृदृभ्यां विन्' ( प० उ० ४.५४)—दर्विः। 'जॄशॄस्तॄजागृभ्यः क्विन्' ( प० उ० ४.५५ )[1]—जागृविः॥

## हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ॥ ६८ ॥

लोप इति वर्तते। तदिह लौकिकेनार्थेनार्थवत् कर्मसाधनं द्रष्टव्यम्। लुप्यत इति लोपः। हलन्ताद् ङ्यन्तादाबन्तात् च दीर्घात् परं सु ति सि इत्येतदपृक्तं हल् लुप्यते। हलन्तात् सुलोपः—राजा। तक्षा। उखास्रत्। पर्णध्वत्। ङ्यन्तात्—कुमारी। गौरी। शार्ङ्गरवी। आबन्तात्—खट्वा। बहुराजा। कारीषगन्ध्या। हलन्तादेव तिलोपः सिलोपश्च। तत्र तिलोपस्तावत्—अबिभर्भवान्। भृञो लङि तिपि श्लौ 'भृञामित्' ( ७.४.७६ ) इत्यभ्यासस्येत्त्वम्। अजागर्भवान्। सिलोपः—अभिनोऽत्र। अच्छिनोऽत्र। दस्य रेफः। हल्ङ्याब्भ्य इति किम् ? ग्रामणीः। सेनानीः। दीर्घादिति किम् ? निष्कौशाम्बिः। अतिखट्वः। सुतिसीति किम् ? अभैत्सीत्। तिपा सहचरितस्य सिशब्दस्य ग्रहणात् सिचो ग्रहणं नास्ति। अपृक्तमिति किम् ? भिनत्ति। छिनत्ति। हलिति किम् ? बिभेद। चिच्छेद। अथ किमर्थं हलन्तात् सुतिसीनां लोपो विधीयते, संयोगान्तलोपेनैव सिद्धम् ? न सिध्यति। राजा तक्षेत्यत्र संयोगान्तलोपस्यासिद्धत्वाद् नलोपो न स्यात्। उखास्रत्, पर्णध्वदित्यत्रापदान्तत्वाद् दत्वं च न स्यात्। अभिनोऽत्रेत्यत्र 'अतो रोरप्लुतादप्लुते' ( ६.१.११३ ) इत्युत्त्वं न स्यात्। अबिभर्भवानित्यत्र तु 'रात् सस्य' ( ८.२.२४ ) इति नियमात् लोप एव न स्यात्।

---

१ – 'कॄगॄशॄसृजागृभ्यः क्विः' इति मुद्रितेषु।

संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति।
रात् तु ते नैव लोपः स्याद् धलस्तस्माद् विधीयते॥

## एङ्ह्रस्वात् संबुद्धेः ॥ ६९ ॥

लोप इति वर्तते, हलिति च। अपृक्तमिति नाधिक्रियते। तथा च पूर्वसूत्रे पुनरपृक्तग्रहणं कृतम्। एङन्तात् प्रातिपदिकाद् ह्रस्वान्तात् च परो हल् लुप्यते स चेत् संबुद्धेर्भवति। एङन्तात्—हे अग्ने। हे वायो। ह्रस्वान्तात्—हे देवदत्त। हे नदि। हे वधु। हे कुण्ड। कुण्डशब्दाद् 'अतोऽम्' (७.१.२४) इत्यम्। 'अमि पूर्वः' (६.१.१०७) इति पूर्वत्वे कृते हल्मात्रस्य मकारस्य लोपः। हे कतरदित्यत्र डिदयमदूडादेशः, तत्र टिलोपे सति ह्रस्वाभावाद् नास्ति संबुद्धिलोपः। एङ्ग्रहणं क्रियते संबुद्धिगुणबलीयस्त्वात्॥

## शेश्छन्दसि बहुलम् ॥ ७० ॥

शि इत्येतस्य बहुलं छन्दसि विषये लोपो भवति। या क्षेत्रा। या वना (शौ० सं० १४.२.७)। यानि क्षेत्राणि (शौ० सं० १४.२.७)। यानि वनानि॥

## ह्रस्वस्य पिति कृति तुक् ॥ ७१ ॥

पिति कृति परतो ह्रस्वान्तस्य धातोः तुगागमो भवति। अग्निचित्। सोमसुत्। प्रकृत्य। प्रहृत्य। उपस्तुत्य। ह्रस्वस्येति किम्? आलूय। ग्रामणीः। पितीति किम्? कृतम्। हृतम्। कृतीति किम्? पटुतरः। पटुतमः। ग्रामणि ब्राह्मणकुलमित्यत्र ह्रस्वस्य बहिरङ्गस्यासिद्धत्वात् तुग् न भवति॥

## संहितायाम् ॥ ७२ ॥

अधिकारोऽयम् 'अनुदात्तं पदमेकवर्जम्' (६.१.१५८) इति यावत्। प्रागेतस्मात् सूत्रादित उत्तरं यद् वक्ष्यामः संहितायामित्येवं तद् वेदितव्यम्। वक्ष्यति—'इको यणचि' (६.१.७७)—दध्यत्र। मध्वत्र। संहितायामिति किम्? दधि अत्र। मधु अत्र॥

## छे च ॥ ७३ ॥

ह्रस्वस्य तुगिति वर्तते। छकारे परतः संहितायां विषये ह्रस्वस्य तुगागमो भवति। इच्छति। यच्छति। ह्रस्व एवात्रागमी, न तु तदन्तः[1]। तेन चिच्छिदतुश्चिच्छिदुरित्यत्र तुगभ्यासस्य ग्रहणेन न गृह्यत इति हलादिःशेषेण न निवर्त्यते, नावयवावयवः समुदायावयवो भवतीति॥

---

१ – 'त्वदन्तः' इत्यपपाठो बाल०, तारा०।

## आङ्माङोश्च ॥ ७४ ॥

तुगित्यनुवर्तते, छ इति च। आङो ङित ईषदादिषु चतुर्ष्वर्थेषु वर्तमानस्य, माङश्च प्रतिषेधवचनस्य छकारे परतस्तुगागमो भवति। 'पदान्ताद् वा' ( ६.१.७६ ) इति विकल्पे प्राप्ते नित्यं तुगागमो भवति। ईषदर्थे—ईषच्छाया आच्छाया। क्रियायोगे—आच्छादयति। मर्यादाभिविध्योः—आच् छायायाः आच्छायम्। माङः खल्वपि—माच् छैत्सीत्। माच् छिदत्। ङिद्विशिष्टग्रहणं किम् ? आ छाया, आच् छाया। प्रमा छन्दः, प्रमाच् छन्दः॥

## दीर्घात् ॥ ७५ ॥

छे तुगिति वर्तते। दीर्घात् परो यश्छकारस्तस्मिन् पूर्वस्य तस्यैव दीर्घस्य तुगागमो भवति। ह्रीच्छति। म्लेच्छति। अपचाच्छायते। विचाच्छायते॥

## पदान्ताद् वा ॥ ७६ ॥

दीर्घात् छे तुगिति वर्तते। पदान्ताद् दीर्घात् परो यश्छकारस्तस्मिन् पूर्वस्य तस्यैव दीर्घस्य पूर्वेण नित्यं प्राप्तो वा तुगागमो भवति। कुटीच्छाया, कुटीछाया। कुवलीच्छाया, कुवलीछाया ॥ विश्वजनादीनां छन्दसि वा तुगागमो भवतीति वक्तव्यम्॥ विश्वजनच्छत्रम्। विश्वजनछत्रम्। न च्छा॒यां क॑रवोऽपरम् ( शौ० सं० १३.१.५६ )। न छायां करवोऽपरम्॥

## इको यणचि ॥ ७७ ॥

अचि परत इको यणादेशो भवति। दध्यत्र। मध्वत्र। कर्त्रर्थम्। हर्त्रर्थम्। लाकृतिः ॥ इकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थं यणादेशो वक्तव्यः॥ भो३ इ इन्द्रम्। भो३ यिन्द्रम्। अचीति चायमधिकारः 'संप्रसारणाच्च' ( ६.१.१०८ ) इति यावत्॥

## एचोऽयवायावः ॥ ७८ ॥

एचः स्थानेऽचि परतोऽय् अव् आय् आव् इत्येत आदेशा यथासंख्यं भवन्ति। चयनम्। लवनम्। चायकः। लावकः। कयेते। ययेते। वायाववरुणद्धि॥

## वान्तो यि प्रत्यये ॥ ७९ ॥

योऽयमेचः स्थाने वान्तादेश ओकारस्य अव्, औकारस्याव्, स यकारादौ प्रत्यये परतो भवति। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। नाव्यो ह्रदः।

वान्त इति किम् ? रायमिच्छति रैयति। यीति किम् ? गोभ्याम्। नौभ्याम्। प्रत्यय इति किम् ? गोयानम्। नौयानम् ॥ गोर्यूतौ छन्दसि ॥ गोशब्दस्य यूतौ परतश्छन्दसि विषये वान्तादेशो वक्तव्यः। आ नों मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ( ऋ० ३.६२.१६ )। छन्दसीति किम् ? गोयूतिः ॥ अध्वपरिमाणे च ॥ गोर्यूतौ परतो वान्तादेशो वक्तव्यः। गव्यूतिमात्रमध्वानं गतः ॥

## धातोस्तन्निमित्तस्यैव ॥ ८० ॥

एच इति वर्तते, वान्तो यि प्रत्यय इति च। धातोर्य एच् तन्निमित्तो यकारादिप्रत्ययनिमित्तः, तस्य यकारादौ प्रत्यये परतो वान्तादेशो भवति। लव्यम्। पव्यम्। अवश्यलाव्यम्। अवश्यपाव्यम्। धातोरिति किम् ? प्रातिपदिकस्य नियमो मा भूत्। तत्र को दोषः ? बाभ्रव्य इत्यत्रैव स्यात्, इह न स्याद्—गव्यं नाव्यमिति। तन्निमित्तस्येति किम् ? अतन्निमित्तस्य मा भूत्। उपोयते। औयत। लौयमानिः। पौयमानिः। 'अत इञ्' ( ४.१.९५ )। एवकारकरणं किम् ? धात्ववधारणं यथा स्यात्, तन्निमित्तावधारणं मा भूदिति। तन्निमित्तस्य हि धातोश्चाधातोश्च भवति। बाभ्रव्यः। अवश्यलाव्यम्। लव्यम् ॥

## क्षय्यजय्यौ शक्यार्थे ॥ ८१ ॥

क्षि जि इत्येतयोर्धात्वोर्यति प्रत्यये परतः शक्यार्थे गम्यमान एकारस्यायादेशो निपात्यते। शक्यः क्षेतुं क्षय्यः। शक्यो जेतुं जय्यः। शक्यार्थ इति किम् ? क्षेयं पापम्। जेयो वृषलः ॥

## क्रय्यस्तदर्थे ॥ ८२ ॥

क्रीणातेर्धातोस्तदर्थे क्रयार्थं यत् तस्मिन्नभिधेये यति प्रत्यये परतोऽयादेशो निपात्यते। क्रय्यो गौः। क्रय्यः कम्बलः। क्रयार्थं यः प्रसारितः, स उच्यते। तदर्थ इति किम् ? क्रेयं नो धान्यम्, न चास्ति क्रय्यम् ॥

## भय्यप्रवय्ये चच्छन्दसि ॥ ८३ ॥

बिभेतेर्धातोः प्रपूर्वस्य च वी इत्येतस्य यति प्रत्यये परतश्छन्दसि विषयेऽयादेशो निपात्यते। भय्यं किलासीत् ( द्र०—काठ० सं० ३३.४ )। वत्सतरी प्रवय्या। भय्येति 'कृत्यल्युटो बहुलम्' ( ३.३.११३ ) इत्यपादाने यत् प्रत्ययः। बिभेत्यस्मादिति भय्यम्। प्रवय्या इति स्त्रियामेव निपातनम्। अन्यत्र प्रवेयमित्येव भवति। छन्दसीति किम् ? भेयम्। प्रवेयम् ॥ ह्रदय्या आप उपसंख्यानम् ॥ ह्रदय्या आपः। ह्रदे भवाः, 'भवे छन्दसि' ( ४.४.११० ) यत् प्रत्ययः ॥

## एकः पूर्वपरयोः ॥ ८४ ॥

अधिकारोऽयम्। 'ख्यत्यात् परस्य' ( ६.१.११२ ) इति प्रागेतस्मात् सूत्रादित उत्तरं यद् वक्ष्यामस्तत्र पूर्वस्य परस्य द्वयोरपि स्थान एकादेशो भवतीत्येतद् वेदितव्यम्। वक्ष्यति—'आद् गुणः' ( ६.१.८७ ) इति। तत्राचि पूर्वस्यावर्णात् च परस्य स्थान एको गुणो भवति। खट्वेन्द्रः। मालेन्द्रः। पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम्, एकस्यैव हि स्यात्, नोभे सप्तमीपञ्चम्यौ युगपत् प्रकल्पिके भवत इति। एकग्रहणं पृथगादेशनिवृत्त्यर्थम्, स्थानिभेदाद्धि भिन्नादिषु नत्ववद् द्वावादेशौ स्याताम्॥

## अन्तादिवच्च ॥ ८५ ॥

एक इति वर्तते, पूर्वपरयोरिति च। एकः पूर्वपरयोरिति योऽयमेकादेशो विधीयते, स पूर्वस्यान्तवद् भवति, परस्यादिवद् भवति। यथा तस्यान्त आदिर्वा तदन्तर्भूतस्तद्ग्रहणेन गृह्यते, तद्वदेकादेशोऽपि तद्ग्रहणेन गृह्यत इत्येषोऽतिदेशार्थः। ब्रह्मबन्धूरित्यत्र ब्रह्मबन्धु इति प्रातिपदिकम्, ऊङित्यप्रातिपदिकम्, तयोः प्रातिपदिकाप्रातिपदिकयोर्य एकादेशः स प्रातिपदिकस्यान्तवद् भवति। यथा शक्यते कर्तुं 'ङ्याप्प्रातिपदिकात्' ( ४.१.१) इति स्वादिविधिः। वृक्षावित्यत्र सुबौकारोऽसुबकारः, तयोः सुबसुपोरेकादेशः सुप आदिवद् भवति। यथा शक्यते वक्तुं सुबन्तं पदम् ( १.४.१४ ) इति। वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यते। तथाहि खट्वाभिरित्यत्रान्तवद्भावाभावाद् 'अतो भिस ऐस्' ( ७.१.९) इति न भवति। ह्वयतेर्जुहावेति संप्रसारणपूर्वत्वस्यादिवद्भावाद् 'आत औ णलः' ( ७.१.३४ ) इति न भवति। अस्यै अश्वः, अस्या अश्व इति 'वृद्धिरेचि' ( ६.१.८८ ) इति वृद्धिः, 'एङः पदान्तादति' ( ६.१.१०९ ) इत्यत्र विधावादिवद् न भवति। पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्त्यते। तत्रावयवयोरानुमानिकं स्थानित्वमिति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तमित्यन्तादिवद्भावो विधीयते॥

## षत्वतुकोरसिद्धः ॥ ८६ ॥

षत्वे तुकि च कर्तव्य एकादेशोऽसिद्धो भवति, सिद्धकार्यं न करोतीत्यर्थः। असिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च। कोऽसिचद् इत्यत्र 'एङः पदान्तादति' ( ६.१.१०९ ) इत्येकादेशस्य परं प्रत्यादिवद्भावादपदादेरिण उत्तरस्यादेशस्य सकारस्य षत्वं प्राप्नोति, तदसिद्धत्वाद् न भवति। कोऽस्य योऽस्य कोऽस्मै योऽस्मै इत्येकादेशस्यासिद्धत्वाद् इणः ( ८.३.५७ ) इति षत्वं न भवति। तुग्विधौ—अधीत्य, प्रेत्येत्यत्रैकादेशस्यासिद्धत्वाद् 'ह्रस्वस्य पिति कृति तुक्' ( ६. १.७१ ) इति तुग् भवति ॥ संप्रसारणङीट्सु प्रतिषेधो वक्तव्यः॥ संप्रसारणे—ब्रह्महूषु। परिवीषु। संप्रसारणपूर्वत्वस्यासिद्धत्वात्

षत्वं न प्राप्नोति। ङौ—वृक्षेच्छत्रम्, वृक्षे छत्रम्। इटि—अपचेच्छत्रम्, अपचे छत्रम्। आद्गुणस्यासिद्धत्वाद् ह्रस्वलक्षणो ( ६.१.७३ ) नित्योऽत्र तुक् प्राप्नोति, 'दीर्घात्' ( ६.१.७५ ) 'पदान्ताद् वा'( ६.१.७६ ) इति तुग्विकल्प इष्यते॥

## आद् गुणः ॥ ८७ ॥

अचीत्यनुवर्तते। अवर्णात् परो योऽच्, अचि च पूर्वो योऽवर्णः, तयोः पूर्वपरयोरवर्णाचोः स्थान एको गुण आदेशो भवति। तवेदम्। खट्वेन्द्रः। मालेन्द्रः। तवेहते। खट्वेहते। तवोदकम्। खट्वोदकम्। तवर्श्यः। खट्वर्श्यः। तवल्कारः। खट्वल्कारः। ऌकारस्य स्थाने योऽण् तस्य लपरत्वमिष्यते॥

## वृद्धिरेचि ॥ ८८ ॥

आदिति वर्तते। अवर्णात् परो य एच् , एचि च पूर्वो योऽवर्णः, तयोः पूर्वपरयोरवर्णैचोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणस्यापवादः। ब्रह्मैडका। खट्वैडका। ब्रह्मैतिकायनः। खट्वैतिकायनः। ब्रह्मौदनः। खट्वौदनः। ब्रह्मौपगवः। खट्वौपगवः॥

## एत्येधत्यूठ्सु ॥ ८९ ॥

वृद्धिरेचीति वर्तते, आदिति च। तदेतदेज्ग्रहणमेतेरेव विशेषणम्, न पुनरेधतेः, अव्यभिचारादूठश्चासंभवात्। 'इण् गतौ' ( अदा० ३८ ) इत्येतस्मिन् धातावेचि 'एध वृद्धौ' ( भ्वा० २ ) इत्येतस्मिन् ऊठि च पूर्वं यदवर्णम्, ततश्च परो योऽच्, तयोः पूर्वपरयोरवर्णाचोः स्थाने वृद्धिरेकादेशो भवति। उपैति। उपैषि। उपैमि। उपैधते। प्रैधते। प्रष्ठौहः। प्रष्ठौहा। प्रष्ठौहे। ऊठ्यादूगुणापवादो वृद्धिर्विधीयते। एत्येधत्योस्त्वेङि पररूपापवादः। 'ओमाङोश्च' ( ६.१.९५ ) इत्येतत् तु पररूपं न बाध्यते—'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' ( परि० ५७ ) इति, 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते०' ( परि० ५९ ) इति वा। तेनेह न भवति—उप आ इत उपेत इति। एचीत्येव—उप इत उपेतः ॥ अक्षादूहिन्यां वृद्धिर्वक्तव्या ॥ अक्षौहिणी ॥ स्वादीरेरिण्योर्वृद्धिर्वक्तव्या[1]॥ स्वैरम्। स्वैरिणी ॥ प्रादूढोढ्येषैष्येषु[2] वृद्धिर्वक्तव्या ॥ प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः ॥ ऋते च तृतीयासमासेऽवर्णाद् वृद्धिर्वक्तव्या ॥ सुखेन ऋतः सुखार्तः। दुःखेन ऋतो दुःखार्तः। ऋत इति किम् ? सुखेन इतः सुखेतः। तृतीयेति किम्? परमर्तः। समास इति किम् ? सुखेनर्तः ॥ प्रवत्सतरकम्बलवसनानामृणे वृद्धिर्वक्तव्या ॥ प्र—

---

१ – ' स्वादीरेरिणोः ' इति महाभाष्ये।
२ – ' प्रादूहोढो० ' इति महाभाष्ये।

प्रार्णम्। वत्सतर—वत्सतरार्णम्। कम्बल—कम्बलार्णम्। वसन—वसनार्णम् ॥ ऋणदशाभ्यां वृद्धिर्वक्तव्या ॥ ऋणार्णम्। दशार्णम् ॥

## आटश्च ॥ ९० ॥

एचीति निवृत्तम्। अचीत्यनुवर्तते। आटः परो योऽच्, अचि च पूर्वो य आट्, तयोः पूर्वपरयोराडचोः स्थाने वृद्धिरेकादेशो भवति। ऐक्षिष्ट। ऐक्षत। ऐक्षिष्यत। औभीत्। आर्ध्नोत्। औब्जीत्। चकारोऽधिकविधानार्थः, 'उसि०', 'ओमाङोश्च' ( ६.१.९६,९५) इति पररूपबाधनार्थः। औस्रीयत्। औङ्कारीयत्। आ ऊढा ओढा, तामैच्छत् औढीयत् ॥

## उपसर्गादृति धातौ ॥ ९१ ॥

आदित्येव। अवर्णान्तादुपसर्गादृकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणापवादः। उपार्च्छति। प्रार्च्छति। उपार्ध्नोति। उपसर्गादिति किम्? खट्वर्च्छति। मालर्च्छति। प्रगता ऋच्छका अस्माद् देशात् प्रर्च्छको देशः। 'यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञकाः' ( महाभाष्य १.७५ ) इति। ऋतीति किम् ? उप इत उपेतः। तपरकरणं किम् ? उप ॠकारीयति उपर्कारीयति। 'वा सुप्यापिशलेः' ( ६.१.९२ ) इति विकल्पः स्यात्। उपसर्गग्रहणादेव धातुग्रहणे सिद्धे धातुग्रहणं शाकलनिवृत्त्यर्थम्। 'ऋत्यकः' ( ६.१.१२८ ) इति हि शाकल्यस्य प्रकृतिभावः प्राप्नोति ॥

## वा सुप्यापिशलेः ॥ ९२ ॥

आदित्येव, उपसर्गादृति धाताविति च। सुबन्तावयवे धातावृकारादौ परतोऽवर्णान्तादुपसर्गात् पूर्वपरयोरापिशलेराचार्यस्य मतेन वा वृद्धिरेकादेशो भवति। उपर्षभीयति, उपार्षभीयति। उपल्कारीयति, उपाल्कारीयति। ऋकारलृकारयोः सावर्ण्यविधिः ( का० १.१.९ ) इति ऋतीति लृकारोऽपि गृह्यते। आपिशलिग्रहणं पूजार्थम्। वेति ह्युच्यत एव ॥

## औतोऽम्शसोः ॥ ९३ ॥

ओतोऽमि शसि च परतः पूर्वपरयोराकार आदेशो भवति। गां पश्य। गाः पश्य। द्यां पश्य। द्याः पश्य। द्योशब्दोऽप्योकारान्त एव विद्यते, ततोऽपि परं सर्वनामस्थानं णिदिष्यते, तेन नाप्राप्तायां वृद्धावयमाकारो विधीयमानस्तां बाधते ( परि० ५७ )।

अमिति द्वितीयैकवचनं गृह्यते, शसा साहचर्यात्, सुपीति चाधिकारात्। तेनाचिनवमसुनवमित्यत्र न भवति॥

## एङि पररूपम् ॥ ९४ ॥

आदित्येव, उपसर्गाद् धाताविति च। अवर्णान्तादुपसर्गादेङादौ धातौ पूर्वपरयोः पररूपमेकादेशो भवति। 'वृद्धिरेचि' (६.१.८८) इत्यस्यापवादः। उपेलयति। प्रेलयति। उपोषति। प्रोषति। केचिद् 'वा सुप्यापिशलेः' (६.१.९२) इत्यनुवर्तयन्ति, तत् च वाक्यभेदेन सुब्धातौ विकल्पं करोति। उपेडकीयति, उपैडकीयति। उपोदनीयति, उपौदनीयति ॥शकन्ध्वादिषु पररूपं वक्तव्यम्॥ शक अन्धुः शकन्धुः। कुल अटा कुलटा ॥सीमन्तः केशेषु॥ सीम्नोऽन्तः सीमन्तः। अन्यत्र सीमान्तः ॥एवे चानियोगे पररूपं वक्तव्यम्॥ इह एव इहेव। अद्य एव अद्येव। अनियोग इति किम्? इहैव भव, मान्यत्र गाः ॥ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्॥ स्थूल ओतुः स्थूलौतुः, स्थूलोतुः। बिम्बौष्ठी, बिम्बोष्ठी। समास इति किम्? तिष्ठ देवदत्तौष्ठं पश्य ॥एमन्नादिषु छन्दसि पररूपं वक्तव्यम्॥ अपां त्वा एमन्, अपां त्वेमन् (मै० सं० २.७.१८)। अपां त्वा ओद्मन्, अपां त्वोद्मन् (मै० सं० २.७.१८)॥

## ओमाङोश्च ॥ ९५ ॥

आदित्येव। अवर्णान्तादोमि आङि च परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति। का ओमित्यवोचत् कोमित्यवोचत्। योमित्यवोचत्। आङि खल्वपि—आ ऊढा ओढा। अद्य ओढा अद्योढा। कदा ओढा कदोढा। तदा ओढा तदोढा। 'वृद्धिरेचि' (६.१.८८) इत्यस्यापवादः। इह तु आ ऋश्यात् अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यादिति अकः सवर्णे दीर्घत्वं (६.१.१०१) बाधते॥

## उस्यपदान्तात् ॥ ९६ ॥

आदित्येव। अवर्णादपदान्तादुसि पूर्वपरयोरादगुणापवादः पररूपमेकादेशो भवति। भिन्द्या उस् भिन्द्युः। छिन्द्या उस् छिन्द्युः। अदा उस् अदुः। अया उस् अयुः। अपदान्तादिति किम्? का उस्रा कोस्रा। का उषिता कोषिता। आदित्येव—चक्रुः। अबिभयुः॥

## अतो गुणे ॥ ९७ ॥

अपदान्तादिति वर्तते। अकारादपदान्ताद् गुणे परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति। पचन्ति। यजन्ति। अकः सवर्णे दीर्घस्य (६.१.१०१) अपवादः। पचे,

यज इत्यत्र 'वृद्धिरेचि' ( ६.१.८८ ) इति वृद्धिः प्राप्नोति। अत इति किम् ? यान्ति। वान्ति। गुण इति किम् ? अपचे। अयजे। अपदान्तादित्येव—दण्डाग्रम्। यूपाग्रम्॥

## अव्यक्तानुकरणस्यात इतौ ॥ ९८ ॥

अव्यक्तमपरिस्फुटवर्णम्, तदनुकरणं परिस्फुटवर्णमेव। केनचित् सादृश्येन तदव्यक्तमनुकरोति, तस्य योऽच्छब्दस्तस्मादितौ पूर्वपरयोः स्थाने पररूपमेकादेशो भवति। पटत् इति पटिति। घटत् इति घटिति। झटत् इति झटिति। छमत्[1] इति छमिति। अव्यक्तानुकरणस्येति किम् ? जगत् इति जगदिति। अत इति किम् ? मरट् इति मरडिति। इताविति किम् ? पटत् अत्र पटदत्र ॥ अनेकाच इति वक्तव्यम्॥ इह मा भूत्—श्रत्[2] इति श्रदिति। कथं घटदिति गम्भीरमम्बुदैर्नदितमिति ? दकारान्तमेतदनुकरणं द्रष्टव्यम्॥

## नाम्रेडितस्यान्त्यस्य तु वा ॥ ९९ ॥

अव्यक्तानुकरणस्याम्रेडितस्य योऽच्छब्द इतौ तस्य पररूपं न भवति, तस्य योऽन्त्यस्तकारस्तस्य वा भवति। पटत्पटदिति, पटत्पटेति करोति। 'नित्यवीप्सयोः' ( ८.१.४ ) इति द्विर्वचनम्। यदा तु समुदायानुकरणं तदा भवत्येव पूर्वेण पररूपम्—पटत्पटिति करोति॥

## नित्यमाम्रेडिते डाचि ॥ १०० ॥

अव्यक्तानुकरणस्य, अतः, अन्त्यस्येति चानुवर्तते। डाच्परं यदाम्रेडितं तस्मिन् पूर्वस्याव्यक्तानुकरणस्याच्छब्दस्य योऽन्त्यस्तकारस्तस्य पूर्वस्य परस्य चाद्यस्य वर्णस्य नित्यं पररूपमेकादेशो भवति। पटपटा करोति। दमदमा करोति। पटदित्यस्माद् 'अव्यक्तानुकरणाद्०' ( ५.४.५७ ) इति डाचि विहिते 'डाचि बहुलम्०' ( ८.१.१२ वा० ) इति द्विर्वचनम्, तच्च टिलोपात् पूर्वमेवेष्यते॥

## अकः सवर्णे दीर्घः ॥ १०१ ॥

अकः सवर्णेऽचि परतः पूर्वपरयोः स्थाने दीर्घ एकादेशो भवति। दण्डाग्रम्। दधीन्द्रः। मधूदके। होतॄश्यः। अक इति किम् ? अग्नये। सवर्ण इति किम् ? दध्यत्र। अचीत्येव—कुमारी शेते। 'नाज्झलौ' ( १.१.१० ) इत्यत्र यदजिति प्रत्याहारग्रहणं तत्र

---

१ – ' छमित् ' इत्यपपाठः सार्वत्रिकः।
२ – ' स्रत् ' इति बाल०।

ग्रहणकशास्त्रस्यानभिनिर्वृत्तत्वात् सवर्णा न गृह्यन्त इति सवर्णत्वमीकारशकारयोर-प्रतिषिद्धम् ॥ सवर्णदीर्घत्व ऋति ॠ वा वचनम् ॥ ऋति सवर्णे परभूते तत्र ॠ वा भवतीति वक्तव्यम्। होतॄ ॠकारो होतृकारः। यदा न ॠ तदा दीर्घ एव होतॄकारः ॥ ऌति ॡ वा वचनम् ॥ ऌति सवर्णे परतो ॡ वा भवतीति वक्तव्यम् ॥ होतॄ ऌकारो होत्-ऌकारः, होतॄकारः। ऋकारऌकारयोः सवर्णसंज्ञाविधिरुक्तः ( का० १.१.९ )। दीर्घपक्षे तु समुदायान्तरतमस्य ऌवर्णस्य दीर्घस्याभावात् ॠकारः क्रियते ॥

## प्रथमयोः पूर्वसवर्णः ॥ १०२ ॥

अक इति दीर्घ इति वर्तते। प्रथमाशब्दो विभक्तिविशेषे रूढः, तत्साहचर्याद् द्वितीयापि प्रथमेत्युक्ता। तस्यां प्रथमायां द्वितीयायां च विभक्तावचि अकः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घ एकादेशो भवति। अग्नी। वायू। वृक्षाः। प्लक्षाः। वृक्षान्। प्लक्षान्। 'अतो गुणे' ( ६.१.९७ ) इति यदकारे पररूपं तदकः सवर्णे दीर्घत्वमेव बाधते, न तु पूर्वसवर्णदीर्घत्वम्—'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते०' ( परि० ५९ ) इति। अचीत्येव—वृक्षः। प्लक्षः। अक इत्येव—नावौ। पूर्वसवर्णग्रहणं किम् ? अग्नी इत्यत्र पक्षे परसवर्णो मा भूत्। दीर्घग्रहणं किम् ? त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्त्यर्थम् ॥

## तस्माच्छसो नः पुंसि ॥ १०३ ॥

तस्मात् पूर्वसवर्णदीर्घादुत्तरस्य शसोऽवयवस्य सकारस्य पुंसि नकारादेशो भवति। वृक्षान्। अग्नीन्। वायून्। कर्तॄन्। हर्तॄन्। षण्ढकान्। पण्डकान्। स्थूरान्। अररकान् पश्य। सर्व एते पुँल्लिङ्गविशिष्टं स्वार्थं प्रतिपादयन्ति। इह तु चञ्चेव चञ्चा, 'लुम्मनुष्ये' ( ५.३.९८ ) इति कनो लुपि कृते 'लुपि युक्तवद् व्यक्तिवचने' ( १.२.५१ ) इति पुंसोऽपि स्त्रीलिङ्गता, तेन नत्वं न भवति—चञ्चाः पश्य, वध्रिकाः पश्येति। तस्मादिति किम् ? एतांश्चरतो गाः पश्य। शस इति किम् ? वृक्षाः। प्लक्षाः। पुंसीति किम् ? धेनूः। बह्वीः। कुमारीः ॥

## नादिचि ॥ १०४ ॥

अवर्णादिचि पूर्वसवर्णदीर्घो न भवति। वृक्षौ। प्लक्षौ। खट्वे। कुण्डे। आदिति किम् ? अग्नी। इचीति किम् ? वृक्षाः ॥

## दीर्घाज्जसि च ॥ १०५ ॥

दीर्घात् जसि इचि च परतः पूर्वसवर्णदीर्घो न भवति। कुमार्यौ, कुमार्यः। ब्रह्मबन्ध्वौ, ब्रह्मबन्ध्वः ॥

## वा छन्दसि ॥ १०६ ॥

दीर्घात् छन्दसि विषये जसि च इचि च परतो वा पूर्वसवर्णदीर्घो न भवति। मारुतीश्चतस्रः ( काठ० सं० ११.१० ) पिण्डीः। मारुत्यश्चतस्रः पिण्ड्यः। वाराही उपानहा ( मै० सं० ४.४.६ )। वाराह्यौ उपानह्यौ ( लौ० गृ० ३.७ )॥

## अमि पूर्वः ॥ १०७ ॥

अक इत्येव। अमि परतोऽकः पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशो भवति। वृक्षम्। प्लक्षम्। अग्निम्। वायुम्। पूर्वग्रहणं किम् ? पूर्व एव यथा स्यात्, पूर्वसवर्णोऽन्तरतमो मा भूदिति, कुमारीमित्यत्र हि त्रिमात्रः स्यात्। वा छन्दसीत्येव—शमीं च ( काठ० सं० ३६.६ ), शम्यं च। गौरीं च, गौर्यं ( ऋ० ४.१२.६ ) च॥

## संप्रसारणाच्च ॥ १०८ ॥

पूर्व इत्येव। संप्रसारणादचि परतः पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशो भवति। यजि—इष्टम्। वपि—उप्तम्। ग्रहि—गृहीतम्। संप्रसारणविधानसामर्थ्याद् विगृहीतस्य श्रवणे प्राप्ते पूर्वत्वं विधीयते। वा छन्दसीत्येव—मित्रावरुणौ यज्यमानः[१]। परपूर्वत्वविधाने सत्यर्थवत् संप्रसारणविधानमिति इष्ट इत्येवमादिषु पूर्वत्वाभावे यणादेशो भवत्येव। अन्तरङ्गे चाचि कृतार्थं वचनमिति बाह्ये पश्चात् संनिपतिते पूर्वत्वं न भवति। शकह्वौ। शकह्वर्थम्॥

## एङः पदान्तादति ॥ १०९ ॥

एङ् यः पदान्तस्तस्मादति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। अग्नेऽत्र। वायोऽत्र। अयवादेशयोरयमपवादः। एङ इति किम् ? दध्यत्र। मध्वत्र। पदान्तादिति किम् ? चयनम्। लवनम्। अतीति किम् ? वायो इति। भानो इति। वायविति। भानविति। तपरकरणं किम् ? वायवायाहि॥

## ङसिङसोश्च ॥ ११० ॥

एङ इति वर्तते, अतीति च। एङ उत्तरयोर्ङसिङसोरति परतः पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशो भवति। अग्नेरागच्छति। वायोरागच्छति। अग्नेः स्वम्। वायोः स्वम्। अपदान्तार्थ आरम्भः॥

---

१ – है० सम्पादकोऽत्र भ्रान्त्या आथर्वणमन्त्रम् उद्धरति। 'यज्यमानः' इति न्या०पद०सम्मतः पाठः।

## ऋत उत् ॥ १११ ॥

ङसिङसोरित्येव। ऋकारान्तादुत्तरयोर्ङसिङसोरति परतः पूर्वपरयोरुकार एकादेशो भवति। होतुरागच्छति। होतुः स्वम्। द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यः स लभतेऽन्यतरव्यपदेशमिति 'उरण् रपरः' (१.१.५१) इति रपरत्वमत्र कृत्वा 'रात् सस्य' (८.२.२४) इति सलोपः कर्तव्यः॥

## ख्यत्यात् परस्य ॥ ११२ ॥

ङसिङसोरिति वर्तते, उदिति च। ख्यत्यादिति खिशब्दखीशब्दयोस्तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणम्, ताभ्यां परस्य ङसिङसोरत उकारादेशो भवति। सख्युरागच्छति। सख्युः स्वम्। पत्युरागच्छति। पत्युः स्वम्। खीशब्दस्योदाहरणम्—सह खेन वर्तत इति सखस्तमिच्छतीति क्यच् सखीयति। सखीयतेः क्विप् सखीः, तस्य ङसिङसोः सख्युरिति। तीशब्दस्यापि—लूनमिच्छति लूनीयति। लूनीयतेः क्विपि लुप्ते, लून्युरागच्छति। लून्युः स्वम्। निष्ठानत्वम् (८.२.४४) 'पूर्वत्रासिद्धम्' (८.२.१) इत्यसिद्धम्। विकृतनिर्देशादेवेह न भवति—अतिसखेरागच्छति, सेनापतेरागच्छतीति। सखिशब्दस्य केवलस्य घिसंज्ञा प्रतिषिध्यते न तदन्तस्य॥

## अतो रोरप्लुतादप्लुते ॥ ११३ ॥

अति, उदिति वर्तते। अकारादप्लुतादुत्तरस्य रो रेफस्य उकारानुबन्धविशिष्टस्याकारेऽप्लुते परत उकारादेशो भवति। वृक्षोऽत्र। प्लक्षोऽत्र। 'भोभगोअघोअपूर्वस्य योऽशि' (८.३.१७) इत्यस्मिन् प्राप्त उत्वं विधीयते। रुत्वमप्याश्रयत्वात् 'पूर्वत्रासिद्धम्' (८.२.१) इत्यसिद्धं न भवति। अत इति किम्? अग्निरत्र। तपरकरणं किम्? वृक्षा अत्र। सानुबन्धग्रहणं किम्? स्वरत्र। प्रातरत्र। अतीत्येव—वृक्ष इह। तस्यापि तपरत्वादत्र न भवति—वृक्ष आश्रितः। अप्लुतादिति किम्? सुस्रोत३ अत्र न्वसि। अप्लुत इति किम्? तिष्ठतु पय अ३श्विन्। अत्र प्लुतस्यासिद्धत्वादुत्वं प्राप्नोतीत्यप्लुतादप्लुत इत्युच्यते॥

## हशि च ॥ ११४ ॥

हशि च परतोऽत उत्तरस्य रोरुकारादेशो भवति। पुरुषो याति। पुरुषो हसति। पुरुषो ददाति॥

## प्रकृत्यान्तःपादमव्यपरे ॥ ११५ ॥

एङोऽति इत्येव। एङ इति यत् पञ्चम्यन्तमनुवर्तते, तदर्थादिह प्रथमान्तं भवति। प्रकृतिरिति स्वभावः कारणं वाभिधीयते। अन्तरित्यव्ययमधिकरणभूतं मध्यमाचष्टे। पादशब्देन च ऋक्पादस्यैव ग्रहणमिष्यते, न तु श्लोकपादस्य। अवकारयकारपरेऽति परत एङ् प्रकृत्या भवति। स्वभावेनावतिष्ठते, कारणात्मना वा भवति, न विकारमापद्यते। तौ चेद् निमित्तकार्यिणावन्तःपादमृक्पादमध्ये भवतः। ते अग्रे अश्वमायुञ्जन् ( मा० सं० ९.७ )। ते अस्मिन् जवमादधुः ( मा० सं० ९.७ )। उपप्रयन्तो अध्वरम् ( ऋ० १.७४.१ )। शिरो अपश्यम् ( ऋ० १.१६३.६ )। सुजाते अश्वसूनृते ( ऋ० ५.७९.१ )। अध्वर्यो अद्रिभिः सुतम् ( ऋ० ९.५१.१ )। अन्तःपादमिति किम् ? कया मती कुत एतास एतेऽर्चन्ति ( ऋ० १.१६५.१ )। अव्यपर इति किम् ? तेऽवदन् ( ऋ० १०.१०९.१ )। तेजोऽयुस्मयुम् ( मा० सं० १२.६३ )। एङिति किम् ? अन्वग्निरुषसामग्रमख्यत् ( शौ० सं० ७.८२.४)। केचिदिदं सूत्रं नान्तःपादमव्यपर इति पठन्ति, ते संहितायामिह यदुच्यते तस्य सर्वस्य प्रतिषेधं वर्णयन्ति ॥

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ११६ ॥

अव्यात् अवद्यात् अवक्रमुः अव्रत अयम् अवन्तु अवस्यु इत्येतेषु वकारयकार-परेऽप्यति परतोऽन्तःपादमेङ् प्रकृत्या भवति। अग्निः प्रथमो वसुभिर्नो अव्यात् ( तै० सं० २.१.११.२ )। मित्रमहो अवद्यात् ( ऋ० ४.४.१५ )। माशिवासो अवक्रमुः ( ऋ० ७.३२.२७ )। ते नो अव्रताः। शतवारो[1] अयं मणिः ( शौ० सं० १९.३६.५ )। ते नो अवन्तु पितरः ( ऋ० १०.१५.१ )। कुशिकासो अवस्यवः ( ऋ० ३.४२.९ )॥

## यजुष्युरः ॥ ११७ ॥

उरःशब्द एङन्तो यजुषि विषयेऽति प्रकृत्या भवति। उरो अन्तरिक्षम्। अपरे 'यजुष्युरो' इति सूत्रं पठन्ति, उकारान्तमुरुशब्दं संबुद्ध्यन्तमधीयते। त इदमुदाहरन्ति—उरो अन्तरिक्ष[2] सजूः ( तै० सं० १.३.८.१ ) इति। यजुषि पादानामभावादनन्तःपादार्थं वचनम् ॥

## आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे ॥ ११८ ॥

यजुषीत्येव। आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दा अम्बे अम्बाले इत्येतौ च

---

१ – 'शतधारो' इति मुद्रितः पाठः सर्वत्र। २ – 'अन्तरिक्षं' इति मुद्रितेषु, स चापपाठः।

यावम्बिकेशब्दात् पूर्वौ यजुषि पठितौ तेऽति परतः प्रकृत्या भवन्ति। आपो॑ अ॒स्मान्मा॒तरः॑ शुन्धयन्तु ( मा० सं० ४.२ )। जुषा॒णो अ॒प्तुराज्यं॑स्य ( मा० सं० ५.३५ )। वृष्णो॑ अं॒शुभ्या॒ं गभ॑स्तिपूतः ( मा० सं० ७.१ )। वर्षि॑ष्ठे अधि॒नाके॒ ( तै० सं० १.१.८.२ )। अम्बे॒ अम्बा॒ले अम्बि॑के[१]। यजुषीदमीदृशमेव पठ्यते। अस्मादेव निपातनाद् 'अम्बार्थनद्योर्ह्रस्वः' ( ७.३.१०७ ) इति ह्रस्वत्वं न भवति॥

## अङ्ग इत्यादौ च ॥ ११९ ॥

अङ्गशब्दे य एङ् तदादौ चाकारे यः पूर्वः स यजुषि विषयेऽति प्रकृत्या भवति। ऐन्द्रः प्राणो अङ्गेअङ्गे अदीध्यत्। ऐ॒न्द्रः प्रा॒णो अङ्गे॑अङ्गे॒ नि दी॑ध्यत् ( मा० सं० ६.२० )। ऐन्द्रः प्राणो अङ्गेअङ्गे अशोचिषम्[२]॥

## अनुदात्ते च कुधपरे ॥ १२० ॥

यजुषीत्येव। अनुदात्ते चाति कवर्गधकारपरे परतो यजुषि विषय एङ् प्रकृत्या भवति। अ॒यं नो॑[३] अ॒ग्निः ( मा० सं० ५.३७ )। अयं सो अध्वरः। अनुदात्त इति किम्? अधोऽग्रे। अग्रशब्द आद्युदात्तो निपात्यते। कुधपर इति किम् ? सोऽयमग्निः सहस्रियः ( तु०—मा० सं० १५.२१ )॥

## अवपथासि च ॥ १२१ ॥

यजुषीत्येव। अनुदात्त इति चशब्देनानुकृष्यते। अवपथाःशब्देऽनुदात्तेऽकारादौ परतो यजुषि विषय एङ् प्रकृत्या भवति। त्री रुद्रेभ्यो अवपथाः ( काठ० सं० ३०.६.३२)। वपेर्लङि थासि 'तिङ्ङतिङः' ( ८.१.२८ ) इति निघातेनानुदात्तत्वम्। अनुदात्त इत्येव— यद्रुद्रेभ्योऽवपथाः। 'निपातैर्यद्यदिहन्त०' ( ८.१.३० ) इति निघातः प्रतिषिध्यते॥

## सर्वत्र विभाषा गोः ॥ १२२ ॥

सर्वत्र छन्दसि भाषायां चाति परतो गोरेङ् प्रकृत्या भवति विभाषा। गोऽग्रम्, गो अग्रम्। छन्दसि—अपशवो॒ वा अ॒न्ये गोअ॒श्वेभ्यः॑ प॒शवो॑ गोअ॒श्वान् ( तै० सं० ५.२.९. ४ )॥

---

१ - 'अम्बे॒ अम्बि॒केऽम्बा॑लिके' ( मा० सं० २३.१८ )। 'अम्बे॒ अम्बा॒ल्यम्बि॑के॒' ( तै० सं० ७.४.१९. १ )।

२ - 'अरोचिषम्' इति हैः०।        ३ - 'सो' इति मुद्रितः पाठः।

## अवङ् स्फोटायनस्य ॥ १२३ ॥

अतीति निवृत्तम्। अचीत्येतत्त्वनुवर्तत एव। अचि परतो गोः स्फोटायनस्याचार्यस्य मतेनावङादेशो भवति। गवाग्रम्, गोऽग्रम्। गवाजिनम्, गोऽजिनम्। गवौदनम्, गवोदनम्। गवोष्ट्रम्, गवुष्ट्रम्। आद्युदात्तश्चायमादेशो निपात्यते, स निपातनस्वरो बहुव्रीहौ प्रकृतिस्वरविधाने भवति। गावो अग्रमस्य गवाग्र इति। अन्यत्र तु समासान्तोदात्तत्वेन बाध्यते। स्फोटायनग्रहणं पूजार्थम्, विभाषेत्येव हि वर्तते। व्यवस्थितविभाषेयम्, तेन गवाक्ष इत्यत्र नित्यमवङ् भवति॥

## इन्द्रे च नित्यम् ॥ १२४ ॥

इन्द्रशब्दस्थेऽचि परतो गोर्नित्यमवङादेशो भवति। गवेन्द्रः। गवेन्द्रयज्ञस्वरः॥

## प्लुतप्रगृह्या अचि ॥ १२५ ॥

प्लुताश्च प्रगृह्याश्चाचि प्रकृत्या भवन्ति। देवदत्त३ अत्र न्वसि। यज्ञदत्त३ इदमानय। आश्रयादत्र प्लुतः सिद्धः। प्रगृह्याः—अग्नी इति। वायू इति। खट्वे इति। माले इति। अचीत्यनुवर्तमाने पुनरज्ग्रहणमादेशनिमित्तस्याचः परिग्रहार्थम्। तेनेह न भवति—जानु उ अस्य रुजति, जान्वस्य रुजति। प्रगृह्यादुकारात् परस्याकारस्य सवर्णदीर्घत्वं प्रत्यनिमित्तत्वादत्र प्रकृतिभावो न भवति। नित्यग्रहणमिहानुवर्तते। प्लुतप्रगृह्याणां नित्यमयमेव प्रकृतिभावो यथा स्याद्, 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' ( ६.१.१२७ ) इत्येतन् मा भूदिति॥

## आङोऽनुनासिकश्छन्दसि ॥ १२६ ॥

आङोऽचि परतः संहितायां छन्दसि विषयेऽनुनासिकादेशो भवति, स च प्रकृत्या भवति। अ॒भ्र आँ अ॒पः ( ऋ० ५.४८.१ )। गंभी॒र आँ उग्रंपु॑त्रे जिघांसतः ( ऋ० ८.६७.११ )। केचिदाङोऽनुनासिकश्छन्दसि बहुलमित्यधीयते। तेनेह न भवति—इन्द्रो बाहुभ्यामातरत्। आ अतरत्॥

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२७ ॥

इकोऽसवर्णेऽचि परतः शाकल्यस्याचार्यस्य मतेन प्रकृत्या भवन्ति, ह्रस्वश्च तस्येकः स्थाने भवति। दधि अत्र, दध्यत्र। मधु अत्र, मध्वत्र। कुमारि अत्र, कुमार्यत्र। किशोरि अत्र, किशोर्यत्र। इक इति किम् ? खट्वेन्द्रः। असवर्ण इति किम् ? कुमारीन्द्रः। शाकल्यस्य ग्रहणं पूजार्थम्। आरम्भसामर्थ्यदेव हि यणादेशेन सह विकल्पः सिद्धः

॥ सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः॥ सिति—अ॒यं ते॒ योनि॑र्ऋ॒त्वियः॑ (ऋ० ३.२९.१०)। नित्यसमासे—व्याकरणम्। कुमार्यर्थम् ॥ ईषाअक्षादिषु छन्दसि प्रकृतिभावमात्रं वक्तव्यम्॥ ई॒षा अ॒क्षो॑ हि॒र॒ण्ययः॑ (ऋ० ८.५.२९)। का ईं॑मरे पिशङ्गि॒ला (मा० सं० २३.५५)। पथा अगमन्॥

## ऋत्यकः ॥ १२८ ॥

शाकल्यस्य ह्रस्वश्चेत्येतदनुवर्तते। ऋकारे परतः शाकल्यस्याचार्यस्य मतेनाकः प्रकृत्या भवन्ति, ह्रस्वश्च तस्याकः स्थाने भवति। खट्व ऋश्यः। माल ऋश्यः। कुमारि ऋश्यः। होतृ ऋश्यः। ऋतीति किम्? खट्वेन्द्रः। अक इति किम्? वृक्षावृश्यः। सवर्णार्थमनिगर्थं च वचनम्॥

## अप्लुतवदुपस्थिते ॥ १२९ ॥

उपस्थितं नामानार्ष इतिकरणः, समुदायादवच्छिद्य पदं येन स्वरूपेऽवस्थाप्यते। तस्मिन् परतः प्लुतोऽप्लुतवद् भवति। प्लुतकार्यं प्रकृतिभावं न करोति। सुश्लोक३ इति सुश्लोकेति। सुमङ्गल३ इति सुमङ्गलेति। वत्करणं किम्? अप्लुत इत्युच्यमाने प्लुत एव प्रतिषिध्यते। तत्र को दोषः? प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्। अग्नी३ इति। वायू३ इति॥

## ई३ चाक्रवर्मणस्य ॥ १३० ॥

ई३कारः प्लुतोऽचि परतश्चाक्रवर्मणस्याचार्यस्य मतेनाप्लुतवद् भवति। अस्तु हीत्यब्रूताम्[1]। अस्तु हि३ इत्यब्रूताम्[1]। चिनु हीदम्। चिनु हि३ इदम्। चाक्रवर्मणग्रहणं विकल्पार्थम्, तदुपस्थिते निवृत्त्यर्थम् अनुपस्थिते प्राप्त्यर्थमित्युभयत्रविभाषेयम्। ईकारादन्यत्राप्ययमप्लुतवद्भाव इष्यते। वशा३ इयं वशेयम्॥

## दिव उत् ॥ १३१ ॥

'एङः पदान्तादति' (६.१.१०९) इत्यतः पदग्रहणमनुवर्तते। दिव इति प्रातिपदिकं गृह्यते न धातुः, सानुबन्धकत्वात्। दिवः पदस्योकारादेशो भवति। दिवि कामो यस्य द्युकामः। द्युमान्। विमलद्यु दिनम्। द्युभ्याम्, द्युभिः। निरनुबन्धकग्रहणात् (परि० ८१) इह न भवति—अक्षद्यूभ्याम्, अक्षद्यूभिरिति। तपरकरणमूठो निवृत्त्यर्थं द्युभ्याम्, द्युभिरिति। अत्र हि परत्वादूठ् प्राप्नोति। पदस्येति किम्? दिवौ, दिवः॥

---

१ – यथान्यासम् 'अस्तुहि०' इति पाठः।

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ १३२ ॥

एतत्तदौ यावककारौ नञ्समासे न वर्तेते तयोर्यः सुशब्दः, कश्च तयोः सुशब्दः ? यस्तदर्थेन संबद्धः, तस्य संहितायां विषये हलि परतो लोपो भवति। एष ददाति। स ददाति। एष भुङ्क्ते। स भुङ्क्ते। एतत्तदोरिति किम् ? यो ददाति। यो भुङ्क्ते। सुग्रहणं किम् ? एतौ गावौ चरतः। अकोरिति किम् ? एषको ददाति। सको ददाति। 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' ( परि० ८९ ) इति रूपभेदेऽपि साकच्कावेतत्तदावेव भवतः। अनञ्समास इति किम् ? अनेषो ददाति। असो ददाति। उत्तरपदार्थप्रधानत्वाद् नञ्समासस्यैतत्तदोरेवात्र संबद्धः सुशब्दः। हलीति किम् ? एषोऽत्र। सोऽत्र॥

## स्यश्छन्दसि बहुलम् ॥ १३३ ॥

स्य इत्येतस्य छन्दसि हलि परतो बहुलं सोर्लोपो भवति। उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि ( ऋ० ४.४०.४ )। एष स्य ते पवत इन्द्र सोमः ( ऋ० ९.९७.४६ )। न च भवति—यत्र स्यो निपतेत्॥

## सोऽचि लोपे चेत् पादपूरणम् ॥ १३४ ॥

स इत्येतस्याचि परतः सुलोपो भवति, लोपे सति चेत् पादः पूर्यते। सेदु राजा क्षयति चर्षणीनाम् ( ऋ० १.३२.१५ )। सौषधीरनुरुध्यसे ( ऋ० ८.४३.९ )। लोपे चेत् पादपूरणमिति किम् ? स इव व्याघ्रो भवेत्। अचीति विस्पष्टार्थम्। पादग्रहणेनात्र श्लोकपादस्यापि ग्रहणं केचिदिच्छन्ति। तेनेदमपि सिद्धं भवति।

सैष दाशरथी रामः सैष राजा युधिष्ठिरः।
सैष कर्णो महात्यागी सैष भीमो महाबलः[1]॥

## सुट् कात् पूर्वः ॥ १३५ ॥

अधिकारोऽयम्, 'पारस्करप्रभृतीनि च संज्ञायाम्' ( ६.१.१५७ ) इति यावत्। इत उत्तरं यद् वक्ष्यामस्तत्र सुडिति कात् पूर्व इति चैतदधिकृतं वेदितव्यम्। वक्ष्यति—'संपर्युपेभ्यः करोतौ भूषणे' ( ६.१.१३७ )। संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम्। कात् पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम्। तथाहि संस्कृषीष्ट संस्क्रियत इति संयोगादिलक्षणाविड्गुणौ न भवतः। 'तिङ्ङतिङः' ( ८.१.२८ ) इति निघातोऽपि तर्हि न प्राप्नोति, सुटा व्यवहितत्वात्? 'स्वरविधौ व्यञ्जनमविद्यमानवद्०' ( परि० ७९ ) इति वचनाद् नास्ति व्यवधानम्।

---

१ – उत्तरार्धो नास्ति बाल०।

संचस्करतुः, संचस्करुरिति गुणः कथम् ? 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' ( परि० ८९) इति। संयोगोपधग्रहणं च 'ऋतश्च संयोगादेर्गुणः' ( ७.४.१० ) इत्यत्र कर्तव्यम्। टित्करणं सुट्स्तुस्वञ्जाम् ( ८.३.७० ) इत्यत्र विशेषणार्थम्॥

## अडभ्यासव्यवायेऽपि ॥ १३६ ॥

अड्व्यवायेऽभ्यासव्यवायेऽपि सुट् कात् पूर्वो भवति। समस्करोत्। समस्कार्षीत्। संचस्कार। परिचस्कार। किमर्थं पुनरिदमुच्यते, 'पूर्वं धातुरुपसर्गेण युज्यते' ( सीर० प० १२९ ) इति तत्र धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं सुट् क्रियते पश्चादडभ्यासौ ? अभक्तश्च सुडित्युक्तम्, ततः सकारादुत्तरावडभ्यासावनिष्टे देशे स्याताम्। एतस्मिंस्तु सत्यत एव वचनात् कृतयोरडभ्यासयोस्तद्व्यवायेऽपि सुट् कात् पूर्वः क्रियत इति सिद्धमिष्टं भवति॥

## सम्पर्युपेभ्यः करोतौ भूषणे ॥ १३७ ॥

सम् परि उप इत्येतेभ्यो भूषणार्थे करोतौ परतः सुट् कात् पूर्वो भवति। सँस्कर्ता। सँस्कर्तुम्। सँस्कर्तव्यम्। अत्र 'संपुंकानां सत्वम्' ( ८.३.५ वा० ) इति समो मकारस्य सकारः, पूर्वस्य चाकारस्यानुनासिकः। परिष्कर्ता। परिष्कर्तुम्। परिष्कर्तव्यम्। सुट्स्तु-स्वञ्जाम् ( ८.३.७० ) इति षत्वम्। उपस्कर्ता। उपस्कर्तुम्। उपस्कर्तव्यम्। भूषण इति किम्? उपकरोति। संपूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते, संस्कृतमन्नमिति॥

## समवाये च ॥ १३८॥

समवायः समुदायः, तस्मिंश्चार्थे करोतौ संपर्युपेभ्यः कात् पूर्वः सुडागमो भवति। तत्र नः संस्कृतम्। तत्र नः परिष्कृतम्। तत्र न उपस्कृतम्। समुदितमित्यर्थः॥

## उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ १३९ ॥

सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः। विकृतमेव वैकृतम्। प्रज्ञादित्वादण् ( ५.४.३८ )। गम्यमानार्थस्य वाक्यस्य स्वरूपेणोपादानं वाक्यस्याध्याहारः। एतेष्वर्थेषु गम्यमानेषु करोतौ धातौ परत उपात् सुट् कात् पूर्वो भवति। प्रतियत्ने तावत्—एधोदकस्योपस्कुरुते। काण्डं गुडस्य[1] उपस्कुरुते। वैकृते—उपस्कृतं भुङ्क्ते। उपस्कृतं गच्छति। वाक्याध्याहारे—उपस्कृतं जल्पति। उपस्कृतमधीते। एतेष्विति किम् ? उपकरोति॥

---

१ - 'काण्डगुणस्य' इति मुद्रितेपु। द्र० — पूर्वत्र १.३.३२।

## किरतौ लवने ॥ १४० ॥

उपादित्येव। उपादुत्तरस्मिन् किरतौ धातौ लवनविषये सुट् कात् पूर्वो भवति। उपस्कारं मद्रका लुनन्ति। उपस्कारं काश्मीरका लुनन्ति। विक्षिप्य लुनन्तीत्यर्थः। णमुलत्र वक्तव्यः। लवन इति किम् ? उपकिरति देवदत्तः॥

## हिंसायां प्रतेश्च ॥ १४१ ॥

किरतावित्येव। उपात् प्रतेश्चोत्तरस्मिन् किरतौ सुट् कात् पूर्वो भवति हिंसायां विषये। उपस्कीर्णं हं ते वृषल भूयात्। प्रतिस्कीर्णं हं ते वृषल भूयात्। तथा ते वृषल विक्षेपो भूयाद् यथा हिंसामनुबध्नातीत्यर्थः। हिंसायामिति किम् ? प्रतिकीर्णम्॥

## अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ १४२ ॥

किरतावित्येव। अपादुत्तरस्मिन् किरतौ चतुष्पाच्छकुनिषु यदालेखनं तस्मिन् विषये सुट् कात् पूर्वो भवति। अपस्किरते वृषभो हृष्टः। अपस्किरते कुक्कुटो भक्ष्यार्थी। अपस्किरते श्वा आश्रयार्थी। आलिख्य विक्षिपतीत्यर्थः। चतुष्पाच्छकुनिष्विति किम् ? अपकिरति देवदत्तः॥ हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्॥ इह मा भूत्—अपकिरति श्वा ओदनपिण्डमाशितः। हर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदस्योपसंख्यानम् ( १.३.२१ वा० )॥

## कुस्तुम्बुरूणि जातिः ॥ १४३ ॥

कुस्तुम्बुरूणीति सुट् निपात्यते, जातिश्चेद् भवति। कुस्तुम्बुरुर्नामौषधिजातिर्धान्यकम्। तत्फलान्यपि कुस्तुम्बुरूणि। सूत्रनिर्देशे नपुंसकलिङ्गमविवक्षितम्। जातिरिति किम् ? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि। तुम्बुरुशब्देनात्र तिन्दुकीफलान्युच्यन्ते, समासेन तेषां कुत्सा॥

## अपरस्पराः क्रियासातत्ये ॥ १४४ ॥

अपरस्परा इति सुट् निपात्यते क्रियासातत्ये गम्यमाने। अपरस्पराः सार्था गच्छन्ति। सन्ततमविच्छेदेन गच्छन्तीत्यर्थः। क्रियासातत्य इति किम् ? अपरपराः सार्था गच्छन्ति। अपरे च परे च सकृदेव गच्छन्तीत्यर्थः। नात्र गमनस्य सातत्यं प्रबन्धो[1] विवक्षितः। किमिदं सातत्यमिति ? सततस्य भावः सातत्यम्। कथं सततम् ? समस्तते विकल्पेन

---

१ - ' सातत्यप्रबन्धः ' इति समस्तः पाठो है०, तारा०।

मकारलोपो विधीयते।

लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि।
समो वा हिततततयोर्मांसस्य पचि युड्घञोः॥

## गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४५ ॥

गोष्पदमिति सुट् निपात्यते, तस्य च षत्वं सेवितेऽसेविते प्रमाणे च विषये। गोष्पदो देशः। गावः पद्यन्ते यस्मिन् देशे, स गोभिः सेवितो देशो गोष्पद इत्युच्यते। असेविते—अगोष्पदान्यरण्यानि। असेविते गोष्पदशब्दो न संभवतीत्यगोष्पदशब्दार्थं निपातनम्। यद्येवं नार्थ एतेन, गोष्पदप्रतिषेधादगोष्पदं भविष्यति ? सत्यमेतत्, यत्र तु सेवित-प्रसङ्गोऽस्ति तत्रैव स्यादगोष्पदमिति, यत्र त्वत्यन्तासंभव एव तत्र न स्याद्—अगोष्पदान्य-रण्यानीति। असेवितग्रहणात् तत्रापि भवति। यानि हि महान्त्यरण्यानि येषु गवामत्यन्ता-संभवस्तान्येवमुच्यन्ते। प्रमाणे—गोष्पदमात्रं क्षेत्रम्। गोष्पदपूरं वृष्टो देवः। नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयते। किं तर्हि ? क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम्। सेविता-सेवितप्रमाणेष्विति किम् ? गोः पदं गोपदम्॥

## आस्पदं प्रतिष्ठायाम् ॥ १४६ ॥

आत्मयापनाय स्थानं प्रतिष्ठा, तस्यामास्पदमिति सुट् निपात्यते। आस्पदमनेन लब्धम्। प्रतिष्ठायामिति किम् ? आ पदात् आपदम्॥

## आश्चर्यमनित्ये ॥ १४७ ॥

अनित्यतया विषयभूतया अद्भुतत्वमिह लक्ष्यते[1], तस्मिन्नाश्चर्यं निपात्यते। 'चरेराङि चागुरौ' ( ३.१.१०० वा० ) इति यत्प्रत्यये कृते निपातनात् सुट्। आश्चर्यं यदि स भुञ्जीत। आश्चर्यं यदि सोऽधीयीत। चित्रमद्भुतमित्यर्थः। अनित्य इति किम् ? आचर्यं कर्म शोभनम्॥

## वर्चस्केऽवस्करः ॥ १४८ ॥

कुत्सितं वर्चो वर्चस्कमन्नमलम्, तस्मिन्नभिधेयेऽवस्कर इति निपात्यते। अवपूर्वस्य किरतेः कर्मणि 'ॠदोरप्' ( ३.३.५७ ) इत्यप्, निपातनात् सुट्। अवकीर्यत इत्यवस्करोऽ-न्नमलम्। तत्संबन्धाद् देशोऽपि तथोच्यते। वर्चस्क इति किम् ? अवकरः॥

---

१ – 'उपलक्ष्यते' इति है०।

## अपस्करो रथाङ्गम् ॥ १४९ ॥

अपस्कर इति निपात्यते रथाङ्गं चेद् भवति। अपपूर्वात् किरतेः 'ॠदोरप्' ( ३.३.५७ ) इत्यप्, निपातनात् सुट्। अपस्करो रथावयवः। रथाङ्गमिति किम् ? अपकरः॥

## विष्किरः शकुनिर्विकिरो वा ॥ १५० ॥

विष्किर इति किरतेर्विपूर्वस्य 'इगुपधज्ञाप्रीकिरः कः' ( ३.१.१३५ ) इति कप्रत्यये विहिते सुट् निपात्यते शकुनिश्चेद् भवति। विकिरशब्दाभिधेयो वा शकुनिर्भवति।

सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते।

विष्किरो वा शकुनाविति वा ग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणमिह तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत्॥

## ह्रस्वाच् चन्द्रोत्तरपदे मन्त्रे ॥ १५१ ॥

चन्द्रशब्द उत्तरपदे ह्रस्वात् परः सुडागमो भवति मन्त्रविषये। सुश्चन्द्र ( ऋ० ५.६.५ ) युष्मान्। ह्रस्वादिति किम् ? सूर्याचन्द्रमसाविव ( ऋ० ५.५१.१५ )। मन्त्र इति किम्? सुचन्द्रा पौर्णमासी। उत्तरपदं समास एव भवतीति प्रसिद्धम्, तत इह न भवति—शुक्रमसि चन्द्रमसि ( मा० सं० ४.१८ )॥

## प्रतिष्कशश्च कशेः ॥ १५२ ॥

'कश गतिशासनयोः' ( अदा० १६ ) इत्येतस्य धातोः प्रतिपूर्वस्य पचाद्यचि कृते सुट् निपात्यते, तस्यैव षत्वम्। ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः। वार्तापुरुषः, सहायः, पुरोयायी वा प्रतिष्कश इत्यभिधीयते। कशेरिति किम् ? प्रतिगतः कशां प्रतिकशोऽश्वः। अत्र यद्यपि कशेरेव कशाशब्दस्तथापि कशेरिति धातोरुपादानं तदुपसर्गस्य प्रतेः प्रतिपत्त्यर्थम्। तेन धात्वन्तरोपसर्गाद् न भवति॥

## प्रस्कण्वहरिश्चन्द्रावृषी ॥ १५३ ॥

प्रस्कण्वो हरिश्चन्द्र इति सुट् निपात्यत ऋषी चेदभिधेयौ भवतः। प्रस्कण्व ऋषिः। हरिश्चन्द्र ऋषिः। हरिश्चन्द्रग्रहणममन्त्रार्थम्। ऋषी इति किम् ? प्रकण्वो देशः। हरिचन्द्रो माणवकः॥

## मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ १५४ ॥

मस्कर मस्करिन् इत्येतौ यथासंख्यं वेणौ परिव्राजके च निपात्येते। मकरशब्दो ह्यव्युत्पन्नं प्रातिपदिकम्, तस्य वेणावभिधेये सुट् निपात्यते, परिव्राजके त्विनिरपि। मस्करो वेणुः। मस्करी परिव्राजकः। वेणुपरिव्राजकयोरिति किम् ? मकरो ग्राहः। मकरी समुद्रः। केचित् पुनरत्र माङ्युपपदे करोतेः करणेऽच्प्रत्ययमपि निपातयन्ति, माङश्च ह्रस्वत्वं सुट् च। मा क्रियते येन प्रतिषिध्यते, स मस्करो वेणुः। वेणुग्रहणं च प्रदर्शनार्थमन्यत्रापि भवति— मस्करो दण्ड इति। परिव्राजकेऽपि माङ्युपपदे करोतेस्ताच्छील्य इनिर्निपात्यते, माङो ह्रस्वत्वं सुट् च तथैव। माकरणशीलो मस्करी कर्मापवादित्वात् परिव्राजक उच्यते। स ह्येवमाह— मा कुरुत कर्माणि, शान्तिर्वः श्रेयसीति॥

## कास्तीराजस्तुन्दे नगरे ॥ १५५ ॥

कास्तीर अजस्तुन्द इत्येतौ शब्दौ निपात्येते नगरेऽभिधेये। ईषत्तीरमस्य, अजस्येव तुन्दमस्येति व्युत्पत्तिरेव क्रियते, नगरं तु वाच्यमेतयोः। कास्तीरं नाम नगरम्। अजस्तुन्दं नाम नगरम्। नगर इति किम् ? कातीरम्। अजतुन्दम्॥

## कारस्करो वृक्षः ॥ १५६ ॥

कारस्कर इति सुट् निपात्यते वृक्षश्चेद् भवति। कारं करोतीति 'दिवाविभानिशा-प्रभाभास्कारान्ता०' ( ३.२.२१ ) इति टप्रत्ययः। कारस्करो वृक्षः। वृक्ष इति किम् ? कारकरः। केचिदिदं सूत्रं नाधीयते, पारस्करप्रभृतिष्वेव कारस्करो वृक्ष इति पठन्ति॥

## पारस्करप्रभृतीनि च संज्ञायाम् ॥ १५७ ॥

पारस्करप्रभृतीनि च शब्दरूपाणि निपात्यन्ते संज्ञायां विषये। पारस्करो देशः। कारस्करो वृक्षः[1]। रथस्पा[2] नदी। किष्कुः प्रमाणम्। किष्किन्धा गुहा। तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ( ग० सू० १६३ )। तस्करश्चोरः। बृहस्पतिर्देवता। चोरदेवतयोरिति किम् ? तत्करः। बृहत्पतिः। संज्ञाग्रहणादुपाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहणं प्रपञ्चार्थम्। प्रात्तुम्पतौ गवि कर्तरि ( ग० सू० १६४ )। तुम्पतौ धातौ प्रशब्दात् परस्सुट् भवति गवि कर्तरि। प्रस्तुम्पति गौः। गवीति किम् ? प्रतुम्पति वनस्पतिः। पारस्करप्रभृतिराकृतिगणः। अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः।

---

१ – ' कारस्करो वृक्षः ' इति काशिकामतेनात्र न स्यात्। २ – ' रथस्या ' इति बाल०।

प्रायश्चित्तम्। प्रायश्चित्तिः। यदुक्तं 'प्रायस्य चित्तिचित्तयोः सुडस्कारो वा' (महाभाष्य ३.९६) इति, तत् संगृहीतं भवति॥

## अनुदात्तं पदमेकवर्जम् ॥ १५८ ॥

परिभाषेयं स्वरविधिविषया। यत्रान्यः स्वर उदात्तः स्वरितो वा विधीयते, तत्रानुदात्तं पदमेकं वर्जयित्वा भवतीत्येतदुपस्थितं द्रष्टव्यम्। अनुदात्ताच्कमनुदात्तम्। कः पुनरेको वर्ज्यते ? यस्यासौ स्वरो विधीयते। वक्ष्यति—'धातोः' (६.१.१६२) अन्त उदात्तो भवतीति। गोपायतिं। धूपायतिं। धातोरन्त्यमचं वर्जयित्वा परिशिष्टमनुदात्तं भवति। धातुस्वरं श्नास्वरो बाधते। लुनातिं। पुनातिं। श्नास्वरं तस्स्वरः। लुनीतः। पुनीतः। तस्स्वरमाम्स्वरः। लुनीतस्तराम्। पुनीतस्तराम्।

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः॥

आगमस्य—'चतुरनडुहोरामुदात्तः' (७.१.९८)। चत्वारः। अनड्वाहः। आगमस्वरः प्रकृतिस्वरं बाधते। विकारस्य—अस्थनिं, दधनिं इत्यनङ्स्वरः प्रकृतिस्वरं बाधते। प्रकृतेः—गोपायतिं। धूपायतिं। प्रकृतिस्वरः प्रत्ययस्वरं बाधते। प्रत्ययस्य—कर्तव्यम्। हर्तव्यम्। प्रत्ययस्वरः प्रकृतेः स्वरस्य बाधकः। परनित्यान्तरङ्गापवादैः स्वरैर्व्यवस्था सतिशिष्टेन च। यो हि यस्मिन् सति शिष्यते, स तस्य बाधको भवति। तथाहि—गोपायतीत्यत्र धातुस्वरापवादः प्रत्ययस्वरस्तेनैव धातुस्वरेण प्रत्ययान्तस्य धातोः सतिशिष्टत्वाद् बाध्यते। कार्ष्णोत्तरासङ्गपुत्र इत्यत्र च समासस्वरापवादो बहुव्रीहिस्वरः सतिशिष्टेन समासान्तोदात्तत्वेन बाध्यते। विकरणस्वरस्तु सतिशिष्टोऽपि सार्वधातुकस्वरं न बाधते। लुनीत इति तस एव स्वरो भवति ॥ विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम्॥ अतिस्रि इत्यत्र 'तिसृभ्यो जसः' (६.१.१६६) इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते ॥ विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम्॥ अचत्वारः, अनंनड्वाह इति। यस्य विभक्तिर्निमित्तमामः, तस्य यदुदात्तत्वं तद् नञ्स्वरेण बाध्यते। पदग्रहणं किम् ? देवदत्त गामभ्याज शुक्लाम् इति वाक्ये हि प्रतिपदं स्वरः पृथग् भवति। परिमाणार्थं चेदं पदग्रहणं पदाधिकारस्य निवृत्तिं करोति। तेन प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेव शिष्टस्यानुदात्तत्वं भवति। तथा च कुवल्या विकारः कौवलम् इत्यत्रानुदात्तादिलक्षणोऽञ् सिद्धो भवति। तथा गर्भिणीशब्दश्चानुदात्तादिलक्षणस्याञो बाधनार्थं भिक्षादिषु पठ्यते। कुवलगर्भशब्दावाद्युदात्तौ॥

## कर्षात्वतो घञोऽन्त उदात्तः ॥ १५९ ॥

कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तो भवति। कर्षः। पाकः। त्यागः।

रागः। दायः। धायः। 'ञ्नित्यादिर्नित्यम्' ( ६.१.१९७ ) इत्यस्यापवादः। कर्ष इति विकृतनिर्देशः कृषतेर्निवृत्त्यर्थः। तौदादिकस्य घञन्तस्य कर्ष इत्याद्युदात्त एव भवति॥

## उञ्छादीनां च ॥ १६० ॥

उञ्छ इत्येवमादीनामन्त उदात्तो भवति। उञ्छः। म्लेच्छः। जञ्जः। जल्पः। एते घञन्ता इति ञित्स्वरः प्राप्तः। जपः, व्यध इत्यबन्तौ, तयोर्धातुस्वरः प्राप्तः। केचित् तु वध इति पठन्ति। युगः। युजेर्घञन्तस्य निपातनादगुणत्वं विशिष्टविषये च निपातनमिदमिष्यते। कालविशेषे रथाद्युपकरणे च युगशब्दस्य प्रयोगोऽन्यत्र हि योग एव भवति। गरो दूष्ये ( ग० सू० १६५ ) अबन्तः। गरशब्दोऽबन्तः स दूष्य एवान्तोदात्तः। गरो विषम्। अन्यत्राद्युदात्त एव। वेगवेदवेष्टबन्धाः करणे ( ग० सू० १६६ )। 'हलश्च' ( ३.३.१२१ ) इति घञन्ता एते करणेऽन्तोदात्ता भवन्ति। भाव आद्युदात्ता एव। स्तुयुद्रुवश्छन्दसि ( ग० सू० १६७ )। उपसमस्तार्थमेतत्। परिष्टुत्। संयुत्। परिद्रुत्। वर्तनिः स्तोत्रे ( ग० सू० १६८ )। स्तोत्रं साम। तत्स्थो वर्तनिशब्दोऽन्तोदात्तो भवति, अन्यत्र मध्योदात्तः। श्वभ्रे दरः ( ग० सू० १६९ )। श्वभ्रेऽभिधेये दरशब्दोऽन्तोदात्तोऽन्यत्राबन्तत्वादाद्युदात्तः। साम्बतापौ भावगर्हायाम् ( ग० सू० १७० )। अन्तोदात्तौ, अन्यत्राद्युदात्तौ। उत्तमशश्वत्तमौ सर्वत्र ( ग० सू० १७१ )। केचित् तु भावगर्हायामित्यत्राप्यनुवर्तयन्ति। भक्षमन्थभोगदेहाः ( ग० सू० १७२ ) एते घञन्ताः। भक्षिर्ण्यन्तोऽपि घञन्त एव, 'एरच्' ( ३.३.५६ ) अण्यन्तानामिति वचनात्[1]॥

## अनुदात्तस्य च यत्रोदात्तलोपः ॥ १६१ ॥

उदात्त इति वर्तते। यस्मिन्ननुदात्ते परत उदात्तो लुप्यते तस्यानुदात्तस्यादिरुदात्तो भवति। कुमार ई कुमारी। कुमारशब्दोऽन्तोदात्तस्तस्य ङीप्यनुदात्त उदात्तो लुप्यते। अनुदात्तो ङीब् उदात्तः। 'भस्य टेर्लोपः' ( ७.१.८८ )। पथः। पथा। पथे। पथिन्शब्दोऽन्तोदात्तः। 'कुमुदनडवेतसेभ्यो ड्मतुप्' ( ४.२.८७ )। कुमुद्वान्। नड्वान्। वेतस्वान्। कुमुदादयोऽन्तोदात्ताः। ड्मतुबनुदात्तः। अनुदात्तस्येति किम् ? प्रासङ्गं वहति प्रासङ्ग्यः। प्रासङ्गशब्दस्थाथादिस्वरेणान्तोदात्तः ( ६.२.१४४ )। तस्य यति 'तित् स्वरितम्' ( ६.१.१८५ ) इति स्वरित उदात्तो लुप्यते। नैतदस्ति, स्वरिते हि विधीयमाने परिशिष्टमनुदात्तम्, तत् कुत उदात्तलोपः ? तदेतदनुदात्तग्रहणमादेरनुदात्तस्योदात्तार्थम्। अन्त इति हि प्रकृतत्वादन्तस्य स्यात्। मा हि धुक्षाताम्। मा हि धुक्षाथाम्। यत्रेति किम् ? भार्गवः, भार्गवौ, भृगवः। प्राक् सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक्। उदात्तग्रहणं किम्? बैदी। और्वी॥

---

१ – 'एरजण्यन्तानाम्' इति वचनमनार्षमिति कैयटहरदत्तनागेशाः।

## धातोः ॥ १६२ ॥

अन्त इत्येव। धातोरन्त उदात्तो भवति। पचति। पठति। ऊर्णोति। गोपायति। याति॥

## चितः ॥ १६३ ॥

चितोऽन्त उदात्तो भवति। 'भञ्जभासमिदो घुरच्' (३.२.१६१)—भङ्गुरम्। भासुरम्। मेदुरम्। 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' (२.४.७०)—कुण्डिनाः। चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्यान्त उदात्त इष्यते। बहुपटवः[1]। उच्चकैः॥

## तद्धितस्य ॥ १६४ ॥

चित इत्येव। चितस्तद्धितस्यान्त उदात्तो भवति। 'गोत्रे कुञ्जादिभ्यश्च्फञ्' (४.१.९८)—कौञ्जायनाः। भौञ्जायनाः। किमर्थमिदम्? परमपि ञित्स्वरं बाधित्वान्तोदात्तत्वमेव यथा स्यादिति॥

## कितः ॥ १६५ ॥

तद्धितस्येत्येव। तद्धितस्य कितोऽन्त उदात्तो भवति। 'नडादिभ्यः फक्' (४.१.९९)—नाडायनः। चारायणः। 'प्राग्वहतेष्ठक्' (४.४.१)—आक्षिकः। शालाकिकः॥

## तिसृभ्यो जसः ॥ १६६ ॥

तिसृभ्य उत्तरस्य जसोऽन्त उदात्तो भवति। तिस्रस्तिष्ठन्ति। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४) इत्यस्यापवादः। शसि 'उदात्तयणो हल्पूर्वात्' (६.१.१७४) इति सिद्धेऽन्यत्र बहुवचने 'षट्त्रिचतुर्भ्यो हलादिः' (६.१.१७९) इति विधानात् जसेव लभ्यत इति जसग्रहणमुपसमस्तार्थमेक इच्छन्ति। अतितिस्रौ इत्यत्र स्वरो मा भूदिति॥

## चतुरः शसि ॥ १६७ ॥

चतुरः शसि परतोऽन्त उदात्तो भवति। चतुरः पश्य। चतस्रादेश आद्युदात्तनिपातनाद् यणादेशस्य च पूर्वविधौ स्थानिवत्त्वादयं स्वरो न भवति—चतस्रः पश्येति॥

---

१ – 'बहुपटुः' इति है०।

## सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६८ ॥

साविति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणम्। तत्र सौ य एकाच् तस्मात् परा तृतीयादिर्विभक्तिरुदात्ता भवति। वाचा, वाग्भ्याम्, वाग्भिः। वाग्भ्यः। याता, याद्भ्याम्, याद्भिः। साविति किम्? राज्ञां। राज्ञें। एकाच इति किम्? हरिणा। गिरिणां। राजंसु। तृतीयादिरिति किम्? वाचौं। वाचः। विभक्तिरिति किम्? वाक्तरा। वाक्तमा। सप्तमीबहुवचनस्य ग्रहणादिह न भवति—त्वयां, त्वयिं इति॥

## अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ १६९ ॥

एकाच इति वर्तते, तृतीयादिर्विभक्तिरिति च। नित्यशब्दः स्वर्यते। तेन नित्याधिकारविहितः समासः पर्युदस्यते। नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच्च तस्मात् परा तृतीयादिर्विभक्तिरन्यतरस्यामुदात्ता भवति। परमवाचा, परमवाचां। परमवाचे, परमवाचें। परमत्वचा, परमत्वचां। परमत्वचे, परमत्वचें। यदा विभक्तिरुदात्ता न भवति, तदा समासान्तोदात्तत्वमेव। अन्तोदात्तादिति किम्? अवांचा। सुवांचा। सुत्वंचा। तत्पुरुषोऽयम्। तत्र 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय०' ( ६.२.२ ) इति पूर्वपदप्रकृतिस्वरः। उत्तरपदग्रहणमेकाच्त्वेनोत्तरपदं विशेषयितुम्, अन्यथा हि समासविशेषणमेतत् स्यात्। तत्र शुन ऊर्क्, श्वोर्जा इत्यत्रैवायं विधिः स्यात्। अनित्यसमास इति किम्? अग्निचितां। सोमसुतां। 'उपपदमतिङ्' ( २.२.१९ ) इत्ययं नित्याधिकारे समासो विधीयते। तत्र 'गतिकारकोपपदात् कृत्' ( ६.२.१३९ ) इत्युत्तरपदप्रकृतिस्वरेण चित् शब्द उदात्तः। यस्तु विग्रहाभावेन नित्यसमासस्तत्र भवत्येव विकल्पः। अवाचां ब्राह्मणेन, सुवाचां ब्राह्मणेनेति[1]। बहुव्रीहौ 'नञ्सुभ्याम्' ( ६.२.१७२ ) इत्युत्तरपदान्तोदात्तत्वं भवति॥

## अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ १७० ॥

अञ्चेः परासर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये। इन्द्रों दधीचो अस्थभिः ( ऋ० १.८४.१३ )। 'चौ' ( ६.१.२२२ ) इति पूर्वपदान्तोदात्तत्वं प्राप्तम्। तृतीयादिरिति वर्तमाने शसोऽपि परिग्रहार्थमसर्वनामस्थानग्रहणम्। इहापि यथा स्यात्—प्रतीचो बाहून् प्रतिं भङ्ध्येषाम् ( ऋ० १०.८७.४ ) इति॥

## ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ १७१ ॥

ऊठ् इदम् पदादि अप् पुम् रै दिव् इत्येतेभ्योऽसर्वनामस्थानविभक्तिरुदात्ता भवति।

---

१ – पक्षे विभक्तिरुदात्ता।

ऊठ्—प्रष्ठौहः। प्रष्ठौहा। ऊठ्युपधाग्रहणं कर्तव्यम्, इह मा भूत्—अक्षद्युवा, अक्षद्युवे। इदम्—आभ्याम्। एभिः। अन्तोदात्तादित्यधिकारादन्वादेशे न भवति। अथो आभ्यां निपुणमधीतमिति। पदादयः 'पद्दन्नोमास्०' ( ६.१.६३ ) इत्येवमादयो निशूपर्यन्ता इह गृह्यन्ते। नि पुदश्चतुरों जहि। या दुतो धावंते ( तै० सं० २.५.१.७ )। असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव भवति। ग्रीवायां बुद्धो अंपि कुक्ष आसनिं ( ऋ० ४.४०.४ )। मत्स्यं न दीन उदनिं क्षियन्तंम् ( ऋ० १०.६८.८ )। अप्—अपः पंश्य। अद्भिः। अद्भ्यः। पुम्—पुंसः। पुम्भ्याम्। पुम्भ्यः। पुंसा। पुंसे। रै—रायः पंश्य। राभ्याम्। राभिः। दिव्—दिवः पंश्य। दिवा। दिवे॥

## अष्टनो दीर्घात् ॥ १७२ ॥

अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति। अष्टाभिः। अष्टाभ्यः। अष्टासु। घृतादिपाठादष्टन्शब्दोऽन्तोदात्तः, तत्र 'झल्युपोत्तमम्' ( ६.१.१८० ) इत्यस्यापवादो विभक्तेरेवोदात्तत्वं विधीयते। दीर्घादिति किम् ? अष्टसु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीत ( तु०—कपि० कठ सं० ६.८ )। इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्संज्ञां ज्ञापयति। अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन॥

## शतुरनुमो नद्यजादी ॥ १७३ ॥

अन्तोदात्तादिति वर्तते। अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात् परा नद्यजादिर्विभक्तिरसर्वनामस्थानमुदात्ता भवति। तुदती। नुदती। लुनती। पुनती। तुदता। नुदता। लुनता। पुनता। अनुम इति किम् ? तुदन्ती। नुदन्ती अत्राप्यदुपदेशादिति लसार्वधातुकानुदात्तत्वे ( ६.१.१८६ ) एकादेशः, तस्य 'एकादेश उदात्तेनोदात्तः' ( ८.२.५ ) इत्युदात्तत्वम् , तस्य पूर्वत्रासिद्धत्वं ( ८.२.१ ) नेष्यत इति शत्रन्तमन्तोदात्तं भवति। नद्यजादी इति किम् ? तुदद्भ्याम्। नुदद्भ्याम्। तुदद्भिः। अन्तोदात्तादित्येव—ददंती। दधंतः। 'अभ्यस्तानामादिः' ( ६.१.१८९ ) इत्याद्युदात्तावेतौ ॥ बृहन्महतोरुपसंख्यानम् ॥ बृहती। महती। बृहता। महता॥

## उदात्तयणो हल्पूर्वात् ॥ १७४ ॥

उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात् परा नदी अजाद्यसर्वनामस्थानविभक्तिरुदात्ता[1]

---

१ – 'अजादिर्यासर्वनामस्थानविभक्तिरुदात्ता' इति मुद्रितेपु ।

भवति। कुर्त्री। हुर्त्री। प्रलुवित्री। प्रसुवित्री। कुर्त्रा। हुर्त्रा। प्रलुवित्रा। प्रसुवित्रा। तृजन्ता एतेऽन्तोदात्ताः। उदात्तग्रहणं किम् ? कर्त्री। हर्त्री। कर्त्रा। हर्त्रा। तृन्नन्तोऽयमाद्युदात्तः। हल्पूर्वादिति किम् ? बहुतितवां ब्राह्मण्या ॥ नकारग्रहणं कर्तव्यम् ॥ वाक्पुत्नी इयं कन्या ॥

## नोङ्धात्वोः ॥ १७५ ॥

ऊङो धातोश्च य उदात्तयण् हल्पूर्वः, तस्मात् परा तृतीयादिर्विभक्तिर्नोदात्ता[1] भवति। ब्रह्मबन्ध्वां। ब्रह्मबन्ध्वें। वीरबन्ध्वां। वीरबन्ध्वें। ऊङ् प्रत्ययस्वरेणोदात्तः। तेन सह य एकादेशः सोऽप्युदात्त इति उदात्तयण्वकारः, तस्मादुदात्तत्वे प्रतिषिद्धे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( ८.२.४ ) इति विभक्तिः स्वर्यते। धातुयणः खल्वपि— सकृल्ल्वां। सकृल्ल्वें। खलुप्वें। क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य 'ओः सुपि' ( ६.४.८३ ) इति यणादेशः॥

## ह्रस्वनुड्भ्यां मतुप् ॥ १७६ ॥

अन्तोदात्तादित्येव। ह्रस्वान्तादन्तोदात्ताद् नुटश्च परो मतुब् उदात्तो भवति। अग्निमान्। वायुमान्। कर्तृमान्। हर्तृमान्। नुटः खल्वपि—अक्षण्वतां। शीर्षण्वतां। अन्तोदात्तादित्येव—वसुमान् ( तै० सं० १.६.६.२ )। वसुशब्द आद्युदात्तः, तस्माद् मतुब् अनुदात्त एव भवति। अत्र च 'स्वरविधौ व्यञ्जनमविद्यमानवद्०' ( परि० ७९ ) इत्येषा परिभाषा नाश्रीयते नुड्ग्रहणात्, तेन मरुत्वांन् इत्यत्र न भवति ॥ रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् ॥ आ रेवान् ॥ त्रेश्च प्रतिषेधो वक्तव्यः ॥ त्रिवंतीर्याज्यानुवाक्या भवन्ति ( काठ० सं० ११.१ ) इति ॥

## नामन्यतरस्याम् ॥ १७७ ॥

ह्रस्वग्रहणमनुवर्तते, मतुब्ग्रहणं च। तेन मतुपा ह्रस्वो विशेष्यते। मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तादन्यतरस्यां नाम् उदात्तो भवति। अग्नीनाम्, अग्नीनांम्। वायूनाम्, वायूनांम्। कर्तृणाम्, कर्तृणांम्। मतुपा ह्रस्वविशेषणं किम् ? भूतपूर्वेऽपि ह्रस्वे यथा स्यात्। अन्यथा हि साम्प्रतिक एव स्यात्—तिसृणां चतसृणामिति। सनुट्कस्य ग्रहणं किम् ? धेन्वाम्। शकुट्याम्। 'उदात्तयणो हल्पूर्वात्' ( ६.१.१७४ ) इत्ययमन्तोदात्तः। ह्रस्वादित्येव—कुमारीणांम्। अन्तोदात्तादित्येव—त्रपूंणाम्। वसूंनाम् ॥

---

१ – 'अजाद्यसर्वनामस्थानविभक्तिर्नोदात्ता' इति बाल०।

## ङ्याश्छन्दसि बहुलम् ॥ १७८ ॥

ङ्यन्ताच्छन्दसि विषये नामुदात्तो भवति बहुलम्। देवसेनानांमभिभञ्जतीनाम् ( ऋ० १०.१०३.८ )। बह्वीनां पिता ( ऋ० ६.७५.५ )। न च भवति—नदीनां पारे। जयन्तीनां मरुतः ( ऋ० १०.१०३.८ )॥

## षट्त्रिचतुर्भ्यो हलादिः ॥ १७९ ॥

अन्तोदात्तादित्येतद् निवृत्तम्। षट्संज्ञकेभ्यस्त्रि चतुर् इत्येताभ्यां च परा हलादिर्विभक्तिरुदात्ता भवति। षड्भिः। षड्भ्यः। पञ्चानाम् ( तै० सं० १.६.१.२ )। षण्णाम्। सप्तानाम् ( ऋ० ८.२८.५ )। त्रि—त्रिभिः ( ऋ० १.३४.११ )। त्रिभ्यः। त्रयाणाम् ( तै० सं० ३.४.३.८ )। चतुर्—चतुर्णाम्[१] ( ऋ० ८.७४.१३ )। हलादिरिति किम् ? चतस्रः ( ऋ० १.६२.६ ) पश्य॥

## झल्युपोत्तमम् ॥ १८० ॥

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पद उपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमम्, तत्समीपे च यत् तदुपोत्तमम्। पञ्चभिः ( तै० सं० ५.२.७.५ ) तपस्तपति। सप्तभिः परान् जयति। तिसृभिश्च वहसे त्रिंशतां ( शौ० सं० ७.४.१ )। चतुर्भिः ( मा० सं० २३.१३ )। झलीति किम् ? पञ्चानाम् ( तै० सं० १.६.१. २ )। सप्तानाम् ( ऋ० ८.२८.५ )। उपोत्तममिति किम् ? षड्भिः ( ऋ० २.१८.४ )। षड्भ्यः ( तै० सं० ७. २.१३.१ )॥

## विभाषा भाषायाम् ॥ १८१ ॥

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पद उपोत्तममुदात्तं भवति विभाषा भाषायां विषये। पञ्चभिः, पञ्चभिः। सप्तभिः, सप्तभिः। तिसृभिः, तिसृभिः। चतुर्भिः, चतुर्भिः[२]॥

## न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥ १८२ ॥

गो श्वन् साववर्णः सौ प्रथमैकवचने यदवर्णान्तं राड् अङ् क्रुङ् कृद् इत्येतेभ्यो यदुक्तं तद् न भवति। गवां। गवें। गोभ्यामिति। 'सावेकाचस्तृतीयादिर्विभक्तिः' ( ६.

---

१ – ' चतुर्भ्यः ' इति मुद्रितेष्वधिकम्। २ – ' चतसृभिः ' इति बाल०।

१.१६८ ) इति प्राप्तिः प्रतिषिध्यते। सुगुनां। सुगवें। सुगुभ्यांम्। 'अन्तोदात्तादुत्तर-पदात्०' ( ६.१.१६९ ) इति प्राप्तिः। श्वन्—शुनां। शुनें। श्वभ्यांम्। परमशुनां। परमशुनें। परमश्वभ्यांम्। पूर्ववत् प्राप्तिः। सावंवर्णः—सौ प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणम्। येभ्यंः। तेभ्यंः। केभ्यंः। राट्—राजतिः क्विबन्तः, राजां। परमराजंः। अङ्—अञ्चतिः क्विन्नन्तस्तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्, यत्रास्य नलोपो नास्ति तत्र प्रतिषेधो यथा स्यात्। 'नाञ्चेः पूजायाम्' ( ६.४.३० ) इति प्रतिषिध्यते नलोपः। प्राञ्चां। प्राङ्भ्यांम्। नलोपविषये तु भवत्येव विभक्तेरुदात्तत्वम्। प्राचा। प्राचे। प्राग्भ्याम्। क्रुङ् क्विन्नन्त एव। क्रुञ्चां। परमक्रुञ्चां। कृत्—करोतिः कृतिर्वा क्विबन्तः। कृतां। परमकृतां॥

## दिवो झल् ॥ १८३ ॥

दिवः परा झलादिर्विभक्तिर्नोदात्ता भवति। द्युभ्यांम्। द्युभिंः। 'सावेकाचः०' ( ६. १.१६८ ) इति 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' ( ६.१.१७१ ) इति वा प्राप्तिः प्रतिषिध्यते। झलीति किम्? दिवा॥

## नृ चान्यतरस्याम् ॥ १८४ ॥

नृ इत्येतस्मात् परा झलादिर्विभक्तिरन्यतरस्यां नोदात्ता भवति। नृभ्यांम्। नृभिंः ( ऋ० १०.१४७.४ )। नृभ्यः ( ऋ० १.४३.२ )। नृषु ( ऋ० १.१८०.८ )। झलित्येव—न्रा। न्रे॥

## तित् स्वरितम् ॥ १८५ ॥

तित् स्वरितं भवति। सन्नन्ताद् यत्—चिकीर्ष्यम्। जिहीर्ष्यम्। 'ऋहलोर्ण्यत्' (३.१.१२४ )—कार्यम्। हार्यम्। प्रत्ययाद्युदात्तस्यापवादः[1]॥

## तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ १८६ ॥

तासेरनुदात्तेतो ङितोऽकारान्तोपदेशात् च शब्दात् परं लसार्वधातुकमनुदात्तं[2] भवति ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा। तासेस्तावत्—कर्ता, कर्तारौं, कर्तारंः। प्रत्यय-स्वरापवादोऽयम्। अनुदात्तेतः—आस—आस्तें। वस—वस्तें। ङित्—षूङ्—सूतें। शीङ्—शेतें। अदुपदेशात्—तुदतः। नुदतः। पचंतः। पठंतः। अनुबन्धस्यानैकान्तिकत्वात्

---

१ - अत्र ' अन्तः ' इत्यप्यनुवर्तनीयम्। ततश्च तव्यति ' कर्तव्यंम् ' इत्यन्त्यस्वरितत्वं सिद्धम्।
२ - 'च ' इत्यधिकं मुद्रितेषु।

( परि० ४ ) अकारान्तोपदेश एव शप्। पचमानः। यजमानः। यद्यत्र मुक् अकारमात्रस्य स्यात्, तदा लसार्वधातुकमदुपदेशादनन्तरमिति सिद्धो निघातः। अथाकारान्तस्याङ्गस्य, तथापि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वादसिद्धः ( परि० ५० ) इति सिद्धम्। चित्स्वरोऽप्यनेन लसार्वधातुकानुदात्तत्वेन परत्वाद् बाध्यते। तास्यादिभ्य इति किम् ? चिनुतः। चिन्वन्ति। ङिदयं श्नुः पूर्वस्य कार्यं प्रति न तु परस्य[1]। उपदेशग्रहणं किम् ? इह च यथा स्यात्—पचावः, पचाम इति। इह च मा भूत्—हुतः, हुथ इति। लग्रहणं किम् ? कतीह पचमानाः[2]। सार्वधातुकमिति किम् ? शिश्ये, शिश्याते, शिश्यिरे। अह्निवङोरिति किम् ? ह्नुते। यदधीते॥

## आदिः सिचोऽन्यतरस्याम् ॥ १८७ ॥

उदात्त इति वर्तते। सिजन्तस्यान्यतरस्यामादिरुदात्तो भवति। मा हि कार्ष्टाम्, मा हि कार्ष्टाम्। एकोऽत्राद्युदात्तः, अपरोऽन्तोदात्तः। मा हि लाविष्टाम्, मा हि लाविष्टाम्। एकोऽत्राद्युदात्तः, अपरो मध्योदात्तः। सिचश्चित्करणादागमानुदात्तत्वं हि बाध्यते ॥ सिच आद्युदात्तत्वेऽनिटः पितः पक्ष उदात्तत्वं वक्तव्यम् ॥ मा हि कार्षम्, मा हि कार्षम्। अनिट इति किम् ? मा हि लाविषम्। मध्योदात्त एवाद्युदात्ताभावपक्षे भवति॥

## स्वपादिहिंसामच्यनिटि ॥ १८८ ॥

लसार्वधातुकग्रहणं यदनुवर्तते, तदच्यनिटीति संबन्धादिह सप्तम्यन्तमुपजायते। स्वपादिरा वृत्करणात्। स्वपादीनां हिंसेश्चाजादावनिटि लसार्वधातुके परतोऽन्यतरस्यामादिरुदात्तो भवति। स्वपन्ति, स्वपन्ति। श्वसन्ति, श्वसन्ति। हिंसेः खल्वपि—हिंसन्ति, हिंसन्ति। प्रत्ययस्वरेण पक्षे मध्योदात्तः। अचीति किम् ? स्वप्यात्। हिंस्यात्। अनिटीति किम् ? स्वपितः। श्वसितः। ङित्यजादावयं विधिरिष्यते। इह न भवति—स्वपानि। हिनसानि॥

## अभ्यस्तानामादिः ॥ १८९ ॥

अभ्यस्तानामजादावनिटि लसार्वधातुके परत आदिरुदात्तो भवति। ददति। ददतु। दधति। दधतु। जक्षति। जक्षतु। जाग्रति। जाग्रतु। अचीत्येव—दद्यात्। अनिटीत्येव—जक्षितः। आदिरिति वर्तमाने पुनरादिग्रहणं नित्यार्थम्॥

---

१ - द्र०—'आतो ङितः' ( ७.२.८१ ) इत्यत्र टिप्पणी।
२ - 'पवमानाः' इति बाल०।

## अनुदात्ते च ॥ १९० ॥

अविद्यमानोदात्ते च लसार्वधातुके परतोऽभ्यस्तानामादिरुदात्तो भवति। अनजाद्यर्थ आरम्भः[१]। ददाति। जहाति। दधाति। जिहीते। मिमीते ( तै० सं० ६.१.९.६)। अनुदात्त इति बहुव्रीहिनिर्देशो लोपयणादेशार्थः। मा हि स्म दधात्। दधात्यत्रं॥

## सर्वस्य सुपि ॥ १९१ ॥

सर्वशब्दस्य सुपि परत आदिरुदात्तो भवति। सर्वः, सर्वौ, सर्वे। सुपीति किम्? सुर्वतरः। सुर्वतमः। प्रत्ययलक्षणेनाप्ययं स्वर इष्यते—सर्वस्तोमः (तै० सं० ५.४.१२.३) इति ॥ सर्वस्वरोऽनकच्कस्येति वक्तव्यम्॥ सुर्वकः। चित्स्वरेणान्तोदात्तो भवति॥

## भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ॥ १९२ ॥

भी ह्री भृ हु मद जन धन दरिद्रा जागृ इत्येतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्ययात् पूर्वमुदात्तं भवति। बिभेति। जिह्रेति। बिभर्ति ( तै० आ० ३.११.४ )। जुहोति ( तै० ब्रा० २.१.३.८ )। मुमत्तुं नः परिज्मा ( तै० सं० २.१.११.१ )। मदेः 'बहुलं छन्दसि' ( २.४.७३ ) इति विकरणस्य श्लुः। जुजनुदिन्द्रम् ( तै० आ० ३.२.१)। 'जन जनने' ( जु० २२ ) इत्यस्य पञ्चमे लकारे रूपम्। 'धन धान्ये' ( जु० २१ ) इत्यस्य पञ्चमे लकारे दधनत् ( तै० ब्रा० २.८.३.५ )। दरिद्राति। जागर्ति। भ्यादीनामिति किम्? ददाति। पितीति किम् ? दरिद्रति॥

## लिति ॥ १९३ ॥

लिति प्रत्ययात् पूर्वमुदात्तं भवति। चिकीर्षकः। जिहीर्षकः। भौरिकिविधम्। भौलिकिविधम्। ऐषुकारिभक्तम्॥

## आदिर्णमुल्यन्यतरस्याम् ॥ १९४ ॥

णमुलि परतोऽन्यतरस्यामादिरुदात्तो भवति। लोलूयंलोलूयम्, लोलूयंलोलूयम्। पोपूयंपोपूयम्, पोपूयंपोपूयम्। आम्रेडितानुदात्तत्वे ( ८.१.३ ) कृते पूर्वो लोलूयंशब्द एकत्राद्युदात्तः, अपरत्र लित्स्वरेण मध्योदात्तः॥

---

१ – ' अनजाद्यर्थ आरम्भः ' इति पाठः सर्वत्रोपलभ्यमानोऽपि संदिग्धः। न्यासपदमञ्जर्यावत्र द्रष्टव्ये।

## अचः कर्तृयकि ॥ १९५ ॥

उपदेश इति वर्तते। अजन्ता ये उपदेशे धातवस्तेषां कर्तृयक्यन्यतरस्यामादिरुदात्तो भवति। लूयंते केदारः स्वयमेव, लूयतें केदारः स्वयमेव। स्तीर्यंते केदारः स्वयमेव, स्तीर्यतें केदारः स्वयमेव। यदाद्युदात्तत्वं न भवति, तदा लसार्वधातुकनिघाते कृते यक एव स्वरो भवति। जनादीनामुपदेश एवात्वं द्रष्टव्यम्। तत्राप्ययं स्वर इष्यते। जायंते, जायतें स्वयमेव। सायंते, सायतें स्वयमेव। खायंते, खायतें स्वयमेव। अच इति किम्? भिद्यतें स्वयमेव। कर्तृग्रहणं किम्? लूयतें केदारो देवदत्तेन॥

## थलि च सेटीडन्तो वा ॥ १९६ ॥

सेटि थलि इट् वा उदात्तो भवति, अन्तो वा आदिर्वान्यतरस्याम्। लुलविथं। लुलविथ। लुलंविथ। लुलविंथ। यदा नैते त्रयः स्वराः, तदा 'लिति' (६.१.१९३) प्रत्ययात् पूर्वमुदात्तं भवति। तेनैते चत्वारः स्वराः पर्यायेण भवन्ति। सेटीति किम्? युयार्थं। 'लिति' (६.१.१९३) प्रत्ययात् पूर्वमुदात्तमित्ययमेवात्र स्वरो भवति॥

## ञ्नित्यादिर्नित्यम् ॥ १९७ ॥

ञिति निति च नित्यमादिरुदात्तो भवति। 'गर्गादिभ्यो यञ्' (४.१.१०५)—गार्ग्यः। वात्स्यः। 'वासुदेवार्जुनाभ्यां वुन्' (४.३.९८)—वासुंदेवकः। अर्जुंनकः। प्रत्ययस्वरापवादोऽयं योगः। प्रत्ययलक्षणमत्र नेष्यते, तेन गर्गाः, बिदाः, चुञ्चा[1] इत्यत्र यञि कनि च[2] लुप्ते न भवति॥

## आमन्त्रितस्य च ॥ १९८ ॥

आमन्त्रितस्यादिरुदात्तो भवति। देवंदत्त, देवंदत्तौ, देवंदत्ताः। अत्र 'कारकाद्दत्तश्रुतयोरेवाशिषि' (६.२.१४८) इति प्राप्तिर्बाध्यते। लुमतापि लुप्ते प्रत्ययलक्षणमत्रेष्यते। सर्पिंरागच्छ, सप्तांगच्छतेति॥

## पथिमथोः सर्वनामस्थाने ॥ १९९ ॥

पथिमथिशब्दावौणादिकाविनिप्रत्ययान्तौ प्रत्ययस्वरेणान्तोदात्तौ, तयोः सर्वनामस्थाने परत आदिरुदात्तो भवति। पन्थाः, पन्थांनौ, पन्थांनः। मन्थाः, मन्थांनौ,

---

१ – प्रातिपदिकस्वरोऽत्र प्रदर्श्यते। 'संज्ञायामुपमानम्' (६.१.२०४) इत्येव स्वरः।

२ – 'यञि अञि कनि च' इति बाल०। न्यासपदमञ्जरीभ्यां तु चकाराद‌ञ् संगृह्यते।

मन्थानः। सर्वनामस्थान इति किम् ? पथः पश्य। मथः पश्य। उदात्तनिवृत्तिस्वरेणान्तोदात्तो भवति। प्रत्ययलक्षणमत्रापि नेष्यते। पथिप्रिय इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः पथिशब्दः॥

## अन्तश्च तवै युगपत् ॥२०० ॥

तवैप्रत्ययान्तस्यान्तश्चशब्दादादिश्च युगपदुदात्तौ भवतः। कर्तवै। हर्तवै। प्रत्ययाद्युदात्तत्वापवादः। युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम्। एकवर्जमिति वचनाद्यौगपद्यं न स्यात्॥

## क्षयो निवासे ॥२०१ ॥

क्षयशब्दो निवासेऽभिधेय आद्युदात्तो भवति। क्षियन्ति निवसन्त्यस्मिन्निति क्षयः। 'पुंसि संज्ञायां घः प्रायेण' (३.३.११८) इति घप्रत्ययान्तस्य प्रत्ययस्वरः प्राप्तः। क्षये (ऋ० १०.११८.१) जागृहि प्रपश्यन्। निवास इति किम् ? क्षयो वर्तते दस्यूनाम्। 'एरच्' (३.३.५६) इत्ययमजन्तः॥

## जयः करणम् ॥२०२ ॥

जयशब्दः करणवाची आद्युदात्तो भवति। जयन्ति तेनेति जयः। 'पुंसि संज्ञायां घः प्रायेण' (३.३.११८) इति घस्तस्य प्रत्ययस्वरः प्राप्तः। जयोऽश्वः। करणमिति किम्? जयो वर्तते ब्राह्मणानाम्। अत्रापि 'एरच्' (३.३.५६) इत्ययमजन्तः॥

## वृषादीनां च ॥२०३ ॥

वृष इत्येवमादीनामादिरुदात्तो भवति। वृषः। जनः। ज्वरः। ग्रहः। हयः। गयः। एते सर्वे पचाद्यच्प्रत्ययान्ताः। गय इत्यत्र गायतेर्निपातनादेत्वम्। नयः। तयः। अयः। अंशः। वेदः। अशः। दवः। एतेऽपि तथैवाच्प्रत्ययान्ताः। सूदः। इगुपधात् (३.१.१३५) इति कप्रत्ययान्तः। गुहा भिदादिरङ्प्रत्ययान्तः (३.३.१०४)। शमरणौ संज्ञायां संमतौ भावकर्मणोः (ग० सू० १७३)। शमो भावे, रणः कर्मण्यजन्तावेतौ निपातनाद् भावकर्मणोर्भवतः। मन्त्रः पचाद्यजन्तः। शान्तिः इति क्तिजन्तः। कामः। यामः। घञन्तावेतौ। आरा धारा कारा भिदादयः। वहो गोचरादिषु घप्रत्ययान्तः। कल्पः अजन्तः। पादो घञन्तः। तत्र क्वचित् प्रत्ययस्वरः प्राप्तः, क्वचित् 'कर्षात्वतो घञोऽन्त उदात्तः' (६.१.१५९) इति। वृषादिराकृतिगणः। अविहितमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम्॥

## संज्ञायामुपमानम् ॥ २०४ ॥

उपमानशब्दः संज्ञायामाद्युदात्तो भवति। चञ्चा। वर्ध्रिका। खरकुटी। दासी। उपमानशब्दा एते उपमेयस्य संज्ञाः। तत्र 'इवे प्रतिकृतौ' (५.३.९६) इति यः कन्, तस्य 'लुम्मनुष्ये' (५.३.९८) इति लुप्। यद्येवं किमर्थमिदमुच्यते प्रत्ययलक्षणेन सिद्धमाद्युदात्तत्वम्? एतदेव ज्ञापयति क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवतीति। तथा च पूर्वत्रोदाहृतम् (६.१.१९७)। संज्ञायामिति किम्? अग्निर्माणवकः। उपमानमिति किम्? देवदत्तः॥

## निष्ठा च द्व्यजनात् ॥ २०५ ॥

निष्ठान्तं च[1] द्व्यच् संज्ञायां विषय आद्युदात्तं भवति, स चेदादिराकारो न भवति। दत्तः। गुप्तः। बुद्धः। प्रत्ययस्वरापवादः। निष्ठेति किम्? देवः। भीमः। द्व्यजिति किम्? चिन्तितः। रक्षितः। अनादिति किम्? त्रातः। आप्तः। संज्ञायामिति किम्? कृतम्। हृतम्॥

## शुष्कधृष्टौ ॥ २०६ ॥

आदिरुदात्त इति वर्तते। शुष्क धृष्ट इत्येतावाद्युदात्तौ भवतः। शुष्कः। धृष्टः। असंज्ञार्थ आरम्भः॥

## आशितः कर्ता ॥ २०७ ॥

आशितशब्दः कर्तृवाची आद्युदात्तो भवति। आशितो देवदत्तः। अशेरयमाङ्पूर्वादविवक्षिते कर्मणि कर्तरि क्तः। तत्र 'थाथघञ्०' (६.२.१४४) इति प्राप्तः स्वरो बाध्यते। कर्तरीति किम्? आशितमन्नम्। आशितं देवदत्तेन। पूर्वत्र कर्मणि क्तः, उत्तरत्र भावे॥

## रिक्ते विभाषा ॥ २०८ ॥

रिक्तशब्दे विभाषादिरुदात्तो भवति। रिक्तः, रिक्तः। संज्ञायां 'निष्ठा च द्व्यजनात्' (६.१.२०५) इत्यनेन पूर्वविप्रतिषेधेन नित्यमाद्युदात्तः॥

## जुष्टार्पिते चच्छन्दसि ॥ २०९ ॥

---

१ – 'च' इति नास्ति है०।

जुष्ट अर्पित इत्येते शब्दरूपे छन्दसि विषये विभाषा आद्युदात्ते भवतः। जुष्टः, जुष्टः। अर्पितः, अर्पितः। छन्दसीति किम् ? भाषायां प्रत्ययस्वरेणान्तोदात्तावेतौ॥

## नित्यं मन्त्रे ॥ २१० ॥

जुष्ट अर्पित इत्येते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते भवतः। जुष्टं देवानाम्। अर्पितं पितॄणाम्। पूर्वेणात्र विकल्पः प्राप्तः। केचिदत्र जुष्ट इत्येतदेवानुवर्तयन्ति। अर्पित-शब्दस्य विभाषा मन्त्रेऽपीच्छन्ति। अन्तोदात्तोऽपि ह्ययं मन्त्रे पठ्यते। तस्मिन्त्साकं त्रिंशता न शंकवोऽर्पिताः ( ऋ० १.१६४.४८ ) इति॥

## युष्मदस्मदोर्ङसि ॥ २११ ॥

युष्मदस्मदी मदिक्प्रत्ययान्ते अन्तोदात्ते,[१] तयोर्ङसि परत आदिरुदात्तो भवति। तवं स्वम्। मम स्वम्॥

## ङयि च ॥ २१२ ॥

युष्मदस्मदोरिति वर्तते, आदिरुदात्त इति च। ङे इत्येतस्मिंश्च परतो युष्मदस्मदो-रादिरुदात्तो भवति। तुभ्यम् ( ऋ० २.३६.१ )। मह्यम् ( ऋ० १०.१२८.२ )। पृथग्योगकरणं यथासंख्यशङ्कानिवृत्त्यर्थम्॥

## यतोऽनावः ॥ २१३ ॥

'निष्ठा च द्व्यजनात्' ( ६.१.२०५ ) इत्यतो द्व्यज्ग्रहणमनुवर्तते। यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति, न चेद् नौशब्दात् परो भवति। 'अचो यत्' ( ३.१.९७ )— चेयम्। जेयम्। 'शरीरावयवाद् यत्' ( ५.१.६ )—कण्ठ्यम्। ओष्ठ्यम्। 'तित् स्वरितम्' ( ६.१.१८५ ) इत्यस्यापवादः। अनाव इति किम् ? नाव्यम्। द्व्यच इत्येव— चिकीर्ष्यम्। ललाट्यम्॥

## ईडवन्दवृशंसदुहां ण्यतः ॥ २१४ ॥

ईड वन्द वृ शंस दुह् इत्येतेषां यो ण्यत् तदन्तस्यादिरुदात्तो भवति। ईड्यम्। वन्द्यम्। वार्यम्। शंस्यम्। दोह्यां धेनुः। द्व्यनुबन्धकत्वाद् ( सीर० प० ५१ ) ण्यतो यद्ग्रहणेन ग्रहणं नास्तीति 'तित् स्वरितम्' ( ६.१.१८५ ) इत्येतत् प्राप्तम्। वार्यमिति 'वृङ् संभक्तौ' ( क्र्या० ४२ ) इत्यस्यायं ण्यत्। क्यब्विधौ हि वृञ एव ग्रहणमिष्यते॥

---

१ - 'मदिक्प्रत्ययान्तेऽन्तोदात्ते' इत्यपपाठो मुद्रितेपु ।

## विभाषा वेण्विन्धानयोः ॥ २१५ ॥

वेणु इन्धान इत्येतयोर्विभाषा आदिरुदात्तो भवति। वेणुः, वेणुः। इन्धानः, इन्धानः, इन्धानः। वेणुशब्दोऽयम् 'अजिवृरीभ्यो निच्च' (प० उ० ३.३८) इति णुप्रत्ययान्तो नित्त्वाद् नित्यमाद्युदात्तः प्राप्तः। इन्धानशब्दोऽपि यदा चानशन्तस्तदा चित्त्वादन्तोदात्तः। अथ शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृत उदात्तनिवृत्तिस्वरेण मध्योदात्तः। तदेवमिन्धाने सर्वथाप्राप्तमाद्युदात्तत्वं पक्षे विधीयते। वेणुरिव वेणुरित्युपमानं यदा संज्ञा भवति, तदा 'संज्ञायामुपमानम्' (६.१.२०४) इति नित्यमाद्युदात्तत्वमिष्यते॥

## त्यागरागहासकुहश्वठक्रथानाम् ॥ २१६ ॥

त्याग राग हास कुह श्वठ क्रथ इत्येतेषां विभाषादिरुदात्तो भवति। त्यागः, त्यागः। रागः, रागः। हासः, हासः। एते घञन्तास्तेषां पक्षे 'कर्षात्वतो घञोऽन्त उदात्तः' (६.१.१५९) इत्युदात्तत्वमेव भवति। कुहः, कुहः। श्वठः, श्वठः। क्रथः, क्रथः। एते पचाद्यजन्ताः॥

## उपोत्तमं रिति ॥ २१७ ॥

रिदन्तस्योपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमम्, तस्य समीपे यत् तदुपोत्तमम्। करणीयम्। हरणीयम्। पटुजातीयः। मृदुजातीयः। प्रत्ययस्वरापवादोऽयम्॥

## चङ्यन्यतरस्याम् ॥ २१८ ॥

चङन्तेऽन्यतरस्यामुपोत्तममुदात्तं भवति। मा हि चीकरताम्, मा हि चीकरताम्। 'न माङ्योगे' (६.४.७४) इत्यटि प्रतिषिद्धे 'हि च' (८.१.३४) इति निघातेऽदुपदेशादिति लसार्वधातुकानुदात्तत्वे (६.१.१८६) कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तो भवति। उपोत्तमग्रहणाद् द्व्यचो[१] न भवति। मा हि दुधत्॥

## मतोः पूर्वमात् संज्ञायां स्त्रियाम् ॥ २१९ ॥

मतोः पूर्व आकार उदात्तो भवति, तत् चेद् मत्वन्तं स्त्रीलिङ्गे संज्ञा भवति। उदुम्बरावती। पुष्करावती। वीरणावती। शरावती। 'शरादीनां च' (६.३.१२०) इति दीर्घः। आदिति किम्? इक्षुमती। द्रुमवती। संज्ञायामिति किम्? खट्वावती। स्त्रियामिति किम्? शरावान्। मतोरिति किम्? गवादिनी॥

---

१ – 'द्वयोर्न' इति बाल०।

## अन्तोऽवत्याः ॥ २२० ॥

संज्ञायामित्येव। अवतीशब्दान्तस्य संज्ञायामन्त उदात्तो भवति। अजिरवती। खदिरवती। हंसवती। कारण्डवती। ङीपः पित्त्वादनुदात्तत्वं प्राप्तम्। अवत्या इति किमुच्यते, न वत्या इत्येवमुच्येत ? नैवं शक्यम्, इहापि स्यात्—राजवती। स्वरविधौ नलोपस्यासिद्धत्वाद् नायमवतीशब्दः। वत्वं पुनराश्रयात् सिद्धम् ॥

## ईवत्याः ॥ २२१ ॥

ईवतीशब्दान्तस्यान्त उदात्तो भवति स्त्रियां संज्ञायां विषये। अहीवती। कृषीवती। मुनीवती ॥

## चौ ॥ २२२ ॥

चावित्यञ्चतिर्लुप्तनकारो गृह्यते। तस्मिन् परतः पूर्वस्यान्त उदात्तो भवति। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। उदात्तनिवृत्तिस्वरापवादोऽयम् ॥ चावतद्धित इति वक्तव्यम् ॥ दाधीचः। माधूचः। प्रत्ययस्वर एवात्र भवति ॥

## समासस्य ॥ २२३ ॥

समासस्यान्त उदात्तो भवति। राजपुरुषः। ब्राह्मणकम्बलः। कन्यास्वनः। पटहशब्दः। नदीघोषः। राजपृषत्[1]। ब्राह्मणसमित्। 'स्वरविधौ व्यञ्जनमविद्यमानवद्०' ( परि० ७९ ) इति हलन्तेऽप्यन्तोदात्तत्वं भवति। नानापदस्वरस्यापवादः ॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य प्रथमः पादः ॥



१ – ' राजदृपत् ' इति पद०।

# ॥ षष्ठाध्यायस्य द्वितीयः पादः ॥

## बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ १ ॥

पूर्वपदग्रहणमत्र पूर्वपदस्थे स्वर उदात्ते स्वरिते वा वर्तते। बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति, स्वभावेनावतिष्ठते, न विकारमनुदात्तत्वमापद्यते। समासान्तोदात्तत्वे हि सति 'अनुदात्तं पदमेकवर्जम्' ( ६.१.१५८ ) इति सोऽनुदात्तः स्यादिति समासान्तोदात्तत्वापवादोऽयमारभ्यते। कार्ष्णोत्तरासङ्गः। कृष्णो मृगस्तस्य विकारः कार्ष्णः। 'प्राणिरजतादिभ्योऽञ्' ( ४.३.१५४ ) इत्यञ्प्रत्ययान्तो ञित्स्वरेणाद्युदात्तः। यूपवलजः। यूपशब्द उणादिषु 'कुसुयुभ्यश्च' ( द० उ० ७.५ ) इति पप्रत्ययान्तः। तत्र च दीर्घ इति निदिति च वर्तते[1], तेनाद्युदात्तः। ब्रह्मचारिपरिस्कन्दः। ब्रह्मचारिशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। स्नातकपुत्रः। स्नातकशब्दः कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। अध्यापकपुत्रः। लित्स्वरेणाध्यापकशब्दो मध्योदात्तः। श्रोत्रियपुत्रः। श्रोत्रियशब्दो नित्त्वादाद्युदात्तः। मनुष्यनाथः। मनुष्यशब्दः 'तित् स्वरितम्' ( ६.१.१८५ ) इति स्वरितान्तः। उदात्तग्रहणं स्वरितग्रहणं चात्रानुवर्तते, तेन सर्वानुदात्ते पूर्वपदे विधिरेव नास्तीति समासान्तोदात्तत्वं भवति—समभाग इति। समशब्दो हि सर्वानुदात्तः॥

## तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ २ ॥

तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तमुपमानवाच्यव्ययं द्वितीयान्तं कृत्यान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवति। तुल्यार्थ—तुल्यश्वेतः। तुल्यलोहितः। तुल्यमहान्। सदृक्छ्वेतः। सदृग्लोहितः। सदृग्महान्। सदृशश्वेतः। सदृशलोहितः। सदृशमहान्। एते 'कृत्यतुल्याख्या अजात्या' ( २.१.६८ ) इति कर्मधारयाः। तत्र तुल्यशब्दो 'यतोऽनावः' ( ६.१.२१३ ) इत्याद्युदात्तः। सदृक्शब्दः 'समानान्ययोश्च०' ( ३.२.६० वा० ) इति क्विन्प्रत्ययान्तः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। सदृशशब्दोऽपि कञन्तो मध्योदात्तः। तुल्यार्थ। तृतीया—शङ्कुलया खण्डः, शङ्कुलाखण्डः। किरिणा काणः, किरिकाणः। शङ्कुपूर्वात् लातेः 'घञर्थे कविधानम्०' (३.३.५८ वा० ) इति वा[2] कप्रत्ययान्तः शङ्कुलाशब्दोऽन्तोदात्तः। किरिशब्दोऽपि किरतेः 'कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च' ( प० उ० ४.१४४ ) इतीकारप्रत्ययः किदौणादिकस्तेनासावन्तोदात्तः। तृतीया। सप्तमी—अक्षेषु शौण्डः, अक्षशौण्डः। पानशौण्डः। 'अशेर्देवने' ( प० उ० ३.६५ ) इति सप्रत्ययान्तोऽ-

---

१ – 'कुयुभ्यां च' ( प० उ० ३.२७ ) इति सूत्रस्येयं व्याख्या। न्यासोऽप्यत्रानुकूलः।

२ – 'शङ्कतेर्बाहुलकाद् उलच्' ( द० उ० ८.१०६ ) इति वा ?

क्षशब्दोऽन्तोदात्तः। पानशब्दो ल्युडन्तो लित्स्वरेणाद्युदात्तः। सप्तमी। उपमान—शस्त्रीश्यामा। कुमुदश्येनी। हंसगद्गदा। न्यग्रोधपरिमण्डला। दूर्वाकाण्डश्यामा। शरकाण्डगौरी। 'उपमानानि सामान्यवचनैः' (२.१.५५) इति समासः। शस्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः। कुमुदशब्दोऽपि कौ मोदत इति मूलविभुजादित्वात् (३.२.५ वा०) कप्रत्ययान्तो 'नब्विषयस्यानिसन्तस्य' (फिट् सू० २६) इति वाद्युदात्तः। हंसशब्दो 'वृतृवदिहनिकमिकषिभ्यः सः' (प० उ० ३.६२) इति सप्रत्ययान्तः। न्यग्रोहतीति न्यग्रोधः। पचादित्वादच्प्रत्ययान्तः, तस्य 'न्यग्रोधस्य च केवलस्य' (७.३.५) इति निपातनाद् हकारस्य धकारो मध्योदात्तत्वं च। दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषावुत्तरपदाद्युदात्तौ (६.२.१३५)। उपमान। अव्यय—अब्राह्मणः। अवृषलः। कुब्राह्मणः। कुवृषलः। निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः। एतान्यव्ययान्याद्युदात्तानि ॥ अव्यये नञ्कुनिपातानामिति वक्तव्यम् ॥ इह मा भूत्—स्नात्वाकालक इति। अव्यय। द्वितीया—मुहूर्तसुखम्। मुहूर्तरमणीयम्। सर्वरात्रकल्याणी। सर्वरात्रशोभना। 'अत्यन्तसंयोगे च' (२.१.२९) इति द्वितीयासमासः। मुहूर्तशब्दः पृषोदरादिरन्तोदात्तः। सर्वरात्रशब्दोऽप्यच्प्रत्ययान्तः। द्वितीया। कृत्य—भोज्योष्णम्। भोज्यलवणम्। पानीयशीतम्। हरणीयचूर्णम्। भोज्यशब्दो ण्यदन्तोऽन्तस्वरितः। पानीयहरणीयशब्दयोः 'उपोत्तमं रिति' (६.१.२१७) इति ईकार उदात्तः॥

## वर्णो वर्णेष्वनेते ॥ ३ ॥

प्रकृत्या पूर्वपदं तत्पुरुष इति च वर्तते। वर्णं वर्णवाचि पूर्वपदं वर्णवाचिष्वेवोत्तरपदेषु एतशब्दवर्जितेषु परतस्तत्पुरुषे समासे प्रकृतिस्वरं भवति। कृष्णसारङ्गः, लोहितसारङ्गः। कृष्णकल्माषः। लोहितकल्माषः। 'कृषेर्वर्णे' (प० उ० ३.४) इति कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्तः। लोहितशब्दोऽपि 'रुहे रश्च लो वा' (प० उ० ३.९४) इतीतन्प्रत्ययान्त आद्युदात्तः। वर्ण इति किम्? परमकृष्णः। वर्णेष्विति किम्? कृष्णतिलाः। अनेत इति किम्? कृष्णैतः। लोहितैतः॥

## गाधलवणयोः प्रमाणे ॥ ४ ॥

प्रमाणवाचिनि तत्पुरुषे समासे गाध लवण इत्येतयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवति। शम्बगाधमुदकम्। अरित्रगाधमुदकम्। तत्प्रमाणमित्यर्थः। गोलवणम्। अश्वलवणम्। यावद् गवे दीयते तावदित्यर्थः। षष्ठीसमासा एते। तत्र 'शमेर्बन्' (प० उ० ४.९५) इति बन्प्रत्ययान्तत्वाच्छम्बशब्द आद्युदात्तः। अरित्रशब्दः 'अर्तिलूधूसू०' (३.२.१८४) इतीत्रप्रत्ययान्तो मध्योदात्तः। गोशब्दो डोप्रत्ययान्तः (प० उ० २.६८) अन्तोदात्तः। अश्वशब्दः 'अशूप्रुषि०' (प० उ० १.१५१) इति क्वन्प्रत्ययान्त आद्यु-

दात्तः। प्रमाणमियत्तापरिच्छेदमात्रमिह द्रष्टव्यम्, न पुनरायाम एव। स्वरव्यङ्ग्यं च प्रमाणविशेषविषयत्वमेतेषाम्। प्रमाण इति किम् ? परमगाधम्। परमलवणम्॥

## दायाद्यं दायादे ॥ ५ ॥

तत्पुरुषे समासे दायादशब्द उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं भवति। विद्यादायादः। धनदायादः। 'संज्ञायां समजनिषद०' (३.३.९९) इति विद्याशब्दः क्यप्प्रत्ययान्तः। उदात्त इति च तत्र वर्तते। तेनायमन्तोदात्तः। 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः' (द० उ० ५.२६) इति बहुलवचनात् केवलादपि धाञः क्युप्रत्ययस्तेन धनशब्दः प्रत्ययस्वरेणाद्युदात्तः। अथ विद्यादायाद इति केन षष्ठी ? 'स्वामीश्वराधिपतिदायाद०' (२.३.३९) इति। यद्येवं 'प्रतिपदविधाना च षष्ठी न समस्यते' (२.२.१० वा०) इति समासप्रतिषेधः प्राप्नोति। एवं तर्हि शेषलक्षणैवात्र षष्ठी, तस्यास्तु सप्तमी विधीयमाना बाधिका मा विज्ञायीति पुनरभ्यनुज्ञायते। दायाद्यमिति किम् ? परमदायादः। अत्र समासान्तोदात्तत्वमेव भवति॥

## प्रतिबन्धि चिरकृच्छ्रयोः ॥ ६ ॥

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं प्रकृतिस्वरं भवति। गमनचिरम्। गमनकृच्छ्रम्। व्याहरणचिरम्। व्याहरणकृच्छ्रम्। गमनव्याहरणशब्दौ ल्युडन्तौ, तयोर्लित्स्वरः। गमनं च यत् चिरं चेति विशेषणसमासोऽयं मयूरव्यंसकादिर्वेप द्रष्टव्यः। गमनं हि कारणविकलतया चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते। प्रतिबन्धीति किम् ? मूत्रकृच्छ्रम्॥

## पदेऽपदेशे ॥ ७ ॥

अपदेशो व्याजः, तद्वाचिनि तत्पुरुषे समासे पदशब्द उत्तरपदे पूर्वपदं प्रकृतिस्वरं भवति। मूत्रपदेन प्रस्थितः। उच्चारपदेन प्रस्थितः। मूत्रशब्दः 'सिविमुच्योष्टेरू च' (प० उ० ४.१६४) इति ष्ट्रन्प्रत्ययान्तः, मूत्रयतेर्वा घञन्त आद्युदात्तः। उच्चारशब्दोऽपि घञन्तः 'थाथघञ्क्ताजबित्रकाणाम्' (६.२.१४४) इत्यन्तोदात्तः। विशेषणसमासोऽयं मयूरव्यंसकादिर्वा। अपदेश इति किम् ? विष्णोः पदं विष्णुपदम्॥

## निवाते वातत्राणे ॥ ८ ॥

निवातशब्द उत्तरपदे वातत्राणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। कुट्येव निवातं कुटीनिवातम्। शमीनिवातम्। कुड्यनिवातम्। वातस्याभावो निवातम्, अर्थाभावः (२.१.५) इत्यव्ययीभावः। निरुद्धो वातोऽस्मिन्निति वा निवातमिति

बहुव्रीहिः। तत्र कुड्यादिहेतुके निवाते कुड्यादयो वर्तमानाः समानाधिकरणेन निवात-शब्देन सह समस्यन्ते। कुटीशमीशब्दौ गौरादिङीषन्तावन्तोदात्तौ। कुड्यशब्दोऽपि कवतेर्यत् डक् किच्च[1] इति यत्प्रत्ययान्त आद्युदात्त इत्येके। ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपरे। वातत्राण इति किम् ? राजनिवाते वसति। सुखं मातृनिवातम्। निवातशब्दोऽयं पार्श्ववाची रूढिशब्दस्तत्रोभयत्र षष्ठीसमासः॥

## शारदेऽनार्तवे ॥ ९ ॥

ऋतौ भवमार्तवम्। अनार्तववाचिनि शारदशब्द उत्तरपदे तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। रज्जुशारदमुदकम्। दृषत्शारदाः सक्तवः। शारदशब्दोऽयं प्रत्यग्र-वाची, तस्य नित्यसमासोऽस्वपदविग्रह इष्यते। सद्यो रज्जूद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जु-शारदमुच्यते। रज्जुशब्दः 'सृजेरसुम् च' ( प० उ० १.१५ ) इति उप्रत्ययान्त आदिलोपश्च। 'धान्ये नित्' ( प० उ० १.९ ) इति च तत्र वर्तते, तेनाद्युदात्तः। दृषत्शब्दः 'दृणातेः षुग् ह्रस्वश्च' ( प० उ० १.१३१ ) इति अदिप्रत्ययान्तोऽन्तोदात्तः। अनार्तव इति किम् ? परमशारदम्। उत्तमशारदम्। शरदि ऋतुविशेषे भवं यत् तदिह शारदम्॥

## अध्वर्युकषाययोर्जातौ ॥ १० ॥

अध्वर्यु कषाय इत्येतयोर्जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्याध्वर्युः। कठाध्वर्युः। कालापाध्वर्युः। एते समानाधिकरणसमासा जातिवाचिनो नियतविषयाः। तत्र प्राच्यशब्दो यत्प्रत्ययान्त आद्युदात्तः। कठशब्दः पचाद्यचि व्युत्पादितः, ततः कठेन प्रोक्तमिति 'वैशम्पायनान्तेवासिभ्यश्च' ( ४.३.१०४ ) इति णिनिस्तस्य 'कठचरकाल्लुक्' ( ४.३.१०७ ) इति लुक्। कलापिना प्रोक्तमिति 'कलापिनोऽण्' ( ४.३.१०८ ) तस्मिन् 'इनण्यनपत्ये' ( ६.४.१६४ ) इति प्रकृतिभावे प्राप्ते 'नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्म-सुपर्वणामुपसंख्यानम्' ( ६.४.१४४ वा० ) इति टिलोपः। तदेवं कालापशब्दोऽन्तोदात्तः। सर्पिर्मण्डकषायम्। उमापुष्पकषायम्। दौवारिककषायम्। षष्ठीसमासव्युत्पादिता रूढि-शब्दा एते। तत्र सर्पिर्मण्डशब्द उमापुष्पशब्दश्च षष्ठीसमासावन्तोदात्तौ। दौवारिक-शब्दोऽपि द्वारे[2] नियुक्त इति ठकि सत्यन्तोदात्त एव। जाताविति किम् ? परमाध्वर्युः। परमकषायः॥

---

१ - तु०—द० उ० ८.२० । न्यासपदमञ्जरीसिद्धान्तकौमुद्योऽप्यत्र द्रष्टव्याः।

२ - 'द्वारि' इति है०।

## सदृशप्रतिरूपयोः सादृश्ये ॥ ११ ॥

सदृश प्रतिरूप इत्येतयोरुत्तरपदयोः सादृश्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। पितृसंदृशः। मातृसंदृशः। पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातितौ। षष्ठीसमासार्थं च सदृशग्रहणमिह तदलुकि षष्ठ्याः प्रयोजयति—दास्याःसंदृशः, वृषल्याः-संदृश इति। अत्र दासीवृषलीशब्दयोरन्तोदात्तत्वाद् 'उदात्तयणो हल्पूर्वात्' (६.१.१७४) इति विभक्तिरन्तोदात्ता। पितृप्रतिरूपः। मातृप्रतिरूपः। सादृश्य इति किम्? परमसदृशः। उत्तमसदृशः। समासार्थोऽत्र पूज्यमानता, न सादृश्यम्॥

## द्विगौ प्रमाणे ॥ १२ ॥

द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्यसप्तशमः[1]। गान्धारिसप्तशमः। सप्त शमाः प्रमाणमस्येति मात्रच उत्पन्नस्य 'प्रमाणे लो द्विगोर्नित्यम्' (५.२.३७ वा०) इति लुक्। प्राच्यश्चासौ सप्तशमश्चेति, प्राच्यसप्तशमः। प्राच्यशब्द आद्युदात्तः। गान्धारिशब्दः कर्दमादित्वाद् (फिट् सू० ५९) आद्युदात्तो मध्योदात्तो वा। द्विगाविति किम्? व्रीहिप्रस्थः। प्रमाण इति किम्? परमसप्तशमः॥

## गन्तव्यपण्यं वाणिजे ॥ १३ ॥

वाणिजशब्द उत्तरपदे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं भवति। मद्रवाणिजः। काश्मीरवाणिजः। गान्धारिवाणिजः। मद्रादिषु गत्वा व्यवहरन्तीत्यर्थः। सप्तमीसमासा एते। तत्र मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः। काश्मीर-शब्दोऽपि पृषोदरादिषु मध्योदात्तः। गान्धारिशब्दः कर्दमादिषु पठ्यते। तत्र 'कर्दमादीनां च' (फिट् सू० ५९) इति पक्ष आद्युदात्तो भवति द्वितीयो वा। पण्य—गोवाणिजः। अश्ववाणिजः। गोशब्दोऽन्तोदात्तः। अश्वशब्द आद्युदात्तः। गन्तव्यपण्यमिति किम्? परमवाणिजः। उत्तमवाणिजः॥

## मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥ १४ ॥

मात्र[2] उपज्ञा उपक्रम छाया एतेषूत्तरपदेषु नपुंसकवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। भिक्षामात्रं न ददाति याचितः। समुद्रमात्रं न सरोऽस्ति किंचन। मात्रशब्दोऽयं वृत्तिविषय एव तुल्यप्रमाणे वर्तते। तत्र भिक्षायास्तुल्यप्रमाणमित्यस्वपद-

१ - 'सप्तसमः' इति बाल० सर्वत्र।
२ - मात्रा' इति मुद्रितेपु।

विग्रहः षष्ठीसमासः। तत्र भिक्षाशब्दो 'गुरोश्च हलः' ( ३.३.१०३ ) इत्यप्रत्ययान्तोऽन्तोदात्तः। समुद्रशब्दोऽपि फिषि 'पाटलापालङ्काम्बासागरार्थानाम्' ( फिट् सू० २ ) इत्यन्तोदात्त एव। उपज्ञा—पाणिनोपज्ञम् अकालकं व्याकरणम्। व्याड्युपज्ञं दुष्करणम्। आपिशल्युपज्ञं गुरुलाघवम्। षष्ठीसमासा एते। तत्र पणिनोऽपत्यमित्यणन्तः। पाणिनशब्दः प्रत्यय-स्वरेणान्तोदात्तः। व्याडिरिञन्तत्वादाद्युदात्तः। तद्वदापिशलिः। उपक्रम—आढ्योपक्रमं प्रासादः। दर्शनीयोपक्रमम्। सुकुमारोपक्रमम्। नन्दोपक्रमाणि मानानि। एतेऽपि षष्ठी-समासा एव। तत्रैत्यैनं ध्यायन्तीत्याढ्यः। 'घञर्थे कविधानम्०' ( ३.३.५८ वा० ) इति कप्रत्ययः, आङ्पूर्वाद् ध्यायतेः पृषोदरादित्वाद् धस्य ढत्वम्। तदयमाढ्यशब्दस्थाथादि-स्वरेणान्तोदात्तः ( ६.२.१४४ )। दर्शनीयशब्दो रित्त्वादुपोत्तमोदात्तः। सुकुमारशब्दो 'नञ्सुभ्याम्' ( ६.२.१७२ ) इत्यन्तोदात्तः। नन्दशब्दः पचाद्यचि व्युत्पादितः। उपज्ञोप-क्रमान्तस्य तत्पुरुषस्य नपुंसकलिङ्गता 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' ( २.४.२१ ) इति। छाया—इषुच्छायम्। धनुश्छायम्। इषुशब्द 'ईषेः किच्च' ( प० उ० १.१३ ) इत्युप्रत्ययान्तस्तत्र च 'धान्ये नित्' ( प० उ० १.९ ) इति वर्तते, तेनाद्युदात्तः। धनुः-शब्दोऽपि 'नब्विषयस्यानिसन्तस्य' ( फिट् सू० २६ ) इत्याद्युदात्त एव। इषूणां छायेति षष्ठीसमासः। 'छाया बाहुल्ये' ( २.४.२२ ) इति नपुंसकलिङ्गता। नपुंसक इति किम्? कुड्यच्छाया॥

## सुखप्रिययोर्हिते ॥ १५ ॥

सुख प्रिय इत्येतयोरुत्तरपदयोर्हितवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। गमनसुखम्। वचनसुखम्। व्याहरणसुखम्। सुख। प्रिय—गमनप्रियम्। वचनप्रियम्। व्याहरणप्रियम्। समानाधिकरणसमासा एते। तत्र सुखप्रियशब्दौ तद्धेतावायत्यां प्रीति-करे वर्तेते। तद्धि हितं यदायत्यां प्रीतिं करोति। गमनादिषु ल्युडन्तेषु लित्स्वरः। हित इति किम्? परमसुखम्। परमप्रियम्॥

## प्रीतौ च ॥ १६ ॥

प्रीतौ गम्यमानायां सुख प्रिय इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे पूर्वपदं प्रकृति-स्वरं भवति। ब्राह्मणसुखं पायसम्। छात्रप्रियोऽनध्यायः। कन्याप्रियो मृदङ्गः। सुख-प्रिययोः प्रीत्यव्यभिचारादिह प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थम्। ब्राह्मणछात्रशब्दौ प्रत्यय-स्वरेणान्तोदात्तौ। कन्याशब्दः स्वरितान्तः ( फिट् सू० ७६ )। प्रीताविति किम्? राजसुखम्। राजप्रियम्॥

## स्वं स्वामिनि ॥ १७ ॥

स्वामिशब्द उत्तरपदे तत्पुरुषे समासे स्ववाचि पूर्वपदं प्रकृतिस्वरं भवति। गोस्वामी। अश्वस्वामी। धनस्वामी। अश्वधनगवां कथित एव स्वरः। स्वमिति किम्? परमस्वामी॥

## पत्यावैश्वर्ये ॥ १८ ॥

पतिशब्द उत्तरपद ऐश्वर्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं भवति। गृहपतिः। सेनापतिः। नरपतिः। धान्यपतिः। 'गेहे कः' ( ३.१.१४४ ) इति प्रत्ययस्वरेणान्तोदात्तो[1] गृहशब्दः। सह इनेन वर्तत इति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( ६.२.१ ) इति सेनाशब्द आद्युदात्तः। 'नॄ नये' ( क्र्या० २६ ) एतस्माद् 'ॠदोरप्' ( ३.३.५७ ) इत्यप्प्रत्ययान्त आद्युदात्तो नरशब्दः। धान्यमन्तस्वरितम्[2] ( फिट् सू० ७६ )। ऐश्वर्य इति किम् ? ब्राह्मणो वृषलीपतिः। वृषल्या भर्तेत्यर्थः॥

## न भूवाक्चिद्दिधिषु ॥ १९ ॥

पतिशब्द उत्तरपद ऐश्वर्यवाचिनि तत्पुरुषे समासे भू वाक् चित् दिधिषू इत्येतानि पूर्वपदानि प्रकृतिस्वराणि न भवन्ति। पूर्वेण प्राप्तः स्वरः प्रतिषिध्यते। भूपतिः। वाक्पतिः। चित्पतिः। दिधिषूपतिः। षष्ठीसमासा एते समासस्वरेणान्तोदात्ता भवन्ति॥

## वा भुवनम् ॥ २० ॥

पतिशब्द उत्तरपद ऐश्वर्यवाचिनि तत्पुरुषे समासे भुवनशब्दः पूर्वपदं वा प्रकृतिस्वरं भवति। भुवनपतिः, भुवनपतिः। पूर्वपदप्रकृतिस्वरपक्ष आदिरुदात्तः। 'रञ्जेः क्युन्' ( प० उ० २.८० ) इति वर्तमाने 'भूसूधूभ्रस्जिभ्यश्छन्दसि' ( प० उ० २.८१ ) इति क्युन्प्रत्ययान्तो भुवनशब्द आद्युदात्तो व्युत्पादितः। कथं भुवनपतिरादित्य इति ? 'उणादयो बहुलम्' ( ३.३.१ ) इति बहुलवचनाद् भाषायामपि प्रयुज्यते॥

## आशङ्काबाधनेदीयःसु संभावने ॥ २१ ॥

प्रकृत्या पूर्वपदं तत्पुरुष इति वर्तते। आशङ्क आबाध नेदीयस् इत्येतेषूत्तरपदेषु संभावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। अस्तित्वाध्यवसायः संभावनम्।

---

१ - 'प्रकृतिस्वरेणा०' इत्यपपाठः सार्वत्रिकः।
२ - '०मन्तःस्वरितम्' इति बाल०।

गमनाशङ्कं वर्तते। गमनमाशङ्क्यत इति संभाव्यते। वचनाशङ्कम्। व्याहरणाशङ्कम्। आबाध—गमनाबाधम्। वचनाबाधम्। व्याहरणाबाधम्। गमनं बाध्यत इति संभाव्यते। नेदीयस्—गमननेदीयः। व्याहरणनेदीयः। गमनमतिनिकटतरमिति संभाव्यते। संभावन इति किम् ? परमनेदीयः। पूर्वपदानि ल्युडन्तान्युक्तस्वराणि॥

## पूर्वे भूतपूर्वे ॥ २२ ॥

पूर्वशब्द उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। आढ्यो भूतपूर्व आढ्यपूर्वः। पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्तते। तत्र 'विशेषणं विशेष्येण०' ( २.१.५७ ) इति समासः। मयूरव्यंसकादिर्वा द्रष्टव्यः। दर्शनीयपूर्वः। सुकुमारपूर्वः। भूतपूर्व इति किम् ? परमपूर्वः। उत्तमपूर्वः। अत्र परमश्चासौ पूर्वश्चेति समासः, न तु परमो भूतपूर्व इति। तथा च सत्युदाहरणमेव भवति॥

## सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥ २३ ॥

सविध सनीड समर्याद सवेश सदेश इत्येतेषूत्तरपदेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। मद्रसविधम्। गान्धारिसविधम्। काश्मीरसविधम्। मद्रसनीडम्। गान्धारिसनीडम्। काश्मीरसनीडम्। मद्रसमर्यादम्। गान्धारिसमर्यादम्। काश्मीरसमर्यादम्। मद्रसवेशम्। गान्धारिसवेशम्। काश्मीरसवेशम्। मद्रसदेशम्। गान्धारिसदेशम्। काश्मीरसदेशम्। पूर्वपदान्युक्तस्वराणि। सविधादीनां सह विधयेत्येवमादिका व्युत्पत्तिरेव केवलम्। समीपवाचिनस्त्वेते समुदायाः। मद्राणां सविधं समीपमित्यर्थः। सामीप्य इति किम् ? सह मर्यादया वर्तते समर्यादं क्षेत्रम्। देवदत्तस्य समर्यादं देवदत्तसमर्यादम्। सविधादिष्विति किम् ? देवदत्तसमया॥

## विस्पष्टादीनि गुणवचनेषु ॥ २४ ॥

विस्पष्टादीनि पूर्वपदानि गुणवचनेषूत्तरपदेषु प्रकृतिस्वराणि भवन्ति। विस्पष्टकटुकम्। विचित्रकटुकम्। व्यक्तकटुकम्। विस्पष्टलवणम्। विचित्रलवणम्। व्यक्तलवणम्। विस्पष्टं कटुकमिति विगृह्य सुप्सुपेति समासः। विस्पष्टादयो ह्यत्र प्रवृत्तिनिमित्तस्य विशेषणम्। कटुकादिभिश्च शब्दैर्गुणवद् द्रव्यमभिधीयत इत्यसामानाधिकरण्यमतो नास्ति कर्मधारयः। विस्पष्टशब्दो 'गतिरनन्तरः' ( ६.२.४९ ) इत्याद्युदात्तः। विचित्रशब्दोऽप्यव्ययस्वरेण। विचित्तशब्दमन्ये पठन्ति। सोऽपि बहुव्रीहिस्वरेणाद्युदात्त एव। व्यक्तशब्द 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( ८.२.४ ) इत्यादिस्वरितः। ये चात्रापरे पठ्यन्ते तत्र संपन्नशब्दस्थाथादिस्वरेणान्तोदात्तः, पटुपण्डितशब्दौ प्रत्ययस्वरेण। कुशलशब्दः कृत्स्वरेणान्तोदात्तः। चपलशब्दश्चित्स्वरेणान्तोदात्तः। 'चुपेरच्चोपधायाः'

( प० उ० १.१११ ) इत्यत्र हि चिदिति वर्तते। निपुणशब्दस्थाथादिस्वरेणान्तोदात्तः। पुणेरिगुपधलक्षणः कप्रत्ययोऽयम्। विस्पष्टादीनीति किम्? परमलवणम्। उत्तमलवणम्। गुणवचनेष्विति किम्? विस्पष्टब्राह्मणः॥ विस्पंष्ट। विचिंत्र। व्यंक्त। संपन्न। पटु। पण्डित। कुशल। चपल। निपुण। विस्पष्टादिः॥

## श्रज्यावमकन्पापवत्सु भावे कर्मधारये ॥ २५ ॥

श्र ज्य अवम कन् इत्येतेपु पापशब्दवति चोत्तरपदे कर्मधारये समासे भाववाचि पूर्वपदं प्रकृतिस्वरं भवति। गमंनश्रेष्ठम्। गमंनश्रेयः। ज्य—वचंनज्येष्ठम्। वचंन-ज्यायः। अवम—गमंनावमम्। वचंनावमम्। कन्—गमंनकनिष्ठम्। गमंनकनीयः। पापवत्—गमंनपापिष्ठम्। गमंनपापीयः। ल्युडन्तान्येतानि पूर्वपदानि लित्स्वरेणाद्युदात्तानि। श्रज्यकनामादेशानां ग्रहणमिति सामर्थ्यात् तद्वदुत्तरपदं गृह्यते। श्रादिष्विति किम्? गमनशोभनम्। भाव इति किम्? गम्यतेऽनेनेति गमनम्, तत् श्रेयो गमनश्रेयः। कर्मधारय इति किम्? गमनस्य[1] श्रेयो गमनश्रेयः॥

## कुमारश्च ॥ २६ ॥

कुमारशब्दः पूर्वपदं कर्मधारये समासे प्रकृतिस्वरं भवति। कुमारश्रंमणा। कुमार-कुंलटा। कुमारतांपसी। कुमारशब्दोऽन्तोदात्तः। अत्र केचित् 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' ( परि० १०५ ) इति परिभाषया 'कुमारः श्रमणादिभिः' ( २.१.७० ) इत्यत्रैव समासे स्वरमेतमिच्छन्ति। केचित् पुनरविशेषेण सर्वत्रैव कर्मधारये॥

## आदिः प्रत्येनसि ॥ २७ ॥

कर्मधारय इति वर्तते। प्रतिगत एनसा, प्रतिगतमेनो वा यस्य स प्रत्येनाः। तस्मिन्नुत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो भवति। कुमांरप्रत्येनाः। उदात्त इत्येतदत्र सामर्थ्याद् वेदितव्यम्। पूर्वपदप्रकृतिस्वर एव ह्ययमादेरुपदिश्यते॥

## पूगेष्वन्यतरस्याम् ॥ २८ ॥

पूगा गणाः तद्वाचिन्युत्तरपदे कर्मधारये समासे कुमारस्यान्यतरस्यामादिरुदात्तो भवति। कुमांरचातकाः, कुमारचांतकाः, कुमारचातकाः। कुमांरलोहध्वजाः, कुमारलोंहध्वजाः, कुमारलोहध्वजाः। कुमांरबलाहकाः, कुमारबंलाहकाः, कुमारबलाहकाः। कुमांरजीमूताः,

---

[1] – 'गमनम्' इत्यपपाठो मुद्रितेषु।

कुमारजींमूताः, कुमारजीमूताः। चातकादयः पूगशब्दाः, तेभ्यः 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' ( ५.३.११२ ) इति ञ्यः प्रत्ययः, तस्य 'तद्राजस्य बहुषु०' ( २.४.६२ ) इति लुक्। अत्र यदाद्युदात्तत्वं न भवति, तदा 'कुमारश्च' ( ६.२.२६ ) इति पूर्वपदप्रकृतिस्वरत्वमेके कुर्वन्ति। ये तु तत्र प्रतिपदोक्तस्य ग्रहणमिच्छन्ति तेषां समासान्तोदात्तत्वमेव भवति॥

## इगन्तकालकपालभगालशरावेषु द्विगौ ॥ २९ ॥

इगन्त उत्तरपदे कालवाचिनि कपाल भगाल शराव इत्येतेषु च द्विगौ समासे पूर्वपदं प्रकृतिस्वरं भवति। इगन्त—पञ्चांरत्निः। दशांरत्निः। पञ्चारत्नयः प्रमाणमस्य, दशारत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः, 'प्रमाणे लो द्विगोर्नित्यम्' ( ५.२.३७ वा० ) इति मात्रचो लोपः। इगन्त। काल—पञ्चंमास्यः। दशंमास्यः। पञ्च मासान् भृतो भूतो भावी वा ( ५.१.८० ) इति तद्धितार्थे 'द्विगोर्यप्' ( ५.१.८२ )। पञ्चंवर्षः। दशंवर्षः। 'वर्षाल्लुक् च' ( ५.१.८८) इति ठञो लुक्। काल। कपाल—पञ्चंकपालः। दशंकपालः। कपाल। भगाल—पञ्चंभगालः। दशंभगालः। भगाल। शराव—पञ्चंशरावः। दशंशरावः। 'संस्कृतं भक्षाः' ( ४.२.१६ ) इति तद्धितार्थ एते समासा 'द्विगोर्लुगनपत्ये' ( ४.१.८८ ) इति कृताणप्रत्ययलोपा द्रष्टव्याः। इगन्तादिष्विति किम् ? पञ्चभिरश्वैः क्रीतः पञ्चाश्वः। दशाश्वः। द्विगाविति किम् ? परमारत्निः। परमशरावम्। पञ्चांरत्न्यो दशांरत्नय इति च यण्गुणयोर्बहिरङ्गलक्षणयोरसिद्धत्वात् स्थानिवद्भावाद् वा द्विगुस्वर इगन्तलक्षणः प्रवर्तते॥

## बह्वन्यतरस्याम् ॥ ३० ॥

बहुशब्दः पूर्वपदमिगन्तादिषूत्तरपदेषु द्विगौ समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। पूर्वेण नित्ये प्राप्ते विकल्पः। बह्वंरत्निः, बह्वरत्निः। बहुमांस्यः, बहुमास्यः। बहुकंपालः, बहुकपालः। बहुभंगालः, बहुभगालः। बहुशंरावः, बहुशरावः। बहुशब्दोऽन्तोदात्तः, तस्य प्रकृतिस्वरे कृते यत्र यणादेशस्तत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( ८.२.४ ) इत्येष स्वरो भवति॥

## दिष्टिवितस्त्योश्च ॥ ३१ ॥

दिष्टि वितस्ति इत्येतयोरुत्तरपदयोर्द्विगौ समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। पञ्चंदिष्टिः, पञ्चदिष्टिः। पञ्चंवितस्तिः, पञ्चवितस्तिः। दिष्टिवितस्ती प्रमाणे, तेनात्र मात्रचो लुक्॥

## सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ३२ ॥

सप्तम्यन्तं पूर्वपदं सिद्ध शुष्क पक्व बन्ध इत्येतेषूत्तरपदेषु प्रकृतिस्वरं भवति, सा चेत् सप्तमी कालाद् न भवति। सांकाश्यसिद्धः। काम्पिल्यसिद्धः। सांकाश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तावन्तोदात्तौ। फिषि तु 'सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम्' ( फिट् सू० ६५ ) अन्तः पूर्वं वेति पठ्यते। तत्र पक्षे मध्योदात्तावपि भवतः। शुष्क—ऊकशुष्कः। निधनशुष्कः। ऊकशब्दो बहुलवचनादवतेः कक्प्रत्ययान्तोऽन्तोदात्तः। निधनशब्दो निधाञः क्युप्रत्यये मध्योदात्तः। पक्व—कुम्भीपक्वः। कलसीपक्वः[1]। भ्राष्ट्रपक्वः। कुम्भीकलसीशब्दौ ङीषन्तावन्तोदात्तौ। भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्त आद्युदात्तः। बन्ध—चक्रबन्धः। चारकबन्धः। चक्रशब्दोऽन्तोदात्तः। चारकशब्दो ण्वुलन्त आद्युदात्तः। अकालादिति किम् ? पूर्वाह्णसिद्धः। अपराह्णसिद्धः। सप्तमीस्वरः कृत्स्वरेण[2] बाधितः पुनरयं विधीयते॥

## परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ३३ ॥

परि प्रति उप अप इत्येते पूर्वपदभूता वर्ज्यमानवाचिनि अहरवयववाचिनि रात्र्यवयववाचिनि चोत्तरपदे प्रकृतिस्वरा भवन्ति। परित्रिगर्तं वृष्टो देवः। परिसौवीरम्। परिसार्वसेनि। प्रति—प्रतिपूर्वाह्णम्। प्रत्यपराह्णम्। प्रतिपूर्वरात्रम्। प्रत्यपररात्रम्। उप—उपपूर्वाह्णम्। उपापराह्णम्। उपपूर्वरात्रम्। उपापररात्रम्। अप—अपत्रिगर्तं वृष्टो देवः। अपसौवीरम्। अपसार्वसेनि। निपाता आद्युदात्ता 'उपसर्गाश्चाभिवर्जम्' ( फिट्० सू० ८० ) इत्याद्युदात्तानि पूर्वपदानि। तत्पुरुषे बहुव्रीहौ च सिद्धत्वादव्ययीभावार्थोऽयमारम्भः। तत्रापपरी वर्जने ( १.४.८८ ) वर्तेते इति तयोरेव वर्ज्यमानमुत्तरपदम्, नेतरयोः। अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्तीति न पृथगुदाह्रियन्ते[3]। वर्ज्यमानाहोरात्रावयवेष्विति किम् ? प्रत्यग्नि शलभाः पतन्ति। परिवनमित्यत्र 'वनं समासे' ( ६.२.१७८ ) इत्येतद् भवति॥

## राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ॥ ३४ ॥

राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वोऽन्धकवृष्णिषु वर्तते, तत्र पूर्वपदं प्रकृतिस्वरं भवति। श्वाफल्कचैत्रकाः। चैत्रकरोधकाः[4]। शिनिवासुदेवाः। श्वाफल्कशब्द-

---

१ - 'विलासीपक्वः' इति बाल०।
२ - 'परत्वात् थाथादिस्वरेण' इति पाठान्तरं यथान्यासपद०।
३ - 'पृथगुदाह्रियते' इत्यपपाठो मुद्रितेषु। ४ - 'श्वाफल्कचैत्रकरोधकाः' इति न्यासे।

श्चैत्रकशब्दश्च 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४.१.११४) इत्यणन्तावन्तोदात्तौ। शिनिशब्द आद्युदात्तः, स तदपत्येष्वभेदेन वर्तते। राजन्य इति किम्? द्वैप्यहैमायनाः[1]। द्वीपे भवा इति 'द्वीपादनुसमुद्रं यञ्' (४.३.१०)। हैमेरपत्यं युवा हैमायनः। अन्धकवृष्णय एते न तु राजन्याः। राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम्। एते च नाभिषिक्त-वंश्याः। बहुवचनग्रहणं किम्? संकर्षणवासुदेवौ। द्वन्द्व इति किम्? वृष्णीनां कुमारा वृष्णिकुमाराः। अन्धकवृष्णिष्विति किम्? कुरुपञ्चालाः (तै० ब्रा० १.८.४.१)॥

## संख्या ॥ ३५ ॥

द्वन्द्वसमासे संख्यावाचि पूर्वपदं प्रकृतिस्वरं भवति। एकादश (तै० सं० ४.७.११.१)। द्वादश। त्रयोदश[2]। 'इणभीकापाशल्यतिमर्चिभ्यः कन्' (प० उ० ३.४३) इति नित्त्वादाद्युदात्त एकशब्दः। त्रेस्त्रयस् आदेशोऽन्तोदात्तो निपात्यते॥

## आचार्योपसर्जनश्चान्तेवासी ॥ ३६ ॥

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वस्तत्र पूर्वपदं प्रकृतिस्वरं भवति। आपिशल-पाणिनीयाः। पाणिनीयरौढीयाः। रौढीयकाशकृत्स्नाः। अपिशलस्यापत्यमापिशलिरा-चार्यः। 'अत इञ्' (४.१.९५)। 'तेन प्रोक्तम्' (४.३.१०१) आपिशलम्। 'इञश्च' (४.२.११२) इत्यण्। तदधीयते येऽन्तेवासिनस्तेऽप्यापिशलाः, 'प्रोक्ताल्लुक्' (४.२.६४) इति तस्य तद्धितस्याध्येतरि विहितस्य लुक् क्रियते। आपिशलेर्वा छात्रा आपि-शला इत्युभयथाप्याचार्योपसर्जनश्चान्तेवासी भवति। आचार्योपसर्जनग्रहणं द्वन्द्वविशेष-णार्थम्, सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत। इह मा भूत्—पाणिनीयदेवदत्तौ। आचार्योपसर्जन इति किम्? छान्दसवैयाकरणाः। अन्तेवासीति किम्? आपिशल-पाणिनीये शास्त्रे॥

## कार्तकौजपादयश्च ॥ ३७ ॥

कार्तकौजपादयो ये द्वन्द्वास्तेषु पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतिस्वरपूर्वपदाः कार्तकौजपादयो भवन्ति। विभक्त्यन्तानां पाठो वचनविवक्षार्थः। चकारो द्वन्द्वाधिकारानु-वृत्त्यर्थः। कार्तकौजपौ। कृतस्यापत्यं कुजपस्यापत्यम् इत्यणन्तावेतौ। सावर्णिमाण्डूकेयौ। सावर्णिरिञन्तः। अवन्त्यश्मकाः। अवन्तेरपत्यानि बहूनि, तन्निवासो जनपदोऽवन्तयः। तथाश्मकाः। पैलश्यापर्णेयाः। युवद्वन्द्वोऽयम्। पीलाया अपत्यं पैलः, तस्यापत्यं युवेति

---

१ – 'द्वैप्यभैमायनाः' इति पाठान्तरम्।

२ – 'त्रयोदश' इत्याद्युदात्तोऽपि (मा० सं० १८.२४)।

'अणो द्व्यचः' ( ४.१.१५६ ) इति विहितस्य फिञः 'पैलादिभ्यश्च' ( २.४.५९ ) इति लुक्। श्यापर्णशब्दो बिदादिः, तस्यापत्यं स्त्री श्यापर्णी, तदपत्यं युवा श्यापर्णेयः। बहुवचनमतन्त्रम्, तेन पैलश्यापर्णेयौ इत्यत्रापि भवति। कपिश्यापर्णेयाः। कपिरन्तोदात्तः, तस्यापत्यं बहुत्वे 'कपिबोधादाङ्गिरसे' ( ४.१.१०७ ) इत्युत्पन्नस्य यञो 'यञञोश्च' ( २.४.६४ ) इति लुक्, तेनात्र बहुत्वमाश्रीयत एव। शैतिकाक्षपाञ्चालेयाः। शितिकाक्षो नाम ऋषिः, तस्यापत्यमिति ऋष्यण्, तदपत्ये यूनि य इञ् तस्य 'ण्यक्षत्रियार्षञितो यूनि लुक्०' ( २.४.५८ ) इति लुक्। पाञ्चालस्यापत्यं स्त्री पाञ्चाली, तदपत्यं युवा पाञ्चालेयः। अत्रापि बहुवचनमविवक्षितमिति शैतिकाक्षपाञ्चालेयौ इत्यत्रापि भवति। कटुकवार्चलेयाः। कटुकस्यापत्यमिति 'अत इञ्' ( ४.१.९५ ), तस्य 'बह्वच इञः प्राच्यभरतेषु' ( २.४.६६ ) इति बहुषु लुक्। वर्चलाया अपत्यं वार्चलेयः। शाकुलशुनकाः। शकलस्यापत्यं शाकल्यः, तस्य छात्राः शाकलाः। 'कण्वादिभ्यो गोत्रे' ( ४.२.१११ ) इत्यण्। शुनकस्यापत्यमिति बिदादिभ्योञ् ( ४.१.१०४ ) तस्य बहुषु लुक्। शाकलशणका इति केचित् पठन्ति। तेषां शणकशब्दादुत्पन्नस्येञो 'बह्वच इञः प्राच्यभरतेषु' ( २.४.६६ ) इति बहुषु लुक्। शुनकधात्रेयाः। धात्र्या अपत्यं धात्रेयः। शणकबाभ्रवाः। बभ्रोरपत्यं बाभ्रवः। आर्चाभिमौद्गलाः। ऋचाभेन प्रोक्तमधीयत आर्चाभिनः। वैशम्पायनान्तेवासित्वाद् णिनिः। मुद्गलः कण्वादिः, तदपत्यस्य छात्रा मौद्गलाः। कुन्तिसुराष्ट्राः। कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे वा जनपदे द्वन्द्वोऽयम्। कुन्तिचिन्तिशब्दावन्तोदात्तौ। चिन्तिसुराष्ट्राः। कुन्तिसुराष्ट्रवत्। तण्डवतण्डाः। पचाद्यच्प्रत्ययान्तावन्तोदात्तावेतौ गर्गादिषु पठ्येते। तत्रापत्यबहुत्वे यञो लुक् क्रियते। गर्गवत्साः। अत्राप्यपत्यबहुत्वे यञो लुक्। अविमत्तकामविद्धाः। अविमत्तशब्दो नञ्स्वरेणाद्युदात्तः। द्वयोरप्येतयोरपत्येषु बहुषु इञो 'बह्वच इञः प्राच्यभरतेषु' ( २.४.६६ ) इति लुक् क्रियते। बाभ्रवशालङ्कायनाः। बभ्रोरपत्यं बाभ्रवः। 'शलङ्कु शलङ्कं च' ( ४.१.९९ ग० सू० ) इति शालङ्कायनः। बाभ्रवदानच्युताः। दानच्युतशब्दादिञो 'बह्वच०' ( २.४.६६ ) इति लुक्। कठकालापाः। कठेन प्रोक्तमधीयते कठाः। वैशम्पायनान्तेवासित्वाद् णिनिः। तस्य 'कठचरकाल्लुक्' ( ४.३.१०७ )। कलापिना प्रोक्तमधीयते कालापाः। 'कलापिनोऽण्' ( ४.३.१०८ ) इत्यण्प्रत्ययः, तस्मिन् 'इनण्यनपत्ये' ( ६.४.१६४ ) इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पीत्यादिना ( ६.४.१४४ वा० ) उपसंख्यानेन टिलोपः। कठकौथुमाः। कुथुमिना प्रोक्तमधीयत इति 'प्राग्दीव्यतोऽण्' ( ४.१.८३ )। तत्र पूर्ववत् टिलोपः। कौथुमलौकाक्षाः। लोकाक्षेण प्रोक्तमधीयते लौकाक्षाः। लोकाक्षस्य वापत्यं लौकाक्षिः। तस्य छात्रा लौकाक्षाः। स्त्रीकुमारम्। स्त्रीशब्दोऽन्तोदात्तः। मौदपैप्पलादाः। मुदस्यापत्यं मौदिः। तस्य छात्रा मौदाः। तथा पैप्पलादाः। मौदपैप्पलादा इति द्विः पठ्यते तस्य प्रयोजनं पक्षे समासान्तोदात्तत्वमेव यथा स्यादिति। वत्सजरत्। वत्सश्च जरच्च।

वत्सशब्दोऽन्तोदात्तः। सौश्रुतपार्थवाः। सुश्रुतस्य पृथोश्च छात्राः। 'प्राग्दीव्यतोऽण्' (४.१.८३)। जरामृत्यू। याज्यानुवाक्ये। यजेर्ण्यत्। 'यजयाच०' (७.३.६६) इति कुत्वाभावः। 'तित् स्वरितम्' (६.१.१८५) इत्यन्तस्वरितः। अनुवाक्येति वचेरनुपूर्वाद् ण्यत्। आचार्योपसर्जनान्तेवासिनामिह पाठः प्रपञ्चार्थः॥

## महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥ ३८ ॥

प्रकृत्या पूर्वपदमिति वर्तते, द्वन्द्व इति निवृत्तम्। महानित्येतत् पूर्वपदं व्रीहि अपराह्ण गृष्टि इष्वास जाबाल भार भारत हैलिहिल रौरव प्रवृद्ध इत्येतेपूत्तरपदेषु प्रकृतिस्वरं भवति। महाव्रीहिः। महापराह्णः। महागृष्टिः। महेष्वासः। महाजाबालः। महाभारः। महाभारतः। महाहैलिहिलः। महारौरवः। महाप्रवृद्धः। महच्छब्दोऽन्तोदात्तः। तस्य प्रतिपदोक्तो यः समासः 'सन्महत्परमोत्तमोत्कृष्टाः०' (२.१.६१) इति तत्रैव स्वरः। तेनैषां षष्ठीसमासोऽन्तोदात्त एव भवति—महतो व्रीहिः महद्व्रीहिरिति। 'कर्मधारयेऽनिष्ठा' (६.२.४६) इत्ययमपि श्रेण्यादिसमासे (२.१.५९) विधिरिति प्रवृद्धशब्द इह पठ्यते॥

## क्षुल्लकश्च वैश्वदेवे ॥ ३९ ॥

क्षुल्लक इत्येतत् पूर्वपदं महांश्च वैश्वदेव उत्तरपदे प्रकृतिस्वरं भवति। क्षुल्लकवैश्वदेवम्। महावैश्वदेवम्। क्षुधं लातीति क्षुल्लः। तस्मादज्ञातादिषु प्रागिवात् केऽन्तोदात्तः क्षुल्लकशब्दः॥

## उष्ट्रः सादिवाम्योः ॥ ४० ॥

उष्ट्रशब्दः पूर्वपदं सादिवाम्योरुत्तरपदयोः प्रकृतिस्वरं भवति। उष्ट्रसादि। उष्ट्रवामि। उष्ट्रशब्द उषेः ष्ट्रन्प्रत्ययान्तः (प० उ० ४.१६३) आद्युदात्तः। कर्मधारयोऽयं षष्ठीसमासो वा॥

## गौः सादसादिसारथिषु ॥ ४१ ॥

गोशब्दः पूर्वपदं साद सादि सारथि इत्येतेपूत्तरपदेषु प्रकृतिस्वरं भवति। गोः सादो गोसादः। गां सादयतीति वा गोसादः। गोः सादिर्गोसादिः। गोसारथिः॥

## कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ ४२ ॥

कुरुगार्हपत रिक्तगुरु असूतजरती अश्लीलदृढरूपा पारेवडवा तैतिलकद्रू पण्यकम्बल इत्येते समासास्तेषां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति। कुरूणां गार्हपतं कुरुगार्हपतम्। 'कृग्रोरुच्च' ( प० उ० १.२४ ) इति कुरुशब्दः कुप्रत्ययान्तोऽन्तोदात्तः ॥ कुरुवृज्योर्गार्हपत इति वक्तव्यम् ॥ वृजीनां गार्हपतं वृजिगार्हपतम्। वृजिशब्द आद्युदात्तः। रिक्तो गुरुः रिक्तगुरुः, रिक्तगुरुः। 'रिक्ते विभाषा' ( ६.१.२०८ ) इति पूर्वपदमाद्युदात्तमन्तोदात्तं वा। असूता जरती असूतजरती। अश्लीला दृढरूपा अश्लीलदृढरूपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीर्यस्यास्ति तत् श्लीलम्। सिध्मादेराकृतिगणत्वाद् लच्। कपिलकादित्वात् च लत्वम्। अश्लीलदृढरूपेति हि संस्थानमात्रेण शोभना निःश्रीका लावण्यविरहितोच्यते। पारेवडवेव पारेवडवा। निपातनादिवार्थे समासो विभक्त्यलोपश्च। पारशब्दो घृतादित्वाद् ( फिट् सू० २१ ) अन्तोदात्तः। तैतिलानां कद्रूः तैतिलकद्रूः। तितिलिनोऽपत्यं छात्रो वा तैतिल इत्यणन्तः। पण्यकम्बलः। पण्यशब्दो यदन्तत्वादाद्युदात्तः ॥ पण्यकम्बलः संज्ञायामिति वक्तव्यम् ॥ अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव। प्रतिपदोक्ते हि कृत्यानां समासे ( २.१.६८ ) द्वितीयाकृत्याः ( ६.२.२ ) इत्येष विहितः स्वरः[1]। दास्या भारो दासीभारः। देवहूतिः। देवजूतिः। देवसूतिः। देवनीतिः। अन्तोदात्तं पूर्वपदम्। वसुनीतिः। वसुशब्द आद्युदात्तः। 'शृस्वृस्निहित्रप्यसिवसि०' ( प० उ० १.१० ) इत्यत्र हि 'धान्ये नित्' ( प० उ० १.९ ) इति वर्तते। ओषधिः। ओषो धीयतेऽस्यामिति 'कर्मण्यधिकरणे च' ( ३.३.९३ ) इति किप्रत्ययः। ओषशब्दो घञन्तत्वादाद्युदात्तः। चन्द्रमाः। 'चन्द्रे मो डित्'[2] ( प० उ० ४.२२९ ) इत्यसिप्रत्ययान्तोऽयम्। चन्द्रशब्दस्तु रक्प्रत्ययान्तत्वादन्तोदात्तः। यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते, न च विहितम्, स सर्वो दासीभारादिषु द्रष्टव्यः॥

## चतुर्थी तदर्थे ॥ ४३ ॥

चतुर्थ्यन्तं पूर्वपदं तदर्थ उत्तरपदे तदभिधेयार्थं यत् तद्वाचिन्युत्तरपदे प्रकृतिस्वरं भवति। तदिति चतुर्थ्यन्तस्यार्थः परामृश्यते। यूपदारु। कुण्डलहिरण्यम्। यूपशब्द आद्युदात्तः। 'कुसुयुभ्यश्च' ( द० उ० ७.५ ) इत्यत्र निदिति वर्तते[3]। कुण्डलशब्दोऽपि

---

१ – ' स्वरितः ' इति सार्वत्रिको मुद्रितोऽपपाठः।
२ – ' चन्द्रे मोऽसिः ' इति बाल०। ' चन्द्रे माङो डित् ' इति न्यासः। ' चन्द्रे माङो डिच्च ' इति पद०।
३ – पूर्वत्र यूपशब्दे ( काशिका ६.२.१ ) टिप्पणी द्रष्टव्या।

'वृषादिभ्यश्चित्' ( प० उ० १.१०६ ) इति कलप्रत्ययान्तोऽन्तोदात्तः। रथंदारु। वल्ली-हिंरण्यम्। रथशब्द आद्युदात्तः। 'हनिकुषि०' ( प० उ० २.२ ) इत्यादिना क्थन्प्रत्ययः। वल्लीशब्दो ङीषः स्वरेणान्तोदात्तः। तदर्थ इति किम् ? कुबेरबलिः। प्रकृतिविकारभावे स्वरोऽयमिष्यते॥

## अर्थे ॥ ४४ ॥

चतुर्थीति वर्तते। अर्थशब्द उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति। मात्र इदं मात्रंर्थम्। पित्रंर्थम्। देवतांर्थम्। अतिंथ्यर्थम्। मातृपितृशब्दावन्तोदात्तावुणादिषु निपातितौ। देवताशब्दो लित्स्वरेण मध्योदात्तः। अतिथिरिति 'अतेरिथिन्' ( द० उ० १.४४ ) इतीथिन्प्रत्ययान्तः। तदर्थविशेषा एव दारुहिरण्यादयो भवन्ति, न त्वर्थशब्दवाच्यं सामान्यमित्यतदर्थार्थोऽयमारम्भः। केचित् पुनराहुः—ज्ञापकार्थमिदम्। एतदनेन ज्ञाप्यते—पूर्वो विधिः प्रकृतिविकृत्योः समासे भवति। अश्वघासः। श्वश्रूसुरम् इत्यत्र सत्यपि तादर्थ्ये न भवति॥

## क्ते च ॥ ४५ ॥

क्तान्ते चोत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति। गोहिंतम्। अश्वंहितम्। मनुष्यंहितम्। गोरंक्षितम्। अश्वंरक्षितम्। वनं तापुसरंक्षितम्। अश्वशब्द आद्युदात्तः। मनुष्यशब्दोऽन्तस्वरितः। परिशिष्टपूर्वपदमन्तोदात्तम्। गोभ्यो रक्षितमिति संप्रदाने चतुर्थी॥

## कर्मधारयेऽनिष्ठा ॥ ४६ ॥

कर्मधारये समासे क्तान्त उत्तरपदेऽनिष्ठान्तं पूर्वपदं प्रकृतिस्वरं भवति। श्रेणिंकृताः। ऊकंकृताः। पूगकृंताः। निधनंकृताः। श्रेणिशब्द आद्युदात्तः। ऊकपूगशब्दा-वन्तोदात्तौ। निधनशब्दोऽयं मध्योदात्तः। कर्मधारय इति किम् ? श्रेण्या कृतं श्रेणिकृतम्। अनिष्ठेति किम् ? कृताकृतम्॥

## अहीने द्वितीया ॥ ४७ ॥

अहीनवाचिनि समासे क्तान्त उत्तरपदे द्वितीयान्तं पूर्वपदं प्रकृतिस्वरं भवति। कुष्ट-श्रिंतः। त्रिशंकलपतितः। ग्रामंगतः। कष्टशब्दोऽन्तोदात्तः। त्रीणि शकलान्यस्येति त्रिशकलः। बहुव्रीहिस्वरेणाद्युदात्तः। ग्रामशब्दो नित्स्वरेणाद्युदात्तः। अहीन इति किम् ? कान्ताराततीतः। योजनातीतः ॥ द्वितीयानुपसर्ग इति वक्तव्यम्॥ इह मा भूत्—सुखप्राप्तः। दुःखप्राप्तः। सुखापन्नः। दुःखापन्नः। अन्तः 'थाथ०' ( ६.२.१४४ ) इत्यस्यापवादोऽयम्॥

## तृतीया कर्मणि ॥ ४८ ॥

कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं भवति। अहिहंतः, अहिंहतः। वज्रहंतः। महाराजहंतः। नखनिर्भिन्ना। दात्रलूना। 'आङि श्रीहनिभ्यां ह्रस्वश्च' ( प० उ० ४.१३९ ) इति अहिरन्तोदात्तो व्युत्पादितः। केचिदाद्युदात्तमिच्छन्ति। वज्रो रक्प्रत्ययान्तः। महाराजष्टच्प्रत्ययान्तः। नास्य खमस्तीति बहुव्रीहौ नकुलनख० ( ६.३.७५ ) इति नखशब्दो निपातितः। तेन 'नञ्सुभ्याम्' ( ६.२.१७२ ) इत्यन्तोदात्तः। दात्रशब्दो 'दाम्नीशस०' ( ३.२.१८२ ) इति ष्ट्रन्प्रत्ययान्तः। कर्मणीति किम् ? रथेन यातो रथयातः। गत्यर्थत्वात् कर्तरि क्तः॥

## गतिरनन्तरः ॥ ४९ ॥

क्ते कर्मणीति वर्तते। कर्मवाचिनि क्तान्त उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतः। प्रहृतः। अनन्तर इति किम् ? अभ्युद्धृतः। समुद्धृतः। समुदाहृतः। व्यवहितस्य गतेरयं स्वरो न भवति। अनन्तरे पुनरिष्यते। कारकपूर्वस्य तु सतिशिष्टत्वात् थाथादिस्वरः ( ६.२.१४४ ) एव भवति—दूरादागत इति। अनन्तरग्रहणसामर्थ्यादेव 'कृद्ग्रहणे गतिकारकपूर्वस्यापि०' ( परि० २८ ) इत्येतद् नाश्रीयते। कर्मणीत्येव—प्रकृतः कटं देवदत्तः। थाथादिस्वरापवादो योगः॥

## तादौ च निति कृत्यतौ ॥ ५० ॥

तकारादौ च तुशब्दवर्जिते निति कृति परतो गतिरनन्तरः प्रकृतिस्वरो भवति। प्रकर्ता। प्रकर्तुम्। प्रकृतिः। प्रकर्तेति तृन्नन्तः। कृत्स्वरबाधनार्थं वचनम्। तादाविति किम् ? प्रजल्पाकः। नितीति किम् ? प्रकर्ता। तृजन्तः। कृद्ग्रहणमुपदेशे ताद्यर्थम्। इहापि यथा स्यात्—प्रलपिता, प्रलपितुम् इति। अताविति किम् ? आगन्तुः॥

## तवै चान्तश्च युगपत् ॥ ५१ ॥

तवैप्रत्ययस्यान्त उदात्तो भवति गतिश्चानन्तरः प्रकृतिस्वर इति एतदुभयं युगपद् भवति। अन्वेतवै ( तै० सं० १.४.४५.१ )। परिस्तरितवै। परिपातवै। तस्मात् पिता नाभिचरितवै[1]। उपसर्गा आद्युदात्ताः, अभिवर्जम् ( फिट् सू० ८०, ८१ ) इत्यभिरन्तोदात्तः। कृत्स्वरापवादो योगः॥

---

१ – 'नातिचरितवै' ( मै० सं० १.१०.१० ), तस्मादग्निचिन्नाभिचरितवै ( तै० सं० ५.६.३.१ )।

## अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ५२ ॥

अनिगन्तो गतिः प्रकृतिस्वरो भवत्यञ्चतौ वप्रत्यये परतः। प्राङ्, प्राञ्चौ, प्राञ्चः। प्रांङ् , प्रांञ्चौ, प्रांञ्चः। 'स्वरितो वानुदात्ते पदादौ' ( ८.२.६ ) इत्ययमेकादेश उदात्तः स्वरितो वा। परांङ्, परांञ्चौ, परांञ्चः ( तै० सं० ३.१.१०.३ )। अनिगन्त इति किम् ? प्रत्यङ् , प्रत्यञ्चौ, प्रत्यञ्चः। कृदुत्तरपदप्रकृतिस्वर इह भवति। वप्रत्यय इति किम्? उदञ्चनः। चोरनिगन्तोऽञ्चतौ वप्रत्यय इत्येष स्वरो भवति विप्रतिषेधेन। परांचः। परांचा ॥

## न्यधी च ॥ ५३ ॥

नि अधि इत्येतौ चाञ्चतौ वप्रत्यये परतः प्रकृतिस्वरौ भवतः। न्यंङ्, न्यंञ्चौ, न्यंञ्चः। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( ८.२.४ ) इत्यञ्चतेरकारः स्वरितः। अध्यंङ्, अध्यंञ्चौ, अध्यंञ्चः। अधींचः। अधींचा ॥

## ईषदन्यतरस्याम् ॥ ५४ ॥

ईषदित्येतत् पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। ईषत्कंडारः, ईषत्कडारः। ईषत्पिंङ्गलः, ईषत्पिङ्गलः। ईषदित्ययमन्तोदात्तः। ईषद्भेदं इत्येवमादौ कृत्स्वर एव भवति ॥

## हिरण्यपरिमाणं धने ॥ ५५ ॥

हिरण्यपरिमाणवाचि पूर्वपदं धनशब्द उत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। द्विसुवर्णधंनम्, द्विसुवर्णधनम्। द्वौ सुवर्णौ परिमाणमस्य द्विसुवर्णम्, तदेव धनमिति कर्मधारयः। बहुव्रीहावपि परत्वाद् विकल्प एव भवति। द्विसुवर्णधंनः, द्विसुवर्णधनः। हिरण्यग्रहणं किम् ? प्रस्थधनम्। परिमाणग्रहणं किम् ? काञ्चनधनम्। धन इति किम्? निष्कमाला ॥

## प्रथमोऽचिरोपसंपत्तौ ॥ ५६ ॥

प्रथमशब्दः पूर्वपदमचिरोपसंपत्तौ गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति। अचिरोपसंपत्तिरचिरोपश्लेषोऽभिनवत्वम्। प्रथमवैयाकरणः, प्रथमवैयाकरणः। अभिनव-वैयाकरणः, संप्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः। प्रथमशब्दः 'प्रथेरमच्' ( प० उ० ५.६८ ) इति चित्त्वादन्तोदात्तः। अचिरोपसंपत्ताविति किम् ? प्रथमवैयाकरणः। वैयाकरणा-नामाद्यो मुख्यो वा यः, स नित्यमन्तोदात्त एव ॥

## कतरकतमौ कर्मधारये ॥ ५७ ॥

कतरशब्दः कतमशब्दश्च पूर्वपदं कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। कुतरकंठः, कुतरकुठः। कुतमकंठः, कुतमकुठः। कर्मधारयग्रहणमुत्तरार्थम्, इह तु प्रतिपदोक्तत्वादेव सिद्धम्॥

## आर्यो ब्राह्मणकुमारयोः ॥ ५८ ॥

आर्यशब्दः पूर्वपदं ब्राह्मणकुमारशब्दयोः[1] कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। आर्यब्राह्मणः, आर्यब्राह्मणः। आर्यकुमारः, आर्यकुमारः। आर्यशब्दो ण्यदन्तोऽन्तस्वरितः। आर्य इति किम् ? परमब्राह्मणः। परमकुमारः। ब्राह्मणकुमारयोरिति किम्? आर्यक्षत्रियः। कर्मधारय इत्येव—आर्यस्य ब्राह्मणो आर्यब्राह्मणः॥

## राजा च ॥ ५९ ॥

राजा च पूर्वपदं ब्राह्मणकुमारयोरुत्तरपदयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। राजब्राह्मणः, राजब्राह्मणः। राजकुमारः, राजकुमारः। कर्मधारय इत्येव—राज्ञो ब्राह्मणो राजब्राह्मणः। राजकुमारः। पृथग्योगकरणमुत्तरार्थम्॥

## षष्ठी प्रत्येनसि ॥ ६० ॥

राजेति वर्तते, अन्यतरस्यामिति च। षष्ठ्यन्तो राजशब्दः पूर्वपदं प्रत्येनस्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। राज्ञः प्रत्येना राजप्रत्येनाः, राजप्रत्येनाः। षष्ठीति किम् ? राजा चासौ प्रत्येनाश्च राजप्रत्येनाः॥

## क्ते नित्यार्थे ॥ ६१ ॥

क्तान्त उत्तरपदे नित्यार्थे समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। नित्यंप्रहसितः, नित्यप्रहसितः। सततप्रंहसितः, सततप्रहसितः। 'कालाः' ( २.१.२८ ) इति द्वितीयासमासोऽयम्। नित्यशब्दः 'त्यब्नेर्ध्रुवे' ( ४.२.१०४ वा० ) इति त्यबन्त आद्युदात्तः। सततम् इति यदा भावे क्तस्तदा थाथादिस्वरेणान्तोदात्तः। नित्यार्थ इति किम् ? मुहूर्तप्रहसितः॥

---

१ - 'शब्द' इति नास्ति है०।

## ग्रामः शिल्पिनि ॥ ६२ ॥

ग्रामशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। ग्रामंनापितः, ग्रामनापितः। ग्रामंकुलालः, ग्रामकुलालः। ग्रामशब्द आद्युदात्तः। ग्राम इति किम्? परमनापितः। शिल्पिनीति किम्? ग्रामरथ्या॥

## राजा च प्रशंसायाम् ॥ ६३ ॥

राजशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदे प्रशंसायां गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति। राजंनापितः, राजनापितः। राजंकुलालः, राजकुलालः। कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा। षष्ठीसमासे च राजयोग्यतया तस्य। राजेति किम्? परमनापितः। प्रशंसायामिति किम्? राजनापितः। शिल्पिनीत्येव—राजहस्ती॥

## आदिरुदात्तः ॥ ६४ ॥

आदिरुदात्त इत्येतदधिकृतम्। इत उत्तरं यद् वक्ष्यामस्तत्र पूर्वपदस्यादिरुदात्तो भवतीत्येवं तद् वेदितव्यम्। वक्ष्यति—'सप्तमीहारिणौ धर्म्येऽहरणे' ( ६.२.६५ ) इति। स्तूपेंशाणः। मुकुंटेकार्षापणम्। याज्ञिंकाश्वः। वैयांकरणहस्ती। दृषंदिमाषकः। आदिरिति प्रागन्ताधिकारात् ( ६.२.९२ )। उदात्त इति 'प्रकृत्या भगालम्' ( ६.२.१३७ ) इति यावत्॥

## सप्तमीहारिणौ धर्म्येऽहरणे ॥ ६५ ॥

सप्तम्यन्तं हारिवाचि च पूर्वपदं धर्म्यवाचिनि हरणशब्दादन्यस्मिन्नुत्तरपद आद्युदात्तं भवति। हारीति देयं यः स्वीकरोति सोऽभिधीयते। धर्म्यमित्याचारनियतं देयमुच्यते, धर्मो ह्यनुवृत्त आचारस्तस्मादनपेतं तेन वा प्राप्यमिति। स्तूपेंशाणः। मुकुंटेकार्षापणम्। हलेंद्विपदिका। हलेंत्रिपदिका। दृषंदिमाषकः। 'संज्ञायाम्' ( २.१.४४ ) इति सप्तमीसमासः, 'कारनाम्नि च०' ( ६.३.१० ) इति विभक्तेरलुक्। हारिणि—याज्ञिंकाश्वः। वैयांकरणहस्ती। मातुंलाश्वः। पितृंव्यगवः। क्वचिदयमाचारो व्यवस्थितः—स्तूपादिषु शाणादि दातव्यम्, याज्ञिकादीनामश्वादीति। धर्म्य इति किम्? स्तम्बेरमः। कर्मकरवर्धितकः। अहरण इति किम्? वाडवहरणम्। वडवाया अयं वाडवः। तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद् दीयते हरणमिति तदुच्यते। परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेनेत्येतदहरण इत्यनेन ज्ञाप्यते, तेन वाडंवहार्यम् इति हारिस्वरः सिद्धो भवति॥

## युक्ते च ॥ ६६ ॥

युक्तवाचिनि च समासे पूर्वपदमाद्युदात्तं भवति। गोबल्लवः। अश्वबल्लवः। गोमणिन्दः। अश्वमणिन्दः। गोसंख्यः। अश्वसंख्यः। युक्त इति समाहितः, कर्तव्ये तत्परो यः स उच्यते॥

## विभाषाध्यक्षे ॥ ६७ ॥

अध्यक्षशब्द उत्तरपदे विभाषा पूर्वपदमाद्युदात्तं भवति। गवाध्यक्षः, गवाध्यक्षः। अश्वाध्यक्षः, अश्वाध्यक्षः॥

## पापं च शिल्पिनि ॥ ६८ ॥

पापशब्दः शिल्पिवाचिन्युत्तरपदे विभाषाद्युदात्तो भवति। पापनापितः, पापनापितः। पापकुलालः, पापकुलालः। 'पापाणके कुत्सितैः' (२.१.५४) इति पापशब्दस्य प्रतिपदोक्तः समानाधिकरणसमास इति षष्ठीसमासे न भवति। पापस्य नापितः पापनापित इति॥

## गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ ६९ ॥

गोत्रवाचिन्यन्तेवासिवाचिनि चोत्तरपदे माणवब्राह्मणयोश्च क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं भवति। जङ्घावात्स्यः। यो जङ्घादानं ददान्यहमिति वात्स्यः संपद्यते, स जङ्घावात्स्य इति क्षिप्यते। भार्यासौश्रुतः। सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः। वशाब्रह्मकृतेयः। ब्रह्मकृतशब्दः शुभ्रादिषु पठ्यते। गोत्र। अन्तेवासि—कुमारीदाक्षाः। कम्बलचारायणीयाः। घृतरौढीयाः। ओदनपाणिनीयाः। कुमार्यादिलाभकामा ये दाक्ष्यादिभिः[1] प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त एवं क्षिप्यन्ते। अन्तेवासि। माणव—भिक्षामाणवः। भिक्षां लप्स्येऽहमिति माणवो भवति। माणव। ब्राह्मण—दासीब्राह्मणः। वृषलीब्राह्मणः। भयब्राह्मणः। यो भयेन ब्राह्मणः संपद्यते। अत्र यस्यान्यत् समासलक्षणं नास्ति, सुप्सुपेत्येव तत्र समासः कर्तव्यः। गोत्रादिष्विति किम्? दासीश्रोत्रियः। क्षेप इति किम्? महाब्राह्मणः॥

## अङ्गानि मैरेये ॥ ७० ॥

मैरेयशब्द उत्तरपदे तदङ्गवाचीनि पूर्वपदान्याद्युदात्तानि भवन्ति। गुडमैरेयः।

---

१ – 'दाक्षादिभिः' इति मुद्रितेषु।

मधुमैरेयः। मद्यविशेषो मैरेयः, तस्य गुडविकारस्य गुडोऽङ्गं भवति, मधुविकारस्य तस्य मध्वङ्गम्[1]। अङ्गानीति किम् ? परममैरेयः। मैरेय इति किम् ? पुष्पासवः। फलासवः॥

## भक्ताख्यास्तदर्थेषु ॥ ७१ ॥

भक्तमन्नम्, तदाख्यास्तद्वाचिनः शब्दाः, तदर्थेपूत्तरपदेषु आद्युदात्ता भवन्ति। भिक्षाकंसः। श्राणाकंसः। भाजीकंसः। भिक्षादयोऽन्नवचनाः। भक्ताख्या इति किम् ? समाशशालयः। समशनं समाश इति क्रियामात्रमुच्यते, न द्रव्यम्। तदर्थेष्विति किम् ? भिक्षाप्रियः। बहुव्रीहिरयमत्र पूर्वपदमन्तोदात्तम्॥

## गोबिडालसिंहसैन्धवेषूपमाने ॥ ७२ ॥

गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं भवति। धान्यगवः। हिरण्यगवः[2]। भिक्षाबिडालः। श्राणाबिडालः[3]। तृणसिंहः। काष्ठसिंहः[3]। सक्तुसैन्धवः। पानसैन्धवः। धान्यं गौरिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभिः०' (२.१.५६) इति समासः। उपमानार्थोऽपि यथासंभवं यथाप्रसिद्धि च योजयितव्यः। गवाकृत्या संनिवेशितं धान्यं धान्यगवशब्देनोच्यते। उपमान इति किम् ? परमसिंहः॥

## अके जीविकार्थे ॥ ७३ ॥

अकप्रत्ययान्त उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदमाद्युदात्तं भवति। दन्तलेखकः। नखलेखकः। अवस्करशोधकः। रमणीयकारकः। दन्तलेखनादिभिर्येषां जीविका, त एवमुच्यन्ते। 'नित्यं क्रीडाजीविकयोः' (२.२.१७) इति समासः। अक इति किम् ? रमणीयकर्ता। जीविकार्थ इति किम् ? इक्षुभक्षिकां मे धारयसि॥

## प्राचां क्रीडायाम् ॥ ७४ ॥

प्राग्देशवर्तिनां या क्रीडा तद्वाचिनि समासेऽकप्रत्ययान्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति। उद्दालकपुष्पभञ्जिका। वीरणपुष्पप्रचायिका। शालभञ्जिका। तालभञ्जिका। 'संज्ञायाम्' (३.३.१०९) इति ण्वुल्, 'नित्यं क्रीडाजीविकयोः' (२.२.१७) इति षष्ठीसमासः। प्राचामिति किम् ? जीवपुत्रप्रचायिका। इयमुदीचां क्रीडा। क्रीडायामिति किम् ? तव पुष्पप्रचायिका। पर्याये ण्वुच्प्रत्ययो भवति[4]॥

---

१ – 'मधुनो मधु' इति बाल०। २ – 'हिरण्यगवः' इति नास्ति है०।

३ – यथान्यासम्। ४ – इदं सन्दिग्धम्, न्यासेऽव्याख्यातत्वात्।

## अणि नियुक्ते ॥ ७५ ॥

अणन्त उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तं भवति। छत्रंधारः। तूणींरधारः। कमंण्डलुग्राहः। भृङ्गांरधारः। नियुक्तोऽधिकृतः, स च कस्मिंश्चित् कर्तव्ये तत्परो न भवतीति नियुक्ते ( ६.२.६६ ) इत्यनेन न सिध्यति। नियुक्त इति किम् ? काण्डलावः। शरलावः॥

## शिल्पिनि चाकृञः ॥ ७६ ॥

शिल्पिवाचिनि समासेऽणन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति, स चेदण् कृञो न भवति। तन्तुंवायः। तुन्नंवायः। वालंवायः। शिल्पिनीति किम् ? काण्डलावः[1]। अकृञ इति किम् ? कुम्भकारः। अयस्कारः॥

## संज्ञायां च ॥ ७७ ॥

संज्ञायां विषयेऽणन्त उत्तरपदेऽकृञः पूर्वपदमाद्युदात्तं भवति। तन्तुंवायो नाम कीटः। वालंवायो नाम पर्वतः। अकृञ इत्येव—रथकारो नाम ब्राह्मणः॥

## गोतन्तियवं पाले ॥ ७८ ॥

गो तन्ति यव इत्येतानि पूर्वपदानि पालशब्द उत्तरपद आद्युदात्तानि भवन्ति। गोपांलः। तन्तिंपालः। यवंपालः। अनियुक्तार्थ आरम्भः। गोतन्तियवमिति किम् ? वत्सपालः। पाल इति किम् ? गोरक्षः॥

## णिनि ॥ ७९ ॥

णिनन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति। पुष्पंहारी। फलंहारी। पर्णंहारी॥

## उपमानं शब्दार्थप्रकृतावेव ॥ ८० ॥

उपमानवाचि पूर्वपदं शब्दार्थप्रकृतावेव णिनन्त उत्तरपद आद्युदात्तं भवति। उपमानं नियम्यते। उष्ट्रंक्रोशी। ध्वाङ्क्षंरावी। खरंनादी। उपमानग्रहणमस्य पूर्वस्य च योगस्य विषयविभागार्थम्। शब्दार्थप्रकृताविति किम् ? वृकवञ्ची। वृकप्रेक्षी। प्रकृतिग्रहणं किम् ? प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्था भवति, तत्रैव यथा स्यात्। इह मा भूत्—गर्दभोच्चारी, कोकिलाभिव्याहारी इति। एवकारकरणमुपमानावधारणार्थम्। शब्दार्थ-

---

१ - ' शरलावः ' इत्यधिकं है०।

प्रकृतौ त्वनुपमानमुपमानं चाद्युदात्तं भवति। सिंहविनर्दी। पुष्कलजल्पी॥

## युक्तारोह्यादयश्च ॥ ८१ ॥

युक्तारोह्यादयः समासा आद्युदात्ता भवन्ति। युक्तारोही। आगतरोही। आगतयोधी। आगतवञ्ची। आगतनर्दी। आगतप्रहारी। एते णिन्नन्ता 'णिनि' (६.२.७९) इत्यस्यैवोदाहरणार्थं पठ्यन्ते। पूर्वोत्तरपदनियमार्था इति केचित्। इह मा भूत्—वृक्षारोही, युक्ताध्यायी इति। आगतमत्स्या। क्षीरहोता। भगिनीभर्ता। याजकादित्वात् षष्ठीसमासावेतौ। ग्रामगोधुक्। अश्वत्रिरात्रः। गर्गत्रिरात्रः। व्युष्टत्रिरात्रः। शणपादः। समपादः। षष्ठीसमासा एते। एकशितिपात्। एकः शितिः पादोऽस्येति त्रिपदो बहुव्रीहिः। तत्रैकशितिशब्दः 'तद्धितार्थोत्तरपद०' (२.१.५१) इति तत्पुरुषसंज्ञः, तस्य निमित्तिस्वरबलीयस्त्वाद् (महाभाष्य १.३७३) अन्तोदात्तत्वं प्राप्तमित्याद्युदात्तत्वं विधीयते। एवमपि नार्थ एतेन, 'इगन्त० द्विगौ' (६.२.२९) इति सिद्धत्वात्। एवं तर्हि ज्ञापकार्थम्, एतज् ज्ञापयति—शित्यन्तस्योत्तरपदे द्विगुस्वरो न भवतीति। तेन द्विशितिपाद् इत्यत्र तिशब्द उदात्तो भवति। निमित्तिस्वरबलीयस्त्वस्याप्येकशितिपात्स्वरवचनमेव ज्ञापकं वर्णयन्ति (महाभाष्य १.३७३)। पात्रेसमितादयश्च (ग० सू० १७४)[1]। 'पात्रेसमितादयश्च' (२.१.४८) युक्तारोह्यादयस्ततस्तेऽप्याद्युदात्ता भवन्ति॥

## दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ८२ ॥

दीर्घान्तं पूर्वपदं काश तुष भ्राष्ट्र वट इत्येतानि च ज उत्तरपद आद्युदात्तानि भवन्ति। कुटीजः। शमीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः॥

## अन्त्यात् पूर्वं बह्वचः ॥ ८३ ॥

ज उत्तरपदे बह्वचः पूर्वपदस्यान्त्यात् पूर्वमुदात्तं भवति। उपसरजः। मन्दुरजः। आमलकीजः। वडवाजः। बह्वच इति किम्? दग्धजानि तृणानि॥

## ग्रामेऽनिवसन्तः ॥ ८४ ॥

ग्रामशब्द उत्तरपदे पूर्वपदमाद्युदात्तं भवति, न चेद् निवसद्वाचि भवति। मल्लग्रामः। वणिग्ग्रामः। ग्रामशब्दोऽत्र समूहवाची। देवग्रामः। देवस्वामिक इत्यर्थः। अनिवसन्त इति किम्? दाक्षिग्रामः। माहकिग्रामः। दाक्ष्यादयो निवसन्ति यस्मिन् ग्रामे, स तेषामिति व्यपदिश्यते॥

---

१ - इदं गणसूत्रं मुद्रितेषु त्यक्तम्।

## घोषादिषु च ॥ ८५ ॥

घोषादिषु चोत्तरपदेषु पूर्वपदमाद्युदात्तं भवति। दाक्षिघोषः। दाक्षिकटः। दाक्षिपल्वलः। दाक्षिह्रदः। दाक्षिबदरी। दाक्षिपिङ्गलः। दाक्षिपिशङ्गः। दाक्षिशालः। दाक्षिरक्षा। दाक्षिशिल्पी। दाक्ष्यश्वत्थः। कुन्दतृणम्। दाक्षिशाल्मली। आश्रममुनिः। शाल्मलिमुनिः। दाक्षिप्रेक्षा[1]। दाक्षिकूटः। यान्यत्र निवासनामधेयानि तेषु निवसद्वाचीन्यपि पूर्वपदान्याद्युदात्तानि भवन्ति। अनिवसन्त इति नानुवर्तयन्ति केचित्। अपरे पुनरनुवर्तयन्ति॥

## छात्र्यादयः शालायाम् ॥ ८६ ॥

शालायामुत्तरपदे छात्र्यादय आद्युदात्ता भवन्ति। छात्रिशाला। ऐलिशाला। भाण्डिशाला॥ छात्रि। ऐलि। भाण्डि। व्याडि। आपिशलि। आखण्डि। आपारि। गौमि। यदा शालान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, तदापि 'तत्पुरुषे शालायां नपुंसके' (६.२.१२३) इत्येतस्मात् पूर्वविप्रतिषेधेन पूर्वपदमाद्युदात्तं भवति। छात्रिशालम्। ऐलिशालम्॥

## प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ ८७ ॥

प्रस्थशब्द उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं भवति। इन्द्रप्रस्थः। कुण्डप्रस्थः। ह्रदप्रस्थः। सुवर्णप्रस्थः। अवृद्धमिति किम्? दाक्षिप्रस्थः। माहकिप्रस्थः। अकर्क्यादीनामिति किम्? कर्कीप्रस्थः। मघीप्रस्थः॥ कर्की। मघी। मकरी। कर्कन्धू। शमी। करीर। कटुक। कुरल[2]। बदर। कर्क्यादिः॥

## मालादीनां च ॥ ८८ ॥

प्रस्थ इति वर्तते। प्रस्थ उत्तरपदे मालादीनामादिरुदात्तो भवति। मालाप्रस्थः। शालाप्रस्थः॥ माला। शाला। शोणा। द्राक्षा। क्षौमा। क्षामा। काञ्ची। एक। काम। मालादिः। वृद्धार्थ आरम्भः। एकशोणाशब्दयोः 'एङ् प्राचां देशे' (१.१.७५) इति वृद्धसंज्ञा॥

## अमहन्नवं नगरेऽनुदीचाम् ॥ ८९ ॥

नगरशब्द उत्तरपदे महन्नवशब्दवर्जितं पूर्वपदमाद्युदात्तं भवति, तत् चेदुदीचां न

---

१ - 'दाक्षिपुंसा' इति बाल०। २ - 'कुवल' इति पाठान्तरम्।

भवति। सुह्मनगरम्। पुण्ड्रनगरम्। अमहन्नवमिति किम्? महानगरम्। नवनगरम्। अनुदीचामिति किम्? नदीनगरम्[1]। कान्तीनगरम्॥

## अर्मे चावर्णं द्व्यच् त्र्यच् ॥ ९० ॥

अर्मशब्द उत्तरपदे द्व्यच् त्र्यच् पूर्वपदमवर्णान्तमाद्युदात्तं भवति। दत्तार्मम्। गुप्तार्मम्। कुक्कुटार्मम्। वायसार्मम्। अवर्णमिति किम्? बृहदर्मम्। द्व्यच्त्र्यजिति किम्? कपिञ्जलार्मम्। अमहन्नवमित्येव—महार्मम्। नवार्मम्॥

## न भूताधिकसंजीवमद्राश्मकज्जलम् ॥ ९१ ॥

भूत अधिक संजीव मद्र अश्मन् कज्जल इत्येतानि पूर्वपदानि अर्मशब्द उत्तरपदे नाद्युदात्तानि भवन्ति। भूतार्मम्। अधिकार्मम्। संजीवार्मम्। मद्राश्मग्रहणं संघात-विगृहीतार्थम्। मद्रार्मम्। अश्मार्मम्। मद्राश्मार्मम्। कज्जलार्मम्। समासान्तोदात्त-त्वमेवात्र भवति ॥ आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्॥ दिवोदासं वध्र्यश्वाय दाशुषे (ऋ० ६.६१.१)॥

## अन्तः ॥ ९२ ॥

अन्त इत्यधिकृतम्। इत उत्तरं यद् वक्ष्यामस्तत्र पूर्वपदस्यान्त उदात्तो भवतीत्येवं वेदितव्यम्। वक्ष्यति—'सर्वं गुणकार्त्स्न्ये' (६.२.९३)—सर्वश्वेतः। सर्वकृष्णः। प्राग् 'उत्तरपदादिः' (६.२.१११) इत्येतस्मादयमधिकारो वेदितव्यः॥

## सर्वं गुणकार्त्स्न्ये ॥ ९३ ॥

सर्वशब्दः पूर्वपदं गुणकार्त्स्न्ये वर्तमानमन्तोदात्तं भवति। सर्वश्वेतः। सर्वकृष्णः। सर्वमहान्। सर्वमिति किम्? परमश्वेतः। आश्रयव्याप्त्या परमत्वं श्वेतत्वस्येति गुणकार्त्स्न्ये वर्तते। गुणग्रहणं किम्? सर्वसौवर्णः। सर्वराजतः। कार्त्स्न्य इति किम्? सर्वेषां श्वेततरः सर्वश्वेतः। 'गुणात्तरेण समासस्तरलोपश्च वक्तव्यः' (२.२.९ वा०) इत्येवमत्र समासस्तरब्लोपश्च॥

## संज्ञायां गिरिनिकाययोः ॥ ९४ ॥

संज्ञायां विषये गिरि निकाय इत्येतयोरुत्तरपदयोः पूर्वपदमन्तोदात्तं भवति। अञ्जनागिरिः। भञ्जनागिरिः। निकाये—शापिण्डिनिकायः। मौण्डिनिकायः। चिखि-

१ – 'नान्दीनगरम्' इति बाल०।

ल्लिनिंकायः। संज्ञायामिति किम् ? परमगिरिः। ब्राह्मणनिकायः॥

## कुमार्यां वयसि ॥ ९५ ॥

कुमार्यामुत्तरपदे वयसि गम्यमाने पूर्वपदमन्तोदात्तं भवति। वृद्धकुमारी। जरत्कुमारी। कुमारीशब्दः पुंसा सहासंप्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिर्वयोविशेषवचनैः समानाधिकरणो भवति। तच्च वय इह गृह्यते, न कुमारत्वमेव। वयसीति किम् ? परमकुमारी॥

## उदकेऽकेवले ॥ ९६ ॥

अकेवलं मिश्रम्, तद्वाचिनि समास उदकशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति। गुडमिश्रमुदकं गुडोदंकम् , गुडोंदकम्। तिलोदंकम् , तिलोंदकम्। स्वरे कृत एकादेशः 'स्वरितो वानुदात्ते पदादौ' (८.२.६) इति पक्षे स्वरितो भवति। अकेवल इति किम् ? शीतोदकम्। उष्णोदकम्॥

## द्विगौ क्रतौ ॥ ९७ ॥

द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं भवति। गर्गत्रिंरात्रः। चरकत्रिंरात्रः। कुसुरविन्दसंप्तरात्रः। गर्गाणां त्रिरात्रो गर्गत्रिंरात्रः। द्विगाविति किम् ? अतिरात्रः। अचश्चित्त्वादन्तोदात्तः। क्रताविति किम् ? बिल्वसप्तरात्रः। बिल्वशतस्य बिल्वहोमस्य वा सप्तरात्रो बिल्वसप्तरात्रः॥

## सभायां नपुंसके ॥ ९८ ॥

सभाशब्द उत्तरपदे नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तं भवति। गोपालसंभम्। पशुपालसंभम्। स्त्रीसंभम्। दासीसंभम्। सभायामिति किम् ? ब्राह्मणसेनम्। नपुंसक इति[1] किम् ? राजसभा। ब्राह्मणसभा। सभायां प्रतिपदोक्तमिह नपुंसकलिङ्गं गृह्यत इति रमणीयसभं ब्राह्मणकुलम् इत्यत्र न भवति॥

## पुरे प्राचाम् ॥ ९९ ॥

पुरशब्द उत्तरपदे प्राचां देशे पूर्वपदमन्तोदात्तं भवति। ललाटपुरम्। काञ्चीपुंरम्। शिवदत्तपुंरम्। कार्णिपुंरम्। नार्मपुंरम्। प्राचामिति किम् ? शिवपुरम्॥

---

१ – 'नपुंसकमिति' इति मुद्रितेषु।

## अरिष्टगौडपूर्वे च ॥ १०० ॥

अरिष्ट गौड इत्येवंपूर्वे समासे पुरशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति। अरिष्टपुरम्। गौडपुरम्। पूर्वग्रहणं किम् ? इहापि यथा स्यात्—अरिष्टश्रितपुरम्। गौडभृत्यपुरम्॥

## न हास्तिनफलकमार्देयाः ॥ १०१ ॥

हास्तिन फलक मार्देय इत्येतानि पूर्वपदानि पुरशब्द उत्तरपदे नान्तोदात्तानि भवन्ति। 'पुरे प्राचाम्' (६.२.९९) इति प्राप्तिः प्रतिषिध्यते। हास्तिनपुरम्। फलकपुरम्। मार्देयपुरम्। मृदोरपत्यं मार्देयः। शुभ्रादित्वाद् ढक् (४.१.१२३)॥

## कुसूलकूपकुम्भशालं बिले ॥ १०२ ॥

कुसूल कूप कुम्भ शाला इत्येतानि पूर्वपदानि बिलशब्द उत्तरपदेऽन्तोदात्तानि भवन्ति। कुसूलबिलम्। कूपबिलम्। कुम्भबिलम्। शालाबिलम्। कुसूलादिग्रहणं किम् ? सर्पबिलम्। बिल इति किम् ? कुसूलस्वामी॥

## दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥ १०३ ॥

दिक्शब्दाः पूर्वपदान्यन्तोदात्तानि भवन्ति ग्रामजनपदाख्यानवाचिषूत्तरपदेषु, चानराटशब्दे च। पूर्वेषुकामशमी, पूर्वेषुकामशमी। अपरेषुकामशमी, अपरेषुकामशमी। पूर्वकृष्णमृत्तिका। अपरकृष्णमृत्तिका। जनपद—पूर्वपञ्चालाः। अपरपञ्चालाः। आख्यान—पूर्वाधिरामम्, पूर्वाधिरामम्। पूर्वयायातम्। अपरयायातम्। अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम्। तथा यायातम्। चानराट—पूर्वचानराटम्। अपरचानराटम्। शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम्॥

## आचार्योपसर्जनश्चान्तेवासिनि ॥ १०४ ॥

आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपदे दिक्शब्दा अन्तोदात्ता भवन्ति। पूर्वपाणिनीयाः। अपरपाणिनीयाः। पूर्वकाशकृत्स्नाः। अपरकाशकृत्स्नाः। आचार्योपसर्जन इति किम् ? पूर्वशिष्याः। अन्तेवासिनीति किम् ? पूर्वपाणिनीयं शास्त्रम्॥

## उत्तरपदवृद्धौ सर्वं च ॥ १०५ ॥

'उत्तरपदस्य' (७.३.१०) इत्यधिकृत्य या विहिता वृद्धिः, तद्वत्युत्तरपदे सर्वशब्दो दिक्शब्दाश्चान्तोदात्ता भवन्ति। सर्वपाञ्चालकः। पूर्वपाञ्चालकः। उत्तरपाञ्चालकः।

'सुसर्वार्धदिक्शब्देभ्यो जनपदस्य' ( महाभाष्य १.१८६ ) इति तदन्तविधिना जनपदलक्षणो ( ४.२.१२५ ) वुञ्प्रत्ययः। 'सुसर्वार्धाज्जनपदस्य' ( ७.३.१२ ) 'दिशोऽमद्राणाम्' ( ७.३.१३ ) इति चोत्तरपदवृद्धिः। अधिकारलक्षणादिह न भवति—सुर्वभासः,[1] सुर्वकारक इति ॥

## बहुव्रीहौ विश्वं संज्ञायाम् ॥ १०६ ॥

बहुव्रीहौ समासे विश्वशब्दः पूर्वपदं संज्ञायां विषयेऽन्तोदात्तं भवति। विश्वदेवः। विश्वयशाः। विश्वमहान्। पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तम्। बहुव्रीहाविति किम्? विश्वे च ते देवा विश्वदेवाः। संज्ञायामिति किम् ? विश्वे देवा अस्य विश्वदेवः। विश्वमित्रः[2] विश्वाजिन इत्यत्र 'संज्ञायां मित्राजिनयोः' ( ६.२.१६५ ) इत्येतद् भवति परत्वात्। बहुव्रीहावित्येतदधिक्रियते प्रागव्ययीभावसंज्ञानात् ( ६.२.१२१ )॥

## उदराश्वेषुषु ॥ १०७ ॥

उदर अश्व इषु इत्येतेपूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति। वृकोदरः। दामोदरः। हर्यश्वः[3]। यौवनाश्वः। सुवर्णपुङ्खेषुः। महेषुः॥

## क्षेपे ॥ १०८ ॥

क्षेपे गम्यमान उदरादिषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये[4] पूर्वपदमन्तोदात्तं भवति। कुण्डोदरः। घटोदरः। कटुकाश्वः। स्पन्दिताश्वः। अनिघातेषुः। चलाचलेषुः। अनुदरः, सूदर इत्यत्र 'नञ्सुभ्याम्' ( ६.२.१७२ ) इत्येतद् भवति विप्रतिषेधेन॥

## नदी बन्धुनि ॥ १०९ ॥

बहुव्रीहौ समासे बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदमन्तोदात्तं भवति। गार्गीबन्धुः। वात्सीबन्धुः। नदीति किम् ? ब्रह्मबन्धुः। ब्रह्मशब्द आद्युदात्तः। बन्धुनीति किम् ? गार्गीप्रियः॥

## निष्ठोपसर्गपूर्वमन्यतरस्याम् ॥ ११० ॥

---

१ – 'सर्वमासः' इत्यपपाठो मुद्रितेषु। २ – 'विश्वामित्रः' इत्यपपाठो मुद्रितेषु।
३ – 'हर्यश्वाय' ( तै० ब्रा० २.५.८.३ ) इति क्षेपाभावे दर्शनाद् 'उदराश्वेषुषु क्षेपे' इत्येको योग इत्याहुः।
४ – 'संज्ञायां विषये' इति पाठोऽत्र न स्यात्, योगविभागकरणसामर्थ्यात्।

बहुव्रीहौ समासे निष्ठान्तमुपसर्गपूर्वं पूर्वपदमन्यतरस्यामन्तोदात्तं भवति। प्रधौतमुखः, प्रधौतमुखः, प्रधौतमुखः। प्रक्षालितपादः, प्रक्षालितपादः। यदि मुखशब्दः स्वाङ्गवाची तदा पक्षे 'मुखं स्वाङ्गम्' ( ६.२.१६७ ) इत्येतद् भवति, न चेत् पूर्वपदप्रकृतिस्वरत्वेन 'गतिरनन्तरः' ( ६.२.४९ ) इत्येतद् भवति। निष्ठेति किम् ? प्रसेचकमुखः। उपसर्गपूर्वमिति किम् ? शुष्कमुखः॥

## उत्तरपदादिः ॥ १११ ॥

उत्तरपदादिरित्येतदधिकृतम्। यदित ऊर्ध्वमनुक्रमिष्याम उत्तरपदस्यादिरुदात्तो भवतीत्येवं तद् वेदितव्यम्। वक्ष्यति—'कर्णो वर्णलक्षणात्' ( ६.२.११२ )—शुक्लकर्णः। कृष्णकर्णः। उत्तरपदस्येत्येतदा पादपरिसमाप्तेः। आदिरिति 'प्रकृत्या भगालम्' ( ६.२.१३७ ) इति यावत्॥

## कर्णो वर्णलक्षणात् ॥ ११२ ॥

बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च कर्णशब्द उत्तरपदमाद्युदात्तं भवति। शुक्लकर्णः। कृष्णकर्णः। लक्षणात्—दात्राकर्णः। शङ्कूकर्णः। [1]'लक्षणस्य० ( ६.३.११५ ) इति दीर्घत्वम्। पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरूपकं कर्णादिषु चिह्नं यत् क्रियते तदिह लक्षणं गृह्यते, तेन स्थूलकर्ण इत्यत्र न भवति। कर्ण इति किम् ? श्वेतपादः। कूटशृङ्गः। वर्णलक्षणादिति किम् ? शोभनकर्णः॥

## संज्ञौपम्ययोश्च ॥ ११३ ॥

संज्ञायामौपम्ये च यो बहुव्रीहिर्वर्तते, तत्र कर्णशब्द उत्तरपदमाद्युदात्तं भवति। संज्ञायाम्—कुञ्चिकर्णः। मणिकर्णः। औपम्ये—गोकर्णः। खरकर्णः॥

## कण्ठपृष्ठग्रीवाजङ्घं च ॥ ११४ ॥

कण्ठ पृष्ठ ग्रीवा जङ्घा इत्येतान्युत्तरपदानि बहुव्रीहौ समासे संज्ञौपम्ययोराद्युदात्तानि भवन्ति। कण्ठः संज्ञायाम्—शितिकण्ठाः ( तै० सं० ४.५.११.१ )। नीलकण्ठः। औपम्ये—खरकण्ठः। उष्ट्रकण्ठः। पृष्ठः संज्ञायाम्—काण्डपृष्ठः। नाकपृष्ठः। औपम्ये—गोपृष्ठः। अजपृष्ठः। ग्रीवा संज्ञायाम्—सुग्रीवः। नीलग्रीवः। दशग्रीवः। औपम्ये—गोग्रीवः। अश्वग्रीवः। जङ्घा संज्ञायाम्—नाडीजङ्घः। तालजङ्घः। औपम्ये—गोजङ्घः। अश्वजङ्घः। एणीजङ्घः॥

---

१ – अतः पूर्वं ' कर्णे ' इति बाल० पाठो न्यासानभिमतः।

## शृङ्गमवस्थायां च ॥ ११५ ॥

शृङ्गशब्द उत्तरपदमवस्थायां संज्ञौपम्ययोश्च बहुव्रीहावाद्युदात्तं भवति। उद्गतशृङ्गः। द्व्यङ्गुलशृङ्गः। त्र्यङ्गुलशृङ्गः।[1] अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषोऽवस्था। संज्ञायाम्—ऋष्यशृङ्गः। औपम्ये—गोशृङ्गः। मेषशृङ्गः। अवस्थादिष्विति किम्? स्थूलशृङ्गः॥

## नञो जरमरमित्रमृताः ॥ ११६ ॥

नञ उत्तरे जरमरमित्रमृता बहुव्रीहौ समास आद्युदात्ता भवन्ति। अंजरः। अमरः। अमित्रः। अमृतः। नञ इति किम्? ब्राह्मणमित्रः। जरादय इति किम्? अशत्रुः। 'नञ्सुभ्याम्' (६.२.१७२) इति उत्तरपदान्तोदात्तत्वमेवात्र भवति॥

## सोर्मनसी अलोमोषसी ॥ ११७ ॥

सोरुत्तरं मनन्तमसन्तं च बहुव्रीहौ समास आद्युदात्तं भवति लोमोषसी वर्जयित्वा। सुकर्मा। सुधर्मा। सुप्रथिमा। असन्तम्—सुपयाः। सुयशाः। सुस्रोताः। सुस्रत्। सुध्वत्। सोरिति किम्? कृतकर्मा। कृतयशाः। मनसी इति किम्? सुराजा। सुतक्षा। अलोमोषसी इति किम्? सुलोमा। सूषाः। 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च०' (परि० १६) इत्यनर्थकयोरपि मनसोरिह ग्रहणम्। 'नञ्सुभ्याम्' (६.२.१७२) इत्यस्यायमपवादः। कपि तु परत्वात् 'कपि पूर्वम्' (६.२.१७३) इत्येतद् भवति। सुकर्मकः। सुस्रोतस्कः॥

## क्रत्वादयश्च ॥ ११८ ॥

क्रत्वादयः सोरुत्तरे बहुव्रीहौ समास आद्युदात्ता भवन्ति। सुक्रतुः (तै० सं० १.२.६.१)। सुदृशीकः (तै० सं० ३.४.११.१)॥ क्रतु। दृशीक। प्रतीक। प्रतूर्ति। हव्य। भग। क्रत्वादिः॥

## आद्युदात्तं द्व्यच् छन्दसि ॥ ११९ ॥

यदाद्युदात्तं द्व्यच् उत्तरपदं बहुव्रीहौ समास सोरुत्तरं तदाद्युदात्तमेव भवति छन्दसि विषये। स्वश्वांस्त्वा सुरथा मर्जयेम (तै० सं० १.२.१४.४)। नित्स्वरेणाश्वरथशब्दावाद्युदात्तौ। आद्युदात्तमिति किम्? या सुबाहुः स्वङ्गुरिः (ऋ० २.३२.७)। बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः। द्व्यजिति किम्? सुगुरसत् सुहिरण्यः (ऋ० १.१२५.२)।

---

१ – 'त्र्यङ्गुलशृङ्गः' इति नास्ति है०।

छन्दसीति किम्[१]? स्वश्वः। 'नञ्सुभ्याम्' (६.२.१७२) इत्यस्यायमपवादः॥

## वीरवीर्यौ च ॥ १२० ॥

वीर वीर्य इत्येतौ च शब्दौ सोरुत्तरौ बहुव्रीहौ समासे छन्दसि विषय आद्युदात्तौ भवतः। सुवीरस्ते (ऋ० ४.१७.४)। सुवीर्यस्य पतयः स्याम (तै० सं० १.७.१३.४)। वीर्यमिति यत्प्रत्ययान्तं तत्र 'यतोऽनावः' (६.१.२१३) इत्याद्युदात्तत्वं न भवतीत्येतदेव वीर्यग्रहणं ज्ञापकम्। तत्र हि सति पूर्वेणैव सिद्धं स्यात्॥

## कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ १२१ ॥

कूल तीर तूल मूल शाला अक्ष सम इत्येतान्युत्तरपदानि अव्ययीभावसमास आद्युदात्तानि भवन्ति। परिकूलम्। उपकूलम्। परितीरम्। उपतीरम्। परितूलम्। उपतूलम्। परिमूलम्। उपमूलम्। परिशालम्। उपशालम्। पर्यक्षम्। उपाक्षम्। सुषमम्। विषमम्। निषमम्। दुःषमम्। तिष्ठद्गुप्रभृतिषु (२.१.१७) एते पठ्यन्ते। कूलादिग्रहणं किम्? उपकुम्भम्। अव्ययीभाव इति किम्? परमकूलम्। उत्तमकूलम्। पर्यादिभ्यः (६.२.३३) कूलादीनामाद्युदात्तत्वं विप्रतिषेधेन भवति। परिकूलम्। उपकूलम्॥

## कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ॥ १२२ ॥

कंस मन्थ शूर्प पाय्य काण्ड इत्येतान्युत्तरपदानि द्विगौ समास आद्युदात्तानि भवन्ति। द्विकंसः। त्रिकंसः। द्विमन्थः। त्रिमन्थः। द्विशूर्पः। त्रिशूर्पः। द्विपाय्यः। त्रिपाय्यः। द्विकाण्डः। त्रिकाण्डः। द्विगाविति किम्? परमकंसः। उत्तमकंसः॥

## तत्पुरुषे शालायां नपुंसके ॥ १२३ ॥

शालाशब्दान्ते तत्पुरुषे समासे नपुंसकलिङ्ग उत्तरपदमाद्युदात्तं भवति। ब्राह्मणशालम्। क्षत्रियशालम्। 'विभाषा सेनासुराच्छायाशालानिशानाम्' (२.४.२५) इति नपुंसकलिङ्गता। तत्पुरुष इति किम्? दृढशालं ब्राह्मणकुलम्। शालायामिति किम्? ब्राह्मणसेनम्। नपुंसक इति किम्? ब्राह्मणशाला॥

## कन्था च ॥ १२४ ॥

तत्पुरुषे समासे नपुंसकलिङ्गे कन्थाशब्द उत्तरपदमाद्युदात्तं भवति। सौशमि-

---

१ - इदं वाक्यम् ऊहितम्, स्वश्व इत्युपलम्भत्वात्।

कन्थम्। आह्वकन्थम्[१]। चुप्पकन्थम्। 'संज्ञायां कन्थोशीनरेषु' (२.४.२०) इति नपुंसकलिङ्गता। षष्ठीसमासा एते। नपुंसक इत्येव—दाक्षिकुन्था॥

## आदिश्चिहणादीनाम् ॥ १२५ ॥

कन्थान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तो भवति। चिहणकन्थम्। मडरकन्थम्। मडुर इति केचित् पठन्ति। मडुरकन्थम्॥ चिहण। मडर। मड्डर। वैतुल। पटत्क। चैत्तालिकर्ण:[२]। चैत्तालिकर्णि:[३] इत्यन्ये पठन्ति। कुक्कुट। चिक्कण। चित्कण इत्यपरे पठन्ति। आदिरिति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थम्॥

## चेलखेटकटुककाण्डं गर्हायाम् ॥ १२६ ॥

चेल खेट कटुक काण्ड इत्येतान्युत्तरपदानि तत्पुरुषे समासे गर्हायां गम्यमानायामाद्युदात्तानि भवन्ति। पुत्रचेलम्। भार्याचेलम्। उपानत्खेटम्। नगरखेटम्। दधिकटुकम्। उदश्वित्कटुकम्। भूतकाण्डम्। प्रजाकाण्डम्। चेलादीनां सादृश्येन पुत्रादीनां गर्हा। तत्र पुत्रश्चेलमिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभि:०' (२.१.५६) इति समास:। गर्हायामिति किम्? परमचेलम्॥

## चीरमुपमानम् ॥ १२७ ॥

चीरमुत्तरपदमुपमानवाचि तत्पुरुषे समास आद्युदात्तं भवति। वस्त्रं चीरमिव वस्त्रचीरम्। पटचीरम्। कम्बलचीरम्। उपमानमिति किम्? परमचीरम्॥

## पललसूपशाकं मिश्रे ॥ १२८ ॥

पलल सूप शाक इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समास आद्युदात्तानि भवन्ति। गुडपललम्। घृतपललम्। घृतसूप:। मूलकसूप:। घृतशाकम्। मुद्गशाकम्। गुडेन मिश्रं पललं गुडपललम्। 'भक्ष्येण मिश्रीकरणम्' (२.१.३५) इति समास:। मिश्र इति किम्? परमपललम्॥

## कूलसूदस्थलकर्षा: संज्ञायाम् ॥ १२९ ॥

कूल सूद स्थल कर्ष इत्येतान्युत्तरपदानि तत्पुरुषे समासे संज्ञायां विषय आद्युदात्तानि

---

१ – 'आह्वरकन्थम्' इति बाल०। पूर्वत्र (२.४.२०) च तदेवोदाहियते।
२ – 'वैडालिकर्ण:' इति बाल०।
३ – 'वैतालिकर्णि:' इति बाल०। 'वैडालिकर्णि:' इति पद०।

भवन्ति। दाक्षिकूलम्। माहकिकूलम्। देवसूदम्। भाजीसूदम्। दाण्डायनस्थली। माहकिस्थली। दाक्षिकर्षः। ग्रामनामधेयान्येतानि। स्थलग्रहणे लिङ्गविशिष्टत्वात् ( परि० ७१ ) स्थलीशब्दोऽपि गृह्यते। 'जानपदकुण्ड०' ( ४.१.४२ ) इत्यनेन ङीष्। संज्ञायामिति किम् ? परमकूलम्॥

## अकर्मधारये राज्यम् ॥ १३० ॥

कर्मधारयवर्जिते तत्पुरुषे समासे राज्यमित्येतदुत्तरपदमाद्युदात्तं भवति। ब्राह्मणराज्यम्। क्षत्रियराज्यम्। अकर्मधारय इति किम् ? परमराज्यम्। चेलराज्यादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन। कुचेलम्। कुराज्यम्॥

## वर्ग्यादयश्च ॥ १३१ ॥

वर्ग्य इत्येवमादीन्युत्तरपदानि अकर्मधारये तत्पुरुषे समास आद्युदात्तानि भवन्ति। वासुदेववर्ग्यः। वासुदेवपक्ष्यः। अर्जुनवर्ग्यः। अर्जुनपक्ष्यः। अकर्मधारय इत्येव—परमवर्ग्यः। वर्ग्यादयः प्रातिपदिकेषु न पठ्यन्ते। दिगादिषु ( ४.३.५४ ) तु वर्ग पूग गण पक्ष इत्येवमादयो ये पठिताः, त एव यत्प्रत्ययान्ता वर्ग्यादय इह प्रतिपत्तव्याः॥

## पुत्रः पुम्भ्यः ॥ १३२ ॥

पुत्रशब्दः पुंशब्देभ्य उत्तरस्तत्पुरुष आद्युदात्तो भवति। कौनटिपुत्रः। दामकपुत्रः। माहिषकपुत्रः। पुत्र इति किम् ? कौनटिमातुलः। पुम्भ्य इति किम् ? गार्गीपुत्रः। वात्सीपुत्रः॥

## नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ १३३ ॥

आचार्य उपाध्यायः। राजा ईश्वरः। ऋत्विजो याजकाः। संयुक्ताः स्त्रीसंबन्धिनः श्यालादयः। ज्ञातयो मातृपितृसंबन्धिनो बान्धवाः। आचार्याद्याख्येभ्यः परः पुत्रशब्दो नाद्युदात्तो भवति। आख्याग्रहणात् स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणं भवति। आचार्यपुत्रः। उपाध्यायपुत्रः। शाकटायनपुत्रः। राजपुत्रः। ईश्वरपुत्रः। नन्दपुत्रः। ऋत्विक्पुत्रः। याजकपुत्रः। होतुःपुत्रः। संयुक्तपुत्रः। संबन्धिपुत्रः। श्यालपुत्रः। ज्ञातिपुत्रः। भ्रातुष्पुत्रः। 'ऋतो विद्यायोनिसंबन्धेभ्यः' ( ६.३.२३ ) इति षष्ठ्या अलुक्। पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्तत्वमेव भवति॥

## चूर्णादीन्यप्राणिषष्ठ्याः ॥ १३४ ॥

उत्तरपदादिरिति वर्तते, तत्पुरुष इति च। चूर्णादीन्युत्तरपदानि अप्राणिवाचिनः षष्ठ्यन्तात् पराणि तत्पुरुषे समास आद्युदात्तानि भवन्ति। मुद्गचूर्णम्। मसूरचूर्णम्। अप्राणिषष्ठ्या इति किम् ? मत्स्यचूर्णम्। षष्ठ्या इति किम् ? परमचूर्णम्॥ चूर्ण। करिप। करिव। शाकिन। शाकट। द्राक्षा। तूस्त। कुन्दम। दलप। चमसी। चक्कन। चौल। चूर्णादिः। चूर्णादीन्यप्राण्युपग्रहादिति सूत्रस्य पाठान्तरम्। तत्रोपग्रह इति षष्ठ्यन्तमेव पूर्वाचार्योपचारेण गृह्यते॥

## षट् च काण्डादीनि ॥ १३५ ॥

षट् पूर्वोक्तानि काण्डादीन्युत्तरपदान्यप्राणिषष्ठ्या आद्युदात्तानि भवन्ति। '०काण्डं गर्हायाम्' ( ६.२.१२६ ) इत्युक्तमगर्हायामपि भवति। दर्भकाण्डम्। शरकाण्डम्। 'चीरमुपमानम्' ( ६.२.१२७ ) इत्युक्तमनुपमानमपि भवति। दर्भचीरम्। कुशचीरम्। 'पललसूपशाकं मिश्रे' ( ६.२.१२८ ) इत्युक्तममिश्रेऽपि भवति। तिलपललम्। मुद्गसूपः। मूलकशाकम्। 'कूलं संज्ञायाम्' ( ६.२.१२९ ) इत्युक्तमसंज्ञायामपि भवति। नदीकूलम्। समुद्रकूलम्। षडिति किम् ? राजसूदः॥

## कुण्डं वनम् ॥ १३६ ॥

कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्तते। कुण्डमित्येतदुत्तरपदं वनवाचि तत्पुरुषे समास आद्युदात्तं भवति। दर्भकुण्डम्। शरकुण्डम्। वनमिति किम् ? मृत्कुण्डम्॥

## प्रकृत्या भगालम् ॥ १३७ ॥

भगालवाच्युत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति। कुम्भीभगालम्। कुम्भीकपालम्। कुम्भीनदालम्। भगालादयो मध्योदात्ताः। प्रकृत्येत्येतदधिकृतम् 'अन्तः' ( ६.२.१४३) इति यावद् वेदितव्यम्॥

## शितेर्नित्याबह्वज् बहुव्रीहावभसत् ॥ १३८ ॥

शितेरुत्तरपदं नित्यं यदबह्वज् भसच्छब्दवर्जितं बहुव्रीहौ समासे तत् प्रकृतिस्वरं भवति। शितिपादः। शित्यंसः। शित्योष्ठः ( तै० सं० ५.६.१४.१ )। पादशब्दो वृषादित्वादाद्युदात्तः। अंसौष्ठशब्दौ च प्रत्ययस्य नित्त्वात्। शितेरिति किम् ? दर्शनीयपादः। नित्यग्रहणं किम् ? शितिककुत् ( तै० सं० ५.६.१४.१ )। 'ककुदस्यावस्थायां लोपः' ( ५.४.१४६ ) विधीयते। तत्रावस्थाया अन्यत्र शितिककुद इति बह्वजुत्तरपदं

भवतीति तेन न नित्याबह्वच्। अबह्वजिति किम् ? शितिंललाटः। बहुव्रीहाविति किम्? शितेः पादः शितिपादः। अभसदिति किम् ? शितिंभसद् ( तै० सं० ५.६.१४.१ )। शितिशब्द आद्युदात्तः। पूर्वपदप्रकृतिस्वरापवादो योगः॥

## गतिकारकोपपदात् कृत् ॥ १३९ ॥

तत्पुरुष इति वर्तते, न बहुव्रीहाविति। गतेः कारकादुपपदात् च कृदन्तमुत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति। प्रकारंकः। प्रकरंणम्। प्रहारंकः। प्रहरंणम्। कारकात्—इध्मप्रव्रश्चंनः। पलाशशातंनः। श्मश्रुकल्पंनः। उपपदात्—ईषत्करंः। दुष्करंः। सुकरंः। सर्वत्रैवात्र लित्स्वरः। गतिकारकोपपदादिति किम् ? देवदत्तस्य कारको देवदत्तकारकः। देवदत्तस्येति शेषलक्षणा षष्ठी। कृद्ग्रहणं विस्पष्टार्थम्। प्रपचतितराम्, प्रपचतितमाम् इत्यत्र तरबाद्यन्तेन समासे कृते पश्चादाम्। तत्र सतिशिष्टत्वादाम एव स्वरो भवतीत्येके। प्रपचतिदेश्याद्यर्थं तु कृद्ग्रहणं दृश्यत एव॥

## उभे वनस्पत्यादिषु युगपत् ॥ १४० ॥

प्रकृत्येति वर्तते। वनस्पत्यादिषु समासेषु उभे पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः। वनस्पतिंः ( तै० सं० १.२.२.३ )। वनपतिशब्दावाद्युदात्तौ पारस्करप्रभृतित्वात् सुट्। बृहस्पतिंः ( तै० सं० ६.४.१०.१ )। बृहतां पतिः। तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ( ग० सू० १६३ ) इति सुट् तकारलोपश्च। बृहदित्येतदन्तोदात्तं निपातयन्ति। तस्य केचिदाद्युदात्तत्वं वर्णयन्ति। शचीपतिंः ( तै० सं० ४.४.८.१ )। शचीशब्दः 'कृदिकारादक्तिनः' ( ग० सू० ४९ ) इति ङीषन्तत्वादन्तोदात्तः। केचित् तु शार्ङ्गरवादिषु पठन्ति, तेषामाद्युदात्तः[1]। तनूनपात् ( तै० सं० ४.१.८.१ )। तनोतेरौणादिक ऊप्रत्ययस्तेन तनूशब्दोऽन्तोदात्तः। न पाति न पालयति वा नपात् क्विबन्तः। 'नभ्राण्नपात्०' ( ६.३.७५ ) इत्यादिनाद्युदात्तो निपातितः। तन्वा नपात् तनूनपात्। नराशंसः ( तै० सं० ४.१.८.१ )। नरा अस्मिन्नासीनाः शंसन्ति, नरा एनं[2] शंसन्तीति वा नराशंसः। 'नृ नये' ( क्र्या० २६ )। अबन्तो नरशब्द आद्युदात्तः। शंसशब्दोऽपि घञन्तः। 'अन्येषामपि दृश्यते' ( ६.३.१३७ ) इति दीर्घत्वम्। शुनःशेपः ( तै० सं० ५.२.१.३ )। शुन इव शेपोऽस्येति बहुव्रीहिः। तत्र 'शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्' ( ६.३.२१ वा० ) इति षष्ठ्या अलुक्। उभावाद्युदात्तौ। शण्डामर्कौ ( तै० सं० ६.४.१०.१ )। शण्डमर्कशब्दौ घञन्तत्वादाद्युदात्तौ। तयोर्द्वन्द्वे 'अन्येषामपि दृश्यते' ( ६.३.१३७ ) इति दीर्घत्वम्।

---

१ - शचीशब्दः छन्दःसु सर्वत्राद्युदात्त उपलभ्यते। काशिकाप्रदर्शितास्तु स्वरा बहुत्र छन्दःसु व्यतियन्ति। काशिकामनुसृत्येह स्वरा अङ्क्यन्ते। छन्दःस्थलेषु स्वरभेदः स्यात्।

२ - 'एवं' इति मुद्रितेष्वपपाठः।

तृष्णांवरूत्री। तृष्णशब्द[२] आद्युदात्तः। वरूत्रीशब्दो ग्रसितादिसूत्रे ( ७.२.३४ ) निपातितोऽन्तोदात्तः[१]। तत्र द्वन्द्वे दीर्घत्वं पूर्ववत्। बम्बाविश्ववयसौ ( तै० सं० ६.६.८.४)। बम्बशब्दोऽन्तोदात्तः। विश्ववयःशब्दोऽपि 'बहुव्रीहौ विश्वं संज्ञायाम्' ( ६.२.१०६) इति विश्वशब्दोऽन्तोदात्तः। तयोर्द्वन्द्वे दीर्घत्वं पूर्ववत्। मर्मृत्युः। मरिति मृञो विच्प्रत्ययः। मृत्युशब्दोऽन्तोदात्तः। द्वन्द्वानामदेवताद्वन्द्वार्थोऽनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः॥

## देवताद्वन्द्वे च ॥ १४१ ॥

देवतावाचिनां यो द्वन्द्वस्तत्र युगपदुभे पूर्वोत्तरपदे प्रकृतिस्वरे भवतः। इन्द्रासोमौ। इन्द्रावरुणौ। इन्द्राबृहस्पती। 'ऋजेन्द्राग्र०' ( प० उ० २.२९ ) इति इन्द्रशब्द आद्युदात्तो निपातितः। सोम इति मन्प्रत्ययान्तः। वरुण उनन्प्रत्ययान्तः, तेनाद्युदात्तः। बृहस्पतिशब्दे वनस्पत्यादित्वाद् द्वावुदात्तौ, तेनेन्द्राबृहस्पती इत्यत्र त्रय उदात्ता भवन्ति। देवताग्रहणं किम् ? प्लक्षन्यग्रोधौ। द्वन्द्वग्रहणं किम् ? अग्निष्टोमः॥

## नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥ १४२ ॥

उत्तरपदेऽनुदात्तादौ पृथिवीरुद्रपूषमन्थिवर्जिते देवताद्वन्द्वे नोभे युगपत् प्रकृतिस्वरे भवतः। इन्द्राग्नी ( तै० सं० २.२.१.२)। इन्द्रवायू ( तै० सं० ६.६.८.३ )। अग्निवायुशब्दावन्तोदात्तौ। उत्तरपदग्रहणमनुदात्तादावित्युत्तरपदविशेषणं यथा स्याद्, द्वन्द्वविशेषणं मा भूदिति। अनुदात्तादाविति विधिप्रतिषेधयोर्विषयविभागार्थम्। अपृथिव्यादिष्विति किम्? द्यावांपृथिव्यौ ( तै० सं० २.६.९.५ )। द्यावाशब्द आद्युदात्तो निपातितः। पृथिवीशब्दो ङीष्प्रत्ययान्तत्वादन्तोदात्तः। रुद्र—सोमारुद्रौ ( मै० सं० २.१.५ )। 'रोदेर्णिलुक्०' ( प० उ० २.२२ ) इति रुद्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः। पूषन्—इन्द्रापूषणौ। 'श्वन्नुक्षन्पूषन्०' ( प० उ० १.१५९ ) इति पूषान्तोदात्तो निपात्यते। मन्थिन्—शुक्रामन्थिनौ ( तै० सं० ६.४.१०.३ )। मन्थोऽस्यास्तीति मन्थी। इन्नन्तत्वादन्तोदात्तः। पृथिव्यादिषु तु उभे युगपत् प्रकृतिस्वरे भवत एव॥

## अन्तः ॥ १४३ ॥

अन्त इत्यधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र समासस्योत्तरपदस्यान्त उदात्तो भवतीत्येवं तद् वेदितव्यम्। वक्ष्यति—'थाथघञ्क्ताजबित्रकाणाम्' ( ६.२.१४४ ) इति। सुनीथः। अवभृथः॥

---

१ - 'तृष्णा०' इति तारा०, है०। 'तृष्ण' इति निष्ठायां निपात्यते न्यासपद०। तृष्णाशब्दस्तु नप्रत्ययान्तः ( प० उ० ३.१२ )।

२ - इदं चिन्त्यम्। द्र० — 'ग्रसित०' ( ७.२.३४ ) सूत्रे टिप्पणी।

## थाथघञ्क्ताजबित्रकाणाम् ॥ १४४ ॥

थ अथ घञ् क्त अज् अप् इत्र क इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदात् परेषामन्त उदात्तो भवति। सुनीथः। अवभृथः ( तै० सं० १.७.५.३ )। 'हनिकुषिनीरमिकाशिभ्यः क्थन्' ( प० उ० २.२ ) इति 'अवे भृञः' ( प० उ० २.३ ) इति च क्थन्प्रत्ययान्तावेतौ। तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तमुत्तरपदं स्यात्। अथ—आवसथः ( शौ० सं० ९.६.७ )। उपवसथः। 'उपसर्गे वसेः' ( प० उ० ३.११६ ) इत्यथन्प्रत्ययः। घञ्—प्रभेदः। काष्ठभेदः। रज्जुभेदः। क्त—दूरादागतः। विशुष्कः। आतपशुष्कः। अच्—प्रक्षयः। प्रजयः। 'क्षयो निवासे' ( ६.१.२०१ ) 'जयः करणम्' ( ६.१.२०२ ) इति चाद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः। अप्—प्रलवः ( तै० आ० ५.४.५ )। प्रसवः ( तै० सं० १.७.८.३ )। इत्र—प्रलवित्रम्। प्रसवित्रम्। क—गोवृषः। खरीवृषः। गां वर्षति, खरीं वर्षतीति मूलविभुजादित्वात् ( ३.२.५ वा० ) कप्रत्ययः। प्रवृषः। प्रहृषः। इगुपधात् ( ३.१.१३५ ) इति कप्रत्ययः। 'वृषादीनां च' ( ६.१.२०३ ) इति वृषशब्द आद्युदात्तः। गतिकारकोपपदादित्येव—सुस्तुतं भवता। कर्मप्रवचनीयेऽव्ययस्वर एव भवति ॥

## सूपमानात् क्तः ॥ १४५ ॥

सु इत्येतस्मादुपमानात् च परं क्तान्तमुत्तरपदमन्तोदात्तं भवति। सुकृतम् ( तै० सं० ४.७.२.२ )। सुभुक्तम्। सुपीतम्। उपमानात्—वृकावलुप्तम्। शशप्लुतम्। सिंहविनर्दितम्। सुशब्दाद् 'गतिरनन्तरः' ( ६.२.४९ ) इति प्राप्त उपमानादपि 'तृतीया कर्मणि' ( ६.२.४८ ) इत्ययमपवादः। गतिकारकोपपदादित्येव—सुस्तुतं भवता ॥

## संज्ञायामनाचितादीनाम् ॥ १४६ ॥

संज्ञायां विषये गतिकारकोपपदात् क्तान्तमुत्तरपदमन्तोदात्तं भवति आचितादीन् वर्जयित्वा। संभूतो रामायणः। उपहूतः शाकल्यः। परिजग्धः कौण्डिन्यः। संभूत इति प्राप्त्यर्थाद् भवतेः कर्मणि क्तः। 'गतिरनन्तरः' ( ६.२.४९ ) इत्यत्र हि कर्मणीत्यनुवर्तते, तद्बाधनार्थं चेदम्। धनुष्खाता नदी। कुद्दालखातं नगरम्। हस्तिमृदिता भूमिः। 'तृतीया कर्मणि' ( ६.२.४८ ) इति प्राप्तिरिह बाध्यते। अनाचितादीनामिति किम् ? आचितम्। पर्याचितम्। आस्थापितम्। परिगृहीतम्। निरुक्तम्। प्रतिपन्नम्। प्रश्लिष्टम्। उपहतम्। उपस्थितम्। संहितागवि ( ग० सू० १७५ )। संहिताशब्दो यदा गोरन्यस्य संज्ञा तदान्तोदात्तो न भवति। यदा तु गोः संज्ञा तदान्तोदात्त एव ॥

## प्रवृद्धादीनां च ॥ १४७ ॥

प्रवृद्धादीनां च क्तान्तमुत्तरपदमन्तोदात्तं भवति। प्रवृद्धं यानम्। प्रवृद्धो वृषलः। प्रयुक्ताः सक्तवः। आकर्षे अवहितः। अवहितो भोगेषु। खट्वारूढः। कविशस्तः ( तै० सं० २.५.९.२ )। यानादीनामत्र गणे पाठः प्रायोवृत्तिप्रदर्शनार्थः, न विषयनियमार्थः। यानादिभ्योऽन्यत्रापि तेषामन्तोदात्तत्वं भवत्येव। विषयनियमार्थ एवेत्येके। असंज्ञार्थोऽयमारम्भः। आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्यः। तेन पुनरुत्स्यूतं वासो देयम् ( मै० सं० १.७.२ ), पुनर्निष्कृतो रथः ( तै० सं० १.५.२.४ ) इत्येवमादि सिद्धं भवति॥

## कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४८ ॥

संज्ञायामिति वर्तते, क्त इति च। संज्ञायां विषय आशिषि गम्यमानायां कारकादुत्तरयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो भवति। देवा एनं देयासुर्देवदत्तः। विष्णुरेनं श्रूयाद् विष्णुश्रुतः। कारकादिति किम् ? कारकाद्[1] नियमो मा भूत्। संभूतो रामायणः। दत्तश्रुतयोरिति किम् ? देवपालितः। एतस्माद् नियमादत्र 'संज्ञायामनाचितादीनाम्' ( ६.२.१४६ ) इत्यन्तोदात्तत्वं न भवति। 'तृतीया कर्मणि' ( ६.२.४८ ) इत्येवात्र भवति। एवकारकरणं किम् ? कारकावधारणं यथा स्याद्, दत्तश्रुतावधारणं मा भूत्। अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति। संश्रुतः। विश्रुतः। आशिषीति किम् ? अनाशिषि नियमो मा भूत्। देवैः खाता देवखाता। कारकाद् दत्तश्रुतयोराशिष्येवेत्येवमत्र नियम इष्यते। तेनाहतो नदति देवदत्त इत्यत्र न भवति। देवदत्त इति कस्यचित् शङ्खस्य नाम। तत्र 'तृतीया कर्मणि' ( ६.२.४८ ) इति पूर्वपदप्रकृतिस्वरत्वमेव भवति॥

## इत्थंभूतेन कृतमिति च ॥ १४९ ॥

इमं प्रकारमापन्न इत्थंभूतः। इत्थंभूतेन कृतमित्येतस्मिन्नर्थे यः समासो वर्तते, तत्र क्तान्तमुत्तरपदमन्तोदात्तं भवति। सुप्तप्रलपितम्। उन्मत्तप्रलपितम्। प्रमत्तगीतम्। विपन्नश्रुतम्। कृतमिति क्रियासामान्ये करोतिर्वर्तते, नाभूतप्रादुर्भाव एव। तेन प्रलपिताद्यपि कृतं भवति। 'तृतीया कर्मणि' ( ६.२.४८ ) इत्यस्यायमपवादः। भावे तु यदा प्रलपितादयस्तदा थाथादिस्वरेणैव ( ६.२.१४४ ) सिद्धमन्तोदात्तत्वं भवति॥

## अनो भावकर्मवचनः ॥ १५० ॥

अनप्रत्ययान्तमुत्तरपदं भाववचनं कर्मवचनं च कारकात् परमन्तोदात्तं भवति।

---

१ – अन्यत्र शब्दोऽत्राध्याहार्यः। यद्वा—कारकाद् नियमो न स्यात्, किन्तु गत्यादेरपि स्याद्—इत्यर्थोऽभिप्रेयते।

ओदनभोजनं सुखम्। पयःपानं सुखम्। चन्दनप्रियङ्गुकालेपनं सुखम्। कर्मवचन—राजभोजनाः शालयः। राजाच्छादनानि वासांसि। 'कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्' (३.३.११६) इत्ययं योग उभयथा वर्ण्यते—कर्मण्युपपदे भावे ल्युड् भवति, कर्मण्यभिधेये ल्युड् भवतीति। तत्र पूर्वस्मिन् सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि। अन इति किम्? हस्तहार्यमुदश्वित्। भावकर्मवचन इति किम्? दन्तधावनम्। करणे ल्युट्। कारकादित्येव—निदर्शनम्। अवलेखनम्। सर्वेषु प्रत्युदाहरणेषु प्रकृतिस्वरो भवति॥

## मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ॥ १५१ ॥

मन्नन्तं क्तिन्नन्तं व्याख्यान शयन आसन स्थान इत्येतानि याजकादयः क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवति। मन्—रथवर्त्म। शकटवर्त्म। क्तिन्—पाणिनिकृतिः। आपिशलिकृतिः। व्याख्यान—ऋगयनव्याख्यानम्। छन्दोव्याख्यानम्। शयन—राजशयनम्। ब्राह्मणशयनम्। आसन—राजासनम्। ब्राह्मणासनम्। स्थान—गोस्थानम्। अश्वस्थानम्। याजकादि—ब्राह्मणयाजकः। क्षत्रिययाजकः। ब्राह्मणपूजकः। क्षत्रियपूजकः। याजकादयो ये 'याजकादिभिश्च' (२.२.९) इति षष्ठीसमासार्थाः पठ्यन्ते, त एवेह गृह्यन्ते। क्रीत—गोक्रीतः। अश्वक्रीतः। कृत्स्वरापवादोऽयं योगः। क्रीतशब्दे तु 'तृतीया कर्मणि' (६.२.४८) इत्यस्यापवादः। व्याख्यानशयनासनस्थानानामभावकर्मार्थं ग्रहणम्। कारकादित्येव—प्रकृतिः। प्रहृतिः॥

## सप्तम्याः पुण्यम् ॥ १५२ ॥

सप्तम्यन्तात् परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं भवति। अध्ययने पुण्यम् अध्ययनपुण्यम्। वेदे पुण्यं वेदपुण्यम्। 'सप्तमी०' (२.१.४०) इति योगविभागात् समासः। 'तत्पुरुषे तुल्यार्थ०' (६.२.२) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमित्यन्तोदात्तत्वं विधीयते। उणादीनां तु व्युत्पत्तिपक्षे (प० उ० ५.१५) कृत्स्वरेणाद्युदात्तः पुण्यशब्दः स्यादिति। सप्तम्या इति किम्? वेदेन पुण्यं वेदपुण्यम्॥

## ऊनार्थकलहं तृतीयायाः ॥ १५३ ॥

ऊनार्थान्युत्तरपदानि कलहशब्दश्च तृतीयान्तात् पराण्यन्तोदात्तानि भवन्ति। माषोनम्। कार्षापणोनम्। माषविकलम्। कार्षापणविकलम्। कलह—असिकलहः। वाक्कलहः। तृतीयापूर्वपदप्रकृतिस्वरापवादो योगः। अत्र केचिदर्थ इति स्वरूपग्रहणमिच्छन्ति।

धान्येनार्थो धान्यार्थः। ऊनशब्देनैव त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव तृतीयासमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थम् ॥

## मिश्रं चानुपसर्गमसंधौ ॥ १५४ ॥

तृतीयेति वर्तते। मिश्र इत्येतदुत्तरपदमनुपसर्गं तृतीयान्तात् परमन्तोदात्तं भवत्यसंधौ गम्यमाने। गुडमिश्राः। तिलमिश्राः। सर्पिर्मिश्राः। मिश्रमिति किम्? गुडधानाः। अनुपसर्गमिति किम्? गुडसंमिश्राः। इहानुपसर्गग्रहणं ज्ञापकमन्यत्र मिश्रग्रहणे सोपसर्गग्रहणस्य। तेन मिश्रश्लक्ष्णैः (२.१.३१) इति सोपसर्गेणापि मिश्रशब्देन तृतीयासमासो भवति। असंधाविति किम्? ब्राह्मणमिश्रो राजा। ब्राह्मणैः सह संहित ऐकार्थ्यमापन्नः। संधिरिति हि पणबन्धेनैकार्थ्यमुच्यते। केचित् पुनराहुर्गृह्यमाणविशेषा प्रत्यासत्तिः संधिरिति। अत्र राज्ञो ब्राह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्त्तिविभागो गृह्यत इति ब्राह्मणमिश्रो राजेति प्रत्युदाह्रियते। उदाहरणेष्वविभागापत्तिरेव गुडमिश्रा इति ॥

## नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः ॥ १५५ ॥

संपादि अर्ह हित अलम् इत्येवमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वर्तमानात् पराण्यन्तोदात्तानि भवन्ति। संपादि—कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकम्, न कार्णवेष्टकिकम् अकार्णवेष्टकिकम्। अर्ह—छेदमर्हति छैदिकः, न छैदिकः अच्छैदिकः। हित—वत्सेभ्यो हितो वत्सीयः, न वत्सीयः अवत्सीयः। अलमर्थ—संतापाय प्रभवति सांतापिकः। न सांतापिकः असांतापिकः। नञ इति किम्? गर्दभरथमर्हति गार्दभरथिकः। विगार्दभरथिकः। गुणप्रतिषेध इति किम्? गार्दभरथिकादन्यः अगार्दभरथिकः। गुण इति तद्धितार्थप्रवृत्तिनिमित्तं संपादित्वाद्युच्यते। तत्प्रतिषेधो यत्रोच्यते समासे, तत्रायं विधिः—कर्णवेष्टकाभ्यां न संपादि मुखमिति। संपाद्यर्हहितालमर्था इति किम्? पाणिनीयमधीते पाणिनीयः, न पाणिनीयः अपाणिनीयः। तद्धिता इति किम्? कन्यां वोढुमर्हति कन्याया वोढा[1], न वोढा अवोढा। 'अर्हे कृत्यतृचश्च' (३.३.१६९) इति तृच् ॥

## ययतोश्चातदर्थे ॥ १५६ ॥

य यत् इत्येतौ यौ तद्धितावतदर्थे वर्तेते, तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति। पाशानां समूहः पाश्या, न पाश्या अपाश्या। अतृण्या। यत्—दन्तेषु भवं दन्त्यम्, न दन्त्यम् अदन्त्यम्। अकर्ण्यम्। अतदर्थ इति किम्? पादार्थमुदकं

१ – 'कन्यावोढा' इत्यपपाठो मुद्रितेषु।

पाद्यम्, न पाद्यम् अपाद्यम्। तद्धिता इत्येव—अदेयम्। गुणप्रतिषेध इत्येव—दन्त्यादन्यद् अदन्त्यम्। निरनुबन्धकैकानुबन्धकयोः ( सीर० प० ५०, ५१ ) ययतोर्ग्रहणादिह न भवति—'वामदेवाड् ड्यड्ड्यौ' ( ४.२.९ )—वामदेव्यम्, न वामदेव्यम् अवामदेव्यम् इति॥

## अच्कावशक्तौ ॥ १५७ ॥

अच् क इत्येवमन्तमशक्तौ गम्यमानायामुत्तरपदं नञः परमन्तोदात्तं भवति। अपचो यः पक्तुं न शक्नोति। अजयः। कः खल्वपि—अविक्षिपः। अविलिखः। अशक्ताविति किम् ? अपचो दीक्षितः। अपचः परिव्राजकः॥

## आक्रोशे च ॥ १५८ ॥

आक्रोशे च गम्यमाने नञ उत्तरमच्कान्तमन्तोदात्तं भवति। अपचोऽयं जाल्मः। अपठोऽयं जाल्मः। पक्तुं पठितुं शक्तोऽप्येवमाक्रुश्यते। अविक्षिपः। अविलिखः॥

## संज्ञायाम् ॥ १५९ ॥

आक्रोशे गम्यमाने नञः परमुत्तरपदं संज्ञायां वर्तमानमन्तोदात्तं भवति। अदेवदत्तः। अयज्ञदत्तः। अविष्णुमित्रः॥

## कृत्योकेष्णुच्चार्वादयश्च ॥ १६० ॥

कृत्य उक इष्णुच् इत्येवमन्ताश्चार्वादयश्च नञ उत्तरेऽन्तोदात्ता भवन्ति। कृत्य—अकर्तव्यम्। अकरणीयम्। उक—अनागामुकम्। अनपलाषुकम्। इष्णुच्—अनलंकरिष्णुः। अनिराकरिष्णुः। इष्णुज्ग्रहणे 'कर्तरि भुवः खिष्णुच्०' ( ३.२.५७ ) इत्यस्य द्व्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्याद् भवति। अनाढ्यंभविष्णुः। असुभगंभविष्णुः। चार्वादयः—अचारुः। असाधुः। अयौधिकः। अवदान्यः॥ चारु। साधु। यौधिक। अनङ्गमेजय। अत्र द्वितीये नञ्समासेऽन्तोदात्तत्वम्। अनन‌ङ्गमेजयः। वदान्य। अकस्मात्। अत्रापि द्वितीये नञ्समासेऽन्तोदात्तत्वम्। अनकस्मात्। वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः[1] संज्ञायाम् ( ग० सू० १७६ )। एते वर्तमानादयः संज्ञायां द्रष्टव्याः। विकारसदृशे व्यस्तसमस्ते ( ग० सू० १७७ )। अविकारः। असदृशः। अविकारसदृशः। गृहपति। गृहपतिक। राजाह्नोश्छन्दसि ( ग० सू० १७८ )। अराजा। अनहः। भाषायां नञ्स्वर एव भवति॥

---

१ - ' क्रियमाण ' इति नास्ति है०।

## विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६१ ॥

तृन्नन्त अन्न तीक्ष्ण शुचि इत्येतेषु नञ उत्तरेषु विभाषान्त उदात्तो भवति। अकुर्ता, अकर्ता। अन्न—अनुन्नम्, अनन्नम्। तीक्ष्ण—अतीक्ष्णम्, अतीक्ष्णम्। शुचि—अशुचिः, अशुचिः। पक्षेऽव्ययस्वर एव भवति॥

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६२ ॥

बहुव्रीहौ समास इदम् एतद् तदित्येतेभ्य उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणने वर्तमानस्यान्त उदात्तो भवति। इदं प्रथमं गमनं भोजनं वा यस्य स इदंप्रथमः। इदंद्वितीयः। इदंतृतीयः। एतत्प्रथमः। एतद्द्वितीयः। एतत्तृतीयः। तत्प्रथमः। तद्द्वितीयः। तत्तृतीयः। बहुव्रीहाविति किम् ? अनेन प्रथम इदंप्रथमः। तृतीयेति योगविभागात् समासः। इदमेतत्तद्भ्य इति किम् ? यत्प्रथमः। प्रथमपूरणयोरिति किम्? तानि बहून्यस्य तद्बहुः। क्रियागणन इति किम् ? अयं प्रथम एषां त इदंप्रथमाः। द्रव्यगणनमेतत्। गणन इति किम् ? अयं प्रथम एषां त इदंप्रथमाः। इदंप्रधाना इत्यर्थः। उत्तरपदस्य कार्यित्वात् कपि पूर्वमन्तोदात्तं भवति। इदंप्रथमकाः। बहुव्रीहावित्येतद् 'वनं समासे' ( ६.२.१७८ ) इति प्रागेतस्मादधिकृतं वेदितव्यम्॥

## संख्यायाः स्तनः ॥ १६३ ॥

संख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति। द्विस्तना। त्रिस्तना। चतुःस्तना। संख्याया इति किम् ? दर्शनीयस्तना। स्तन इति किम् ? द्विशिराः॥

## विभाषा छन्दसि ॥ १६४ ॥

छन्दसि विषये बहुव्रीहौ समासे संख्यायाः परः स्तनशब्दो विभाषान्तोदात्तो भवति। द्विस्तनां कुर्याद्वामदेवः[१]। द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुःस्तनां करोति पशूनां दोहाय ( तै० सं० ५.१.६.४ )। चतुःस्तनां करोति[१]॥

## संज्ञायां मित्राजिनयोः ॥ १६५ ॥

संज्ञायां विषये बहुव्रीहौ समासे मित्र अजिन इत्येतयोरुत्तरपदयोरन्त उदात्तो भवति। देवमित्रः। ब्रह्ममित्रः। वृकाजिनः। कूलाजिनः। कृष्णाजिनः। संज्ञायामिति किम् ? प्रियमित्रः। महाजिनः॥ ऋषिप्रतिषेधो मित्रे॥ विश्वामित्र ऋषिः ( तै० सं० ४.३.२.२ )॥

---

१ - इदं वाक्यं नास्ति है०।

## व्यवायिनोऽन्तरम् ॥ १६६ ॥

व्यवायी व्यवधाता, तद्वाचिनः परमन्तरं बहुव्रीहौ समासेऽन्तोदात्तं भवति। वस्त्रान्तरः। पटान्तरः। कम्बलान्तरः। वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः। वस्त्रव्यवधायक इत्यर्थः। व्यवायिन इति किम् ? आत्मान्तरः। आत्मा स्वभावोऽन्तरोऽन्यो यस्यासावात्मान्तरः॥

## मुखं स्वाङ्गम् ॥ १६७ ॥

मुखमुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति। गौरमुखः। भद्रमुखः। स्वाङ्गमिति किम् ? दीर्घमुखा शाला। स्वाङ्गमद्रवादिलक्षणम् ( ४.१.५४ का० ) इह गृह्यते॥

## नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥ १६८ ॥

अव्यय दिक्शब्द गो महत् स्थूल मुष्टि पृथु वत्स इत्येतेभ्यः परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे नान्तोदात्तं भवति। अव्यय—उच्चैर्मुखः। नीचैर्मुखः। दिक्शब्द—प्राङ्मुखः। प्रत्यङ्मुखः। गो—गोमुखः। महत्—महामुखः। स्थूल—स्थूलमुखः। मुष्टि—मुष्टिमुखः। पृथु—पृथुमुखः। वत्स—वत्समुखः। पूर्वपदप्रकृतिस्वरो यथायोगमेषु भवति। गोमुष्टिवत्सपूर्वस्योपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते॥

## निष्ठोपमानादन्यतरस्याम् ॥ १६९ ॥

निष्ठान्तादुपमानवाचिनश्च मुखं स्वाङ्गमुत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति। प्रक्षालितमुखः, प्रक्षालितमुखः, प्रक्षालितमुखः। यदैतदुत्तरपदान्तोदात्तत्वं न भवति तदा 'निष्ठोपसर्गपूर्वमन्यतरस्याम्' ( ६.२.११० ) इति पक्षे पूर्वपदान्तोदात्तत्वम्, तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वर इति त्रीण्युदाहरणानि भवन्ति। उपमानात्—सिंहमुखः, सिंहमुखः। व्याघ्रमुखः, व्याघ्रमुखः॥

## जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ॥ १७० ॥

जातिवाचिन आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमित-प्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासेऽन्तोदात्तं भवति। सारङ्गजग्धः। पलाण्डुभक्षितः। सुरापीतः। काल—मासजातः[१]। संवत्सरजातः। द्व्यहजातः। त्र्यहजातः। सुखादिभ्यः—सुखजातः। दुःखजातः। तृप्रजातः। जात्यादिभ्य इति किम् ? पुत्रजातः। आहिताग्न्यादि-

---

१ – इहोदाहरणेषु कदाचित् 'यात' इत्येवमादिशब्दः स्यात्, 'जाते' ह्युत्तरसूत्रेण विकल्पो विधीयते ?

त्वात् परनिपातः। अनाच्छादनादिति किम्? वस्त्रंच्छन्नः। वसंनच्छन्नः। अकृतमितप्रतिपन्ना इति किम्? कुण्डंकृतः। कुण्डंमितः। कुण्डंप्रतिपन्नः। एतेषु बहुव्रीहिषु निष्ठान्तस्य पूर्वनिपातो न भवत्यस्मादेव ज्ञापकात्। प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो योजयितव्यः। सुखादयस्तृतीयेऽध्याये (३.१.१८) पठ्यन्ते॥

## वा जाते ॥ १७१ ॥

जातशब्द उत्तरपदे वान्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः। दन्तजातः, दन्तंजातः। स्तनजातः, स्तनंजातः। कालात्—मासजातः, मासंजातः। संवत्सरजातः, संवत्सरजातः। सुखादिभ्यः—सुखजातः, सुखजातः। दुःखजातः, दुःखजातः॥

## नञ्सुभ्याम् ॥ १७२ ॥

नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति। अयवो देशः। अव्रीहिः। अमाषः। सुयवः। सुव्रीहिः। सुमाषः। समासस्यैतदन्तोदात्तत्वमिष्यते। समासान्ताश्चावयवा भवन्तीति अनृचो बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति॥

## कपि पूर्वम् ॥ १७३ ॥

नञ्सुभ्यां कपि परतः पूर्वमन्तोदात्तं भवति। अकुमारीको देशः। अवृषलीकः। अब्रह्मबन्धूकः। सुकुमारीकः। सुवृषलीकः। सुब्रह्मबन्धूकः॥

## ह्रस्वान्तेऽन्त्यात् पूर्वम् ॥ १७४ ॥

ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे। अयवंको देशः। अव्रीहिंकः। अमाषंकः। सुयवंकः। सुव्रीहिंकः। सुमाषंकः। पूर्वमिति वर्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्—ह्रस्वान्तेऽन्त्यादेव[1] पूर्वमुदात्तं भवति, न कपि पूर्वमिति। तेन अज्ञकः सुज्ञक इत्यत्र कबन्तस्यैवान्तोदात्तत्वं भवति॥

## बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥

उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्तते, तस्मान् नञ इव स्वरो भवति। 'नञ्सुभ्याम्'

---

१ – 'एव' इति नास्ति है०।

( ६.२.१७२ ) इत्युक्तम्, बहोरपि तथा भवति। बहुयवो देशः। बहुव्रीहिः। बहुतिलः। 'कपि पूर्वम्' ( ६.२.१७३ ) इत्युक्तम्, बहोरपि तथा भवति। बहुकुमारीकों देशः। बहुवृषलीकः। बहुब्रह्मबन्धूकः। 'ह्रस्वान्तेऽन्त्यात् पूर्वम्' ( ६.२.१७४ ) इत्युक्तम्, बहोरपि तथा भवति। बहुयवको देशः। बहुव्रीहिकः। बहुमाषकः। 'नञो जरमरमित्रमृताः' ( ६. २.११६ ) इत्युक्तम्, बहोरपि तथा भवति। बहुजरः। बहुमरः। बहुमित्रः। बहुमृतः। उत्तरपदभूम्नीति किम्? बहुषु मनोऽस्य बहुमना अयम्॥

## न गुणादयोऽवयवाः ॥ १७६ ॥

गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति। बहुगुणा रज्जुः। बह्वक्षरं पदम्। बहुच्छन्दोमानम्। बहुसूक्तः। बह्वध्यायः। गुणादिराकृतिगणो द्रष्टव्यः। अवयवा इति किम् ? बहुगुणो ब्राह्मणः। अध्ययनश्रुतसदाचारादयोऽत्र गुणाः॥

## उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥ १७७ ॥

उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे। प्रपृष्ठः। प्रोदरः। प्रललाटः। ध्रुवमित्येकरूपमुच्यते। ध्रुवमस्य शीलम्[1] इति यथा। सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठः। उपसर्गादिति किम् ? दर्शनीयललाटः। स्वाङ्गमिति किम्? प्रशाखो वृक्षः। ध्रुवमिति किम् ? उद्बाहुः क्रोशति। अपर्श्विति किम् ? उत्पर्शुः। विपर्शुः॥

## वनं समासे ॥ १७८ ॥

समासमात्रे वनमित्येतदुत्तरपदमुपसर्गात् परमन्तोदात्तं भवति। प्रवणे यष्टव्यम्। निर्वणे प्रणिधीयते। 'प्रनिरन्तः०' ( ८.४.५ ) इति णत्वम्। समासग्रहणं समासमात्रपरिग्रहार्थम्, बहुव्रीहावेव हि स्यात्॥

## अन्तः ॥ १७९ ॥

अन्तश्शब्दादुत्तरं वनमन्तोदात्तं भवति। अन्तर्वणो देशः। अनुपसर्गार्थ आरम्भः॥

## अन्तश्च ॥ १८० ॥

अन्तश्शब्दश्चोत्तरपदमुपसर्गादन्तोदात्तं भवति। प्रान्तः। पर्यन्तः। बहुव्रीहिरयं प्रादिसमासो वा॥

---

१ - 'शीतम्' इत्यपपाठो मुद्रितेषु।

## न निविभ्याम् ॥ १८१ ॥

नि वि इत्येताभ्यामुत्तरोऽन्तश्शब्दो नान्तोदात्तो भवति। न्यंन्तः। व्यंन्तः ( तैं० ब्रा० २.१.३.१ )। पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः। तत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( ८.२.४ ) इति स्वरितो भवति॥

## परेरभितोभावि मण्डलम् ॥ १८२ ॥

परेरुत्तरमभितोभाविवचनं मण्डलं चान्तोदात्तं भवति। परिकूलम्। परितीरम्। परिमण्डलम्। बहुव्रीहिरयं प्रादिसमासोऽव्ययीभावो वा। अव्ययीभावपक्षेऽपि हि 'परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु' ( ६.२.३३ ) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमनेन बाध्यते। अभित इत्युभयतः। अभितो भावोऽस्यास्तीति तदभितोभावि। यच्चैवंस्वभावं कूलादि तदभितोभाविग्रहणेन गृह्यते॥

## प्रादस्वाङ्गं संज्ञायाम् ॥ १८३ ॥

प्रादुत्तरपदमस्वाङ्गवाचि संज्ञायां विषयेऽन्तोदात्तं भवति। प्रकोष्ठम्। प्रगृहम्। प्रद्वारम्। अस्वाङ्गमिति किम् ? प्रहंस्तम्। प्रपंदम्। संज्ञायामिति किम् ? प्रपींठम्॥

## निरुदकादीनि च ॥ १८४ ॥

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति। निरुदकम्। निरुलपम्। निरुपलम् इत्यन्ये पठन्ति। निर्मशकम्। निर्मक्षिकम्। एषां प्रादिसमासो बहुव्रीहिर्वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। निष्कालकः। निष्क्रान्तः कालकादिति कन्प्रत्ययान्तेन कालशब्देन प्रादिसमासः। निष्कालिक इत्यन्ये पठन्ति। निष्पेषः। दुस्तरीपः। 'अवितृस्तृतन्त्रिभ्य ईः' ( प० उ० ३.१५८ )—तरीः। तां पातीति तरीपः। कुत्सितस्तरीपो दुस्तरीपः। निस्तरीप इति केचित् पठन्ति। अपरे निस्तरीक इति। ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति। निरजिनम्। उदजिनम्। उपाजिनम्। परेर्हस्तपादकेशकर्षाः ( ग० सू० १७९)। परिहस्तः। परिपादः। परिकेशः। परिकर्षः। निरुदकादिराकृतिगणः॥

## अभेर्मुखम् ॥ १८५ ॥

अभेरुत्तरं मुखमन्तोदात्तं भवति । अभिमुखः। बहुव्रीहिरयं प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। 'उपसर्गात् स्वाङ्गम्०' ( ६.२.१७७ ) इति सिद्धे वचनमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च। अभिमुखा शाला॥

## अपाच्च ॥ १८६ ॥

अपात् चोत्तरं मुखमन्तोदात्तं भवति। अपमुखः। अपमुखम्। अव्ययीभावोऽप्यत्र प्रयोजयति। तत्रापि हि 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' ( ६.२.३३ ) इत्युक्तम्। योगविभाग उत्तरार्थः॥

## स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च ॥ १८७ ॥

स्फिग पूत वीणा अञ्जस् अध्वन् कुक्षि इत्येतान्युत्तरपदानि सीरनामानि च नामशब्दश्चापादुत्तराण्यन्तोदात्तानि भवन्ति। अपस्फिगम्। अपपूतम्। अपवीणम्। अपाञ्जः। अपाध्वा। 'उपसर्गादध्वनः' ( ५.४.८५ ) इति यदा समासान्तो नास्ति, तदानेनान्तोदात्तत्वं भवति। तस्मिन् हि सत्यच्प्रत्ययस्य चित्त्वादेव सिद्धम्। अनित्यश्च समासान्तः ( परि० ८४ ) इत्येतदेव ज्ञापकम्। अपकुक्षिः। अपसीरः। अपहलम्। अपलाङ्गलम्। अपनाम। सर्वत्र प्रादिसमासो बहुव्रीहिरव्ययीभावो वा। स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च॥

## अधेरुपरिस्थम् ॥ १८८ ॥

अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं भवति। अधिदन्तः। अधिकर्णः। अधिकेशः। अध्यारूढो दन्त इति प्रादिसमासः। अध्यारूढो वा दन्त इति समानाधिकरण उत्तरपदलोपी समासः। दन्तस्योपरि योऽन्यो दन्तो जायते, स उच्यतेऽधिदन्त इति। उपरिस्थमिति किम्? अधिकरणम्॥

## अनोरप्रधानकनीयसी ॥ १८९ ॥

अनोरुत्तरमप्रधानवाचि कनीयश्चान्तोदात्तं भवति। अनुगतो ज्येष्ठम् अनुज्येष्ठः। अनुमध्यमः। पूर्वपदार्थप्रधानः प्रादिसमासोऽयम्। अनुगतः कनीयान् अनुकनीयान्। उत्तरपदार्थप्रधानोऽयम्। प्रधानार्थं च कनीयोग्रहणम्। अप्रधानकनीयसी इति किम् ? अनुगतो ज्येष्ठो अनुज्येष्ठः॥

## पुरुषश्चान्वादिष्टः ॥ १९० ॥

पुरुषशब्दोऽन्वादिष्टवाची चानोरुत्तरोऽन्तोदात्तो भवति। अन्वादिष्टः पुरुषः अनुपुरुषः। अन्वादिष्टोऽन्वाचितः कथितानुकथितो वा। अन्वादिष्ट इति किम् ? अनुगतः पुरुषः अनुपुरुषः॥

## अतेरकृत्पदे ॥ १९१ ॥

अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तो भवति। अत्यङ्कुशो नागः। अतिकुशोऽश्वः। पदशब्दः खल्वपि—अतिपदा शक्वरी। अकृत्पद इति किम् ? अतिंकारकः ॥ अतेर्धातुलोप इति वक्तव्यम् ॥ इह मा भूत्—शोभनो गार्ग्यः अतिंगार्ग्यः। इह च यथा स्यात्—अतिक्रान्तः कारकाद् अतिकारक इति ॥

## नेरनिधाने ॥ १९२ ॥

नेः परमुत्तरपदमन्तोदात्तं भवत्यनिधाने। निधानमप्रकाशता। निमूलम्। न्युक्षम्। नितृणम्। बहुव्रीहिरयं प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। अनिधान इति किम् ? निवांग् वृषलः। निदंण्डः। निहितवाक्, निहितदण्ड इत्यर्थः। निशब्दोऽत्र निधानार्थं ब्रवीति। प्रादयो हि वृत्तिविषये ससाधनां क्रियामाहुः ॥

## प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥

प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ता भवन्ति। प्रतिगतः अंशुः प्रत्यंशुः। प्रतिजनः। प्रतिराजा। राजशब्दः समासान्तस्यानित्यत्वाद् ( परि० ८४ ) यदा टज् नास्ति, तदा प्रयोजयति। तस्मिन् हि सति चित्त्वादेवान्तोदात्तत्वं सिद्धम्। तत्पुरुष इति किम् ? प्रतिगता अंशवोऽस्य प्रत्यंशुः अयमुष्ट्रः॥ अंशु। जन। राजन्। उष्ट्र। खेटक। अजिर। आर्द्रा। श्रवण। कृत्तिका। अर्ध। पुर ॥

## उपाद् द्व्यजजिनमगौरादयः ॥ १९४ ॥

उपादुत्तरं द्व्यजजिनं चान्तोदात्तं भवति तत्पुरुषे समासे गौरादीन् वर्जयित्वा। उपगतो देवम् उपदेवः। उपसोमः। उपेन्द्रः। उपहोडः। अजिन—उपाजिनम्। अगौरादय इति किम् ? उपंगौरः। उपंतैषः। तत्पुरुष इत्येव—उपगतः सोमोऽस्य उपंसोमः॥ गौर। तैष। तैट। लट। लोट। जिह्वा। कृष्णा। कन्या। गुड। कल्प। पाद। गौरादिः॥

## सोरवक्षेपणे ॥ १९५ ॥

सुशब्दात् परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवत्यवक्षेपणे गम्यमाने। अवक्षेपणं निन्दा। इह खल्विदानीं सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्यवसितः। सुशब्दोऽत्र पूजायामेव। वाक्यार्थस्तु अवक्षेपणमसूयया तथाभिधानात्। सोरिति किम् ? कुब्राह्मणः। अवक्षेपण इति किम् ? शोभनेषु तृणेषु सुतृंणेषु ॥

## विभाषोत्पुच्छे ॥ १९६ ॥

उत्पुच्छशब्दे तत्पुरुषे विभाषान्त उदात्तो भवति। उत्क्रान्तः पुच्छाद् उत्पुच्छः, उत्पुंच्छः। यदा तु पुच्छमुदस्यति उत्पुच्छयति, उत्पुच्छयतेरच् , उत्पुच्छः, तदा थाथादिसूत्रेण ( ६.२.१४४ ) नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयमिति सेयमुभयत्रविभाषा भवति। तत्पुरुष इत्येव—उदस्तं पुच्छमस्य उत्पुंच्छः॥

## द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ १९७ ॥

द्वि त्रि इत्येताभ्यामुत्तरेषु पाद् दत् मूर्धन् इत्येतेषूत्तरपदेषु यो बहुव्रीहिस्तत्र विभाषान्त उदात्तो भवति। द्वौ पादावस्य द्विपात् ( तै० सं० २.६.८.४ ), द्विपांत्। त्रिपात्, त्रिपांत्। द्विदन् , द्विदंन्। त्रिदन्, त्रिदंन्। द्विमूर्धा, द्विमूंर्धा। त्रिमूर्धा, त्रिमूंर्धा। पादिति कृताकारलोपः पादशब्दो गृह्यते। दन्निति कृतददादेशो दन्तशब्दः। मूर्धन्निति त्वकृत-समासान्तो नान्त एव मूर्धन्शब्दः। तस्यैतत् प्रयोजनमसत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात्। एतदेव ज्ञापकमनित्यः समासान्तः ( परि० ८४ ) भवतीति। यदापि समासान्तः क्रियते, तदापि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वात् च समासान्तस्यान्तोदात्तत्वं पक्षे भवत्येव। द्विमूर्धः। त्रिमूर्धः। द्वित्रिभ्यामिति किम् ? कल्याणंमूर्धा। पादादिष्विति किम् ? द्विहंस्तम्। बहुव्रीहाविति किम् ? द्वयोर्मूर्धा द्विमूर्धा॥

## सक्थं चाक्रान्तात् ॥ १९८ ॥

सक्थमिति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते, सोऽक्रान्तात् परो विभाषान्तो-दात्तो भवति। गौरसक्थः, गौरसंक्थः। श्लक्ष्णसक्थः, श्लक्ष्णसंक्थः। अक्रान्तादिति किम्? चक्रसक्थः। पचश्चित्त्वाद् नित्यमन्तोदात्तत्वं भवति॥

## परादिश्छन्दसि बहुलम् ॥ १९९ ॥

छन्दसि विषये परादिरुदात्तो भवति बहुलम्। परशब्देनात्र सक्थशब्द एव गृह्यते। अञ्जिसक्थंमालभेत। त्वाष्ट्रौ लोमशसक्थौ ( तै० सं० ५.५.२३.१ )। ऋजुबाहुः। वाक्पतिः। चित्पतिः।

परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः॥

परादिरुदाहृतः। परान्तः॥ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम्॥ त्रिबन्धुरेणं। त्रिवृता रथेन त्रिचक्रेणं ( ऋ० १.११८.२ )। पूर्वान्तः॥ पूर्वपदान्तोदात्त-

प्रकरणे मरुद्वृधादीनां[1] छन्दस्युपसंख्यानम् ॥ मरुद्वृधः ( ऋ० ३.१३.६ )। पूर्वादिः ॥ पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ॥ दिवोदासाय सामगाय ते इत्येवमादि सर्वं संगृहीतं भवति ॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य द्वितीयः पादः ॥



## ॥ षष्ठाध्यायस्य तृतीयः पादः ॥

### अलुगुत्तरपदे ॥ १ ॥

अलुगिति च, उत्तरपद इति चैतदधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपद इत्येवं तद् वेदितव्यम्। वक्ष्यति—'पञ्चम्याः स्तोकादिभ्यः' ( ६.३.२ )। स्तोकान्मुक्तः। अल्पान्मुक्तः। उत्तरपद इति किम् ? निष्क्रान्तः स्तोकाद् निःस्तोकः। अन्यार्थमिदमुत्तरपदग्रहणमिहाप्यलुको निवृत्तिं करोतीत्येवमर्थं लक्षणप्रतिपदोक्तपरिभाषा ( परि० १०५ ) नाश्रयितव्या। अलुगधिकारः प्रागानङः ( ६.३.२५ )। उत्तरपदाधिकारः प्रागङ्गाधिकारात् ( ६.४.१ )॥

### पञ्चम्याः स्तोकादिभ्यः ॥ २ ॥

स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि, तेभ्यः परस्याः पञ्चम्या उत्तरपदेऽलुग् भवति। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः। समासे कृते प्रातिपदिकत्वात् सुपो लुकि प्राप्ते प्रतिषेधः क्रियते। द्विवचनबहुवचनान्तानां तु स्तोकादीनामनभिधानात् समास एव न भवति—स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्त इति। तेनात्र न कदाचिदैकपद्यमैकस्वर्यं च भवति ॥ ब्राह्मणाच्छंसिन उपसंख्यानं कर्तव्यम् ॥ ब्राह्मणादादाय शंसतीति ब्राह्मणाच्छंसीति। ऋत्विग्विशेषस्य रूढिरियम्। तस्य व्युत्पत्तिरसता सता वावयवार्थेन क्रियते ॥

१ - 'मरुद्वृद्धादीनाम्' इत्यपपाठो मुद्रितेषु। २ - द्र० — पूर्वत्र ( ६.२.९१ )।

## ओजःसहोऽम्भस्तमसस्तृतीयायाः ॥ ३ ॥

ओजस् सहस् अम्भस् तमस् इत्येतेभ्य उत्तरस्यास्तृतीयाया अलुग् भवत्युत्तरपदे। ओजसाकृतम्। सहसाकृतम्। अम्भसाकृतम्। तमसाकृतम् ॥ अञ्जस उपसंख्यानम् ॥ अञ्जसाकृतम् ॥ पुंसानुजो जनुषान्ध इति वक्तव्यम् ॥ पुंसानुजः। जनुषान्धः ॥

## मनसः संज्ञायाम् ॥ ४ ॥

मनस उत्तरस्यास्तृतीयायाः संज्ञायामलुग् भवति। मनसादत्ता। मनसागुप्ता। मनसासंगता। संज्ञायामिति किम् ? मनोदत्ता। मनोगुप्ता ॥

## आज्ञायिनि च ॥ ५ ॥

आज्ञायिन्युत्तरपदे मनस उत्तरस्यास्तृतीयाया अलुग् भवति। मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ॥

## आत्मनश्च पूरणे ॥ ६ ॥

आत्मन उत्तरस्यास्तृतीयायाः पूरणप्रत्ययान्त उत्तरपदेऽलुग् भवति। आत्मनापञ्चमः। आत्मनाषष्ठः। 'तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम्' ( २.३.१८. वा० ) इति तृतीया। तृतीयेति योगविभागात् समासः। आत्मना वा कृतः पञ्चम आत्मनापञ्चमः। कथं जनार्दनस्त्वात्मचतुर्थ एवेति ? बहुव्रीहिरयमात्मा चतुर्थोऽस्यासावात्मचतुर्थः ॥

## वैयाकरणाख्यायां चतुर्थ्याः ॥ ७ ॥

वैयाकरणानामाख्या वैयाकरणाख्या। आख्या संज्ञा। यया संज्ञया वैयाकरणा एव व्यवहरन्ति, तस्यामात्मन उत्तरस्याश्चतुर्थ्या अलुग् भवति। आत्मनेपदम्। आत्मनेभाषा। तादर्थ्ये चतुर्थी ( २.३.१३ वा० )। चतुर्थीति योगविभागात् समासः ॥

## परस्य च ॥ ८ ॥

परस्य च या चतुर्थी तस्या वैयाकरणाख्यायामलुग् भवति। परस्मैपदम्। परस्मैभाषा ॥

## हलदन्तात् सप्तम्याः संज्ञायाम् ॥ ९ ॥

हलन्ताददन्तात् चोत्तरस्याः सप्तम्याः संज्ञायामलुग् भवति। युधिष्ठिरः। त्वचिसारः। गविष्ठिर इत्यत्र तु 'गवियुधिभ्यां स्थिरः' ( ८.३.९५ ) इत्यत एव वचनादलुक्। अदन्तात्—

अरण्येतिलकाः। अरण्येमाषकाः। वनेकिंशुकाः। वनेहरिद्रकाः। वनेबल्वजकाः। पूर्वाह्णे-स्फोटकाः। कूपेपिशाचकाः। हलदन्तादिति किम्? नद्यां कुक्कुटिका नदीकुक्कुटिका। भूम्यां पाशाः भूमिपाशाः। संज्ञायामिति किम्? अक्षशौण्डः॥ हृद्द्युभ्यां ङेः॥ हृद् दिव् इत्येताभ्यामुत्तरस्य ङेरलुग् भवति। हृदिस्पृक्। दिविस्पृक्॥

## कारनाम्नि च प्राचां हलादौ॥ १० ॥

प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्या अलुग् भवति। स्तूपेशाणः[1]। दृषदिमाषकः। हलेद्विपदिका। हलेत्रिपदिका। कारविशेषस्य संज्ञा एताः, तत्र पूर्वेणैव सिद्धे नियमार्थमिदम्। एते च त्रयो नियमविकल्पा अत्रेष्यन्ते—कारनाम्न्येव, प्राचामेव, हलादावेवेति। कारनाम्नीति किम्? अभ्यर्हिते पशुः अभ्यर्हितपशुः। कारादन्यस्यैतद् देयस्य नाम। प्राचामिति किम्? यूथे पशुः यूथपशुः। हलादाविति किम्? अविकट उरणः अविकटोरणः। हलदन्तादित्येव—नद्यां दोहनी नदीदोहनी॥

## मध्याद् गुरौ॥ ११ ॥

मध्यादुत्तरस्याः सप्तम्या गुरावुत्तरपदेऽलुग् भवति। मध्येगुरुः॥ अन्ताच्चेति वक्तव्यम्॥ अन्तेगुरुः। सप्तमीति योगविभागात् समासः॥

## अमूर्धमस्तकात् स्वाङ्गादकामे॥ १२ ॥

मूर्धमस्तकवर्जितात् स्वाङ्गादुत्तरस्याः सप्तम्या अकाम उत्तरपदेऽलुग् भवति। कण्ठे कालोऽस्य कण्ठेकालः। उरसिलोमा। उदरेमणिः। अमूर्धमस्तकादिति किम्? मूर्धशिखः। मस्तकशिखः। अकाम इति किम्? मुखे कामोऽस्य मुखकामः। स्वाङ्गादिति किम्? अक्षशौण्डः। हलदन्तादित्येव—अङ्गुलित्राणः। जङ्घावलिः॥

## बन्धे च विभाषा॥ १३ ॥

बन्ध इति घञन्तो गृह्यते। तस्मिन्नुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्या विभाषालुग् भवति। हस्तेबन्धः, हस्तबन्धः। चक्रेबन्धः, चक्रबन्धः। उभयत्रविभाषेयम्। स्वाङ्गाद्धि बहुव्रीहौ पूर्वेण नित्यमलुक् प्राप्नोति। तत्पुरुषे तु स्वाङ्गादस्वाङ्गात् च 'नेन्सिद्धबध्नातिषु च' (६.३.१९) इति प्रतिषेधः प्राप्नोति। हलदन्तादित्येव—गुप्तिबन्धः॥

## तत्पुरुषे कृति बहुलम्॥ १४ ॥

---

१ – 'सूपेशाणः' इत्यपपाठः (द्र० ६.२.६५)। 'कूपेशाणम्' इति न्यासः।

तत्पुरुषे समासे कृदन्त उत्तरपदे सप्तम्या बहुलमलुग् भवति। स्तम्बेरमः। कर्णेजपः। न च भवति—कुरुचरः। मद्रचरः॥

## प्रावृट्शरत्कालदिवां जे॥ १५ ॥

प्रावृट् शरत् काल दिव् इत्येतेषां ज उत्तरपदे सप्तम्या अलुग् भवति। प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यैवायं प्रपञ्चः॥

## विभाषा वर्षक्षरशरवरात् ॥ १६ ॥

वर्ष क्षर शर वर इत्येतेभ्य उत्तरस्याः सप्तम्या ज उत्तरपदे विभाषालुग् भवति। वर्षेजः, वर्षजः। क्षरेजः, क्षरजः। शरेजः, शरजः। वरेजः, वरजः॥

## घकालतनेषु कालनाम्नः॥ १७ ॥

घसंज्ञके प्रत्यये कालशब्दे तनप्रत्यये च परतः कालनाम्न उत्तरस्याः सप्तम्या विभाषालुग् भवति। घ—पूर्वाह्णेतरे, पूर्वाह्णतरे। पूर्वाह्णेतमे, पूर्वाह्णतमे। काल—पूर्वाह्णेकाले, पूर्वाह्णकाले। तन—पूर्वाह्णेतने, पूर्वाह्णतने। कालनाम्न इति किम् ? शुक्लतरे। शुक्लतमे। हलदन्तादित्येव—रात्रितरायाम्। 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते' ( परि० २५ ) 'हृदयस्य हृल्लेख०' ( ६.३.५० ) इति लेखग्रहणाद् लिङ्गात्। तेन घतनग्रहणे तदन्तग्रहणं न भवति। काल इति न स्वरूपग्रहणम्॥

## शयवासवासिष्वकालात् ॥ १८ ॥

शय वास वासिन् इत्येतेषूत्तरपदेष्वकालवाचिन उत्तरस्याः सप्तम्या विभाषालुग् भवति। खेशयः, खशयः। ग्रामेवासः, ग्रामवासः। ग्रामेवासी, ग्रामवासी। अकालादिति किम् ? पूर्वाह्णशयः। हलदन्तादित्येव—भूमिशयः ॥ अपो योनियन्मतुषु सप्तम्या अलुग् वक्तव्यः॥ अप्सुयोनिः। अप्सव्यः। अप्सुमन्तौ ( आ० श्रौ० २.१३.३ )। अप्सु भव इति दिगादित्वाद् ( ४.३.५४ ) यत् प्रत्ययः। सर्वत्र सप्तमीति योगविभागात् समासः॥

## नेन्सिद्धबध्नातिषु च॥ १९ ॥

इन्नन्त उत्तरपदे सिद्धशब्दे बध्नातौ च परतः सप्तम्या अलुग् न भवति। स्थण्डिलवर्ती[1]।

---

१ – 'स्थण्डिलशायी ' इति बाल०।

सिद्ध—सांकाश्यसिद्धः। काम्पिल्यसिद्धः। बध्नाति—चक्रबद्धः। चारबद्धः। सप्तमीति योगविभागात् समासः। चक्रबन्ध इति केचिदुदाहरन्ति तत् पचाद्यजन्तं द्रष्टव्यम्। घञन्ते हि 'बन्धे च विभाषा' (६.३.१३) इत्युक्तम्॥

## स्थे च भाषायाम्॥ २० ॥

स्थे चोत्तरपदे भाषायां सप्तम्या अलुग् न भवति। समस्थः। विषमस्थः। कूटस्थः। पर्वतस्थः। भाषायामिति किम्? कृष्णोऽस्याखरेष्ठः (मा० सं० २.१)। 'पूर्वपदात्' (८.३.१०४) इति षत्वम्॥

## षष्ठ्या आक्रोशे॥ २१ ॥

आक्रोशे गम्यमान उत्तरपदे षष्ठ्या अलुग् भवति। चौरस्यकुलम्। वृषलस्यकुलम्। आक्रोश इति किम्? ब्राह्मणकुलम्॥ षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग् वक्तव्यः॥ वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः॥ आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति चालुग् वक्तव्यः॥ अमुष्यापत्यमामुष्यायणः। नडादित्वात् (४.१.९९) फक्। अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका। मनोज्ञादित्वाद् (५.१.१३३) वुञ्। तथा आमुष्यकुलिकेति॥ देवानांप्रिय इत्यत्र च षष्ठ्या अलुग् वक्तव्यः॥ देवानांप्रियः॥ शेपपुच्छलाङ्गूलेषु शुनः संज्ञायां षष्ठ्या अलुग् वक्तव्यः॥ शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः॥ दिवश्च दासे षष्ठ्या अलुग् वक्तव्यः॥ दिवोदासाय गायति॥

## पुत्रेऽन्यतरस्याम्॥ २२ ॥

पुत्रशब्द उत्तरपद आक्रोशे गम्यमानेऽन्यतरस्यां षष्ठ्या अलुग् भवति। दास्याःपुत्रः, दासीपुत्रः। वृषल्याःपुत्रः, वृषलीपुत्रः। आक्रोश इत्येव—ब्राह्मणीपुत्रः॥

## ऋतो विद्यायोनिसंबन्धेभ्यः॥ २३ ॥

ऋकारान्तेभ्यो विद्यासंबन्धवाचिभ्यो योनिसंबन्धवाचिभ्यश्चोत्तरस्याः षष्ठ्या अलुग् भवति। होतुरन्तेवासी। होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः। ऋत इति किम्? आचार्यपुत्रः। मातुलपुत्रः। विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्। विद्यायोनिसंबन्धवाचिन्येवोत्तरपदे यथा स्याद्, अन्यत्र मा भूत्। होतृधनम्। पितृधनम्। होतृगृहम्। पितृगृहम्॥

## विभाषा स्वसृपत्योः ॥ २४ ॥

स्वसृ पति इत्येतयोरुत्तरपदयोर्ऋकारान्तेभ्यो विद्यायोनिसंबन्धवाचिभ्य उत्तरस्याः षष्ठ्या[1] विभाषालुग् भवति। मातुःष्वसा, मातुःस्वसा, मातृष्वसा। पितुःष्वसा, पितुःस्वसा, पितृष्वसा। यदा लुक् तदा 'मातृपितृभ्यां स्वसा' (८.३.८४) इति नित्यं षत्वम्। यदा त्वलुक् तदा 'मातुःपितुर्भ्यामन्यतरस्याम्' (८.३.८५) इति विकल्पेन षत्वम्। दुहितुःपतिः, दुहितृपतिः। ननान्दुःपतिः, ननान्दृपतिः ॥

## आनङ् ऋतो द्वन्द्वे ॥ २५ ॥

ऋकारान्तानां विद्यायोनिसंबन्धवाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति। होतापोतारौ। नेष्टोद्गातारौ। प्रशास्ताप्रतिहर्तारौ। योनिसंबन्धेभ्यः—मातापितरौ। यातानान्दरौ। नकारोच्चारणं रपरत्वनिवृत्त्यर्थम्। ऋत इति किम्? पितृपितामहौ। पुत्र इत्यनुवर्तते, ऋत इति च। तेन पुत्रशब्देऽप्युत्तरपद ऋकारान्तस्यानङादेशो भवति। पितापुत्रौ। मातापुत्रौ ॥

## देवताद्वन्द्वे च ॥ २६ ॥

देवतावाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति। इन्द्रावरुणौ (ऋ० ६.६८.१)। इन्द्रासोमौ (ऋ० ६.७२.३)। इन्द्राबृहस्पती (ऋ० ४.४९.१)। द्वन्द्व इति वर्तमाने पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यार्थम्। अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वम् इत्येतद् निपात्यते। तत्र ये लोके प्रसिद्धसाहचर्या वेदे च ये सहवापनिर्दिष्टास्तेषामिह ग्रहणं भवति। तेन ब्रह्मप्रजापती, शिववैश्रवणावित्येवमादौ न भवति ॥ उभयत्र वायोः प्रतिषेधो वक्तव्यः ॥ अग्निवायू। वाय्वग्नी ॥

## ईदग्नेः सोमवरुणयोः ॥ २७ ॥

सोम वरुण इत्येतयोर्देवताद्वन्द्वेऽग्नेरीकारादेशो भवति। अग्नीषोमौ (ऋ० १.९३.१)। अग्नीवरुणौ। 'अग्नेः स्तुत्स्तोमसोमाः' (८.३.८२) इति षत्वम् ॥

## इद् वृद्धौ ॥ २८ ॥

कृतवृद्धावुत्तरपदे देवताद्वन्द्वेऽग्नेरिकारादेशो भवति। आग्निवारुणीमनड्वाहीमालभेत

---

१ – 'उत्तरस्याः षष्ठ्याः' इति नास्ति मुद्रितेषु।

( काठ० सं० १३.६ )। आग्निमारुतं कर्म क्रियते। अग्नीवरुणौ देवते[1] अस्य, अग्नामरुतौ[2] देवते[1] अस्येति तद्धितः। तत्र 'देवताद्वन्द्वे च' ( ७.३.२१ ) इत्युभयपदवृद्धौ कृतायामानङम्[3] ईत्वं च बाधितुमिकारः क्रियते। वृद्धाविति किम् ? आग्नेन्द्रः। 'नेन्द्रस्य परस्य' ( ७.३.२२ ) इत्युत्तरपदवृद्धिः प्रतिषिध्यते ॥ इद् वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः ॥ आग्नावैष्णवम् एकादशकपालं[4] निर्वपेत् ( मै० सं० १.४.१४ )॥

## दिवो द्यावा ॥ २९ ॥

दिवित्येतस्य द्यावा इत्ययमादेशो भवति देवताद्वन्द्व उत्तरपदे। द्यावांक्षामा ( ऋ० ८.१८.१६ )। द्यावाभूमीं ( ऋ० १०.६५.४ )॥

## दिवसश्च पृथिव्याम् ॥ ३० ॥

पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवो दिवसित्ययमादेशो भवति, चकाराद् द्यावा च। दिवस्पृथिव्यौ ( ऋ० २.२.३ )। द्यावापृथिव्यौ। अकारोच्चारणं सकारस्य विकाराभावप्रतिपत्त्यर्थम्। तेन रुत्वादीनि न भवन्ति। कथं 'द्यावा चिदस्मै पृथिवी नमेते' ( ऋ० २.१२.१३ ) इति ? कर्तव्योऽत्र यत्नः॥

## उषासोषसः ॥ ३१ ॥

उषस उषासा इत्ययमादेशो भवति देवताद्वन्द्व उत्तरपदे। उषासासूर्यम्। उषासानक्ता ( ऋ० १.१२२.२ )॥

## मातरपितरावुदीचाम् ॥ ३२ ॥

मातरपितरावित्युदीचामाचार्याणां मतेनारङादेशो मातृशब्दस्य निपात्यते। मातरपितरौ। उदीचामिति किम् ? मातापितरौ॥

## पितरामातरा चच्छन्दसि ॥ ३३ ॥

पितरामातरा इति छन्दसि निपात्यते। आ मां गन्तां पितरामातरा च ( मा० सं० ९.१९ )। पूर्वपदस्याराङादेशो निपात्यते। उत्तरपदे तु 'सुपां सुलुक्०' ( ७.१.३९ ) इति आकारादेशः। तत्र 'ऋतो ङिसर्वनामस्थानयोः' ( ७.३.११० ) इति गुणः। छन्दसीति किम् ? मातापितरौ॥

---

१ - 'देवता' इति बाल०। २ - 'अग्नीमरुतौ' इत्यपपाठो मुद्रितेषु।

३ - 'आनङ्' इत्यपपाठो मुद्रितेषु। ४ - 'चरुम्' इति मुद्रितेषु पाठः।

## स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ३४ ॥

भाषितः पुमान् येन समानायामाकृतावेकस्मिन् प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः। तदेतदेवं कथं भवति ? भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते, तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः। ऊङोऽभावोऽनूङ्, भाषितपुंस्कादनूङ् यस्मिन् स्त्रीशब्दे, स भाषितपुंस्कादनूङ् स्त्रीशब्दः। बहुव्रीहिरयम्, अलुग् निपातनात् पञ्चम्याः। तस्य भाषितपुंस्कादनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति समानाधिकरण उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते। दर्शनीयभार्यः। श्लक्ष्णचूडः। दीर्घजङ्घः। स्त्रिया इति किम् ? ग्रामणि ब्राह्मणकुलं दृष्टिरस्य ग्रामणिदृष्टिः। भाषितपुंस्कादिति किम् ? खट्वाभार्यः। समानायामाकृताविति किम् ? द्रोणीभार्यः। कथं गर्भिभार्यः, प्रसूतभार्यः, प्रजातभार्य इति ? कर्तव्योऽत्र यत्नः। अनूङिति किम् ? ब्रह्मबन्धूभार्यः। समानाधिकरण इति किम् ? कल्याण्या माता कल्याणीमाता। स्त्रियामिति किम् ? कल्याणी प्रधानमेषां कल्याणीप्रधाना इमे। अपूरणीति किम् ? कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः। कल्याणीदशमाः ॥ प्रधानपूरणीग्रहणं कर्तव्यम् ॥ इह मा भूत्—कल्याणपञ्चमीकः पक्ष इति। 'अप् पूरणीप्रमाण्योः' ( ५.४.११६ ) इत्यत्रापि प्रधानपूरणीग्रहणमेवेत्यप्रत्ययो न भवति। अप्रियादिष्विति किम् ? कल्याणीप्रियः॥ प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्तिः। सचिवा। अम्बा। कान्ता। क्षान्ता। समा। चपला। दुहिता। वामा। प्रियादिः। दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धमिति समाधेयम् ॥

## तसिलादिष्वा कृत्वसुचः ॥ ३५ ॥

'पञ्चम्यास्तसिल्' ( ५.३.७ ) इत्यतः प्रभृति 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' ( ५.४.१७ ) इति प्रागेतस्माद् ये प्रत्ययास्तेषु भाषितपुंस्कादनूङ् स्त्रियाः पुंवद् भवति। तस्याः शालायाः ततः। तस्यां तत्र। यस्या यतः। यस्यां यत्र। तसिलादिषु परिगणनं कर्तव्यम्। त्रतसौ ( ५.३.१०, ७ )। तरप्तमपौ ( ५.३.५७, ५५ )। चरट्जातीयरौ ( ५.३.५३, ६९ )। कल्पब्देश्यदेशीयरः ( ५.३.६७ )। रूपप्पाशपौ ( ५.३.६६, ४७ )। थमुथालौ ( ५.३.२४, २३ )। दार्हिलौ ( ५.३.१५, १६ )। तिल्तातिलौ ( ५.४.४१ ) ॥ शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः॥ बह्वीभ्यो देहि। अल्पाभ्यो देहि। बहुशो देहि। अल्पशो देहि ॥ त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः॥ पट्व्या भावः पटुत्वम्, पटुता। गुणवचनस्येति किम् ? कठ्या भावः कठीत्वम्, कठीता ॥ भस्याढे तद्धिते पुंवद्भावो वक्तव्यः॥ हस्तिनीनां समूहो हास्तिकम्। अढ इति

किम् ? श्यैनेयः। रौहिणेयः। कथमग्नायी देवतास्य आग्नेयः स्थालीपाक इति ? कर्तव्योऽत्र यत्नः ॥ ठक्छसोश्च पुंवद्भावो वक्तव्यः ॥ भवत्याश्छात्रा भावत्काः, भवदीयाः ॥

## क्यङ्मानिनोश्च ॥ ३६ ॥

क्यङि परतो मानिनि च स्त्रियाः भाषितपुंस्कादनूङ् पुंवद् भवति। एनी—एतायते। श्येनी—श्येतायते। मानिनि—दर्शनीयमानी अयमस्याः। दर्शनीयमानिनीयमस्याः। मानिनो ग्रहणमस्त्र्यर्थमसमानाधिकरणार्थं च। इह तु दर्शनीयामात्मानं मन्यते दर्शनीय-मानिनीति पूर्वेणैव सिद्धम् ॥

## न कोपधायाः ॥ ३७ ॥

कोपधायाः स्त्रियाः पुंवद्भावो न भवति। पाचिकाभार्यः। कारिकाभार्यः। मद्रिकाभार्यः। वृजिकाभार्यः। मद्रिकाकल्पा। वृजिकाकल्पा। मद्रिकायते। वृजिकायते। मद्रिकामानिनी। वृजिकामानिनी। विलेपिकाया धर्म्यं वैलेपिकम् ॥ कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम् ॥ इह मा भूत्—पाकभार्यः, भेकभार्य इति ॥

## संज्ञापूरण्योश्च ॥ ३८ ॥

संज्ञायाः पूरण्याश्च स्त्रियाः पुंवद्भावो न भवति। दत्ताभार्यः। गुप्ताभार्यः। दत्तापाशा। गुप्तापाशा। दत्तायते। गुप्तायते। दत्तामानिनी। गुप्तामानिनी। पूरण्याः—पञ्चमीभार्यः। दशमीभार्यः। पञ्चमीपाशा। दशमीपाशा। पञ्चमीयते। दशमीयते। पञ्चमीमानिनी। दशमीमानिनी ॥

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥ ३९ ॥

नेति वर्तते। वृद्धेर्निमित्तं यस्मिन् स वृद्धिनिमित्तस्तद्धितः, स यदि रक्तेऽर्थे विकारे च न विहितः, तदन्तस्य स्त्रीशब्दस्य न पुंवद् भवति। स्रौघ्नीभार्यः। माथुरीभार्यः। स्रौघ्नीपाशा। माथुरीपाशा। स्रौघ्नीयते। माथुरीयते। स्रौघ्नीमानिनी। माथुरीमानिनी। वृद्धिनिमित्तस्येति किम् ? मध्यमभार्यः। तद्धितस्येति किम् ? काण्डलावभार्यः। बहुव्रीहि-परिग्रहः किमर्थः ? तावद्भार्यः। यावद्भार्यः। अरक्तविकार इति किम् ? कषायेण रक्ता काषायी, काषायी बृहतिका यस्य स काषायबृहतिकः। लोहस्य विकारो लौही, लौही ईषा यस्य रथस्य स लौहेषः। खादिरेषः ॥

## स्वाङ्गाच्चेतोऽमानिनि ॥ ४० ॥

स्वाङ्गादुत्तरो य ईकारस्तदन्तायाः स्त्रिया न पुंवद् भवति अमानिनि परतः। दीर्घकेशीभार्यः। श्लक्ष्णकेशीभार्यः। दीर्घकेशीपाशा। श्लक्ष्णकेशीपाशा। दीर्घकेशीयते। श्लक्ष्णकेशीयते । स्वाङ्गादिति किम् ? पटुभार्यः। ईत इति किम् ? अकेशभार्यः। अमानिनीति किम् ? दीर्घकेशमानिनी ॥

## जातेश्च ॥ ४१ ॥

जातेश्च स्त्रिया न पुंवद् भवति अमानिनि परतः। कठीभार्यः। बह्वृचीभार्यः। कठीपाशा। बह्वृचीपाशा। कठीयते। बह्वृचीयते। अमानिनीत्येव—कठमानिनी। बह्वृचमानिनी। अयं प्रतिषेध औपसंख्यानिकस्य पुंवद्भावस्य नेष्यते। हस्तिनीनां समूहो हास्तिकम् ॥

## पुंवत् कर्मधारयजातीयदेशीयेषु ॥ ४२ ॥

कर्मधारये समासे जातीय देशीय इत्येतयोश्च प्रत्यययोर्भाषितपुंस्कादनूङ् स्त्रियाः पुंवद् भवति। प्रतिषेधार्थोऽयमारम्भः। 'न कोपधायाः' ( ६.३.३७ ) इत्युक्तम्, तत्रापि भवति। पाचकवृन्दारिका। पाचकजातीया। पाचकदेशीया। 'संज्ञापूरण्योश्च' ( ६.३.३८ ) इत्युक्तम् , तत्रापि भवति। दत्तवृन्दारिका। दत्तजातीया। दत्तदेशीया। पूरण्याः—पञ्चमवृन्दारिका। पञ्चमजातीया। पञ्चमदेशीया। 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' ( ६.३.३९ ) इत्युक्तम्, तत्रापि भवति। स्रौघ्नवृन्दारिका[1]। स्रौघ्नजातीया। स्रौघ्नदेशीया। 'स्वाङ्गाच्चेतोऽमानिनि' ( ६.३.४० ) इत्युक्तम्, तत्रापि भवति। श्लक्ष्णमुखवृन्दारिका। श्लक्ष्णमुखजातीया। श्लक्ष्णमुखदेशीया। 'जातेश्च' ( ६.३.४१ ) इत्युक्तम्, तत्रापि भवति। कठवृन्दारिका। कठजातीया। कठदेशीया। भाषितपुंस्कादित्येव—खट्वावृन्दारिका। अनूङित्येव—ब्रह्मबन्धूवृन्दारिका ॥ कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः॥ कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्याः पदं मृगपदम्। मृग्याः क्षीरं मृगक्षीरम्। काक्याः शावः काकशावः। न वास्त्रीपूर्वपदस्य विवक्षितत्वात्। स्त्रीत्वेन विना पूर्वपदार्थोऽत्र जातिः सामान्येन विवक्षितः। पुंवद्भावाद् ह्रस्वत्वं खिद्घादिकेषु[2] भवति विप्रतिषेधेन। खित्—कालिंमन्या। हरिणिंमन्या। घादि—पट्वितरा। पट्वितमा। पट्विरूपा। पट्विकल्पा। क—पट्विका। मृद्विका। इहेडबिड् दरद् पृथु[3] उशिजित्येते जनपदशब्दाः क्षत्रियवाचिनः। तत्र तद्राजप्रत्ययस्य स्त्रियाम् 'अतश्च' ( ४.१.१७७ ) इति लुकि कृत इडबिट् चासौ वृन्दारिका चेति[4] विगृह्य समासः क्रियते। ततः पुंवद्भावेन ऐडबिडादयः पुंशब्दाः क्रियन्ते। ऐडबिडवृन्दारिका। औशिजवृन्दारिका[5]॥

---

१ - ' स्रौघ्नवृन्दारिका ' इति नास्ति मुद्रितेषु । २ - ' खिद्घादिषु ' इति मुद्रितेषु।
३ - ' पृथु ' इत्यपपाठो मुद्रितेषु। ४ - ' इडबिड्वृन्दारिकेति ' मुद्रितपाठः।
५ - ' दारदवृन्दारिका। पार्थवृन्दारिका ' इत्यधिकं क्वचित्।

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ ४३ ॥

घ रूप कल्प चेलट् ब्रुव गोत्र मत हत इत्येतेषु परतो भाषितपुंस्कात् परो यो ङीप्रत्ययस्तदन्तस्यानेकाचो ह्रस्वो भवति। घ—ब्राह्मणितरा। ब्राह्मणितमा। रूप—ब्राह्मणिरूपा। कल्प—ब्राह्मणिकल्पा। चेलट्—ब्राह्मणिचेली। ब्रुव—ब्राह्मणिब्रुवा। गोत्र—ब्राह्मणिगोत्रा। मत—ब्राह्मणिमता। हत—ब्राह्मणिहता। घरूपकल्पाः प्रत्ययाश्चेलडादीन्युत्तरपदानि। ब्रुव इति ब्रवीतीति ब्रुवः पचाद्यचि[१]वच्यादेशो गुणश्च निपातनाद् न भवति। ङ्य इति किम् ? दत्तातरा। गुप्तातरा। अनेकाच इति किम् ? 'नद्याः शेषस्यान्यतरस्याम्' ( ६.३.४४ ) इति वक्ष्यति। भाषितपुंस्कादित्येव—आमलकीतरा। कुवलीतरा॥

## नद्याः शेषस्यान्यतरस्याम् ॥ ४४ ॥

नद्याः शेषस्य घादिषु परतो ह्रस्वो भवत्यन्यतरस्याम्। कश्च शेषः ? अङी च या नदी, ङ्यन्तं च यदेकाच्। ब्रह्मबन्धूतरा, ब्रह्मबन्धुतरा। वीरबन्धूतरा, वीरबन्धुतरा। स्त्रितरा, स्त्रीतरा। स्त्रितमा, स्त्रीतमा ॥ कृन्नद्याः प्रतिषेधो वक्तव्यः॥ लक्ष्मीतरा। तन्त्रीतरा॥

## उगितश्च ॥ ४५ ॥

उगितश्च परस्या नद्या घादिष्वन्यतरस्यां ह्रस्वो भवति। श्रेयसितरा, श्रेयसीतरा, श्रेयस्तरा। विदुषितरा, विदुषीतरा, विद्वत्तरा। पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः। प्रकर्षयोगात् प्राक् स्त्रीत्वस्याविवक्षितत्वाद् वा सिद्धम्॥

## आन्महतः समानाधिकरणजातीययोः ॥ ४६ ॥

समानाधिकरण उत्तरपदे जातीये च प्रत्यये परतो महत आकारादेशो भवति। महादेवः। महाब्राह्मणः। महाबाहुः। महाबलः। जातीये—महाजातीयः। समानाधिकरणजातीययोरिति किम् ? महतः पुत्रो महत्पुत्रः। लक्षणोक्तत्वात् ( परि० १०५ ) एवात्र न भविष्यतीति चेद्, बहुव्रीहावपि न स्याद् महाबाहुरिति। तदर्थं समानाधिकरणग्रहणं वक्तव्यम्। अमहान् महान् संपन्नो महद्भूतश्चन्द्रमा इत्यत्र गौणत्वाद् ( परि० १५ ) महदर्थस्य न भवत्यात्वम् ॥ महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं चासमानाधिकरणार्थम्॥ महत्या घासो महाघासः। महत्याः करो महाकरः। महत्या विशिष्टो

---

१.- उत्तरत्र ( ८.१.२७ ) कनि निपातनं वक्ष्यति।

महाविशिष्टः ॥ अष्टनः कपाले हविष्युपसंख्यानम् ॥ अष्टाकपालं पुरोडाशं[1] निर्वपेत्। हविषीति किम्? अष्टकपालं ब्राह्मणस्य ॥ गवि च युक्तेऽष्टन उपसंख्यानं कर्तव्यम् ॥ अष्टागवेन शकटेन। युक्त इति किम्? अष्टगवं ब्राह्मणस्य। तपरकरणं विस्पष्टार्थम् ॥

## द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४७ ॥

द्वि अष्टन् इत्येतयोराकारादेशो भवति संख्यायामुत्तरपदेऽबहुव्रीह्यशीत्योः। द्वादश। द्वाविंशतिः। द्वात्रिंशत्। अष्टादश। अष्टाविंशतिः। अष्टात्रिंशत्। द्व्यष्टन इति किम्? पञ्चदश। संख्यायामिति किम्? द्वैमातुरः। आष्टमातुरः। अबहुव्रीह्यशीत्योरिति किम्? द्वित्राः। द्विदशाः। द्व्यशीतिः ॥ प्राक् शतादिति वक्तव्यम् ॥ इह मा भूत्—द्विशतम्। द्विसहस्रम्। अष्टशतम्। अष्टसहस्रम् ॥

## त्रेस्त्रयः ॥ ४८ ॥

त्रि इत्येतस्य त्रयसित्ययमादेशो भवति संख्यायामबहुव्रीह्यशीत्योः। त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्। संख्यायामित्येव—त्रैमातुरः। अबहुव्रीह्यशीत्योरित्येव—त्रिदशाः। त्र्यशीतिः। प्राक् शतादित्येव—त्रिशतम्। त्रिसहस्रम् ॥

## विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ४९ ॥

चत्वारिंशत्प्रभृतौ संख्यायामुत्तरपदेऽबहुव्रीह्यशीत्योः सर्वेषां द्वि अष्टन् त्रि इत्येतेषां यदुक्तं तद् विभाषा भवति। द्विचत्वारिंशत्, द्वाचत्वारिंशत्। त्रिपञ्चाशत्, त्रयःपञ्चाशत्। अष्टपञ्चाशत्, अष्टापञ्चाशत्। प्राक् शतादित्येव—द्विशतम्। अष्टशतम्। त्रिशतम् ॥

## हृदयस्य हृल्लेखयदण्लासेषु ॥ ५० ॥

हृदयस्य हृदित्ययमादेशो भवति लेख यत् अण् लास इत्येतेषु परतः। हृदयं लिखतीति हृल्लेखः। यत्—हृदयस्य प्रियं हृद्यम्। अण्—हृदयस्येदं हार्दम्। लास—हृदयस्य लासो हृल्लासः। लेख इत्यणन्तस्य ग्रहणमिष्यते। घञि तु हृदयस्य लेखो हृदयलेखः। एतदेव लेखग्रहणं ज्ञापकमुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्ताग्रहणस्य (परि० २५) ॥

## वा शोकष्यञ्रोगेषु ॥ ५१ ॥

शोक ष्यञ् रोग इत्येतेषु परतो हृदयस्य वा हृदित्ययमादेशो भवति। हृच्छोकः,

---

१ – 'चरुम्' इत्यपपाठो मुद्रितेपु।

हृदयशोकः। ष्यञ्—सौहार्द्यम्, सौहृदय्यम्। ब्राह्मणादित्वात् ( ५.१.१२४ ) ष्यञ्। हृदादेशपक्षे 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' ( ७.३.१९ ) इत्युभयपदवृद्धिः। रोगे—हृद्रोगः, हृदयरोगः। हृदयशब्देन समानार्थो हृच्छब्दः प्रकृत्यन्तरमस्ति, तेनैव सिद्धे विकल्पविधानं प्रपञ्चार्थम्॥

## पादस्य पदाज्यातिगोपहतेषु॥ ५२ ॥

पादस्य पद इत्ययमादेशो भवति आजि आति ग उपहत इत्येतेषूत्तरपदेषु। पादाभ्याम-जतीति पदाजिः। पादाभ्यामततीति पदातिः। 'अज्यतिभ्यां', 'पादे च' ( प० उ० ४. १३२, १३३ ) इत्यौणादिक इण् प्रत्ययः। तत्राजेर्वीभावो न भवत्यत एव निपातनात्। पादाभ्यां गच्छतीति पदगः। पादेनोपहतः पदोपहतः। पादशब्दो वृषादित्वाद् ( ६.१. २०३) आद्युदात्तः, तस्य स्थाने पदादेश उपदेश एवान्तोदात्तो निपात्यते। तेन पदोपहत इति 'तृतीया कर्मणि' ( ६.२.४८ ) इति पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्तत्वं भवति। पदाजिः पदातिः पदग इत्येतेषु कृत्स्वरेण ( ६.२.१३९ ) समासस्यैवान्तोदात्तत्वम्॥

## पद्यत्यतदर्थे॥ ५३ ॥

यत्प्रत्यये परतः पादस्य पदित्ययमादेशो भवत्यतदर्थे। पादौ विध्यन्ति पद्याः शर्कराः। पद्याः कण्टकाः। अतदर्थ इति किम्? पादार्थमुदकं पाद्यम्॥ पद्भाव इके चरतावुप-संख्यानम्॥ पादाभ्यां चरति पदिकः। 'पर्पादिभ्यः ष्ठन्' ( ४.४.१० ) इति पादशब्दात् ष्ठन् प्रत्ययः। शरीरावयववचनस्य पादशब्दस्य ग्रहणमिह इष्यते। तेन 'पणपादमाष-शताद् यत्' ( ५.१.३४ ) इत्यत्र पदादेशो न भवति। द्विपाद्यम्। त्रिपाद्यम्॥

## हिमकाषिहतिषु च॥ ५४ ॥

हिम काषिन् हति इत्येतेषु पादशब्दस्य पदित्ययमादेशो भवति। हिम—पद्धिमम्। काषिन्—अथ पत्काषिणो यान्ति। हति—पद्धतिः॥

## ऋचः शे॥ ५५ ॥

ऋक्संबन्धिनः पादशब्दस्य शे परतः पदित्ययमादेशो भवति। पच्छो गायत्रीं शंसति। पादंपादं शंसतीति 'संख्यैकवचनाच्च वीप्सायाम्' ( ५.४.४३ ) इति शस्प्रत्ययः। ऋच इति किम्? पादशः कार्षापणं ददातीति॥

## वा घोषमिश्रशब्देषु॥ ५६ ॥

घोष मिश्र शब्द इत्येतेषु चोत्तरपदेषु पादस्य वा पदित्ययमादेशो भवति। पद्घोषः, पादघोषः। पन्मिश्रः, पादमिश्रः। पच्छब्दः, पादशब्दः ॥ निष्के चेति वक्तव्यम् ॥ पन्निष्कः, पादनिष्कः ॥

## उदकस्योदः संज्ञायाम् ॥ ५७ ॥

उदकशब्दस्य संज्ञायां विषय उद इत्ययमादेशो भवत्युत्तरपदे परतः। उदमेघो नाम यस्य औदमेघिः पुत्रः। उदवाहो नाम यस्य औदवाहिः पुत्रः। संज्ञायामिति किम् ? उदकगिरिः ॥ संज्ञायामुत्तरपदस्य उदकशब्दस्य उदादेशो भवतीति वक्तव्यम् ॥ लोहितोदः। नीलोदः। क्षीरोदः ॥

## पेषंवासवाहनधिषु च ॥ ५८ ॥

पेषं वास वाहन धि इत्येतेषु चोत्तरपदेषु उदकस्य उद इत्ययमादेशो भवति। उदपेषं पिनष्टि। 'स्नेहने पिषः' ( ३.४.३८ ) इति णमुल्। वास—उदकस्य वास उदवासः। वाहन—उदकस्य वाहन उदवाहनः। उदकं धीयतेऽस्मिन्नित्युदधिः ॥

## एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ५९ ॥

उदकस्योद इति वर्तते। एकोऽसहायः, तुल्यजातीयेनानन्तरेण हला विना,[1] हल् आदिर्यस्योत्तरपदस्य तदेकहलादिस्तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्यतरस्यामुदकस्य उद इत्ययमादेशो भवति। उदकुम्भः, उदककुम्भः। उदपात्रम्, उदकपात्रम्। एकहलादाविति किम् ? उदकस्थालम्। पूरयितव्य इति किम् ? उदकपर्वतः ॥

## मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥ ६० ॥

मन्थ ओदन सक्तु बिन्दु वज्र भार हार वीवध गाह इत्येतेषूत्तरपदेषूदकस्य उद इत्ययमादेशो भवत्यन्यतरस्याम्। उदकेन मन्थ उदमन्थः, उदकमन्थः। ओदन—उदकेनौदन उदौदनः, उदकौदनः। सक्तु—उदकेन सक्तुः उदसक्तुः, उदकसक्तुः। बिन्दु—उदकस्य बिन्दुः उदबिन्दुः, उदकबिन्दुः। वज्र—उदकस्य वज्र उदवज्रः, उदकवज्रः। भार—उदकं बिभर्तीति उदभारः, उदकभारः। हार—उदकं हरतीति उदहारः, उदकहारः। वीवध—उदकस्य वीवध उदवीवधः, उदकवीवधः। गाह—उदकं गाहत इति उदगाहः, उदकगाहः ॥

---

१ - 'हलादिना' इत्यपपाठो मुद्रितेषु।

## इको ह्रस्वोऽङ्यो गालवस्य ॥ ६१ ॥

इगन्तस्याङ्यन्तस्योत्तरपदे ह्रस्वो भवति गालवस्याचार्यस्य मतेनान्यतरस्याम्। ग्रामणिपुत्रः, ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः। इक इति किम्? खट्वापादः। मालापादः। अङ्य इति किम्? गार्गीपुत्रः। वात्सीपुत्रः। गालवग्रहणं पूजार्थम्। अन्यतरस्यामिति हि वर्तते। व्यवस्थितविभाषा (परि० ९९) चेयम्। तेनेह न भवति—कारीषगन्धीपुत्र इति। इयङुवङ्भाविनामव्ययानां च न भवति। श्रीकुलम्। भ्रूकुलम्। काण्डीभूतम्। वृषलीभूतम्। भ्रूकुंसादीनां तु भवत्येव। भ्रुकुंसः। भ्रुकुटिः। अपर आह ॥ भ्रुकुंसादीनामकारो भवतीति वक्तव्यम् ॥ भ्रकुंसः। भ्रकुटिः ॥

## एक तद्धिते च ॥ ६२ ॥

एकशब्दस्य तद्धित उत्तरपदे च[1] ह्रस्वो भवति। एकस्या आगतम् एकरूप्यम्। एकमयम्। एकस्या भाव एकत्वम्। एकता। उत्तरपदे—एकस्याः क्षीरम् एकक्षीरम्। एकदुग्धम्। लिङ्गविशिष्टस्य ग्रहणमेकशब्दह्रस्वत्वं प्रयोजयति। अचा हि गृह्यमाणमत्र विशेष्यते, न पुनरजृ गृह्यमाणेनेति ॥

## ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६३ ॥

ङ्यन्तस्याबन्तस्य च संज्ञाछन्दसोर्बहुलं ह्रस्वो भवति। ङ्यन्तस्य संज्ञायाम्—रेवतिपुत्रः। रोहिणिपुत्रः। भरणिपुत्रः। न च भवति—नान्दीकरः। नान्दीघोषः। नान्दीविशालः। ङ्यन्तस्य छन्दसि—कुमारिदा। उर्विदा[2]। न च भवति—फाल्गुनीपौर्णमासी। जगतीछन्दः। आबन्तस्य संज्ञायाम्—शिलवहम्। शिलप्रस्थम्। न च भवति—लोमकागृहम्। लोमकाषण्डम्। आबन्तस्य छन्दसि—अजक्षीरेण जुहोति। ऊर्णम्रदाः पृथिवी दक्षिणावत (शौ० सं० १८.३.४९)। न च भवति—ऊर्णासूत्रेणं कुवयों वयन्ति (मा० सं० १९.८०)॥

## त्वे च ॥ ६४ ॥

त्वप्रत्यये परतो ङ्यापोर्बहुलं ह्रस्वो भवति। तदजाया भावोऽजत्वम्, अजात्वम्। तद्रोहिण्या भावो रोहिणित्वम्, रोहिणीत्वम् (काठ० सं० ८.१)। संज्ञायामसंभवात् छन्दस्येवोदाहरणानि भवन्ति ॥

---

१ - 'च' इति नास्ति मुद्रितेपु।

२ - 'कुमारिदारा। प्रदर्विदा' इति बाल०। 'कुमारिदा प्रफर्विदा (काठ० सं० ३९.९)' इति है०। काठकसंहितायां दीर्घत्वश्रवणात् तन्न युज्यते।

## इष्टकेषीकामालानां चिततूलभारिषु ॥ ६५ ॥

इष्टकेषीकामालानां चित तूल भारिन् इत्येतेषूत्तरपदेषु यथासंख्यं ह्रस्वो भवति। इष्टकचितम्। इषीकतूलम्। मालभारिणी कन्या। इष्टकादिभ्यस्तदन्तस्यापि ग्रहणं भवति। पक्वेष्टकचितम्। मुञ्जेषीकतूलम्। उत्पलमालभारिणी कन्या॥

## खित्यनव्ययस्य ॥ ६६ ॥

खिदन्त उत्तरपदेऽनव्ययस्य ह्रस्वो भवति। कालिंमन्या। हरिणिंमन्या। मुमा ह्रस्वो न बाध्यते, अन्यथा हि ह्रस्वशासनमनर्थकं स्यात्। अनव्ययस्येति किम्? दोषामन्यमहः। दिवामन्या रात्रिः। अनव्ययस्येत्येतदेव ज्ञापकमिह खिदन्तग्रहणस्य॥

## अरुर्द्विषदजन्तस्य मुम् ॥ ६७ ॥

अरुस् द्विषद् इत्येतयोरजन्तानां च खिदन्त उत्तरपदे मुमागमो भवत्यनव्ययस्य। अरुंतुदः। द्विषंतपः। अजन्तानाम्—कालिंमन्या। अरुर्द्विषदजन्तस्येति किम्? विद्वन्मन्यः। अनव्ययस्येत्येव—दोषामन्यमहः। दिवामन्या रात्रिः। अन्तग्रहणं किम्? कृताजन्तकार्यप्रतिपत्त्यर्थम्। अतो ह्रस्वे कृते मुम्भवति॥

## इच एकाचोऽम्प्रत्ययवच्च ॥ ६८ ॥

इजन्तस्य एकाचः खिदन्त उत्तरपदेऽमागमो भवति, अम्प्रत्ययवच्च द्वितीयैकवचनवच्च स भवति। अमिति हि द्विरावर्तते। गांमन्यः। स्त्रींमन्यः, स्त्रियंमन्यः। नरंमन्यः[1]। श्रियंमन्यः। भ्रुवंमन्यः। अम्प्रत्ययवच्चेत्यतिदेशादात्वपूर्वसवर्णगुणेयङुवङादेशा भवन्ति। इच इति किम्? त्वङ्मन्यः। एकाच इति किम्? लेखाभ्रुंमन्यः। अथेह कथं भवितव्यम्, श्रियमात्मानं ब्राह्मणकुलं मन्यत इत्युपक्रम्य श्रिमन्यमिति भवितव्यमिति भाष्ये (३.१.६७) व्यवस्थितम्। तत्रेदं भाष्यकारस्य दर्शनम्—अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्तते, यथा प्रष्ठादयः स्त्रियाम्। तत्र 'स्वमोर्नपुंसकात्' (७.१.२३) इत्यमो लुग् भवति॥

## वाचंयमपुरंदरौ च ॥ ६९ ॥

वाचंयम पुरंदर इत्येतौ निपात्येते। वाचंयम आस्ते। पुरं दारयतीति पुरंदरः॥

---

१ - 'नरंमन्यः' इति नास्ति है०, बाल०।

## कारे सत्यागदस्य ॥ ७० ॥

कारशब्द उत्तरपदे सत्य अगद इत्येतयोर्मुमागमो भवति। सत्यं करोतीति, सत्यस्य वा कारः सत्यंकारः। एवमगदंकारः ॥ अस्तुसत्यागदस्य कार इति वक्तव्यम् ॥ अस्तुंकारः ॥ भक्षस्य छन्दसि कारे मुम् वक्तव्यः॥ भक्षं करोतीति, भक्षस्य वा कारो भुक्षंकारः (मै० सं० ४.७.३)। छन्दसीति किम्? भक्षकारः ॥ धेनोर्भव्यायां मुम् वक्तव्यः॥ धेनुंभव्या (मै० सं० ४.४.८) ॥ लोकस्य पृणे मुम् वक्तव्यः॥ लोकंपृणा (तै० सं० ५.७.५.६) ॥ इत्येऽनभ्याशस्य मुम् वक्तव्यः॥ अनभ्याशमित्यः ॥ भ्राष्ट्राग्न्योरिन्धे मुम् वक्तव्यः॥ भ्राष्ट्रमिन्धः। अग्निमिन्धः (ऋ० १.१६२.५) ॥ गिलेऽगिलस्य मुम् वक्तव्यः॥ तिमिङ्गिलः। अगिलस्येति किम्? गिलगिलः ॥ गिलगिले चेति वक्तव्यम् ॥ तिमिङ्गिलगिलः ॥ उष्णभद्रयोः करणे मुम् वक्तव्यः ॥ उष्णंकरणम्। भद्रंकरणम् ॥ सूतोग्रराजभोजमेर्वित्येतेभ्य उत्तरस्य दुहितृशब्दस्य पुत्रडादेशो वा वक्तव्यः॥ सूतपुत्री, सूतदुहिता। उग्रपुत्री, उग्रदुहिता। राजपुत्री, राजदुहिता। भोजपुत्री, भोजदुहिता। मेरुपुत्री, मेरुदुहिता। केचित् तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति, तेषां[1] पुत्रीति भवति। अन्यत्रापि हि दृश्यते। शैलपुत्रीति ॥

## श्येनतिलस्य पाते ञे ॥ ७१ ॥

श्येन तिल इत्येतयोः पातशब्द उत्तरपदे ञप्रत्यये परे मुमागमो भवति। श्येनपातोऽस्यां क्रियायां[2] श्यैनंपाता। तैलंपाता। ञ इति किम्? श्येनपातः॥

## रात्रेः कृति विभाषा ॥ ७२ ॥

रात्रेः कृदन्त उत्तरपदे विभाषा मुमागमो भवति। रात्रिंचरः, रात्रिचरः। रात्रिमटः, रात्र्यटः। अप्राप्तविभाषेयम्। खिति हि नित्यं मुम् भवति। रात्रिंमन्यः॥

## नलोपो नञः ॥ ७३ ॥

नञो नकारस्य लोपो भवत्युत्तरपदे। अब्राह्मणः। अवृषलः। असुरापः। असोमपः ॥ नञो नलोपोऽवक्षेपे तिङ्युपसंख्यानम् ॥ अपचसि त्वं जाल्म। अकरोषि त्वं जाल्म ॥

## तस्मान्नुडचि ॥ ७४ ॥

---

१ - 'तस्य' इति बाल०।  २ - 'क्रीडायां' इति मुद्रितेपु।

तस्माद् लुप्तनकाराद् नञो नुडागमो भवत्यजादावुत्तरपदे। अनजः। अनश्वः। तस्मादिति किम् ? नञ एव हि स्यात्। पूर्वान्ते हि 'ङमो ह्रस्वादचि ङमुण्नित्यम्' ( ८.३.३२ ) इति प्राप्नोति॥

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या॥ ७५ ॥

नभ्राट् नपात् नवेदा नासत्या नमुचि नकुल नख नपुंसक नक्षत्र नक्र नाक इत्येतेषु नञ् प्रकृत्या भवति। न भ्राजत इति नभ्राट्। भ्राजतेः क्विबन्तस्य नञ्समासः। न पातीति नपात्। पातिः शत्रन्तः। न वेत्तीति नवेदाः। वेत्तिरसुन्प्रत्ययान्तः। नासत्याः—सत्सु साधवः सत्याः, न सत्या असत्याः, न असत्या नासत्याः। न मुञ्चतीति नमुचिः। मुचेरौणादिकः किप्रत्ययः। नास्य कुलमस्ति नकुलः। नख—नास्य खमस्तीति नखम्। नपुंसक—न स्त्री न पुमान्नपुंसकम्। स्त्रीपुंसयोः पुंसकभावो निपात्यते। नक्षत्र—न क्षरति[1] क्षीयत इति वा नक्षत्रम्। क्षियः क्षरतेर्वा क्षत्रमिति निपात्यते। नक्र—न क्रामतीति नक्रः। क्रमेर्डप्रत्ययो निपातनात्। नाक—नास्मिन् अकमस्तीति नाकम्॥

## एकादिश्चैकस्य चादुक्॥ ७६ ॥

एकादिश्च नञ् प्रकृत्या भवति, एकशब्दस्य चादुगागमो भवति। एकेन न विंशतिरेकान्नविंशतिः। एकान्नत्रिंशत्। तृतीयेति योगविभागात् समासः। पूर्वान्तोऽयमादुक् क्रियते, पदान्तलक्षणोऽत्रानुनासिको विकल्पेन यथा स्यादिति॥

## नगोऽप्राणिष्वन्यतरस्याम्॥ ७७ ॥

नग इत्यत्राप्राणिष्वन्यतरस्यां[2] नञ् प्रकृत्या भवति। नगा वृक्षाः, अगा वृक्षाः। नगाः पर्वताः, अगाः पर्वताः। न गच्छन्तीति नगाः। गमेर्डप्रत्ययः ( प० उ० १.११४ )। अप्राणिष्विति किम् ? अगो वृषलः शीतेन॥

## सहस्य सः संज्ञायाम्॥ ७८ ॥

सहशब्दस्य स इत्ययमादेशो भवति संज्ञायां विषये। साश्वत्थम्। सपलाशम्। सशिंशपम्। संज्ञायामिति किम् ? सहयुध्वा। सहकृत्वा। सादेश उदात्तो निपात्यते।

---

१ - 'क्षरते' इति मुद्रितेष्वपपाठः।

२ - 'नग इत्यत्राप्राणिष्वन्यतरस्यां' इति मुद्रितेषु नास्ति, हस्तलिखितकोशेषूपलम्भादिह युज्यते।

उदात्तानुदात्तवतो हि सहशब्दस्यान्तर्यतः स्वरितः स्यात्। स च निपातनस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र, तत्र उपयुज्यते। अन्यत्र समासान्तोदात्तत्वेन बाध्यत एव—सेष्टि, सपशुबन्धम् इति॥

## ग्रन्थान्ताधिके च॥ ७९ ॥

ग्रन्थान्तेऽधिके च वर्तमानस्य सहशब्दस्य स इत्ययमादेशो भवति। सकलं ज्यौतिषमधीते। समुहूर्तम्। ससंग्रहं व्याकरणमधीयते[१]। कलान्तं मुहूर्तान्तं संग्रहान्तम्[२] इति अन्तवचने (२.१.६) इत्यव्ययीभावः समासः। तत्र 'अव्ययीभावे चाकाले' (६.३.८१) इति कालवाचिन्युत्तरपदे सभावो[२] न प्राप्नोतीत्ययमारम्भः। अधिके—सद्रोणा खारी। समाषः कार्षापणः। सकाकिणीको माषः॥

## द्वितीये चानुपाख्ये॥ ८० ॥

द्वयोः सहयुक्तयोरप्रधानो यः, स द्वितीयः। उपाख्यायते प्रत्यक्षत उपलभ्यते यः, स उपाख्यः, उपाख्यादन्योऽनुपाख्योऽनुमेयः। तस्मिन् द्वितीयेऽनुपाख्ये सहस्य स इत्ययमादेशो भवति। साग्निः कपोतः। सपिशाचा वात्या। सराक्षसीका शाला। अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमाना अनुपाख्या[३] भवन्ति॥

## अव्ययीभावे चाकाले॥ ८१ ॥

अव्ययीभावे च समासेऽकालवाचिन्युत्तरपदे सहस्य स इत्ययमादेशो भवति। सचक्रं धेहि। सधुरं प्राज। अकाल इति किम्? सहपूर्वाह्णम्॥

## वोपसर्जनस्य॥ ८२ ॥

उपसर्जनसर्वावयवः समास उपसर्जनम्। यस्य सर्वेऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहिर्गृह्यते। तदवयवस्य सहशब्दस्य वा स इत्ययमादेशो भवति। सपुत्रः, सहपुत्रः। सच्छात्रः, सहच्छात्रः। उपसर्जनस्येति किम्? सहयुध्वा। सहकृत्वा। सहकृत्वप्रियः प्रियसहकृत्वेतीह बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवतीति सभावो न भवति॥

## प्रकृत्याशिष्यगोवत्सहलेषु॥ ८३ ॥

प्रकृत्या सहशब्दो भवत्याशिषि विषयेऽगोवत्सहलेषु। स्वस्ति देवदत्ताय सहपुत्राय

---

१ - अनुदाहरणमेतत् । द्र० —न्यासपदमञ्जर्यौ।

२ - 'समासो' इत्यपपाठो है०। ३ - 'तदुपाख्या' इति बाल०।

सहच्छात्राय सहामात्याय। अगोवत्सहलेष्विति किम् ? स्वस्ति भवते सहगवे, सगवे। सहवत्साय, सवत्साय। सहहलाय, सहलाय। 'वोपसर्जनस्य' ( ६.३.८२ ) इति पक्षे भवत्येव सभावः॥

## समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ॥ ८४ ॥

स इति वर्तते। समानस्य स इत्ययमादेशो भवति छन्दसि विषये मूर्धन् प्रभृति उदर्क इत्येतान्युत्तरपदानि वर्जयित्वा। अनु भ्राता सगर्भ्यः ( मा० सं० ४.२० )। अनु सखा सयूंथ्यः ( मा० सं० ४.२० )। यो नः सनुंत्यः ( ऋ० २.३०.९ )। समानो गर्भः सगर्भः, तत्र भवः सगर्भ्यः। 'सगर्भसयूथसनुताद् यन्' ( ४.४.११४ ) इति यन् प्रत्ययः। अमूर्धप्रभृत्युदर्केष्विति किम् ? समानमूर्धा। समानप्रभृतयः। समानोदर्काः। समानस्येति योगविभाग इष्टप्रसिद्ध्यर्थः ( परि० ११४ ) क्रियते। तेन सपक्षः, साधर्म्यम्, सजातीय इत्येवमादयः सिद्धा भवन्ति॥

## ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ ८५ ॥

ज्योतिस् जनपद रात्रि नाभि नामन् गोत्र रूप स्थान वर्ण वयस् वचन बन्धु इत्येतेषूत्तरपदेषु समानस्य स इत्ययमादेशो भवति। सज्योतिः। सजनपदः। सरात्रिः। सनाभिः। सनामा। सगोत्रः। सरूपः। सस्थानः। सवर्णः। सवयाः। सवचनः। सबन्धुः॥

## चरणे ब्रह्मचारिणि ॥ ८६ ॥

चरणे गम्यमाने ब्रह्मचारिण्युत्तरपदे समानस्य स इत्ययमादेशो भवति। समानो ब्रह्मचारी सब्रह्मचारी। ब्रह्म वेदः, तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म, तच्चरतीति ब्रह्मचारी, समानस्तस्यैव ब्रह्मणः समानत्वादित्ययमर्थो भवति—समाने ब्रह्मणि व्रतचारी सब्रह्मचारीति॥

## तीर्थे ये ॥ ८७ ॥

तीर्थशब्द उत्तरपदे यत्प्रत्ययपरे[१] परतः समानस्य स इत्ययमादेशो भवति। सतीर्थ्यः। 'समानतीर्थे वासी' ( ४.४.१०७ ) इति यत् प्रत्ययः॥

## विभाषोदरे ॥ ८८ ॥

उदरशब्द उत्तरपदे यत्प्रत्ययान्ते समानस्य विभाषा स इत्ययमादेशो भवति। सोदर्यः, समानोदर्यः। 'समानोदरे शयित ओ चोदात्तः' ( ४.४.१०८ ) इति यत्॥

१ - ' यत्प्रत्यये ' इति हैं०।

## दृग्दृशवतुषु ॥ ८९ ॥

दृक् दृश वतु इत्येतेषु परतः समानस्य स इत्ययमादेशो भवति। सदृक्। सदृशः। 'त्यदादिषु दृशोऽनालोचने कञ् च' (३.२.६०) इत्यत्र 'समानान्ययोश्चेति वक्तव्यम्' (३.२.६० वा०) इति कञ्क्विनौ प्रत्ययौ क्रियेते ॥ दृक्षे चेति वक्तव्यम् ॥ सदृक्षः। दृशेः क्सप्रत्ययोऽपि तत्रैव वक्तव्यः (३.२.६० वा०)। वतुग्रहणमुत्तरार्थम् ॥

## इदंकिमोरीश्की ॥ ९० ॥

इदं किम् इत्येतयोरीश् की इत्येतौ यथासंख्यमादेशौ भवतो दृग्दृशवतुषु। ईदृक्। ईदृशः। इयान्। कीदृक्। कीदृशः। कियान्। 'किमिदम्भ्यां वो घः' (५.२.४०) इति वतुप् ॥ दृक्षे चेति वक्तव्यम् ॥ ईदृक्षः। कीदृक्षः ॥

## आ सर्वनाम्नः ॥ ९१ ॥

सर्वनाम्न आकारादेशो भवति दृग्दृशवतुषु। तादृक्। तादृशः। तावान्। यादृक्। यादृशः। यावान् ॥ दृक्षे चेति वक्तव्यम् ॥ तादृक्षः। यादृक्षः ॥

## विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ ९२ ॥

विष्वक् देव इत्येतयोः सर्वनाम्नश्च टेरद्रीत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्त उत्तरपदे। विष्वगञ्चतीति विष्वद्र्यङ् (ऋ० ७.२५.१)। देवद्र्यङ्। सर्वनाम्नः— तद्र्यङ्[1]। यद्र्यङ्[1]। अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम्। तत्र यणादेशे कृत 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४) इत्येष स्वरो भवति। विष्वग्देवयोरिति किम् ? अश्वाची। अञ्चताविति किम् ? विष्वग्युक्। वप्रत्यय इति किम् ? विष्वगञ्चनम्। वप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम् (परि० ८८)। तेनायस्कृतमयस्कार इत्यत्र 'अतः कृकमिकंसकुम्भपात्र०' (८.३.४६) इति सत्वं भवति ॥ छन्दसि स्त्रियां बहुलमिति वक्तव्यम् ॥ विश्वाचीं (ऋ० ७.४३.३) च घृताचीं (ऋ० १.१६७.३) चेत्यत्र न भवति। कद्रीचीं (ऋ० १.१६४.१७) इत्यत्र तु भवत्येव ॥

## समः समि ॥ ९३ ॥

समित्येतस्य समि इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्त उत्तरपदे। सम्यङ्, सम्यञ्चौ, सम्यञ्चः ॥

---

१ - तद्रियंङ्, यद्रियंङ् (तै० सं० ५.५.१.२, १)।

## तिरसस्तिर्यलोपे ॥ ९४ ॥

तिरस् इत्येतस्य तिरि इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्त उत्तरपदेऽलोपे , यदास्य लोपो न भवति। तिर्यङ् , तिर्यञ्चौ, तिर्यञ्चः। अलोप इति किम् ? तिरश्चा। तिरश्चे। 'अचः' ( ६.४.१३८ ) इत्यकारलोपः॥

## सहस्य सध्रिः ॥ ९५ ॥

सहेत्येतस्य सध्रिरित्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्त उत्तरपदे। सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः। सध्रीचः। सध्रीचा॥

## सध मादस्थयोश्छन्दसि ॥ ९६ ॥

छन्दसि विषये माद स्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशो भवति। सधमादों द्युम्निनीरापः ( मा० सं० १०.७ )। सधस्थाः ( तै० सं० ५.७.७.१ )॥

## द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९७ ॥

द्वि अन्तरित्येताभ्यामुपसर्गात् चोत्तरस्याबित्येतस्य ईकारादेशो भवति। द्वीपम्। अन्तरीपम्। उपसर्गात्—नीपम्। वीपम्। समीपम् ॥ समाप ईत्वे प्रतिषेधो वक्तव्यः ॥ समापं नाम देवयजनम् ( काठ० सं० २५.२ )। अपर आह— ॥ ईत्वमनवर्णादिति वक्तव्यम् ॥ इह मा भूत्—प्रापम्। परापम्। अप्शब्दं प्रति क्रियायोगाभावाद् उपसर्गग्रहणं प्राद्युपलक्षणार्थम् ॥

## ऊदनोर्देशे ॥ ९८ ॥

अनोरुत्तरस्याप ऊकारादेशो भवति देशाभिधाने। अनूपो देशः। देश इति किम्? अन्वीपम्। दीर्घोच्चारणमवग्रहार्थम्[1]। अनु ऊपोऽनूप इति ॥

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥ ९९ ॥

अषष्ठीस्थस्य अतृतीयास्थस्य चान्यशब्दस्य दुगागमो भवति आशिस् आशा आस्था आस्थित उत्सुक ऊति कारक राग छ इत्येतेषु परतः। अन्या आशीः अन्यदाशीः। अन्या आशा अन्यदाशा। अन्या आस्था अन्यदास्था। अन्य आस्थितः अन्यदास्थितः। अन्य

---

१ - अत्र नागेशोऽनुसंधेयः ( ६.३.९८ महाभाष्यप्रदीपोद्योतः )।

उत्सुकः अन्यदुत्सुकः। अन्या ऊतिः अन्यदूतिः। अन्यः कारकः अन्यत्कारकः। अन्यो रागः अन्यद्रागः। अन्यस्मिन् भवोऽन्यदीयः। गहादिषु (४.२.१३८) अन्यशब्दो द्रष्टव्यः। अषष्ठ्यतृतीयास्थस्येति किम् ? अन्यस्य आशीः अन्याशीः। अन्येन आस्थितः अन्यास्थितः।

दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु॥

अन्यस्य कारकम् अन्यत्कारकम्। अन्यस्येदम् अन्यदीयम्। अस्य च द्विर्नञ्ग्रहणं लिङ्गम्॥

## अर्थे विभाषा॥ १०० ॥

अर्थशब्द उत्तरपदेऽन्यस्य विभाषा दुगागमो भवति। अन्यदर्थः, अन्यार्थः॥

## कोः कत् तत्पुरुषेऽचि॥ १०१ ॥

कु इत्येतस्य कदित्ययमादेशो भवति तत्पुरुषे समासेऽजादावुत्तरपदे। कदजः। कदश्वः। कदुष्ट्रः। कदन्नम्। तत्पुरुष इति किम् ? कूष्ट्रो राजा। अचीति किम् ? कुब्राह्मणः। कुपुरुषः॥ कद्भावे त्रावुपसंख्यानम्॥ कुत्सितास्त्रयः कत्त्रयः॥

## रथवदयोश्च॥ १०२ ॥

रथ वद इत्येतयोश्चोत्तरपदयोः कोः कदित्ययमादेशो भवति। कद्रथः। कद्वदः॥

## तृणे च जातौ॥ १०३ ॥

तृणशब्द उत्तरपदे जातावभिधेयायां कोः कदित्यादेशो भवति। कत्तृणा नाम जातिः। जाताविति किम् ? कुत्सितानि तृणानि कुतृणानि॥

## का पथ्यक्षयोः॥ १०४ ॥

पथिन् अक्ष इत्येतयोरुत्तरपदयोः कोः का इत्ययमादेशो भवति। कापथः। काक्षः।

## ईषदर्थे[१]॥ १०५ ॥

ईषदर्थे वर्तमानस्य कोः का इत्ययमादेशो भवति। कामधुरम्। कालवणम्। अजादावपि परत्वात् कादेश एव भवति। काम्लम्। कोष्णम्॥

१ - 'च' इत्यधिकं तारा०, है०।

## विभाषा पुरुषे ॥ १०६ ॥

पुरुषशब्द उत्तरपदे विभाषा कोः का इत्ययमादेशो भवति। कापुरुषः, कुपुरुषः। अप्राप्तविभाषेयम्। ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यं का भवति। ईषत्पुरुषः कापुरुषः॥

## कवं चोष्णे ॥ १०७ ॥

उष्णशब्द उत्तरपदे कोः कवमित्ययमादेशो भवति, का च विभाषा। कवोष्णम्, कोष्णम्, कदुष्णम्॥

## पथि चच्छन्दसि ॥ १०८ ॥

पथिशब्द उत्तरपदे छन्दसि विषये कोः कवं का इत्येतावादेशौ भवतो विभाषा। कवपथः, कापथः, कुपथः॥

## पृषोदरादीनि यथोपदिष्टम् ॥ १०९ ॥

पृषोदरप्रकाराणि शब्दरूपाणि, येषु लोपागमवर्णविकाराः शास्त्रेण न विहिता दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति। यानियानि यथोपदिष्टानि शिष्टैरुच्चारितानि प्रयुक्तानि, तानि तथैवानुगन्तव्यानि। पृषदुदरं यस्य पृषोदरम्। पृषद् उद्वानं यस्य पृषोद्वानम्। अत्र तकारलोपो भवति। वारिवाहको बलाहकः। पूर्वशब्दस्य बशब्द आदेश उत्तरपदादेश्च लत्वम्। जीवनस्य मूतो जीमूतः। वनशब्दस्य लोपः। शवानां शयनं श्मशानम्। शवशब्दस्य श्मादेशः। शयनशब्दस्यापि शानशब्द आदेशः। ऊर्ध्वं खमस्येति उलूखलम्। ऊर्ध्वखशब्दयोरुलू खल इत्येतावादेशौ भवतः। पिशिताशः पिशाचः। पिशिताशशब्दयो-र्यथायोगं पिशाचशब्दावादेशौ। ब्रुवन्तोऽस्यां सीदन्तीति बृसी। सदेरधिकरणे डट् प्रत्ययः। ब्रुवच्छब्दस्य चोपपदस्य बृशब्द आदेशो भवति। मह्यां रौतीति मयूरः। रौतेरचि टिलोपः। महीशब्दस्य मयूभावः। एवमन्येऽपि अश्वत्थकपित्थमहित्थप्रभृतयो यथायोगमनुगन्तव्याः ॥ दिक्शब्देभ्य उत्तरस्य तीरस्य तारभावो वा भवति॥ दक्षिणतीरम् , दक्षिणतारम्। उत्तरतीरम् , उत्तरतारम् ॥ वाचो वादे डत्वं च लभावश्चोत्तरपदस्येञि प्रत्यये भवति॥ वाचं वदतीति वाग्वादः। तस्यापत्यं वाड्वालिः ॥ षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च भवति॥ षड् दन्ता अस्य षोडन्। षट् च दश च षोडश ॥ धासु वा षष उत्वं भवत्युत्तरपदादेश्च ष्टुत्वम्॥ षोढा, षड्धा कुरु। बहुवचननिर्देशो नानाधिकरण-वाचिनो धाशब्दस्य प्रतिपत्त्यर्थः। इह मा भूत्—षड् दधाति धयति वा षड्धेति ॥ दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम्॥ कृच्छ्रेण दाश्यते नाश्यते दभ्यते च यः, स दूडाशः ( शौ० सं० १.१३.१ )। दूणाशः ( ऋ० ७.३२.७ )। दूडभं

( ऋ० ४.९.८ )। दम्भेः खल्वनुनासिकलोपो[१] निपातनात्। दुष्टं ध्यायतीति दूढ्यः ( ऋ० ८.७५.९ )। दुःशब्दोपपदस्य ध्यायतेः 'आतश्चोपसर्गे' ( ३.१.१३६ ) इति कप्रत्ययः ॥ स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम् ॥ जाय एहि स्वो रोहाव ( श० ब्रा० ५.२.१.१० ) ॥ पीवोपवसनादीनां च लोपो वक्तव्यः ॥ पीवोपवसनानाम् ( मा० सं० २१.४३ )। पयोपवसनानाम्।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

## संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ॥ ११० ॥

संख्या वि साय इत्येवंपूर्वस्याह्नशब्दस्य स्थानेऽहनित्ययमादेशो भवत्यन्यतरस्यां ङौ परतः। द्वयोरह्नोर्भवो द्व्यह्नः। त्र्यह्नः। द्व्यह्नि, द्व्यहनि। त्र्यह्नि, त्र्यहनि। द्व्यह्ने। त्र्यह्ने। व्यपगतमह्नो व्यह्नः। व्यह्नि, व्यहनि, व्यह्ने। सायमह्नः सायाह्नः। सायाह्नि, सायाहनि, सायाह्ने। एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापि भवतीत्येतदेव विसायपूर्वस्याह्नस्य ग्रहणं ज्ञापकम्। तेन मध्यमह्नो मध्याह्न इत्यपि भवति। संख्याविसायपूर्वस्येति किम् ? पूर्वाह्णे। अपराह्णे ॥

## ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ १११ ॥

ढकाररेफयोर्लोपो यस्मिन् स ढ्रलोपः, तत्र पूर्वस्याणो दीर्घो भवति। लीढम्। मीढम्। उपगूढम्। मूढः। रलोपे—नीरक्तम्। अग्नी रथः। इन्दू रथः। पुना रक्तं वासः। प्राता राजक्रयः। पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्। अण इति किम् ? आतृढम्। आवृढम् ॥

## सहिवहोरोदवर्णस्य ॥ ११२ ॥

सहि वहि इत्येतयोरवर्णस्यौकार आदेशो भवति ढ्रलोपे। सोढा। सोढुम्। सोढव्यम्। वोढा। वोढुम्। वोढव्यम्। अवर्णस्येति किम् ? ऊढः। ऊढवान्। वर्णग्रहणं किम् ? कृतायामपि वृद्धौ यथा स्यात्। उदवोढाम्। उदवोढम्। तादपि परस्तपरः, तपरत्वादाकारस्य ग्रहणं न स्यात् ॥

## साढ्यै साढ्वा साढेति निगमे ॥ ११३ ॥

साढ्यै साढ्वा साढा इति निगमे निपात्यन्ते। साढ्यै ( मै० सं० १.६.३ )

१ - 'खल्वनु०' इत्यपपाठो मुद्रितेषु।

समन्तात्। साढ्वां ( मै० सं० ३.८.५ ) शत्रून्। सहेः क्त्वाप्रत्यय ओत्त्वाभावः। पक्षे क्त्वाप्रत्ययस्य ध्वैभावः। साढेति तृचि रूपमेतत्। निगम इति किम् ? सोढ्वा सोढेति भाषायाम्॥

## संहितायाम्॥ ११४ ॥

संहितायामित्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः संहितायामित्येवं तद् वेदितव्यम्। वक्ष्यति—'द्व्यचोऽतस्तिङः' ( ६.३.१३५ ) इति। विद्मा हि त्वा गोपतिं[1] शूर गोनाम् ( ऋ० १०.४७.१ )। संहितायामिति किम् ? विद्म, हि, त्वा, गोपतिम् , शूर, गोनाम्॥

## कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य॥ ११५ ॥

कर्णशब्द उत्तरपदे लक्षणवाचिनो दीर्घो भवति विष्ट अष्टन् पञ्चन् मणि भिन्न छिन्न छिद्र स्रुव स्वस्तिक इत्येतान् वर्जयित्वा। दात्राकर्णः। द्विगुणाकर्णः। त्रिगुणाकर्णः। द्व्यङ्गुलाकर्णः। अङ्गुलाकर्णः। यत् पशूनां स्वामिविशेषसंबन्धज्ञापनार्थं दात्राकारादि क्रियते, तदिह लक्षणं गृह्यते। लक्षणस्येति किम् ? शोभनकर्णः। अविष्टादीनामिति किम्? विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ॥ ११६ ॥

नहि वृति वृषि व्यधि रुचि सहि तनि इत्येतेषु क्विप्रत्ययान्तेषूत्तरपदेषु पूर्वपदस्य दीर्घो भवति संहितायां विषये। नहि—उपानत्। परीणत्। वृति—नीवृत्। उपावृत्। वृषि—प्रावृट्। उपावृट्। व्यधि—मर्मावित्। हृदयावित्। श्वावित्। रुचि—नीरुक्। अभीरुक्। सहि—ऋतीषट्। तनि—परीतत्[2]। 'गमः क्वौ' ( ६.४.४० ) इति गमादीनामिष्यते। ततस्तनोतेरप्यनुनासिकलोपः। क्वाविति किम् ? परिणहनम्॥

## वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्[3] ॥ ११७ ॥

वन गिरि इत्येतयोरुत्तरपदयोर्यथासंख्यं कोटरादीनां किंशुलकादीनां च दीर्घो भवति संज्ञायां विषये। वने कोटरादीनाम्—कोटरावणम्। मिश्रकावणम्। सिध्रकावणम्। सारिकावणम्। गिरौ किंशुलकादीनाम्—किंशुलकागिरिः। अञ्जनागिरिः। कोटरकिंशुलका-

---

१ - 'सत्पतिम्' इति बाल०। २ - 'तरीतत्' इति मुद्रितपाठः।

३ - 'किंशुलुक०' इति पाठान्तरम्।

दीनामिति किम् ? असिपत्रवनम्। कृष्णगिरिः॥ कोटर। मिश्रक। पुरग[1]। सिध्रक। सारिक। कोटरादिः॥ किंशुलक। शाल्वक। अञ्जन। भञ्जन। लोहित। कुक्कुट। किंशुलकादिः॥

## वले॥ ११८ ॥

वले परतः पूर्वस्य दीर्घो भवति। आसुतीवलः। कृषीवलः। दन्तावलः। 'रजःकृष्यासुतिपरिषदो वलच्' ( ५.२.११२ ) इति वलच्प्रत्ययो गृह्यते, न प्रातिपदिकम्। अनुत्साहभ्रातृपितृणामित्येव—उत्साहवलः। भ्रातृवलः। पितृवलः[2]॥

## मतौ बह्वचोऽनजिरादीनाम्॥ ११९ ॥

मतौ परतो बह्वचोऽजिरादिवर्जितस्य दीर्घो भवति संज्ञायां विषये। उदुम्बरावती। मशकावती। वीरणावती। पुष्करावती। अमरावती। 'नद्यां मतुप्' ( ४.२.८५ ) इति मतुप्प्रत्ययः। 'संज्ञायाम्' ( ८.२.११ ) इति मतोर्वत्वम्। बह्वच इति किम् ? व्रीहिमती। अनजिरादीनामिति किम् ? अजिरवती। खदिरवती। पुलिनवती। हंसकारण्डववती। चक्रवाकवती। संज्ञायामित्येव—वलयवती॥

## शरादीनां च॥ १२० ॥

शरादीनां च मतौ दीर्घो भवति संज्ञायां विषये। शरावती। वंशावती॥ शर। वंश। धूम। अहि। कपि। मणि। मुनि। शुचि। हनु। शरादिः। 'संज्ञायाम्' ( ८.२.११ ) इति मतोर्वत्वम्। यवादित्वाद् ( ८.२.९ ) व्रीह्यादिभ्यो न भवति[3]॥

## इको वहेऽपीलोः॥ १२१ ॥

इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वह उत्तरपदे दीर्घो भवति। ऋषीवहम्। कपीवहम्। मुनीवहम्। इक इति किम् ? पिण्डवहम्। अपीलोरिति किम् ? पीलुवहम् ॥ अपील्वादीनामिति वक्तव्यम्॥ इह मा भूत्—दारुवहम्[4]॥

---

१ - 'पुरक' इति प्रायिकः पाठः।

२ - 'अनुत्साह.........पितृवलः' इति पाठो न सार्वत्रिकः। हरदत्तस्तु—'अण इत्येव—भर्तृवलः' इत्याह।

३ - पूर्वसूत्रे प्रत्युदाहरणत्वेनोपन्यस्ते व्रीहिमतीशब्दे संज्ञात्वाद् वत्वप्राप्तावयं समाधिः। तत्सूत्रस्था पदमञ्जरी द्रष्टव्या।

२ - 'चारुवहम्' इति पाठान्तरम्।

## उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ १२२ ॥

उपसर्गस्य घञन्त उत्तरपदेऽमनुष्येऽभिधेये बहुलं दीर्घो भवति। वीक्लेदः। वीमार्गः। अपामार्गः। न च भवति—प्रसेवः। प्रसारः ॥ सादकारयोः कृत्रिमे दीर्घो भवति ॥ प्रासादः। प्राकारः। कृत्रिम इति किम् ? प्रसादः। प्रकारः ॥ वेशादिषु विभाषा दीर्घो भवति ॥ प्रतिवेशः, प्रतीवेशः। प्रतिरोधः, प्रतीरोधः। अमनुष्य इति किम् ? निषादो मनुष्यः ॥

## इकः काशे ॥ १२३ ॥

इगन्तस्योपसर्गस्य काशशब्द उत्तरपदे दीर्घो भवति। नीकाशः। वीकाशः। अनूकाशः। पचाद्यच्प्रत्ययान्तोऽयं काशशब्दो न तु घञन्तः। इक इति किम् ? प्रकाशः ॥

## दस्ति ॥ १२४ ॥

दा इत्येतस्य यस्तकारादिरादेशस्तस्मिन् परत इगन्तस्योपसर्गस्य दीर्घो भवति। नीत्तम्। वीत्तम्। परीत्तम्। 'अच उपसर्गात् तः' (७.४.४७) इत्यन्तस्य यद्यपि तकारः क्रियते, तथापि चर्त्वस्याश्रयात् सिद्धत्वमिति तकारादिर्भवति। इक इत्येव—प्रत्तम्। अवत्तम्। द इति किम् ? वितीर्णम्। नितीर्णम्। तीति किम् ? सुदत्तम् ॥

## अष्टनः संज्ञायाम् ॥ १२५ ॥

अष्टनित्येतस्योत्तरपदे संज्ञायां दीर्घो भवति। अष्टावक्रः। अष्टाबन्धुरः। अष्टापदम्। संज्ञायामिति किम् ? अष्टपुत्रः। अष्टभार्यः ॥

## छन्दसि च ॥ १२६ ॥

छन्दसि विषयेऽष्टन उत्तरपदे दीर्घो भवति। आ॒ग्ने॒यम॒ष्टाक॑पालं॒ निर्व॑पेत् ( मै० सं० २.१.३ )। अष्टाहिरण्या दक्षिणा। अष्टापदी देवता सुमती। अष्टौ पादावस्या इति बहुव्रीहौ पादस्य लोपे (५.४.१३८) कृते 'पादोऽन्यतरस्याम्' (४.१.८) इति ङीप् ॥ गवि च युक्ते भाषायामष्टनो दीर्घो भवतीति वक्तव्यम् ॥ अष्टागवं शकटम् ॥

## चितेः कपि ॥ १२७ ॥

चितिशब्दस्य कपि परतो दीर्घो भवति। एकचितीकः। द्विचितीकः। त्रिचितीकः ॥

## विश्वस्य वसुराटोः ॥ १२८ ॥

विश्वशब्दस्य वसु राडित्येतयोरुत्तरपदयोर्दीर्घ आदेशो भवति। विश्वावसुः। विश्वाराट्। राडिति विकारनिर्देशो यत्रास्यैतद् रूपं तत्रैव यथा स्यात्। इह न भवति—विश्वराजौ। विश्वराजः॥

## नरे संज्ञायाम् ॥ १२९ ॥

नरशब्द उत्तरपदे संज्ञायां विषये विश्वस्य दीर्घो भवति। विश्वानरो नाम यस्य वैश्वानरिः पुत्रः। संज्ञायामिति किम् ? विश्वे नरा यस्य स विश्वनरः॥

## मित्रे चर्षौ ॥ १३० ॥

मित्रे चोत्तरपद ऋषावभिधेये विश्वस्य दीर्घो भवति। विश्वामित्रो नाम ऋषिः। ऋषाविति किम् ? विश्वमित्रो माणवकः॥

## मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३१ ॥

मन्त्रविषये सोम अश्व इन्द्रिय विश्वदेव्य इत्येतेषां मतुप्रत्यये परतो दीर्घो भवति। सोमावती ( ऋ० १०.९७.७ )। अश्वावती ( ऋ० १०.९७.७ )। इन्द्रियावती ( तै० सं० २.४.२.१ )। विश्वदेव्यावती ( तै० सं० ४.१.६.१ )॥

## ओषधेश्च विभक्तावप्रथमायाम् ॥ १३२ ॥

मन्त्र इति वर्तते। ओषधिशब्दस्य विभक्तावप्रथमायां परतो दीर्घो भवति। ओषधीभिः पुनीतात्[1] ( ऋ० १०.३०.५ )। नमः पृथिव्यै नम ओषधीभ्यः ( तै० आ० २.१२.१ )। विभक्ताविति किम् ? ओषधिपते। अप्रथमायामिति किम् ? स्थिरेयमस्त्वोषधिः॥

## ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥ १३३ ॥

ऋचि विषये तु नु घ मक्षु तङ् कु त्र उरुष्य इत्येषां दीर्घो भवति। आ तू न इन्द्र वृत्रहन् ( ऋ० ४.३२.१ )। नु—नू करणे। घ—उत वा घा स्यालात् ( ऋ० १.१०९.२)। मक्षु—मक्षू गोमन्तमीमहे ( ऋ० ८.३३.३ )। तङ्—भरता जातवेदसम् ( ऋ० १०.१७६.२ )। तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम्, तेनेह न भवति—शृणोत ग्रावाणः

१ - 'अपीपतत्' इति मुद्रितपाठः।

( तै० सं० १.३.१३.१ )। कु—कूमनः। त्र—अत्रा गौः। उरुष्य—उरुष्या णो अभिशस्तेः[1] ( ऋ० १.९१.१५ )॥

## इकः सुञि ॥ १३४ ॥

सुञ् निपातो गृह्यते। इगन्तस्य सुञि परतो मन्त्रविषये दीर्घो भवति। अभी षु णः सखीनाम् ( ऋ० ४.३१.३ )। ऊर्ध्व ऊ षु णं ऊतये ( ऋ० १.३६.१३ )। 'सुञः' ( ८.३.१०५ ) इति षत्वम्। 'नश्च धातुस्थोरुषुभ्यः' ( ८.४.२७ ) इति णत्वम्॥

## द्व्यचोऽतस्तिङः ॥ १३५ ॥

ऋचीति वर्तते। द्व्यचस्तिङन्तस्यात ऋग्विषये दीर्घो भवति। विद्मा हि त्वा गोपतिं[2] शूर गोनाम् ( ऋ० १०.४७.१ )। विद्मा शरस्य[3] पितरम् ( शौ० सं० १.२.१ )। द्व्यच इति किम् ? अश्वा भवत वाजिनः ( मा० सं० ९.६ )। अत इति किम्? आ देवान् वक्षि यक्षि च ( ऋ० ५.२६.१ )॥

## निपातस्य च ॥ १३६ ॥

ऋचीत्येव। निपातस्य च ऋग्विषये दीर्घ आदेशो भवति। एवा ते ( ऋ० १०.२०.१० )। अच्छा[4] ( ऋ० १.२.२ )॥

## अन्येषामपि दृश्यते ॥ १३७ ॥

अन्येषामपि दीर्घो दृश्यते, स शिष्टप्रयोगादनुगन्तव्यः। यस्य दीर्घत्वं न विहितम्, दृश्यते च प्रयोगे, तदनेन कर्तव्यम्। केशाकेशि। कचाकचि। जलाषाट्। नारकः। पूरुषः ॥ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु ॥ श्वादन्तः। श्वादंष्ट्रः। श्वाकर्णः। श्वाकुन्दः। श्वावराहः। श्वापुच्छः। श्वापदः॥

## चौ ॥ १३८ ॥

चौ परतः पूर्वपदस्य दीर्घो भवति। चावित्यञ्चतिर्लुप्तनकाराकारो गृह्यते। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। अन्तरङ्गोऽपि हि यणादेशो दीर्घविधानसामर्थ्याद् न प्रवर्तते॥

---

१ - 'णोऽग्नेः' इति तारा० बाल०। २ - 'सत्पतिं' इति मुद्रितः पाठः।
३ - 'स तस्य' इति तारा० बाल०। ४ - 'अच्छा ते' इति बाल०।

## संप्रसारणस्य ॥ १३९ ॥

उत्तरपद इति वर्तते। संप्रसारणान्तस्य पूर्वपदस्योत्तरपदे दीर्घो भवति। कारीषगन्धीपुत्रः। कारीषगन्धीपतिः। कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। करीषस्येव गन्धोऽस्य। कुमुदस्येव गन्धोऽस्य। 'अल्पाख्यायाम्' 'उपमानाच्च' ( ५.४.१३६, १३७ ) इतीकारः समासान्तः। करीषगन्धेरपत्यं कारीषगन्ध्या, कुमुदगन्धेरपत्यं कौमुदगन्ध्या। तस्याः पुत्रः कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। 'इको ह्रस्वोऽङ्यो गालवस्य' ( ६.३.६१ ) इत्येतद् न भवति। व्यवस्थितविभाषा ( परि० ९९ ) हि सा। अकृत एव दीर्घत्वे ह्रस्वाभावपक्षे कृतार्थेनापि दीर्घेण पक्षान्तरे परत्वाद् ह्रस्वो बाध्यते। पुनः प्रसङ्गविज्ञानं ( परि० ३९ ) च न भवति। 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' ( परि० ४० ) इति॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य तृतीयः पादः॥



# ॥ षष्ठाध्यायस्य चतुर्थः पादः ॥

## अङ्गस्य ॥ १ ॥

अधिकारोऽयमा सप्तमाध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामोऽङ्गस्येत्येवं तद् वेदितव्यम्। वक्ष्यति—'हलः' ( ६.४.२ )—हूतः। जीनः। संवीतः। अङ्गस्येति किम्? निरुतम्। दुरुतम्। 'नामि' ( ६.४.३ ) दीर्घः—अग्नीनाम्। वायूनाम्। अङ्गस्येति किम् ? क्रिमिणां पश्य। पामनां पश्य। 'अतो भिस ऐस्' ( ७.१.९ )—वृक्षैः। प्लक्षैः। अङ्गस्येति किम् ? ब्राह्मणभिस्सा। ओदनभिस्सिटा। अङ्गाधिकारः कृतोऽन्यार्थो नामि दीर्घत्वाद्यपि व्यवस्थापयतीति तदर्थम् अर्थवद्ग्रहणपरिभाषा ( परि० १४ ) नाश्रयितव्या भवति। अङ्गस्येति संबन्धसामान्य एषा षष्ठी यथायोगं विशेषेष्ववतिष्ठते। अथवा प्रातिपदिकार्थमात्रमविवक्षितविभक्त्यर्थमधिक्रियते। तदुत्तरत्र यथायोगं विपरिणम्यते। ततोऽकारान्तादङ्गाद् भिस ऐसित्येवमाद्यपि सम्यक् संपन्नं भवति॥

## हलः ॥ २ ॥

अङ्गावयवाद्धलो यदुत्तरं संप्रसारणं तदन्तस्याङ्गस्य दीर्घो भवति। हूतः। जीनः। संवीतः। हल इति किम् ? उतः। उतवान्। अङ्गावयवादिति किम् ? निरुतम्। तदन्तस्येति किम् ? विद्धः। विचितः। अण इत्येव—तृतीयः। '०तृतीया' ( २.३.१८) इति वा निपातनादत्र दीर्घाभावः। अङ्गग्रहणमावर्तयितव्यं हल्विशेषणार्थम्, अङ्गकार्य-प्रतिपत्त्यर्थं च॥

## नामि ॥ ३ ॥

नामित्येतत्[1] षष्ठीबहुवचनमागतनुट्कं गृह्यते। तस्मिन् परतोऽङ्गस्य दीर्घो भवति। अग्नीनाम्। वायूनाम्। कर्तॄणाम्। हर्तॄणाम्। अण इत्येतदत्र निवृत्तम्। आगतनुट्कग्रहण-मुत्तरार्थम्, कृते च नुटि दीर्घप्रतिपत्त्यर्थम्। अन्यथा हि नुडेव न स्यात्।

नामि दीर्घ आमि चेत्स्यात् कृते दीर्घे न नुड् भवेत्।
वचनाद् यत्र तन्नास्ति नोपधायाश्च चर्मणाम्॥

## न तिसृचतसृ ॥ ४ ॥

तिसृ चतसृ इत्येतयोर्नामि दीर्घो न भवति। तिसृणाम्। चतसृणाम्। इदमेव नामीति दीर्घप्रतिषेधवचनं ज्ञापकम्—'अचि र ऋतः' ( ७.२.१०० ) इत्येतस्मात् पूर्व-विप्रतिषेधेन नुडागमो भवतीति॥

## छन्दस्युभयथा ॥ ५ ॥

छन्दसि विषये तिसृचतस्रोर्नामि परत उभयथा दृश्यते, दीर्घश्चादीर्घश्च। तिसृणां मध्यन्दिने ( काठ० सं० २७.९ ), तिसृणां ( ऋ० ५.६९.२ ) मध्यदिने। चतसृणां (काठ० सं० २७.९ ) मध्यदिने, चतसृणां मध्यदिने॥

## नृ च ॥ ६ ॥

नृ इत्येतस्य नामि पर उभयथा भवति। त्वं नृणां ( पै० सं० २.१०.४ ) नृपते। त्वं नृणां नृपते ( ऋ० २.१.१ )। केचिदत्र छन्दसीति नानुवर्तयन्ति। तेन भाषायामपि विकल्पो भवति॥

---

१ – 'एतत्' इति नास्ति न्या० पद०।

## नोपधायाः ॥ ७ ॥

नान्तस्याङ्गस्योपधाया नामि परतो दीर्घो भवति। पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। न इति किम्? चतुर्णाम्। नामीत्येव—चर्मणाम्॥

## सर्वनामस्थाने चासंबुद्धौ ॥ ८ ॥

सर्वनामस्थाने च परतोऽसंबुद्धौ नोपधाया दीर्घो भवति। राजा, राजानौ, राजानः। राजानम्, राजानौ। सामानि तिष्ठन्ति। सामानि पश्य। सर्वनामस्थान इति किम्? राजनि। सामनि। असंबुद्धाविति किम्? हे राजन्। हे तक्षन्॥

## वा षपूर्वस्य निगमे ॥ ९ ॥

षपूर्वस्याचो नोपधाया निगमविषये सर्वनामस्थाने परतोऽसंबुद्धौ वा दीर्घो भवति। सं तंक्षाणं तिंष्ठन्तमब्रवीत् ( मै० सं० २.४.१ ), स तक्षणं तिष्ठन्तमब्रवीत्। ऋभुक्षाणमिन्द्रम्, ऋभुक्षणमिन्द्रम् ( ऋ० १.१११.४ )। निगम इति किम्? तक्षा, तक्षाणौ, तक्षाणः॥

## सान्तमहतः संयोगस्य ॥ १० ॥

सकारान्तस्य संयोगस्य यो नकारः महतश्च तस्योपधाया दीर्घो भवति सर्वनामस्थाने परतोऽसंबुद्धौ। श्रेयान्, श्रेयांसौ, श्रेयांसः। श्रेयांसि। पयांसि। यशांसि। महतः खल्वपि—महान्, महान्तौ, महान्तः। असंबुद्धाविति किम्? हे श्रेयन्। हे महन्॥

## अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् ॥ ११ ॥

अप् इत्येतस्य तृनन्तस्य तृजन्तस्य स्वसृ नप्तृ नेष्टृ त्वष्टृ क्षत्तृ होतृ पोतृ प्रशास्तृ इत्येतेषां चाङ्गानामुपधाया दीर्घो भवति सर्वनामस्थाने परतोऽसंबुद्धौ। अप्—आपः। बह्वाम्पि तडागानीति केचिदिच्छन्ति। तत्र 'समासान्तो विधिरनित्यः' ( परि० ८४ ) इति समासान्तो न क्रियते। नित्यमपि च नुममकृत्वा दीर्घत्वमिष्यते। तृन्—कर्तारौ कटान्। वदितारौ जनापवादान्। कर्तारः। तृच्—कर्तारौ कटस्य। कर्तारः। हर्तारौ भारस्य। हर्तारः। स्वसृ—स्वसा, स्वसारौ, स्वसारः। नप्तृ—नप्ता, नप्तारौ, नप्तारः। नेष्टृ—नेष्टा, नेष्टारौ, नेष्टारः। त्वष्टृ—त्वष्टा, त्वष्टारौ, त्वष्टारः। क्षत्तृ—क्षत्ता, क्षत्तारौ, क्षत्तारः। होतृ—होता, होतारौ, होतारः। पोतृ—पोता, पोतारौ, पोतारः। प्रशास्तृ—प्रशास्ता, प्रशास्तारौ, प्रशास्तारः। नप्त्रादीनां ग्रहणमव्युत्पत्तिपक्षे विध्यर्थम्। व्युत्पत्तिपक्षे नियमार्थम्, एवंभूतानामन्येषां संज्ञाशब्दानां दीर्घो मा भूदिति। पितरौ, पितरः।

मातरौ, मातरः। असंबुद्धाविति किम् ? हे कर्तः। हे स्वसः॥

## इन्हन्पूषार्यम्णां शौ ॥ १२ ॥

इन् हन् पूषन् अर्यमन् इत्येवमन्तानामङ्गानां शौ परत उपधाया दीर्घो भवति। बहुदण्डीनि। बहुच्छत्रीणि। बहुवृत्रहाणि। बहुभ्रूणहानि। बहुपूषाणि। बह्वर्यमाणि। सिद्धे सत्यारम्भो नियमार्थः—इन्हन्पूषार्यम्णामुपधायाः शावेव दीर्घो भवति नान्यत्र। दण्डिनौ। छत्रिणौ। वृत्रहणौ। पूषणौ। अर्यमणौ।

दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान्।
शौ नियमं पुनरेव विदध्याद् भ्रूणहनीति तथास्य न दुष्येत्॥
शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य।
दीर्घविधेरुपधानियमान्मे हन्त यि[1] दीर्घविधौ च न दोषः॥
सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे।
यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम्॥

हन्तेः 'अनुनासिकस्य क्विझलोः क्ङिति' ( ६.४.१५ ) इति दीर्घत्वं यत्, तदपि नियमेन बाध्यते—वृत्रहणि, भ्रूणहनीति। कथम् ? योगविभागः क्रियते। इन्हन्पूषार्यम्णां सर्वनामस्थान एव दीर्घो भवति, नान्यत्रेति। ततः शाविति द्वितीयो नियमः। शावेव सर्वनामस्थाने दीर्घो भवति, नान्यत्रेति। सर्वस्योपधालक्षणस्य दीर्घस्य नियमेन निवृत्तिः क्रियते। यस्तु न उपधालक्षणः स भवत्येव। वृत्रहायते। भ्रूणहायते। अथ वानुवर्तमानेऽपि सर्वनामस्थानग्रहणे सामर्थ्यादयमविशेषेण नियमः। शिशब्दो हि सर्वनामस्थानं नपुंसकस्य, न च तस्यान्यत् सर्वनामस्थानमस्तीत्यविशेषेण नियमः। तत्र तु नपुंसकस्येत्येतद् नाश्रीयते। तेनानपुंसकस्यापि दीर्घो न भवति। सर्वनामस्थानसंज्ञाविधाने तु नपुंसकस्य व्यापारोऽस्तीति तत्र नियमः क्रियमाणो नपुंसकस्य स्यात्॥

## सौ च ॥ १३ ॥

सावसंबुद्धौ परत इन्हन्पूषार्यम्णामुपधाया दीर्घो भवति। दण्डी। वृत्रहा। पूषा। अर्यमा। असंबुद्धाविति किम् ? हे दण्डिन्। हे वृत्रहन्। हे पूषन्। हे अर्यमन्॥

## अत्वसन्तस्य चाधातोः ॥ १४ ॥

अतु अस् इत्येवमन्तस्य अधातोरुपधायाः सावसंबुद्धौ परतो दीर्घो भवति। डवतु—भवान्। क्तवतु—कृतवान्। मतुप्—गोमान्। यवमान्। अत्र कृते दीर्घे नुमागमः कर्तव्यः।

---

१ - ' हन्ति यि ' इति पाठान्तरम्।

यदि हि परत्वाद् नित्यत्वात् च नुम् स्यात्, दीर्घस्य निमित्तमजुपधा[१] विहन्येत। असन्तस्य—सुपयाः। सुयशाः। सुस्रोताः[२]। अधातोरिति किम् ? पिण्डं ग्रसत इति पिण्डग्रः। चर्म वस्त इति चर्मवः। अनर्थकोऽप्यसुशब्दो गृह्यते, 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' ( परि० १६ ) इति। अन्तग्रहणमुपदेशप्रयोगैक-देशस्याप्यत्वन्तस्य परिग्रहार्थम्। अन्यथा मतुपो ग्रहणं न स्यात्, उपदेशे रूपनिर्ग्रहहेतौ नायमत्वन्त इति। असंबुद्धावित्येव—हे गोमन्। हे सुपयः॥

## अनुनासिकस्य क्विझलोः क्ङिति ॥ १५ ॥

अनुनासिकान्तस्याङ्गस्य उपधाया दीर्घो भवति क्विप्रत्यये परतो झलादौ च क्ङिति। प्रशान्। प्रतान्। झलादौ किति—शान्तः। शान्तवान्। शान्त्वा। शान्तिः। ङिति खल्वपि—शंशान्तः। तन्तान्तः। यङ्लुगन्तादयं तस्। अनुनासिकस्येति किम् ? ओदनपक्। पक्वः। पक्ववान्। क्विझलोरिति किम् ? गम्यते। रम्यते। क्ङितीति किम् ? गन्ता। रन्ता॥

## अज्झनगमां सनि ॥ १६ ॥

अजन्तानामङ्गानां हनिगम्योश्च सनि झलादौ परे दीर्घो भवति। अजन्तानाम्—विवीषति। तुष्टूषति। चिकीर्षति। जिहीर्षति। हन्—जिघांसति। गम्—अधिजिगांसते ॥ गमेरिङादेशस्येति वक्तव्यम् ॥ इह मा भूत्—संजिगंसते वत्सो मात्रेति। स्वर्गं लोकं समजिगांसद्[३] इति छन्दसि यदनिङादेशस्यापि दीर्घत्वं दृश्यते, तद् 'अन्येषामपि दृश्यते' ( ६.३.१३७ ) इत्यनेन भवति। अथ वा इहाज्ग्रहणं न कर्तव्यम्। सनि दीर्घो भवतीत्येतावदेव सूत्रं कर्तव्यम्, तत्राचा गृह्यमाणस्य विशेषणे सति सिद्धमजन्तस्य दीर्घत्वम्। तत् क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्—अजन्तस्याङ्गस्य दीर्घो भवति, अजादेशस्य गमेरिति। ततो न वक्तव्यमिदं गमेरिङादेशस्येति ॥

## तनोतेर्विभाषा ॥ १७ ॥

तनोतेरङ्गस्य सनि झलादौ विभाषा दीर्घो भवति। तितांसति, तितंसति। झलीत्येव—तितनिषति। 'सनीवन्तर्ध०' ( ७.२.४९ ) इत्यत्र तनोतेरुपसंख्यानादिडागमो भवति विकल्पेन॥

---

१ – 'निमित्तमतूपधा' इत्यपपाठो ह्रै० तारा०।
२ – 'सुश्रोताः' इति मुद्रितेषु।
३ – तु०—सुवर्गं लोकमंजिगांसन् ( तै० सं० ५.५.५.४ )।

## क्रमश्च क्त्वि ॥ १८ ॥

क्रम उपधाया विभाषा दीर्घो भवति क्त्वाप्रत्यये झलादौ परतः। क्रन्त्वा, क्रान्त्वा। झलीत्येव—क्रमित्वा। प्रक्रम्य, उपक्रम्येति 'बहिरङ्गोऽपि ल्यबादेशोऽन्तरङ्गानपि विधीन् बाधते' ( परि० ५४ ) इति पूर्वमेव दीर्घत्वं न प्रवर्तते ॥

## च्छ्वोः शूडनुनासिके च ॥ १९ ॥

छ इत्येतस्य सतुक्कस्य वकारस्य च स्थाने यथासंख्यं श् ऊठ् इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्यये परतः क्वौ झलादौ च क्ङिति। प्रश्नः। विश्नः। अन्तरङ्गत्वाच् 'छे च' ( ६.१.७३ ) इति तुकि कृते सतुक्कस्य शादेशः। वकारस्य ऊठ्—स्योनः। सिवेरौणादिके नप्रत्यये ( प० उ० ३.९ ) लघूपधगुणात् पूर्वमूठ् क्रियते। तत्र कृतेऽन्तरङ्गत्वाद् यणादेशो नानाश्रयत्वात् च न 'वार्णादाङ्गं बलीयः' ( परि० ५५ ) भवति। क्वौ छस्य—शब्दप्राट्। 'क्विब् वचि०' ( प० उ० २.५८ ) इत्यादिनौणादिकः क्विप् दीर्घश्च। गोविट्। वकारस्य—अक्षद्यूः। हिरण्यष्ठ्यूः। 'असिद्धं बहिरङ्गमन्तरङ्गे' ( परि० ५० ) इति 'नाजानन्तर्ये०' ( परि० ५१ ) इति प्रतिषिध्यते। झलादौ छस्य—पृष्टः। पृष्टवान्। पृष्ट्वा। वकारस्य—द्यूतः। द्यूतवान्। द्यूत्वा। क्ङितीत्येव — द्युभ्याम्। द्युभिः। केचिदत्र क्ङितीति नानुवर्तयन्ति। कथं द्युभ्यां द्युभिरिति ? ऊठि कृते, 'दिव उत्' ( ६.१.१३१ ) इति तपरत्वाद् मात्राकालो भविष्यति। छशां षः ( ८.२.३६ ) इत्यत्र छग्रहणं न कर्तव्यम्, अनेनैव हि सर्वत्र शकारो विधीयते। ऊठष्ठित्करणम् 'एत्येधत्यूठ्सु' ( ६.१.८९ ) इति विशेषणार्थम्। 'वाह ऊठ्' ( ६.४.१३२ ) इत्ययमपि ठिदेव ॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥ २० ॥

ज्वर त्वर स्रिवि अव मव इत्येतेषामङ्गानां वकारस्य उपधायाश्च स्थान ऊडित्ययमादेशो भवति क्वौ परतोऽनुनासिके झलादौ च क्ङिति। जूः, जुरौ, जुरः। जूर्तिः। त्वर—तूः, तुरौ, तुरः। तूर्तिः। स्रिवि—स्रूः, स्रुवौ, स्रुवः। स्रूतः। स्रूतवान्। स्रूतिः। अव—ऊः, उवौ, उवः। ऊतिः। मव—मूः, मुवौ, मुवः[1] मूतिः। ज्वरत्वरोरुपधा वकारात् परा, स्रिव्यवमवां पूर्वा ॥

## राल्लोपः ॥ २१ ॥

रेफादुत्तरयोश्छ्वोर्लोपो भवति क्वौ परतो झलादौ क्ङिति च परतः। मुर्छा—मूः, मुरौ, मुरः। मूर्तः। मूर्तवान्। मूर्तिः। 'न ध्याख्यापॄमूर्च्छिमदाम्' ( ८.२.५७ ) इति

---

१ - ' मूतः, मूतवान् ' इत्यधिकं मुद्रितेपु। तन्न युक्तम्, सेट्त्वात् मवतेः।

निष्ठानत्वाभावः। हुर्छा—हूः, हुरौ, हुरः। हूर्णः। हूर्णवान्। हूर्तिः। राल्लोपे सतुक्कस्य छस्याभावात् केवलो गृह्यते। वकारस्य—तुर्वी—तूः, तुरौ, तुरः। तूर्णः। तूर्णवान्। तूर्तिः। धुर्वी—धूः, धुरौ, धुरः। धूर्णः। धूर्णवान्। धूर्तिः॥

## असिद्धवदत्रा भात्॥ २२ ॥

असिद्धवदित्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्याम आ अध्यायपरिसमाप्तेस्तद् असिद्धवद् भवतीत्येवं वेदितव्यम्। आ भादिति विषयनिर्देशः। आ भसंशब्दनाद् यदुच्यते तत्र कर्तव्ये। अत्रेति समानाश्रयत्वप्रतिपत्त्यर्थम्। तच्चेदत्र भवति[1] यत्र तदाभाच्छास्त्रीयं विधीयते तदाश्रयमेव भवति। व्याश्रयं तु नासिद्धवद् भवतीत्यर्थः। असिद्धवचनमुत्सर्गलक्षणभावार्थम्, आदेशलक्षणप्रतिषेधार्थं च। एधि, शाधीत्यत्र एत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति, असिद्धत्वाद् भवति। आगहि, जहीत्यत्रानुनासिकलोपे जभावे च 'अतो हेः' ( ६.४.१०५ ) इति लुक् प्राप्नोति, असिद्धत्वाद् न भवति। आ भादिति किम्? अभाजि। रागः। 'अत उपधायाः' ( ७.२.११६ ) इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति। अत्रग्रहणं किम् ? पपुषः पश्य। चिच्युषः पश्य। लुलुवुषः पश्य। वसुसंप्रसारणमाल्लोपे यणादेश उवङादेशे च कर्तव्ये नासिद्धं भवति। आल्लोपादीनि वसौ, वस्वन्तस्य विभक्तौ संप्रसारणमिति समानाश्रयत्वं नास्ति। 'असिद्धं बहिरङ्गमन्तरङ्गे' ( परि० ५० ) इत्येतदप्यत्र न भवति। किं कारणम् ? एषा हि परिभाषा आभाच्छास्त्रीया। तस्यां प्रवर्तमानायां वसुसंप्रसारणादीनामाभाच्छास्त्रीयाणामेवासिद्धत्वादन्तरङ्गबहिरङ्गयोर्युगपत् समुपस्थानं नास्तीति परिभाषा न प्रवर्तते ॥ वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्यम्॥ वुग् उवङादेशे—बभूव, बभूवतुः, बभुवुः। युट् यणादेशे—उपदिदीये, उपदिदीयाते, उपदिदीयिरे। आ भादित्ययमभिविधावाङ्। तेन भाधिकारेऽप्यसिद्धवद् भवति॥

## श्नान्नलोपः॥ २३ ॥

श्नादिति श्नमयमुत्सृष्टमकारो गृह्यते। तत उत्तरस्य नकारस्य लोपो भवति। अनक्ति। भनक्ति। हिनस्ति। शकारवतो ग्रहणं किम् ? यज्ञानाम्। यत्नानाम्। 'सुपि च' ( ७.३.१०२ ) इति परत्वात् कृतेऽपि दीर्घत्वे स्थानिवद्भावाद् नलोपः स्यादेव। विश्नानां प्रश्नानामित्यत्र 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव०' ( परि० १०५ ) इत्येवं न भवति॥

## अनिदितां हल उपधायाः क्ङिति॥ २४ ॥

---

१ – 'यत्र भवति' इति व्यत्यस्तः पाठो मुद्रितेपु। यथान्यासमत्र 'भवति' इति पाठो न स्यात्।

अनिदितामङ्गानां हलन्तानामुपधाया नकारस्य लोपो भवति क्ङिति प्रत्यये परतः। स्रस्तः। ध्वस्तः। स्रस्यते। ध्वस्यते। सनीस्रस्यते। दनीध्वस्यते। अनिदितामिति किम्? नन्द्यते। नानन्द्यते। हल इति किम् ? नीयते। नेनीयते। उपधाया इति किम्? नह्यते। नानह्यते । क्ङितीति किम् ? स्रंसिता। ध्वंसिता ॥ अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानं कर्तव्यम्॥ विलगितः। विकपितः। उपतापशरीरविकारयोरिति किम् ? विलङ्गितः। विकम्पितः ॥ रञ्जेर्णौ मृगरमण उपसंख्यानं कर्तव्यम्॥ रजयति मृगान्। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' (भ्वा० ५६०) इति मित्त्वादुपधाह्रस्वत्वम्। मृगरमण इति किम् ? रञ्जयति वस्त्राणि ॥ घिनुणि च रञ्जेरुपसंख्यानं कर्तव्यम्॥ रागी। त्यजरजभज० ( ३.२.१४२ ) इति निपातनाद् वा सिद्धम् ॥ रजकरजनरजःसूपसंख्यानं कर्तव्यम्॥ रजकः। रजनम्। रजः॥

## दंशसञ्जस्वञ्जां शपि ॥ २५ ॥

दंश सञ्ज ष्वञ्ज इत्येतेषामङ्गानां शपि परत उपधाया नकारस्य लोपो भवति। दशति। सजति। परिष्वजते॥

## रञ्जेश्च ॥ २६ ॥

रञ्जेश्च शपि परत उपधाया नकारस्य लोपो भवति। रजति, रजतः, रजन्ति। पृथग्योगकरणमुत्तरार्थम्॥

## घञि च भावकरणयोः ॥ २७ ॥

भावकरणवाचिनि घञि परतो रञ्जेरुपधाया नकारस्य लोपो भवति। भावे— आश्चर्यो रागः। विचित्रो रागः। करणे—रज्यतेऽनेनेति रागः। भावकरणयोरिति किम्? रजन्ति तस्मिन्निति रङ्गः॥

## स्यदो जवे ॥ २८ ॥

जवेऽभिधेये स्यद इति घञि निपात्यते। स्यन्देर्नलोपो वृद्ध्यभावश्च। इक्प्रकरणाद् 'न धातुलोप०' ( १.१.४ ) इति प्रतिषेधो नास्ति। गोस्यदः। अश्वस्यदः। जव इति किम्? तैलस्यन्दः। घृतस्यन्दः॥

## अवोदैधौद्मप्रश्रथहिमश्रथाः ॥ २९ ॥

अवोद एध ओद्म प्रश्रथ हिमश्रथ इत्येते निपात्यन्ते। अवोद इत्युन्देरवपूर्वस्य

घञि नलोपो निपात्यते। अवोदः। एध इति इन्धेर्घञि नलोपो गुणश्च निपात्यते। 'न धातुलोप आर्धधातुके' ( १.१.४ ) इति हि प्रतिषेधः स्यात्। एधः। ओद्म इति उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते। ओद्मः। प्रश्रथ इति प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च निपात्यते। प्रश्रथः। हिमश्रथ इति हिमपूर्वस्य श्रन्थेर्घञ्येव निपातनम्। हिमश्रथः॥

## नाञ्चेः पूजायाम्॥ ३० ॥

अञ्चेः पूजायामर्थे नकारस्य लोपो न भवति। अञ्चिता अस्य गुरवः। अञ्चितमिव[1] शिरो वहति। 'अञ्चेः पूजायाम्' ( ७.२.५३ ) इति इडागमः। पूजायामिति किम् ? उदक्तमुदकं कूपात्। उद्धृतमित्यर्थः। 'यस्य विभाषा' ( ७.२.१५ ) इतीट्प्रतिषेधः॥

## क्त्वि स्कन्दिस्यन्दोः॥ ३१ ॥

क्त्वाप्रत्यये परतः स्कन्द स्यन्द इत्येतयोर्नकारलोपो न भवति। स्कन्त्वा। स्यन्त्वा। स्यन्देरूदित्त्वात् पक्ष इडागमः ( ७.२.४४ )। स्यन्दित्वा। तत्र यदा इडागमस्तदा 'न क्त्वा सेट्' ( १.२.१८ ) इति कित्त्वप्रतिषेधादेव नलोपाभावः॥

## जान्तनशां विभाषा॥ ३२ ॥

जान्तानामङ्गानां नशेश्च क्त्वाप्रत्यये परतो विभाषा नकारलोपो न भवति। रङ्क्त्वा, रक्त्वा। भङ्क्त्वा, भक्त्वा। नशः—नंष्ट्वा, नष्ट्वा। इट्पक्षे नशित्वा॥

## भञ्जेश्च चिणि॥ ३३ ॥

भञ्जेश्च चिणि परतो विभाषा नकारलोपो भवति। अभाजि, अभञ्जि। अप्राप्तोऽयं नलोपः पक्षे विधीयते। ततो नेति नानुवर्तते॥

## शास इदङ्हलोः॥ ३४ ॥

शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति। अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्। हलादौ किति—शिष्टः। शिष्टवान्। ङिति—आवां शिष्वः[2]। वयं शिष्मः। इत्वे कृते 'शासिवसिघसीनां च' ( ८.३.६० ) इति षत्वम्। अङ्हलोरिति किम् ? शासति। शशासतुः, शशासुः॥ क्वौ च शास इत्त्वं भवतीति

---

१ – 'अञ्चितमेव' इति है०। २ – 'तौ शिष्टः' इति बाल०।

वक्तव्यम् ॥ आर्यान् शास्तीति आर्यशीः। मित्रशीः। यस्मात् शासेरङ् विहितः 'शासु अनुशिष्टौ' ( अदा० ६८ ) इति तस्यैवेदं ग्रहणमिष्यते। 'आङः शासु इच्छायाम्' ( अदा० १२ ) इत्यस्य न भवति। आशास्ते। आशास्यमानः ॥ क्विप्प्रत्यये तु तस्यापि भवतीति वक्तव्यम् ॥ आशीः, आशिषौ, आशिषः। 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' ( ८.२.१०४ ) इति निपातनाद् वा सिद्धम् ॥

## शा हौ ॥ ३५ ॥

शासो हौ परतः शा इत्ययमादेशो भवति। अनुशाधि। प्रशाधि। उपधाया इति निवृत्तम्, ततः शास इति स्थानेयोगा (१.१.४९ ) षष्ठी भवति। क्ङितीत्येतदपि निवृत्तम्। तेन यदा 'वा छन्दसि' ( ३.४.८८ ) इति पित्त्वं हिशब्दस्य, तदाप्यादेशो भवत्येव। शाधीत्याद्युदात्तमपि छन्दसि दृश्यते ॥

## हन्तेर्जः ॥ ३६ ॥

हन्तेर्धातोर्ज इत्ययमादेशो भवति हौ परतः। जहि शत्रून् ( ऋ० ३.४७.२ ) ॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ३७ ॥

अनुदात्तोपदेशानाम् अनुनासिकान्तानाम्[1] अङ्गानां वनतेस्तनोत्यादीनां च लोपो[2] भवति झलादौ क्ङिति प्रत्यये परतः। यमु—यत्वा। यतः। यतवान्। यतिः। रमु—रत्वा। रतः। रतवान्। रतिः। अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः। वनति—वतिः। क्तिनो रूपमेतत्। क्तिचि तु 'न क्तिचि दीर्घश्च' ( ६.४.३९) इति भवति। अन्यत्र झलादाविटा भवितव्यम्। तनोत्यादयः—ततः। ततवान्। सनोतेरात्वं वक्ष्यति ( ६.४.४२ )। क्षणु—क्षतः। क्षतवान्। ऋणु—ऋतः। ऋतवान्। तृणु—तृतः। तृतवान्। घृणु—घृतः। घृतवान्। वनु—वतः। वतवान्। मनु—मतः। मतवान्। ङिति—अतत। अतथाः। अनुदात्तोपदेशवनतितनोत्यादीनामिति किम् ? शान्तः। शान्तवान्। तान्तः। तान्तवान्। दान्तः। दान्तवान्। अनुनासिकस्येति किम्? पक्वः। पक्ववान्। झलीति किम् ? गम्यते। रम्यते। क्ङितीति किम् ? यन्ता। यन्तव्यम्। उपदेशग्रहणं किम् ? इह च यथा स्यात्—गतिः। इह च मा भूत्—शान्तः। शान्तवानिति ॥

---

१ – ' अनुनासिकान्तानाम् ' इति नास्ति मुद्रितेपु।

२ – ' चानुनासिकलोपः ' इति मुद्रितपाठः।

## वा ल्यपि ॥ ३८ ॥

ल्यपि परतोऽनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो वा भवति। व्यवस्थितविभाषा ( परि० ९९ ) चेयम्। तेन मकारान्तानां विकल्पो भवति, अन्यत्र नित्यमेव लोपः। प्रयत्य, प्रयम्य। प्ररत्य, प्ररम्य। प्रणत्य, प्रणम्य। आगत्य, आगम्य। आहत्य। प्रमत्य। प्रवत्य। प्रक्षत्य॥

## न क्तिचि दीर्घश्च ॥ ३९ ॥

क्तिचि परतोऽनुदात्तोपदेशादीनामनुनासिकलोपो दीर्घश्च न भवति। यन्तिः। वन्तिः। तन्तिः। अनुनासिकलोपे प्रतिषद्धे 'अनुनासिकस्य क्विझलोः क्ङिति' ( ६.४.१५ ) इति दीर्घः प्राप्नोति, सोऽपि प्रतिषिध्यते॥

## गमः क्वौ ॥ ४० ॥

गमः क्वौ परतोऽनुनासिकलोपो भवति। अङ्गगत्। कलिङ्गगत्। अध्वगतो हरयः ( शौ० सं० १३.१.३६ ) ॥ गमादीनामिति वक्तव्यम्॥ इहापि यथा स्यात्— संयत्। परीतत् ॥ ऊ[१] च गमादीनामिति वक्तव्यम्॥ अग्रेगूः ( तै० सं० १.१.५.१ )। अग्रेभ्रूः॥

## विड्वनोरनुनासिकस्यात् ॥ ४१ ॥

विटि वनि च प्रत्यये परतोऽनुनासिकान्तस्याङ्गस्याकार आदेशो भवति। अब्जा गोजा ऋतजा अद्रिजाः ( ऋ० ४.४०.५ )। गोषा इन्दो नृषा असि ( ऋ० ९.२.१० )। कूपखाः। शतखाः। सहस्रखाः। दधिक्राः। अग्रेगा उन्नेतॄणाम्। 'जनसनखनक्रमगमो विट्' ( ३.२.६७ ) इति विट् प्रत्ययः। 'सनोतेरनः' ( ८.३.१०६ ) इति षत्वं गोषा इन्दो नृषा असीत्यत्र। वन्—विजावा। अग्रेजावा। 'अन्येभ्योऽपि दृश्यन्ते' ( ३.२.७५ ) इति वनिप् प्रत्ययः। अनुनासिकस्येति वर्तमाने पुनरनुनासिकग्रहणमनुनासिकमात्रपरिग्रहार्थम्, अन्यथा ह्यनुदात्तोपदेशवनतितनोत्यादीनामेव स्यात्॥

## जनसनखनां सञ्झलोः ॥ ४२ ॥

झलि क्ङिति इति चानुवर्तते। जन सन खन इत्येतेषामङ्गानां सनि झलादौ क्ङिति झलादौ प्रत्यये परत आकार आदेशो भवति। जन्—जातः। जातवान्। जातिः। सन्—

१ - 'ऊङ्' इति प्रायिकः पाठः। महाभाष्ये च तथा। व्याख्याकृद्भिस्तु ङकारः प्रयोजनाभावाद् नोरीक्रियते।

सनि—सिषासति। सातः। सातवान्। सातिः। खनु—खातः। खातवान्। खातिः। झल्ग्रहणं सन्विशेषणार्थं किमर्थमनुवर्त्यते ? इह मा भूत्—जिजनिषति। सिसनिषति। चिखनिषति। सनोतेः 'सनीवन्तर्ध०' (७.२.४९) इति पक्ष इडागमः। तदिह सनोत्यर्थमेव सन्ग्रहणम्। अत्र झलादौ क्ङिति सनोतेर्विप्रतिषेधाद् आत्वमनुनासिकलोपं बाधते। 'घुमास्थागापाजहातिसां हलि' (६.४.६६) इति हल्ग्रहणं ज्ञापकम्—अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवतीति ॥

## ये विभाषा ॥ ४३ ॥

यकारादौ क्ङिति प्रत्यये परतो जनसनखनामाकार आदेशो भवति विभाषा। जायते, जन्यते। जाजायते, जञ्जन्यते। सायते, सन्यते। सासायते, संसन्यते। खायते, खन्यते। चाखायते, चङ्खन्यते। जनेः श्यनि 'ज्ञाजनोर्जा' (७.३.७९) इति नित्यं जादेशो भवति ॥

## तनोतेर्यकि ॥ ४४ ॥

तनोतेर्यकि परतो विभाषा आकार आदेशो भवति। तायते, तन्यते। यकीति किम्? तन्तन्यते ॥

## सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥

सनोतेरङ्गस्य क्तिचि प्रत्यये परत आकार आदेशो भवति, लोपश्चास्यान्यतरस्याम्। सातिः, सन्तिः, सतिः। अन्यतरस्यांग्रहणं विस्पष्टार्थम्। येसंबद्धं हि विभाषाग्रहणमिह निवृत्तमित्याशङ्क्येत ॥

## आर्धधातुके ॥ ४६ ॥

आर्धधातुक इत्यधिकारः। 'न ल्यपि' (६.४.६९) इति प्रागेतस्माद् यदित ऊर्ध्वमनुक्रमिष्याम आर्धधातुक इत्येवं तद् वेदितव्यम्। वक्ष्यति—'अतो लोपः' (६.४.८)—चिकीर्षिता। जिहीर्षिता। आर्धधातुक इति किम् ? भवति, भवतः। अदिप्रभृतिभ्यः शपो लुग्वचनं (२.४.७२) प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यादित्येतद् न ज्ञापकं शपो लोपाभावस्य। 'यस्य हलः' (६.४.४९)—बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। आर्धधातुक इति किम् ? बेभिद्यते। 'णेरनिटि' (६.४.५१)—कारणा। हारणा। आर्धधातुक इति किम् ? कारयति। हारयति। 'आतो लोप इटि च' (६.४.६४)—ययतुः, ययुः। ववतुः, ववुः। आर्धधातुक इति किम् ? यान्ति। वान्ति। 'घुमास्थागापाजहातिसां हलि' (६.४.६६)—दीयते। धीयते। आर्धधातुक इति किम् ? अदाताम्।

अधाताम्। 'वान्यस्य संयोगादेः' ( ६.४.६८ )—स्नेयात्, स्नायात्। आर्धधातुक इति किम् ? स्नायात्। आशीर्लिङोऽन्यत्र न भवति। 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' ( ६.४.६२ )—कारिषीष्ट। हारिषीष्ट। आर्धधातुक इति किम् ? क्रियेत। ह्रियेत। यगन्तस्याजन्तत्वात् चिण्वद्भावे सति वृद्धिः स्यात्, ततश्च युक् प्रसज्येत।

अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम्।
आल्लोप ईत्वमेत्वं च चिण्वद्भावश्च सीयुटि॥

## भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ४७ ॥

भ्रस्जो रेफस्योपधायाश्च रमन्यतरस्यां भवति। रोपधयोरिति स्थानषष्ठीनिर्देशादुपधा रेफश्च निवर्तेते, मित्त्वात् चायमचोऽन्त्यात् परो भवति। भ्रष्टा, भर्ष्टा। भ्रष्टुम्, भर्ष्टुम्। भ्रष्टव्यम्, भर्ष्टव्यम्। भ्रज्जनम्, भर्जनम्। भृष्टः, भृष्टवानित्यत्र पूर्वविप्रतिषेधेन संप्रसारणं भवति। उपदेश इत्येव—बरीभृज्ज्यते॥

## अतो लोपः ॥ ४८ ॥

अकारान्तस्यार्धधातुके लोपो भवति। चिकीर्षिता। चिकीर्षितुम्। चिकीर्षितव्यम्। धिनुतः। कृणुतः। अत इति किम् ? चेता। स्तोता। तपरकरणं किम् ? याता। वाता। आर्धधातुक इति किम् ? वृक्षत्वम्। वृक्षता। वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन। चिकीर्षकः। जिहीर्षकः। चिकीर्ष्यते। जिहीर्ष्यते॥

## यस्य हलः ॥ ४९ ॥

हल उत्तरस्य यशब्दस्यार्धधातुके लोपो भवति। बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। यस्येति संघातग्रहणमेतत्। तत्र 'अलोऽन्त्यस्य' ( १.१.५२ ) इत्येतद् न भवति, 'अतो लोपः' ( ६.४.४८ ) इत्यनेनैव तस्य सिद्धत्वात्। हल इति वा पञ्चमीनिर्देशः, तत्र 'आदेः परस्य' ( १.१.५४ ) इति यकारोऽनेन लुप्यते। संघातग्रहणं किम् ? ईर्ष्यिता। मव्यिता। हल इति किम् ? लोलूयिता। पोपूयिता॥

## क्यस्य विभाषा ॥ ५० ॥

क्यस्य हल उत्तरस्य विभाषा लोपो भवत्यार्धधातुके। समिध्यिता, समिधिता। दृषद्यिता, दृषदिता। समिधमात्मन इच्छति, समिद् इवाचरति[1] इति वा क्यच्क्यङौ यथायोगं

१ – 'समिधमिवात्मानमाचरति' इति प्रायिकः पाठः। अत्र पदमञ्जरी द्रष्टव्या।

कर्तव्यौ ॥

## णेरनिटि ॥ ५१ ॥

अनिडादावार्धधातुके णेर्लोपो भवति। इयङ्यण्गुणवृद्धिदीर्घाणामपवादः। अततक्षत्। अररक्षत्। आशिशत्। आटिटत्। कारणा। हारणा। कारकः। हारकः। कार्यते। हार्यते। ज्ञीप्सति। अनिटीति किम् ? कारयिता। हारयिता॥

## निष्ठायां सेटि ॥ ५२ ॥

निष्ठायां सेटि परतो णेर्लोपो भवति। कारितम्। हारितम्। गणितम्। लक्षितम्। सेटीति किम् ? संज्ञपितः पशुः। सेड्ग्रहणसामर्थ्यादिह पूर्वेणापि न भवति। 'सनीवन्तर्ध०' ( ७.२.४९ ) इति ज्ञपेरिटि विकल्पिते 'यस्य विभाषा' ( ७.२.१५ ) इति निष्ठायां प्रतिषेधः। अथ पुनरेकाच इति तत्रानुवर्तते। तदा नित्यमत्र भवितव्यमेवेडागमेनेति सेड्ग्रहणमनर्थकम् ? तत् क्रियते कालावधारणार्थम्, इडागमे कृते णिलोपो यथा स्यात्। अकृते हि तत्र णिलोपे सति कारितमित्यत्र 'एकाच उपदेशेऽनुदात्तात्' ( ७.२.१० ) इतीटः प्रतिषेधः प्रसज्येत॥

## जनिता मन्त्रे ॥ ५३ ॥

जनितेति मन्त्रविषय इडादौ णिलोपो निपात्यते। यो नः॑ पि॒ता ज॑नि॒ता ( ऋ० १०. ८२.३ )। मन्त्र इति किम् ? जनयिता॥

## शमिता यज्ञे ॥ ५४ ॥

यज्ञकर्मणि शमितेति इडादौ तृचि[1] णिलोपो निपात्यते। शृ॒तं ह॒वि३ः श॑मितः ( तै० सं० ६.३.१०.१ )। तृचि संबुध्यन्तमेतत्। यज्ञ इति किम् ? शृ॒तं हविः शमयितः॥

## अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५५ ॥

आम् अन्त आलु आय्य इत्नु इष्णु इत्येतेषु परतो णेरयादेशो भवति। कारयांचकार। हारयांचकार। अन्त—गण्डयन्तः। मण्डयन्तः। आलु—स्पृहयालुः। गृहयालुः। आय्य—स्पृ॒ह॒याय्यः॑ ( ऋ० ६.१५.१२ )। गृहयाय्यः। इत्नु—स्तनयित्नुः। इष्णु—पोषयिष्णवः[2]। पारयिष्णवः। नेति वक्तव्येऽयादेशवचनमुत्तरार्थम्॥

---

१ - 'तृचि' इति नास्ति बाल०। २ - पो॒षयि॒ष्णुः ( मै० सं० ४.२.१४ )।

## ल्यपि लघुपूर्वात् ॥ ५६ ॥

ल्यपि परतो लघुपूर्वाद् वर्णाद्[1] उत्तरस्य णेरयादेशो भवति। प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्य, संदमय्य गतः। प्रबेभिदय्य गतः। प्रगणय्य गतः। ह्रस्वयलोपाल्लोपानामसिद्धत्वं न भवत्यसमानाश्रयत्वात्, ह्रस्वादयो हि णौ, ल्यपि णेरयादेशो भवति। लघुपूर्वादिति किम् ? प्रपात्य गतः॥

## विभाषापः ॥ ५७ ॥

आप उत्तरस्य णेर्ल्यपि परतो विभाषायादेशो भवति। प्रापय्य गतः, प्राप्य गतः। इङादेशस्य लाक्षणिकत्वाद् न भवति। अध्याप्य गतः॥

## युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥

यु प्लु इत्येतयोर्ल्यपि परतश्छन्दसि विषये दीर्घो भवति। दान्त्यंनुपूर्वं <u>वि</u>यूयं ( ऋ० १०.१३१.२ )। यत्रापो दक्षिणा परिप्लूय ( काठ० सं० २५.३ )। छन्दसीति किम् ? संयुत्य। आप्लुत्य॥

## क्षियः ॥ ५९ ॥

क्षियश्च दीर्घो भवति ल्यपि परतः। प्रक्षीय॥

## निष्ठायामण्यदर्थे ॥ ६० ॥

ण्यतः कृत्यस्यार्थो भावकर्मणी, ताभ्यामन्यत्र या निष्ठा, तस्यां क्षियो दीर्घो भवति। आक्षीणः। प्रक्षीणः। परिक्षीणः। अकर्मकत्वात् क्षियः कर्तरि क्तः। प्रक्षीणमिदं देवदत्तस्येति 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' ( ३.४.७६ ) इत्यधिकरणे क्तः। अण्यदर्थ इति किम् ? अक्षितमसि मा मेंक्षेष्ठाः ( तै० सं० १.६.५.१ )। क्षितमिति भावे दीर्घाभावात् 'क्षियो दीर्घात्' ( ८.२.४६ ) इति निष्ठानत्वमपि न भवति॥

## वाक्रोशदैन्ययोः ॥ ६१ ॥

आक्रोशे गम्यमाने दैन्ये च क्षियो निष्ठायामण्यदर्थे वा दीर्घो भवति। क्षितायुरेधि, क्षीणायुरेधि। दैन्ये—क्षितकः, क्षीणकः। क्षितोऽयं तपस्वी, क्षीणोऽयं तपस्वी॥

---

१ – 'वर्णाद्' इति नास्ति बाल०।

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६२ ॥

स्य सिच् सीयुट् तासि इत्येतेषु भावकर्मविषयेषु परत उपदेशेऽजन्तानामङ्गानां हन् ग्रह दृश् इत्येतेषां च चिण्वत् कार्यं भवति वा। यदा चिण्वत् तदेडागमो भवति। कस्य? स्यसिच्सीयुट्तासीनामेवेति वेदितव्यम्। ते हि प्रकृताः। अङ्गस्य तु लक्ष्यविरोधाद् न क्रियते। कानि पुनरस्य योगस्य प्रयोजनानि ?

चिण्वद् वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति।
इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती॥

अजन्तानां तावत्—चायिष्यते, चेष्यते। अचायिष्यत, अचेष्यत। दायिष्यते, दास्यते। अदायिष्यत, अदास्यत। शामिष्यते, शमिष्यते, शमयिष्यते। अशामिष्यत, अशमिष्यत, अशमयिष्यत। हन्—घानिष्यते, हनिष्यते। अघानिष्यत, अहनिष्यत। ग्रह—ग्राहिष्यते, ग्रहीष्यते। अग्राहिष्यत, अग्रहीष्यत। 'ग्रहोऽलिटि दीर्घः' (७.२.३७) इति प्रकृतस्येटो दीर्घत्वम्। दृश्—दर्शिष्यते, द्रक्ष्यते। अदर्शिष्यत, अद्रक्ष्यत। सिच्यजन्तानाम्—अचायिषाताम्, अचेषाताम्। अदायिषाताम्, अदिषाताम्। अशामिषाताम्, अशमिषाताम्, अशमयिषाताम्। हन्—अघानिषाताम्, अवधिषाताम्, अहसाताम्। ग्रह—अग्राहिषाताम्, अग्रहीषाताम्। दृश—अदर्शिषाताम्, अदृक्षाताम्। सीयुट्यजन्तानाम्—चायिषीष्ट, चेषीष्ट। दायिषीष्ट, दासीष्ट। शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट। हन्—घानिषीष्ट, वधिषीष्ट। ग्रह—ग्राहिषीष्ट, ग्रहीषीष्ट। दृश्—दर्शिषीष्ट, दृक्षीष्ट। तासावजन्तानाम्—चायिता, चेता। दायिता, दाता। शामिता, शमिता, शमयिता। हन्—घानिता, हन्ता। ग्रह—ग्राहिता, ग्रहीता। दृश्—दर्शिता, द्रष्टा। स्यसिच्सीयुट्तासिष्विति किम् ? चेतव्यम्। दातव्यम्। भावकर्मणोरिति किम् ? चेष्यति। दास्यति। उपदेश इति किम् ? कारिष्यत इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद् भवति। अज्झनग्रहदृशामिति किम्? पठिष्यते। अङ्गाधिकारविहितं कार्यमिहातिदिश्यते। तेन हनिणिङामादेशा न भवन्ति। हनिष्यते, घानिष्यते। एष्यते, आयिष्यते। अध्येष्यते, अध्यायिष्यते। 'हनो वध लिङि', 'लुङि च' ( २.४.४२, ४३ ), 'इणो गा लुङि' ( २.४.४५ ), 'विभाषा लुङ्लृङोः' ( २.४. ५० ) इत्येते विधयो न भवन्ति॥

## दीङो युडचि क्ङिति॥ ६३ ॥

दीङो युडागमो भवत्यजादौ क्ङिति प्रत्यये परतः। उपदिदीये, उपदिदीयाते, उपदिदीयिरे। दीङ इति पञ्चमीनिर्देशादजादेर्युडागमो भवति। विधानसामर्थ्यात् च 'एरनेकाचः०'

( ६.४.८२ ) इति यणादेशे कर्तव्ये तस्यासिद्धत्वं न भवति। अचीति किम्? उपदेदीयते। क्ङितीति किम्? उपदानम्॥

## आतो लोप इटि च॥ ६४ ॥

इट्यजादावार्धधातुके क्ङिति चाकारान्तस्याङ्गस्य लोपो भवति। इटि—पपिथ। तस्थिथ। किति—पपतुः, पपुः। तस्थतुः, तस्थुः। गोदः। कम्बलदः। ङिति—प्रदा। प्रधा। आर्धधातुक इत्येव—यान्ति। वान्ति। व्यत्यरे। व्यत्यले। रातेर्लातेश्च लङीटि रूपम्। अचीत्येव—ग्लायते। दासीय॥

## ईद्यति॥ ६५ ॥

ईकार आदेशो भवत्याकारान्तस्याङ्गस्य यति परतः। देयम्। धेयम्। हेयम्। स्तेयम्॥

## घुमास्थागापाजहातिसां हलि॥ ६६ ॥

घुसंज्ञकानामङ्गानां मा स्था गा पा जहाति सा इत्येतेषां हलादौ क्ङिति प्रत्यये परत ईकारादेशो भवति। दीयते। धीयते। देदीयते। देधीयते। मीयते। मेमीयते। स्थीयते। तेष्ठीयते। गीयते। जेगीयते। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। पीयते। पेपीयते। पातेरिह ग्रहणं नास्ति, लुग्विकरणत्वात् ( परि० ९० )। पायत इत्येव तस्य भवति। हीयते। जेहीयते। जहातेरिह निर्देशाद् जिहातेर्ग्रहणं न भवति। हायते। 'षोऽन्तकर्मणि' ( दिवा० ३८ )—अवसीयते। अवसेषीयते। हलीति किम्? ददतुः। ददुः। आतोलोपाद्धि परत्वादीत्वं स्यात्। एतदेव हल्ग्रहणं ज्ञापकमस्मिन् प्रकरणे विप्रतिषेधे नासिद्धत्वं भवति। क्ङितीत्येव—दाता। धाता॥

## एर्लिङि॥ ६७ ॥

घुमास्थागापाजहातिसामङ्गानां लिङि परत एकारादेशो भवति। देयात्। धेयात्। मेयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। अवसेयात्। क्ङितीत्येव—दासीष्ट। धासीष्ट॥

## वान्यस्य संयोगादेः॥ ६८ ॥

घ्वादिभ्योऽन्यस्य संयोगादेराकारान्तस्य वैकारादेशो भवति लिङि परतः। ग्लेयात्, ग्लायात्। म्लेयात्, म्लायात्। अन्यस्येति किम्? स्थेयात्। संयोगादेरिति किम्? यायात्। क्ङितीत्येव—ग्लासीष्ट। अङ्गस्येत्येव—निर्वायात्॥

## न ल्यपि ॥ ६९ ॥

ल्यपि प्रत्यये परतो घुमास्थागापाजहातिसां यदुक्तं तद् न भवति। प्रदाय। प्रधाय। प्रमाय। प्रस्थाय। प्रगाय। प्रपाय। प्रहाय। अवसाय॥

## मयतेरिदन्यतरस्याम् ॥ ७० ॥

मयतेरिकारादेशो वा भवति ल्यपि परतः। अपमित्य, अपमाय॥

## लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ७१ ॥

लुङ् लङ् लृङ् इत्येतेषु परतोऽङ्गस्याडागमो भवति, उदात्तश्च स भवति। लुङ्—अकार्षीत्। अहार्षीत्। लङ्—अकरोत्। अहरत्। लृङ्—अकरिष्यत्। अहरिष्यत्॥

## आडजादीनाम् ॥ ७२ ॥

आडागमो भवत्यजादीनां लुङ्लङ्लृङ्क्षु परतः, उदात्तश्च स भवति। ऐक्षिष्ट। ऐहिष्ट। औब्जीत्। औम्भीत्। लङ्—ऐक्षत। ऐहत। औब्जत्। औम्भत्। लृङ्—ऐक्षिष्यत। ऐहिष्यत। औब्जिष्यत्। औम्भिष्यत्। इह ऐज्यत औप्यत औह्यतेति लङि कृते लावस्थायामडागमादन्तरङ्गत्वाद् ( परि० ५० ) लादेशः क्रियते। तत्र कृते विकरणो नित्यत्वादडागमं बाधते ( परि० ४२ )। शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम्, कृते हि विकरणान्तस्याङ्गस्य तेन भवितव्यम् , अकृते तु धातुमात्रस्य। 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति' ( परि० ४३ ), न तु[1] शब्दान्तरादिति विकरणो नित्यः[2]। विकरणे कृते संप्रसारणमडागमाद् नित्यत्वादेव भवति, संप्रसारणे च कृतेऽजाद्यङ्गं जातमिति आड-जादीनामित्याडागमः॥

## छन्दस्यपि दृश्यते ॥ ७३ ॥

छन्दसि विषय आडागमो दृश्यते। यत्र हि विहितस्ततोऽन्यत्रापि दृश्यते। 'आडजादीनाम्' ( ६.४.७२ ) इत्युक्तमनजादीनामपि दृश्यते। सुरुचो वेन आवः ( मा० सं० १३.३ )। आनक्। आयुनक्। आव इति वृञो लुङि 'मन्त्रे घसह्वर०' ( २.४.८० ) इति लेर्लुकि कृते च भवति। तथा आनगिति नशेः। आयुनगिति युजेर्लङि॥

---

१ - ' न नु ' इत्यपपाठो मुद्रितेषु।
२ - ' ऽनित्यः ' इति विवृत्तिचिह्नयुक्तोऽपपाठो मुद्रितेषु।

## न माङ्योगे ॥ ७४ ॥

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तद् न भवति। मा भवान् कार्षीत्। मा भवान् हार्षीत्। मा स्म करोत्। मा स्म हरत्। मा भवानीहिष्ट। मा भवानीक्षिष्ट। मा स्म भवानीहत। मा स्म भवानीक्षत ॥

## बहुलं छन्दस्यमाङ्योगेऽपि ॥ ७५ ॥

छन्दसि विषये माङ्योगेऽपि बहुलमडाटौ भवतः, अमाङ्योगेऽपि न भवतः। अमाङ्योगे तावत्—जनिष्ठा उग्रः ( ऋ० १०.७३.१ )। काममूनयीः ( ऋ० १.५३.३ )। काममर्दयीत्। माङ्योगेऽपि भवतः। मा वः क्षेत्रे परबीजान्यवाप्सुः[1] ( आप० ध० २.६.१३.६ )। मा अभित्थाः। मा आवः ॥

## इरयो रे ॥ ७६ ॥

इर इत्येतस्य छन्दसि विषये बहुलं रे इत्ययमादेशो भवति। गर्भं प्रथमं दध्र आपः ( ऋ० १०.८२.५ )। यांश्च परिददृश्रे[2] ( मै० सं० ४.४.१ )। धाञो रेभावस्यासिद्धत्वादातो लोपः ( ६.४.६४ ) भवति। न च भवति—परमाया धियोऽग्निकर्माणि चक्रिरे। अत्र रेशब्दस्य सेटां धातूनामिटि कृते पुना रेभावः क्रियते, तदर्थं च[3] इरयोरित्ययं द्विवचननिर्देशः ॥

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७७ ॥

श्नुप्रत्ययान्तस्याङ्गस्य धातोरिवर्णोवर्णान्तस्य भ्रू इत्येतस्य च[4] इयङ् उवङ् इत्येतावादेशौ भवतोऽजादौ प्रत्यये परतः। आप्नुवन्ति। राध्नुवन्ति। शक्नुवन्ति। धातोः—चिक्षियतुः, चिक्षियुः। लुलुवतुः, लुलुवुः। नियौ, नियः। लुवौ, लुवः। भ्रुवौ, भ्रुवः। अचीति किम् ? आप्नुयात्। शक्नुयात्। राध्नुयात्। श्नुधातुभ्रुवामिति किम् ? लक्ष्म्यै। वध्वै। य्वोरिति किम् ? चक्रतुः, चक्रुः। इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन। चयनम्। चायकः। लवनम्। लावकः ॥ इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्तव्यम् ॥ तन्वं ( शौ० सं० ५.३.१ ) पुषेम। तनुवं ( तै० सं. १.५.५.४ ) पुषेम। विष्वं पुषेम। विषुवं पुषेम। स्वर्गो लोकः। सुवर्गः ( तै० सं० १.

---

१ – हरदत्तस्तु ' परबीजानि वाप्सुः ' इत्येव युक्तं मेने।
२ – ' यास्य परिदध्रे ' इति मुद्रितः पाठः। ' परिददृशे ' इति संहितापाठः सातवलेकरसंस्करणे।
३ – ' च ' इति नास्ति मुद्रितेषु। ४ – ' च ' इति नास्ति है० बाल० ।

५.७.१ ) लोकः। त्र्यंम्बकं यजामहे ( तै० सं० १.८.६.२ )। त्रियम्बकं यजामहे ॥

## अभ्यासस्यासवर्णे ॥ ७८ ॥

अभ्यासस्येवर्णोवर्णान्तस्यासवर्णेऽचि परत इयङ् उवङ् इत्येतावादेशौ भवतः। इयेष। उवोष। इयर्ति। असवर्ण इति किम् ? ईषतुः, ईषुः। ऊषतुः, ऊषुः। अचीत्येव— इयाज। उवाप॥

## स्त्रियाः॥ ७९ ॥

स्त्री इत्येतस्याजादौ प्रत्यये परत इयङादेशो भवति। स्त्री, स्त्रियौ, स्त्रियः। स्त्रीणामित्यत्र परत्वाद् नुडागमः। पृथग्योगकरणमुत्तरार्थम्॥

## वाम्शसोः॥ ८० ॥

अमि शसि परतः स्त्रिया वेयङादेशो भवति। स्त्रीं पश्य, स्त्रियं पश्य। स्त्रीः पश्य, स्त्रियः पश्य॥

## इणो यण्॥ ८१ ॥

इणोऽङ्गस्य यणादेशो भवत्यचि परतः। यन्ति। यन्तु। आयन्। इयङादेशापवादोऽयम्। 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' ( परि० ६० ) इति गुणवृद्धिभ्यां परत्वादयं बाध्यते। अयनम्। आयकः॥

## एरनेकाचोऽसंयोगपूर्वस्य॥ ८२ ॥

धातोरिति वर्तते, तेन संयोगो विशेष्यते। धातोरवयवः संयोगः पूर्वो यस्मादिवर्णाद् न भवत्यसावसंयोगपूर्वः, तदन्तस्याङ्गस्यानेकाचोऽचि परतो यणादेशो भवति। निन्यतुः, निन्युः। उन्न्यौ, उन्न्यः। ग्रामण्यौ, ग्रामण्यः। एरिति किम् ? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद्, अङ्गविशेषणं मा भूदिति। लुलुवतुः, लुलुवुः इत्येतत् तु 'ओः सुपि' ( ६.४.८३ ) इति नियमादपि सिध्यति। अनेकाच इति किम् ? नियौ, नियः। असंयोगपूर्वस्येति किम् ? यवक्रियौ, यवक्रियः। धातुना संयोगविशेषणं किम् ? इहापि न[1] स्याद्। उन्न्यौ, उन्न्य इति। गतिकारकाभ्यामन्यपूर्वस्य नेष्यते। परमनियौ, परमनिय इति॥

---

१ – 'न' इति नास्ति है० बाल०।

## ओः सुपि ॥ ८३ ॥

धात्ववयवः संयोगः पूर्वो यस्मादुवर्णाद् न भवति, तदन्तस्याङ्गस्यानेकाचोऽजादौ सुपि परतो यणादेशो भवति। खलप्वौ, खलप्वः। शतस्वौ, शतस्वः। सकृल्ल्वौ, सकृल्ल्वः। सुपीति किम् ? लुलुवतुः, लुलुवुः। अनेकाच इत्येव—लुवौ, लुवः। असंयोगपूर्वस्येत्येव—कटप्रुवौ, कटप्रुवः। गतिकारकाभ्यामन्यपूर्वस्य नेष्यत इत्येव—परमलुवौ, परमलुवः॥

## वर्षाभ्वश्च ॥ ८४ ॥

वर्षाभू इत्येतस्याजादौ सुपि परतो यणादेशो भवति। वर्षाभ्वौ, वर्षाभ्वः ॥ पुनर्भ्वश्चेति वक्तव्यम्॥ पुनर्भ्वौ, पुनर्भ्वः। कारापूर्वस्यापीष्यते[1]। काराभ्वौ, काराभ्वः॥

## न भूसुधियोः ॥ ८५ ॥

भू सुधी इत्येतयोर्यणादेशो न भवति। प्रतिभुवौ, प्रतिभुवः। सुधियौ, सुधियः॥

## छन्दस्युभयथा ॥ ८६ ॥

छन्दसि विषये भू सुधी इत्येतयोरुभयथा दृश्यते। वनेषु चित्रं विभ्वं विशे ( ऋ० ४.७.१ )। विभुवं विशे ( तै० सं० १.५.५.१ )। सुध्यो३ नव्यमग्ने ( ऋ० ६.१.७ )। सुधियो नव्यमग्ने ( तै० ब्रा० ३.६.१०.३ )॥

## हुश्नुवोः सार्वधातुके ॥ ८७ ॥

हु इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्य [2]चानेकाचोऽसंयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवति। जुह्वति। जुह्वतु। जुह्वत्। सुन्वन्ति। सुन्वन्तु। असुन्वन्। हुश्नुवोरिति किम् ? योयुवति। रोरुवति। इदमेव हुश्नुग्रहणं ज्ञापकं भाषायामपि यङ्लुगस्तीति। छन्दसि 'छन्दस्युभयथा' ( ३.४.११७ ) इत्यार्धधातुकत्वादेव यणादेशस्याप्रसङ्गः। न च यङ्लुगन्तादन्यत् प्रत्युदाहरणमुवर्णान्तमनेकाजसंयोगपूर्वं सार्वधातुके विद्यते। सार्वधातुक इति किम् ? जुहुवतुः, जुहुवुः। असंयोगपूर्वस्येत्येव—आप्नुवन्ति। राध्नुवन्ति॥

---

१ 'कार०' इति यथाभाष्यम्।

२ – 'च' इति नास्ति मुद्रितेपु।

## भुवो वुग् लुङ्लिटोः ॥ ८८ ॥

भुवो वुगागमो भवति लुङि लिटि चाजादौ परतः। अभूवन्। अभूवम्। लिटि—बभूव, बभूवतुः, बभूवुः॥

## ऊदुपधाया गोहः ॥ ८९ ॥

गोहोऽङ्गस्योपधाया ऊकारादेशो भवत्यजादौ प्रत्यये परतः। निगूहयति। निगूहकः। साधुनिगूही। निगूहंनिगूहम्। निगूहन्ति[1]। गूहो वर्तते। उपधाया इति किम्? अलोऽन्त्यस्य (१.१.५२) मा भूत्। गोह इति विकृतग्रहणं विषयार्थम्। यत्रास्यैतद्रूपं तत्रैव यथा स्याद्, इह मा भूत्—निजुगुहतुः, निजुगुहुः। अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति। निगूह्य गत इत्यूत्त्वस्यासिद्धत्वाद् 'ल्यपि लघुपूर्वात्' (६.४.५६) इति णेरयादेशः स्यात्। व्याश्रयत्वादेवासिद्धत्वमत्र नास्ति। णावूत्त्वम्, ण्यन्तस्य च ल्यप्ययादेश इति। अचीत्येव—निगोढा। निगोढुम्॥

## दोषो णौ ॥ ९० ॥

दोष उपधाया ऊकार आदेशो भवति णौ परतः। दूषयति, दूषयतः, दूषयन्ति। विकृतग्रहणं प्रक्रमाभेदार्थम्। पूर्वत्र हि गोह इत्युक्तम्। णाविति किम्? दोषो वर्तते॥

## वा चित्तविरागे ॥ ९१ ॥

चित्तविकारार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः। चित्तं दूषयति, चित्तं दोषयति। प्रज्ञां दूषयति, प्रज्ञां दोषयति॥

## मितां ह्रस्वः ॥ ९२ ॥

मितो धातवो 'घटादयो मितः' (भ्वा० ५५९) इत्येवमादयो ये प्रतिपादिताः, तेषामुपधाया ह्रस्वो भवति णौ परतः। घटयति। व्यथयति। जनयति। रजयति। शमयति। ज्ञपयति। केचिदत्र वेत्यनुवर्तयन्ति। सा च व्यवस्थितविभाषा (परि० ९९)। तेन उत्क्रामयति, संक्रामयतीत्येवमादि सिद्धं भवति॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ९३ ॥

चिण्परे णमुल्परे च णौ परतो मितामङ्गानामुपधाया दीर्घो भवत्यन्यतरस्याम्। अशमि,

---

१ – 'निगूहन्ति' इति न स्यात् यथान्यासपदमञ्जरि।

अशामि। अतमि, अतामि। शमंशमम्, शामंशामम्। तमंतमम्, तामंतामम्। दीर्घग्रहणं किम्, न ह्रस्वविकल्प एव विधीयते ? नैवं शक्यम्, शमयन्तं प्रयुङ्क्त इति द्वितीये णिचि ह्रस्वविकल्पो न स्यात्, णिलोपस्य स्थानिवद्भावात्, दीर्घविधौ त्वजादेशो न स्थानिवत्। शमयन्तं प्रयुक्तवान्। अशमि, अशामि। शमंशमम्, शामंशामम्। शंशमयतेः— अशंशमि, अशंशामि। शंशमंशंशमम्, शंशामंशंशामम्। योऽसौ णौ णिर्लुप्यते, यश्च यङ्कारः, तयोर्दीर्घविधावादेशो न स्थानिवत् ( १.१.५८ ) भवतीत्यस्थानिवद्भावाद् दीर्घः सिद्धो भवति। ह्रस्वविकल्पे तु विधीयमाने स्थानिवद्भावः स्यात्। णिण्यन्ते यङ्ण्यन्ते त्वसिद्धिरेव। व्याश्रयत्वादसिद्धत्वमपि नास्ति। णौ हि णियङोर्लोपः, चिण्णमुल्परे णावङ्गस्य दीर्घत्वम्॥

## खचि ह्रस्वः॥ ९४ ॥

खच्परे णौ परतो ह्रस्वो भवत्यङ्गस्योपधायाः। द्विषंतपः। परंतपः। पुरंदरः॥

## ह्लादो निष्ठायाम्॥ ९५ ॥

ह्लादोऽङ्गस्योपधाया ह्रस्वो भवति निष्ठायां परतः। प्रह्लन्नः। प्रह्लन्नवान्। निष्ठायामिति किम् ? प्रह्लादयति। ह्लाद इति योगविभागः क्रियते, क्तिन्यपि यथा स्यात्, प्रह्लत्तिरिति॥

## छादेर्घेऽद्व्युपसर्गस्य॥ ९६ ॥

छादेरङ्गस्याद्व्युपसर्गस्य घप्रत्यये परत उपधाया ह्रस्वो भवति। उरश्छदः। प्रच्छदः। दन्तच्छदः। णिलोपस्यासिद्धत्वं स्थानिवद्भावो वा वचनसामर्थ्यादत्र न भवतीति ह्रस्वभाविन्युपधा भवति। अद्व्युपसर्गस्येति किम् ? समुपच्छादः॥ अद्विप्रभृत्युपसर्गस्येति वक्तव्यम्॥ समुपातिच्छादः। उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्तयति। न हि त्रिपुत्रो द्विपुत्र इति व्यपदिश्यते॥

## इस्मन्त्रन्क्विषु च॥ ९७ ॥

इस् मन् त्रन् क्वि इत्येतेषु परतश्छादेरुपधाया ह्रस्वो भवति। छदिः। छद्म। छत्रम्। धामच्छत्। उपच्छत्॥

## गमहनजनखनघसां लोपः क्ङित्यनङि॥ ९८ ॥

गम हन जन खन घस इत्येतेषामङ्गानामुपधाया लोपो भवत्यजादौ प्रत्यये क्ङित्यनङि परतः। जग्मतुः, जग्मुः। जघ्नतुः, जघ्नुः। जज्ञे, जज्ञाते, जज्ञिरे। चख्नतुः, चख्नुः।

जक्षतुः, जक्षुः। अक्षंन् पितरोऽमीमदन्त पितरः ( मा० सं० १९.३६ )। क्ङितीति किम्? गमनम्। हननम्। अनङीति किम् ? अगमत्। अघसत्। अचीत्येव—गम्यते। हन्यते॥

## तनिपत्योश्छन्दसि॥ ९९ ॥

तनि पति इत्येतयोश्छन्दसि विषय उपधाया लोपो भवत्यजादौ क्ङिति प्रत्यये परतः। वितंत्निरे कुवयः ( ऋ० १.१६४.५ )। शकुना इंव पप्तिम ( ऋ० ९.१०७.२० )। छन्दसीति किम् ? वितेनिरे। पेतिम॥

## घसिभसोर्हलि च॥ १०० ॥

घसि भस इत्येतयोश्छन्दसि उपधाया लोपो भवति हलादावजादौ च क्ङिति प्रत्यये परतः। सग्धिश्च मे सपीतिश्च मे ( मा० सं० १८.९ )। बब्धां ते हरीं धानाः ( निरु० ५.१२ )। सग्धिरित्यदेः क्तिनि 'बहुलं छन्दसि' ( २.४.३९ ) इति घस्लादेश उपधाया लोपे च कृते 'झलो झलि' ( ८.२.२६ ) इति सकारलोपः। धत्वं तकारस्य, जश्त्वं घकारस्य। ततः समाना ग्धिः सग्धिरिति समासे कृते समानस्य सभावः ( ६.३.८४ )। बब्धामिति भसेर्लोटि तामि श्लौ द्विर्वचने कृत उपधालोपसलोपधत्वजश्त्वानि कर्तव्यानि। द्विर्वचनात् परत्वाद् नित्यत्वात् चोपधालोपः प्राप्नोति, छान्दसत्वात् स तथा न क्रियते। अजादौ—बप्सति। क्ङितीत्येव—अंशून् बंभस्ति ( शौ० सं० ६.४९.२ )॥

## हुझल्भ्यो हेर्धिः॥ १०१ ॥

हु इत्येतस्माद् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति। जुहुधि। झलन्तेभ्यः—भिन्द्धि। छिन्द्धि। हुझल्भ्य इति किम् ? क्रीणीहि। प्रीणीहि। हेरिति किम्? जुहुताम्। हलीत्येव—रुदिहि। स्वपिहि। इह जुहुतात् , भिन्तात् त्वमिति परत्वात् तातङि कृते 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' ( परि० ४० ) इति पुनर्धिभावो न भवति। भिन्द्धकि छिन्द्धकीत्यत्र परत्वाद् धिभावे कृते 'पुनः प्रसङ्गविज्ञानाद्' ( परि० ३९ ) अकच् क्रियते॥

## श्रुशृणुपृकृवृभ्यश्छन्दसि॥ १०२ ॥

श्रु शृणु पृ कृ वृ इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये। श्रुधी हवंमिन्द्र ( ऋ० २.११.१ )। गिरंः शृणुधी ( ऋ० ८.१३.७ )। पूर्धि ( ऋ० ८.७८.१० )। उरु णंस्कृधि ( ऋ० ८.७५.११ )। अपां वृधि ( ऋ० १.७.६ )। शृणुधीत्यत्र धिभाव-विधानसामर्थ्याद् 'उतश्च प्रत्ययाद्०' ( ६.४.१०६ ) इति हेर्लुग् न भवति। 'अन्येषामपि

दृश्यते' ( ६.३.१३७ ) इति दीर्घत्वम्। अतोऽन्यत्र 'व्यत्ययो बहुलम्' ( ३.१.८५ ) इति शप्, तस्य 'बहुलं छन्दसि' ( २.४.७३) इति लुक्॥

## अङितश्च॥ १०३ ॥

अङितश्च हेर्धिरादेशो भवति। 'वा छन्दसि' ( ३.४.८८ ) इति पित्त्वेनास्याङित्त्वम्। सोमं रारन्धि ( ऋ० १.९१.१३ )। अस्मभ्यं तद्धर्यश्व प्रयन्धि ( ऋ० ३.३६.९ )। युयोध्य१स्मज्जुहुराणमेनः ( ऋ० १.१८९.१ )। अङित इति किम् ? हव्यं प्रीणीहि ( काठ० सं० ४०.१२ )। रारन्धीति रमेर्व्यत्ययेन परस्मैपदम्, शपः श्लुरभ्यासदीर्घत्वं छान्दसत्वात्। मलोपाभावस्तु अङित्त्वादेव। प्रयन्धीति यमेः शपो लुक्। युयोधीति यौतेः शपः श्लुः॥

## चिणो लुक्॥ १०४ ॥

चिण उत्तरस्य प्रत्ययस्य लुग् भवति। अकारि। अहारि। अलावि। अपाचि। अकारितराम्, अहारितमामित्यत्र तलोपस्यासिद्धत्वात् तरप्तमपोर्न लुग् भवति, चिणो लुगित्येतद् विषयभेदाद् भिद्यते॥

## अतो हेः॥ १०५ ॥

अकारान्तादङ्गादुत्तरस्य हेर्लुग् भवति। पच। पठ। गच्छ। धाव। अत इति किम्? युहि। रुहि। तपरकरणं किम् ? लुनीहि। पुनीहि। ईत्वस्यासिद्धत्वादाकार एव भवति॥

## उतश्च प्रत्ययादसंयोगपूर्वात्॥ १०६ ॥

उकारो योऽसंयोगपूर्वस्तदन्तात् प्रत्ययादुत्तरस्य हेर्लुग् भवति। चिनु। सुनु। कुरु। उत इति किम् ? लुनीहि। पुनीहि। प्रत्ययादिति किम् ? युहि। रुहि। असंयोगपूर्वादिति किम् ? प्राप्नुहि। राध्नुहि। तक्ष्णुहि ॥उतश्च प्रत्ययाच्छन्दोवावचनम्॥ उतश्च प्रत्ययादित्यत्र छन्दसि वेति वक्तव्यम्। आतनुहि यातुधानान्। धिनुहि यज्ञपतिम् ( काठ० सं० १.६ )। तेनं मा भगिनं कृणु ( शौ० सं० ६.१२९.२ )॥

## लोपश्चास्यान्यतरस्यां म्वोः॥ १०७ ॥

योऽयमुकारोऽसंयोगपूर्वस्तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति वकारमकारादौ प्रत्यये परतः। सुन्वः, सुनुवः। सुन्मः, सुनुमः। तन्वः, तनुवः। तन्मः, तनुमः। प्रत्ययस्येत्येव—

युवः। युमः। असंयोगपूर्वस्येत्येव—शक्नुवः, शक्नुमः। लुगिति वर्तमाने लोपग्रहणमन्त्यलोपार्थम् ॥

## नित्यं करोतेः॥ १०८ ॥

करोतेरुत्तरस्योकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतो नित्यं लोपो भवति। कुर्वः, कुर्मः। उकारलोपस्य दीर्घविधावस्थानिवद्भावाद् ( १.१.५८ ) 'हलि च' ( ८.२.७७ ) इति दीर्घत्वं प्राप्तं 'न भकुर्छुराम्' ( ८.२.७९ ) इति प्रतिषिध्यते॥

## ये च॥ १०९ ॥

यकारादौ च प्रत्यये परतः करोतेरुत्तरस्योकारप्रत्ययस्य नित्यं लोपो भवति। कुर्यात्, कुर्याताम्, कुर्युः॥

## अत उत् सार्वधातुके॥ ११० ॥

उकारप्रत्ययान्तस्य करोतेरकारस्य स्थान उकार आदेशो भवति सार्वधातुके क्ङिति परतः। कुरुतः, कुर्वन्ति। सार्वधातुकग्रहणं किम् ? भूतपूर्वेऽपि सार्वधातुके यथा स्यात्—कुरु। तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम्। क्ङितीत्येव—करोति। करोषि। करोमि॥

## श्नसोरल्लोपः॥ १११ ॥

श्नस्यास्तेश्चाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। रुन्धः, रुन्धन्ति। भिन्तः, भिन्दन्ति। अस्तेः—स्तः, सन्ति। क्ङितीत्येव—भिनत्ति। अस्ति। श्नसोरित्यकारस्य पररूपत्वं 'शकन्ध्वादिषु०' ( ६.१.९४ वा० ) द्रष्टव्यम्॥

## श्नाभ्यस्तयोरातः॥ ११२ ॥

श्ना इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। लुनते। लुनताम्। अलुनत। अभ्यस्तानाम्—मिमते। मिमताम्। अमिमत। संजिहते। संजिहताम्। समजिहत। श्नाभ्यस्तयोरिति किम् ? यान्ति। वान्ति। आत इति किम् ? बिभ्रति। क्ङितीत्येव—अलुनात्। अजहात्[1]। आद्ग्रहणं स्पष्टार्थम्॥

---

१ - कदाचिदत्र ' अलुनाम्, अजहाम् ' इति प्रत्युदाहरणे स्याताम्, अन्यथा लङ्पर्यन्तधावनम् अनावश्यकं स्यात्, ' लुनाति, जहाति ' इत्येव ब्रूयात्। टीकाकृद्भ्यां ( न्या० पद० ) त्वेतद् नालोचितम्।

## ई हल्यघोः ॥ ११३ ॥

श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः। लुनीतः। पुनीतः। लुनीथः। पुनीथः। लुनीते। पुनीते। अभ्यस्तानाम्—मिमीते। मिमीषे। मिमीध्वे। संजिहीते। संजिहीषे। संजिहीध्वे। हलीति किम् ? लुनन्ति। मिमते। अघोरिति किम् ? दत्तः। धत्तः। क्ङितीत्येव—लुनाति। जहाति॥

## इद् दरिद्रस्य ॥ ११४ ॥

दरिद्रातेर्हलादौ सार्वधातुके क्ङिति परत इकारादेशो भवति। दरिद्रितः। दरिद्रिथः। दरिद्रिवः। दरिद्रिमः। हलीत्येव—दरिद्रति। क्ङितीत्येव—दरिद्राति ॥ दरिद्रातेरार्धधातुके लोपो वक्तव्यः॥ सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम्॥ दरिद्रातीति दरिद्रः। आकारान्तलक्षणो णप्रत्ययः ( ३.१.१४१ ) न भवति, पचादित्वादज् ( ३.१.१३४ ) एव भवति।

न दरिद्रायके लोपो दरिद्राणे च नेष्यते।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा॥

॥ अद्यतन्यां वेति वक्तव्यम्॥ अदरिद्रीत्, अदरिद्रासीत्। दरिद्रस्येति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यम्॥

## भियोऽन्यतरस्याम् ॥ ११५ ॥

भी इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः। बिभितः, बिभीतः। बिभिथः, बिभीथः। बिभिवः, बिभीवः। बिभिमः, बिभीमः। हलादावित्येव—बिभ्यति। क्ङितीत्येव—बिभेति। सार्वधातुक इत्येव—भीयते[1]॥

## जहातेश्च ॥ ११६ ॥

जहातेश्चेकारादेशो भवत्यन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः। जहितः, जहीतः। जहिथः, जहीथः। हलादावित्येव—जहति। क्ङितीत्येव—जहाति। सार्वधातुक इत्येव—हीयते। जेहीयते[2]। पृथग्योगकरणमुत्तरार्थम्॥

---

१ - 'हलादौ......भीयते' इति पाठो न सार्वत्रिकः। हरदत्तस्तु वृत्तौ 'हलादौ क्ङिति सार्वधातुके' इति पाठस्यात्रानुपयोगमभिधाय प्रत्युदाहरणाप्रदर्शनं सूचयाञ्चकार। न्यासेऽपि 'भीतः, भीतवान्' इति सार्वधातुकप्रत्युदाहरणे प्रदर्शिते।

२ - 'सार्वधातुके.....जेहीयते' इति पाठो न सार्वत्रिकः। अत्र न्यासपदमञ्जर्यौ द्रष्टव्ये।

## आ च हौ ॥ ११७ ॥

जहातेराकारश्चान्तादेशो भवतीकारश्चान्यतरस्यां हौ परतः। जहाहि, जहिहि, जहीहि ॥

## लोपो यि ॥ ११८ ॥

लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः। जह्यात्, जह्याताम्, जह्युः ॥

## घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥

घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतोऽभ्यासलोपश्च। देहि। धेहि। अस्तेः—'श्नसोरल्लोपः' ( ६.४.१११ ) इत्यकारलोपः। एधि। शिदयं लोपः। तेन सर्वस्याभ्यासस्य भवति ॥

## अत एकहल्मध्येऽनादेशादेर्लिटि ॥ १२० ॥

लिटि परत आदेश आदिर्यस्याङ्गस्य नास्ति तस्यैकहल्मध्येऽसहाययोर्हलोर्मध्ये योऽकारस्तस्यैकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः। रेणतुः, रेणुः। येमतुः, येमुः। पेचतुः, पेचुः। देमतुः, देमुः। अत इति किम् ? दिदिवतुः, दिदिवुः। तपरकरणं किम् ? ररासे, ररासाते, ररासिरे। एकहल्मध्य इति किम् ? शश्रमतुः। शश्रमुः[1]। तत्सरतुः, तत्सरुः। अनादेशादेरिति किम् ? चकणतुः, चकणुः। जगणतुः, जगणुः। बभणतुः, बभणुः। लिट आदेशविशेषणं किम् ? इहापि यथा स्यात्—नेमतुः, नेमुः। सेहे, सेहाते, सेहिरे। अनैमित्तिके नत्वसत्वे, तदादिर्लिट्यादेशादिर्न भवति। इहाभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति। तेन तदादिरप्यादेशादिर्भवति। तथा च फलिभजोरेत्वं विधीयते। रूपाभेदे चादेशादिर्नाश्रीयत इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्। अन्यथा हि पेचतुः, पेचुः, देमतुः, देमुरित्येवमादीनामपि प्रकृतिजश्चरादीनामेत्वं न स्यात्। क्ङितीत्येव—अहं पपच। अहं पपठ ॥ दम्भेरेत्वं वक्तव्यम् ॥ देभतुः, देभुः। नलोपस्यासिद्धत्वाद् न प्राप्नोति ॥ नशिमन्योरलिट्येत्वं वक्तव्यम् ॥ अनेशम्। मेनका। अनेशमिति नशेर्लुङि पुषादित्वादङ्। मेनकेति मनेः 'आशिषि च' ( ३.१.१५० ) इति वुन्। क्षिपकादिषु ( ७.३.४५ वा० ) प्रक्षेपादित्वं न क्रियते ॥ छन्दस्यमिपचोरप्यलिटि एत्वं वक्तव्यम् ॥ व्येमानम्। अमेर्विपूर्वस्य चानशि मुक् न क्रियते। लिङि—पेचिरन्। पचेरन्नित्येतस्य

---

१ – ' ररक्षतुः, ररक्षुः ' इत्यपपाठो वाल०।

छान्दसं ह्रस्वत्वम् ॥ यजिवप्योश्च ॥ आयेजे। आवेपे। यजेर्वपेश्च लङीटि 'छन्दस्यपि दृश्यते' ( ६.४.७३ ) इत्यनजादेरप्याडागमः[1]॥

## थलि च सेटि ॥ १२१ ॥

थलि च सेटि परतोऽनादेशादेरङ्गस्यैकहल्मध्यगतस्यातः स्थान एकारादेशो भवति, अभ्यासलोपश्च। पेचिथ। शेकिथ। सेटीति किम् ? पपक्थ। थल्ग्रहणं विस्पष्टार्थम्। अक्ङिदर्थमेतद् वचनमित्यन्यस्येटोऽसंभवात्। अत इत्येव—दिदेविथ। एकहल्मध्यगतस्येत्येव—शश्रमिथ। ततसरिथ[2]। अनादेशादेरित्येव—चकणिथ। बभणिथ॥

## तॄफलभजत्रपश्च ॥ १२२ ॥

तॄ फल भज त्रप इत्येतेषामङ्गानामत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि। तेरतुः, तेरुः। तेरिथ। फेलतुः, फेलुः। फेलिथ। भेजतुः, भेजुः। भेजिथ। त्रेपे, त्रेपाते, त्रेपिरे। तरतेर्गुणार्थं वचनम्। फलिभजोरादेशाद्यर्थम्। त्रपेरनेकहल्मध्यार्थम् ॥ श्रन्थेश्चेति वक्तव्यम् ॥ श्रेथतुः, श्रेथुः॥

## राधो हिंसायाम् ॥ १२३ ॥

राधो हिंसायामर्थेऽवर्णस्यैकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि। अपरेधतुः, अपरेधुः। अपरेधिथ। हिंसायामिति किम् ? रराधतुः, रराधुः। रराधिथ। अत इत्येतदिहोपस्थितं तपरत्वकृतमपास्य कालविशेषमसंभवादवर्णमात्रं प्रतिपादयति। अथ वा 'श्नाभ्यस्तयोरातः' ( ६.४.११२ ) इत्यत आत इत्यनुवर्तत इति व्याख्येयम्। एकहल्मध्ये वा यः स स्थानी भविष्यति॥

## वा जॄभ्रमुत्रसाम् ॥ १२४ ॥

जॄ भ्रमु त्रस इत्येतेषामङ्गानामतः स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि। जेरतुः, जेरुः। जेरिथ। जजरतुः, जजरुः। जजरिथ। भ्रेमतुः, भ्रेमुः। भ्रेमिथ। बभ्रमतुः, बभ्रमुः। बभ्रमिथ। त्रेसतुः, त्रेसुः। त्रेसिथ। तत्रसतुः, तत्रसुः। तत्रसिथ॥

## फणां च सप्तानाम् ॥ १२५ ॥

---

१ – ' यजिवप्योश्च........आडागमः ' इति पाठः क्वाचित्क इति हरदत्तः।
२ – ' ततक्षिथ, ररक्षिथ ' इत्यपपाठो मुद्रितेषु।

फणादीनां सप्तानां धातूनामवर्णस्य स्थाने वैकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि। फेणतुः, फेणुः। फेणिथ। पफणतुः, पफणुः। पफणिथ। रेजतुः, रेजुः। रेजिथ। रराजतुः, रराजुः। रराजिथ। भ्रेजे, भ्रेजाते, भ्रेजिरे। बभ्राजे, बभ्राजाते, बभ्राजिरे। भ्रेशे, भ्रेशाते, भ्रेशिरे। बभ्राशे, बभ्राशाते, बभ्राशिरे। भ्लेशे, भ्लेशाते, भ्लेशिरे। बभ्लाशे, बभ्लाशाते, बभ्लाशिरे। स्येमतुः, स्येमुः। स्येमिथ। सस्यमतुः, सस्यमुः। सस्यमिथ। स्वेनतुः, स्वेनुः। स्वेनिथ। सस्वनतुः, सस्वनुः। सस्वनिथ। सप्तानामिति किम् ? दध्वनतुः, दध्वनुः। दध्वनिथ॥

## न शसददवादिगुणानाम्॥ १२६ ॥

शस दद इत्येतयोर्वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थान एकारादेशो न भवति, अभ्यासलोपश्च। विशशसतुः, विशशसुः। विशशसिथ। ददसे, दददाते, ददसिरे। वादीनाम्—ववमतुः, ववमुः। ववमिथ। गुणस्य—विशशरतुः, विशशरुः। विशशरिथ। लुलविथ। पुपविथ। गुणशब्दाभिनिर्वृत्तस्यार्शब्दस्यौकारस्य चायमकार इत्येत्वं प्रतिषिध्यते॥

## अर्वणस्त्रसावनञः॥ १२७ ॥

अर्वन्नित्येतस्याङ्गस्य तृ इत्ययमादेशो भवति, सुश्चेत् ततः परो न भवति, स च नञ उत्तरो न भवति। अर्वन्तौ, अर्वन्तः। अर्वन्तम् , अर्वन्तौ, अर्वतः। अर्वता, अर्वद्भ्याम्, अर्वद्भिः। अर्वती। आर्वतम्। असाविति किम् ? अर्वा। अनञ इति किम् ? अनर्वाणौ, अनर्वाणः। अनर्वाणं वृषभं मन्द्रजिह्वम् ( ऋ० १.१९०.१ )॥

## मघवा बहुलम्॥ १२८ ॥

मघवन्नित्येतस्याङ्गस्य बहुलं तृ इत्ययमादेशो भवति। मघवान्, मघवन्तौ, मघवन्तः। मघवन्तम्, मघवन्तौ, मघवतः। मघवता। मघवती। माघवतम्। न च भवति—मघवा, मघवानौ, मघवानः। मघवानम्, मघवानौ, मघोनः। मघोना, मघवभ्याम्, मघवभिः। मघोनीं ( ऋ० १.४८.८ )। माघवनम्॥

## भस्य॥ १२९ ॥

भस्येत्ययमधिकारः, आ अध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामो भस्येत्येवं तद् वेदितव्यम्। वक्ष्यति—'पादः पत्' ( ६.४.१३० )—द्विपदः पश्य। द्विपदा कृतम्। भस्येति किम् ? द्विपादौ, द्विपादः॥

## पादः पत् ॥ १३० ॥

पाद इति पादशब्दो लुप्ताकारो गृह्यते। तदन्तस्याङ्गस्य भस्य पदित्ययमादेशो भवति। स च 'निर्दिश्यमानस्यादेशा भवन्ति' ( परि० १२ ) इति पाच्छब्दस्यैव भवति, न तदन्तस्य सर्वस्य। द्विपदः पश्य। द्विपदा। द्विपदे। द्विपदिकां ददाति। त्रिपदिकां ददाति। वैयाघ्रपद्यः ॥

## वसोः संप्रसारणम् ॥ १३१ ॥

वस्वन्तस्य भस्य संप्रसारणं भवति। विदुषः पश्य। विदुषा। विदुषे। पेचुषः पश्य। पेचुषा। पेचुषे। पपुषः पश्य। आकारलोपे कर्तव्ये वसुसंप्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति। वसुग्रहणे क्वसोरपि ग्रहणमिष्यते ॥

## वाह ऊठ् ॥ १३२ ॥

वाह इत्येवमन्तस्य भस्य ऊठ् इत्येतत् संप्रसारणं भवति। प्रष्ठौहः। प्रष्ठौहा। प्रष्ठौहे। दित्यौहः। दित्यौहा। दित्यौहे। 'एत्येधत्यूठ्सु' ( ६.१.८९ ) इति वृद्धिः। अथ किमर्थमूठ् क्रियते, संप्रसारण एव कृते गुणे च 'वृद्धिरेचि' ( ६.१.८८ ) इति वृद्धौ सत्यां सिद्धं रूपं भवति प्रष्ठौह इति, अनकारान्ते चोपपदे वहेर्ण्विर्न दृश्यते ? ज्ञापनार्थम्। एतज् ज्ञापयति भवत्येषा परिभाषा—'असिद्धं बहिरङ्गमन्तरङ्गे' ( परि० ५० ) इति। तस्यां हि सत्यां बहिरङ्गस्य संप्रसारणस्यासिद्धत्वाद् अन्तरङ्गो गुणो न स्यात् ॥

## श्वयुवमघोनामतद्धिते ॥ १३३ ॥

श्वन् युवन् मघवन् इत्येतेषामङ्गानामतद्धिते प्रत्यये परतः संप्रसारणं भवति। शुनः। शुना। शुने। यूनः। यूना। यूने। मघोनः। मघोना। मघोने। अतद्धित इति किम् ? शौवनं[१] मांसम्। यौवनं वर्तते। माघवनः स्थालीपाकः। शुनो विकारे 'प्राणिरजतादिभ्योऽञ्' ( ४.३.१५४ ), द्वारादित्वाद् ( ७.३.४ ) ऐजागमः। श्वादीनामेतत् संप्रसारणं नकारान्तानामिष्यते। इह न भवति—युवतीः पश्य। मघवतः। मघवता। मघवते। तदर्थमुत्तरत्र योगविभागं कुर्वन्ति। अल्लोपः। अनः। अन इत्युभयोः शेष इति ॥

## अल्लोपोऽनः ॥ १३४ ॥

अनित्येवमन्तस्य भस्याकारलोपो भवति। राज्ञः पश्य। राज्ञा। राज्ञे। तक्ष्णः

१ – ' शौवम् ' इति न्या० पद० पाठः। यथावार्त्तिकं ( ६.४.१४४ वा० ) स सङ्कोचे साधुः स्यात्।

पश्य। तक्ष्णा। तक्ष्णे। अनो नकारान्तस्यायं लोप इष्यते। इह न भवति—राजकीयमिति॥

## षपूर्वहन्धृतराज्ञामणि॥ १३५ ॥

षकारपूर्वो योऽन् हनो धृतराज्ञश्च तस्याकारलोपो भवत्यणि परतः। औक्ष्णः। ताक्ष्णः। भ्रौणघ्नः। धार्तराज्ञः। षपूर्वहन्धृतराज्ञामिति किम्? सामनः। वैमनः। 'अन्' (६.४.१६७) इति प्रकृतिभावेनाल्लोपटिलोपावुभावपि न भवतः। अणीति किम्? ताक्षण्यः॥

## विभाषा ङिश्योः॥ १३६ ॥

ङौ परतः शीशब्दे चानो विभाषाकारलोपो भवति। राज्ञि, राजनि। साम्नि, सामनि। साम्नी, सामनी॥

## न संयोगाद्वमन्तात्॥ १३७ ॥

वकारमकारान्तात् संयोगादुत्तरस्यानोऽकारस्य लोपो न भवति। पर्वणा। पर्वणे। अथर्वणा। अथर्वणे। चर्मणा। चर्मणे[1]। संयोगादिति किम्? प्रतिदीव्ना। प्रतिदीव्ने। साम्ना। साम्ने। वमन्तादिति किम्? तक्ष्णा। तक्ष्णे॥

## अचः॥ १३८ ॥

अच इत्ययमञ्चतिर्लुप्तनकारो गृह्यते। तदन्तस्य भस्याकारस्य लोपो भवति। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे॥

## उद ईत्॥ १३९ ॥

उद उत्तरस्याच ईकारादेशो भवति। उदीचः। उदीचा। उदीचे॥

## आतो धातोः॥ १४० ॥

आकारान्तस्य धातोर्भस्य लोपो भवति। कीलालपः पश्य। कीलालपा। कीलालपे। शुभंयः पश्य। शुभंया। शुभंये। आत इति किम्? निया। निये। धातोरिति किम्? खट्वाः पश्य। मालाः पश्य। आत इति योगविभागः। तेन '०क्त्वो ल्यप्' (७.१.३७), 'हलः श्नः शानच्०' (३.१.८३) इत्येवमादि सिद्धं भवति॥

---

१ - 'चर्मणा, चर्मणे' इति पाठः क्वाचित्कः।

## मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥

मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति। त्मना देवेभ्यः। त्मना सोमेषु। मन्त्रेष्विति किम् ? आत्मना कृतम्। आङीति किम् ? यदात्मनस्तन्नो वरिष्ठा ॥ आङोऽन्यत्रापि दृश्यते ॥ त्मन्यां समु॒ञ्जन् ( ऋ० १०.११०.१० )॥

## ति विंशतेर्डिति ॥ १४२ ॥

भस्य विंशतेस्तिशब्दस्य डिति प्रत्यये परतो लोपो भवति। विंशत्या क्रीतो विंशकः। विंशं शतम्। विंशतेः पूरणो विंशः। एकविंशः। डितीति किम् ? विंशत्या ॥

## टेः ॥ १४३ ॥

टिसंज्ञकस्य डिति प्रत्यये परतो लोपो भवति। कुमुद्वान्। नड्वान्। वेतस्वान्। उपसरजः। मन्दुरजः। त्रिंशता क्रीतः त्रिंशकः। डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् टिलोपो भवति ॥

## नस्तद्धिते ॥ १४४ ॥

नकारान्तस्य भस्य टेर्लोपो भवति तद्धिते परतः। आग्निशर्मिः। औडुलोमिः। बाह्वादित्वाद् ( ४.१.९६ ) इञ्प्रत्ययः। न इति किम् ? सात्वतः। तद्धित इति किम् ? शर्मणा। शर्मणे ॥ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानं कर्तव्यम् ॥ अत्र य इन्नन्तास्तेषाम् 'इनण्यनपत्ये' ( ६.४.१६४ ) इति प्रकृतिभावः प्राप्तः, ये त्वन्नन्तास्तेषाम् 'अन्' ( ६.४.१६७ ) इति। सब्रह्मचारिण इमे साब्रह्मचाराः। पीठसर्पिणः पैठसर्पाः। कलापिना प्रोक्तमधीयते कालापाः। कुथुमिनः कौथुमाः। तैतिलिजाजलिनावाचार्यौ, तत्कृतो ग्रन्थ उपचारात् तैतिलिजाजलिशब्दाभ्यामभिधीयते। तं ग्रन्थमधीयते तैतिलाः, जाजलाः। शैषिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति। एवं लाङ्गलाः। शैलालाः। शिखण्डिनः शैखण्डाः। सूकरसद्मनः सौकरसद्माः। सुपर्वणः सौपर्वाः ॥ अश्मनो विकार उपसंख्यानम् ॥ अश्मनो विकार आश्मः। आश्मनोऽन्यत्र[1] ॥ चर्मणः कोश उपसंख्यानम् ॥ चार्मः कोशः। चार्मणोऽन्यः ॥ शुनः संकोच उपसंख्यानम् ॥ शौवः संकोचः। शौवनोऽन्यः ॥ अव्ययानां च सायंप्रातिकाद्यर्थमुपसंख्यानम् ॥ के पुनः सायंप्रातिकादयः ? येषामव्ययानामविहितष्टिलोपः, प्रयोगे च दृश्यते, ते सायंप्रातिकप्रकारा ग्रहीतव्याः। सायंप्रातर्भवः

---

१ – 'अन्यः' इति है०। जयादित्यस्तु विकारे टिलोपविकल्पं मन्यते ( ४.३.१३४ )।

सायंप्रातिकः। पौनःपुनिकः। बाह्यः। कौतस्कुतः। 'कालाट् ठञ्' ( ४.३.११ ) इति ठञ्प्रत्ययः। ट्युट्युलौ तु नेष्येते। आरातीयः, शाश्वतिकः, शाश्वत इत्येवमादिषु न दृश्यते टिलोपः॥

## अह्नष्टखोरेव॥ १४५ ॥

अहन्नित्येतस्य टखोरेव परतष्टिलोपो भवति। द्वे अहनी समाहृते द्व्यहः। त्र्यहः। द्वे अहनी अधीष्टो भृतो भूतो भावी वा द्व्यहीनः। त्र्यहीनः। अह्नां समूहः क्रतुः अहीनः। 'अह्नः समूहे खो वक्तव्यः' ( ४.२.४२ वा० )। सिद्धे सत्यारम्भो नियमार्थः। इह मा भूत्—अह्ना निर्वृत्तम् आह्निकम्। एवकारकरणं विस्पष्टार्थम्। अह्न एव टखोरित्येवं नियमो न भविष्यति, 'आत्माध्वानौ खे' ( ६.४.१६९ ) इति प्रकृतिभावविधानात्॥

## ओर्गुणः॥ १४६ ॥

उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका। परशव्यमयः। औपगवः। कापटवः। ओरोदिति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यः ( परि० ९३-१ ) यथा स्यात्। तेन स्वायंभुव इति सिद्धं भवति॥

## ढे लोपोऽकद्र्वाः॥ १४७ ॥

ढे परत उवर्णान्तस्य भस्याकद्र्वा लोपो भवति। कामण्डलेयः। शैतवाहेयः। जाम्बेयः। माद्रबाहेयः। अकद्र्वा इति किम् ? काद्रवेयो मन्त्रमपश्यत् ( तै० सं० १.५.४.१ )॥

## यस्येति च॥ १४८ ॥

इवर्णान्तस्यावर्णान्तस्य च भस्य ईकारे[1] परे तद्धिते च लोपो भवति। इवर्णान्तस्येकारे—दाक्षी। प्लाक्षी। सखी। सवर्णदीर्घत्वे हि सत्यतिसखेरागच्छतीत्यत्रैकादेशस्यान्तवत्त्वाद् ( ६.१.८५ ) असखि ( १.४.७ ) इति घिसंज्ञायाः प्रतिषेधः स्यात्। इवर्णान्तस्य तद्धिते—दुलि—दौलेयः। वलि—वालेयः। अत्रि—आत्रेयः। अवर्णान्तस्य ईकारे—कुमारी। गौरी। शार्ङ्गरवी। अवर्णान्तस्य तद्धिते—दाक्षिः। प्लाक्षिः। चौडिः। बालाकिः। सौमित्रिः॥ यस्येत्यौङः श्यां प्रतिषेधो वक्तव्यः॥ काण्डे। कुड्ये। सौर्ये हिमवतः शृङ्गे। औङः शीभावे ( ७.१.१९ ) कृते यस्येति चेति 'सूर्यतिष्यागस्त्यमत्स्यानां य

---

१ – 'इकारे' इत्यपपाठो मुद्रितेषु।

उपधायाः' ( ६.४.१४९ ) इति च लोपः प्राप्नोति ॥ इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन ॥ वत्सान् प्रीणाति वत्सप्रीः, तस्यापत्यं वात्सप्रेयः। 'चतुष्पाद्भ्यो ढञ्' ( ४.१.१३५ ) इति ढञ् प्रत्ययः। लेखाभ्रूः शुभ्रादिः ( ४.१.१२३ ), तस्या अपत्यं लैखाभ्रेयः ॥

## सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ १४९ ॥

सूर्य तिष्य अगस्त्य मत्स्य इत्येतेषां यकारस्य उपधाया भस्य लोपो भवतीति परतस्तद्धिते च। सूर्येणैकदिक् सौरी बलाका। अणि यो यस्येति लोपस्तस्यासिद्धत्वं नास्ति, व्याश्रयत्वात्। ईकारे तु यस्तस्यासिद्धत्वाद् उपधायकारो भस्याणन्तस्य सूर्यस्य संबन्धीति लुप्यते। तिष्य—तैषमहः। तैषी रात्रिः। अगस्त्यस्यापत्यं स्त्री, ऋषित्वाद् ( ४. १.११४ ) अणि कृत आगस्ती। आगस्तीयः। मत्स्य—गौरादित्वाद् ( ४.१.४१ ) ङीष्, मत्सी। उपधाया इति किम् ? मत्स्यचरी। यग्रहणमुत्तरार्थम्। विषयपरिगणनमत्र कर्तव्यम् ॥ मत्स्यस्य ङ्यामिति वक्तव्यम् ॥ इह मा भूत्—मत्स्यस्येदं मांसं मात्स्यम् ॥ सूर्यागस्त्ययोश्छे च ङ्यां च ॥ सौरीयः। सौरी। आगस्तीयः। आगस्ती। इह मा भूत्—सौर्यं चरुं निर्वपेत्। आगस्त्यः ॥ तिष्यपुष्ययोर्नक्षत्राणि ॥ तिष्येण नक्षत्रेण युक्तः कालः तैषः। पौषः ॥ अन्तिकस्य तसि कादिलोप आद्युदात्तं च ॥ अन्तिकशब्दस्य तसिप्रत्यये परतः ककारादेः शब्दस्य लोपो वक्तव्यः, आद्युदात्तत्वं च। अन्तिंतो न दूराद् ( ऋ० २.२७.१३ ) ॥ तमे तादेश्च ॥ तमप्रत्ययेऽन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः। तत्र तादिलोपे—अन्तंमः ( ऋ० ५.२४.१ )। कादिलोपे—अन्तितमः ॥ कादिलोपे बहुलमिति वक्तव्यम् ॥ अन्यत्रापि हि दृश्यते। अन्तिके सीदतीति अन्तिषत्। 'पूर्वपदात्' ( ८.३.१०४ ) इति षत्वम् ॥ ये च ॥ अन्तियः ॥

## हलस्तद्धितस्य ॥ १५० ॥

तद्धित इति निवृत्तम्[1]। हल उत्तरस्य तद्धितयकारस्य उपधाया ईति परतो लोपो भवति। गार्गी। वात्सी। हल इति किम् ? कारिकेयी। तद्धितस्येति किम् ? वैद्यस्य भार्या वैद्यी ॥

## आपत्यस्य च तद्धितेऽनाति ॥ १५१ ॥

आपत्ययकारस्य हल उत्तरस्य तद्धितेऽनाकारादौ लोपो[2] भवति। गर्गाणां समूहो

---

१ – 'तद्धित इति निवृत्तम्' इति नास्ति बाल०।
२ – 'यलोपः' इति बाल०।

गार्गकम्। वात्सकम्। आपत्यस्येति किम्? सांकाश्यकः। काम्पिल्यकः। तद्धित-ग्रहणमीत्यनापत्यस्यापि लोपार्थम्। सौमी इष्टिः। अनातीति किम्? गार्ग्यायणः। वात्स्यायनः। हल इत्येव—कारिकेयस्यापत्यं कारिकेयिः॥

## क्यच्व्योश्च॥ १५२॥

क्य च्वि इत्येतयोश्च परत आपत्ययकारस्य हल उत्तरस्य लोपो भवति। वात्सीयति। गार्गीयति। वात्सायते। गार्गायते[1]। च्वौ—गार्गीभूतः। वात्सीभूतः। आपत्यस्येत्येव—सांकाश्यायते। सांकाश्यीभूतः। हल इत्येव—कारिकेयीयति। कारिकेयीभूतः॥

## बिल्वकादिभ्यश्छस्य लुक्॥ १५३॥

नडादिषु बिल्वादयः पठ्यन्ते। 'नडादीनां कुक् च' (४.२.९१) इति कृतकुगागमा बिल्वकादयो भवन्ति। तेभ्य उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति। बिल्वा यस्यां सन्ति बिल्वकीया, तस्यां भवा बैल्वकाः। वेणुकीया—वैणुकाः। वेत्रकीया—वैत्रकाः। वेतसकीया—वैतसकाः। तृणकीया—तार्णकाः। इक्षुकीया—ऐक्षुकाः। काष्ठकीया—काष्ठकाः। कपोतकीया—कापोतकाः। 'क्रुञ्चाया ह्रस्वत्वं च' (ग० सू० ९०)। क्रुञ्चकीया—क्रौञ्चकाः। छग्रहणं किम्? छमात्रस्य लुग् यथा स्यात्, कुको निवृत्तिर्मा भूदिति। अन्यथा हि 'संनियोगशिष्टानामन्यतरापाये उभयोरप्यभावः' (परि० ८६) इति कुगपि निवर्तेत। लुग्ग्रहणं सर्वलोपो यथा स्याद्, यकारमात्रस्य मा भूत्॥

## तुरिष्ठेमेयःसु॥ १५४॥

इष्ठन् इमनिच् ईयसुन् इत्येतेषु परतः तृशब्दस्य लोपो भवति। आसुतिं करिष्ठः (ऋ० ७.९७.७)। विजयिष्ठः। वहिष्ठः। दोहीयसी धेनुः। सर्वस्य तृशब्दस्य लोपार्थं वचनम्। अन्त्यस्य हि 'टेः' (६.४.१५५) इत्येव सिद्धः। लुगित्येतदत्र नानुवर्तते। तथाहि सति 'न लुमताङ्गस्य' (१.१.६३) इति प्रतिषेधाद् गुणो न स्यात्। इमनिज्ग्रहण-मुत्तरार्थम्। इतरौ तु 'तुश्छन्दसि' (५.३.५९) इति भवतः॥

## टेः॥ १५५॥

भस्य टेर्लोपो भवतीष्ठेमेयस्सु परतः। पटु—पटिष्ठः। पटिमा। पटीयान्। लघु—लघिष्ठः। लघिमा। लघीयान्॥ णाविष्ठवत् प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम्॥ किं प्रयोजनम्? पुंवद्भावरभावटिलोपयणादिपरार्थम्। पुंवद्भावः—एनीमाचष्ट एतयति।

---

१ – 'वात्सीयते, गार्गीयते' इत्यपपाठो मुद्रितेषु।

श्येतयति। 'तसिलादिष्वा कृत्वसुचः' (६.३.३५) इति इष्ठे पुंवद्भाव उक्तः। रभावः—पृथुमाचष्टे प्रथयति। म्रदयति। टिलोपः—पटुमाचष्टे पटयति। लघयति। यणादिपरम्—स्थूलमाचष्टे स्थवयति। भारद्वाजीयास्तु पठन्ति—णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कनर्थमिति। स्रग्विणमाचष्टे स्रजयति। वसुमन्तमाचष्टे वसयति। युवानमाचष्टे यवयति, कनयति। एतदुभयमप्युदाहरणमात्रम्, न परिगणनम्। प्रादयोऽपि हीष्यन्ते। प्रियमाचष्टे प्रापयति॥

## स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः॥ १५६ ॥

स्थूल दूर युव ह्रस्व क्षिप्र क्षुद्र इत्येतेषां यणादिपरं लुप्यत इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति। स्थूल—स्थविष्ठः। स्थवीयान्। दूर—दविष्ठः। दवीयान्। युवन्—यविष्ठः। यवीयान्। ह्रस्व—ह्रसिष्ठः। ह्रसिमा। ह्रसीयान्। क्षिप्र—क्षेपिष्ठः। क्षेपिमा। क्षेपीयान्। क्षुद्र—क्षोदिष्ठः। क्षोदिमा। क्षोदीयान्। ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते। परग्रहणं किम्? यविष्ठः, यवीयान्, ह्रसिष्ठः, ह्रसीयान् इत्यत्र पूर्वस्य यणादेर्लोपो मा भूत्। पूर्वग्रहणं विस्पष्टार्थम्॥

## प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राधिवृन्दाः॥ १५७ ॥

प्रिय स्थिर स्फिर उरु बहुल गुरु वृद्ध तृप्र दीर्घ वृन्दारक इत्येतेषां प्र स्थ स्फ वर् बंहि गर् वर्षि त्रप् द्राघि वृन्द इत्येते यथासंख्यमादेशा भवन्ति इष्ठेमेयस्सु परतः। प्रिय—प्रेष्ठः। प्रेमा। प्रेयान्। स्थिर—स्थेष्ठः। स्थेयान्। स्फिर—स्फेष्ठः। स्फेयान्। उरु—वरिष्ठः। वरिमा। वरीयान्। बहुल—बंहिष्ठः। बंहिमा। बंहीयान्। गुरु—गरिष्ठः। गरिमा। गरीयान्। वृद्ध—वर्षिष्ठः। वर्षीयान्। तृप्र—त्रपिष्ठः। त्रपीयान्। दीर्घ—द्राघिष्ठः। द्राघिमा। द्राघीयान्। वृन्दारक—वृन्दिष्ठः। वृन्दीयान्। प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते। तेनान्येषामिमनिज् न भवतीति नोदाह्रियते॥

## बहोर्लोपो भू च बहोः॥ १५८ ॥

बहोरुत्तरेषामिष्ठेमेयसां लोपो भवति, तस्य च बहोः स्थाने भू इत्ययमादेशो भवति। भूमा। भूयान्। बहुशब्दः पृथ्वादिषु पठ्यते। बहोरिति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम्, अन्यथा हि प्रत्ययानामेव भूभावः स्यात्॥

## इष्ठस्य यिट् च॥ १५९ ॥

बहोरुत्तरस्येष्ठस्य यिडागमो भवति, बहोश्च भूरादेशो भवति। भूयिष्ठः। लोपापवादो यिडागमः, तस्मिन्निकार उच्चारणार्थः॥

## ज्यादादीयसः॥ १६० ॥

ज्यादुत्तरस्येयस आकार आदेशो भवति। ज्यायान्। लोपस्य यिटा[1] व्यवहितत्वादादित्युच्यते। लोपे हि सति अकृद्यकारे ( ७.४.२५ ) इति दीर्घत्वेन ज्यायानिति सिध्यति॥

## र ऋतो हलादेर्लघोः॥ १६१ ॥

रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोरिष्ठेमेयस्सु परतः। प्रथिष्ठः। प्रथिमा। प्रथीयान्। म्रदिष्ठः। म्रदिमा। म्रदीयान्। ऋत इति किम् ? पटिष्ठः। पटिमा। पटीयान्। हलादेरिति किम् ? ऋजिष्ठः। ऋजिमा। ऋजीयान्। लघोरिति किम् ? कृष्ण—कृष्णिष्ठः। कृष्णिमा। कृष्णीयान्। परिगणनमत्र कर्तव्यम्।

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्॥

तत इह न भवति—कृतमाचष्टे कृतयति। मातरमाचष्टे मातयति। भ्रातयति॥

## विभाषर्जोश्छन्दसि॥ १६२ ॥

ऋजु इत्येतस्य ऋतः स्थाने विभाषा रेफ आदेशो भवतीष्ठेमेयस्सु परतश्छन्दसि विषये। रजिंष्ठ॒मनु॑ नेषि॒ पन्थां॑म् ( ऋ० १.९१.१ )। त्वमृजिष्ठः॥

## प्रकृत्यैकाच्॥ १६३ ॥

एकाज् यद् भसंज्ञकं तदिष्ठेमेयस्सु परतः प्रकृत्या भवति। स्रग्विन्नित्येतस्य विन्नन्तस्य स्रजिष्ठः, स्रजीयान्, स्रजयति। स्रुग्वदित्येतस्य मत्वन्तस्य स्रुचिष्ठः, स्रुचीयान्, स्रुचयति। एकाजिति किम् ? वसुमदित्येतस्य वसिष्ठः, वसीयान्॥ प्रकृत्याके राजन्यमनुष्ययुवानः॥ अके प्रत्यये परतो राजन्य मनुष्य युवन्नित्येते प्रकृत्या भवन्ति। राजन्यानां समूहो राजन्यकम्। मनुष्याणां समूहो मानुष्यकम्। 'आपत्यस्य च तद्धितेऽनाति' ( ६.४.१५१ ) इति यलोपः प्रकृतिभावेन न भवति। यूनो भावो यौवनिका। मनोज्ञादित्वाद् ( ५.१.१३३ ) वुञ्। तस्य 'नस्तद्धिते' ( ६.४.१४४ ) इति टिलोपो न भवति॥

---

१ - ' यिट् च ' इति न्यासः।

## इन्नण्यनपत्ये ॥ १६४ ॥

इन्नन्तमनपत्यार्थेऽणि परतः प्रकृत्या भवति। सांकूटिनम्। सांराविणम्। सांमार्जिनम्। 'अभिविधौ भाव इनुण्' ( ३.३.४४ ), 'अणिनुणः' ( ५.४.१५ ) इत्यण्। स्राग्विण इदं स्राग्विणम्। अणीति किम्? दण्डिनां समूहो दाण्डम्। 'अनुदात्तादेरञ्' ( ४.२.४४ ) इत्यञ्प्रत्ययः। अनपत्य इति किम्? मेधाविनोऽपत्यं मैधावः॥

## गाथिविदथिकेशिगणिपणिनश्च ॥ १६५ ॥

गाथिन् विदथिन् केशिन् गणिन् पणिन् इत्येते चाणि प्रकृत्या भवन्ति। गाथिनोऽपत्यं गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः। अपत्यार्थोऽयमारम्भः॥

## संयोगादिश्च ॥ १६६ ॥

संयोगादिश्चेनणि प्रकृत्या भवति। शङ्खिनोऽपत्यं शाङ्खिनः। माद्रिणः। वाज्रिणः॥

## अन् ॥ १६७ ॥

अन्नन्तमणि प्रकृत्या भवत्यपत्ये चानपत्ये च। सामनः। वैमनः। सौत्वनः। जैत्वनः॥

## ये चाभावकर्मणोः ॥ १६८ ॥

यकारादौ च तद्धितेऽभावकर्मणोरर्थयोरन् प्रकृत्या भवति। सामसु साधुः सामन्यः। वेमन्यः[1]। अभावकर्मणोरिति किम्? राज्ञो भावः कर्म वा राज्यम्। राजन्निति पुरोहितादिषु ( ५.१.१२८ ) पठ्यते। ततोऽयं यक् प्रत्ययः॥

## आत्माध्वानौ खे ॥ १६९ ॥

आत्मन् अध्वन् इत्येतौ खे परतः प्रकृत्या भवतः। आत्मने हित आत्मनीनः। अध्वानमलङ्गामी अध्वनीनः। ख इति किम्? प्रत्यात्मम्। प्राध्वम्। प्रत्यात्ममित्यव्ययीभावे 'अनश्च' ( ५.४.१०८ ) इति समासान्तष्टच्प्रत्ययः। प्राध्वमिति 'उपसर्गादध्वनः' ( ५.४.८५ ) इत्यच्प्रत्ययः॥

## न मपूर्वोऽपत्येऽवर्मणः ॥ १७० ॥

---

१ – 'ब्रह्मण्यः' इति बाल०।

मपूर्वोऽन् अवर्मणोऽणि परतोऽपत्येऽर्थे न प्रकृत्या भवति। सुषाम्णोऽपत्यं सौषामः। चान्द्रसामः। मपूर्व इति किम् ? सौत्वनः। अपत्य इति किम् ? चर्मणा परिवृतो रथः चार्मणः। अवर्मण इति किम् ? चक्रवर्मणोऽपत्यं चाक्रवर्मणः ॥ मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम् ॥ हितनाम्नोऽपत्यं हैतनामः, हैतनामनः ॥

## ब्राह्मोऽजातौ ॥ १७१ ॥

योगविभागोऽत्र क्रियते। ब्राह्म इत्येतदपत्याधिकारेऽपि सामर्थ्यादपत्यादन्यत्राणि टिलोपार्थं निपात्यते। ब्राह्मो गर्भः। ब्राह्ममस्त्रम्। ब्राह्मं हविः। ततोऽजातौ। अपत्य इत्येव। अपत्ये जातावणि ब्रह्मणष्टिलोपो न भवति। ब्रह्मणोऽपत्यं ब्राह्मणः। अपत्य इत्येव—ब्राह्मी ओषधिः ॥

## कार्मस्ताच्छील्ये ॥ १७२ ॥

कार्म इति ताच्छील्ये टिलोपो निपात्यते। कर्मशीलः कार्मः। 'शीलम्', 'छत्रादिभ्यो णः' ( ४.४.६१, ६२ ) इति णप्रत्ययः। यद्येवम्, किमर्थमिदम्, 'नस्तद्धिते' ( ६.४. १४४ ) इत्येव टिलोपः सिद्धः ? सत्यमेतत्। ज्ञापकार्थं तु। एतज् ज्ञापयति—'ताच्छीलिके णेऽण्कृतानि भवन्ति' ( परि० ८७ ) इति। तेन चौरी, तापसीति णान्तादपीकारः सिद्धो भवति। ताच्छील्य इति किम् ? कर्मण इदं कार्मणम् ॥

## औक्षमनपत्ये ॥ १७३ ॥

औक्षमित्यनपत्येऽणि टिलोपो निपात्यते। औक्षं पदम्। अनपत्य इति किम् ? उक्ष्णोऽपत्यमौक्ष्णः। 'षपूर्वहन्धृतराज्ञामणि' ( ६.४.१३५ ) इत्यल्लोपः ॥

## दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥

दाण्डिनायन हास्तिनायन आथर्वणिक जैह्माशिनेय वासिनायनि भ्रौणहत्य धैवत्य सारव ऐक्ष्वाक मैत्रेय हिरण्मय इत्येतानि निपात्यन्ते। दण्डिन् हस्तिन् इत्येतौ नडादिषु ( ४.१.९९ ) पठ्येते, तयोरायने परतः प्रकृतिभावो निपात्यते। केषांचित् तु हस्तिन्निति नडादिषु न पठ्यते। तेषामत एव निपातनात् फगपि भवति। दण्डिनोऽपत्यं दाण्डिनायनः। हस्तिनोऽपत्यं हास्तिनायनः। अथर्वन्निति वसन्तादिषु ( ४.२.६३ ) पठ्यते। अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचाराद् अथर्वन्नित्युच्यते। तमधीते यः स आथर्वणिकः। इके

प्रकृतिभावो निपात्यते। जिह्माशिन्निति शुभ्रादिषु ( ४.१.१२३ ) पठ्यते। तस्य एये[1] परतः प्रकृतिभावो निपात्यते। जिह्माशिनोऽपत्यं जैह्माशिनेयः। वासिनोऽपत्यम्, 'उदीचां वृद्धादगोत्रात्' ( ४.१.१५७ ) इति फिञ्। तत्र प्रकृतिभावो निपात्यते। वासिनायनिः। भ्रूणहन् धीवन् इत्येतयोः ष्यञि परतस्तकारादेशो निपात्यते। भ्रूणघ्नो भावो भ्रौणहत्यम्। धीव्नो भावो धैवत्यम्। 'हनस्तोऽचिण्णलोः' ( ७.३.३२ ) इति यत् तत्वं तद् धातुप्रत्यये ( परि० ८८ ) एवेति भ्रौणघ्नो वार्त्रघ्न इत्यत्र न भवति, अतो भ्रौणहत्ये तत्वं निपात्यते। सारव इति सरयू इत्येतस्याणि परतोऽयूशब्दलोपो[2] निपात्यते। सरय्वां भवं सारवमुदकम्। ऐक्ष्वाक इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते। ततोऽयमाद्युदात्तोऽन्तोदात्तश्च निपात्यते। इक्ष्वाकोरपत्यं 'जनपदशब्दात् क्षत्रियादञ्' ( ४.१.१६८ ) इत्यञ्, तत्रोकारलोपो निपात्यते। ऐक्ष्वांकः। इक्ष्वाकुषु जनपदेषु भवः 'कोपधादण्' ( ४.२.१३२ ) इत्यण्। ऐक्ष्वाकः। मैत्रेय इति मित्रयुशब्दो गृष्ट्यादिषु ( ४.१.१३६ ) पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते। मित्रयोरपत्यं मैत्रेयः। अथ किमर्थं मित्रयुशब्दो बिदादिषु ( ४.१.१०४ ) एव न पठ्यते, तत्राञि कृते यादेः ( ७.३.२ ) इति इयादेशेनैव सिद्धम्, एवं च युलोपार्थं निपातनं कर्तव्यं न भवति, यस्कादिषु ( २.४.६३ ) च बहुषु लुगर्थः पाठो न कर्तव्यो भवति, मित्रयव इत्यञः[3] ( २.४.६४ ) इत्येव हि लुकः सिद्धत्वात् ? नैतदस्ति। मित्रयूणां संघ इत्यत्र गोत्रचरणाद् ( ४.३.१२६ ) वुञं बाधित्वा मैत्रेयकः सङ्घ इत्यत्र 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' ( ४.३.१२७ ) इत्यण् प्राप्नोति। हिरणमयमिति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारो हिरण्मयः॥

## ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि ॥ १७५ ॥

ऋत्व्य वास्त्व्य वास्त्व माध्वी हिरण्यय इत्येतानि निपात्यन्ते छन्दसि विषये। ऋतु वास्तु इत्येतयोर्यति यणादेशो निपात्यते। ऋतौ भवम् ऋत्व्यम् ( पै० सं० १९.२५.१४)। वास्तौ भवं वास्त्व्यम्। वस्तुशब्दस्याणि यणादेशो निपात्यते। वस्तुनि भवो वास्त्वंम् ( मै० सं० २.२.४ )। मधुशब्दस्याणि[4] स्त्रियां यणादेशो निपात्यते। माध्वींर्नः सन्त्वोषधीः ( ऋ० १.९०.६ )। हिरण्यशब्दाद् विहितस्य मयटो मशब्दस्य लोपो निपात्यते। हिरण्ययम् ( ऋ० १.२५.१३ )॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य चतुर्थः पादः ॥

---

१ - 'ण्ये' इत्यपपाठो मुद्रितेषु।
२ - 'ऽयूशब्दलोपो' इति बाल०। 'यूशब्दस्य व इत्यादेशो' इति तारा० है०।
३ - 'इत्यञो यञञोश्च' इति है०। ४ - 'अञि' वा स्यात्, स्वरो वा व्यत्ययेन कल्प्येत।

# ॥ सप्तमाध्यायस्य प्रथमः पादः ॥

## युवोरनाकौ ॥ १ ॥

यु वु इत्येतयोरुत्सृष्टविशेषणयोरनुनासिकयणोः प्रत्यययोर्ग्रहणम्, तयोः स्थाने यथासंख्यमन अक इत्येतावादेशौ भवतः। योरनः, वोरकः। नन्द्यादिभ्यो ( ३.१.१३४) ल्युः—नन्दनः। रमणः। सायमादिभ्यष्ट्युट्युलौ तुट् च ( ४.३.२३ )—सायंतनः। चिरंतनः। 'ण्वुल्तृचौ' ( ३.१.१३३ )—कारकः। हारकः। 'वासुदेवार्जुनाभ्यां वुन्' ( ४.३.९८ )—वासुदेवकः। अर्जुनकः। अनुनासिकयणोरिति किम् ? 'ऊर्णाया युस्' ( ५.२.१२३ )—ऊर्णायुः। 'भुजिमृङ्भ्यां युक्त्युकौ' ( प० उ० ३.२१ )—भुज्युर्मृत्युरिति। एवमादीनां हि यणोऽनुनासिकत्वं न प्रतिज्ञायते, 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' ( व्या० प० १२१ )। इह युवोरिति निर्देशाद् द्वन्द्वैकवद्भावपक्षेऽनित्यमागमशासनम् ( व्या० प० ९९ ) इति नुम् न क्रियते। नपुंसकलिङ्गता वा 'लिङ्गमशिष्यं लोकाश्रयत्वाद् लिङ्गस्य' ( महाभाष्य १. ३९० ) इति न भवति। इतरेतरयोगपक्षे तु छान्दसत्वाद् वर्णलोपो द्रष्टव्यः।

युवोश्चेद् द्वित्वनिर्देशो द्वित्वे यण्तु प्रसज्यते ।
अथ चेदेकवद्भावः कथं पुंवद् भवेदयम् ॥
द्वित्वे नैगमिको लोप एकत्वे नुमनित्यता ।
अशिष्यत्वाद्धि लिङ्गस्य पुंस्त्वं वेह समाश्रितम् ॥

## आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ २ ॥

आयन् एय् ईन् ईय् इय् इत्येत आदेशा भवन्ति यथासंख्यं फ ढ ख छ घ इत्येतेषां प्रत्ययादीनाम्। फ इत्येतस्यायनादेशो भवति। 'नडादिभ्यः फक्' ( ४.१.९९ )—नाडायनः। चारायणः। ढस्य एयादेशो भवति। 'स्त्रीभ्यो ढक्' ( ४.१.१२० )—सौपर्णेयः। वैनतेयः। खस्य ईनादेशो भवति। 'कुलात् खः' ( ४.१.१३९ )—आढ्यकुलीनः। श्रोत्रियकुलीनः। छस्येयादेशो भवति। 'वृद्धाच्छः' ( ४.२.११४ )—गार्गीयः। वात्सीयः। घ इत्येतस्येयादेशो भवति। 'क्षत्राद् घः' ( ४.१.१३८ )—क्षत्रियः। प्रत्ययग्रहणं किम् ? फक्कति। ढौकते। खनति। छिनत्ति। घूर्णते। आदिग्रहणं किम् ? ऊरुदघ्नम्। जानुदघ्नम्। एत आयन्नादयः प्रत्ययोपदेशकाल एव भवन्ति। कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं भवति। तथा च 'घच्छौ च' ( ४.४.११७ ) इति घचश्चित्करणमर्थवद् भवति। शङ्खः, षण्ढः इत्येवमादीनां हि 'उणादयो बहुलम्' ( ३.३.१ ) इति बहुलवचनादादेशा न भवन्ति। 'ऋतेरीयङ्' ( ३.१.२९ ) इति वा वचनं ज्ञापकं धातुप्रत्ययानामादेशाभावस्य। 'एजेः खश्' ( ३.२.२८), 'पदरुजविशस्पृशो घञ्' ( ३.३.१६ ) इत्येवमादिषु तु इत्संज्ञया भवितव्यम्। तद्धितेषु हि

खकारघकारयोरादेशवचनमवकाशवदितीत्संज्ञां बाधितुं नोत्सहते। आयन्नीनोर्नकारस्येत्संज्ञायां प्राप्तायां प्रतिविधातव्यम्, नित्कार्यं हि संभवति॥

## झोऽन्तः॥ ३ ॥

प्रत्ययग्रहणमनुवर्तते, आदिग्रहणं निवृत्तम्। प्रत्ययावयवस्य झस्य अन्त इत्ययमादेशो भवति। कुर्वन्ति। सुन्वन्ति। चिन्वन्ति। अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै (वासि० गृ० १३.२४)। 'जॄविशिभ्यां झच्' (प० उ० ३.१२६)—जरन्तः। वेशन्तः। प्रत्ययस्येत्येव—उज्झिता। उज्झितुम्। उज्झितव्यम्। अस्मिन्न्यन्तादेशे कृते प्रत्ययाद्युदात्तत्वं भवति। तथा च झचश्चित्करणमर्थवद् भवति॥

## अदभ्यस्तात्॥ ४ ॥

अभ्यस्तादङ्गादुत्तरस्य झकारस्य अदित्ययमादेशो भवति। ददति। ददतु। दधति। दधतु। जक्षति। जक्षतु। जाग्रति। जाग्रतु। अन्तादेशापवादोऽयं जुसादेशेन तु बाध्यते। अददुः। अजागरुः[१]। अत्राप्यदादेशे कृते प्रत्ययाद्युदात्तत्वं भवति॥

## आत्मनेपदेष्वनतः॥ ५ ॥

आत्मनेपदेषु यो झकारस्तस्यानकारान्तादङ्गादुत्तरस्यादित्ययमादेशो भवति। चिन्वते। चिन्वताम्। अचिन्वत। पुनते। लुनते। लुनताम्। अलुनत। आत्मनेपदेष्विति किम्? चिन्वन्ति। लुनन्ति। अनत इति किम्? च्यवन्ते। प्लवन्ते। नित्यत्वादत्र विकरणे कृते झोऽन्तादेशेन भवितव्यमित्यदादेशो न भवति। अनकारान्तेनाङ्गेन झकारविशेषणं किम्? इह मा भूत्—अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै (वासि० गृ० १३.२४)॥

## शीङो रुट्॥ ६ ॥

शीङोऽङ्गादुत्तरस्य झादेशस्यातो रुडागमो भवति। शेरते। शेरताम्। अशेरत। रुडयं परादिः क्रियते। स यदि झकारस्यैव स्याददादेशो न स्यादित्यत एवायमादेशस्यागमो विधीयते। सानुबन्धग्रहणमयङ्लुगर्थम् (परि० १२०-३)। तेनेह न भवति—व्यतिशेश्यते॥

## वेत्तेर्विभाषा॥ ७ ॥

वेत्तेरङ्गादुत्तरस्य झादेशस्यातो विभाषा रुडागमो भवति। संविदते, संविद्रते। संविदताम्,

---

१ - 'अदधुः' इति बाल०। 'अजक्षुः' इत्यधिकं क्वचित्।

संविद्रताम्। समविदत, समविद्रत। वेत्तेरिति लुग्विकरणस्य ग्रहणं किम्? इह मा भूत्—विन्ते, विन्दाते, विन्दत इति ॥

## बहुलं छन्दसि ॥ ८ ॥

छन्दसि विषये बहुलं रुडागमो भवति। देवां अदुह्र ( मै० सं० ४.२.१३ )। गन्धर्वाप्सरसो अदुह्र ( मै० सं० ४.२.१३ )। दुहेर्लङि झकारस्यादादेशे कृते रुट्। 'लोपस्त आत्मनेपदेषु' ( ७.१.४१ ) इति तकारलोपः। न च भवति—अदुहत। बहुलवचनादन्यत्रापि भवति—अदृश्रमस्य केतवः ( ऋ० १.५०.३ )। 'ऋदृशोऽङि गुणः' ( ७.४.१६) इत्येतदपि बहुलवचनादेवात्र न भवति ॥

## अतो भिस ऐस् ॥ ९ ॥

अकारान्तादङ्गादुत्तरस्य भिस ऐस् इत्ययमादेशो भवति। वृक्षैः। प्लक्षैः। अतिजरसैः। जरामतिक्रान्तैरिति विगृह्य समासे कृते ह्रस्वत्वे च भिस ऐसादेशो भवति। 'एकदेशविकृतमनन्यवद् भवति' ( परि० ३७ ) इति जरशब्दस्य जरसादेशः। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि० ८५ ) इति परिभाषेयमनित्या 'कष्टाय क्रमणे' ( ३.१.१४) इति निर्देशात्। अत इति किम् ? अग्निभिः। वायुभिः। तपरकरणं किम् ? खट्वाभिः। मालाभिः।

एत्वं भिसि परत्वाच् चेदत ऐस् क्व भविष्यति ।
कृतेऽप्येत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥

अत इत्यधिकारो 'जसः शी' ( ७.१.१७ ) इति यावत् ॥

## बहुलं छन्दसि ॥ १० ॥

छन्दसि विषये बहुलमैसादेशो भवति। अत इत्युक्तमनतोऽपि भवति नद्यैरिति। अतो न भवति—देवेभिः सर्वेभिः प्रोक्तमिति ॥

## नेदमदसोरकोः ॥ ११ ॥

इदम् अदस् इत्येतयोरककारयोर्भिस ऐस् न भवति। एभिः। अमीभिः। अकोरिति किम् ? इमकैः। अमुकैः। अकोरित्येतदेव प्रतिषेधवचनं ज्ञापकं 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' ( परि० ८९ ) इति। इदमदसोः कादिति नोक्तम्, विपरीतोऽपि नियमः संभाव्येत—इदमदसोरेव कादिति। ततश्चेह न स्यात्—सर्वकैः, विश्वकैः। इह च स्यादेव—एभिः, अमीभिः। प्रतिषेधकरणं विपरीतनियमनिवृत्त्यर्थम् ॥

## टाङसिङसामिनात्स्याः ॥ १२ ॥

अकारान्तादङ्गादुत्तरेषां टाङसिङसाम् इन आत् स्य इत्येत आदेशा भवन्ति यथासंख्यम्। टा इत्येतस्येनादेशो भवति—वृक्षेण। प्लक्षेण। ङसीत्येतस्य आत्—वृक्षात्। प्लक्षात्। ङसित्येतस्य स्यादेशो भवति—वृक्षस्य। प्लक्षस्य। अत इति किम् ? सख्या। पत्या। अतिजरसिन अतिजरसादिति केचिदिच्छन्ति। यथा तु भाष्ये ( ३.३०९ ) तथा नैतदिष्यत इति लक्ष्यते ॥

## ङेर्यः ॥ १३ ॥

ङेरिति चतुर्थ्येकवचनस्य ग्रहणम्। अकारान्तादङ्गादुत्तरस्य ङे इत्येतस्य य इत्ययमादेशो भवति। वृक्षाय। प्लक्षाय। अत इत्येव[1]—सख्ये। पत्ये। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि० ८५ ) इति परिभाषेयमनित्या, तेन दीर्घो भवति ॥

## सर्वनाम्नः स्मै ॥ १४ ॥

अकारान्तात् सर्वनाम्न उत्तरस्य ङेः स्मै इत्ययमादेशो भवति। सर्वस्मै। विश्वस्मै। यस्मै। तस्मै। कस्मै। अत इत्येव—भवते। अथोऽत्रास्मै इत्यन्वादेशेऽशादेशे ( २.४.३२) एकादेशः प्राप्नोति। तत्रान्तरङ्गत्वादेकादेशात् पूर्वं स्मैभावः क्रियते, पश्चादेकादेश इति ॥

## ङसिङ्योः स्मात्स्मिनौ ॥ १५ ॥

ङसि ङि इत्येतयोरकारान्तात् सर्वनाम्न उत्तरयोः स्मात् स्मिन् इत्येतावादेशौ भवतः। ङसीत्येतस्य स्मात्—सर्वस्मात्। विश्वस्मात्। यस्मात्। तस्मात्। कस्मात्। ङीत्येतस्य स्मिन्—सर्वस्मिन्। विश्वस्मिन्। यस्मिन्। तस्मिन्। अन्यस्मिन्। अत इत्येव—भवतः। भवति। सर्वनाम्न इत्येव—वृक्षात्। वृक्षे ॥

## पूर्वादिभ्यो नवभ्यो वा ॥ १६ ॥

पूर्वादिभ्यो नवभ्यः सर्वनामभ्य उत्तरयोर्ङसिङ्योः स्मात् स्मिन् इत्येतावादेशौ वा भवतः। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। परस्मात्, परात्। परस्मिन्, परे। अवरस्मात्, अवरात्। अवरस्मिन्, अवरे। दक्षिणस्मात्, दक्षिणात्। दक्षिणस्मिन्, दक्षिणे। उत्तरस्मात्, उत्तरात्। उत्तरस्मिन्, उत्तरे। अपरस्मात्, अपरात्। अपरस्मिन्, अपरे। अधरस्मात्, अधरात्। अधरस्मिन्, अधरे। स्वस्मात्, स्वात्। स्वस्मिन्, स्वे। अन्तरस्मात्, अन्तरात्।

---

१ - 'इति किम्' इति है०।

अन्तरस्मिन्, अन्तरे। नवभ्य इति किम् ? त्यस्मात्। त्यस्मिन्॥

## जसः शी॥ १७ ॥

अकारान्तात् सर्वनाम्न उत्तरस्य जसः शीत्ययमादेशो भवति। सर्वे। विश्वे। ये। के। ते। दीर्घोच्चारणमुत्तरार्थम् ( ७.१.१९ )। त्रपुणी। जतुनी॥

## औङ आपः॥ १८ ॥

आबन्तादङ्गादुत्तरस्यौङः शीत्ययमादेशो भवति। खट्वे तिष्ठतः। खट्वे पश्य। बहुराजे। कारीषगन्ध्ये। ङकारः सामान्यग्रहणार्थः, औटोऽपि ग्रहणं यथा स्यात्।

औकारोऽयं शीविधौ ङिद् गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः।
सामान्यार्थस्तस्य चासञ्जनेऽस्मिन् ङित्कार्यं ते श्यां प्रसक्तं स दोषः॥ १॥
ङित्त्वे विद्याद् वर्णनिर्देशमात्रं वर्णे यत् स्यात् तच्च विद्यात् तदादौ।
वर्णश्चायं तेन ङित्त्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात्॥ २॥

## नपुंसकाच्च॥ १९ ॥

नपुंसकादङ्गादुत्तरस्य औङः शी इत्ययमादेशो भवति। कुण्डे तिष्ठतः। कुण्डे पश्य। यस्येतिलोपः ( ६.४.१४८ ) प्राप्तः। 'श्यां प्रतिषेधो वक्तव्यः' ( ६.४.१४८ वा०) इति न भवति। दधिनी। मधुनी। त्रपुणी। जतुनी॥

## जश्शसोः शिः॥ २० ॥

नपुंसकादङ्गादुत्तरयोर्जश्शसोः शि इत्ययमादेशो भवति। कुण्डानि तिष्ठन्ति। कुण्डानि पश्य। दधीनि। मधूनि। त्रपूणि। जतूनि। जसा सहचरितस्य शसो ग्रहणादिह न भवति—कुण्डशो ददाति, वनशः प्रविशन्तीति॥

## अष्टाभ्य औश्॥ २१ ॥

अष्टाभ्य इति कृताकारोऽष्टन् शब्दो गृह्यते, तस्मादुत्तरयोर्जश्शसोरौशित्ययमादेशो भवति। अष्टौ तिष्ठन्ति। अष्टौ पश्य। कृताकारस्य ग्रहणं किम् ? अष्ट तिष्ठन्ति। अष्ट पश्य। एतदेव कृतात्वस्य ग्रहणं ज्ञापकम् 'अष्टन आ विभक्तौ' ( ७.२.८४ ) इत्यात्वविकल्पस्य। 'षड्भ्यो लुक्' ( ७.१.२२ ) इत्यस्यायमपवादः, नाप्राप्ते तस्मिन्निदमारभ्यते। यस्तु 'सुपो धातुप्रातिपदिकयोः' ( २.४.७१ ) इति, तस्मिन् प्राप्ते चाप्राप्ते चेति स न बाध्यते—अष्टपुत्रः, अष्टभार्य इति। तदन्तग्रहणमत्रेष्यते। परमाष्टौ। उत्तमाष्टौ। प्रियाष्टान इत्यत्रात्वस्याभावादौश्त्वं न भवति॥

## षड्भ्यो लुक् ॥ २२ ॥

षट्संज्ञकेभ्य उत्तरयोर्जश्शसोर्लुग् भवति। षट् तिष्ठन्ति। षट् पश्य। पञ्च। सप्त। नव। दश। षट्प्रधानात् तदन्तादपि भवति। परमषट्[1]। उत्तमषट्। यत्र तूपसर्जनं षट् ततो न भवति—प्रियषषः, प्रियपञ्चान इति॥

## स्वमोर्नपुंसकात् ॥ २३ ॥

सु अम् इत्येतयोर्नपुंसकादुत्तरयोर्लुग् भवति। दधि तिष्ठति। दधि पश्य। मधु तिष्ठति। मधु पश्य। त्रपु। जतु। तद् ब्राह्मणकुलमित्यत्र लुका त्यदाद्यत्वं (७.२.१०२) बाध्यते पूर्वविप्रतिषेधेन, नित्यत्वाद् वा। लुको हि निमित्तम् 'अतोऽम्' (७.१.२४) इति लक्षणान्तरेण विहन्यते, न पुनस्त्यदाद्यत्वेनैव। 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति' (परि० ४७)॥

## अतोऽम् ॥ २४ ॥

अकारान्ताद् नपुंसकादुत्तरयोः स्वमोरमित्ययमादेशो भवति। कुण्डं तिष्ठति। कुण्डं पश्य। वनम्[2]। पीठम्। मकारः कस्माद् न क्रियते ? दीर्घत्वं (७.३.१०२) प्राप्नोति॥

## अद्ड् डतरादिभ्यः पञ्चभ्यः ॥ २५ ॥

डतरादिभ्यः परयोः स्वमोरद्ड् इत्ययमादेशो भवति। कतरत् तिष्ठति। कतरत् पश्य। कतमत् तिष्ठति। कतमत् पश्य। इतरत्। अन्यतरत्। अन्यत्। पञ्चभ्य इति किम् ? नेमं तिष्ठति। नेमं पश्य। डित्करणं किम् ? कतरत् तिष्ठतीत्यत्र पूर्वसवर्णदीर्घो मा भूत्। इह तु कतरत् पश्येति स्थानिवद्भावादमिपूर्वत्वेन (६.१.१०७) अपि सिध्यति। एवं तर्हि तकारादेश एव कस्माद् न विधीयते ? हे कतरदिति संबुद्धेर्लोपो मा भूत्।

अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु।
अद्ड्डित्त्वाड् डतरादीनां न लोपो नापि दीर्घता॥

## नेतराच्छन्दसि ॥ २६ ॥

इतरशब्दादुत्तरयोः स्वमोश्छन्दसि विषयेऽद्डादेशो न भवति। मृतमितरमाण्डमवापद्यत (मै० सं० १.६.१२)। वार्त्रघ्नमितरम्। छन्दसीति किम् ? इतरत् काष्ठम्। इतरत् कुड्यम्। 'अतोऽम्' (७.१.२४) इत्यस्मादनन्तरमितराच्छन्दसीति

---

१ – 'परमषट्' इति नास्ति है०। २ – 'वनम्' इति नास्ति है०।

वक्तव्ये[1] नेतराच्छन्दसीति वचनं योगविभागार्थम्। एकतराद्धि सर्वत्र छन्दसि भाषायां प्रतिषेध इष्यते। एकतरं तिष्ठति, एकतरं पश्येति॥

## युष्मदस्मद्भ्यां ङसोऽश्॥ २७ ॥

युष्मदस्मदित्येताभ्यामुत्तरस्य ङसोऽशित्ययमादेशो भवति। तव स्वम्। मम स्वम्। शित्करणं सर्वादेशार्थम्। अन्यथा ह्यादेशव्यपदेशप्रक्लृप्त्यर्थमादेरेव स्यात्, ततश्च 'योऽचि' (७.२.८९) इत्येतद् न स्यात्॥

## ङे प्रथमयोरम्॥ २८ ॥

ङे इत्यविभक्तिकोऽयं निर्देशः। ङ इत्येतस्य प्रथमयोश्च विभक्त्योः प्रथमाद्वितीययो-र्युष्मदस्मद्भ्यामुत्तरयोरमित्ययमादेशो भवति। तुभ्यं दीयते। मह्यं दीयते। प्रथमयोः— त्वम्। अहम्। युवाम्। आवाम्। यूयम्। वयम्। त्वाम्। माम्। युवाम्। आवाम्॥

## शसो न॥ २९ ॥

युष्मदस्मद्भ्यामुत्तरस्य शसो नकारादेशो भवति। युष्मान् ब्राह्मणान्। अस्मान् ब्राह्मणान्। युष्मान् ब्राह्मणीः। अस्मान् ब्राह्मणीः। युष्मान् कुलानि। अस्मान् कुलानि[2]॥

## भ्यसो भ्यम्॥ ३० ॥

युष्मदस्मद्भ्यामुत्तरस्य भ्यसो भ्यमित्ययमादेशो भवति। युष्मभ्यं दीयते। अस्मभ्यं दीयते। भ्यमादेशे कृते शेषे लोपे (७.२.९०) च 'बहुवचने झल्येत्' (७.३.१०३) इत्येत्वं प्राप्नोति। तद् 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (परि० ९२) इति न भवति। केचित् पुनरभ्यमादेशमेत्वनिवृत्त्यर्थं कुर्वन्ति। येषां तु शेषे लोपष्टिलोपस्ते-षामभ्यमादेश एव। उदात्तनिवृत्तिस्वरः (६.१.१६१) चादेरेव भवति॥

## पञ्चम्या अत्॥ ३१ ॥

पञ्चम्या भ्यसो युष्मदस्मद्भ्यामुत्तरस्य अदित्ययमादेशो भवति। युष्मद् गच्छन्ति। अस्मद् गच्छन्ति॥

---

१ - 'वक्तव्यम्' इत्येव मुद्रितेषु पाठः।

२ - 'अलिङ्गे वा युष्मदस्मदी' इति पाठोऽधिको यथापदमञ्जरि।

## एकवचनस्य च ॥ ३२ ॥

पञ्चम्या एकवचनस्य युष्मदस्मद्भ्यामुत्तरस्यादित्ययमादेशो भवति। त्वद् गच्छन्ति। मद् गच्छन्ति ॥

## साम आकम् ॥ ३३ ॥

साम इति षष्ठीबहुवचनमागतसुट्कं गृह्यते। तस्य युष्मदस्मद्भ्यामुत्तरस्याकमित्ययमादेशो भवति। युष्माकम्। अस्माकम्। अथ किमर्थमागतसुट्को गृह्यते, न ह्यादेशविधानकाले सुड् विद्यते ? तस्यैव तु भाविनः सुटो निवृत्त्यर्थम्। आदेशे कृते हि शेषे लोपे ( ७.२.९० ) युष्मदस्मदोरकारान्तत्वात् सुट् प्राप्नोति, स स्थानिन्यन्तर्भूतत्वाद्[1] निवर्तते। दीर्घोच्चारणं सवर्णदीर्घार्थम्। अकमि तु सति ह्रस्वकरणे तद्विधानसामर्थ्यादेव सवर्णदीर्घत्वं न प्राप्नोति। तत्सामर्थ्यमेत्वं प्रति भविष्यतीति अकारकरणमेत्वनिवृत्त्यर्थमिति 'अतो गुणे' ( ६.१.९७ ) पररूपत्वं स्यात् ॥

## आत औ णलः ॥ ३४ ॥

आकारान्तादङ्गादुत्तरस्य णल औकारादेशो भवति। पपौ। तस्थौ। जग्लौ। मम्लौ। अत्रौत्वमेकादेशः स्थानिवद्भावो द्विर्वचनमित्यनेन क्रमेण कार्याणि क्रियन्ते। एकादेशादनवकाशत्वादौत्वम्, द्विर्वचनादपि परत्वादेकादेश इति ॥

## तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ ३५ ॥

तु हि इत्येतयोराशिषि विषये तातङादेशो भवत्यन्यतरस्याम्। जीवताद् भवान्। जीवतात् त्वम्। जीवतु भवान्। जीव त्वम्। ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति सर्वादेशस्तातङ् भवति। ङित्त्वात् चास्य स्थानिवद्भावाद् यत् पित्त्वं प्राप्नोति तद् निवर्तते। ङित् च पिद् न भवति। तेन 'ब्रुव ईट्' ( ७.३.९३ ) इति ब्रूताद् भवानितीड् न भवति। आशिषीति किम् ? ग्रामं गच्छतु भवान्। गच्छ त्वम् ॥

तातङि ङित्त्वं संक्रमकृत् स्यादन्त्यविधिश्चेत् तच्च तथा न।
हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह ॥ १ ॥
तातङो ङित्त्वसामर्थ्याद् नायमन्त्यविधिः स्मृतः ।
न तद्वदनङादीनां तेन तेऽन्त्यविकारजाः ॥ २ ॥

१ – 'स्थान्यन्तर्भूतत्वात्' इति है० तारा०।

## विदेः शतुर्वसुः ॥ ३६ ॥

'विद ज्ञाने' ( अदा० ५७ ) इत्येतस्माद् धातोरुत्तरस्य शतुर्वसुरादेशो भवति। विद्वान्, विद्वांसौ, विद्वांसः। स्थानिवद्भावादुगित्कार्ये सिद्धे वसोरुकारकरणं 'वसोः संप्रसारणम्' ( ६.४.१३१ ) इत्यत्र क्वसोरपि सामान्यग्रहणार्थम्। 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' ( व्या० प० ५२ ) इत्येतदपि न भवति। तथा सत्युकारकरणमनर्थकं स्यात्। अन्यतरस्यांग्रहणं केचिदनुवर्तयन्ति। विदन्, विदन्तौ, विदन्तः॥

## समासेऽनञ्पूर्वे क्त्वो ल्यप्॥ ३७ ॥

समासेऽनञ्पूर्वे क्त्वा इत्येतस्य ल्यबित्ययमादेशो भवति। प्रकृत्य। प्रहृत्य। पार्श्वतःकृत्य। नानाकृत्य। द्विधाकृत्य। समास इति किम् ? कृत्वा। हृत्वा। अनञ्पूर्व इति किम्? अकृत्वा। अहृत्वा। परमकृत्वा। उत्तमकृत्वा। अनञिति हि नञोऽन्यदनञ्[1] नञ्सदृशम् ( परि० ७४ ) अव्ययं परिगृह्यते। तेन नञ् अनव्ययं चानञ् न भवति। स्नात्वाकालक इत्यादिषु मयूरव्यंसकादिषु ( २.१.७२ ) निपातनाद् ल्यबादेशो न भवति। अथ वा समास इति निर्धारणे सप्तमी। तेन क्त्वान्तः समास एव परिगृह्यते। स च 'येन विधिस्तदन्तस्य' ( १.१.७२ ) इत्यनेन तदन्तविधिना, न तु 'कृद्ग्रहणे गतिकारकपूर्वस्यापि०' ( परि० २८ ) इति। तथा चानञ्पूर्व इत्युच्यते। गतिकारकपूर्वस्यैव तु ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति, नञ् न गतिर्न च कारकमिति। प्रधाय, प्रस्थायेत्यादिषु हिप्रभृतीनन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते ( परि० ५४ ) एवेति ज्ञापितम् एतत् ( २.४.३६ )॥

## क्त्वापिच्छन्दसि ॥ ३८ ॥

समासेऽनञ्पूर्वे क्त्वा इत्येतस्य क्त्वा इत्ययमादेशो भवति, अपिशब्दाल्ल्यबपि भवति छन्दसि विषये। कृष्णं वासो यजमानं परिधापयित्वा ( काठ० सं० ११.१० )। प्रत्यञ्चमुर्कं प्रत्यर्पयित्वा ( शौ० सं० १२.२.५५ )। ल्यबपि भवति—उद्धृत्य जुहुयात्[2] ( काठ० सं० ६.६ )। वा छन्दसीति नोक्तं सर्वोपाधिव्यभिचारार्थम्। तेनासमासे ल्यब् भवति। अर्च्य तान् देवान् गतः। छन्दोऽधिकार 'आज्जसेरसुक्' ( ७.१.५० ) इति यावत्॥

---

१ – 'नञा अन्यदनञ्', 'नञाऽन्यदनञ्' इत्यपपाठो मुद्रितेषु।

२ – 'जुहोति' इति सार्वत्रिकः पाठः।

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ३९ ॥

छन्दसि विषये सुपां स्थाने सु लुक् पूर्वसवर्ण आ आत् शे या डा ड्या याच् आल् इत्येत आदेशा भवन्ति। सु—अनृक्षरा ऋजवः सन्तु पन्थाः ( ऋ० १०.८५.२३ )। पन्थान इति प्राप्ते ॥ सुपां सुपो भवन्तीति वक्तव्यम् ॥ धुरि दक्षिणायाः ( ऋ० १.१६४.९ )। दक्षिणायामिति प्राप्ते ॥ तिङां तिङो भवन्तीति वक्तव्यम् ॥ चषालं ये अश्वयूपाय तक्षति ( ऋ० १.१६२.६ )। तक्षन्तीति प्राप्ते। लुक्—आर्द्रे चर्मन् ( तै० सं० ७.५.९.३ )। लोहिते[1] चर्मन् ( काठ० सं० २४.२ )। चर्मणीति प्राप्ते। हविर्धाने यत् सुन्वन्ति तत् सामिधेनीरन्वाह। यस्मिन् सुन्वन्ति तस्मिन् सामिधेनीरिति प्राप्ते। पूर्वसवर्णः—धीती ( ऋ० १.१६४.८ )। मती ( ऋ० १.८२.२ )। सुष्टुती ( ऋ० २.३२.४ )। धीत्या मत्या सुष्टुत्येति प्राप्ते। आ—द्वा यन्तारा ( तै० सं० ४.६.९.३ )। द्वौ यन्तारौ इति प्राप्ते। आत्—न ताद् ब्राह्मणाद् निन्दामि। न तान् ब्राह्मणानिति प्राप्ते। शे—न युष्मे वाजबन्धवः ( ऋ० ८.६८.१९ )। अस्मे इन्द्राबृहस्पती ( ऋ० ४.४९.४ )। यूयं वयमिति प्राप्ते। यूयादेशो वयादेशश्च छान्दसत्वाद् न भवति। या—उरुया ( मै० सं० २.७.८ )। धृष्णुया ( ऋ० १.२३.११ )। उरुणा धृष्णुनेति प्राप्ते। डा—नाभा पृथिव्याम् ( शौ० सं० ७.६२.१ )। नाभौ पृथिव्यामिति प्राप्ते। ड्या—अनुष्ट्या च्यावयतात्[2]। अनुष्टुभेति प्राप्ते। याच्—साधुया ( ऋ० १०.६६.१२ )। साध्विति सोर्लुकि प्राप्ते। आल्—वसन्ता यजेत ( मै० सं० २.१.४ )। वसन्त इति प्राप्ते ॥ इयाडियाजीकाराणामुपसंख्यानम् ॥ इया—उर्विया परि ख्यन् ( ऋ० १०.१०.२ )। दार्विया परिज्मन्। उरुणा, दारुणेति प्राप्ते। डियाच्—सुक्षेत्रिया ( ऋ० १.९७.२ ), सुगात्रिया[3]। सुक्षेत्रिणा सुगात्रिणेति प्राप्ते। ईकारः—दृतिं न शुष्कं सरसी शयानम् ( ऋ० ७.१०३.२ )। सरसि शयानमिति प्राप्ते ॥ आङ्याजयारामुपसंख्यानम् ॥ आङ्—प्र बाहवा ( ऋ० २.३८.२ )। प्रबाहुनेति प्राप्ते। अयाच्—स्वप्नया संचसे जनम् ( शौ० सं० ५.७.८ )। स्वप्नेनेति प्राप्ते। अयार्—सिन्धुमिव नावया ( ऋ० १.९७.८ )। नावेति प्राप्ते ॥

---

१ – ' रोहिते ' इति काठ० सं० ।

२ – ' अनुष्टुयोच्च्यावयतात् ' ( मै० सं० ४.१३.४.२५ ) इति हैं०। नायं शोधः ( अध्रिगुप्रैषपाठः ) मूलेन संवदते। हरदत्तस्तु ' अनुष्ठ्योच्च्यावयतात् ' इत्येवमध्रिगुप्रैषपाठमुद्धृत्य, ' अनुष्ठा ' इत्यस्य तृतीयाया रूपमिदमिति व्याचख्यौ। अनुष्ठ्यानुष्ठायानुक्रमेणेति सायणः ( तै० ब्रा० ३.६.६.३ ), अनुष्ठ्यानुष्ठानक्रिययेति दुर्गः ( निरु० ५.११ ) चात्रानुकूलौ।

३ – ' सुगातुया ' इति हैं०।

## अमो मश् ॥ ४० ॥

अम् इति[1] मिबादेशो गृह्यते। तस्य छन्दसि विषये मशादेशो भवति। वधीं वृत्रम् ( ऋ० १.१६५.८ )। क्रमीं वृक्षस्य शाखाम्। लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' ( ६.४.७५ ) इत्यडागमाभावः। शित्करणं सर्वादेशार्थम्। मकारस्यापि हि मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात् ॥

## लोपस्त आत्मनेपदेषु ॥ ४१ ॥

आत्मनेपदेषु यस्तकारस्तस्य छन्दसि विषये लोपो भवति। देवा अदुह्र ( मै० सं० ४.२.१३ )। गन्धर्वाप्सरसो अदुह्र ( मै० सं० ४.२.१३ )। अदुहतेति प्राप्ते। दुहामश्विभ्यां पयो अघ्न्येयम् ( ऋ० १.१६४.२७ )। दुग्धामिति प्राप्ते। दक्षिणतः पुमान् स्त्रियमुपशये ( काठ० सं० २०.६ )। शेत इति प्राप्ते। अपीत्यधिकाराद् न भवति—तत्र आत्मानमनृतं कुरुते। आत्मनेपदेष्विति किम् ? उत्सं दुहन्ति कुलशं चतुर्बिलम् ( तै० ब्रा० ३.७.४.१६ )॥

## ध्वमो ध्वात् ॥ ४२ ॥

छन्दसि विषये ध्वमो ध्वादित्ययमादेशो भवति। अन्तरेवोष्माणं वारयध्वात् ( काठ० सं० १६.२१ )। वारयध्वमिति प्राप्ते ॥

## यजध्वैनमिति च ॥ ४३ ॥

यजध्वमित्येतस्य एनमित्येतस्मिन् परतो मकारलोपो निपात्यते वकारस्य च यकारः[2] छन्दसि विषये। यजध्वैनं प्रियमेधाः ( ऋ० ८.२.३७ )। यजध्वमेनमिति प्राप्ते ॥

## तस्य तात् ॥ ४४ ॥

तशब्दस्य लोण्मध्यमपुरुषबहुवचनस्य स्थाने तादित्ययमादेशो भवति। गात्रं गात्रमस्यानूनं कृणुतात् ( मै० सं० ४.१३.४ )। कृणुतेति प्राप्ते। ऊवध्यगोहं पार्थिवं खनतात् ( मै० सं० ४.१३.४ )। खनतेति प्राप्ते। अस्ना रक्षः संसृजतात् ( मै० सं० ४.१३.४ )। संसृजतेति प्राप्ते। सूर्यं चक्षुर्गमयतात् ( मै० सं० ४.१३.४ )। गमयतेति प्राप्ते ॥

---

१ – ' अमः प्रति ' इत्यपपाठो है० ।

२ – ' बह्वृचास्तु वकारमेवाधीयत ' इति पदमञ्जरी।

## तप्तनप्तनथनाश्च ॥ ४५ ॥

तस्येति वर्तते। छन्दसि विषये तस्य स्थाने तप् तनप् तन थन इत्येत आदेशा भवन्ति। तप्—शृणोत ग्रावाणः ( तै० सं० १.३.१३.१ )। शृणुतेति प्राप्ते। सुनोता ( ऋ० ७.३२.८ )। सुनुतेति प्राप्ते। तनप्—सं वरत्रा दधातन ( ऋ० १०.१०१.५ )। धत्तेति प्राप्ते। तन—जुजुष्टन ( ऋ० ४.३६.७ )। जुषतेति प्राप्ते। छान्दसत्वात् श्लुः। थन—यदिष्ठन[1]। यदिच्छतेति प्राप्ते। पित्करणमङित्त्वार्थम् ॥

## इदन्तो मसि ॥ ४६ ॥

छन्दसि विषये मसीत्ययं शब्द इकारान्तो भवति। मसः सकारान्तस्य इकारागमो भवति, स च तस्यान्तो भवति। तद्ग्रहणेन गृह्यत इत्यर्थः। पुनस्त्वोद् दीपयामसि ( शौ० सं० १२.२.५ )। उद्दीपयाम इति प्राप्ते। शलभान् भञ्जयामसि ( पै० सं० ५.२०.४)। भञ्जयाम इति प्राप्ते। त्वयि रात्रि वसामसि ( शौ० सं० १९.४७.९ )। वसाम[2] इति प्राप्ते ॥

## क्त्वो यक् ॥ ४७ ॥

क्त्वा इत्येतस्य यगागमो भवति छन्दसि विषये। दत्त्वाय ( ऋ० १०.८५.३३ ) सविता धियः। दत्त्वेति प्राप्ते। 'क्त्वापिच्छन्दसि' ( ७.१.३८ ) इत्यस्यानन्तरमिदं कस्माद् नोच्यते ? समास इति तत्रानुवर्तते ॥

## इष्ट्वीनमिति च ॥ ४८ ॥

इष्ट्वीनमित्ययं शब्दो निपात्यते छन्दसि विषये। यजेः क्त्वाप्रत्ययान्तस्य ईनमादेशोऽन्त्यस्य निपात्यते। इष्ट्वीनं देवान्। इष्ट्वा देवानिति प्राप्ते। पीत्वीनमित्यपीष्यते। चकारस्यानुक्तसमुच्चयार्थत्वात् सिद्धम् ॥

## स्नात्व्यादयश्च ॥ ४९ ॥

स्नात्वी इत्येवमादयः शब्दा निपात्यन्ते छन्दसि विषये। स्नात्वीं मलादिव ( मै० सं० ३.११.१० )। स्नात्वेति प्राप्ते। पीत्वी सोमस्य वावृधे ( ऋ० ३.४०.७ )। पीत्वेति प्राप्ते। प्रकारार्थोऽयमादिशब्दः ॥

---

१ - ' यति ष्ठन ' इति ऋक्पाठः ( ऋ० १०.६३.६ )। द्र०—पदमञ्जरी।
२ - ' वासयामसि, वासयामः ' इति बाल०।

## आज्जसेरसुक् ॥ ५० ॥

अवर्णान्तादङ्गादुत्तरस्य जसेरसुगागमो भवति छन्दसि विषये। ब्राह्मणासः पितरः सोम्यासः ( ऋ० ६.७५.१० )। ब्राह्मणाः सोम्या इति प्राप्ते। ये पूर्वासो य उपरासः ( ऋ० १०.१५.२ ) इत्यत्र परत्वादसुकि पुनः प्रसङ्गविज्ञानात् ( परि० ३९ ) शीभावः प्राप्तः, 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' ( परि० ४० ) इति न भवति ॥

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ५१ ॥

छन्दसीत्यतः प्रभृति निवृत्तम्। अश्व क्षीर वृष लवण इत्येतेषामङ्गानामात्मप्रीतिविषये क्यचि परतोऽसुगागमो भवति। अश्वस्यति वडवा। क्षीरस्यति माणवकः। वृषस्यति गौः। लवणस्यत्युष्ट्रः। आत्मप्रीताविति किम् ? अश्वीयति। क्षीरीयति। वृषीयति। लवणीयति ॥ अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम् ॥ क्षीरलवणयोर्लालसायामिति वक्तव्यम् ॥ तृष्णातिरेको लालसा। अन्यत्रात्मप्रीतावपि न भवति। अपर आह ॥ सर्वप्रातिपदिकेभ्यो लालसायामसुग् वक्तव्यः ॥ दध्यस्यति, मध्वस्यति इत्येवमाद्यर्थम्। अपर आह ॥ सुग् वक्तव्यः ॥ दधिस्यति, मधुस्यति इत्येवमाद्यर्थम् ॥

## आमि सर्वनाम्नः सुट् ॥ ५२ ॥

आदिति वर्तते। अवर्णात् सर्वनाम्न उत्तरस्यामः सुडागमो भवति। सर्वेषाम्। विश्वेषाम्। येषाम्। तेषाम्। सर्वासाम्। यासाम्। तासाम्। आदित्येव—भवताम्। आमीति षष्ठीबहुवचनं गृह्यते, न 'ङेराम् नद्याम्नीभ्यः' ( ७.३.११६ ) इति, तस्य हि परत्वादाड्याट्स्याटो भवन्ति। यश्च किमेत्तिङव्ययघादामुः ( ५.४.११ ), आमश्च लिटि ( ३.१.३५ ), न तौ सर्वनाम्नः स्तः। सानुबन्धकाविति वा तौ न गृह्येते ( परि० ८१ )। आमीति सप्तमीनिर्देश उत्तरार्थः। इह तु सर्वनाम्न इति पञ्चमीनिर्देशात् 'तस्मादित्युत्तरस्य' ( १.१.६७ ) इति षष्ठीप्रक्लृप्तिर्भविष्यति ॥

## त्रेस्त्रयः ॥ ५३ ॥

त्रि इत्येतस्य आमि परे त्रय इत्ययमादेशो भवति। त्रयाणाम्। त्रीणामित्यपि छन्दसीष्यते। त्रीणामपि समुद्राणामिति ॥

## ह्रस्वनद्यापो नुट् ॥ ५४ ॥

ह्रस्वान्ताद् नद्यन्तादाबन्ताच्चोत्तरस्यामो नुडागमो भवति। ह्रस्वान्तात् तावत्—

वृक्षाणाम्। प्लक्षाणाम्। अग्नीनाम्। वायूनाम्। कर्तॄणाम्। नद्यन्तात्—कुमारीणाम्। किशोरीणाम्। गौरीणाम्। शार्ङ्गरवीणाम्। लक्ष्मीणाम्। ब्रह्मबन्धूनाम्। वीरबन्धूनाम्। आबन्तात्—खट्वानाम्। मालानाम्। बहुराजानाम्। कारीषगन्ध्यानाम्॥

## षट्चतुर्भ्यश्च॥ ५५ ॥

षट्संज्ञकेभ्यश्चतुःशब्दाच्चोत्तरस्यामो नुडागमो भवति। षण्णाम्। पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। चतुर्णाम्। रेफान्तायाः संख्यायाः षट्संज्ञा न विहिता, 'षड्भ्यो लुक्' (७.१.२२) इति लुग् मा भूत्। बहुवचननिर्देशादत्र संख्याप्रधानस्य ग्रहणं भवति। परमषण्णाम्। परमपञ्चानाम्। परमसप्तानाम्। परमचतुर्णाम्। उपसर्जनीभूतायास्तु संख्याया न भवति। प्रियषषाम्। प्रियपञ्च्ञाम्[1]। प्रियचतुरामिति॥

## श्रीग्रामण्योश्छन्दसि॥ ५६ ॥

श्री ग्रामणी इत्येतयोश्छन्दसि विषय आमो नुडागमो भवति। श्रीणामुदारो धरुणो रयीणाम् (ऋ० १०.४५.५)। अपि तत्र सूतग्रामणीनाम् (काठ० सं० २८.३)। श्रीशब्दस्य 'वामि' (१.४.५) इति विकल्पेन नदीसंज्ञा, तत्र नित्यार्थं वचनम्। सूतग्रामणीनामिति यदा सूताश्च ते[2] ग्रामण्यश्च सूतग्रामण्यो भवन्ति तदर्थमिदं वचनम्। यदा तु सूतश्च ग्रामणीश्च सूतग्रामणि, सूतग्रामणि च सूतग्रामणि च सूतग्रामणि चेति सूतग्रामणीनामिति, तदा ह्रस्वादित्येव सिद्धम्॥

## गोः पादान्ते॥ ५७ ॥

गो इत्येतस्मादृक्पादान्ते वर्तमानादुत्तरस्यामो नुडागमो भवति। विद्मा हि त्वा गोपतिं शूर गोनाम् (ऋ० १०.४७.१)। पादान्त इति किम्? गवां गोत्रमुदसृजो यदङ्गिरः (ऋ० २.२३.१८)। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परि० ३५) इति पादान्तेऽपि क्वचिद् न भवति। हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् (ऋ० १०.१६६.१)॥

## इदितो नुम् धातोः॥ ५८ ॥

इदितो धातोर्नुमागमो भवति। कुडि—कुण्डिता। कुण्डितुम्। कुण्डितव्यम्। कुण्डा। हुडि—हुण्डिता। हुण्डितुम्। हुण्डितव्यम्। हुण्डा। इदित इति किम्? पचति।

---

१ - 'प्रियपञ्चाम्' इत्यपपाठो हैं०।

२ - 'ते' इति यथापदमञ्जरि नेष्यते, यथान्यासं त्विष्यत एव।

पठति। अयं धातूपदेशावस्थायामेव नुमागमो भवति, कुण्डा हुण्डेति 'गुरोश्च हलः' ( ३.३.१०३ ) इत्यकारप्रत्ययो यथा स्यात्। तथा हि 'धिन्विकृण्व्योर च' ( ३.१.८० ) इति प्रत्ययविधावेव नुमनुषक्तयोर्ग्रहणम्। धातुग्रहणं चेह क्रियते धातूपदेशकाल एव नुमागमो यथा स्यादित्येवमर्थम्। तासिसिचोरिदित्कार्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते। अमंस्तेत्येवमादौ हि 'हनः सिच्' ( १.२.१४ ) इति कित्त्वविधानसामर्थ्याद् नकारलोपो न भवति। मन्तेत्यत्रापि 'असिद्धवदत्राभात्' ( ६.४.२२ ) इति टिलोपस्यासिद्धत्वाद् नलोपो न भवति। इह कस्माद् न भवति—भेत्ता छेत्तेति ? 'इरितां समुदायस्येत्संज्ञा' ( महाभाष्य १.२६३ ) इतीदित्त्वं नास्ति। अवयवशोऽपीत्संज्ञायां सत्यां 'गोः पादान्ते' ( ७.१.५७ ) इतोऽन्तग्रहणमनुवर्तयितव्यम्। तेनान्तेदितो धातवो गृह्यन्ते॥

## शे मुचादीनाम्॥ ५९॥

शे प्रत्यये परतो मुचादीनां नुमागमो भवति। मुच्लृ—मुञ्चति। लुप्लृ—लुम्पति। विद्लृ—विन्दति। लिपि—लिम्पति। सिच्—सिञ्चति। कृती—कृन्तति। खिद—खिन्दति। पिश—पिंशति। श इति किम् ? मोक्ता। मोक्तुम्। मोक्तव्यम्। मुचादीनामिति किम् ? तुदति। नुदति॥ शे तृम्फादीनामुपसंख्यानं कर्तव्यम्॥ के पुनस्तृम्फादयः ? 'तृफ तृम्फ तृप्तौ' ( तुदा० २६ ), 'दृफ दृम्फ उत्क्लेशे' ( तुदा० २८ ), 'गुफ गुम्फ ग्रन्थे' ( तुदा० ३१ ), 'उभ उम्भ पूरणे' ( तुदा० ३२ ), 'शुभ शुम्भ शोभार्थे' ( तुदा० ३३ ) इत्यत्र ये सानुषङ्गास्तृम्फादयः, तेषाम् 'अनिदितां हल उपधायाः क्ङिति' ( ६.४.२४ ) इत्यनुनासिकलोपे कृते नुम् विधीयते, स च विधानसामर्थ्याद् न लुप्यते। तृम्फति। दृम्फति। गुम्फति। उम्भति। शुम्भति। ये तु निरनुषङ्गास्तेषां तृफति, दृफति, गुफति, उभति, शुभतीत्येवं भवति॥

## मस्जिनशोर्झलि॥ ६० ॥

मस्जि नशि इत्येतयोरङ्गयोर्झलादौ प्रत्यये नुमागमो भवति। मङ्क्ता। मङ्क्तुम्। मङ्क्तव्यम्। नंष्टा। नंष्टुम्। नंष्टव्यम्। झलीति किम् ? मज्जनम्। नशनम्[२]। 'मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गादिलोपार्थम्' ( १.१.४७ वा० )। मग्नः। मग्नवान्॥

## रधिजभोरचि॥ ६१ ॥

रधि जभि इत्येतयोरजादौ प्रत्यये नुमागमो भवति। रन्धयति। रन्धकः। साधुरन्धी।

---

१ - जयादित्यस्तु सानुनासिकं मन्यते। द्र० — 'स्यतासी लृलुटोः' ( ३.१.३३ )।
२ - 'नशिता' इति बाल०।

रन्धंरन्धम्। रन्धो वर्तते। जम्भयति। जम्भकः। साधुजम्भी। जम्भंजम्भम्। जम्भो वर्तते। परापि सती वृद्धिर्नुमा बाध्यते, नित्यत्वात्। अचीति किम्? रद्धा। जभ्यम्॥

## नेट्यलिटि रधेः॥ ६२ ॥

इडादावलिटि प्रत्यये परे रधेर्नुमागमो न भवति। रधिता। रधितुम्। रधितव्यम्। इटीति किम्? रन्धनम्। रन्धकः। अलिटीति किम्? ररन्धिव। ररन्धिम। नुमि कृते संयोगान्तत्वाद् 'असंयोगाल्लिट् कित्' (१.२.५) इति कित्त्वं नास्तीति नलोपो न भवति। अथ क्वसौ कथं भवितव्यम्? रेधिवानिति। कथम्? एत्वाभ्यासलोपयोः कृतयोरिडागमः क्रियते, ततो नुमागमः, तस्यौपदेशिककित्त्वाश्रयो लोपः। अथेटि लिटीत्येवं नियमः कस्माद् न क्रियते, लिट्येवेटि नान्यत्रेति? विपरीतमप्यवधारणं संभाव्येत, इट्येव लिटि नान्यत्रेति। तथा हि सति ररन्धेत्यत्र न स्यात्, रधितेत्यत्र च स्यादेव॥

## रभेरशब्लिटोः॥ ६३ ॥

रभेरङ्गस्य शब्लिड्वर्जितेऽजादौ प्रत्यये परतो नुमागमो भवति। आरम्भयति। आरम्भकः। साध्वारम्भी। आरम्भमारम्भम्। आरम्भो वर्तते। अशब्लिटोरिति किम्? आरभते। आरेभे। अचीत्येव—आरब्धा॥

## लभेश्च॥ ६४ ॥

लभेश्चाजादौ प्रत्यये शब्लिड्वर्जिते नुमागमो भवति। लम्भयति। लम्भकः। साधुलम्भी। लम्भंलम्भम्। लम्भो वर्तते। अशब्लिटोरित्येव—लभते। लेभे। अचीत्येव—लब्धा। लभेश्च पृथग्योगकरणमुत्तरार्थम्॥

## आङो यि॥ ६५ ॥

आङ उत्तरस्य लभेर्यकारादिप्रत्ययविषये नुमागमो भवति। आलम्भ्यां गौः। आलम्भ्यां वडवा। प्राक् प्रत्ययोत्पत्तेर्नुमि कृते विहतम्[1] अदुपधत्वमिति 'ऋहलोर्ण्यत्' (३.१.१२४) इति ण्यत्प्रत्ययः, तत्र कृदुत्तरपदप्रकृतिस्वरत्वेन (६.२.१३९) अन्तस्वरितत्वं (६.१.१८५) भवति। यति तु पुनरुत्तरपदाद्युदात्तत्वं (६.१.२१३) स्यात्। आङ इति किम्? लभ्यम्[2]। कथम् अग्निष्टोमं आलंभ्यः (मै० सं० ३.९.५) इति? 'सर्वे

१ – 'विहितम्' इत्यपपाठो है०।

२ – 'अदुपधत्वाद् यत्प्रत्ययान्तमेतत्। यीति किम्? आलब्धा' इत्यधिकं क्वचित्।

विधयश्छन्दसि विकल्प्यन्ते' ( परि० ३५ )। अथ वा आलभ्यं[1] इत्यत्र नुमि कृतेऽनुषङ्ग-लोपः क्रियते ॥

## उपात् प्रशंसायाम् ॥ ६६ ॥

उपादुत्तरस्य लभेः प्रशंसायां गम्यमानायां यकारादिप्रत्ययविषये नुमागमो भवति। उ॒प॒ल॒म्भ्या॑ भवता विद्या। उ॒प॒ल॒म्भ्या॑नि धनानि। ण्यत्प्रत्ययान्तत्वादन्तस्वरितत्वमेव। प्रशंसायामिति किम् ? उपलभ्यमस्माद् वृषलात् किंचित्। पोरदुपधत्वात् ( ३.१.९८ ) यत्प्रत्ययान्तमिदम् ॥

## उपसर्गात् खल्घञोः ॥ ६७ ॥

उपसर्गादुत्तरस्य लभेः खल्घञोः परतो नुमागमो भवति। ईषत्प्रलम्भः। सुप्रलम्भः। दुष्प्रलम्भः। घञि—प्रलम्भः। विप्रलम्भः। सिद्धे सत्यारम्भो नियमार्थः। उपसर्गादेव लभेः खल्घञोः परतो नुमागमो भवति, नान्यत्र। ईषल्लभः। लाभो वर्तते ॥

## न सुदुर्भ्यां केवलाभ्याम् ॥ ६८ ॥

सु दुरित्येताभ्यां केवलाभ्यामन्योपसर्गरहिताभ्यामुपसृष्टस्य लभेः खल्घञोः परतो नुमागमो भवति। सुलभम्। दुर्लभम्। घञि—सुलाभः। दुर्लाभः। केवलाभ्यामिति किम् ? सुप्रलम्भः। दुष्प्रलम्भः। सुदुर्भ्यामिति तृतीयां मत्वा केवलग्रहणं क्रियते। पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्गः। अतिसुलभमित्यत्र कर्मप्रवचनीयत्वादतः केवल एव सुशब्द उपसर्ग इति भवति प्रतिषेधः। यदा त्वतिशब्दो न कर्मप्रवचनीयः, तदा नुम् भवत्येव—अतिसुलम्भ इति। पञ्चमीनिर्देशपक्षेऽप्येवमर्थं केवलग्रहणं कर्तव्यम् ॥

## विभाषा चिण्णमुलोः ॥ ६९ ॥

चिण् णमुल् इत्येतयोर्विभाषा लभेर्नुम् भवति। अलाभि, अलम्भि। लाभंलाभम्, लम्भंलम्भम्। व्यवस्थितविभाषा ( परि० ९९ ) चेयम्, तेनानुपसृष्टस्य विकल्पः, उपसृष्टस्य नित्यं नुम् भवति। प्रालम्भि। प्रलम्भंप्रलम्भम्[2]॥

## उगिदचां सर्वनामस्थानेऽधातोः ॥ ७० ॥

उगितामङ्गानां धातुवर्जितानामञ्चतेश्च सर्वनामस्थाने परतो नुमागमो भवति। भवतु—भवान्, भवन्तौ, भवन्तः। ईयसुन्—श्रेयान्, श्रेयांसौ, श्रेयांसः। शतृ—पचन्,

१ - ' अथवालभ्य ' इत्यस्य स्थाने ' आलभ्यते ' इति पाठो यथान्यासं युक्तः स्यात्। यथापदमञ्जरि तु ' अथ वा आलभ्यः ' इत्येव। २ - द्विर्वचनरहितः पाठो मुद्रितेषु।

पचन्तौ, पचन्तः। अञ्चतेः—प्राङ्, प्राञ्चौ, प्राञ्चः। उगिदचामिति किम् ? दृषद्, दृषदौ, दृषदः। सर्वनामस्थान इति किम् ? भवतः पश्य। श्रेयसः पश्य। अञ्चतिग्रहणं नियमार्थम्, अञ्चतेरेव धातोरन्यस्य मा भूत्। उखास्रत्। पर्णध्वत्। अधातोरिति किम्? अधातुभूतपूर्वस्यापि यथा स्यात्। गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययो गोमान्। अत्र हि धातुत्वादञ्चतिग्रहणाद् न स्यात्॥

## युजेरसमासे ॥ ७१ ॥

युजेरसमासे सर्वनामस्थाने परतो नुमागमो भवति। युङ्, युञ्जौ, युञ्जः। असमास इति किम् ? अश्वयुक्, अश्वयुजौ, अश्वयुजः। युजेरितीकारनिर्देशाद् 'युज समाधौ' (दिवा० ६६) इत्यस्य ग्रहणं न भवति। युजमापन्ना ऋषयः॥

## नपुंसकस्य झलचः ॥ ७२ ॥

नपुंसकस्य झलन्तस्याजन्तस्य च सर्वनामस्थाने परतो नुमागमो भवति। उदश्विन्ति। शकृन्ति। यशांसि। पयांसि। अजन्तस्य—कुण्डानि। वनानि। त्रपूणि। जतूनि। नपुंसकस्येति किम् ? अग्निचिद् ब्राह्मणः। झलच इति किम् ? बहुपुरि। बहुधुरि। विमलदिवि। चत्वारि। अहानि। उगितो झलन्तस्य नपुंसकस्य परत्वादनेनैव नुम् भवति। श्रेयांसि। भूयांसि। कुर्वन्ति। कृषन्ति ब्राह्मणकुलानि ॥ बहूर्जि प्रतिषेधो वक्तव्यः॥ बहूर्जि ब्राह्मणकुलानि। अन्त्यात् पूर्वं नुममेक इच्छन्ति। बहूर्न्जि ब्राह्मण-कुलानि॥

## इकोऽचि विभक्तौ ॥ ७३ ॥

इगन्तस्य नपुंसकस्याङ्गस्याजादौ विभक्तौ नुमागमो भवति। त्रपुणी। जतुनी। तुम्बुरुणी। त्रपुणे। जतुने। तुम्बुरुणे। इक इति किम् ? कुण्डे। पीठे। अचीति किम्? उत्तरार्थम्। यद्येवम्, तत्रैव कर्तव्यम्। इह तु करणस्य एतत् प्रयोजनम्—हे त्रपो इत्यत्र नुम् मा भूदिति, 'न ङिसंबुद्ध्योः' (८.२.८) इति नलोपप्रतिषेधः स्यात्। ननु च 'न लुमताङ्गस्य' (१.१.६३) इति प्रत्ययलक्षणे प्रतिषिद्धे विभक्तिरेव नास्ति ? एतदेवाज्ग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधोऽत्र न भवतीति। तथा च संबुद्धिगुणः क्रियते। विभक्ताविति किम् ? तौम्बुरवं चूर्णम्।

इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ॥ १ ॥
रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड् वाच्य उत्तरार्थं तु इह किंचित् त्रपो इति ॥ २ ॥

## तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ॥ ७४ ॥

तृतीयादिषु विभक्तिष्वजादिषु भाषितपुंस्कमिगन्तं नपुंसकं गालवस्याचार्यस्य मतेन पुंवद् भवति। यथा पुंसि ह्रस्वनुमौ न भवतः, तद्वदत्रापि न भवत इत्यर्थः। ग्रामणीर्ब्राह्मणः, ग्रामणि ब्राह्मणकुलम्। ग्रामण्या ब्राह्मणकुलेन, ग्रामणिना ब्राह्मणकुलेन। ग्रामण्ये ब्राह्मणकुलाय, ग्रामणिने ब्राह्मणकुलाय। ग्रामण्यो ब्राह्मणकुलात्, ग्रामणिनो ब्राह्मण-कुलात्। ग्रामण्यो ब्राह्मणकुलस्य, ग्रामणिनो ब्राह्मणकुलस्य। ग्रामण्योर्ब्राह्मणकुलयोः, ग्रामणिनोर्ब्राह्मणकुलयोः। ग्रामण्यां ब्राह्मणकुलानाम्, 'नुमचिर०' (महाभाष्य ७.१. ९६ वा०) इति पूर्वविप्रतिषेधेन नुट्, ग्रामणीनां ब्राह्मणकुलानाम्। ग्रामण्यां ब्राह्मणकुले, ग्रामणिनि ब्राह्मणकुले। शुचिर्ब्राह्मणः, शुचि ब्राह्मणकुलम्। शुचये ब्राह्मणकुलाय, शुचिने ब्राह्मणकुलाय। शुचेर्ब्राह्मणकुलात्, शुचिनो ब्राह्मणकुलात्। शुचेर्ब्राह्मणकुलस्य, शुचिनो ब्राह्मणकुलस्य। शुच्योर्ब्राह्मणकुलयोः, शुचिनोर्ब्राह्मणकुलयोः। शुचौ ब्राह्मण-कुले, शुचिनि ब्राह्मणकुले। तृतीयादिष्विति किम् ? ग्रामणिनी ब्राह्मणकुले। शुचिनी ब्राह्मणकुले। भाषितपुंस्कमिति किम् ? त्रपुणे। जतुने। इह कस्माद् न भवति— पीलुर्वृक्षः, पीलु फलम्, पीलुने फलायेति ? समानायामाकृतौ यद् भाषितपुंस्कं तुल्ये प्रवृत्तिनिमित्ते तस्य पुंवद्भावः। इह तु वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि शब्दस्य, फलाकृति-र्नपुंसके। तदेतदेवं कथं भवति भाषितपुंस्कमिति ? भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते। तद्योगादभिधेयमपि यद् नपुंसकं तदपि भाषितपुंस्कम्। तस्य प्रतिपादकं यच्छब्दरूपं तदपि भाषितपुंस्कमिति। इक इत्येव—कीलालपा ब्राह्मणः। कीलालपं ब्राह्मणकुलम्। कीलालपेन ब्राह्मणकुलेन। अचीत्येव—ग्रामणिभ्यां ब्राह्मण-कुलाभ्याम्॥

## अस्थिदधिसक्थ्यक्ष्णामनङ् उदात्तः ॥ ७५ ॥

अस्थि दधि सक्थि अक्षि इत्येतेषां नपुंसकानां तृतीयादिष्वजादिषु विभक्तिषु परतोऽ-नङित्ययमादेशो भवति, स चोदात्तो भवति। अस्थ्ना। अस्थ्ने। दध्ना। दध्ने। सक्थ्ना। सक्थ्ने। अक्ष्णा। अक्ष्णे। अस्थ्यादय आद्युदात्ताः, तेषामनङादेशः स्थानिवद्भावाद-नुदात्तः स्यादित्युदात्तवचनम्। तत्र भसंज्ञायामल्लोपे (६.४.१३४) कृत उदात्तनिवृत्ति-स्वरेण (६.१.१६१) विभक्तिरुदात्ता भवति। एतैरस्थ्यादिभिर्नपुंसकैरनपुंसकस्या-प्यङ्गस्य तदन्तग्रहणमिष्यते। प्रियास्थ्ना ब्राह्मणेन। प्रियदध्ना। तृतीयादिष्विति किम् ? अस्थिनी। दधिनी। अचीत्येव—अस्थिभ्याम्। दधिभ्याम्॥

## छन्दस्यपि दृश्यते ॥ ७६ ॥

अस्थिदधिसक्थ्यक्ष्णामनङ् छन्दस्यपि दृश्यते। यत्र विहितस्ततोऽन्यत्रापि दृश्यते। अचीत्युक्तमनजादावपि दृश्यते। इन्द्रो दधीचो अस्थभिः (ऋ० १.८४.१३)। भद्रं पश्येमाक्षभिः (मा० सं० २५.२१)। तृतीयादिष्वित्युक्तमतृतीयादिष्वपि दृश्यते। अस्थान्युत्कृत्य जुहोति। विभक्तावित्युक्तमविभक्तावपि दृश्यते। अक्षण्वता लाङ्गलेन। अस्थन्वन्तं यदनस्था बिभर्ति (ऋ० १.१६४.४)॥

## ई च द्विवचने ॥ ७७ ॥

द्विवचने परतश्छन्दसि विषयेऽस्थ्यादीनामीकारादेशो भवति, स चोदात्तः। अक्षी ते इन्द्र पिङ्गले कपेरिव[1]। अक्षीभ्यां ते नासिकाभ्याम् (ऋ० १०.१६३.१)। अक्षी इत्यत्र नुम् परत्वादीकारेण बाध्यते। तत्र कृते 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' (परि० ४०) इति पुनर्नुम् न क्रियते॥

## नाभ्यस्ताच्छतुः ॥ ७८ ॥

अभ्यस्तादङ्गादुत्तरस्य शतुर्नुम् न भवति। ददत्, ददतौ, ददतः। दधत्, दधतौ, दधतः। जक्षत्, जक्षतौ, जक्षतः। जाग्रत्, जाग्रतौ, जाग्रतः। शतुरनन्तर ईकारो न विहित इति व्यवहितस्यापि नुमः प्रतिषेधो विज्ञायते॥

## वा नपुंसकस्य ॥ ७९ ॥

अभ्यस्तादङ्गादुत्तरो यः शतृप्रत्ययस्तदन्तस्य नपुंसकस्य वा नुमागमो भवति। ददति, ददन्ति कुलानि। दधति, दधन्ति कुलानि। जक्षति, जक्षन्ति कुलानि। जाग्रति, जाग्रन्ति कुलानि॥

## आच्छीनद्योर्नुम् ॥ ८० ॥

अवर्णान्तादङ्गादुत्तरस्य शतुर्वा नुमागमो भवति शीनद्योः परतः। तुदती कुले, तुदन्ती कुले। तुदती ब्राह्मणी, तुदन्ती ब्राह्मणी। याती कुले, यान्ती कुले। याती ब्राह्मणी, यान्ती ब्राह्मणी। करिष्यती कुले, करिष्यन्ती कुले। करिष्यती ब्राह्मणी, करिष्यन्ती ब्राह्मणी। अत्रान्तरङ्गत्वादेकादेशे कृते व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तुम्। 'उभयत आश्रये नान्तादिवत्' (व्या० प० ५१) इत्यन्तादिवद्भावोऽपि नास्ति, भूतपूर्वगत्याश्रयणे (परि० ७६) वा अदती घ्नतीत्येवमादिष्वतिप्रसङ्ग इति ?

---

१ - तु०—शाबरभाष्ये (जै० सू० २.१.३२) उदाहृतम्।

अत्र समाधिं केचिदाहुः—शतुरवयवे शतृशब्दो वर्तते, अवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति। अपरे पुनराहुः—आदित्येतेन शीनद्यावेव विशेष्येते—अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः परतः शत्रन्तस्य नुम् भवतीति। तत्र 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' ( व्या० प० ४६ ) इति तकारेणैव व्यवधानमाश्रयिष्यते। आदिति किम् ? कुर्वती। सुन्वती। शीनद्योरिति किम् ? तुदताम्। नुदताम्॥

## शप्श्यनोर्नित्यम्॥ ८१ ॥

शप् श्यन् इत्येतयोः शतुः शीनद्योः परतो नित्यं नुमागमो भवति। पचन्ती कुले। पचन्ती ब्राह्मणी। दीव्यन्ती कुले। दीव्यन्ती ब्राह्मणी। सीव्यन्ती कुले। सीव्यन्ती ब्राह्मणी। नित्यग्रहणं वेत्यस्याधिकारस्य निवृत्त्यर्थम्। इहारम्भसामर्थ्याद् नित्यमुत्तरत्र विकल्प एवेत्याशङ्क्येत॥

## सावनडुहः॥ ८२ ॥

सौ परतोऽनडुहोऽङ्गस्य नुमागमो भवति। अनड्वान्। हे अनड्वन्। अत्र केचिदादित्यधिकारादाममोः कृतयोर्नुमं कुर्वन्ति। तेन नुमा आममौ न बाध्येते, आमम्भ्यां च नुमिति। अपरे तु सत्यपि सामान्यविशेषत्व आममोर्नुमश्च समावेशमिच्छन्ति, न बाध्यबाधकभावम्, यथा चिचीषत्यादिषु दीर्घत्वद्विर्वचनयोरिति॥

## दृक्स्ववस्स्वतवसां छन्दसि॥ ८३ ॥

दृक् स्ववस् स्वतवस् इत्येतेषां सौ परतो नुमागमो भवति छन्दसि विषये। ईदृङ्। तादृङ्। यादृङ्। सुदृङ् ( ऋ० १.९४.७ )। स्ववान् ( ऋ० १०.९२.९ )। स्वतवाँः पायुरग्ने ( ऋ० ४.२.६ )॥

## दिव औत्॥ ८४ ॥

दिवित्येतस्य सौ परत औदित्ययमादेशो भवति। द्यौः। दिविति प्रातिपदिकमस्ति निरनुबन्धकम्। धातुस्तु सानुबन्धकः, स इह न गृह्यते ( परि० ८१ )। अक्षद्यूः॥

## पथिमथ्यृभुक्षामात्॥ ८५ ॥

पथिन् मथिन् ऋभुक्षिन् इत्येतेषामङ्गानां सौ परत आकार आदेशो भवति। पन्थाः। मन्थाः। ऋभुक्षाः। स्थानिन्यनुनासिकेऽपि आकारोऽनुनासिको न भवति। 'भाव्यमानेन सवर्णानां ग्रहणं न भवति[1]' ( परि० १९ ) इति शुद्धो ह्ययमुच्चार्यते॥

---

१ – 'भाव्यमानोऽणु सवर्णान् न गृह्णाति' इति पाठान्तरम्।

## इतोऽत् सर्वनामस्थाने ॥ ८६ ॥

पथ्यादीनामिकारस्य स्थान अकारादेशो भवति सर्वनामस्थाने परतः। पन्थाः, पन्थानौ, पन्थानः। पन्थानम्, पन्थानौ। मन्थाः, मन्थानौ, मन्थानः। मन्थानम्, मन्थानौ। ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्षाणः। ऋभुक्षाणम् , ऋभुक्षाणौ। आदिति वर्तमाने पुनरद्वचनं षपूर्वार्थम्। ऋभुक्षणमित्यत्र 'वा षपूर्वस्य निगमे' ( ६.४.९ ) इति दीर्घविकल्पः ॥

## थो न्थः ॥ ८७ ॥

पथिमथोस्थकारस्य स्थाने न्थ इत्ययमादेशो भवति सर्वनामस्थाने परतः। पन्थाः, पन्थानौ, पन्थानः। मन्थाः, मन्थानौ, मन्थानः ॥

## भस्य टेर्लोपः ॥ ८८ ॥

पथ्यादीनां भसंज्ञकानां टेर्लोपो भवति। पथः। पथा। पथे। मथः। मथा। मथे। ऋभुक्षः। ऋभुक्षा। ऋभुक्षे। सर्वनामस्थान इत्यनुवर्तमानमपि विरोधादिह न संबध्यते ॥

## पुंसोऽसुङ् ॥ ८९ ॥

पुंस् इत्येतस्य सर्वनामस्थाने परतोऽसुङित्ययमादेशो भवति। पुमान्, पुमांसौ, पुमांसः। इह परमपुमानिति प्रागेव विभक्त्युत्पत्तेः समासान्तोदात्तत्वम्, उत्पन्नायां विभक्ता-वसुङ्[१] इत्यनिष्टः स्वरः प्राप्नोति। तदर्थमसुङ्युपदेशिवद्वचनं कर्तव्यम्। तेन परमपुमा-नित्यन्तोदात्तो भवति। पुमानित्ययं पुनराद्युदात्त एव ॥

## गोतो णित् ॥ ९० ॥

गोशब्दात् परं सर्वनामस्थानं णिद् भवति। णित्कार्यं तत्र भवतीत्यर्थः[२]। गौः, गावौ, गावः। तपरकरणं किम् ? चित्रगुः। शबलगुः। कथं हे चित्रगो, हे चित्रगव[३] इति? 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' ( परि० ९२ ) इति संबुद्धिजसोर्गुणे कृते णित्त्वं न भवति। अथवा गोत इति संबन्धलक्षणा षष्ठी। गोतः संबन्धि यत् सर्वनामस्थान-मिति। यत् च तदर्थस्यैकत्वादिषु सर्वनामस्थानं तद् गोः सर्वनामस्थानमित्युच्यते। चित्रगु-शब्दात् तु यत् सर्वनामस्थानं तदन्यपदार्थस्यैकत्वादीनाह। तपरकरणं तु निर्देशार्थमेव। केचिद् ओतो णित् इति पठन्ति, द्योशब्दादपि यत् सर्वनामस्थानं विद्यते तदर्थम्। द्यौः,

---

१ – 'असुत्र्' इति मुद्रितेष्वपपाठः। २ – 'णित्कार्याणि तत्र भवन्तीत्यर्थः' इति पद०।
३ – 'शबलगवः' इति पाठान्तरम्।

द्यावौ, द्यावः। गोत इत्येतदेव तपरकरणनिर्देशादोकारान्तोपलक्षणं द्रष्टव्यम्। वर्णनिर्देशेषु हि तपरकरणं प्रसिद्धम्॥

## णलुत्तमो वा॥ ९१ ॥

उत्तमो णल् वा णिद् भवति। णित्कार्यं तत्र वा भवतीत्यर्थः। अहं चकर, अहं चकार। अहं पपच, अहं पपाच॥

## सख्युरसम्बुद्धौ॥ ९२ ॥

असंबुद्धौ यः सखिशब्दः तस्मात् परं सर्वनामस्थानं णिद् भवति। सखायौ, सखायः। असंबुद्धाविति किम्? हे सखे॥

## अनङ् सौ॥ ९३ ॥

सखिशब्दस्य सौ परतोऽनङित्ययमादेशो भवति, स चेत् सुशब्दः संबुद्धिर्न भवति। सखा। असंबुद्धाविति किम्? हे सखे॥

## ऋदुशनस्पुरुदंसोऽनेहसां च॥ ९४ ॥

ऋकारान्तानामङ्गानामुशनस् पुरुदंसस् अनेहस् इत्येतेषां चासंबुद्धौ सौ परतोऽनङादेशो भवति। कर्ता। हर्ता। माता। पिता। भ्राता। उशना। पुरुदंसा। अनेहा। असंबुद्धावित्येव—हे कर्तः। हे मातः। हे पितः। हे पुरुदंसः। हे अनेहः। हे उशनः। उशनसः संबुद्धावपि पक्षेऽनङ् इष्यते। हे उशनन्। 'न ङिसंबुद्ध्योः' (८.२.८) इति नलोपप्रतिषेधोऽपि पक्ष इष्यते। हे उशन। तथा चोक्तम् —

संबोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्।
माध्यंदिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः॥

इति। तपरकरणमसन्देहार्थम्॥

## तृज्वत् क्रोष्टुः॥ ९५ ॥

क्रोष्टुशब्दस्तुन्प्रत्ययान्तः संज्ञाशब्दः सर्वनामस्थानेऽसंबुद्धौ परतः तृज्वद् भवति। तृजन्तस्य यद् रूपं तदस्य भवतीत्यर्थः। रूपातिदेशोऽयम्। प्रत्यासत्तेश्च क्रुशेरेव तृजन्तस्य यद् रूपं तदतिदिश्यते। तत् च क्रोष्टृ इत्येतदन्तोदात्तम्। क्रोष्टा, क्रोष्टारौ, क्रोष्टारः। क्रोष्टारम्, क्रोष्टारौ। सर्वनामस्थान इत्येव—क्रोष्टून्। असंबुद्धावित्येव—हे क्रोष्टो॥

## स्त्रियां च ॥ ९६ ॥

असर्वनामस्थानार्थमारम्भः। स्त्रियां च क्रोष्टुशब्दस्य तृज्वद् भवति। क्रोष्ट्री। क्रोष्ट्रीभ्याम्। क्रोष्ट्रीभिः। क्रोष्टुशब्दं केचिद् गौरादिषु पठन्ति। ते ङीषि प्रत्यये तृज्वद्भावं कुर्वन्ति। तेषां पञ्चभिः क्रोष्ट्रीभिः क्रीतैः पञ्चक्रोष्टृभी रथैरिति स्त्रीशब्दस्य लुकि कृते न सिध्यति। तत्र प्रतिविधेयम्। ये तु गौरादिषु न पठन्ति, तेषां स्त्रियामित्यर्थनिर्देशः, स्त्रियां वर्तमानः क्रोष्टुशब्दः तृज्वद् भवति। कृतेऽतिदेश 'ऋन्नेभ्यो ङीप्' ( ४.१.५ ) इति ङीप् प्रत्ययः। तत्र 'उदात्तयणो हल्पूर्वात्' ( ६.१.१७४ ) इत्यन्तोदात्त एव क्रोष्ट्रीशब्दो भवति॥

## विभाषा तृतीयादिष्वचि ॥ ९७ ॥

तृतीयादिषु विभक्तिष्वजादिषु क्रोष्टुर्विभाषा तृज्वद् भवति। क्रोष्ट्रा, क्रोष्टुना। क्रोष्ट्रे, क्रोष्टवे। क्रोष्टुः, क्रोष्टोः। क्रोष्टरि, क्रोष्टौ। क्रोष्ट्रोः, क्रोष्ट्वोः। तृतीयादिष्विति किम् ? क्रोष्टून्। अचीति किम् ? क्रोष्टुभ्याम्। क्रोष्टुभिः ॥ तृज्वद्भावात् पूर्वविप्रतिषेधेन नुम्नुटौ भवतः॥ प्रियक्रोष्टुनेऽरण्याय। हृतक्रोष्टुने वृषलकुलाय। नुट्— क्रोष्टूनाम्॥

## चतुरनडुहोरामुदात्तः ॥ ९८ ॥

चतुर् अनडुह् इत्येतयोः सर्वनामस्थाने परत आमागमो भवति, स चोदात्तः। चत्वारः। अनड्वान्, अनड्वाहौ, अनड्वाहः। अनड्वाहम्। तदन्तविधिरत्रेष्यते। प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः। प्रियानड्वान्, प्रियानड्वाहौ, प्रियानड्वाहः ॥ अनडुहः स्त्रियां वेति वक्तव्यम्॥ अनडुही, अनड्वाही। गौरादिपाठात् सिद्धम्॥

## अम् संबुद्धौ ॥ ९९ ॥

संबुद्धौ परतश्चतुरनडुहोरमागमो भवति। पूर्वस्यायमपवादः। हे प्रियचत्वः। हे प्रियानड्वन्॥

## ऋत इद्धातोः ॥ १०० ॥

ॠकारान्तस्य धातोरङ्गस्य इकारादेशो भवति। किरति। गिरति। आस्तीर्णम्। विशीर्णम्। धातोरिति किम् ? पितॄणाम्। मातॄणाम्। लाक्षणिकस्याप्यत्र ग्रहणमिष्यते। चिकीर्षतीत्यत्रापि यथा स्यादिति धातुग्रहणं क्रियते॥

## उपधायाश्च ॥ १०१ ॥

उपधायाश्च ऋकारस्य इकारादेशो भवति। कीर्तयति, कीर्तयतः, कीर्तयन्ति ॥

## उदोष्ठ्यपूर्वस्य ॥ १०२ ॥

ओष्ठ्यः पूर्वो यस्माद् ऋकारादसावोष्ठ्यपूर्वः, तदन्तस्य धातोरङ्गस्य उकारादेशो भवति। पूर्ताः पिण्डाः। पुपूर्षति[१]। मुमूर्षति[२]। दन्त्योष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वो भवतीत्यत्रापि भवति—वुवूर्षति[३] ऋत्विजम्, प्रावुवूर्षति कम्बलम्। ओष्ठ्यो ह्यत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते, तेन 'ॠ गतौ' (क्र्या० २८) इत्यस्य संपूर्वस्य समीर्णमिति भवति ॥ इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन ॥ आस्तरणम्। आस्तारकः। निपरणम्। निपारकः। निगरणम्। निगारकः ॥

## बहुलं छन्दसि ॥ १०३ ॥

छन्दसि विषय ऋकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशो भवति। ओष्ठ्यपूर्वस्ये-त्युक्तम्, अनोष्ठ्यपूर्वस्यापि भवति। मित्रावरुणा ततुरिम्[४] (ऋ० ४.३९.२)। दूरे ह्यध्वा जगुरिः (ऋ० १०.१०८.१)। ओष्ठ्यपूर्वस्यापि न भवति—पप्रितमम्। वव्रितमम्। क्वचिद् भवति—पपुरिः (ऋ० १.४६.४) ॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तौ सप्तमाध्यायस्य प्रथमः पादः ॥



---

१ – 'वुवूर्षति' इति न्यासे। २ – 'सुस्वूर्षति' इत्यधिकं यथान्यासम्। तच्चिन्त्यम्, दन्त्योष्ठ्यपूर्वस्य पृथग् वक्ष्यमाणत्वात् (द्र० — पद०)। ३ – 'प्रावुवूर्षते' इति यथान्यासम्।
४ – 'मित्रावरुणौ ततुरिः' इति मुद्रितेषु।

# ॥ सप्तमाध्यायस्य द्वितीयः पादः ॥

## सिचि वृद्धिः परस्मैपदेषु ॥ १ ॥

परस्मैपदपरे सिचि परत इगन्तस्याङ्गस्य वृद्धिर्भवति। अचैषीत्। अनैषीत्। अलावीत्। अपावीत्। अकार्षीत्। अहार्षीत्। अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद् बाधते। न्यनुवीद् न्यधुवीद् इत्यत्र कुटादित्वाद् ङित्त्वे सति प्रतिषिद्धायां वृद्धावुवङादेशः क्रियते। परस्मैपदेष्विति किम् ? अच्योष्ट। अप्लोष्ट॥

## अतो ल्रान्तस्य ॥ २ ॥

रेफलकारौ[१] यावतोऽन्तौ समीपौ तदन्तस्याङ्गस्य अत एव स्थाने वृद्धिर्भवति। क्षर—अक्षारीत्। त्सर—अत्सारीत्। ज्वल—अज्वालीत्। ह्मल—अह्मालीत्। 'अतो हलादेर्लघोः' (७.२.७) इति विकल्पस्यायमपवादः। अत इति किम् ? न्यखोरीत्। न्यमीलीत्। ल्रान्तस्येति किम् ? मा भवानटीत्। मा भवानशीत्। अन्तग्रहणं किम् ? अवभ्रीत्। अश्वल्लीत्। अत्र यौ रेफलकारावङ्गस्यान्तौ न तावतः समीपौ॥

## वदव्रजहलन्तस्याचः ॥ ३ ॥

वदव्रजोर्हलन्तानां चाङ्गानामचः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः। अवादीत्। अव्राजीत्। विकल्पबाधनार्थं वदिव्रजिग्रहणम्। हलन्तानाम्—अपाक्षीत्। अभैत्सीत्। अच्छैत्सीत्। अरौत्सीत्। अत्र योगविभागे सति हलन्तग्रहणमन्तरेणापि सिध्यति। कथम् ? वदिव्रज्योरित्यत्र प्रथमयोगेऽत इति स्थानी अनुवर्तते। ततो यदच इति सूत्रं तत्राङ्गेनाज् विशेष्यते। अङ्गस्याचः सिचि परतो वृद्धिर्भवति। तदेतद् हल्ग्रहणं हल्समुदाय-परिग्रहार्थम्। इहापि स्यात्—अराङ्क्षीत्। असाङ्क्षीत्। अन्यथा हि 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' (व्या० प० ४६) इत्येकेन वर्णेन व्यवधाने स्यात्, अनेकेन हला न स्यात्। उदवोढाम्, उदवोढम् इत्यत्र वहेः सिचि ढत्वसलोपादीनां 'पूर्वत्रासिद्धम्' (८.२.१) इत्यसिद्धत्वात् पूर्वं हलन्तलक्षणा वृद्धिः क्रियते, पश्चाद् ढलोपनिमित्तमोत्वम्। तत्र कृते पुनर्वृद्धिर्न भवति, कृतत्वात्। यत्र त्वकृता वृद्धिः, ओकारस्यैव तत्र भवति, सोढामित्रस्यापत्यं सौढामित्रिरिति॥

## नेटि ॥ ४ ॥

इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न भवति। अदेवीत्। असेवीत्। अकोषीत्।

१ - वृत्तिमिमां महाभाष्यं चाभिसमीक्ष्य 'रलान्तस्य' इति सूत्रपाठं कल्पयन्ति केचित्।

अमोषीत्। हलन्तस्येत्येव—अलावीत्। ननु चैतदप्यन्तरङ्गत्वाद् गुणावादेशयोः कृतयोर्हलन्तं भवति। नैतदेवम्। अन्तरङ्गमपि गुणं वचनारम्भसामर्थ्यात् सिचि वृद्धिर्बाधत इत्युक्तम् ( ७.२.१ )॥

## ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्॥ ५ ॥

हकारान्तानां मकारान्तानां यकारान्तानामङ्गानां क्षण श्वस जागृ णि श्वि इत्येतेषामेदितां च इडादौ सिचि परस्मैपदे परतो वृद्धिर्न भवति। ग्रह—अग्रहीत्। स्यम—अस्यमीत्। टुवम—अवमीत्। व्यय—अव्ययीत्। क्षण—अक्षणीत्। श्वस—अश्वसीत्। जागृ—अजागरीत्। णि—औनयीत्। ऐलयीत्। श्वि—अश्वयीत्। एदिताम्—रगे—अरगीत्। कखे—अकखीत्। ह्म्यन्तक्षणश्वसामेदितां च 'अतो हलादेर्लघोः' ( ७.२.७ ) इति विकल्पे प्राप्ते प्रतिषेधः। जागृणिश्वीनां तु सिचि वृद्धिः ( ७.२.१ ) प्राप्ता, सा च 'नेटि' ( ७.२.४ ) इति न प्रतिषिध्यते। न चान्तरङ्गत्वादत्र पूर्वं गुणो भवति, सिचि वृद्धेरनवकाशत्वात्। यदि पूर्वं गुणः स्यादिह णिश्विग्रहणमनर्थकं स्यात्, गुणायादेशयोः कृतयोर्यकारान्तत्वादेव प्रतिषेधस्य सिद्धत्वात्। तस्मादिदमेव णिश्विग्रहणं[1] ज्ञापकं न सिच्यन्तरङ्गमस्तीति। अथ जागृग्रहणं किमर्थम्, 'जाग्रोऽविचिण्णल्ङित्सु' ( ७.३.८५ ) इति जागर्तेर्गुणो वृद्धेरपवादो विधीयते, स यथा 'अचो ञ्णिति' ( ७.२.११५ ) इति वृद्धिं बाधते तथा सिचि वृद्धिमपि बाधिष्यते ? नैतदस्ति। कृते गुणे 'अतो ल्रान्तस्य' ( ७.२.२ ) इति या वृद्धिः प्राप्नोति, सा प्रतिषिध्यते। अथ गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्बाध्यते, यथा जागरयतीत्यत्र 'अत उपधायाः' ( ७.२.११६ ) इत्यपि वृद्धिर्न भवति, तथा च[2] चिण्णलोः प्रतिषेधोऽर्थवान् भवतीति शक्यमिह जागृग्रहणमकर्तुम्। तत् तु क्रियते विस्पष्टार्थम्॥

## ऊर्णोतेर्विभाषा॥ ६ ॥

ऊर्णोतेरिडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति। प्रौर्णवीत्, प्रौर्णावीत्। 'विभाषोर्णोः' ( १.२.३ ) इत्यङित्त्वपक्षे वृद्धिविकल्पोऽयम्। ङित्त्वपक्षे तु गुणवृद्ध्योरभाव उवङ् भवति। प्रौर्णुवीत्॥

## अतो हलादेर्लघोः॥ ७ ॥

हलादेरङ्गस्य लघोरकारस्येडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति। अकणीत्, अकाणीत्। अरणीत् , अराणीत्। अत इति किम् ? अदेवीत्। असेवीत्।

---

१ - ' श्विग्रहणम् ' इति है०। २ - ' च ' इति नास्ति है०।

न्यकुटीत्, न्यपुटीत् इत्यत्रात इत्यस्मिन्नसति स्थानिनिर्देशार्थमच इत्येतदनुवर्तयितव्यम्। तत्राँज्लक्षणा वृद्धिरिग्लक्षणा न भवतीति 'क्ङिति च' ( १.१.५ ) इति प्रतिषेधो न स्यात्। हलादेरिति किम् ? मा भवानशीत्। मा भवानटीत्। लघोरिति किम् ? अतक्षीत्। अरक्षीत्। अथेह कस्माद् न भवति अचकासीदिति ? 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' ( व्या० प० ४६ ) इति हला व्यवधानमाश्रितम्, न पुनरचापि व्यवधानमिति वृद्धिर्न भवति। अथ पुनरेकेन वर्णेन व्यवधानमाश्रीयते न पुनरनेकेनेति कल्पने शक्यमकर्तुं लघोरिति, अतक्षीदित्यत्रानेकेन व्यवधानमिति न भविष्यति। तत् क्रियते विस्पष्टार्थम्। इटीत्येव—अपाक्षीत्॥

## नेड् वशि कृति॥ ८ ॥

वशादौ कृति प्रत्यये परत इडागमो न भवति। वरमनादौ प्रयोजनम्। ईशिता। ईशितुम्। ईश्वरः। दीपिता। दीपितुम्। दीप्रः। भसिता। भसितुम्। भस्म। याचिता। याचितुम्। याच्ञा। वरमनादौ इत्युदाहरणप्रदर्शनार्थम् , न परिगणनम्। तेन 'ञमन्ताड् डः' ( प० उ० १.११४ ) इत्येवमादावपि हि प्रतिषेधो भवति। अथ तत्र 'उणादयो बहुलम्' ( ३.३.१ ) इति समाधीयते। संभवोदाहरणप्रदर्शनमेतत्। कृतीति किम् ? रुदिवः। रुदिमः[1]॥

## तितुत्रतथसिसुसरकसेषु च॥ ९ ॥

ति तु त्र त थ सि सु सर क स इत्येतेषु कृत्सु इडागमो न भवति। तीति क्तिन्क्तिचोः सामान्यग्रहणम्। क्तिच्—तनिता। तनितुम्। तन्तिः। क्तिन्—दीपिता। दीपितुम्। दीप्तिः। तु—'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' (प० उ० १.६९)—सचिता। सचितुम्। सक्तुः। त्र—'दाम्नीशसयुयुज०' ( ३.२.१८२ ) इति ष्ट्रन्। पतिता। पतितुम्। पत्त्रं वाहनम्। उणादिष्वपि 'सर्वधातुभ्यः ष्ट्रन्' ( प० उ० ४. १६०)—तनिता। तनितुम्। तन्त्रम्। त—'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' ( प० उ० ३.८६ )—हसिता। हसितुम्। हस्तः। लविता। लवितुम्। लोतः। पविता। पवितुम्। पोतः। धूर्विता। धूर्वितुम्। धूर्तः। औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते, न पुनः क्तस्य। हसितमित्येव हि तत्र भवति। थ—'हनिकुषिनीरमिकाशिभ्यः क्थन्' ( प० उ० २.२ )—कोषितां। कोषितुम्। कुष्ठम्। काशिता। काशितुम्। काष्ठम्। सि—'प्लुषिशुषिकुषिभ्यः क्सिः' ( प० उ० ३.१५५ )—कोषिता। कोषितुम्। कुक्षिः।

१ - ' रुरुदिव, रुरुदिम ' इति यथान्यासम्।

सु—'क्सुश्च इषेः'[1] ( द० उ० १.१५४ )—एषिता। एषितुम्। इक्षुः। सर—'अशेः सरन्'[2] ( प० उ० ३.७० )—अशिता। अशितुम्। अक्षरम्। क—'इण्भीकापाशल्यतिमर्चिभ्यः कन्' ( प० उ० ३.४३ )—शलिता। शलितुम्। शल्कः। स—'वृतॄवदिहनिकमिकषियुमुचिभ्यः सः' ( द० उ० ९.२१ )—वदिता। वदितुम्। वत्सः ॥ तितुत्रतथेष्वग्रहादीनामिति वक्तव्यम् ॥ ग्रहादयो ग्रहप्रकाराः, येषामिट् क्तिनि दृश्यते। निगृहीतिः। उपस्निहितिः। निकुचितिः। निपठितिः। कृतीत्येव—रोदिति। स्वपिति ॥

## एकाच उपदेशेऽनुदात्तात् ॥ १० ॥

उपदेशे य एकाच् धातुरनुदात्तश्च तस्मादिडागमो न भवति। प्रकृत्याश्रयोऽयं प्रतिषेधः। के पुनरुपदेशेऽनुदात्ताः ? ये तथा गणे पठ्यन्ते। त एव विस्पष्टार्थमनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते।

अनिट् स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः।
अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥ १ ॥
गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः।
इति स्वरान्ता निपुणं समुच्चितास्ततो हलन्तानपि सन्निबोधत ॥ २ ॥

द्वय एव धातवः, स्वरान्ता व्यञ्जनान्ताश्च। तत्र सर्वे स्वरान्ता एकाचोऽनुदात्ता अदन्तादीन् वर्जयित्वा। दाता। नेता। चेता। स्तोता। कर्ता। हर्ता। अदन्तादय उदात्ताः। आवधिष्ट। ॠदन्तम्—तरिता, तरीता। ऋतां च वृङ्वृञौ—निर्वरिता, निर्वरीता। प्रवरिता, प्रवरीता। श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि—श्वयिता। उड्डयिता। शयिता। श्रयिता। गणस्थमूदन्तम्—लविता। पविता। उतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः—रविता। प्रस्नविता। क्षविता। प्रोर्णविता। 'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्०' ( ३.१.३६ का० ) इत्यतिदेशादेकाच्त्वमूर्णोतेरस्तीति उदात्त उपदिश्यते। यविता। नविता। क्ष्णविता। इति स्वरान्ता निपुणं समुच्चितास्ततो हलन्तानपि सन्निबोधत।

शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी।

शक्ता[3]। घसिः प्रकृत्यन्तरमस्ति। घस्ता। वसिः प्रसारणी। वस्ता। प्रसारणीति किम् ? वसिता वस्त्राणाम्। 'वस निवासे' ( भ्वा० ७३१ ) इत्यस्य यजादित्वात्

१ – 'सुक् च इषेः' इत्यपपाठो मुद्रितेषु। 'इषेः क्सुः' इति पञ्चपाद्युणादिपाठः ( ३.१५७ )।
२ – 'अशेः क्सरन्' इत्यपपाठो मुद्रितेषु। 'सरन्' इत्येव महाभाष्याभिमतः ( महाभाष्य १.३६ ) प्रत्ययः।
३ – 'शक्ता' इति नास्ति मुद्रितेषु ।

( ६.१.१५) संप्रसारणं विहितम् , न तु 'वस आच्छादने' ( अदा० १३ ) इत्यस्य।

रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥ ३ ॥

आरब्धा। यब्धा। लब्धा।

यमिर्ज्ञमन्तेष्वनिडेक[1] इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥

यन्ता। रन्ता। मन्ता। श्यनीति किम् ? मनुतेर्मनितेत्येव भवति। नन्ता। हन्ता। गन्ता।

दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः।
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥ ५ ॥

देग्धा। दोग्धा। मेढा। रोढा। वोढा। नद्धा। दग्धा। लेढा। मुक्तसंशया इति किम् ? तन्त्रान्तरे चत्वारोऽपरे पठ्यन्ते। सहिमुहिरिहिलुहयः। तत्र सहेरिड्विकल्पस्त-कारादौ ( ७.२.४८ )। मुहिरपि रधादौ ( ७.२.४५ ) पठ्यते। तेन तौ ससंशयौ सविकल्पौ। इतरौ तु धातुषु न पठ्येते। कैश्चिदभ्युपगम्येते इति स्वरूपेणैव ससंशयौ।

दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम्।
लिशिं[2] च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥ ६ ॥

देष्टा। द्रष्टा। दंष्टा। आम्रष्टा, आमर्ष्टा। स्प्रष्टा, स्पर्ष्टा। ऋदुपधानाम् अनुदात्तोपदेशानां[3] सृजिदृशी[4] वर्जयित्वा 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' ( ६.१.५९) इत्यमागमविकल्पः[5]। रेष्टा। रोष्टा। क्रोष्टा। प्रवेष्टा। लेष्टा।

रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः।
इमे तु धान्ता दश येऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥ ७ ॥

रोद्धा। राद्धा। योद्धा। बन्द्धा। साद्धा। क्रोद्धा। क्षोद्धा। शोद्धा। बोद्धा। व्यद्धा। सेद्धा। बुध्यतिसिध्यत्योः श्यना निर्देशात् न्याय्यविकरणयोर्बुधिसिध्योरिड् भवत्येव। बोधिता। सेधिता[6]। निष्ठायामपि प्रतिषेधाभावाद् बुधितम्, सिधितमित्येव भवति।

शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम्।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ॥ ८ ॥

---

१ - ' यमिर्यम० ' इत्यपपाठो मुद्रितेषु । २ - ' लिशं ' इति मुद्रितेषु ।
३ - ' उदात्तोप० ' इत्यपपाठो मुद्रितेषु। ४ - ' मृजिदृशी ' इत्यपपाठो मुद्रितेषु।
५ - ' इति रमागम० ' इत्यपपाठो मुद्रितेषु। ६ - ' सिधिता ' इत्यपपाठो है०।

शेष्टा। पेष्टा। शोष्टा। पोष्टा। त्वेष्टा। वेष्टा। श्लेष्टा। तोष्टा। दोष्टा। द्वेष्टा। क्रष्टा। कर्ष्टा। कृषेस्तौदादिकस्य भौवादिकस्य च कृषिकर्षती इति निर्देशः।

तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम्।
स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश॥ ९॥

तप्ता। तेप्ता। आप्ता। वप्ता। स्वप्ता। लेप्ता। लोप्ता। तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थमेव। इट् त्वनयो रधादिपाठाद् विकल्पेन भवति। त्रप्ता, तर्प्ता, तर्पिता। द्रप्ता, दर्प्ता, दर्पिता। तुदादिषु तु यौ तृपिदृपी तावुदात्तावेव। स्रप्ता, सर्प्ता। शप्ता। छोप्ता। क्षेप्ता।

अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यती खिदिम्।
तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः॥ १०॥

अत्ता। हत्ता। स्कन्ता। भेत्ता। छेत्ता। क्षोत्ता। शत्ता। सत्ता। स्वेत्ता। स्विद्यतीति श्यना निर्देशो ञिष्विदा ( भ्वा० ४९६ ) इत्यस्य ग्रहणं मा भूत्[१]। उदात्त एवायम्। पत्ता। खेत्ता। तोत्ता। नोत्ता। वेत्ता। विद्यति विन्त इत्यपि श्यना श्नमा च निर्देशोऽन्यविकरणनिवृत्त्यर्थः। वेत्तिविन्दती उदात्तावेव। वेदिता विद्यानाम्। वेदिता धनस्य।

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन् निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन्।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान्॥ ११॥

पक्ता। वक्ता। विवेक्ता। रेक्ता। रङ्क्ता। प्रष्टा। निर्णेक्ता। सेक्ता। मोक्ता। भक्ता। भङ्क्ता। भ्रष्टा, भर्ष्टा। त्यक्ता। यष्टा। योक्ता। रोक्ता। सङ्क्ता। मङ्क्ता। भोक्ता। परिष्वक्ता। स्रष्टा। मार्ष्टा। मृजिरयमूदित् पठ्यते। ततोऽस्य विकल्पेनेटा भवितव्यम्। मार्ष्टा, मार्जिता[२] इति। अमागमोऽप्यस्य न दृश्यते। तदिह पाठस्य प्रयोजनं चिन्त्यम्। केचिदस्य स्थाने विजिं पठन्ति—सृजिं विजिं विद्ध्यनिट्स्वरानिति। निजादिषु ( जु० ११ – १३ ) यो विजिरसावनिडिष्यते। तथा च तन्त्रान्तरे निजिविजिष्वञ्जिवर्जमित्युक्तम्। एकाच इति किम्? अवधीत्। वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते। उपदेशग्रहणं किम्? इह च यथा स्यात्—लविष्यति। पविष्यति[३]। इह च मा भूत्—कर्ता कटान्, कर्तुमिति॥

---

१ – 'इति' इत्यधिकं है०।

२ – 'मर्जिता' इत्यपपाठो मुद्रितेषु।

३ – 'पचिष्यति' इत्यपपाठो मुद्रितेषु।

## श्र्युकः किति ॥ ११ ॥

श्रि इत्येतस्योगन्तानां च किति प्रत्यये परत इडागमो न भवति। श्रित्वा। श्रितः। श्रितवान्। उगन्तानां च—युत्वा। युतः। युतवान्। लूत्वा। लूनः। लूनवान्। वृत्वा। वृतः। वृतवान्। तीर्त्वा। तीर्णः। तीर्णवान्। श्र्युक इति किम् ? विदितः। कितीति किम् ? श्रयिता। श्रयितुम्। श्रयितव्यम्। केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति, भूष्णुरित्येवं यथा स्यात्। सौत्रत्वात् च निर्देशस्य श्र्युकः कितीत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतं विसर्जनीयश्च कृत इति[1]। 'ग्लाजिस्थश्च क्स्नुः' ( ३.२.१३९ ) इत्यत्र स्था आ इत्याकारप्रश्लेषेण स्थास्नोः सिद्धत्वाद् न किंचिदेतत्। उपदेश इत्येव—तीर्ण इत्यत्रापि यथा स्यात्। इत्वे हि कृते रपरत्वे च न स्यात्। मा भूदेवम्। 'इट् सनि वा' ( ७.२.४१ ) इति विकल्पे विहिते 'यस्य विभाषा' ( ७.२.१५ ) इति निष्ठायां प्रतिषेधो भविष्यति। कस्य पुनः सा विभाषा ? ॠतः। यद्येवमित्वे हि कृते नायमॄकारान्तो भविष्यति। स्थानिवद्भावाद् भविष्यति। अनल्विधौ ( १.१.५६ ) स्थानिवद्भावः, अल्विधिश्चायम्। तस्मादनुवर्तयितव्यमुपदेश इति। तथा च सति जागरितः, जागरितवानित्यत्रापि प्राप्नोति, तदर्थमेकाच इत्यनुवर्तयितव्यम्। ऊर्णोतेस्तु—

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

प्रोर्णुतः। प्रोर्णुतवान्॥

## सनि ग्रहगुहोश्च ॥ १२ ॥

ग्रह गुह इत्येतयोरुगन्तानां च सनि प्रत्यये परत इडागमो न भवति। जिघृक्षति। जुघुक्षति। उगन्तानां च—रुरूषति। लुलूषति। 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' ( ७.२.४९ ) इति विकल्पविधानात् श्रयतिरत्र नानुकृष्यते। ग्रहेर्नित्यं प्राप्तः, गुहेरूदित्त्वाद् विकल्पः॥

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १३ ॥

कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्येतेषां लिटि प्रत्यय इडागमो न भवति। कृ—चकृव, चकृम। सृ—ससृव, ससृम। भृ—बभृव, बभृम। वृञ्—ववृव, ववृम। वृङ्—ववृवहे, ववृमहे। स्तु—तुष्टुव, तुष्टुम। द्रु—दुद्रुव, दुद्रुम। स्रु—सुस्रुव, सुस्रुम। श्रु—शुश्रुव,

---

१ - द्र० — काशिका ( ३.२.१३९ )।

शुश्रुम। सिद्धे सत्यारम्भो नियमार्थः। क्रादय एव लिट्यनिटस्ततोऽन्ये सेट इति। बिभिदिव, बिभिदिम। लुलुविव, लुलुविम। अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ्वृङोस्तु प्रत्ययाश्रयः, तदुभयस्याप्ययं नियमः। वृञो हि थलि ववर्थ (७.२.६४) इति निपातनाद् व्यवस्था, स्तुद्रुस्रुश्रुवां तु 'ऋतो भारद्वाजस्य' (७.२.६३) इत्यस्मादपि नियमाद् य इट् प्राप्नोति सोऽपि नेष्यते। तुष्टोथ। दुद्रोथ। सुस्रोथ। शुश्रोथ ॥ कृञोऽसुट्कस्येति वक्तव्यम् ॥ ससुट्कस्येडागमो यथा स्यात्। संचस्करिव। संचस्करिम। 'ऋतो भारद्वाजस्य' (७.२.६३) इत्येतदप्यसुट्कस्यैवेष्यते। संचस्करिथ ॥

## श्वीदितो निष्ठायाम् ॥ १४ ॥

श्वयतेरीदितश्च निष्ठायामिडागमो न भवति। शूनः। शूनवान्। ईदितः—ओलजी—लग्नः। लग्नवान्। ओविजी—उद्विग्नः। उद्विग्नवान्। 'ओदितश्च' (८.२.४५) इति निष्ठातकारस्य नकारः। दीपी—दीप्तः। दीप्तवान्। डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य। स हि नत्वार्थः, नत्वं च निष्ठातोऽनन्तरस्य विधीयते। उड्डीनः। उड्डीनवान्। निष्ठायामित्यधिकार 'आर्धधातुकस्येड् वलादेः' (७.२.३५) इति यावत् ॥

## यस्य विभाषा ॥ १५ ॥

यस्य धातोर्विभाषा क्वचिदिडुक्तः, तस्य निष्ठायां परत इडागमो न भवति। वक्ष्यति —'स्वरतिसूतिसूयतिधूञूदितो वा' (७.२.४४)—विधूतः। विधूतवान्। गुहू—गूढः। गूढवान्। 'उदितो वा' (७.२.५६)—वृधु—वृद्धः। वृद्धवान्। 'तनिपतिदरिद्राणामुपसंख्यानम्' (७.२.४९ का०) इति पतेर्विभाषितेट्कस्यापि 'द्वितीया श्रितातीतपतित०' (२.१.२४) इति निपातनादिडागमः ॥

## आदितश्च ॥ १६ ॥

आदितश्च धातोर्निष्ठायामिडागमो न भवति। ञिमिदा—मिन्नः। मिन्नवान्। ञिक्ष्विदा—क्ष्विण्णः। क्ष्विण्णवान्। ञिष्विदा—स्विन्नः। स्विन्नवान्। चकारोऽनुक्तसमुच्चयार्थः। आश्वस्तः। वान्तः। योगविभागकरणं किमर्थम्, आदितश्च विभाषा भावादिकर्मणोरित्येवं पठितव्यम्, अन्यत्र हि भावादिकर्मभ्यां 'यस्य विभाषा' (७.२.१५) इति प्रतिषेधो भविष्यति ? ज्ञापनार्थम्, एतद् ज्ञापयति—यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति। तेन 'विभाषा गमहनविदविशाम्' (७.२.६८) इत्यत्र विदेर्लाभार्थस्य विभाषेति ज्ञानार्थस्य प्रतिषेधो न भवति। विदितः। विदितवान् ॥

## विभाषा भावादिकर्मणोः ॥ १७ ॥

भाव आदिकर्मणि च आदितो धातोर्विभाषा निष्ठायामिडागमो न भवति। मिन्नमनेन, मेदितमनेन। प्रमिन्नः, प्रमेदितः। सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन। शकितो घटः कर्तुम् , शक्तो घटः कर्तुम्। भावे न भवत्येव—शक्तमनेन। अस्यतेर्भावे[1]—असितमनेन। कर्मणि[2] च न भवत्येव—अस्तः काण्डः॥

## क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु॥ १८ ॥

क्षुब्ध स्वान्त ध्वान्त लग्न म्लिष्ट विरिब्ध फाण्ट बाढ इत्येते निपात्यन्ते यथासंख्यं मन्थ मनः तमः सक्त अविस्पष्ट स्वर अनायास भृश इत्येतेष्वर्थेषु। क्षुब्ध इति भवति मन्थाभिधानं चेत्। क्षुब्धो मन्थः। क्षुभितमन्यत्। क्षुभितं मन्थेन। क्षुब्धा गिरिनदी इत्येवमाद्युपमानाद् भविष्यति। स्वान्तमिति मनोऽभिधानं चेत्। स्वनितमन्यत्। स्वनितो मृदङ्गः। स्वनितं मनसा। ध्वान्तमिति भवति तमोऽभिधानं चेत्। ध्वनितमन्यत्। ध्वनितो मृदङ्गः। ध्वनितं मनसा। लग्नमिति भवति सक्तं चेत्। लगितमन्यत्। म्लिष्टमिति भवत्यविस्पष्टं चेत्। म्लेच्छितमन्यत्। इत्वमप्येकारस्य निपातनादेव। विरिब्धमिति स्वरश्चेत्। विरेभितमन्यत्। 'रेभृ शब्दे' ( भ्वा २६९ ) इत्यस्यैतद् निपातनम्। अन्ये तु विरिभितमन्यदिति पठन्ति। रिभिं[3] सौत्रं धातुं पठन्ति। ते विरिभितमिति प्रत्युदाहरन्ति। फाण्टमिति भवत्यनायासश्चेत्। फणितमन्यत्[4]। यदशृतमपिष्टं च कषायमुदकसंपर्कमात्राद् विभक्तरसमीषदुष्णं तत् फाण्टम्। तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते। बाढमिति भवति भृशं चेत्। बाहितमन्यत्। 'बाहृ प्रयत्ने' ( भ्वा० ४२८ ) इत्यस्य धातोरेतद् निपातनम्। अतिशयश्च भृशमिहोच्यते॥

## धृषिशसी वैयात्ये॥ १९ ॥

वियातस्य भावो वैयात्यम्, प्रागल्भ्यम्, अविनीतता। तत्र धृष् शस् इत्येतयोर्निष्ठायामिडागमो न भवति। धृष्टोऽयम्। विशस्तोऽयम्। धृषेः 'आदितश्च' ( ७.२.१६ ) इति प्रतिषेधः सिद्ध एव, शसेरपि 'उदितो वा' ( ७.२.५६ ), 'यस्य विभाषा' ( ७.२.१५ ) इति ? नियमार्थं वचनम्। धृषिशस्योर्वैयात्य एवेड् न भवति। भावादि-

---

१ - 'अस्यतेर्भावे' इति सौनागविकल्पेन संबध्यते। द्र० — माधवीयधातुवृत्तिः ( ४.१०३ )।
२ - 'आदिकर्मणि' इत्यपपाठो मुद्रितेषु। ३ - 'रभिं' इति मुद्रितपाठः।
४ - 'फाणितमन्यत्' इत्यपपाठो मुद्रितेषु।

कर्मणोरपि वैयात्ये धृषिर्नास्ति। धृष्टः। विशस्तः[1]। वैयात्य इति किम् ? धर्षितः। विशसितः॥

## दृढः स्थूलबलयोः॥ २० ॥

दृढ इति निपात्यते स्थूले बलवति चार्थे। दृढः स्थूलः। दृढो बलवान्। किमत्र निपात्यते ? दृंहेः क्तप्रत्यय इडभावः, हकारनकारयोर्लोपः, परस्य ढत्वम्। अथ दृहिः प्रकृत्यन्तरमस्ति ? तत्राप्येतदेव सर्वं नलोपवर्जम् , नकारस्याभावात्। हलोपनिपातनं पूर्वत्रासिद्धत्वनिवृत्त्यर्थम्। ढलोपे हि सति तस्य पूर्वत्रासिद्धत्वाद् द्रढिमा, द्रढीयान्, द्रढयतीत्यत्र 'र ऋतो हलादेर्लघोः' ( ६.४.१६१ ) इति रेफो न स्यात्। इह च परिद्रढय्य गत इति 'ल्यपि लघुपूर्वात्' ( ६.४.५६ ) इति णेरयादेशो न स्यात्। इह च परिदृढस्यापत्यं पारिदृढी कन्येति गुरूपोत्तमलक्षणः ष्यङ् ( ४.१.७८ ) प्रसज्येत। स्थूलबलयोरिति किम् ? दृंहितम्। दृहितम्॥

## प्रभौ परिवृढः॥ २१ ॥

परिवृढ इति निपात्यते प्रभुश्चेद् भवति। परिवृढः कुटुम्बी। पूर्वेण तुल्यमेतत्। वृंहेर्निपातनम्। वृहिश्च यदि प्रकृत्यन्तरमस्ति, तस्यापि तदेव सर्वम्, हलोपनिपातनस्य च तदेव प्रयोजनम्। परिव्रढयति, परिव्रढय्य गतः, पारिवृढी कन्येति। परिवृढमाचष्ट इति विगृह्य वृढशब्दादेव णिजुत्पद्यते। संग्रामयतेरेव सोपसर्गाद् णिजुत्पत्तिरिष्यते, नान्यस्मादिति। तथा सति परिव्रढयतीति 'तिङ्ङतिङः' ( ८.१.२८ ) इति निघातः। परिव्रढय्येत्यत्र परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति। प्रभाविति किम्? परिवृंहितम्। परिवृहितम्॥

## कृच्छ्रगहनयोः कषः॥ २२ ॥

कृच्छ्र गहन इत्येतयोरर्थयोः कषेर्धातोर्निष्ठायामिडागमो न भवति। कष्टोऽग्निः। कष्टं व्याकरणम्। ततोऽपि कष्टतराणि सामानि। कृच्छ्रं दुःखम्, तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यते। गहने—कष्टानि वनानि। कष्टाः पर्वताः। कृच्छ्रगहनयोरिति किम् ? कषितं सुवर्णम्॥

## घुषिरविशब्दने॥ २३ ॥

घुषेर्धातोरविशब्दनेऽर्थे निष्ठायामिडागमो न भवति। घुष्टा रज्जुः। घुष्टौ पादौ।

---

१ – पुनरुदाहरणस्य प्रयोजनं मृग्यम्।

अविशब्दन इति किम् ? अवघुषितं वाक्यमाह। विशब्दनं प्रतिज्ञानम्। घुषिरशब्दार्थ इति भूवादिषु ( ४३६ ) पठ्यते, घुषिरविशब्दन इति चुरादिषु ( १९५ )। तयोरिह सामान्येन ग्रहणम्। विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिज् विशब्दनार्थस्यानित्य इति। तेनायमपि प्रयोग उपपन्नो भवति—'महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः[1]' ( महाभाष्य ३.२८८ ) इति[2]। स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः॥

## अर्देः संनिविभ्यः॥ २४ ॥

सं नि वि इत्येतेभ्य उत्तरस्यार्देर्निष्ठायामिडागमो न भवति। समर्णः। न्यर्णः। व्यर्णः। अर्देरिति किम् ? समेधितः। संनिविभ्य इति किम् ? अर्दितः॥

## अभेश्चाविदूर्ये॥ २५ ॥

अभिशब्दादुत्तरस्यार्देराविदूर्येऽर्थे निष्ठायामिडागमो न भवति। अभ्यर्णा सेना। अभ्यर्णा शरत्। आविदूर्य इति किम् ? अभ्यर्दितो वृषलः। शीतेन पीडित इत्यर्थः। विदूरं विप्रकृष्टम्, ततोऽन्यदविदूरम्, तस्य भाव आविदूर्यम्। एतस्मादेव निपातनाद् 'न नञ्पूर्वात् तत्पुरुषात्०' ( ५.१.१२१ ) इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति॥

## णेरध्ययने वृत्तम्॥ २६ ॥

ण्यन्तस्य वृतेर्निष्ठायाम्[3] अध्ययनार्थे वृत्तमितीडभावो णिलुक् च निपात्यते। वृत्तो गुणो देवदत्तेन। वृत्तं पारायणं देवदत्तेन। अध्ययन इति किम् ? वर्तितमन्यत्। वृतिरयमकर्मकः, स ण्यर्थे वर्तमानः सकर्मको भवति। 'तेन निर्वृत्तम्' ( ५.१.७९ ) इति हि प्रकृतेरेव कर्मणि क्तप्रत्ययो दृश्यते। तद्वदिहापि ण्यर्थवृत्तेरेव च वृतेर्वृत्तो गुणो देवदत्तेनेति भविष्यतीति निपातनमनर्थकम् ? तत् क्रियते यदापि णिचैव ण्यर्थोऽभिधीयते, तदा वर्तितमित्यध्ययने मा भूदिति केचित्। अपरे तु वर्तितो गुणो देवदत्तेनेत्यपीच्छन्ति॥

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः॥ २७ ॥

णेरित्यनुवर्तते। दम् शम् पूरी दस् स्पश् छद् ज्ञप् इत्येतेषां ण्यन्तानां धातूनां वानिट्त्वं निपात्यते। दान्तः, दमितः। शान्तः, शमितः। पूर्णः, पूरितः। दस्तः, दासितः। स्पष्टः, स्पाशितः। छन्नः, छादितः। ज्ञप्तः, ज्ञपितः। इट्प्रतिषेधो णिलुक् च निपात्यते। ज्ञपेस्तु भरज्ञपिसनाम् ( ७.२.४९ ) इति विकल्पविधानाद् 'यस्य विभाषा' ( ७.२.१५ ) इति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम्॥

---

१ – 'पुष्यमाणवाः' इति पाठान्तरम्। २ – 'इति' इति नास्ति है०।
३ – 'वृत्तेर्निष्ठायाम्' इत्यपपाठो मुद्रितेषु।

## रुष्यमत्वरसंघुषास्वनाम् ॥ २८ ॥

वेति वर्तते। रुषि अम त्वर संघुष आस्वन इत्येतेषां निष्ठायां वेडागमो न भवति। रुष्टः, रुषितः। 'तीषसहलुभरुषरिषः' ( ७.२.४८ ) इति विकल्पविधानाद् 'यस्य विभाषा' ( ७.२.१५ ) इति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। अम्—अभ्यान्तः, अभ्यमितः। त्वर—तूर्णः, त्वरितः। 'आदितश्च' ( ७.२.१६ ) इति प्रतिषेधे प्राप्ते वचनम्। संघुष—संघुष्टौ पादौ, संघुषितौ पादौ। संघुष्टं वाक्यमाह, संघुषितं वाक्यमाह। संघुष्टौ दम्यौ, संघुषितौ दम्यौ। संपूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव विकल्पो भवति। आस्वन—आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः। आस्वान्तं मनः, आस्वनितं मनः। आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽपि परत्वादयं विकल्पः 'क्षुब्धस्वान्त०' ( ७.२.१८ ) इति निपातनं बाधते॥

## हृषेर्लोमसु ॥ २९ ॥

लोमसु वर्तमानस्य हृषेर्निष्ठायां वेडागमो न भवति। हृष्टानि लोमानि, हृषितानि लोमानि। हृष्टं लोमभिः, हृषितं लोमभिः। हृष्टाः केशाः, हृषिताः केशाः। हृष्टं केशैः, हृषितं केशैः। 'हृषु अलीके' ( भ्वा० ४७१ ) इत्युदित्त्वाद् निष्ठायामनिट्। 'हृष तुष्टौ' ( दिवा० ११९ ) इत्ययं सेट्। तयोरुभयोरिह ग्रहणमित्युभयत्रविभाषेयम्। लोमानि मूर्द्धजानि अङ्गजानि च सामान्येन गृह्यन्ते, यथा 'लोमनखं स्पृष्ट्वा शौचं कर्तव्यम्' ( महाभाष्य १.२५ ) इति। तद्विषये च हृषिर्वर्तमानो[1] लोमसु वर्तत इत्युच्यते। लोमस्विति किम्? हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्य ॥ विस्मितप्रतिघातयोश्चेति वक्तव्यम् ॥ हृष्टो देवदत्तः, हृषितो देवदत्तः। विस्मित इत्यर्थः। हृष्टा दन्ताः, हृषिता दन्ताः। प्रतिहता इत्यर्थः॥

## अपचितश्च ॥ ३० ॥

अपचित इति वा निपात्यते। अपपूर्वस्य चायतेर्निष्ठायामनिट्त्वं चिभावश्च निपात्यते। अपचितोऽनेन गुरुः, अपचायितोऽनेन गुरुः ॥ क्तिनि नित्यमिति वक्तव्यम् ॥ क्तिनि नित्यं चिभावो निपात्यते। अपचितिः॥

## हु ह्वरेश्छन्दसि ॥ ३१ ॥

ह्वरतेर्धातोर्निष्ठायां छन्दसि हु इत्ययमादेशो भवति। हुतस्य चाहुतस्य च।

---

१ – ' हर्षे वर्तमानो ' इति प्रायिकः पाठः।

अविशब्दन इति किम् ? अवघुषितं वाक्यमाह। विशब्दनं प्रतिज्ञानम्। घुषिरशब्दार्थ इति भूवादिषु ( ४३६ ) पठ्यते, घुषिरविशब्दन इति चुरादिषु ( १९५ )। तयोरिह सामान्येन ग्रहणम्। विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिज् विशब्दनार्थस्यानित्य इति। तेनायमपि प्रयोग उपपन्नो भवति—'महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः[1]' ( महाभाष्य ३.२८८ ) इति[2]। स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः॥

## अर्देः संनिविभ्यः॥ २४ ॥

सं नि वि इत्येतेभ्य उत्तरस्यार्देर्निष्ठायामिडागमो न भवति। समर्णः। न्यर्णः। व्यर्णः। अर्देरिति किम् ? समेधितः। संनिविभ्य इति किम् ? अर्दितः॥

## अभेश्चाविदूर्ये॥ २५ ॥

अभिशब्दादुत्तरस्यार्देराविदूर्येऽर्थे निष्ठायामिडागमो न भवति। अभ्यर्णा सेना। अभ्यर्णा शरत्। आविदूर्य इति किम् ? अभ्यर्दितो वृषलः। शीतेन पीडित इत्यर्थः। विदूरं विप्रकृष्टम्, ततोऽन्यदविदूरम्, तस्य भाव आविदूर्यम्। एतस्मादेव निपातनाद् 'न नञ्पूर्वात् तत्पुरुषात्०' ( ५.१.१२१ ) इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति॥

## णेरध्ययने वृत्तम्॥ २६ ॥

ण्यन्तस्य वृतेर्निष्ठायाम्[3] अध्ययनार्थे वृत्तमितीडभावो णिलुक् च निपात्यते। वृत्तो गुणो देवदत्तेन। वृत्तं पारायणं देवदत्तेन। अध्ययन इति किम् ? वर्तितमन्यत्। वृतिरयमकर्मकः, स ण्यर्थे वर्तमानः सकर्मको भवति। 'तेन निर्वृत्तम्' ( ५.१.७९ ) इति हि प्रकृतेरेव कर्मणि क्तप्रत्ययो दृश्यते। तद्वदिहापि ण्यर्थवृत्तेरेव च वृतेर्वृत्तो गुणो देवदत्तेनेति भविष्यतीति निपातनमनर्थकम् ? तत् क्रियते यदापि णिचैव ण्यर्थोऽभिधीयते, तदा वर्तितमित्यध्ययने मा भूदिति केचित्। अपरे तु वर्तितो गुणो देवदत्तेनेत्यपीच्छन्ति॥

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः॥ २७ ॥

णेरित्यनुवर्तते। दम् शम् पूरी दस् स्पश् छद् ज्ञप् इत्येतेषां ण्यन्तानां धातूनां वानिट्त्वं निपात्यते। दान्तः, दमितः। शान्तः, शमितः। पूर्णः, पूरितः। दस्तः, दासितः। स्पष्टः, स्पाशितः। छन्नः, छादितः। ज्ञप्तः, ज्ञपितः। इट्प्रतिषेधो णिलुक् च निपात्यते। ज्ञपेस्तु भरज्ञपिसनाम् ( ७.२.४९ ) इति विकल्पविधानाद् 'यस्य विभाषा' ( ७.२.१५ ) इति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम्॥

---

१ – 'पुष्पमाणवाः' इति पाठान्तरम्। २ – 'इति' इति नास्ति है०।
३ – 'वृत्तेर्निष्ठायाम्' इत्यपपाठो मुद्रितेषु।

## रुष्यमत्वरसंघुषास्वनाम् ॥ २८ ॥

वेति वर्तते। रुषि अम त्वर संघुष आस्वन इत्येतेषां निष्ठायां वेडागमो न भवति। रुष्टः, रुषितः। 'तीषसहलुभरुषरिषः' (७.२.४८) इति विकल्पविधानाद् 'यस्य विभाषा' (७.२.१५) इति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। अम्—अभ्यान्तः, अभ्यमितः। त्वर—तूर्णः, त्वरितः। 'आदितश्च' (७.२.१६) इति प्रतिषेधे प्राप्ते वचनम्। संघुष—संघुष्टौ पादौ, संघुषितौ पादौ। संघुष्टं वाक्यमाह, संघुषितं वाक्यमाह। संघुष्टौ दम्यौ, संघुषितौ दम्यौ। संपूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव विकल्पो भवति। आस्वन—आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः। आस्वान्तं मनः, आस्वनितं मनः। आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽपि परत्वादयं विकल्पः 'क्षुब्धस्वान्त०' (७.२.१८) इति निपातनं बाधते॥

## हृषेर्लोमसु ॥ २९ ॥

लोमसु वर्तमानस्य हृषेर्निष्ठायां वेडागमो न भवति। हृष्टानि लोमानि, हृषितानि लोमानि। हृष्टं लोमभिः, हृषितं लोमभिः। हृष्टाः केशाः, हृषिताः केशाः। हृष्टं केशैः, हृषितं केशैः। 'हृषु अलीके' (भ्वा० ४७१) इत्युदित्त्वाद् निष्ठायामनिट्। 'हृष तुष्टौ' (दिवा० ११९) इत्ययं सेट्। तयोरुभयोरिह ग्रहणमित्युभयत्रविभाषेयम्। लोमानि मूर्द्धजानि अङ्गजानि च सामान्येन गृह्यन्ते, यथा 'लोमनखं स्पृष्ट्वा शौचं कर्तव्यम्' (महाभाष्य १.२५) इति। तद्विषये च हृषिर्वर्तमानो[1] लोमसु वर्तत इत्युच्यते। लोमस्विति किम्? हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्य ॥ विस्मित-प्रतिघातयोश्चेति वक्तव्यम् ॥ हृष्टो देवदत्तः, हृषितो देवदत्तः। विस्मित इत्यर्थः। हृष्टा दन्ताः, हृषिता दन्ताः। प्रतिहता इत्यर्थः॥

## अपचितश्च ॥ ३० ॥

अपचित इति वा निपात्यते। अपपूर्वस्य चायतेर्निष्ठायामनिट्त्वं चिभावश्च निपात्यते। अपचितोऽनेन गुरुः, अपचायितोऽनेन गुरुः ॥ क्तिनि नित्यमिति वक्तव्यम् ॥ क्तिनि नित्यं चिभावो निपात्यते। अपचितिः॥

## हु ह्वरेश्छन्दसि ॥ ३१ ॥

ह्वरतेर्धातोर्निष्ठायां छन्दसि हु इत्ययमादेशो भवति। हुतस्य चाहुतस्य च।

१ - 'हर्षे वर्तमानो' इति प्रायिकः पाठः।

अहुंतमसि हविर्धानंम् ( मा० सं० १.९ )। छन्दसीति किम् ? ह्रुतम् ॥

## अपरिह्वृताश्च ॥ ३२ ॥

अपरिह्वृता इति निपात्यते छन्दसि विषये। ह्रु इत्येतस्यादेशस्याभावो निपात्यते। अपरिह्वृताः सनुयाम वाजंम् ( ऋ० १.१००.१९ )॥

## सोमे ह्वरितः ॥ ३३ ॥

ह्वरित इति ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसि विषये, सोमश्चेद् भवति। मा नः सोमो ह्वरितः, विह्वरितस्त्वम्[1] ॥

## ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥ ३४ ॥

ग्रसित स्कभित स्तभित उत्तभित चत्त विकस्त विशस्तृ शंस्तृ शास्तृ तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः उज्ज्वलिति क्षरिति क्षमिति वमिति अमिति इत्येतानि छन्दसि विषये निपात्यन्ते। तत्र ग्रसितस्कभितस्तभितोत्तभितेति ग्रसु स्कम्भु स्तम्भु इत्येतेषामुदित्त्वाद् निष्ठायामिट्प्रतिषेधे प्राप्त इडागमो निपात्यते। ग्रसितं वा एतत्सोमस्य ( मै० सं० ३.७.४ )। ग्रस्तमिति भाषायाम्। स्कभित—विष्कंभिते अजरें ( ऋ० ६.७०.१ )। विष्कब्ध इति भाषायाम्। स्तभित—येन स्वः स्तभितम् ( ऋ० १०.१२१.५ )। स्तब्धमिति भाषायाम्। उत्तभित—सत्येनोत्तंभिता भूमिः ( ऋ० १०.८५.१ )। उत्तब्धेति भाषायाम्। उत्तभितेति उत्पूर्वस्य निपातनसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति। चत्त विकस्तेति चतेः कसेश्च विपूर्वस्य निष्ठायामिडभावो निपात्यते। चत्ता वर्षेण विद्युत्। चतितेति भाषायाम्। विकस्त—उत्तानाया हृदयं यद् विकस्तम् ( मै० सं० २.७.४ )। विकसितमिति भाषायाम्। निपातनबहुत्वापेक्ष[2] विकस्ता इति बहुवचनं कृतम्। अपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः। विशस्तृ शंस्तृ शास्तृ इति शसेर्विपूर्वस्य शंसेः शासेश्च तृचीडभावो निपात्यते। विशस्तृ—एकस्त्वष्टुरश्वस्या विशस्ता ( ऋ० १.१६२.१९ )। विशसितेति भाषायाम्। शंस्तृ—उत शंस्ता सुविप्रः ( ऋ० १.१६२.५ )। शंसितेति भाषायाम्। शास्तृ—प्रशास्ता ( ऋ० १.९४.६ )। प्रशासितेति[3] भाषायाम्।

---

१ – 'मा नः सोम ह्वरितो विह्वरस्त्वम्' इति मा० श्रौ० ( २.५.४.२४ )।

२ – 'निपातनं बहुत्वापेक्षम्' इति मुद्रितेषु पाठः। ३ – 'प्रशासितमिति' इति मुद्रितेषु ।

तरुतृतरूतृवरुतृवरूतृवरूत्रीरिति तरतेर्वृङ्वृञोश्च तृचि उट् ऊट् इत्येतावागमौ निपात्येते। तरुतारं रथानाम् ( ऋ० १०.१७८.१ )। तरूतारम्। तरितारम्, तरीतारमिति भाषायाम्। वरुतारं रथानाम्, वरूतारं रथानाम्। वरितारम्, वरीतारमिति भाषायाम्। वरूंत्रीष्ट्वा देवीर्विश्वदेव्यावतीः[1] ( मा० सं० ११.६१ )। जसि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम्। अतन्त्रं चैतत्, इदमपि हि भवति—अहोरात्राणि वै वरूत्रयः ( श० ब्रा० ६.५.४.६ ) इति। छान्दसिकमत्र ह्रस्वत्वम्। प्रपञ्चार्थमेव च ङीबन्तस्य निपातनम्। वरूतृशब्दो हि निपातितः, तत एव ङीपि सति सिद्धो वरूत्रीशब्दः[2]। उज्ज्वलिति क्षरिति क्षमिति वमित्यमितीति च ज्वलतेरुत्पूर्वस्य क्षर क्षम वम अम इत्येतेषां च तिपि शप इकारादेशो निपात्यते, शपो लुग्वेडागमः। अग्निरुज्ज्वलिति। उज्ज्वलतीति भाषायाम्। क्षरिति—स्तोकं क्षरिति। क्षरतीति भाषायाम्। क्षमिति—स्तोमं क्षमिति। क्षमतीति[3] भाषायाम्। वमिति—यः सोमं वमिति। वमतीति भाषायाम्। अमिति—अभ्यमिति वरुणः। अभ्यमतीति भाषायाम्। इतिकरणं प्रदर्शनार्थम्, तेन क्वचिदीकारो भवति। रविमभ्यमीति[4] वरुणः ( मा० सं० २२.५ ) इत्यपि हि वेदे पठ्यते॥

## आर्धधातुकस्येड् वलादेः॥ ३५ ॥

छन्दसीति निवृत्तम्। आर्धधातुकस्य वलादेरिडागमो भवति। लविता। लवितुम्। लवितव्यम्। पविता। पवितुम्। पवितव्यम्। आर्धधातुकस्येति किम्? आस्ते। शेते। वस्ते। 'रुदादिभ्यः सार्वधातुके' ( ७.२.७६ ) इत्येतस्मिन् नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवं भवतीति आर्धधातुकग्रहणं क्रियते। वलादेरिति किम्? लव्यम्। पव्यम्। लवनीयम्। पवनीयम्। इडिति वर्तमाने पुनरिड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम्॥

## स्नुक्रमोरनात्मनेपदनिमित्ते॥ ३६ ॥

नियमार्थमिदम्। स्नुक्रमोरार्धधातुकस्य वलादेरिडागमो भवति, न चेत् स्नुक्रमौ आत्मनेपदस्य निमित्तं भवतः। क्व च तावात्मनेपदस्य निमित्तम्? यत्रात्मनेपदं तदाश्रयं भवति, भावकर्मकर्मकर्तृकर्मव्यतिहाराः क्रमेर्वृत्त्यादयश्च। तेनायं सत्यात्मनेपदे प्रतिषेधो भवति, नासतीति। प्रतिषेधफलं चेदं सूत्रम्। स्नुक्रमोरुदात्तत्वादिट्[5] सिद्ध एव। प्रस्नविता। प्रस्नवितुम्। प्रस्नवितव्यम्। प्रक्रमिता। प्रक्रमितुम्। प्रक्रमितव्यम्।

---

१ – 'वरूत्री त्वा देवीं विश्वदेव्यवती' ( मै० सं० २. ७. ६ ) इत्येकवचनान्तः पाठः।

२ – इह काशिकाकृतो वचो न रमणीयं पश्यामः, वरूत्रीशब्दस्य सम्प्रत्युपलभ्यमानवैदिकवाङ्मय आद्युदात्तस्यैव दर्शनाद् निपातनस्यावश्यकत्वात्।

३ – 'क्षाम्यतीति' 'क्षमत इति' वा स्यात्। सूत्रे 'क्षमिति' इति नास्ति यथान्यासम्।

४ – 'तमभ्यमीति' इति मा० सं० पाठः। ५ – 'स्नुक्रमोरुदित्त्वादिट्' इत्यपपाठो मुद्रितेषु।

अनात्मनेपवनिमित्त इति किम् ? प्रस्नोषीष्ट। प्रक्रंसीष्ट। प्रस्नोष्यते। प्रक्रंस्यते। प्रसुस्नूषिष्यते[1]। प्रचिक्रंसिष्यते। सर्वत्रैवात्र स्नौतिः क्रमिश्चात्मनेपदस्य निमित्तम्। सनन्तादपि हि 'पूर्ववत्सनः' ( १.३.६२ ) इत्यात्मनेपदं विधीयते। निमित्तग्रहणं किम् ? सीयुडादेस्तत्परपरस्य च प्रतिषेधार्थम्। इह तु प्रस्नवितेवाचरतीति प्रस्नवित्रीयत इति क्यङन्तमात्मनेपदस्य निमित्तम्, न स्नौतिः ॥ क्रमेस्तु कर्तर्यात्मनेपदविषयादसत्यात्मने-पदे कृति प्रतिषेधो वक्तव्यः॥ प्रक्रन्ता। उपक्रन्ता। कर्तरीति किम् ? प्रक्रमितव्यम्। उपक्रमितव्यम्। आत्मनेपदविषयादिति किम् ? निष्क्रमिता। स्नौतेः सनि किति च प्रत्यये 'श्र्युकः किति' ( ७.२.११ ), 'सनि ग्रहगुहोश्च' ( ७.२.१२ ) इत्येव प्रतिषेधो भवति। प्रसुस्नूषति। प्रस्नुतः। प्रस्नुतवान्॥

## ग्रहोऽलिटि दीर्घः॥ ३७ ॥

ग्रह उत्तरस्येटोऽलिटि दीर्घो भवति। ग्रहीता। ग्रहीतुम्। ग्रहीतव्यम्। अलिटीति किम् ? जगृहिव, जगृहिम। प्रकृतस्येटो दीर्घत्वमिदं चिण्वदिटो न भवति। ग्राहिता। ग्राहिष्यते॥

## वृतो वा॥ ३८ ॥

वृ इति वृङ्वृञोः सामान्येन ग्रहणम्, तस्मादुत्तरस्य ॠकारान्तेभ्यश्चेटो वा दीर्घो भवति। वरिता, वरीता। प्रावरिता, प्रावरीता। ॠकारान्तेभ्यः—तरिता, तरीता। आस्तरिता, आस्तरीता। वृत इति किम् ? करिष्यति। हरिष्यति। अलिटीत्येव—ववरिथ। तेरिथ॥

## न लिङि॥ ३९ ॥

वृत उत्तरस्येटो लिङि दीर्घो न भवति। विवरिषीष्ट। प्रावरिषीष्ट। आस्तरिषीष्ट। विस्तरिषीष्ट॥

## सिचि च परस्मैपदेषु॥ ४० ॥

परस्मैपदपरे सिचि वृत उत्तरस्येटो दीर्घो न भवति। प्रावारिष्टाम्, प्रावारिषुः। अतारिष्टाम्, अतारिषुः। आस्तारिष्टाम्, आस्तारिषुः। परस्मैपदेष्विति किम् ? प्रावरिष्ट, प्रावरीष्ट॥

## इट् सनि वा॥ ४१ ॥

---

१ - 'सनि ग्रहगुहोश्च' ( ७.२.१२ ) इत्येव सिद्धे क्रमुसाहचर्यादिदं प्रत्युदाहृतम्।

वृतः सनो[१] वेडागमो भवति। वुवूर्षते, विवरिषते, विवरीषते। प्रावुवूर्षति, प्राविवरिषति, प्राविवरीषति। ॠकारान्तेभ्यः—तितीर्षति, तितरिषति, तितरीषति। आतिस्तीर्षते, आतिस्तरिषते, आतिस्तरीषते[२]। 'सनि ग्रहगुहोश्च' ( ७.२.१२ ) इतीट्प्रतिषेधे प्राप्ते पक्ष इडागमो विधीयते। इटश्च 'वृतो वा' ( ७.२.३८ ) इति पक्षे दीर्घः। चिकीर्षति, जिहीर्षति इत्यत्रोपदेशाधिकाराद् लाक्षणिकत्वात् चेडागमो न भवति॥

## लिङ्सिचोरात्मनेपदेषु॥ ४२ ॥

वृतो लिङि सिचि चात्मनेपदपरे वेडागमो भवति। वृषीष्ट, वरिषीष्ट। प्रावृषीष्ट, प्रावरिषीष्ट। आस्तरिषीष्ट, आस्तीर्षीष्ट। सिचि खल्वपि—अवृत, अवरिष्ट, अवरीष्ट। प्रावृत, प्रावरिष्ट, प्रावरीष्ट। आस्तीर्ष्ट, आस्तरिष्ट, आस्तरीष्ट। आत्मनेपदेष्विति किम्? प्रावारिष्टाम्, प्रावारिषुः। लिङः प्रत्युदाहरणं न दर्शितम्, असंभवाद् यासुटोऽवलादित्वादिति॥

## ॠतश्च संयोगादेः॥ ४३ ॥

ॠदन्ताद् धातोः संयोगादेरुत्तरयोर्लिङ्सिचोरात्मनेपदेषु वेडागमो भवति। ध्वृषीष्ट, ध्वरिषीष्ट। स्मृषीष्ट, स्मरिषीष्ट। अध्वृषाताम्, अध्वरिषाताम्। अस्मृषाताम्, अस्मरिषाताम्। ॠत इति किम्? च्योषीष्ट। प्लोषीष्ट। अच्योष्ट। अप्लोष्ट। संयोगादेरिति किम्? कृषीष्ट। हृषीष्ट। अकृत। अहृत। आत्मनेपदेष्वित्येव—अध्वार्षीत्। अस्मार्षीत्। संस्कृषीष्ट, समस्कृतेत्यत्रोपदेशाधिकाराद्, अभक्तत्वात्[३] च सुट इडागमो न भवति॥

## स्वरतिसूतिसूयतिधूञूदितो वा॥ ४४ ॥

स्वरति सूति सूयति धूञ् इत्येतेभ्य ऊदिद्भ्यश्चोत्तरस्य वलादेरार्धधातुकस्य वेडागमो भवति। स्वर्ता, स्वरिता। सूति—प्रसोता, प्रसविता। सूयति—सोता, सविता। धूञ्—धोता, धविता। ऊदिद्भ्यः खल्वपि—गाहू—विगाढा, विगाहिता। गुपू—गोप्ता, गोपिता। वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम्। सूतिसूयत्योर्विकरणनिर्देशः 'षू प्रेरणे' ( तुदा० ११७ ) इत्यस्य निवृत्त्यर्थः। धूञिति सानुबन्धकस्य निर्देशो 'धू विधूनने' ( तुदा० १०६ ) इत्यस्य निवृत्त्यर्थः। सविता, धुवितेत्येव नित्यमेतयोर्भवति। स्वरतेरेतस्माद् विकल्पाद् 'ॠद्धनोः स्ये' ( ७.२.७० ) इत्येतद् भवति विप्रतिषेधेन।

---

१ – 'सनि' इति है०। २ – उदाहरणत्रयस्य परस्मैपदपाठो बाल०।
३ – 'अभाक्तत्वात्' इत्यपपाठो है० तारा०।

स्वरिष्यति। किति तु प्रत्यये 'श्र्युकः किति' ( ७.२.११ ) इति नित्यः प्रतिषेधो भवति पूर्वविप्रतिषेधेन। स्वृत्वा। सूत्वा। धूत्वा॥

## रधादिभ्यश्च॥ ४५ ॥

'रध हिंसासंराद्ध्योः' ( दिवा० ८२ ) इत्येवमादिभ्योऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य वेडागमो भवति। रद्धा, रधिता। नंष्टा, नशिता। त्रप्ता, तर्प्ता, तर्पिता। द्रप्ता, दर्प्ता, दर्पिता। द्रोग्धा, द्रोढा, द्रोहिता। मोग्धा, मोढा, मोहिता। स्नोग्धा, स्नोढा, स्नोहिता। स्नेग्धा, स्नेढा, स्नेहिता। क्रादिनियमाद् लिटि रधादिभ्यः परत्वाद् विकल्पं केचिदिच्छन्ति। अपरे पुनराहुः—पूर्वविधेरिण्निषेधविधानसामर्थ्याद् बलीयस्त्वं प्रतिषेधनियमस्येति नित्यमिटा भवितव्यम्। ररन्धिव, ररन्धिमेति भवति॥

## निरः कुषः॥ ४६ ॥

निर् इत्येवंपूर्वात् कुष उत्तरस्य वलादेरार्धधातुकस्य वेडागमो भवति। निष्कोष्टा, निष्कोषिता। निष्कोष्टुम्, निष्कोषितुम्। निष्कोष्टव्यम्, निष्कोषितव्यम्। निर इति किम्? कोषिता। कोषितुम्। कोषितव्यम्। निस इति वक्तव्ये निर इति निर्देशेन रेफान्तमुपसर्गान्तरमस्तीति ज्ञाप्यते। तस्य हि निलयनमिति 'उपसर्गस्यायतौ' ( ८.२.१९ ) इति लत्वं भवति। निसो हि रुत्वस्यासिद्धत्वाद् लत्वं न स्यात्॥

## इण्निष्ठायाम्॥ ४७ ॥

निरः कुषो निष्ठायामिडागमो भवति। निष्कुषितः। निष्कुषितवान्। इड्ग्रहणं नित्यार्थम्। आरम्भो हि 'यस्य विभाषा' ( ७.२.१५ ) इत्यस्य बाधकः, अन्यथा हि विकल्पार्थ एव स्याद्। अत्रैव नित्यमिडागमः, उत्तरत्र विकल्प एवेति॥

## तीषसहलुभरुषरिषः॥ ४८ ॥

तकारादावार्धधातुक इषु सह लुभ रुष रिष इत्येतेभ्यो वेडागमो भवति। इषु—एष्टा, एषिता। 'इषु इच्छायाम्' ( तुदा० ६१ ) इत्यस्यायं विकल्प इष्यते। यस्तु 'इष गतौ' ( दिवा० १९ ) इति दैवादिकस्तस्य प्रेषिता, प्रेषितुम्, प्रेषितव्यमिति नित्यं भवति। योऽपि 'इष आभीक्ष्ण्ये' ( क्र्या० ५६ ) इति क्र्यादौ पठ्यते, तस्याप्येवमेव। तदर्थमेव तीषसहेति सूत्रे केचिदुदितमिषं पठन्ति। सह—सोढा, सहिता। लुभ—लोब्धा, लोभिता। रुष—रोष्टा, रोषिता। रिष्—रेष्टा, रेषिता। तीति किम्? एषिष्यति॥

## सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्॥ ४९ ॥

इवन्तानां धातूनाम् ऋधु भ्रस्ज दम्भु श्रि स्वृ यु ऊर्णु भर ज्ञपि सन् इत्येतेषां च सनि वेडागमो भवति। इवन्तानाम्—दिदेविषति, दुद्यूषति। सिसेविषति, सुस्यूषति। ऋधु—अर्दिधिषति। ईर्त्सति। भ्रस्ज—बिभ्रज्जिषति, बिभ्रक्षति, बिभर्ज्जिषति, बिभर्क्षति। दम्भु—दिदम्भिषति, धिप्सति, धीप्सति। श्रि—उच्छिश्रयिषति, उच्छिश्रीषति। स्वृ—सिस्वरिषति, सुस्वूर्षति। यु—यियविषति, युयूषति। ऊर्णु—प्रोर्णुनविषति, प्रोर्णुनुविषति, प्रोर्णुनूषति। भर इति भृञित्येतस्य भौवादिकस्य ( भ्वा० ६३९ ) ग्रहणं शपा निर्देशात्। बिभरिषति, बुभूर्षति। ज्ञपि—जिज्ञपयिषति, ज्ञीप्सति। सन्—सिसनिषति। सिषासति। केचिदत्र भरज्ञपिसनितनिपतिदरिद्राणाम् इति पठन्ति। तितनिषति, तितंसति, तितांसति। पिपतिषति, पित्सति। दिदरिद्रिषति, दिदरिद्रासति। सनीति किम् ? देविता। भ्रष्टा॥

## क्लिशः क्त्वानिष्ठयोः॥ ५०॥

क्लिशः क्त्वानिष्ठयोर्वेडागमो भवति। क्लिष्ट्वा, क्लिशित्वा। क्लिष्टः, क्लिशितः। क्लिष्टवान्, क्लिशितवान्। 'क्लिशू विबाधने' ( क्र्या० ५३ ) इत्यस्य क्त्वायां विकल्पः सिद्ध एव, निष्ठायां तु 'यस्य विभाषा' ( ७.२.१५ ) इति प्रतिषेधः प्राप्नोति। 'क्लिश उपतापे' ( दिवा० ५० ) इत्येतस्य तु क्त्वायां निष्ठायां च नित्यमिडागमः प्राप्नोति। तदर्थं क्त्वाग्रहणं क्रियते॥

## पूङश्च॥ ५१ ॥

पूङश्च क्त्वानिष्ठयोर्वेडागमो भवति। पूत्वा, पवित्वा। सोमोऽतिपूतः, सोमोऽतिपवितः। पूतवान्, पवितवान्। 'श्र्युकः किति' ( ७.२.११ ) इति प्रतिषेधे प्राप्ते विकल्पो विधीयते॥

## वसतिक्षुधोरिट्॥ ५२ ॥

वसतेः क्षुधेश्च क्त्वानिष्ठयोरिडागमो भवति। उषित्वा। उषितः। उषितवान्। क्षुधित्वा। क्षुधितः। क्षुधितवान्। वसतीति विकरणो निर्देशार्थ एव। वस्तेस्तूदात्तत्वादेव भवितव्यमिटा। पुनरिड्ग्रहणं नित्यार्थम्॥

## अञ्चेः पूजायाम्॥ ५३ ॥

अञ्चेः पूजायामर्थे क्त्वानिष्ठयोरिडागमो भवति। अञ्चित्वा जानु जुहोति[1]। अञ्चिता

---

१ - चान्द्रस्वोपज्ञवृत्तौ ( ५.४.११३ ) अपीदमुदाहरणमुपलभ्यते। उभयत्रापि नेदं युक्तम्। नात्राञ्चतिः पूजार्थः किन्तु गत्यर्थ एव। अस्य वाक्यस्य मूलेषु ' जान्वाच्य जुहोति ' ( श० ब्रा० १२.४.४.६ ) इत्यादिषु वैदिकवाक्येषु ' भूमौ जानु निपात्य जुहुयात् ' इत्याद्यर्थकेषु न पूजार्थोऽञ्चतिः, नलोपनिषेधापत्तेः।

अस्य गुरवः। 'उदितो वा' ( ७.२.५६ ) इति क्त्वाप्रत्यये विकल्पः प्राप्तः, निष्ठायां 'यस्य विभाषा' ( ७.२.१५ ) इति प्रतिषेधः प्राप्तः, तदर्थमिदं प्रारब्धम्। पूजायामिति किम् ? उदक्तमुदकं कूपात्। उद्धृतमित्यर्थः॥

## लुभो विमोहने॥ ५४ ॥

लुभो विमोहनेऽर्थे वर्तमानात् क्त्वानिष्ठयोरिडागमो भवति। लुभित्वा, लोभित्वा। विलुभिताः केशाः। विलुभितः सीमन्तः। विलुभितानि पदानि। विमोहनमाकुलीकरणम्। तत्र क्त्वायां 'तीषसहलुभ०' ( ७.२.४८ ) इति विकल्पः, निष्ठायां 'यस्य विभाषा' ( ७.२.१५ ) इति प्रतिषेधः प्राप्तः। विमोहन इति किम् ? लुब्धो वृषलः। शीतेन पीडित इत्यर्थः। लुब्ध्वा, लुभित्वा, लोभित्वा। गार्ध्ये यथाप्राप्तमेव भवति॥

## जॄव्रश्च्योः क्त्वि॥ ५५ ॥

जॄ व्रश्चि इत्येतयोः क्त्वाप्रत्यय इडागमो भवति। जरित्वा, जरीत्वा। व्रश्चित्वा। जॄ इत्येतस्य 'श्र्युकः किति' ( ७.२.११ ) इति प्रतिषेधः प्राप्तः, व्रश्चेरूदित्त्वाद् विकल्पः। क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम्॥

## उदितो वा॥ ५६ ॥

उदितो धातोः क्त्वाप्रत्यये परतो वेडागमो भवति। शमु—शमित्वा, शान्त्वा। तमु—तमित्वा, तान्त्वा। दमु—दमित्वा, दान्त्वा॥

## सेऽसिचि कृतचृतच्छृदतृदनृतः॥ ५७ ॥

सकारादावसिच्यार्धधातुके कृत चृत छृद तृद नृत् इत्येतेभ्यो धातुभ्यो वेडागमो भवति। कृत—कर्त्स्यति। अकर्त्स्यत्। चिकृत्सति। कर्तिष्यति। अकर्तिष्यत्। चिकर्तिषति। चृत—चर्त्स्यति। अचर्त्स्यत्। चिचृत्सति। चर्तिष्यति। अचर्तिष्यत्। चिचर्तिषति। छृद—छर्त्स्यति। अच्छर्त्स्यत्। चिच्छृत्सति। छर्दिष्यति। अच्छर्दिष्यत्। चिच्छर्दिषति। तृद—तर्त्स्यति। अतर्त्स्यत्। तितृत्सति। तर्दिष्यति। अतर्दिष्यत्। तितर्दिषति। नृत्—नर्त्स्यति। अनर्त्स्यत्। निनृत्सति। नर्तिष्यति। अनर्तिष्यत्। निनर्तिषति। स इति किम्? कर्तिता। असिचीति किम् ? अकर्तीत्॥

## गमेरिट् परस्मैपदेषु॥ ५८ ॥

गमेर्धातोः सकारादेरार्धधातुकस्य परस्मैपदेष्विडागमो भवति। गमिष्यति। अगमिष्यत्। जिगमिषति। गमेरिति किम् ? चेष्यति। इड्ग्रहणं नित्यार्थम्। परस्मैपदे-

ष्विति किम् ? संगंसीष्ट। संगंस्यते। संजिगंसते। संजिगंसिष्यते। अधिजिगांसते। अधिजिगांसिष्यते। गमेरिङादेशस्य 'अज्झनगमां सनि' ( ६.४.१६ ) इति दीर्घत्वम्। स इत्येव—गन्तास्मि, गन्तास्वः, गन्तास्मः। आत्मनेपदेन समानपदस्थस्य गमेरयमिडागमो नेष्यते। अन्यत्र सर्वत्रैवेष्यते। कृत्यपि हि भवति, परस्मैपदलुकि च—संजिगमिषिता, अधिजिगमिषिता व्याकरणस्य, जिगमिष त्वमिति। पदशेषकारस्य पुनरिदं दर्शनम्—गम्युपलक्षणार्थं परस्मैपदग्रहणम्, परस्मैपदेषु यो गमिरुपलक्षितस्तस्मात् सकारादेरार्धधातुकस्येड् भवति। तन्मतेन संजिगंसिता, अधिजिगांसिता व्याकरणस्य इत्येव भवितव्यम्॥

## न वृद्भ्यश्चतुर्भ्यः॥ ५९ ॥

वृतादिभ्यश्चतुर्भ्य उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेष्विडागमो न भवति। वृतु—वर्त्स्यति। अवर्त्स्यत्। विवृत्सति। वृधु—वर्त्स्यति। अवर्त्स्यत्। विवृत्सति। शृधु—शर्त्स्यति। अशर्त्स्यत्। शिशृत्सति। स्यन्दू—स्यन्त्स्यति। अस्यन्त्स्यत्। सिस्यन्त्सति। चतुर्भ्य इति न वक्तव्यम्, वृद्ग्रहणं हि तत्र द्युतादिपरिसमाप्त्यर्थं क्रियते—कृपू सामर्थ्ये वृदिति, तदेव यदि वृतादिसमाप्त्यर्थमपि विज्ञायते न किंचिदनिष्टं प्राप्नोति। तत् क्रियते स्यन्देरूदिल्लक्षणमन्तरङ्गमपि विकल्पं प्रतिषेधो यथा बाधेतेति। चतुर्ग्रहणे हि सति तात्पर्येण स्यन्दिः संनिधापितो भवति। परस्मैपदेष्वित्येव—वर्तिष्यते। वर्तिषीष्ट। अवर्तिष्यत। विवर्तिषते। अत्राप्यात्मनेपदेन समानपदस्थेभ्यो वृतादिभ्य इडागम इष्यते। अन्यत्र सर्वत्र प्रतिषेधः। कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति—विवृत्सिता, विवृत्स त्वमिति॥

## तासि च क्लृपः॥ ६० ॥

कृप उत्तरस्य तासेः सकारादेश्चार्धधातुकस्य परस्मैपदेष्विडागमो न भवति। श्वः कल्प्ता। कल्प्स्यति। अकल्प्स्यत्। चिक्लृप्सति। परस्मैपदेष्वित्येव—कल्पितासे। कल्पिष्यते। कल्पिषीष्ट। अकल्पिष्यत। चिकल्पिषते। क्लृपेरप्यात्मनेपदेन समानपदस्थस्येडागम इष्यते। अन्यत्र प्रतिषेधः। कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति—चिक्लृप्सिता। चिक्लृप्स त्वमिति॥

## अचस्तास्वत् थल्यनिटो नित्यम्॥ ६१ ॥

तासौ ये नित्यानिटो धातवोऽजन्ताः, तेभ्यस्तासाविव थलीडागमो न भवति। याता—ययाथ। चेता—चिचेथ। नेता—निनेथ। होता—जुहोथ। अच इति किम् ? भेत्ता—बिभेदिथ। तास्वदिति किम् ? लूत्वा—लुलविथ। थलीति किम् ? याता—ययिव। ययिम। अनिड्ग्रहणं नित्यमित्यनेन विशेषणार्थम्। नित्यग्रहणं किम् ? विधोता,

विधविता—विदुधविथ। तासि विभाषितेट्, थलि नित्यमिडागमो भवति। तास्वदिति वतिनिर्देशः किमर्थः ? तासौ सतस्थलि प्रतिषेधार्थः। यो हि तासावसन्, असत्त्वात् च नित्यानिट्, तस्य थलि प्रतिषेधो न भवति। जघसिथ। उवयिथ। उत्तरसूत्रेऽपि तास्वदिति वर्तते। अदादेशो हि घसिर्वेञादेशश्च वयिस्तासौ नास्ति॥

## उपदेशेऽत्वतः॥ ६२ ॥

उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात् तासाविव थलीडागमो न भवति। पक्ता—पपक्थ। यष्टा—इयष्ठ। शक्ता—शशक्थ। उपदेश इति किम् ? कर्ष्टा—चकर्षिथ। अत्वत इति किम् ? भेत्ता—बिभेदिथ। तपरकरणं किम् ? राद्धा—रराधिथ। तास्वदित्येव—जिघृक्षति—जग्रहिथ। नित्यमनिट इत्येव—अङ्क्ता, अञ्जिता—आनञ्जिथ॥

## ऋतो भारद्वाजस्य॥ ६३ ॥

ऋकारान्ताद् धातोर्भारद्वाजस्याचार्यस्य मतेन तासाविव नित्यानिटस्थलीडागमो न भवति। स्मर्ता—सस्मर्थ। ध्वर्ता—दध्वर्थ। सिद्धे सत्यारम्भो नियमार्थः। ऋत एव भारद्वाजस्य, नान्येषां धातूनाम्। ययिथ। वविथ। पेचिथ। शेकिथ। तदयमर्थात् पूर्वयोर्योगयोर्विकल्पः। तपरकरणमृकारान्तस्य निवृत्त्यर्थम्। तथा हि सति विध्यर्थमेतत् स्यात्॥

## बभूथाततन्थजगृभ्मववर्थेति निगमे॥ ६४ ॥

बभूथ आततन्थ जगृभ्म ववर्थ इत्येतानि निपात्यन्ते निगमविषये। निगमो वेदः। बभूथ—त्वं हि होता प्रथमो बभूथ ( तै० सं० ३.१.४.४ )। बभूविथेति भाषायाम्। आततन्थ—येनान्तरिक्षमुर्वाततन्थ ( ऋ० ३.२२.२ )। आतेनिथेति भाषायाम्। जगृभ्म—जगृभ्मा ते दक्षिणमिन्द्र हस्तम् ( ऋ० १०.४७.१ )। जगृहिमेति भाषायाम्। ववर्थ—ववर्थ त्वं हि ज्योतिषा[1]। ववरिथेति भाषायाम्। क्रादिसूत्रादेवास्य प्रतिषेधे सिद्धे नियमार्थं वचनम्—निगम एव न भाषायामिति॥

## विभाषा सृजिदृशोः॥ ६५ ॥

सृजि दृशि इत्येतयोस्थलि विभाषेडागमो न भवति। सस्रष्ठ, ससर्जिथ। दद्रष्ठ, ददर्शिथ॥

---

१ - 'त्वं ज्योतिषा वि तमो ववर्थ' ( ऋ० १.९१.२२ )।

## इडत्त्यर्तिव्ययतीनाम् ॥ ६६ ॥

अत्ति अर्ति व्ययति इत्येतेषां थलीडागमो भवति। आदिथ। आरिथ। विव्ययिथ[1]। व्येञो 'न व्यो लिटि' ( ६.१.४६ ) इत्यात्वप्रतिषेधः। अत्तिव्ययत्योः 'ऋतो भारद्वाजस्य' ( ७.२.६३ ) इति नियमाद् विकल्पः[2]। अर्तेरपि नित्यः प्रतिषेधः। अत्रेड्ग्रहणं विस्पष्टार्थम्। विकल्पविधाने हि सत्यत्तिव्ययतिग्रहणमनर्थकम्, प्रतिषेधविधाने चार्तिग्रहणमिति नित्योऽयं विधिरिड्ग्रहणमन्तरेणापि शक्यते विज्ञातुम् ॥

## वस्वेकाजाद्घसाम् ॥ ६७ ॥

कृतद्विर्वचनानामेकाचां धातूनाम्, आकारान्तानां घसेश्च वसाविडागमो भवति। आदिवान्। आशिवान्। पेचिवान्। शेकिवान्। धात्वभ्यासयोरेकादेशे कृत एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एत एकाचो भवन्ति। आत्—ययिवान्। तस्थिवान्। घस्—जक्षिवान्। सिद्धे सत्यारम्भो नियमार्थः—एकाजादृघसामेव वसाविडागमो भवति नान्येषाम्। बिभिद्वान्। चिच्छिद्वान्। बभूवान्। शिश्रिवान्। क्रादिनियमात् प्रतिषेधाभावात् च य इट् प्रसक्तः स नियम्यते। आद्ग्रहणमनेकाज्ग्रहणार्थम्। द्विर्वचने हि कृत इटि हि सत्यातो लोपेन भवितव्यम्। द्ररिद्रातेस्तु 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' ( ३. १.३५ वा० ) इत्यामा भवितव्यम्। दरिद्रांचकार। अथाप्यां न क्रियते तथापि च दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधौ ( ६.४.११४ वा० ) इति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्त इडागमस्य निमित्तं विहतमिति नेडागमो भवति, ददरिद्र्वानिति भवितव्यम्। घसेरपि यदि ग्रहणमिह न क्रियते तदा द्विर्वचनात् परत्वाद् 'घसिभसोर्हलि च' ( ६.४. १०० ) इत्युपधालोपे कृते द्विर्वचनमेव न स्याद्, अनच्कत्वाद्। इह तु घसिग्रहणाद् उपधालोपमपि परत्वादिडागमो बाधते। तत्र कृते 'गमहनजनखनघसाम्०' ( ६.४.९८) इत्युपधालोपः। स च 'द्विर्वचनेऽचि' ( १.१.५९ ) इति द्विर्वचने कर्तव्ये स्थानिवद् भवति, तेन जक्षिवानिति सिध्यति ॥

## विभाषा गमहनविदविशाम् ॥ ६८ ॥

गम हन विद विश इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति। गम—जग्मिवान्, जगन्वान्। 'मो नो धातोः' ( ८.२.६४ ), 'म्वोश्च'[3] ( ८.२.६५ ) इति नकारः। हन—जघ्निवान्, जघन्वान्। विद—विविदिवान्, विविद्वान्। विश्—विविशिवान्, विविश्वान्। विशिना साहचर्यात् ( परि० १०३ ) इह विदेस्तौदादिकस्य लाभार्थस्य

१ – ' संविव्ययिथ ' इति बाल०। २ – ' प्राप्तः ' इत्यधिकं क्वचित्।
३ – ' म्वोश्च ' इति नास्ति मुद्रितेषु।

ग्रहणम्। ज्ञानार्थस्य तु नित्यं विविद्वानित्येव भवति ॥ दृशेश्चेति वक्तव्यम् ॥ ददृशिवान्, ददृश्वान् ( ऋ० ४.३३.६ )॥

## सनिं ससनिवांसम् ॥ ६९ ॥

सनोतेः सनतेर्वा धातोः सनिं ससनिवांसमिति निपात्यते। आजिं त्वाग्ने[1] ...... सनिं ससनिवांसम् ( मा० श्रौ० १.३.४.२ )। इडागम एत्वाभ्यासलोपाभावश्च[2] निपात्यते। सनिम्पूर्वादन्यत्र सेनिवांसमित्येव भवति। छन्दसीदं निपातनं विज्ञायते। भाषायां सेनिवांसमिति भवति ॥

## ऋद्धनोः स्ये ॥ ७० ॥

ऋकारान्तानां धातूनां हन्तेश्च स्य इडागमो भवति। करिष्यति। हरिष्यति। हनिष्यति। स्वरतेर्वेट्त्वाद् ऋद्धनोः स्य इत्येतद् भवति विप्रतिषेधेन। स्वरिष्यति। तपरकरणं विस्पष्टार्थम् ॥

## अञ्जेः सिचि ॥ ७१ ॥

अञ्जेः सिचीडागमो भवति। आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः। सिचीति किम्? अङ्क्ता, अञ्जिता। ऊदित्त्वाद् विभाषा ( ७.२.४४ ) भवति ॥

## स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७२ ॥

स्तु सु धूञ् इत्येतेभ्यः सिचि परस्मैपदे परत इडागमो भवति। अस्तावीत्। असावीत्। अधावीत्। परस्मैपदेष्विति किम् ? अस्तोष्ट। असोष्ट। अधोष्ट, अधविष्ट ॥

## यमरमनमातां सक् च ॥ ७३ ॥

यम रम नम इत्येतेषामङ्गानामाकारान्तानां च सगागमो भवति परस्मैपदे सिचि, इडागमश्च। यम्—अयंसीत्, अयंसिष्टाम्, अयंसिषुः। रम्—व्यरंसीत्[3], व्यरंसिष्टाम्, व्यरंसिषुः। नम्—अनंसीत्, अनंसिष्टाम्, अनंसिषुः। आकारान्तानाम्—अयासीत्, अयासिष्टाम्, अयासिषुः। यमादीनां हलन्तलक्षणा वृद्धिः ( ७.२.३ ) प्राप्ता, सा 'नेटि' ( ७.२.४ ) इति प्रतिषिध्यते। परस्मैपदेष्वित्येव—आयंस्त[4]। अरंस्त। अनंस्त ॥

---

१ - 'अञ्चित्वाग्ने' इति मुद्रितेपु। २ - 'एत्वाभ्यासलोपश्च' इति है०।

३ - 'अरंसीत्, अरंसिष्टाम्, अरंसिपुः' इत्यपपाठो है०।

४ - 'अयंस्त' इत्यपपाठो मुद्रितेपु।

## स्मिपूङ्रञ्ज्वशां सनि ॥ ७४ ॥

स्मिङ् पूङ् ऋ अञ्जू अशू इत्येतेषां धातूनां सनीडागमो भवति। सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते। ङकारग्रहणं पूञो मा भूत्। पुपूषति इत्येव तस्य भवति। अशेरूदितो ग्रहणाद् अश्नाते:[1] नित्यमिडागमोऽस्त्येव ॥

## किरश्च पञ्चभ्यः ॥ ७५ ॥

किरादिभ्यः पञ्चभ्यः सनीडागमो भवति। कॄ—चिकरिषति। गॄ—जिगरिषति। दृङ्—दिदरिषते। धृङ्—दिधरिषते। प्रच्छ—पिपृच्छिषति[2]। पञ्चभ्य इति किम् ? सिसृक्षति। किरतिगिरत्योः 'इट् सनि वा' (७.२.४१) इति विकल्पः प्राप्तः। 'वृतो वा' (७.२.३८) इति चास्येटो[3] दीर्घत्वं नेच्छन्ति ॥

## रुदादिभ्यः सार्वधातुके ॥ ७६ ॥

रुदादिभ्यः पञ्चभ्य[4] उत्तरस्य वलादेः सार्वधातुकस्येडागमो भवति। रुद्—रोदिति। स्वप्—स्वपिति। श्वस्—श्वसिति। अन्—प्राणिति। जक्ष्—जक्षिति। पञ्चभ्य इत्येव—जागर्ति। सार्वधातुक इति किम् ? स्वप्ता। वलादेरित्येव—रुदन्ति ॥

## ईशः से ॥ ७७ ॥

ईश उत्तरस्य स इत्येतस्य सार्वधातुकस्येडागमो भवति। ईशिषे। ईशिष्व ॥

## ईडजनोर्ध्वे च ॥ ७८ ॥

ईड जन इत्येताभ्यामुत्तरस्य ध्व इत्येतस्य स इत्येतस्य च सार्वधातुकस्येडागमो भवति। ईडिध्वे। ईडिध्वम्। ईडिषे। ईडिष्व। जनिध्वे। जनिध्वम्। जनिषे। जनिष्व। 'जनी प्रादुर्भावे' (दिवा० ४०) इत्यस्य छान्दसत्वात् श्यनो लुक्, उपधालोपाभावश्च। 'जन जनने' (जु० २२) इत्यस्यापि श्लुविकरणस्य ग्रहणमत्रेष्यते। तस्य कर्मव्यतिहारे व्यतिजज्ञिषे, व्यतिजज्ञिष्व, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम् इति च भवति। ध्वेशब्द ईशेरपि इडागम इष्यते—ईशिध्वे, ईशिध्वमिति। तदर्थं केचिद् 'ईडिजनोः स्ध्वे च' इति सूत्रं पठन्ति। तत्र सकारादेः सेशब्दस्य सूत्र एवोपादानात् चशब्दो भिन्नक्रम ईशेरनुकर्षणार्थो विज्ञायते। 'ईशीडिजनां सेध्वयोः' इत्येकमेव सूत्रं न पठितम् ? विचित्रा हि सूत्रस्य कृतिः पाणिनेरिति। ध्व इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिटा।

---

१ – 'अश्नोतेः' इत्यपपाठो मुद्रितेषु। २ – 'पिप्रच्छिषति' इत्यपपाठो मुद्रितेषु।
३ – 'च' रहितः पाठो न्यासे। ४ – 'पञ्चभ्यः' इति नास्ति मुद्रितेषु।

लोटि पुनरेकदेशविकृतस्यानन्यत्वाद् ( परि० ३७ ) भवितव्यमिटा ॥

## लिङः सलोपोऽनन्त्यस्य ॥ ७९ ॥

सार्वधातुक इति वर्तते। सार्वधातुके यो लिङ् तस्यानन्त्यस्य सकारस्य लोपो भवति। कः पुनरनन्त्यो लिङः सकारः ? यो यासुट्सुट्सीयुटाम्। कुर्यात्, कुर्याताम्, कुर्युः। कुर्वीत, कुर्वीयाताम्, कुर्वीरन्। अनन्त्यस्येति किम् ? कुर्युः। कुर्याः। सार्वधातुक इत्येव—क्रियास्ताम्, क्रियासुः। कृषीष्ट, कृषीयास्ताम्, कृषीरन् ॥

## अतो येयः ॥ ८० ॥

अकारान्तादङ्गादुत्तरस्य या इत्येतस्य सार्वधातुकस्येय् इत्ययमादेशो भवति। पचेत्, पचेताम्, पचेयुरित्यत्र 'उस्यपदान्तात्' ( ६.१.९६ ) इति पररूपं बाधितम्। अत इति किम् ? चिनुयात्। सुनुयात्। तपरकरणं किम् ? यायात्। सार्वधातुक इत्येव—चिकीर्ष्यात्। ननु च अतो लोपेन ( ६.४.४८ ) अत्र भवितव्यम् ? पचेदित्यत्रापि हि तर्हि 'अतो दीर्घो यञि' ( ७.३.१०१ ) इति दीर्घत्वेन भवितव्यम्। तदनेनावश्यं विध्यन्तरं बाधितव्यम्, स यथैव दीर्घस्य बाधक एवमतो लोपस्यापि बाधकः स्यात्। स्यादेतदेवं यदि दीर्घः सार्वधातुके विधीयते। अथ तु तिङि विधीयते, तदा येन नाप्राप्तिन्यायेन ( परि० ५७ ) दीर्घस्यैव बाधकः स्याद् न पुनरतो लोपस्य। येय इत्यविभक्तिको निर्देशः। य इति वा षष्ठीनिर्देशे यलोपस्यासिद्धत्वमनाश्रित्य 'आद् गुणः' ( ६.१.८७ ) कृतः, सौत्रत्वाद् निर्देशस्येति। केचिद् अत्र अतो यासिय इति सूत्रं पठन्ति। तेषां सकारान्तः स्थानी, षष्ठीसमासश्च ॥

## आतो ङितः ॥ ८१ ॥

आकारस्य ङिदवयवस्य अकारान्ताद्[1] अङ्गादुत्तरस्य सार्वधातुकस्येय् इत्ययमादेशो भवति। पचेते। पचेथे। पचेताम्। पचेथाम्। यजेते। यजेथे। यजेताम्। यजेथाम्। 'सार्वधातुकमपित्' ( १.२.४ ) इत्यत्र न ङितीव ङिद्वद्[2] इत्येवमङ्गीक्रियते, अपि तु ङित इव ङिद्वदिति[2]। पूर्वसूत्र एव उच्चुकुटिषतीति प्रसिद्धये तथाङ्गीकरणम्। यदि गाङ्कुटादि-सूत्रे ( १.२.१ ) ङित इव ङिद्वद्भवतीत्येवमङ्गीक्रियते, तदा 'अनुदात्तङित आत्मनेपदम्' ( १.३.१२ ) इत्यात्मनेपदं प्राप्नोतीति। आत इति किम् ? पचन्ति। यजन्ति। पचन्ते। यजन्ते। ङित इति किम् ? पचावहै, पचामहै। अत इत्येव—चिन्वाते। सुन्वाते। तपरकरणं किम् ? मिमाते। मिमाथे ॥

---

१ – 'आकारान्ताद्' इत्यपपाठो मुद्रितेषु।

२ – नायमेकान्तः सिद्धान्तः, तास्यादिसूत्रोक्तिविरोधात् ( द्र० — ६.१.१८६ का० )।

## आने मुक् ॥ ८२ ॥

आने परतोऽङ्गस्यातो मुगागमो भवति। पचमानः। यजमानः। अकारमात्रभक्तोऽयं मुक् अदुपदेशग्रहणेन गृह्यत इत्यदुपदेशात् ० ( ६.१.१८६ ) इति लसार्वधातुकानुदात्तत्वं भवति। यद्येवम् 'आतो ङितः' ( ७.२.८१ ) इत्ययमपि विधिः प्राप्नोति? तपरनिर्देशाद् न भविष्यति। मुकि सत्यध्यर्धमात्रो भवति। लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोति ? नैष दोषः। उपदेशग्रहणं तत्र क्रियते। तेनोपदेशादूर्ध्वं सत्यपि कालभेदे भवितव्यम्। तथा च पचावः, पचाम इत्यत्रापि भवति॥

## ईदासः ॥ ८३ ॥

आस उत्तरस्यानशब्दस्य ईकारादेशो भवति। आसीनो यजते। अत्र पञ्चम्या[१] परस्य षष्ठी कल्प्यते॥

## अष्टन आ विभक्तौ ॥ ८४ ॥

अष्टनो विभक्तौ परत आकारादेशो भवति। अष्टाभिः। अष्टाभ्यः। अष्टानाम्। अष्टासु। विभक्ताविति किम् ? अष्टत्वम्। अष्टता। आ इति व्यक्तिनिर्देशोऽयम्, आकृतिनिर्देशे तु नकारस्थानेऽनुनासिकाकारः स्यात्। विकल्पेनायमाकारो भवति, एतद् ज्ञापितम् 'अष्टनो दीर्घात्' ( ६.१.१७२ ) इति दीर्घग्रहणाद्, 'अष्टाभ्य औश्' ( ७.१.२१) इति च कृतात्वस्य निर्देशात्। तेनाष्टभिरष्टभ्य इत्यपि भवति। तदन्तविधिश्चात्रेष्यते। प्रिया अष्टौ येषां ते प्रियाष्टानः, प्रियाष्टौ॥

## रायो हलि ॥ ८५ ॥

रै इत्येतस्य हलादौ विभक्तौ परत आकारादेशो भवति। राभ्याम्। राभिः। हलीति किम् ? रायौ। रायः। विभक्ताविति किम् ? रैत्वम्। रैता। 'मृजेर्वृद्धिः' (७.२.११४) इत्यतः प्राग् विभक्त्यधिकार[२]॥

## युष्मदस्मदोरनादेशे ॥ ८६ ॥

युष्मदस्मदित्येतयोरनादेशे विभक्तौ परत आकारादेशो भवति। युष्माभिः। अस्माभिः। युष्मासु। अस्मासु। अनादेश इति किम् ? युष्मत्। अस्मत्। हलीत्यधिकारादप्यत्र न स्यात्। उत्तरत्र त्वनादेशग्रहणेन प्रयोजनं 'योऽचि' ( ७.२.८९ ) इति तदिहैव क्रियते॥

---

१ – 'पञ्चम्याः' इति है० तारा० ।    २ – मृजेरित्यादिपाठः पूर्वसूत्रान्ते स्यात्।

## द्वितीयायां च ॥ ८७ ॥

द्वितीयायां च परतो युष्मदस्मदोराकारादेशो भवति। त्वाम्। माम्। युवाम्। आवाम्। युष्मान्। अस्मान्। आदेशार्थं वचनम्॥

## प्रथमायाश्च द्विवचने भाषायाम् ॥ ८८ ॥

प्रथमायाश्च द्विवचने परतो भाषायां विषये युष्मदस्मदोराकारादेशो भवति। युवाम्। आवाम्। प्रथमाया इति किम् ? युवयोः। आवयोः। द्विवचन इति किम् ? त्वम्। अहम्। यूयम्। वयम्। भाषायामिति किम् ? युवं वस्त्राणि पीवसा वसाथे ( ऋ० १.१५२.१ )॥

## योऽचि ॥ ८९ ॥

अजादौ विभक्तावनादेशे युष्मदस्मदोर्यकारादेशो भवति। त्वया। मया। त्वयि। मयि। युवयोः। आवयोः। अचीति किम् ? युवाभ्याम्। आवाभ्याम्। 'युष्मदस्मदोरनादेशे' ( ७.२.८६ ) इत्यत्र यदि हलि ( ७.२.८५ ) इत्यनुवर्तते शक्यमकर्तुमचीत्येतत्। तत् क्रियते विस्पष्टार्थम्। अनादेश इत्येव—त्वद् गच्छति। मद् गच्छति॥

## शेषे लोपः ॥ ९० ॥

शेषे विभक्तौ युष्मदस्मदोर्लोपो भवति। कश्च शेषः ? यत्राकारो यकारश्च न विहितः।

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि।
यान्यद्विवचनान्यत्र तेषु लोपो विधीयते॥

त्वम्। अहम्। यूयम्। वयम्। तुभ्यम्। मह्यम्। युष्मभ्यम्। अस्मभ्यम्। त्वत्। मत्। युष्मत्। अस्मत्। तव। मम। युष्माकम्। अस्माकम्। शेषग्रहणं विस्पष्टार्थम्। शेषे लोपे कृते स्त्रियां टाप् कस्माद् न भवति—त्वं ब्राह्मणी, अहं ब्राह्मणी ? 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि० ८५ ), अलिङ्गे वा युष्मदस्मदी इति। केचित् तु शेषे लोपं टिलोपमिच्छन्ति। कथम् ? वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य ( ७.२.९१ ) विधीयन्ते। तेन मपर्यन्ताद् योऽन्यः स शेष इति। तत्रायं लोप इति टिलोपो भवति॥

## मपर्यन्तस्य ॥ ९१ ॥

मपर्यन्तस्येत्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामो मपर्यन्तस्येत्येवं तद् वेदितव्यम्।

वक्ष्यति—'युवावौ द्विवचने' ( ७.२.९२ )—युवाम्। आवाम्। मपर्यन्तस्येति किम् ? युवकाम् , आवकामिति साकच्कस्य मा भूत्। 'त्वमावेकवचने' ( ७.२.९७ )—त्वया। मया। मपर्यन्तस्येति किम् ? सर्वस्य मा भूत्। तथा च सति त्वमयोरकारस्य 'योऽचि' ( ७.२.८९ ) इति यकारे कृतेऽनिष्टं रूपं स्यात्। मान्तस्येत्येव सिद्धेऽस्मिन् यत् परिग्रहणं कृतम्, अवधिद्योतनार्थं तत्, मान्ते मा भूत्। कदा? यदा ण्यन्तयोः क्विपि मान्तत्वं विद्यते युष्मदस्मदोः। स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वाद् ( महाभाष्य १.१.५८ वा० ) न विद्यते ॥

## युवावौ द्विवचने ॥ ९२ ॥

द्विवचने इत्यर्थग्रहणम्। द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने युव आव इत्येतावादेशौ भवतः। युवाम्। आवाम्। युवाभ्याम्। आवाभ्याम्। युवयोः। आवयोः। यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्यान्यसंख्यत्वादेकवचनं बहुवचनं वा भवति, तदापि द्व्यर्थयोर्युष्मदस्मदोर्युवावौ भवतः, यदि 'त्वाहौ सौ' ( ७.२.९४ ) इत्येवमादिना आदेशान्तरेण न बाध्येते। अतिक्रान्तं युवाम् अतियुवाम्। अत्यावाम्। अतिक्रान्तान् युवाम् अतियुवान्। अत्यावान्। अतिक्रान्तेन युवाम् अतियुवया। अत्यावया। अतिक्रान्तैर्युवाम् अतियुवाभिः। अत्यावाभिः। अतिक्रान्तेभ्यो युवाम् अतियुवभ्यम्। अत्यावभ्यम्। अतिक्रान्ताद् युवाम् अतियुवत्। अत्यावत्। अतिक्रान्तेभ्यो युवाम् अतियुवत्। अत्यावत्। अतिक्रान्तानां युवाम् अतियुवाकम्। अत्यावाकम्। अतिक्रान्ते युवाम्। अतियुवयि। अत्यावयि। अतिक्रान्तेषु युवाम् अतियुवासु। अत्यावासु। त्वाहादीनां तु विषये परत्वात् त एव भवन्ति। अतिक्रान्तो युवाम् अतित्वम्। अत्यहम्। अतिक्रान्ता युवाम् अतियूयम्। अतिवयम्। अतिक्रान्ताय युवाम् अतितुभ्यम्। अतिमह्यम्। अतिक्रान्तस्य युवाम् अतितव। अतिमम। यदा तु युष्मदस्मदी एकत्वबहुत्वयोर्वर्तेते, समासार्थस्तु द्वित्वे, तदा युवावौ न भवतः। अतिक्रान्तौ त्वाम् अतित्वाम्। अतिमाम्। अतिक्रान्तौ युष्मान् अतियुष्माम्। अत्यस्माम्[1]। एवमुन्नेयम्[2]॥

## यूयवयौ जसि ॥ ९३ ॥

युष्मदस्मदोर्मपर्यन्तस्य जसि परतो यूय वय इत्येतावादेशौ भवतः। यूयम्। वयम्। परमयूयम्। परमवयम्। अतियूयम्। अतिवयम्। तदन्तविधिरत्र भवति[3]॥

---

१ – ' अतियुष्मान् , अत्यस्मान् ' इत्यपपाठो मुद्रितेषु।

२ – ' एवं सर्वत्र ज्ञेयम् ' इति बाल०।

३ – ' अङ्गाधिकारे तस्य च तदुत्तरपदस्य च ' ( सीर० प० ७७ ) इति ' इति पाठोऽधिको मुद्रितेषु दृश्यते। स तु न युक्तः, न्यासपदमञ्जर्योर्दर्शनात्।

## त्वाहौ सौ ॥ ९४ ॥

युष्मदस्मदोर्मपर्यन्तस्य सौ परे त्व अह इत्येतावादेशौ भवतः। त्वम्। अहम्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्॥

## तुभ्यमह्यौ ङयि ॥ ९५ ॥

युष्मदस्मदोर्मपर्यन्तस्य तुभ्य मह्य इत्येतावादेशौ भवतो ङयि परतः। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्॥

## तवममौ ङसि ॥ ९६ ॥

युष्मदस्मदोर्मपर्यन्तस्य तव मम इत्येतावादेशौ भवतो ङसि परतः। तव। मम। परमतव। परममम। अतितव। अतिमम॥

## त्वमावेकवचने ॥ ९७ ॥

एकवचने इत्यर्थनिर्देशः। एकवचने ये युष्मदस्मदी एकार्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने त्व म इत्येतावादेशौ भवतः। त्वाम्। माम्। त्वया। मया। त्वत्। मत्। त्वयि। मयि। यदा समास एकार्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसंख्यत्वाद् द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः। आदेशान्तराणां तु 'त्वाहौ सौ' (७.२.९४) इत्येवमादीनां विषये पूर्वविप्रतिषेधेन त एवेष्यन्ते। अतिक्रान्तस्त्वाम् अतित्वम्। अत्यहम्। अतिक्रान्तौ त्वाम् अतित्वाम्। अतिमाम्। अतिक्रान्तान् त्वामतित्वान्। अतिमान्। अतिक्रान्ताभ्यां त्वामतित्वाभ्याम्। अतिमाभ्याम्। अतिक्रान्तैस्त्वामतित्वाभिः। अतिमाभिः। इत्येवमाद्युदाहर्तव्यम्॥

## प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥

एकवचने इत्यनुवर्तते। प्रत्यय उत्तरपदे च परत एकवचने वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य त्व म इत्येतावादेशौ भवतः। तवायं त्वदीयः। मदीयः। अतिशयेन त्वं त्वत्तरः। मत्तरः। त्वामिच्छति त्वद्यति। मद्यति। त्वमिवाचरति त्वद्यते। मद्यते। उत्तरपदे—तव पुत्रः त्वत्पुत्रः। मत्पुत्रः। त्वं नाथोऽस्य त्वन्नाथः। मन्नाथः। एकवचने इत्येव—युष्माकमिदं युष्मदीयम्। अस्मदीयम्। युष्माकं पुत्रोऽस्माकं पुत्रो युष्मत्पुत्रोऽस्मत्पुत्रः। विभक्तावित्यधिकारात् पूर्वयोगो विभक्तावेव। ततोऽन्यत्रापि प्रत्यय उत्तरपदे च यथा स्यादित्ययमारम्भः। ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्यामेवादेशौ भविष्यतः? नैवं शक्यम्, लुका तस्या भवितव्यम्। बहिरङ्गो लुक् अन्तरङ्गावादेशौ, प्रथमं तौ भविष्यतः?

एतदेव तद्यदिशवचनं ज्ञापकम्—'अन्तरङ्गानपि विधीन् बहिरङ्गोऽपि लुग् बाधते' ( परि० ५२ ) इति। तेन गोमान् प्रियोऽस्य गोमत्प्रिय इत्येवमादौ नुमादि लुका बाध्यते। एवं च सति 'त्वाहौ सौ' ( ७.२.९४ ) इत्येवमादयोऽपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति। त्वं प्रधानमेषां त्वत्प्रधानाः। मत्प्रधानाः। यूयं पुत्रा अस्य युष्मत्पुत्रः। अस्मत्पुत्रः। तुभ्यं हितं त्वद्धितम्। मद्धितम्। तव पुत्रः त्वत्पुत्रः। मत्पुत्रः। अथ किमर्थमेषां त्वाहादीनां बाधनार्थमेतद् न विज्ञायते ? लक्ष्यस्थित्यपेक्षया। ज्ञापकार्थे ह्येतस्मिन् बहुतरमिष्टं संगृह्यते॥

## त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ९९ ॥

त्रि चतुर् इत्येतयोः स्त्रियां वर्तमानयोस्तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौ परतः। तिस्रः। चतस्रः। तिसृभिः। चतसृभिः। स्त्रियामिति किम् ? त्रयः। चत्वारः। त्रीणि। चत्वारि। स्त्रियामिति चैतत् त्रिचतुरोरेव विशेषणं नाङ्गस्य। तेन यदा त्रिचतुःशब्दौ स्त्रियाम्, अङ्गं तु लिङ्गान्तरे, तदाप्यादेशौ भवत एव। प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मणः[1], प्रियतिस्रौ, प्रियतिस्रः। प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसृणि। प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः। प्रियचतसृ, प्रियचतसृणी, प्रियचतसृणि। 'नद्यृतश्च' ( ५.४.१५३ ) इति समासान्तो न भवति, विभक्त्याश्रयत्वेन तिसृभावस्य बहिरङ्गलक्षणत्वात्। यदा तु त्रिचतुःशब्दौ लिङ्गान्तरे, स्त्रियामङ्गम्, तदादेशौ न भवतः! प्रियास्त्रयोऽस्याः, प्रियाणि त्रीणि वा अस्या ब्राह्मण्याः, सा प्रियत्रिः, प्रियत्री, प्रियत्रयः। प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः ॥ तिसृभावे संज्ञायां कन्युपसंख्यानं कर्तव्यम् ॥ तिसृका नाम ग्रामः ॥ चतसर्याद्युदात्तनिपातनं कर्तव्यम् ॥ चतस्रः पश्येत्यत्र 'चतुरः शसि' ( ६.१.१६७ ) इत्येष स्वरो मा भूत्। चतसृणामित्यत्र तु 'षट्त्रिचतुर्भ्यो हलादिः' ( ६.१.१७९ ) इत्येव स्वरो भवति। हलादिग्रहणसामर्थ्याद् निपातनस्वरो बाध्यते॥

## अचि र ऋतः ॥ १०० ॥

तिसृ चतसृ इत्येतयोर्ऋतः स्थाने रेफादेशो भवत्यजादौ विभक्तौ परतः। तिस्रस्तिष्ठन्ति। तिस्रः पश्य। चतस्रस्तिष्ठन्ति। चतस्रः पश्य। प्रियतिस्र आनय। प्रियचतस्र आनय। प्रियतिस्रः स्वम्। प्रियचतस्रः स्वम्। प्रियतिस्रि निधेहि। प्रियचतस्रि निधेहि। पूर्वसवर्णोत्त्वङिसर्वनामस्थानगुणानामपवादः। परमपि ङिसर्वनामस्थानगुणं पूर्वविप्रतिषेधेन बाधते। अचीति किम् ? तिसृभिः। चतसृभिः। ऋत इति किम् ? तिसृचतस्रोः प्रतिपत्त्यर्थम्, अन्यथा हि तदपवादस्त्रिचतुरोरेवायमादेशो विज्ञायेत॥

---

१ – 'इति' इत्यधिकं बाल०।

## जराया जरसन्यतरस्याम् ॥ १०१ ॥

जरा इत्येतस्य जरसित्ययमादेशो भवत्यन्यतरस्यामजादौ विभक्तौ परतः। जरसा दन्ताः शीर्यन्ते, जरया दन्ताः शीर्यन्ते। जरसे त्वा परिदद्युः, जरायै त्वा परिदद्युः। अचीत्येव— जराभ्याम्। जराभिः। नुमो विधानाद् जरसादेशो भवति विप्रतिषेधेन। अतिजरांसि ब्राह्मणकुलानि। इहातिजरसं ब्राह्मणकुलं पश्येति लुग् न भवति, आनुपूर्व्या सिद्धत्वात्। अतिजर अम् इति स्थिते लुगम्भावो जरस्भाव इति त्रीणि कार्याणि युगपत् प्राप्नुवन्ति। तत्र लुक् तावदपवादत्वादम्भावेन बाध्यते, अम्भावोऽपि परत्वाद् जरसादेशेन। न च पुनर्लुक्शास्त्रं प्रवर्तते, भ्रष्टावसरत्वाद्, इत्येवमेव भवति अतिजरसं ब्राह्मणकुलं पश्येति। प्रथमैकवचने तृतीयाबहुवचने चातिजरं ब्राह्मणकुलं तिष्ठति, अतिजरैरिति च भवितव्यमिति गोनर्दीयमतेन। किं कारणम् ? 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि० ८५) इति। अन्ये त्वनित्यत्वादस्याः परिभाषाया अतिजरसं ब्राह्मणकुलं तिष्ठति, अतिजरसैरित्येवं भवितव्यमिति मन्यन्ते ॥

## त्यदादीनामः ॥ १०२ ॥

त्यदित्येवमादीनामकारादेशो भवति विभक्तौ परतः। त्यद्—स्यः, त्यौ, त्ये। तद्— सः, तौ, ते। यद्—यः, यौ, ये। एतद्—एषः, एतौ, एते। इदम्—अयम्,[1] इमौ, इमे। अदस्—असौ,[1] अमू, अमी। द्वि—द्वौ, द्वाभ्याम्। द्विपर्यन्तानां त्यदादीनामत्वमिष्यते। इह न भवति—भवत्—भवान्। संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ता इतीह न भवति— त्यद्, त्यदौ, त्यदः। अतित्यद्, अतित्यदौ, अतित्यदः। त्यदादिप्रधाने तु शब्दे भवत्येव। परमसः, परमतौ, परमते ॥

## किमः कः ॥ १०३ ॥

किम् इत्येतस्य क इत्ययमादेशो भवति विभक्तौ परतः। कः, कौ, के। साकच्कस्याप्ययमादेशो भवति, तेनाकार एव किमो न विधीयते—किमोऽदिति ॥

## कु तिहोः ॥ १०४ ॥

तकारादौ हकारादौ च विभक्तौ परतः किमित्येतस्य कु इत्ययमादेशो भवति। कुतः। कुत्र। कुह। तिहोरितीकार उच्चारणार्थः ॥

## क्वाति ॥ १०५ ॥

---

१ - ' अयम् , असौ ' इत्येतौ त्यदाद्यत्वं न प्रयोजयतः।

अतीत्येतस्यां विभक्तौ परतः किमित्येतस्य क्व इत्ययमादेशो भवति। क्व गमिष्यसि। क्व भोक्ष्यते। आदेशान्तरवचनम् ओर्गुण-( ६.४.१४६ )-निवृत्त्यर्थम्। किमो ड्वदिति प्रत्ययान्तरं न विधीयते, साकच्कार्थम्॥

## तदोः सः सावनन्त्ययोः॥ १०६ ॥

त्यदादीनां तकारदकारयोरनन्त्ययोः सकारादेशो भवति सौ परतः। त्यद्—स्यः। तद्—सः। एतद्—एषः। अदस्—असौ। अनन्त्ययोरिति किम् ? हे स। सा॥

## अदस औ सुलोपश्च॥ १०७ ॥

अदसः सौ परतः सकारस्य औकारादेशो भवति, सोश्च लोपो भवति। असौ ॥ औत्वप्रतिषेधः साकच्काद् वा वक्तव्यः सादुत्वं च॥ यदा चौत्वप्रतिषेधः तदा सकारादुत्तरस्योत्वं भवति। असुकः। असकौ[1] ॥ उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः॥ परमाहम्। परमायम्। परमानेन।

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ।
ह्रस्वाल्लुप्येत संबुद्धिर्न हलः प्रकृतं हि तत् ॥ १ ॥
आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात् ।
प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ॥ २ ॥

## इदमो मः॥ १०८ ॥

इदमः सौ परतो मकारोऽन्तादेशो भवति। इयम्। अयम्। इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम्॥

## दश्च ॥ १०९ ॥

इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः। इमौ, इमे। इमम्, इमौ, इमान्॥

## यः सौ॥ ११० ॥

इदमो दकारस्य[2] यकारादेशो भवति सौ परतः। इयम्। उत्तरसूत्रे पुंसीति वचनात् स्त्रियामयं यकारः॥

---

१ - ' असुकौ ' इत्यपपाठो है० तारा०।
२ - ' मकारस्य ' इत्यपपाठो मुद्रितेषु।

## इदोऽय् पुंसि ॥ १११ ॥

इदम इद्रूपस्य पुंसि सौ परतोऽय् इत्ययमादेशो भवति। अयं ब्राह्मणः। पुंसीति किम्? इयं ब्राह्मणी॥

## अनाप्यकः ॥ ११२ ॥

इदमोऽककारस्येद्रूपस्य स्थानेऽन् इत्ययमादेशो भवत्यापि विभक्तौ परतः। अनेन। अनयोः। अक इति किम् ? इमकेन। इमकयोः। आपीति प्रत्याहारः तृतीयैकवचनात् प्रभृति सुपः पकारेण॥

## हलि लोपः ॥ ११३ ॥

हलादौ विभक्तौ परत इदमोऽककारस्येद्रूपस्य लोपो भवति। आभ्याम्। एभिः। एभ्यः। एषाम्। एषु। 'नानर्थकेऽलोन्त्यविधिः०' ( परि० ९६ ) इति सर्वस्यायमिद्रूपस्य लोपः। अथ वा नायमिल्लोपः। 'अनाप्यकः' ( ७.२.११२ ) इत्यन्ग्रहणमनुवर्तते॥

## मृजेर्वृद्धिः ॥ ११४ ॥

विभक्ताविति निवृत्तम्। मृजेरङ्गस्येको वृद्धिर्भवति। मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्। मृजेरिति धातुग्रहणमिदम्, 'धातोश्च कार्यमुच्यमानं धातुप्रत्यय एव वेदितव्यम्' ( परि० ८८ )। तेन कंसपरिमृड्भ्याम्, कंसपरिमृड्भिरित्यत्र न भवति॥

## अचो ञ्णिति ॥ ११५ ॥

अजन्तस्याङ्गस्य ञिति णिति च प्रत्यये वृद्धिर्भवति। ञिति—एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ। कारः। हारः। णिति—गौः, गावौ, गावः। सखायौ, सखायः। जैत्रम्। यौत्रम्। च्यौत्नः। जयतेर्यौतेश्च 'उणादयो बहुलम्' ( ३.३.१ ) इति ष्ट्रण् प्रत्ययः। च्यवतेरपि त्नण्॥

## अत उपधायाः ॥ ११६ ॥

अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये वृद्धिर्भवति। पाकः। त्यागः। यागः। पाचयति। पाचकः। पाठयति। पाठकः। अत इति किम् ? भेदयति। भेदकः। उपधाया इति किम् ? चकासयति। तक्षकः॥

## तद्धितेष्वचामादेः ॥ ११७ ॥

तद्धिते ञिति णिति च प्रत्यये परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति। गार्ग्यः। वात्स्यः। दाक्षिः। प्लाक्षिः। णिति—औपगवः। कापटवः। त्वाष्ट्रः, जागत इत्यत्राचामादेर्वृद्धिरन्त्योपधालक्षणां वृद्धिं बाधते॥

## किति च॥ ११८ ॥

किति च तद्धिते परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति। 'नडादिभ्यः फक्' (४.१.९९)—नाडायनः। चारायणः। 'प्राग् वहतेष्ठक्' (४.४.१)—आक्षिकः। शालाकिकः॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तौ सप्तमाध्यायस्य द्वितीयः पादः॥



# ॥ सप्तमाध्यायस्य तृतीयः पादः ॥

## देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्॥ १ ॥

देविका शिंशपा दित्यवाट् दीर्घसत्र श्रेयस् इत्येतेषामङ्गानामचामादेरचः स्थाने वृद्धिप्रसङ्ग आकारो भवति ञिति णिति किति तद्धिते परतः। देविकायां भवमुदकं दाविकमुदकम्। देविकाकूले भवाः शालयो दाविकाकूलाः शालयः। पूर्वदेविका नाम प्राचां ग्रामः, तत्र भवः पूर्वदाविकः। 'प्राचां ग्रामनगराणाम्' (७.३.१४) इत्युत्तरपदवृद्धिः, साप्याकार एव भवति। शिंशपा—शिंशपाया विकारश्चमसः शांशपश्चमसः। पलाशादिरयं तेन पक्षेऽण् (४.३.१४१) अनुदात्तादिलक्षणो वाञ् (४.३.१४०)। शिंशपास्थले भवाः शांशपास्थला देवाः[1]। पूर्वशिंशपा नाम प्राचां ग्रामः, तत्र भवः पूर्वशांशपः। दित्यवाट्—दित्यौह इदं दात्यौहम्। दीर्घसत्र—दीर्घसत्रे भवं दार्घसत्रम्। श्रेयस्—श्रेयसि भवं श्रायसम् ॥ वहीनरस्येद्वचनं कर्तव्यम्॥ वृद्धिविषयेऽचामादेरचः स्थाने वहीनरस्येकारादेशो भवति। वहीनरस्यापत्यं वैहीनरिः। केचित् तु विहीनरस्यैव वैहीनरिमिच्छन्ति॥

१ - 'देवाः' इति नास्ति बाल०।

## केकयमित्रयुप्रलयानां यादेरियः ॥ २ ॥

केकय मित्रयु प्रलय इत्येतेषां यकारादेरिय इत्ययमादेशो भवति तद्धिते ञिति णिति किति च परतः। केकयस्यापत्यं कैकेयः। 'जनपदशब्दात् क्षत्रियादञ्' (४.१.१६८) इत्यञ्प्रत्ययः। मित्रयुभावेन श्लाघते मैत्रेयिकया श्लाघते। 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' (५.१.१३४) इति वुञ्। लौकिकं हि तत्र गोत्रं गृह्यते। लोके च ऋषिशब्दो गोत्रमित्यभिधीयते। प्रलय—प्रलयादागतं प्रालेयमुदकम् ॥

## न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ३ ॥

यकारवकाराभ्यां पदान्ताभ्याम्[1] उत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति, ताभ्यां तु यकारवकाराभ्यां पूर्वमैजागमौ भवतो ञिति णिति किति च तद्धिते परतः। यकारादैकारः, वकारादौकारः। व्यसने भवं वैयसनम्। व्याकरणमधीते वैयाकरणः। स्वश्वस्यापत्यं सौवश्वः। य्वाभ्यामिति किम् ? न्रर्थस्यापत्यं न्रार्थिः। पदान्ताभ्यामिति किम् ? यष्टिः प्रहरणमस्य याष्टीकः। यतश्छात्रा याताः। प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थम्, इह मा भूत्—दाध्यश्विः, माध्वश्विरिति। न ह्यत्र य्वाभ्यामुत्तरस्य वृद्धिप्रसङ्गोऽस्ति। वृद्धेरभावात् प्रतिषेधोऽपि नास्तीत्यप्रसङ्गः। उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते। पूर्वत्र्यलिन्दे भवः पूर्वत्रैयलिन्दः। यत्र तूत्तरपदसंबन्धी यण् न भवति, तत्र नेष्यते प्रतिषेधः। द्वे अशीती भृतो भूतो भावी वा द्व्याशीतिकः ॥

## द्वारादीनां च ॥ ४ ॥

द्वार इत्येवमादीनां य्वाभ्याम् उत्तरस्य[2] अचामादेरचः स्थाने वृद्धिर्न भवति, पूर्वौ तु ताभ्यामैजागमौ भवतः। द्वारे नियुक्तो दौवारिकः। द्वारपालस्येदं दौवारपालम्। तदादिविधिश्चात्र भवति। स्वरमधिकृत्य कृतो ग्रन्थः सौवरः। सौवरोऽध्यायः, सौवर्यः सप्तम्य इति। व्यल्कशे भवो वैयल्कशः। स्वस्तीत्याह सौवस्तिकः। स्वर्भवः सौवः। 'अव्ययानां भमात्रे टिलोपः' (६.४.१४४ वा०)। स्वर्गमनमाह सौवर्गमनिकः। स्वाध्याय इति केचित् पठन्ति, तदनर्थकम्। शोभनोऽध्याय इत्येतस्यां व्युत्पत्तौ तु पूर्वेणैव सिद्धम्। अथाप्येवं व्युत्पत्तिः क्रियते—स्वोऽध्यायः स्वाध्याय इति। एवमप्यत्रैव स्वशब्दस्यैव पाठात् सिद्धम्। तदादावपि हि वृद्धिरियं भवत्येव। स्फ्यकृतस्यापत्यं स्फैयकृतः। स्वादुमृदुन इदं सौवादुमृदवम्। शुन इदं शौवनम्। अणि 'अन्' (६.४.१६७) इति प्रकृतिभावः। शुनो विकारो मांसं शौवम्। 'प्राणिरजतादिभ्योऽञ्' (४.३.१५४) इत्यञ्। श्वादंष्ट्रायां भवः

---

१ - 'पदान्ताभ्याम्' इति नास्ति मुद्रितेषु।

२ - 'उत्तरपदस्य' इत्यपपाठो मुद्रितेषु।

शौवादंष्ट्रो मणिः। स्वस्येदं सौवम्। स्वग्रामे भवः सौवग्रामिकः। अध्यात्मादित्वात् (४.३.६० वा०) ठञ्। अपदान्तार्थोऽयमारम्भः॥ द्वार। स्वर। व्यल्कश। स्वस्ति। स्वर्। स्फ्यकृत। स्वादुमृदु। श्वन्। स्व। द्वारादिः॥

## न्यग्रोधस्य च केवलस्य॥ ५ ॥

न्यग्रोधशब्दस्य केवलस्य यकारादुत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति, तस्मात् च पूर्वमैकार आगमो भवति। न्यग्रोधस्य विकारो नैयग्रोधश्चमसः। केवलस्येति किम्? न्यग्रोधमूले भवाः शालयो न्याग्रोधमूलाः शालयः। न्यग्रोहतीति[1] न्यग्रोध इति व्युत्पत्ति-पक्षे नियमार्थम्, अव्युत्पत्तिपक्षे विध्यर्थम्॥

## न कर्मव्यतिहारे॥ ६ ॥

कर्मव्यतिहारे यदुक्तं तद् न भवति। प्रतिषेधागमयोरयं प्रतिषेधः। व्यावक्रोशी, व्यावलेखी, व्यावचर्ची,[2] व्यावहासी वर्तते। 'कर्मव्यतिहारे णच् स्त्रियाम्' (३.३.४३) इति णच् प्रत्ययः, तदन्ताद् 'णचः स्त्रियामञ्' (५.४.१४)॥

## स्वागतादीनां च॥ ७ ॥

स्वागत इत्येवमादीनां यदुक्तं तद् न भवति। स्वागतमित्याह स्वागतिकः। स्वध्वरेण चरति स्वाध्वरिकः। स्वङ्गस्यापत्यं स्वाङ्गिः। व्यङ्गस्यापत्यं व्याङ्गिः। व्यडस्यापत्यं व्याडिः। व्यवहारेण चरति व्यावहारिकः। व्यवहारशब्दोऽयं लौकिके वृत्ते वर्तते, न तु कर्मव्यतिहारे। स्वपतौ साधुः स्वापतेयः। द्वारादिषु स्वशब्दपाठादत्र प्राप्तिः॥ स्वागत। स्वध्वर। स्वङ्ग। व्यङ्ग। व्यड। व्यवहार। स्वपति। स्वागतादिः॥

## श्वादेरिञि॥ ८ ॥

श्वादेरङ्गस्येञि परतो यदुक्तं तद् न भवति। श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। श्वादंष्ट्रिः। श्वनुशब्दो द्वारादिषु पठ्यते, तत्र च तदादिविधिर्भवतीत्येतदेव वचनं ज्ञापकम्॥ इकारादि-ग्रहणं कर्तव्यं श्वागणिकाद्यर्थम्॥ श्वगणेन चरति श्वागणिकः। श्वायूथिकः। तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते। श्वाभस्त्रेरिदं श्वाभस्त्रम्॥

---

१ - 'न्यग्रोहयतीति' इत्यपपाठो मुद्रितेषु।

२ - 'व्याववर्ती' इति मुद्रितेषु।

## पदान्तस्यान्यतरस्याम् ॥ ९ ॥

श्वादेरङ्गस्य पदशब्दान्तस्यान्यतरस्यां यदुक्तं तद् न भवति। श्वपदस्येदं श्वापदम्, शौवापदम् ॥

## उत्तरपदस्य ॥ १० ॥

उत्तरपदस्येत्ययमधिकारः, 'हनस्तोऽचिण्णलोः' ( ७.३.३२ ) इति प्रागेतस्मात्। यदित ऊर्ध्वमनुक्रमिष्यामः, उत्तरपदस्येत्येवं तद् वेदितव्यम्। वक्ष्यति—'अवयवादृतोः' ( ७.३.११ )—पूर्ववार्षिकम्। अपरवार्षिकम्। पूर्वहैमनम्। अपरहैमनम्। यत्र पञ्चमी-निर्देशो नास्ति 'जे प्रोष्ठपदानाम्' ( ७.३.१८ ) इत्येवमादौ, तदर्थमुत्तरपदाधिकारः। पञ्चमीनिर्देशेष्वपि विस्पष्टार्थम् , वृद्धेश्च व्यपदेशार्थम्। 'उत्तरपदवृद्धौ सर्वं च' ( ६.२.१०५ ) इत्युत्तरपदाधिकारे या वृद्धिरित्येवं विज्ञायते ॥

## अवयवाद् ऋतोः ॥ ११ ॥

अवयववाचिन उत्तरस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। पूर्ववार्षिकम्। पूर्वहैमनम्। अपरवार्षिकम्। अपरहैमनम्। पूर्वं वर्षाणामपरं वर्षाणामित्येकदेशिसमासः ( २.२.१)। 'तत्र भवः' ( ४.३.५३ ) इत्येतस्मिन्नर्थे 'वर्षाभ्यष्ठक्' ( ४.३.१८ ), 'हेमन्ताच्च', 'सर्वत्राण् च तलोपश्च' ( ४.३.२१, २२ ) इत्यण् प्रत्ययः, तत्र ऋतोर्वृद्धिमद्विधाववयवानाम्[१]( महाभाष्य १.१८६ ) इति तदन्तविधिः। अवयवादिति किम् ? पूर्वासु वर्षासु भवं पौर्ववर्षिकम्। 'कालाट्ठञ्' ( ४.३.११ ) इति ठञ्। अवयवपूर्वस्यैव तदन्तविधिर्नान्यस्य ॥

## सुसर्वार्धाज्जनपदस्य ॥ १२ ॥

सु सर्व अर्ध इत्येतेभ्य उत्तरस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः। 'जनपदतदवध्योश्च' ( ४.२.१२४ ), 'अवृद्धादपि बहुवचनविषयात्' ( ४.२.१२५ ) इति वुञ्। 'सुसर्वार्धदिक्शब्देभ्यो जनपदस्य' ( महाभाष्य १.१८६ ) इति तदन्तविधिः ॥

## दिशोऽमद्राणाम् ॥ १३ ॥

दिग्वाचिन उत्तरस्य जनपदवाचिनो मद्रवर्जितस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। पूर्वपाञ्चालकः। अपरपाञ्चालकः। दक्षिणपाञ्चालकः।

१ – 'अवयवात्' इति पदमञ्जरी।

पूर्ववत् ( ७.३.१२ ) तदन्तविधिः प्रत्ययश्च। दिश इति किम् ? पूर्वः पञ्चालानां पूर्वपञ्चालः, तत्र भवः पौर्वपञ्चालकः। आपरपञ्चालकः। अमद्राणामिति किम् ? पौर्वमद्रः। आपरमद्रः। 'मद्रेभ्योऽञ्' ( ४.२.१०८ ) इत्यञ्प्रत्ययः॥

## प्राचां ग्रामनगराणाम्॥ १४ ॥

प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। ग्रामाणाम्—पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः। अपरैषुकामशमः। पूर्वकार्ष्णमृत्तिकः। अपरकार्ष्णमृत्तिकः। नगराणाम्—पूर्वस्मिन् पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः। अपरपाटलिपुत्रकः। पूर्वकान्यकुब्जः। अपरकान्यकुब्जः। ग्रामत्वादेव नगराणामपि ग्रहणे सिद्धे भेदेन यदुभयोरुपादानं तत् संबन्धभेदप्रतिपत्त्यर्थम्। दिक्पूर्वपदो हि समुदायः पूर्वेषुकामशम्यादिः ग्रामनामधेयम्। पाटलिपुत्रादिः पुनरुत्तरपदमेव नगरमाह। तत्र ग्रामवाचिनामङ्गानामवयवस्य दिक्शब्दादुत्तरस्य वृद्धिर्भवति[1] इत्येवमभिसंबन्धः क्रियते, इतरत्र तु दिश उत्तरेषां नगराणामित्येव। पूर्वैषुकामशम इत्येवमादिषु कृतायामुत्तरपदवृद्धौ एकादेशो भवतीति ज्ञापितं 'नेन्द्रस्य परस्य' ( ७.३.२२ ) इति प्रतिषेधेन॥

## संख्यायाः संवत्सरसंख्यस्य च॥ १५ ॥

संख्याया उत्तरपदस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। द्वौ संवत्सरावधीष्टो भृतो भूतो भावी वा द्विसांवत्सरिकः। संख्यायाः—द्वे षष्टी अधीष्टो भृतो भूतो भावी वा द्विषाष्टिकः। द्विसाप्ततिकः। द्विषष्ट्यादिशब्दो वर्षेषु संख्येयेषु वर्तमानः कालाधिकारविहितं प्रत्ययमुत्पादयति। 'परिमाणान्तस्य०' ( ७.३.१७ ) इत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम्। तेन द्वैसमिकः त्रैसमिक इत्युत्तरपदवृद्धिर्न भवति। द्विवर्षा, त्रिवर्षा माणविकेति 'अपरिमाणबिस्ताचित०' ( ४.१.२२ ) इति पर्युदासो न भवति॥

## वर्षस्याभविष्यति॥ १६ ॥

संख्याया उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः, स चेत् तद्धितो भविष्यत्यर्थे न भवति। द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः। त्रिवार्षिकः। अभविष्यतीति किम् ?

---

१ – 'दिक्शब्दादुत्तरस्य [ नगरवाचिनामुत्तरपदानामवयवस्य च ] वृद्धिर्भवति' इति हैः। अत्रास्मत्प्रदर्शितः कोष्ठान्तर्गतः पाठोऽसम्बद्धः।

यस्य त्रैवर्षिकं धान्यं निहितं[1] भृत्यवृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति॥ ( मनु० ११.७ )।

त्रीणि वर्षाणि भावीति त्रैवर्षिकम्। अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न भवति। गम्यते हि तत्र भविष्यत्ता, न तु तद्धितार्थः। द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः॥

## परिमाणान्तस्यासंज्ञाशाणयोः॥ १७ ॥

परिमाणान्तस्याङ्गस्य संख्यायाः परं यदुत्तरपदं तस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः, संज्ञायां विषये शाणे चोत्तरपदे न भवति। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। 'विभाषा कार्षापणसहस्राभ्याम्' ( ५.१.२९ ) इत्यत्र 'सुवर्णशतमानयोरुपसंख्यानम्' ( ५.१.२९ वा० ) इति लुको विकल्पः। द्वाभ्यां निष्काभ्यां क्रीतम्, 'द्वित्रिपूर्वान्निष्कात्' ( ५.१.३० )—द्विनैष्किकम्। असंज्ञाशाणयोरिति किम् ? पाञ्चलोहितिकम्। पाञ्चकलापिकम्। पञ्च लोहिन्यः[2] परिमाणमस्य, पञ्च कलापानि परिमाणमस्येति विगृह्य 'तदस्य परिमाणम्' ( ५.१.५७ ) इति योगविभागात् प्रत्ययः, तद्धितान्तश्चायं समुदायः संज्ञा। द्वाभ्यां शाणाभ्यां क्रीतं द्वैशाणम्। त्रैशाणम्। 'शाणाद्वा', 'द्वित्रिपूर्वादण् च' ( ५.१.३५, ३६ ) इत्यण् प्रत्ययः। असंज्ञाशाणकुलिजानामिति केचित् पठन्ति। द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः॥

## जे प्रोष्ठपदानाम्॥ १८ ॥

ज इति जातार्थो निर्दिश्यते। तत्र यस्तद्धितो विहितस्तस्मिन् ञिति णिति किति च परतः प्रोष्ठपदानामुत्तरपदस्याचामादेरचो[3] वृद्धिर्भवति। प्रोष्ठपदा नाम नक्षत्रम्, ताभिर्युक्तः कालः ( ४.२.३ ) इत्यण्। तस्य 'लुबविशेषे' ( ४.२.४ ) इति लुप्। प्रोष्ठपदासु जातः, ऋतुनक्षत्रेभ्योऽण् ( ४.३.१६ ) इत्यण्। प्रोष्ठपादो माणवकः। ज इति किम् ? यदा प्रौष्ठपदो[4] मेघो धरणीमभिवर्षति। प्रोष्ठपदासु भवः प्रौष्ठपदः। प्रोष्ठपदानामिति बहुवचननिर्देशात् पर्यायोऽपि गृह्यते—भद्रपाद इति॥

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च॥ १९ ॥

१ - 'भक्तं पर्याप्तम्' इति मनु०।
२ - 'लोहित्यः' इत्यपपाठो मुद्रितेषु।
३ - '० मुत्तरस्या०' इति मुद्रितेषु।
४ - 'प्रोष्टपदो' इत्यपपाठो मुद्रितेषु।

हृद् भग सिन्धु इत्येवमन्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। सुहृदयस्येदं सौहार्दम्। सुहृदयस्य भावः सौहार्द्यम्। सुभगस्य भावः सौभाग्यम्। दौर्भाग्यम्। सुभगाया अपत्यं सौभागिनेयः। दौर्भागिनेयः। कल्याण्यादिषु ( ४.१.१२६ ) सुभगादुर्भगेति पठ्यते, 'सुभग मन्त्रे' ( ग० सू० १२० ) इत्युद्गात्रादिषु ( ५.१.१२९ ) पठ्यते। तत्रोत्तरपदवृद्धिर्नेष्यते, महते सौभगाय ( ऐ० ब्रा० २.२ ), छन्दसि सर्वविधीनां विकल्पितत्वात् ( परि० ३५ )। सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, सक्तुसिन्धुषु भवः साक्तुसैन्धवः। पानसैन्धवः। सिन्धुशब्दः कच्छादिषु ( ४.२.१३३ ) पठ्यते, तेन तदन्तविधिरिष्यत इत्यण् प्रत्ययः॥

## अनुशतिकादीनां च॥ २० ॥

अनुशतिक इत्येवमादीनां चाङ्गानां पूर्वपदस्य चोत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। अनुशतिकस्येदम् आनुशातिकम्। अनुहोडेन चरति आनुहौडिकः। अनुसंवरणे दीयते आनुसांवरणम्। अनुसंवत्सरे[1] दीयत आनुसांवत्सरिकः। अङ्गारवेणुर्नाम कश्चित् तस्यापत्यम् आङ्गारवैणवः। असिहत्य—तत्र भवम् आसिहात्यम्। अस्यहत्य इति केचित् पठन्ति, ततोऽपि विमुक्तादित्वादण् ( ५.२.६१ )। अस्यहत्यशब्दोऽस्मिन्नध्यायेऽस्ति आस्यहात्यः। अस्यहेतिरित्येवमपरे पठन्ति। अस्यहेतिः प्रयोजनमस्य आस्यहैतिकः। अत एव वचनादस्य समुदायस्य प्रातिपदिकत्वं विभक्तेश्चालुक्। वध्योग इति बिदादिः ( ४.१.१०४ ) अयं तस्यापत्यं वाध्यौगः। पुष्करसत्, अनुहरत् एतौ बाह्वादिषु ( ४.१.९६ ) पठ्येते। पौष्करसादिः। आनुहारतिः। कुरुकत गर्गादिः ( ४.१.१०५ ) कौरुकात्यः। कुरुपञ्चाल—कुरुपञ्चालेषु भवः कौरुपाञ्चालः। जनपदसमुदायो जनपदग्रहणेन न गृह्यत इति वुञ् न भवति। उदकशुद्धस्यापत्यम् औदकशौद्धिः। इहलोक। परलोक। तत्र भव ऐहलौकिकः। पारलौकिकः। 'लोकोत्तरपदस्य' ( ४.१.६० वा० ) इति ठञ्। सर्वलोक। तत्र विदितः सार्वलौकिकः। सर्वपुरुषस्येदं सार्वपौरुषम्। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः। प्रयोग। तत्र भवः प्रायौगिकः। परस्त्री। पारस्त्रैणेयः। 'कुलटाया वा' ( ४.१.१२७ ) इतीनङ्[2]। 'राजपुरुषात् ष्यञि' ( ग० सू० १७९ )। राजपौरुष्यम्। ष्यञीति किम्? राजपुरुषस्यापत्यं राजपुरुषायणिः। 'उदीचां वृद्धादगोत्रात्' ( ४.१.१५७ ) इति फिञ्। शतकुम्भसुखशयनादयः। शतकुम्भे भवः शातकौम्भः। सौखशायनिकः। पारदारिकः। सूत्रनडस्यापत्यं सौत्रनाडिः। आकृतिगणश्चायमिष्यते। तेनेदमपि सिद्धं भवति—अभिगममर्हति आभिगामिकः। अधिदेवे भवमाधिदैविकम्। आधिभौतिकम्। चतस्र एव विद्याः

---

१ – 'अनुसंवत्सरेण' इति बाल०।
२ – 'कल्याण्यादीनामिनङ्' ( ४.१.१२६ ) इति युक्तः स्यात्।

चातुर्वैद्यम्। स्वार्थे ष्यञ्॥ अनुशतिक। अनुहोड। अनुसंवरण। अनुसंवत्सर। अङ्गारवेणु। असिहत्य। वध्योग। पुष्करसत्। अनुहरत्। कुरुकत। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री। राजपुरुषात् ष्यञि ( ग० सू० १७९ )। सूत्रनड। अनुशतिकादिः॥

## देवताद्वन्द्वे च॥ २१ ॥

देवताद्वन्द्वे च पूर्वपदस्योत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। आग्निमारुतीं पृश्निमालभेत ( मै० सं० २.५.७ )। आग्निमारुतं कर्म। यो देवताद्वन्द्वः सूक्तहविःसंबन्धी, तत्रायं विधिः। इह तु न भवति—स्कन्दविशाखौ देवते अस्य स्कान्दविशाखः। ब्रह्मप्रजापती—ब्राह्मप्रजापत्यम्॥

## नेन्द्रस्य परस्य॥ २२ ॥

इन्द्रशब्दस्य परस्य यदुक्तं तद् न भवति। सौमेन्द्रः। आग्नेन्द्रः। परस्येति किम्? ऐन्द्राग्नमेकादशकपालं चरुं निर्वपेत्[२]। इन्द्रशब्दे द्वावचौ, तत्र तद्धित एकस्य यस्येति-( ६.४.१४८ )-लोपोऽपरस्य पूर्वेण सहैकादेश इत्यप्राप्तिरेव वृद्धेः, तदेदं प्रतिषेधवचनं ज्ञापकम्—'बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति पश्चादेकादेशः' ( परि ० ५३ ) इति। तेन पूर्वैषुकामशम इत्यादि सिद्धं भवति॥

## दीर्घाच्च वरुणस्य॥ २३ ॥

दीर्घादुत्तरस्य वरुणस्य यदुक्तं तद् न भवति। ऐन्द्रावरुणम्। मैत्रावरुणम्। दीर्घादिति किम्? आग्निवारुणीमनड्वाहीमालभेत ( काठ० सं० १३.६ )। अग्नेः 'ईदग्नेः सोमवरुणयोः' ( ६.३.२७ ) इत्यस्यानङपवादस्य 'इद् वृद्धौ' ( ६.३.२८ ) इति प्रतिषेधो विधीयते, तेन दीर्घात् परो न भवति॥

## प्राचां नगरान्ते॥ २४ ॥

प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। सुह्मनगरे भवः सौह्मनागरः। पौण्ड्रनागरः। प्राचामिति किम्? मद्रनगरमुदक्षु, तत्र भवो माद्रनगरः॥

---

१ - 'अनड्वाहीमालभेत' इति बाल०।

२ - 'ऐन्द्राग्नमेकादशकपालमनुनिर्वपेत्, आदित्यं चरुम्' ( तै० ब्रा० १.१.६.५ ) इति पाठोऽत्र युक्तः स्यात्, चरोरेकादशकपालत्वस्यानुपपन्नत्वात्।

## जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्। २५ ॥

जङ्गल धेनु वलज इत्येवमन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिर्भवति, विभाषितमुत्तरम्, उत्तरपदस्य विभाषा भवति तद्धिते ञिति णिति किति च परतः। कुरुजङ्गलेषु भवं कौरुजङ्गलम्, कौरुजाङ्गलम्। वैश्वधेनवम्, वैश्वधैनवम्। सौवर्णवलजः, सौवर्णवालजः ॥

## अर्धात् परिमाणस्य पूर्वस्य तु वा ॥ २६ ॥

अर्धशब्दात् परस्य परिमाणवाचिन उत्तरस्याचामादेरचः स्थाने वृद्धिर्भवति, पूर्वस्य तु वा भवति तद्धिते ञिति णिति किति च परतः। अर्धद्रोणेन क्रीतम् आर्धद्रौणिकम्, अर्धद्रौणिकम्। आर्धकौडविकम्, अर्धकौडविकम्। परिमाणस्येति किम् ? अर्धक्रोशः प्रयोजनमस्य आर्धक्रोशिकम् ॥

## नातः परस्य ॥ २७ ॥

अर्धात् परस्य परिमाणाकारस्य वृद्धिर्न भवति, पूर्वस्य तु वा भवति तद्धिते ञिति णिति किति च परतः। अर्धप्रस्थिकः, आर्धप्रस्थिकः। अर्धकंसिकः, आर्धकंसिकः। अत इति किम् ? आर्धकौडविकः। तपरकरणं किम् ? इह मा भूत्—अर्धखार्यां भवा अर्धखारी। किं च स्यात् ? अर्धखारी भार्या यस्य अर्धखारीभार्यः। 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' ( ६.३.३९ ) इति पुंवद्भावप्रतिषेधो न स्यात्। यत्र हि तद्धिते वृद्धिः प्रतिषिध्यते, स वृद्धिनिमित्तं न भवतीति पुंवद्भावो न प्रतिषिध्यते, यथा वैयाकरणी भार्या अस्य वैयाकरणभार्य इति ॥

## प्रवाहणस्य ढे ॥ २८ ॥

प्रवाहणस्य ढे परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति, पूर्वपदस्य वा भवति। प्रवाहणस्यापत्यं प्रावाहणेयः, प्रवाहणेयः। 'शुभ्रादिभ्यश्च' ( ४.१.१२३ ) इति ढक् प्रत्ययः ॥

## तत्प्रत्ययस्य च ॥ २९ ॥

ढक्प्रत्ययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति, पूर्वस्य तु वा। प्रवाहणेयस्यापत्यं प्रावाहणेयिः, प्रवाहणेयिः। प्रावाहणेयकम्, प्रवाहणेयकम्। बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुमशक्येति सूत्रारम्भः ॥

## नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ ३० ॥

नञ उत्तरेषां शुचि ईश्वर क्षेत्रज्ञ कुशल निपुण इत्येतेषामचामादेरचो वृद्धिर्भवति पूर्वपदस्य वा भवति तद्धिते ञिति णिति किति च परतः। शुचि—अशौचम्, आशौचम्। ईश्वर—अनैश्वर्यम्, आनैश्वर्यम्। क्षेत्रज्ञ—अक्षैत्रज्ञ्यम्, आक्षैत्रज्ञ्यम्। कुशल—अकौशलम्, आकौशलम्। निपुण—अनैपुणम्, आनैपुणम्। अत्र केचिदाहुरियं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयते। 'न नञ्पूर्वात् तत्पुरुषात् ०' ( ५.१.१२१ ) इत्युत्तरो भावप्रत्ययः प्रतिषिध्यते। तत्र शुच्यादिभ्य एव प्रत्यये कृते पश्चाद् नञ्समासे सति वृद्धिरनङ्गस्यापि वचनाद् भवतीति। तदपरे न मृष्यन्ते। भाववचनादन्योऽपि हि तद्धितो वृद्धिनिमित्तमपत्यादिष्वर्थेषु नञ्समासादेव विद्यते, बहुव्रीहेश्च नञ्समासाद् भाववचनोऽप्यस्ति। तत्राङ्गाधिकारोपमर्दनं न युज्यत इति। अक्षेत्रज्ञानीश्वरौ तत्पुरुषावेव ब्राह्मणादिषु ( ५.१.१२४ ) पठ्येते, ततस्ताभ्यां भावे ष्यञ् भवति ॥

## यथातथयथापुरयोः पर्यायेण ॥ ३१ ॥

यथातथ यथापुर इत्येतयोर्नञ उत्तरयोः पर्यायेणाचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। आयथातथ्यम् , अयाथातथ्यम्। आयथापुर्यम्, अयाथापुर्यम्। अयथातथ, अयथापुरेति ब्राह्मणादिषु ( ५.१.१२४ ) नञ्समासावेतौ द्रष्टव्यौ। सूत्रे यथातथयथापुरशब्दौ तु 'यथासादृश्ये' ( २.१.७ ) इत्यव्ययीभावसमासौ। तथा नपुंसकाश्रयं ह्रस्वत्वं कृतम्। भाष्ये तु यथादर्शितम् अयथातथाभावः ( महाभाष्य ३.३२२ ) इति तथा सुप्सुपा ( २.१.४ ) इति समासो लक्ष्यते ॥

## हनस्तोऽचिण्णलोः ॥ ३२ ॥

तद्धितेष्विति निवृत्तम्। तत्संबद्धं कितीत्यपि। ञ्णितीति वर्तते। हनस्तकारादेशो भवति ञ्णिति प्रत्यये परतः चिण्णलौ वर्जयित्वा। घातयति। घातकः। साधुघाती। घातंघातम्। घातो वर्तते। अचिण्णलोरिति किम् ? अघानि। जघान। 'धातोः कार्यमुच्यमानं धातोः प्रत्यये विज्ञायते' ( परि० ८८ )। इह न भवति—वार्त्रघ्नमितरद्[1] इति ॥

## आतो युक् चिण्कृतोः ॥ ३३ ॥

आकारान्तस्याङ्गस्य चिणि कृति ञ्णिति युगागमो भवति। अदायि। अधायि। कृति—दायः। दायकः। धायः। धायकः। चिण्कृतोरिति किम् ? ददौ। दधौ। चौडिः।

१ - तु० - वार्त्रघ्नं वा एतत् ( ऐ० ब्रा० २.३ )।

बालाकिः। बाह्वादित्वात् ( ४.१.९६ ) इञ्। ज्ञा देवता अस्य ज्ञः॥

## नोदात्तोपदेशस्य मान्तस्यानाचमेः॥ ३४ ॥

उदात्तोपदेशस्य मान्तस्याङ्गस्याचमिवर्जितस्य चिणि कृति च ञ्णिति यदुक्तं तद् न भवति। किं चोक्तम् ? 'अत उपधायाः' ( ७.२.११६ ) इति वृद्धिः। अशमि। अतमि। अदमि। कृति खल्वपि—शमकः। तमकः। दमकः। शमः। तमः। दमः। उदात्तोपदेशस्येति किम् ? यामकः। रामकः। कथमुद्यमोपरमौ ? 'अड उद्यमे' ( भ्वा० २४७ ), 'यम उपरमे' ( भ्वा० ७१० ) इति निपातनादनुगन्तव्यौ। उपदेशग्रहणं किम् ? शमी, दमी, तमीत्यत्र यथा स्याद्, इह मा भूत्—यामकः, रामक इति। मान्तस्येति किम् ? चारकः। पाठकः। अनाचमेरिति किम् ? आचामकः ॥ अनाचमिकमिवमीनामिति वक्तव्यम् ॥ आचामः। कामः। वामः। आम इति चौरादिकस्य ( चु० १८९ ) णिचि वृद्धौ सत्यां भवति। तत्र हि मित्त्वं नास्ति। 'नान्ये मितोऽहेतौ' ( चु० ९७ ) इति। सूर्यविश्रामा भूमिरित्येवमादिकं प्रयोगमन्याय्यमेव मन्यन्ते। चिण्कृतोरित्येव—शशाम। तताम ॥

## जनिवध्योश्च ॥ ३५ ॥

जनि वधि इत्येतयोश्चिणि कृति च ञ्णिति यदुक्तं तद् न भवति। अजनि। जनकः। प्रजनः। अवधि। वधकः। वधः। वधिः प्रकृत्यन्तरं व्यञ्जनान्तोऽस्ति तस्यायं प्रतिषेधो विधीयते। भक्षकश्चेन्न विद्येत वधकोऽपि न विद्यत इति हि प्रयोगो दृश्यते। वधादेशस्यादन्तत्वादेव वृद्धेरभावः। चिण्कृतोरित्येव—जजान गर्भं महिमानमिन्द्रम् ( शौ० सं० ३.१०.१२ )॥

## अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ ॥ ३६ ॥

सर्वं निवृत्तम्, अङ्गस्येति वर्तते। अर्ति ह्री व्ली री क्नूयी क्ष्मायी इत्येतेषामङ्गानामाकारान्तानां च पुगागमो भवति णौ परतः। अर्ति—अर्पयति। ह्री—ह्रेपयति। व्ली—व्लेपयति। री—रेपयति। क्नूयी—क्नोपयति। क्ष्मायी—क्ष्मापयति। आकारान्तानाम्—दापयति। धापयति। अर्तीति 'ऋ गतिप्रापणयोः' ( भ्वा० ६७० ), 'ऋ गतौ' ( जु० १६) इति द्वयोरपि धात्वोर्ग्रहणम्। रीत्यपि 'री गतिरेषणयोः' ( क्र्या० ३२ ), 'रीङ् श्रवणे' ( दिवा० २८ ) इति। पुकः पूर्वान्तकरणमदीदपदित्यत्रोपधाह्रस्वो यथा स्यादिति ॥

## शाच्छासाह्वाव्यावेपां युक् ॥ ३७ ॥

शा छा सा ह्वा व्या वे पा इत्येतेषामङ्गानां युगागमो भवति णौ परतः। शा—निशाययति। छा—अवच्छाययति। सा—अवसाययति। ह्वा—ह्वाययति। व्या—संव्याययति।

वे—वाययति। पा—पाययति। पाग्रहणे पै ओवै शोषणे' ( भ्वा० ६५५ ) इत्यस्यापीह ग्रहणमिच्छन्ति। 'पा रक्षणे' ( अदा० ४९ ) इत्यस्य लुग्विकरणत्वाद् ( परि० ९० ) न भवति ॥ लुगागमस्तु तस्य वक्तव्यः॥ पालयति ॥ धूञ्प्रीञोर्नुग्[1] वक्तव्यः॥ धूनयति। प्रीणयति। एतेऽपि पूर्वान्ता एव क्रियन्ते। तेन न्यशीशयत्, अपीपलत्, अदूधुनत्, अपिप्रिणद् इत्युपधाह्रस्वत्वं भवति। शाच्छासाह्वाव्यावेपां कृतात्वानां ग्रहणं पुकः प्राप्तिमाख्यातुम्। किमेतस्याख्याने प्रयोजनम् ? एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा ( परि० १०५ ) नास्तीत्युपदिश्यते। तेनाध्यापयति जापयतीत्येवमादि सिद्धं भवति॥

## वो विधूनने जुक् ॥ ३८ ॥

वा इत्येतस्य विधूननेऽर्थे वर्तमानस्य जुगागमो भवति णौ परतः। पक्षेणोपवाजयति। विधूनन इति किम् ? आवापयति केशान्[2]। 'पै ओवै शोषणे' ( भ्वा० ६५५ ) इत्येतस्यैतद् रूपम्॥

## लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥ ३९ ॥

ली ला इत्येतयोरङ्गयोरन्यतरस्यां नुक् लुक् इत्येतावागमौ भवतो णौ परतः स्नेहविपातनेऽर्थे। घृतं विलीनयति, घृतं विलाययति। विलालयति, विलापयति। ली ई इतीकारः प्रश्लिष्यते, तत ईकारान्तस्यैव नुग् भवति, न तु कृतात्वस्य 'विभाषा लीयतेः' (६.१.५१ ) इति। स्नेहविपातन इति किम् ? जतु विलापयति। जटाभिरालापयते। ली इति लीलीङोर्ग्रहणम्। ला इति लातेः, कृतात्वस्य च लीयतेः॥

## भियो हेतुभये षुक् ॥ ४० ॥

भी इत्येतस्य हेतुभयेऽर्थे षुगागमो भवति णौ परतः। मुण्डो भीषयते। जटिलो भीषयते। अत्रापि भी ई इतीकारप्रश्लेषः कृतात्वस्य षुग्निवृत्त्यर्थः। मुण्डो भापयत इत्येवं हि तत्र भवति। हेतुभय इति किम् ? कुञ्चिकयैनं भाययति। नात्र हेतुः प्रयोजको भयकारणम्। किं तर्हि ? कुञ्चिका॥

## स्फायो वः ॥ ४१ ॥

स्फाय् इत्येतस्याङ्गस्य वकारादेशो भवति णौ परतः। स्फावयति॥

---

१ – ' धूञ्प्रीञोर्लुग् ' इति है० अपपाठः।

२ – अतोऽग्रे ' किमर्थं सूत्रं 'वज गतौ' ण्यन्तस्य सिद्धत्वात् ? वातेः पुग् मा भूदित्येवमर्थम् ' इति प्रक्षिप्तः पाठः, न्यासपदमञ्जर्योर्व्याख्यातत्वात् , अग्रिमवाक्यानन्वयाच्च।

## शदेरगतौ तः ॥ ४२ ॥

शदेरङ्गस्यागतावर्थे वर्तमानस्य तकारादेशो भवति णौ परतः। पुष्पाणि शातयति। अगताविति किम् ? गाः शादयति गोपालकः ॥

## रुहः पोऽन्यतरस्याम् ॥ ४३ ॥

रुहेरङ्गस्यान्यतरस्यां पकारादेशो भवति णौ परतः। व्रीहीन् रोपयति, व्रीहीन् रोहयति ॥

## प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ॥ ४४ ॥

प्रत्ययस्थात् ककारात् पूर्वस्याकारस्य इकारादेशो भवत्यापि परतः, स चेदाप् सुपः परो न भवति ।जटिलिका। मुण्डिका। कारिका। हारिका। एतिकाश्चरन्ति। प्रत्ययग्रहणं किम् ? शक्नोतीति शका। स्थग्रहणं विस्पष्टार्थम्। ककारमात्रं प्रत्ययो नास्तीति सामर्थ्यात् प्रत्ययस्थस्य ग्रहणं शक्यते विज्ञातुम्। कादिति किम् ? मण्डना। रमणा। पूर्वस्येति किम् ? परस्य मा भूत्—पटुका। मृदुका। अत इति किम् ? गोका। नौका। तपरकरणं किम् ? राका। धाका। आपीति किम् ? कारकः। धारकः। अथापीत्यनेन किं विशिष्यते ? ककारः। यद्येवम् , कारिकेत्यत्रापि न प्राप्नोति, अकारेण व्यवहितत्वात्। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद् भवतीति व्यवधानमेव। वचनाद् व्यवधानमीदृशं यत् स्थानिवद्भावकृतमेकेन वर्णेन तदाश्रीयते। रथकट्यादिषु तु श्रुतिकृतमनेकेन वर्णेन व्यवधानमितीत्वं न भवति। असुप इति किम् ? बहवः परिव्राजका अस्यां मथुरायां बहुपरिव्राजका मथुरा। सुबन्तादयं परिव्राजकशब्दात्[1] पर आबिति प्रतिषेधो भवति। प्रसज्यप्रतिषेधश्चायम्, न पर्युदासः। पर्युदासे हि सति समुदायादसुबन्तात् पर आबितीत्वमत्र स्यादेव। अविद्यमानः सुप् यस्मिन् सोऽयमसुबित्येवमपि नाश्रीयते। तथा हि सति बहुचर्मिकेत्यत्रापि न स्यात् ॥ मामकनरकयोरुपसंख्यानं कर्तव्यमप्रत्ययस्थत्वात् ॥ ममेयं मामिका। नरिका। अणि ममकादेशः ( ४.३.३ )। 'केवलमामक ०' ( ४.१.३० ) इति नियमात् संज्ञाछन्दसोरीकारो नान्यत्र[2]। तेनाणप्रत्ययान्तादपि टाब् भवति। नरान् कायतीति नरिका। 'आतोऽनुपसर्गे कः' ( ३.२.३ ) इति कः प्रत्ययः ॥ प्रत्ययनिषेधे त्यक्त्यपोश्चोपसंख्यानम् ॥ 'उदीचामातः स्थाने यकपूर्वायाः' ( ७.३.४६ ) इति विकल्पो मा भूदिति। दाक्षिणात्यिका। इहत्यिका ॥

---

१ – 'बहुपरिव्राजकशब्दात् ' इति बाल० है० अपपाठः।

२ – 'नास्त्यत्र ' इत्यपपाठो है०।

## न यासयोः ॥ ४५ ॥

या सा इत्येतयोरिकारादेशो न भवति। यका। सका। या सा इति निर्देशोऽतन्त्रम्, यत्तदोरुपलक्षणार्थमेतत्। इहापि प्रतिषेध इष्यते—यकांयकामधीमहे, तकांतकां पचामह इति ॥ यासयोरित्त्वप्रतिषेधे त्यकन उपसंख्यानम् ॥ उपत्यका। अधित्यका ॥ पावकादीनां छन्दस्युपसंख्यानम् ॥ हिरण्यवर्णाः शुचयः पावकाः (शौ० सं० १.३३.१)। यासु अलोमकाः[1]। छन्दसीति किम्? पाविका ॥ आशिषि चोपसंख्यानम् ॥ जीवताद् जीवका। नन्दताद् नन्दका। भवताद् भवका ॥ उत्तरपदलोपे चोपसंख्यानम् ॥ देवदत्तिका, देवका। यज्ञदत्तिका, यज्ञका ॥ क्षिपकादीनां चोपसंख्यानम् ॥ क्षिपका। ध्रुवका ॥ तारका ज्योतिष्युपसंख्यानम् ॥ तारका। ज्योतिषीति किम्? तारिका दासी ॥ वर्णका तान्तव उपसंख्यानम् ॥ वर्णका प्रावरणभेदः। तान्तव इति किम्? वर्णिका भागुरी लौकायते ॥ वर्तका शकुनौ प्राचामुपसंख्यानम् ॥ वर्तका शकुनिः प्राचाम्। अन्यत्रोदीचां तु वर्तिका। शकुनाविति किम्? वर्तिका भागुरी लौकायतस्य ॥ अष्टका पितृदेवत्ये[2] ॥ अष्टका। पितृदेवत्य[2] इति किम्? अष्टिका खारी ॥ वा सूतकापुत्रकावृन्दारकाणामुपसंख्यानम् ॥ सूतिका, सूतका। पुत्रिका, पुत्रका। वृन्दारिका, वृन्दारका ॥

## उदीचामातः स्थाने यकपूर्वायाः ॥ ४६ ॥

उदीचामाचार्याणां मतेन यकारपूर्वायाः ककारपूर्वायाश्चातः स्थाने योऽकारः, तस्यातः स्थान इकारादेशो न[3] भवति। उदीचांग्रहणं विकल्पार्थम्। इभ्यका, इभ्यिका। क्षत्रियका, क्षत्रियिका। ककारपूर्वायाः—चटकका, चटकिका। मूषिकका, मूषिकिका। आत इति किम्? सांकाश्ये भवा सांकाश्यिका। स्थानग्रहणमनुवादेऽपि स्थानसंबन्धप्रतिपत्त्यर्थम्। आत इत्यनेन ह्यत इति स्थानी विशिष्यते। यकपूर्वाया इति किम्? अश्वा—अश्विका। यकपूर्वाया इति स्त्रीलिङ्गनिर्देश आतः स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थम्, इह न भवति—शुभं यातीति शुभंयाः—शुभंयिका। भद्रं यातीति भद्रंयाः—भद्रंयिका ॥ यकपूर्वाया धात्वन्तप्रतिषेधः ॥ धात्वन्तयोर्यकारककारयोरस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यः। सुनयिका। सुशयिका। सुपाकिका। अशोकिका ॥

---

१ - तु० — ऋक्षा वा एषाऽलोमका (तै० सं० २.६.५.१)।
२ - 'पितृदैवत्ये' इत्यपपाठो मुद्रितेषु।
३ - 'न' इति नास्ति मुद्रितेषु।

## भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ॥ ४७ ॥

एषामातः स्थाने योऽकारस्तस्य इत्वं न भवत्युदीचामाचार्याणां मतेन। भस्त्रा—भस्त्रका, भस्त्रिका। अभस्त्रका, अभस्त्रिका। एषा—एषका, एषिका। अजा—अजका, अजिका। अनजका, अनजिका। ज्ञा—ज्ञका, ज्ञिका। अज्ञका, अज्ञिका। द्वा—द्वके, द्विके। स्वा—स्वका, स्विका। अस्वका, अस्विका। एषाद्वे नञ्पूर्वे न प्रयोजयतः। किं कारणम्? अत्र[1] हि सति यदि साकच्काभ्यां नञ्समासः, अथापि कृते नञ्समासे पश्चादकच्, उभयथापि समासाद् या विभक्तिरुत्पद्यते तस्यां सत्यां त्यदाद्यत्वे सति टापा भवितव्यम्, सोऽन्तर्वर्तिन्या विभक्त्या सुबन्तात् पर इतीत्वस्य प्राप्तिरेव नास्ति। तेनानेषका अद्वके इत्येव नित्यं भवितव्यम्। स्वशब्दस्तु ज्ञातिधनाख्यायां नञ्पूर्वोऽपि प्रयोजयति। भस्त्रेत्ययमभाषितपुंस्कः, तस्य 'अभाषितपुंस्काच्च' (७.३.४८) इत्येव सिद्धे यदिह ग्रहणं तदुपसर्जनार्थम्। अविद्यमाना भस्त्रा यस्या अभस्त्रा। साल्पा अभस्त्रका, अभस्त्रिका। अत्रोपसर्जनह्रस्वत्वे कृते पुनर्बहुव्रीहौ कृते भाषितपुंस्काद् यष्टाबुत्पद्यते तस्य 'केऽणः' (७.४.१३) इति यो ह्रस्वः, नासावभाषितपुंस्काद् विहितस्यातः स्थाने भवति। नञ्पूर्वाणामपीत्यपिशब्दादन्यपूर्वाणां केवलानां च विधिरयमिष्यते। निर्भस्त्रका, निर्भस्त्रिका। बहुभस्त्रका, बहुभस्त्रिका इत्येवमादयोऽपीष्यन्ते[2]। अत्र नञ्पूर्वाणामिति वचनमनुवाद एव मन्दबुद्धिप्रतिपत्त्यर्थः॥

## अभाषितपुंस्काच्च ॥ ४८ ॥

अभाषितपुंस्काद् विहितस्यातः स्थाने योऽकारस्तस्योदीचामाचार्याणां मतेनेकारादेशो न भवति। खट्वका, खट्विका। अखट्वका, अखट्विका। परमखट्वका, परमखट्विका। बहुव्रीहौ यदा कपि ह्रस्वः क्रियते, तदा भवितव्यमनेन विधिना। अत्राप्यभाषितपुंस्काद् विहितस्यातः स्थाने भवत्यकार इति। यदा तु अविद्यमाना खट्वा अस्या अखट्वा, अल्पा अखट्वा अखट्विकेति, तदा न भवति। तथातिक्रान्ता खट्वाम् अतिखट्वा, अल्पा अतिखट्वा अतिखट्विका॥

## आदाचार्याणाम् ॥ ४९ ॥

अभाषितपुंस्कादातः स्थाने योऽकारस्तस्याचार्याणामाकारादेशो भवति। खट्वाका। अखट्वाका। परमखट्वाका॥

---

१ – 'तत्र' इति बाल०, है०।
२ – 'इत्येवमनयोरपीष्यते' इत्यसम्बद्धः पाठो मुद्रितेषु।

## टस्येकः ॥ ५० ॥

अङ्गस्य निमित्तं यष्ठः, कश्चाङ्गस्य निमित्तं भवति ? प्रत्ययः, तस्य प्रत्ययठस्य इक इत्ययमादेशो भवति। 'प्रागू वहतेष्ठक्' ( ४.४.१ )—आक्षिकः। शालाकिकः। 'लवणाट् ठञ्' ( ४.४.५२ )—लावणिकः। ठगादिषु यदि वर्णमात्रं प्रत्ययः, उच्चारणार्थोऽकारः, तदेहाप्यकार उच्चारणार्थः, वर्णमात्रं तु स्थानित्वेनोपादीयते। संघातग्रहणे तु प्रत्ययेऽत्रापि संघातग्रहणमेव। तत्र 'कणेष्ठः' ( प० उ० १.१०३ )—कण्ठ इत्येवमादीनामुणादीनाम् 'उणादयो बहुलम्' ( ३.३.१ ) इति न भवति। मथितं पण्यमस्य माथितिक इत्यत्र तु यस्येति-( ६.४.१४८ )-लोपे कृत 'इसुसुक्तान्तात् कः' ( ७.३.५१ ) इति स्थानिवद्-भावादिकस्य कादेशः प्राप्नोति, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि० ८५ ) इति न भवति, 'यस्येति च' ( ६.४.१४८ ) इति लोपस्य स्थानिवद्भावाद् वा। पूर्वस्मादपि हि विधौ स्थानिवद्भावः॥

## इसुसुक्तान्तात् कः ॥ ५१ ॥

इस् उस् इत्येवमन्तानामुगन्तानां तान्तानां चाङ्गानामुत्तरस्य ठस्य क इत्ययमादेशो भवति। इस्—सार्पिष्कः। उस्—धानुष्कः। याजुष्कः। उक्—नैषादकर्षुकः। शाबर-जम्बुकः। मातृकम्। पैतृकम्। तान्तात्—औदश्वित्कः। शाकृत्कः। याकृत्कः। इसुसोः प्रतिपदोक्तयोर्ग्रहणादिह न भवति—आशिषा चरति आशिषिकः, उषा चरति औषिकः ॥ दोष उपसंख्यानम् ॥ दोर्भ्यां तरति दौष्कः॥

## चजोः कु घिण्ण्यतोः ॥ ५२ ॥

चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परतः। घिति—पाकः। त्यागः। रागः। ण्यति—पाक्यम्। वाक्यम्। रेक्यम्॥

## न्यङ्क्वादीनां च ॥ ५३ ॥

न्यङ्कु इत्येवमादीनां कवर्गादेशो भवति। न्यङ्कुः। 'नावञ्चेः' ( प० उ० १.१७) इत्युप्रत्ययः। मद्गुः। 'मिमस्जिभ्य उः' ( प० उ० १.७ ) इति मस्जेरुप्रत्ययः। भृगुः। 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' ( प० उ० १.२८ ) इत्युप्रत्ययः। दूरेपाकः। फलेपाकः। दूरे पच्यते स्वयमेव, फले पच्यते स्वयमेव। पंचाद्यच् ( ३.१.१३४ ) निपातनाद् वृद्धिः। 'तत्पुरुषे कृति बहुलम्' ( ६.३.१४ ) इति सप्तम्या अलुक्। क्षणे-पाक इत्यपि हि केचित् पठन्ति। दूरेपाका, फलेपाका इति टाबन्तमपरेऽधीयते। उकारान्ता-वपरे—दूरेपाकुः, फलेपाकुरिति। तेषामुप्रत्ययो निपातनादेव। तक्रम्, वक्रमिति। तञ्चतेर्व-

ञ्चतेश्च 'स्फायितञ्चिवञ्चि ०' ( प० उ० २.१३ ) इत्यादिना सूत्रेण रक्। व्यतिषङ्गः। व्यतिषजतीति पचाद्यच् ( ३.१.१३४ )। अनुषङ्गः। अवसर्गः। उपसर्गः। मेघः। श्वपाकः। मांसपाकः। कपोतपाकः। उलूकपाक इति। कर्मोपपदादण्[1] ( ३.२.१ ) प्रत्ययः। संज्ञायाम्—अर्घः[2], अवदाघः, निदाघः। अर्हतेर्घञ्, अर्घः। अवपूर्वस्य निपूर्वस्य च दहेरवदाघः, निदाघः। संज्ञाया अन्यत्र अर्हः। अवदाहः। निदाहः। न्यग्रोधः, वीरुदित्यत्र न्यक्पूर्वस्य रुहेः पचाद्यचि विपूर्वस्य क्विपि धकारो विधीयते। न्यग्रोहतीति[3] न्यग्रोधः। विरोहतीति[3] वीरुत् ॥

## हो हन्तेर्ञ्णिन्नेषु ॥ ५४ ॥

हन्तेर्हकारस्य कवर्गादेशो भवति ञिति णिति प्रत्यये परतो नकारे च। घातयति। घातकः। साधुघाती। घातंघातम्। घातो वर्तते। नकारे—घ्नन्ति। घ्नन्तु। अघ्नन्। ह इति किम् ? अलोऽन्त्यस्य मा भूत्। हन्तेरिति किम् ? प्रहारः। प्रहारकः। ञ्णित्प्रत्ययो हन्तेर्विशेषणम्। नकारो हकारस्य—नकारेऽनन्तरस्य हन्तिहकारस्येति। तच्चानन्तर्यं संनिपातकृतम्[4] आश्रीयते। स्थानिवद्भावशास्त्रकृतं तु यदनानन्तर्यं तदविघातकम्, वचनसामर्थ्यात्। यद्यपि सर्वैरेव ञ्णिन्नैर्हन्तिहकारो विशिष्यते तथापि 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' ( व्या० प० ४६ ) इति ञ्णिति धात्ववयवेन व्यवहितेऽपि सति भवति। इह तु न भवति—हननमिच्छति हननीयति, हननीयतेर्ण्वुल् हननीयक इति ॥

## अभ्यासाच्च ॥ ५५ ॥

अभ्यासादुत्तरस्य हन्तिहकारस्य कवर्गादेशो भवति। जिघांसति। जङ्घन्यते। अहं जघन। अभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेवैतत् कुत्वम्। इह न भवति—हननीयितुमिच्छति जिहननीयिषति ॥

## हेरचङि ॥ ५६ ॥

हिनोतेर्हकारस्याभ्यासादुत्तरस्य कवर्गादेशो भवत्यचङि। प्रजिघीषति। प्रजेघीयते। प्रजिघाय। अचङीति किम् ? प्राजीहयद् दूतम्। अचङीति शक्यमकर्तुम्। कथम् ? चङ्यभ्यासनिमित्ते णौ हिनोतिरङ्गं भवति, तत्राभ्यासनिमित्ते प्रत्यये हेरङ्गस्येति विज्ञायमाने प्राप्तिरेव नास्ति। तत् क्रियते ज्ञापकार्थम्। एतद् ज्ञाप्यते—'हेरचङीति चङोऽन्यत्र

---

१ - 'कर्मोपदादण्' इत्यपपाठो मुद्रितेषु। २ - 'मेघ' इति है०।

३ - '०रोहयतीति' इति मुद्रितेषु।

४ - अतः पूर्वं मुद्रितेषु 'श्रुतिकृतम्' इति पाठोऽनावश्यकः, 'सन्निपातकृतमिति श्रुतिकृतमित्यर्थः' इति न्यासपदमञ्जर्योर्व्याख्यातत्वात्।

हेर्ण्यधिकस्यापि कुत्वं भवति' ( परि० ९१ ) इति। तेन प्रजिघाययिषतीति सिद्धं भवति॥

## सन्लिटोर्जेः॥ ५७ ॥

सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यासस्तस्मादुत्तरस्य कवर्गादेशो भवति। जिगीषति। जिगाय। सन्लिटोरिति किम् ? जेजीयते। जिनातेः संप्रसारणे कृते यद्यपि जिर्भवति, तथापि लाक्षणिकत्वात् तस्य ग्रहणं न भवति ( परि० १०५ )। जिज्यतुः, जिज्युरित्येव भवति॥

## विभाषा चेः॥ ५८ ॥

चिनोतेरङ्गस्य सन्लिटोरभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति। चिचीषति, चिकीषति। चिचाय, चिकाय। सन्लिटोरित्येव—चेचीयते॥

## न क्वादेः॥ ५९ ॥

कवर्गादिर्धातोश्चजोः कवर्गादेशो न भवति। कूजो वर्तते। खर्जः। गर्जः। कूज्यं भवता। खर्ज्यम्, गर्ज्यं भवता॥

## अजिव्रज्योश्च॥ ६० ॥

अजि व्रजि इत्येतयोश्च कवर्गादेशो न भवति। समाजः। उदाजः। व्रजि— परिव्राजः। परिव्राज्यम्। अजेस्तु 'अजेर्व्यघञपोः' ( २.४.५६ ) इति वीभावस्य विधानाद् ण्यति नास्त्युदाहरणम्॥

## भुजन्युब्जौ पाण्युपतापयोः॥ ६१ ॥

भुज न्युब्ज इत्येतौ शब्दौ निपात्येते पाणावुपतापे च। भुज्यतेऽनेनेति भुजः पाणिः। 'हलश्च' ( ३.३.१२१ ) इति घञ्। तत्र कुत्वाभावो गुणाभावश्च निपात्यते। 'उब्ज आर्जवे' ( तुदा० २० ) न्युब्जिताः शेरतेऽस्मिन्निति न्युब्ज उपतापो रोगः। तथैव घञि कुत्वाभावो निपात्यते। पाण्युपतापयोरिति किम् ? भोगः। समुद्गः॥

## प्रयाजानुयाजौ यज्ञाङ्गे॥ ६२ ॥

प्रयाज अनुयाज इत्येतौ निपात्येते यज्ञाङ्गे। पञ्च प्रयाजाः ( तै० सं० २.६.१०.४)। पञ्चानुयाजाः[1]। त्वमग्ने प्रयाजानां पश्चात् त्वं पुरस्तात्। यज्ञाङ्ग इति किम् ?

---

१ – पञ्चानुयाजा न क्वचिद् दृश्यन्त इति 'त्रयोऽनुयाजाः' इति पाठोऽत्र युक्तः स्यात्। त्रयो ह्यनुयाजाः ( मै० सं० ३.७.९ )। त्रयोऽनुयाजाः ( श० ब्रा० ११.४.१.११ )।

प्रयागः। अनुयागः। प्रयाजानुयाजग्रहणं प्रदर्शनार्थम्, अन्यत्राप्येवंप्रकारे कुत्वं न भवति। एकादशोपयाजाः ( ऐ० ब्रा० २.१८ )। उपांशुयाजमन्तरा यजति[1]। अष्टौ पत्नीसंयाजा[2] भवन्ति। ऋतुयाजैश्चरन्ति ( ऐ० ब्रा० २.२९ )। इत्येवमादि सिद्धं भवति॥

## वञ्चेर्गतौ॥ ६३ ॥

वञ्चेरङ्गस्य गतौ वर्तमानस्य कवर्गादेशो न भवति। वञ्च्यं वञ्चन्ति वणिजः। गताविति किम् ? वङ्कं काष्ठम्। कुटिलमित्यर्थः॥

## ओक उचः के॥ ६४ ॥

उचेर्धातोः के प्रत्यय ओक इति निपात्यते। किं पुनरत्र निपात्यते ? कुत्वं गुणश्च। न्योकः शकुन्तः। न्योको गृहम्[3]। कर्तरि इगुपधलक्षणः कः प्रत्ययः। अधिकरणादौ तु कारकान्तरे 'घञर्थे कविधानम्०' ( ३.३.५८. वा० ) इति। किमर्थं पुनरयं घञ्येव न व्युत्पाद्यते ? स्वरार्थम्, अन्तोदात्तोऽयमिष्यते, घञि सत्याद्युदात्तः स्यात्। दिवौकसः, जलौकस इत्येवमादावप्यसुनि प्रत्यय 'उणादयो बहुलम्' ( ३.३.१ ) इति कुत्वं द्रष्टव्यम्॥

## ण्य आवश्यके॥ ६५ ॥

ण्ये परत आवश्यकेऽर्थे कवर्गो न भवति। अवश्यपाच्यम्। अवश्यवाच्यम्। अवश्यरेच्यम्। आवश्यक इति किम् ? पाक्यम्। वाक्यम्। रेक्यम्॥

## यजयाचरुचप्रवचर्चश्च॥ ६६ ॥

यज याच रुच प्रवच ऋच इत्येतेषां ण्ये परतः कवर्गादेशो न भवति। यज—याज्यम्। याच—याच्यम्। रुच—रोच्यम्। प्रवच—प्रवाच्यम्। ऋच—अर्च्यम्। ऋदुपधादपि ऋचेरत एव निपातनाद् ण्यद् भवति। प्रवचग्रहणं शब्दसंज्ञार्थम्। प्रवाच्यो नाम पाठविशेषोपलक्षितो ग्रन्थोऽस्ति। अपरे पुनराहुः—उपसर्गपूर्वस्य नियमार्थम्। प्रपूर्वस्यैव वचेरशब्दसंज्ञायां कुत्वप्रतिषेधो यथा स्याद्, अन्योपसर्गपूर्वस्य मा भूदिति। अविवाक्यमहरिति पठन्ति। एतत् तु विशेष एवेष्यते, दशरात्रस्य यद् दशममहः[4]। अन्यत्राविवाच्यमेव भवति ॥ण्यति प्रतिषेधे त्यजेरुपसंख्यानम्॥ त्याज्यम्॥

---

१ - उपांशुयाजोऽग्नीपोमीयः ( श० ब्रा० ११.४.१.१० )।
२ - चत्वारः पत्नीसंयाजाः ( श० ब्रा० ११.४.१.११ )।
३ - 'वृक्षः' इति बाल०।
४ - आप० श्रौ० २१.९.१ ।

## वचोऽशब्दसंज्ञायाम् ॥ ६७ ॥

वचोऽशब्दसंज्ञायां ण्यति परतः कवर्गो[१] न भवति। वाच्यमाह। अवाच्यमाह। अशब्दसंज्ञायामिति किम् ? अवघुषितं वाक्यमाह ॥

## प्रयोज्यनियोज्यौ शक्यार्थे ॥ ६८ ॥

प्रयोज्य नियोज्य इत्येतौ शब्दौ शक्यार्थे निपात्येते। शक्यः प्रयोक्तुं प्रयोज्यः। शक्यो नियोक्तुं नियोज्यः। शक्यार्थ इति किम् ? प्रयोग्यः। नियोग्यः ॥

## भोज्यं भक्ष्ये ॥ ६९ ॥

भोज्यं निपात्यते भक्ष्येऽभिधेये। भोज्य ओदनः। भोज्या यवागूः। इह भक्ष्यमभ्यवहार्यमात्रम्। भक्ष्य इति किम् ? भोग्यः कम्बलः ॥

## घोर्लोपो लेटि वा ॥ ७० ॥

घुसंज्ञकानां लेटि परतो वा लोपो भवति। दधद्रत्नानि दाशुषे (ऋ० ४.१५.३)। सोमो ददद् गन्धर्वाय (ऋ० १०.८५.४१)। न च भवति—यदग्निरग्नये ददात्[२]। आडागमे सति लोपेऽपि ददादिति सिद्धं भवति। तत्र वावचनं विस्पष्टार्थम्, एषा हि कस्यचिदाशङ्का स्याद्—ददादित्येव नित्ये प्राप्ते लोप आरभ्यमाणो बाधत एवैतद् रूपमिति ॥

## ओतः श्यनि ॥ ७१ ॥

ओकारान्तस्याङ्गस्य श्यनि परतो लोपो भवति। शो—निश्यति। छो—अवच्छ्यति। दो—अवद्यति। सो—अवस्यति ॥

## क्सस्याचि ॥ ७२ ॥

क्सस्याजादौ प्रत्यये लोपो भवति। अधुक्षाताम्। अधुक्षाथाम्। अधुक्षि। अचीति किम् ? अधुक्षत्। अधुक्षताम्। ककारवत उपादानं किम् ? इह मा भूत्—उत्सौ, उत्साः। वत्सौ, वत्साः[३] ॥

---

१ - 'कुत्वम्' इति है०।

२ - तदग्निरग्नयेऽददात् (आप० श्रौ० ५.९.८)।

३ - 'ककारवत.......वत्साः' इति पाठो न स्यात्, बहुत्र हस्तलेखेष्वदर्शनाद्, न्यासपदमञ्जर्योश्च स्वतन्त्ररूपेण व्याख्यातत्वात्।

## लुग् वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७३ ॥

दुह दिह लिह गुह इत्येतेषामङ्गानामात्मनेपदे दन्त्यादौ परतः क्सस्य वा लुग् भवति। अदुग्ध, अधुक्षत। अदुग्धाः, अधुक्षथाः। अधुग्ध्वम्[1], अधुक्षध्वम्। अदुह्वहि, अधुक्षावहि। दिह—अदिग्ध, अधिक्षत। लिह—अलीढ, अलिक्षत। गुह—न्यगूढ, न्यघुक्षत। दुहादीनामिति किम्? व्यत्यपुक्षत[2]। आत्मनेपद इति किम्? अधुक्षत्। दन्त्य इति किम्? अधुक्षामहि। लोप इति वर्तमाने लुग्ग्रहणं सर्वादेशार्थम्, तच्च वह्यर्थम्। अन्यत्र त्वन्त्यस्यैव लोपे कृते 'झलो झलि' (८.२.२६) इति सकारलोपेन सिध्यति। स्थानिवद्भावोऽपि अकार-लोपस्य नास्ति, 'पूर्वत्रासिद्धे न स्थानिवत्' (महाभाष्य १.१५४) इति। दन्त्योष्ठ्योऽपि वकारो दन्त्य इति गृह्यते। यदि स न गृह्येत, ततस्तौग्रहणमेवात्र कृतं स्यात्॥

## शमामष्टानां दीर्घः श्यनि ॥ ७४ ॥

शमादीनामष्टानां दीर्घो भवति श्यनि परतः। शमु—शाम्यति। तमु—ताम्यति। दमु—दाम्यति। श्रमु—श्राम्यति[3]। भ्रमु—भ्राम्यति। क्षमु—क्षाम्यति। क्लमु—क्लाम्यति। मदी—माद्यति। अष्टानामिति किम्? अस्यति। श्यनीति किम्? भ्रमति। 'वा भ्राश०' (३.१.७०) इति श्यनो विकल्पः। बभ्राम[4]॥

## ष्ठिवुक्लम्याचमां शिति ॥ ७५ ॥

ष्ठिवु क्लमि आचम् इत्येतेषां दीर्घो भवति शिति परतः। ष्ठीवति। क्लमु—क्लामति। आचमु—आचामति। क्लमिग्रहणं शबर्थम्। चमेराङ्पूर्वस्य ग्रहणम्। इह मा भूत्—चमति। विचमति॥

## क्रमः परस्मैपदेषु ॥ ७६ ॥

क्रमः परस्मैपदपरे शिति परतो दीर्घो भवति। क्रामति, क्रामतः, क्रामन्ति। परस्मैपदेष्विति किम्? आक्रमत आदित्यः। इह उत्क्राम, संक्रामेति हेर्लुकि कृते 'न लुमताङ्गस्य' (१.१.६३) इति प्रत्ययलक्षणप्रतिषेधाद् दीर्घो न प्राप्नोति। नैष दोषः। लुमता शब्देन लुप्ते यदङ्गं तस्य कार्ये स प्रतिषेधः। न च ही क्रमिरङ्गम्। किं तर्हि? शपि॥

---

१ – 'अधुग्ध्वम्' इत्यपपाठो मुद्रितेषु।
२ – 'व्यत्यपुक्षत' इति बाल०।
३ – 'श्रमु — श्राम्यति' इति नास्ति मुद्रितेषु।
४ – 'वा भ्राश.........बभ्राम' इति न सार्वत्रिकः।

## इषुगमियमां छः ॥ ७७ ॥

इषु गमि यम इत्येतेषां शिति परतश्छकारादेशो भवति। इच्छति। गच्छति। यच्छति। इषेरुदितो ग्रहणम्। इह मा भूत्—इष्यति, इष्णातीति। ये त्विषिमुदितं नाधीयते, त इह च सूत्रेऽचीत्यनुवर्तयन्ति। तत् च प्रधानमज्ग्रहणं शितीत्यनेन विशेष्यत इति वर्णयन्ति। तथा च सति तदादिविधिर्न भवति। 'यस्मिन् विधिस्तदादावल्ग्रहणे' ( परि० ३३ ) इत्येतदपि विशेषणेनैवेष्यते। तेन इषाणेत्यत्र छत्वं न भवति। न ह्ययमजेव शिदिति॥

## पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७८ ॥

पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद सद इत्येतेषां पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद इत्येत आदेशा भवन्ति शिति परतः। पा—पिबति। घ्रा—जिघ्रति। ध्मा—धमति। स्था—तिष्ठति। म्ना—मनति। दाण्—यच्छति। दृशि—पश्यति। अर्ति—ऋच्छति। सर्ति—धावति। शद—शीयते। सद्—सीदति। पिबतेर्लघूपधगुणः प्राप्नोति, सो 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' ( परि० ९२ ) इति न भवति। अथ वाकारान्तोऽयमादेश आद्युदात्तो निपात्यते। सर्तेर्वेगितायां गतौ धावादेशमिच्छन्ति। अन्यत्र सरति, अनुसरतीत्येव भवति॥

## ज्ञाजनोर्जा ॥ ७९ ॥

ज्ञा जन इत्येतयोर्जादेशो भवति शिति परतः। जानाति। जायते। जनेर्दैवादिकस्य ग्रहणम्॥

## प्वादीनां ह्रस्वः ॥ ८० ॥

पू इत्येवमादीनां ह्रस्वो भवति शिति परतः। प्वादयः क्र्यादिषु पठ्यन्ते। 'पूञ् पवने' ( क्र्या० १० ) इत्यतः प्रभृति 'प्ली गतौ' ( क्र्या० ३५ ) 'वृत्' ( क्र्या० ३६ ) इति यावत् केचिदिच्छन्ति, वृत्करणमेतद् ल्वादीनां प्वादीनां च परिसमाप्त्यर्थमिति। अपरे तु ल्वादीनामेव परिसमाप्त्यर्थं वृत्करणमेतदिच्छन्ति, आगणान्ताः प्वादय इति। पूञ्—पुनाति। लूञ्—लुनाति। स्तॄञ्—स्तृणाति। येषामागणान्ताः प्वादयस्तेषां जानातीत्यत्र ह्रस्वः प्राप्नोति, 'ज्ञाजनोर्जा' ( ७.३.७९ ) इति दीर्घकरणसामर्थ्याद् न भवति, जनेर्ज इत्यपि ह्यादेशे कृत[1] 'अतो दीर्घो यञि' ( ७.३.१०१ ) इति दीर्घत्वेन जायत इति सिध्यति॥

---

१ - 'जनेरपि हि ज आदेशे [ जादेशे है० ] सति' इति मुद्रितः पाठः।

## मीनातेर्निगमे ॥ ८१ ॥

मीनातेरङ्गस्य शिति प्रत्यये परतो ह्रस्वो भवति निगमविषये। प्रमिणन्ति व्रतानि[1]। निगम इति किम्? प्रमीणाति ॥

## मिदेर्गुणः ॥ ८२ ॥

मिदेरङ्गस्येको गुणो भवति शिति प्रत्यये परतः। मेद्यति, मेद्यतः, मेद्यन्ति। शितीत्येव— मिद्यते ॥

## जुसि च ॥ ८३ ॥

जुसि च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति। अजुहवुः। अबिभयुः। अबिभरुः। अथ चिनुयुः, सुनुयुरित्यत्र कस्माद् न भवति? अत्र हि द्वे ङित्त्वे, सार्वधातुकाश्रयं यासुडाश्रयं च। तत्र नाप्राप्ते सार्वधातुकाश्रयङित्त्वनिमित्ते प्रतिषेधे जुसि गुण आरभ्यमाणस्तमेव बाधते ( परि० ५७ ), यासुडाश्रयङित्त्वनिमित्तं तु न बाधते, तत्र हि प्राप्ते चाप्राप्ते चारभ्यत इति ॥

## सार्वधातुकार्धधातुकयोः ॥ ८४ ॥

सार्वधातुक आर्धधातुके च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति। तरति। नयति। भवति। आर्धधातुके—कर्ता। चेता। स्तोता। सार्वधातुकार्धधातुकयोरिति किम्? अग्नित्वम्। अग्निकाम्यति। यदि हि प्रत्यये सङ्गीति वोच्येत, इहापि स्यात् ॥

## जाग्रोऽविचिण्णल्ङित्सु ॥ ८५ ॥

जागृ इत्येतस्याङ्गस्य गुणो भवत्यविचिण्णल्ङित्सु परतः। जागरयति। जागरकः। साधुजागरी। जागरंजागरम्। जागरो वर्तते। जागरितः। जागरितवान्। वृद्धिविषये प्रतिषेधविषये च यथा स्यादिति जागर्तेरयं गुण आरभ्यते। तस्मिन् कृते या 'अत उपधायाः' ( ७.२.११६ ) वृद्धिः प्राप्नोति, सा न भवति। यदि हि स्यादनर्थक एव गुणः स्यात्, चिण्णलोश्च प्रतिषेधवचनमनर्थकम्। अविचिण्णल्ङित्स्विति किम्? 'जृशॄस्तृजागृभ्यः क्विन्' ( प० उ० ४.५५ )—जागृविः। चिण्—अजागारि। णल्—जजागार। ङित्—जागृतः। जागृथः। वीति केचिदिकारमुच्चारणार्थं वर्णयन्ति, क्वसावपि वकारादौ गुणो न भवति। जजागृवान्। अजागरुः, अहं जजागर इत्यत्र प्रतिषेधः

---

१ - प्र मिनन्ति व्रतानि ( ऋ० १०.१०.५ )।

प्राप्नोति। न, अप्रतिषेधात्, अविचिण्णल्ङित्स्विति पर्युदासोऽयम्। अथ वा जाग्र इति प्राप्तिरसावानन्तर्याद् ( परि० ६१ ) विचिण्णल्ङित्सु प्रतिषिध्यते। या तु 'जुसि च' (७.३.८३), 'सार्वधातुकार्धधातुकयोः' (७.३.८४) इति च प्राप्तिः, सा न प्रतिषिध्यते॥

## पुगन्तलघूपधस्य च॥ ८६ ॥

पुगन्तस्याङ्गस्य लघूपधस्य च सार्वधातुकार्धधातुकयोर्गुणो भवति। पुगन्तस्य—व्लेपयति। ह्रेपयति। क्नोपयति। लघूपधस्य—भेदनम्। छेदनम्। भेत्ता। छेत्ता। प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्ये सति लघूपधगुणो न व्यावर्त्यत इति ज्ञापितमेतत् क्नुसनोः कित्करणेन, 'त्रसिगृधिधृषिक्षिपेः क्नुः' (३.२.१४०), 'हलन्ताच्च' (१.२.१०) इति।

संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति॥ १॥
धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात्।
अनङ्लोपशिदीर्घत्वे[1] विध्यपेक्षे न सिध्यतः॥ २॥
अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत्।
क्नुसनोर्यत् कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे[2]॥ ३॥

उपधा चात्र इगेव गृह्यते, ततो भिनत्तीति गुणो न भवति। अपरे पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधमिति सूत्रार्थं वर्णयन्ति॥

## नाभ्यस्तस्याचि पिति सार्वधातुके॥ ८७ ॥

अभ्यस्तसंज्ञकस्याङ्गस्य लघूपधस्याजादौ पिति सार्वधातुके गुणो न भवति। नेनिजानि। वेविजानि। परिवेविषाणि। अनेनिजम्। अवेविजम्। पर्यवेविषम्। अभ्यस्तस्येति किम्? वेदानि। अचीति किम्? नेनेक्ति। पिद्ग्रहणमुत्तरार्थम्। सार्वधातुक इति किम्? निनेज। लघूपधस्येत्येव—जुहवानि। अजुहवम्॥ बहुलं छन्दसीति वक्तव्यम्॥ जुजोषत् ( ऋ० १.१७३.४ ) इति यथा स्यात्। पस्पशाते। चाकशीति, वावशीति। यङ्लुकि छान्दसमुपधाह्रस्वत्वं द्रष्टव्यम्, पस्पशात इत्यत्राभ्यासह्रस्वत्वं च। प्रकृत्यन्तराणां वा स्पशिकशिवशीनामेतानि रूपाणि॥

## भूसुवोस्तिङि॥ ८८ ॥

---

१ – 'अनल्लोपशिदीर्घत्वे' इति पाठान्तरम्।
२ – इदं कारिकात्रयं न्यासकृता न व्याख्यातम्।

भू सू इत्येतयोस्तिङि सार्वधातुके गुणो न भवति। अभूत्। अभूः। अभूवम्। सुवै, सुवावहै, सुवामहै। सूतेर्लुग्विकरणस्येदं ग्रहणम्। सुवतिसूयत्योर्विकरणेन तिङो व्यवधानम्। विकरणस्यैव ङित्त्वाद् गुणाभावः सिद्धः। तिङीति किम् ? भवति। सार्वधातुक इत्येव—व्यतिभविषीष्ट। अथ बोभवीतीति यङ्लुकि गुणप्रतिषेधः कस्माद् न भवति? ज्ञापकात्, यदयं बोभूतु ( ७.४.६५ ) इति गुणाभावार्थं निपातनं करोति॥

## उतो वृद्धिर्लुकि हलि ॥ ८९ ॥

सार्वधातुके पितीति वर्तते। उकारान्तस्याङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके। यौति। यौषि। यौमि। नौति। नौषि। नौमि। स्तौति। स्तौषि। स्तौमि। उत इति किम् ? एति। एषि। एमि। लुकीति किम् ? सुनोति। सुनोषि। सुनोमि। हलीति किम् ? यवानि। रवाणि। पितीत्येव—युतः। रुतः। अपि स्तुयाद् राजानमित्यत्र हि ङित् च पिद् न भवतीति पित्त्वप्रतिषेधाद् वृद्धेरभावः। 'नाभ्यस्तस्य०' ( ७.३.८७ ) इत्येतदिहानुवर्तते, योयोति, रोरोति इत्येवमाद्यर्थम्॥

## ऊर्णोतेर्विभाषा ॥ ९० ॥

ऊर्णोतेर्विभाषा वृद्धिर्भवति हलादौ पिति सार्वधातुके। प्रोर्णौति, प्रोर्णोति। प्रोर्णौषि, प्रोर्णोषि। प्रोर्णौमि, प्रोर्णोमि। हलीत्येव—प्रोर्णवानि॥

## गुणोऽपृक्ते ॥ ९१ ॥

ऊर्णोतेर्धातोरपृक्ते हलि पिति सार्वधातुके गुणो भवति। प्रौर्णोत्। प्रौर्णोः[१]। हलीति वर्तमाने यदपृक्तग्रहणं क्रियते, तेनैव ज्ञाप्यते भवत्येषा परिभाषा—'यस्मिन् विधिस्तदादावल्ग्रहणे' ( परि० ३३ ) इति॥

## तृणह इम् ॥ ९२ ॥

तृणह इत्येतस्याङ्गस्य इमागमो भवति हलि पिति सार्वधातुके। तृणेढि। तृणेक्षि। तृणेह्मि। अतृणेट्। वर्णाश्रयेऽप्यत्र प्रत्ययलक्षणमिष्यते। हलीति किम् ? तृणहानि। पितीत्येव—तृण्ढः। तृणह इत्यागतश्नम्को गृह्यते, श्नमि कृत इमागमो यथा स्यादिति॥

## ब्रुव ईट् ॥ ९३ ॥

ब्रू इत्येतस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्येडागमो भवति। ब्रवीति। ब्रवीषि।

१ – 'प्रोर्णोत्, प्रोर्णोः' इत्यपपाठो मुद्रितेषु।

ब्रवीमि। अब्रवीत्। हलीत्येव—ब्रवाणि। पितीत्येव—ब्रूतः॥

## यङो वा ॥ ९४ ॥

यङ उत्तरस्य हलादेः पितः सार्वधातुकस्येडागमो भवति वा। शाकुनिको लालपीति[1]। दुन्दुभिर्वावदीति ( ऋ० ६.४७.३१ )। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ( ऋ० ४.५८.३ )। न च भवति—वर्वर्ति ( ऋ० १.१६४.११ ), चर्कर्ति चक्रम्। हलादेः पितः सार्वधातुकस्य यङन्तादभाव इति यङ्लुगन्तस्योदाहरणम्॥

## तुरुस्तुशम्यमः सार्वधातुके॥ ९५ ॥

तु इति सौत्रोऽयं धातुः, 'रु शब्दे' ( अदा० २८ ), 'ष्टुञ् स्तुतौ' ( अदा० ३६ ), 'शमु उपशमे' ( दिवा० ९१ ), 'अम गत्यादिषु' ( भ्वा० ३१४ ) इत्येतेभ्यः परस्य सार्वधातुकस्य हलादेर्वा ईडागमो भवति। उत्तौति, उत्तवीति। उपरौति, उपरवीति। उपस्तौति, उपस्तवीति। शाम्यध्वम्, शमीध्वम् ( मै० सं० ४.१३.४ )। अभ्यमति, अभ्यमीति। शम्यमोः 'बहुलं छन्दसि' ( २.४.७३ ) इति विकरणलुकि सति हलादिसार्वधातुकमनन्तरं संभवति। आपिशलाः 'तुरुस्तुशम्यमः सार्वधातुकासुच्छन्दसि' इति पठन्ति। तत्र सर्वेषामेव छन्दसि विषये विधिरयं भवति। सार्वधातुक इत्यनुवर्तमाने पुनः सार्वधातुकग्रहणमपिदर्थम्—स्तुवीत, शमीध्वमित्यत्रापि यथा स्याद् इति॥

## अस्तिसिचोऽपृक्ते॥ ९६ ॥

अस्तेरङ्गात् सिजन्तात् च परस्यापृक्तस्य सार्वधातुकस्य ईडागमो भवति। अस्तेः—आसीत्। आसीः। सिजन्तात्—अकार्षीत्। असावीत्। अलावीत्। अपावीत्। अपृक्त इति किम्? अस्ति। अकार्षम्। आहिभुवोरीटि प्रतिषेध[2] इति स्थानिवद्भावप्रतिषेधः, तेनेह न भवति—आत्थ, अभूदिति॥

## बहुलं छन्दसि॥ ९७ ॥

अस्तिसिचोरपृक्तस्य सार्वधातुकस्य ईडागमो भवति बहुलं छन्दसि विषये। आप एवेदं सलिलं सर्वमाः[3]। आसीदिति स्थान आः क्रियापदम्। अहर्वाव तर्ह्यासीन्न रात्रिः ( मै० सं० १.५.१२ )। सिचः खल्वपि—गोभिरक्षाः ( ऋ० ९.१०७.९ )। प्रत्य-

---

१ - सुयंतो लालंपीति ( शौ० सं० ६.१११.१ )।
२ - 'आहिभुवोरीट्प्रतिषेधः' इति महाभाष्यपाठः ( १.१३९ )।
३ - सलिलं सर्वमा इदम् ( ऋ० १०.१२९.३ )।

ञ्चंमत्साः ( ऋ० १०.२८.४ )। अभैषीर्मा पुत्रकेति च भवति। छान्दसत्वाद् माङ्योगेऽप्यडागमो भवति—अक्षाः, अत्सा इति सिच इड्भावश्च॥

## रुदश्च पञ्चभ्यः॥ ९८ ॥

रुदादिभ्यः परस्य सार्वधातुकस्य हलादेरपृक्तस्य ईडागमो भवति। अरोदीत्। अरोदीः। अस्वपीत्। अस्वपीः। अश्वसीत्। अश्वसीः। प्राणीत्। प्राणीः। अजक्षीत्। अजक्षीः। पञ्चभ्य इति किम् ? अजागर्भवान्। अपृक्तस्येत्येव—रोदिति॥

## अड् गार्ग्यगालवयोः॥ ९९ ॥

रुदादिभ्यः पञ्चभ्यः परस्यापृक्तस्य सार्वधातुकस्याडागमो भवति गार्ग्यगालवयोर्मतेन। अरोदत्। अरोदः। अस्वपत्। अस्वपः। अश्वसत्। अश्वसः। प्राणत्। प्राणः। अजक्षत्। अजक्षः। गार्ग्यगालवयोर्ग्रहणं पूजार्थम्॥

## अदः सर्वेषाम्॥ १०० ॥

'अद भक्षणे' ( अदा० १ ) अस्मादुत्तरस्यापृक्तस्य सार्वधातुकस्याडागमो भवति सर्वेषामाचार्याणां मतेन। आदत्। आदः। अपृक्तस्येत्येव—अत्ति। अत्सि॥

## अतो दीर्घो यञि॥ १०१ ॥

अकारान्तस्याङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परतः। पचामि, पचावः, पचामः। पक्ष्यामि, पक्ष्यावः, पक्ष्यामः। अत इति किम् ? चिनुवः। चिनुमः। यञीति किम् ? पचतः। पचथः। सार्वधातुक इत्येव—अङ्गना।[1] केशवः। केचिदत्र तिङीत्यनुवर्तयन्ति[2], तेषां भववानिति क्वसौ सार्वधातुके दीर्घो न भवति॥

## सुपि च॥ १०२ ॥

'अतो दीर्घो यञि' ( ७.३.१०१ ) इत्यनुवर्तते। सुपि च यञादौ परतोऽकारान्तस्याङ्गस्य दीर्घो भवति। वृक्षाय। प्लक्षाय। वृक्षाभ्याम्। प्लक्षाभ्याम्। अत इत्येव—अग्निभ्याम्[3]। यञीत्येव—वृक्षस्य। प्लक्षस्य॥

---

१ - द्र० - पूर्वत्र ( ७.२.८० ) काशिका।
२ - ' सार्वधातुकदीर्घः ' इति मुद्रितेषु।
३ - ' वायुभ्याम् ' इत्यधिकं क्वचित्।

## बहुवचने झल्येत् ॥ १०३ ॥

बहुवचने झलादौ सुपि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति। वृक्षेभ्यः। प्लक्षेभ्यः। वृक्षेषु। प्लक्षेषु। बहुवचन इति किम् ? वृक्षाभ्याम्। प्लक्षाभ्याम्। झलीति किम् ? वृक्षाणाम्। सुपीत्येव—यजध्वम्। पचध्वम्॥

## ओसि च ॥ १०४ ॥

ओसि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति। वृक्षयोः स्वम्। प्लक्षयोः स्वम्। वृक्षयोर्निधेहि। प्लक्षयोर्निधेहि॥

## आङि चापः ॥ १०५ ॥

आङिति पूर्वाचार्यनिर्देशेन तृतीयैकवचनं गृह्यते। तस्मिन्नाङि परतश्चकारादोसि चाबन्तस्याङ्गस्यैकारादेशो भवति। खट्वया। मालया। खट्वयोः। मालयोः। बहुराजया। कारीषगन्ध्यया। बहुराजयोः। कारीषगन्ध्ययोः। आप इति पितो ग्रहणं किम् ? कीलालपा ब्राह्मणेन। कीलालपोर्ब्राह्मणयोः[1]। ङ्याब्ग्रहणेऽदीर्घग्रहणम्[2] इति वचनादिह न भवति—अतिखट्वेन ब्राह्मणकुलेन॥

## संबुद्धौ च ॥ १०६ ॥

आप इति वर्तते। संबुद्धौ च परत आबन्तस्याङ्गस्य एत्वं भवति। हे खट्वे। हे बहुराजे। हे कारीषगन्ध्ये॥

## अम्बार्थनद्योर्ह्रस्वः ॥ १०७ ॥

संबुद्धाविति वर्तते। अम्बार्थानामङ्गानां नद्यन्तानां च[3] ह्रस्वो भवति संबुद्धौ परतः। हे अम्ब। हे अक्क। हे अल्ल। नद्याः खल्वपि—हे कुमारि। हे शार्ङ्गरवि। हे ब्रह्मबन्धु। हे वीरबन्धु ॥ डलकवतीनां प्रतिषेधो वक्तव्यः॥ हे अम्बाडे। हे अम्बाले। हे अम्बिके ॥ छन्दसि वेति वक्तव्यम्॥ हे अम्बाड, हे अम्बाडे। हे अम्बाल, हे अम्बाले। हे अम्बिक, हे अम्बिके ॥ तलो ह्रस्वो वा ङिसंबुद्ध्योरिति वक्तव्यम्॥ देवते भक्तिः, देवतायां भक्तिः। हे देवत, हे देवते। छन्दस्येव ह्रस्वत्वमिष्यते ॥ मातृणां मातच् पुत्रार्थमर्हते॥ मातृणां मातजादेशो वक्तव्यः संबुद्धौ पुत्राय पुत्रमभिधातुम्। कीदृशाय ?

---

१ – 'ब्राह्मणकुलयोः' इत्यपपाठो मुद्रितेषु।
२ – 'ङ्याब्ग्रहणेऽदीर्घः' इति महाभाष्यवार्त्तिकम् ( १.१३८ )।
३ – 'च' इति नास्ति मुद्रितेषु ।

अर्हते—मात्रा व्यपदेशमर्हति श्लाघनीयत्वाद् यः पुत्रस्तदर्थम्। हे गार्गीमात। 'नद्यृतश्च' (५.४.१५३) इति समासान्तापवादो मातजादेशः। चित्करणमन्तोदात्तार्थम्॥

## ह्रस्वस्य गुणः॥ १०८ ॥

संबुद्धाविति वर्तते। ह्रस्वान्तस्याङ्गस्य गुणो भवति संबुद्धौ परतः। हे अग्ने। हे वायो। हे पटो। हे कुमारि, हे ब्रह्मबन्धु इत्येवमादीनां ह्रस्वविधानसामर्थ्याद् गुणो न भवति। यदि गुण इंष्टः स्यात्, अम्बार्थानां ह्रस्व इत्युक्त्वा नदीह्रस्वयोर्गुण इत्येवं ब्रूयात्॥

## जसि च॥ १०९ ॥

जसि परतो ह्रस्वान्तस्याङ्गस्य गुणो भवति। अग्नयः। वायवः। पटवः। धेनवः। बुद्धयः॥ जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधाया ह्रस्व इत्येतस्मात्॥ इतः प्रकरणात् प्रभृति छन्दसि वेति वक्तव्यम्। किं प्रयोजनम्? अम्बे, दर्वि, शतक्रत्वः, पश्वे नृभ्यः, किकिदीव्या। अम्बे, अम्ब (ऋ० १०.९७.२)। पूर्णा दर्वि (मा० सं० ३.४९), पूर्णा दर्वी। अधा शतक्रत्वः (ऋ० १०.९७.२), शतक्रतवः (काठ० सं० १६.१३)। पश्वे नृभ्यः (ऋ० १.४३.२), पशवे (ऋ० ३.६२.१४)। किकिदीव्या (मै० सं० २.७.१३), किकिदीविना (ऋ० १०.९७.१३)॥

## ऋतो ङिसर्वनामस्थानयोः॥ ११० ॥

गुण इति वर्तते। ऋकारान्तस्याङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति। ङौ—मातरि। पितरि। भ्रातरि। कर्तरि। सर्वनामस्थाने—कर्तारौ, कर्तारः। मातरौ। पितरौ। भ्रातरौ। तपरकरणं मुखसुखार्थम्॥

## घेर्ङिति॥ १११॥

घ्यन्तस्याङ्गस्य ङिति प्रत्यये परतो गुणो भवति। अग्नये। वायवे। अग्नेरागच्छति। वायोरागच्छति। अग्नेः स्वम्। वायोः स्वम्। घेरिति किम्? सख्ये। पत्ये। ङितीति किम्? अग्निभ्याम्। सुपीत्येव—पट्वी। कुरुतः॥

## आण्नद्याः॥ ११२ ॥

नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्याडागमो भवति। कुमार्यै। ब्रह्मबन्ध्वै। कुमार्याः। ब्रह्मबन्ध्वाः॥

## याडापः ॥ ११३ ॥

आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य याडागमो भवति। खट्वायै। बहुराजायै। कारीषगन्ध्यायै। खट्वायाः। बहुराजायाः। कारीषगन्ध्यायाः। अतिखट्वायेत्यत्राकृते दीर्घे ङ्याब्ग्रहणेऽदीर्घः ( महाभाष्य १.१३८ ) इति वचनाद् याडागमो न भवति, कृते तु लाक्षणिकत्वात् ( परि० १०५ ) ॥

## सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ११४ ॥

सर्वनाम्न आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य स्याडागमो ह्रस्वश्च भवति। सर्वस्यै। विश्वस्यै। यस्यै। तस्यै। कस्यै। अन्यस्यै। सर्वस्याः। विश्वस्याः। यस्याः। तस्याः। कस्याः। अन्यस्याः। आप इत्येव—भवति। भवते॥

## विभाषा द्वितीयातृतीयाभ्याम् ॥ ११५ ॥

द्वितीया तृतीया इत्येताभ्यामुत्तरस्य ङितः प्रत्ययस्य विभाषा स्याडागमो भवति, द्वितीयातृतीययोश्च ह्रस्वो भवति। द्वितीयस्यै, द्वितीयायै। तृतीयस्यै, तृतीयायै॥

## ङेराम् नद्याम्नीभ्यः ॥ ११६ ॥

नद्यन्तादाबन्ताद् नीत्येतस्मात् चोत्तरस्य ङेरामित्ययमादेशो[1] भवति। कुमार्याम्। गौर्याम्। ब्रह्मबन्ध्वाम्। धीबन्ध्वाम्। आपः—खट्वायाम्। बहुराजायाम्। कारीषगन्ध्यायाम्। नी—राजन्याम्। सेनान्याम्। ग्रामण्याम्॥

## इदुद्भ्याम् ॥ ११७ ॥

इकारोकाराभ्यां नदीसंज्ञकाभ्यामुत्तरस्य ङेरामादेशो भवति। कृत्याम्। धेन्वाम्॥

## औत् ॥ ११८ ॥

इदुद्भ्यामुत्तरस्य ङेरौकारादेशो भवति। यद् न नदीसंज्ञं नापि घिसंज्ञमिकारान्तम्, तदिहोदाहरणम्। सख्यौ। पत्यौ॥

## अच्च घेः ॥ ११९ ॥

औदिति वर्तते। घिसंज्ञकादुत्तरस्य ङेरौकारादेशो भवति, तस्य च घेरकारादेशो

१ - 'इत्ययम्' नास्ति है०।

भवति। अग्नौ। वायौ। कृतौ। धेनौ। पटौ। अदिति तपरकरणं स्त्रियां टापो निवृत्त्यर्थम्। औदच्च घेरिति येषामेकमेवेदं सूत्रम्, ते प्रधानशिष्टमिदुद्भ्यामौत्वं वर्णयन्ति, अन्वाचयशिष्टं घेरकारमिति॥

### आङो नास्त्रियाम्॥ १२० ॥

घेरुत्तरस्याङो नाभावो भवत्यस्त्रियाम्। अग्निना। वायुना। पटुना। पुंसि इति नोक्तम्—अमुना ब्राह्मणकुलेन। अस्त्रियामिति किम्? कृत्या। धेन्वा॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तौ सप्तमाध्यायस्य तृतीयः पादः॥



## ॥ सप्तमाध्यायस्य चतुर्थः पादः ॥

### णौ चङ्युपधाया ह्रस्वः॥ १ ॥

'अङ्गस्य' (६.४.१) इति वर्तते। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वो भवति। अचीकरत्। अजीहरत्। अलीलवत्। अपीपवत्। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, तत्र कृते, द्विर्वचनम्। इह तु मा भवानटिटदिति नित्यत्वाद् द्वितीयस्य द्विर्वचनं प्राप्नोति, तथा सति ह्रस्वभाविनोऽङ्गस्याकारस्योपधात्वं विहतम्[1] इति ह्रस्वो न स्यात्? नैष दोषः। ओणेर्ऋदित्करणं ज्ञापकम्—नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति। णाविति किम्? चङ्युपधाया ह्रस्व इत्युच्यमानेऽलीलवदित्यत्र वचनसामर्थ्यादन्तरङ्गामपि वृद्धिमादेशं च बाधित्वा ह्रस्वः स्यात्। अदीदपदित्यत्र ह्रस्वत्वेन पुको बाधः स्यात्। अपीपचदित्येवमादौ तु नैव स्यात्। चङीति किम्? कारयति। हारयति। उपधाया इति किम्? अचकाङ्क्षत्। अववाञ्छत्। तदेतदुपधाग्रहणमु-

१ – 'विहितम्' इत्यपपाठो मुद्रितेषु।

त्तरार्थमवश्यं कर्तव्यम्, तदिहापि ह्रस्वत्वं निवर्तयतीत्येवमर्थं 'येन नाव्यवधानम् ०' ( व्या० प० ४६ ) इत्येतद् नाश्रयितव्यमिति ॥ उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम्[1]॥ वादितवन्तं प्रयोजितवान् अवीवदद् वीणां परिवादकेन। योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावात् तेन वाग्लोपित्वाद्[2] अङ्गस्य ह्रस्वो न प्राप्नोति। ण्याकृतिनिर्देशात् सिद्धम्॥

## नाग्लोपिशास्वृदिताम् ॥ २ ॥

अग्लोपिनामङ्गानां शासेर्ऋदितां च णौ चङ्युपधाया ह्रस्वो न भवति। अग्लोपिनां तावत्—मालामाख्यद् अममालत्। मातरमाख्यद् अममातत्[3]। राजानमतिक्रान्तवान् अत्यरराजत्। लोमान्यनुमृष्टवान् अन्वलुलोमत्। अगेव यत्र केवलो लुप्यते तत्र स्थानिवद्-भावादपि सिद्धम्, हलचोरादेशे तु न सिध्यतीति तदर्थमेतद् वचनम्। शासेः—अशशासत्। ऋदिताम्—बाधृ—अबबाधत्। याचृ—अययाचत्। ढौकृ—अडुढौकत्॥

## भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ३ ॥

भ्राज भास भाष दीप जीव मील पीड इत्येतेषामङ्गानां णौ चङ्युपधाया ह्रस्वो भवत्यन्यतरस्याम्। भ्राज—अबिभ्रजत्, अबभ्राजत्। भास—अबीभसत्, अबभासत्। भाष—अबीभषत्, अबभाषत्। दीप—अदीदिपत्, अदिदीपत्। जीव—अजीजिवत्, अजिजीवत्। मील—अमीमिलत्, अमिमीलत्। पीड—अपीपिडत्। अपिपीडत्। भ्राजभासोर्ऋदित्करणमपाणिनीयम् ॥ काण्यादीनां चेति[4] वक्तव्यम्॥ अचकाणत्, अचीकणत्। अववाणत्, अवीवणत्॥

## लोपः पिबतेरीच्चाभ्यासस्य ॥ ४ ॥

पिबतेरङ्गस्य णौ चङ्युपधाया लोपो भवति, अभ्यासस्येकारादेशो भवति। अपीप्यत्, अपीप्यताम्, अपीप्यन्। उपधालोपे कृत ओः पुयण्वचनं ( ७.४.८० ) ज्ञापकं णौ स्थानिवद्भावस्येति स्थानिवद्भावाद् द्विर्वचनम्॥

## तिष्ठतेरित् ॥ ५ ॥

तिष्ठतेरङ्गस्य णौ चङ्युपधाया इकारादेशो भवति। अतिष्ठिपत्, अतिष्ठिपताम्, अतिष्ठिपन्॥

---

१ - 'णौ णिच्युपसंख्यानम्' इति पाठान्तरम्।

२ - 'स्थानिवद्भावेनाग्लोपित्वाद्वा' इति बाल०। 'स्थानिवद्भावेनाग्लोपित्वाद्' इति है०। यथान्यासाभिप्रायमत्र शोधः।

३ - 'अममातरत्' इत्यपपाठो मुद्रितेषु। ४ - 'वेति' इति बाल०।

## जिघ्रतेर्वा ॥ ६ ॥

जिघ्रतेरङ्गस्य णौ चङ्युपधाया इकारादेशो वा भवति। अजिघ्रिपत्, अजिघ्रिपताम्, अजिघ्रिपन्। अजिघ्रपत्, अजिघ्रपताम्, अजिघ्रपन्॥

## उर्ऋत्॥ ७ ॥

णौ चङ्युपधाया ऋवर्णस्य स्थाने वा ऋकारादेशो भवति। इररारामपवादः। इर्—अचिकीर्तत्, अचीकृतत्। अर्—अववर्तत्, अवीवृतत्। आर्—अममार्जत्, अमीमृजत्। वचनसामर्थ्यादन्तरङ्गा अपि इररारो बाध्यन्ते। तपरकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात्—अचीकृतदिति। न चायं भाव्यमानः, किं तु आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते॥

## नित्यं छन्दसि॥ ८ ॥

छन्दसि विषये णौ चङ्युपधाया ऋवर्णस्य स्थान ऋकारादेशो भवति नित्यम्। अवींवृधत् पुरोडाशेन ( मा० सं० २८.२३ )। अवीवृधताम्। अवीवृधन्॥

## दयतेर्दिगि लिटि॥ ९ ॥

दयतेरङ्गस्य लिटि परतो दिगीत्ययमादेशो भवति। अवदिग्ये, अवदिग्याते, अवदिग्यिरे। दयतेरिति दीङो ( दिवा० २४ ) ग्रहणं न तु 'दय दाने' ( भ्वा० ३२२ ) इत्यस्य। तस्य हि लिट्याम् ( ३.१.३७ ) विहितः। दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते॥

## ऋतश्च संयोगादेर्गुणः॥ १० ॥

ऋकारान्तस्याङ्गस्य संयोगादेर्गुणो भवति लिटि परतः। स्वृ—सस्वरतुः, सस्वरुः। ध्वृ—दध्वरतुः, दध्वरुः। स्मृ—सस्मरतुः, सस्मरुः। ऋत इति किम् ? चिक्षियतुः, चिक्षियुः। संयोगादेरिति किम् ? चक्रतुः, चक्रुः। प्रतिषेधविषयेऽपि गुणो यथा स्यादित्ययमारम्भः। वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते। सस्वार। सस्मार। लिटीत्येव—स्मृतः। स्मृतवान् ॥ संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थं कर्तव्यम्॥ संचस्करतुः, संचस्करुः इति। अत्र हि 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' ( सीर० प० १२८ ) इत्यत्र दर्शने लिटि कृते, तदाश्रये च द्विर्वचने, पश्चादुपसर्गयोगे सति 'अडभ्यासव्यवायेऽपि' ( ६.१.१३६ ) इति सुट् क्रियते। एवं च कृत्वा संस्कृषीष्ट, उपस्कृषीष्टेत्यत्र सुटो बहिरङ्गलक्षणस्यासिद्धत्वाद् 'ऋतश्च संयोगादेः' ( ७.२.४३ ) इतीडागमो न भवति॥

## ऋच्छत्यृताम् ॥ ११ ॥

ऋच्छतेरङ्गस्य ऋ इत्येतस्य ऋकारान्तानां च लिटि परतो गुणो भवति। ऋच्छ—आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। ऋ—आरतुः, आरुः। ऋकारान्तानाम्—निचकरतुः, निचकरुः। निजगरतुः, निजगरुः। ऋच्छेरलघूपधत्वादप्राप्तो गुणो विधीयते, ऋतां तु प्रतिषिद्धः। वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते। निचकार। निजगार॥

## शॄदॄप्रां ह्रस्वो वा ॥ १२ ॥

शॄ दॄ पॄ इत्येतेषामङ्गानां लिटि परतो वा ह्रस्वो भवति। शॄ—विशश्रतुः, विशश्रुः। विशशरतुः, विशशरुः। दॄ—विदद्रतुः, विदद्रुः। विददरतुः, विददरुः। पॄ—निपप्रतुः, निपप्रुः। निपपरतुः, निपपरुः। ह्रस्ववचनमित्त्वोत्त्वनिवृत्त्यर्थम्। केचिदेतत् सूत्रं प्रत्याचक्षते। 'श्रा पाके' ( अदा० ४६ ), 'द्रा कुत्सायां गतौ' ( अदा० ४७ ), 'प्रा पूरणे' ( अदा० ५४ ) इत्येतेषामनेकार्था धातव इति शॄदॄप्रामर्थे वर्तमानानां विशश्रतुः, विशश्रुः, विदद्रतुः, विदद्रुः, निपप्रतुः, निपप्रुः इत्येतानि रूपाणि साधयन्ति। तथा च सति क्वसौ विशशृवानित्येतद् रूपं न स्यात्॥

## केऽणः ॥ १३ ॥

के प्रत्यये परतोऽणो ह्रस्वो भवति। ज्ञका। कुमारिका। किशोरिका। अण इति किम्? गोका। नौका। राका, धाकेत्यत्र 'उणादयो बहुलम्' ( ३.३.१ ) इति ह्रस्वो न भवति। 'न कपि' ( ७.४.१४ ) इति प्रतिषेधसामर्थ्यात् कनोऽपि सानुबन्धकस्य ग्रहणमिह भवति॥

## न कपि ॥ १४ ॥

कपि प्रत्यये परतोऽणो ह्रस्वो न भवति। बहुकुमारीकः। बहुवधूकः। बहुलक्ष्मीकः। 'गोस्त्रियोरुपसर्जनस्य' ( १.२.४८ ) इत्ययमपि ह्रस्वः कपि न भवति। समासार्थे ह्युत्तरपदे कपि कृते, पश्चात् कबन्तेन सह[1] समासेन भवितव्यमिति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं[2] न भवति॥

## आपोऽन्यतरस्याम् ॥ १५ ॥

---

१ – 'कबन्तेन सह' इति नास्ति बाल०।
२ – 'स्त्रीप्रत्ययान्तसमासप्रातिपदिकम्' इति मुद्रितेषु समस्तः पाठः।

आबन्तस्याङ्गस्य कपि ह्रस्वो न भवत्यन्यतरस्याम्। बहुखट्वाकः, बहुखट्वकः। बहुमालाकः, बहुमालकः॥

## ऋदृशोऽङि गुणः॥ १६ ॥

ऋवर्णान्तानां दृशेश्चाङि परतो गुणो भवति। शकलाङ्गुष्ठकोऽकरत्। अ॒हं तेभ्यो॑ऽकरं॒ नमः॑ ( मा० सं० १६.८ )। असरत्। आरत्। जरा। दृशेः—अदर्शत्, अदर्शताम्, अदर्शन्॥

## अस्यतेस्थुक्॥ १७ ॥

अस्यतेरङ्गस्य थुगागमो भवत्यङि परतः। आस्थत्, आस्थताम्, आस्थन्॥

## श्वयतेरः॥ १८ ॥

श्वयतेरङ्गस्याकारादेशो भवत्यङि परतः। अश्वत्, अश्वताम्, अश्वन्॥

## पतः पुम्॥ १९ ॥

पतेरङ्गस्य पुमागमो भवत्यङि परतः। अपप्तत्, अपप्तताम्, अपप्तन्॥

## वच उम्॥ २० ॥

वचेरङ्गस्याङि परत उमागमो भवति। अवोचत्, अवोचताम्, अवोचन्॥

## शीङः सार्वधातुके गुणः॥ २१ ॥

शीङोऽङ्गस्य सार्वधातुके परतो गुणो भवति। शेते, शयाते, शेरते। सार्वधातुक इति किम्? शिश्ये॥

## अयङ् यि क्ङिति॥ २२ ॥

यकारादौ क्ङिति प्रत्यये परतः शीङोऽङ्गस्यायङित्ययमादेशो भवति। शय्यते। शाशय्यते। प्रशय्य। उपशय्य। यीति किम्? शिश्ये। क्ङितीति किम्? शेयम्॥

## उपसर्गाद् ध्रस्व ऊहतेः॥ २३ ॥

उपसर्गादुत्तरस्य ऊहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः। समुह्यते। समुह्य गतः। अभ्युह्यते। अभ्युह्य गतः। उपसर्गादिति किम्? ऊह्यते। ऊहतेरिति

किम् ? समीह्यते। यीत्येव—समूहितम्। क्ङितीत्येव—समूह्योऽयमर्थः[१]। अण इत्येव—आ ऊह्यत ओह्यते। समोह्यते॥

## एतेर्लिङि ॥ २४ ॥

एतेरङ्गस्योपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति। उदियात्। समियात्। अन्वियात्। आशिषि लिङि 'अकृत्सार्वधातुकयोः ०' ( ७.४.२५ ) इति दीर्घत्वे कृते ह्रस्वोऽनेन भवति। उपसर्गादित्येव—ईयात्। अण इत्येव—आ ईयात् एयात्। समेयात्॥

## अकृत्सार्वधातुकयोर्दीर्घः ॥ २५ ॥

अकृद्यकारेऽसार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति। भृशायते। सुखायते। दुःखायते। चीयते। चेचीयते। स्तूयते। तोष्टूयते। चीयात्। स्तूयात्। अकृदिति किम् ? प्रकृत्य। प्रहृत्य। परत्वाद् दीर्घत्वेन तुको बाधः स्यात्। असार्वधातुक इति किम् ? चिनुयात्। सुनुयात्। क्ङितीत्येव—उरुया। धृष्णुया॥

## च्वौ च ॥ २६ ॥

च्विप्रत्यये परतोऽजन्तस्याङ्गस्य दीर्घो भवति। शुचीकरोति। शुचीभवति। शुचीस्यात्। पटूकरोति। पटूभवति। पटूस्यात्॥

## रीङ् ऋतः ॥ २७ ॥

ऋकारान्तस्याङ्गस्याकृद्यकारेऽसार्वधातुके यकारे च्वौ च परतो रीङित्ययमादेशो भवति। मात्रीयति। मात्रीयते। पित्रीयति[२]। पित्रीयते। चेक्रीयते। मात्रीभूतः। क्ङितीत्येतद् निवृत्तम्, तेनेहापि भवति—पितुरागतं पित्र्यम्। ऋत इति तपरकरणं किम्? चेकीर्यते। निजेगिल्यते॥

## रिङ् शयग्लिङ्क्षु ॥ २८ ॥

ऋकारान्तस्याङ्गस्य श यक् इत्येतयोर्लिङि च यकारादौ असार्वधातुके परतो रिङित्ययमादेशो भवति। श—आद्रियते। आध्रियते। यक्—क्रियते। ह्रियते। लिङ्—क्रियात्। ह्रियात्। रिङ्वचनं दीर्घनिवृत्त्यर्थम्। असार्वधातुक इत्येव—बिभृयात्।

---

१ – 'अभ्यूह्योऽयमर्थः' इति बाल०।
२ – 'पित्रीयति' इति क्वाचित्कः पाठः।

यीत्येव—कृषीष्ट। हृषीष्ट॥

## गुणोऽर्तिसंयोगाद्योः॥ २९ ॥

ऋतो यकि लिङि इति वर्तते। श इत्यसंभवाद् निवृत्तम्। गुणो भवत्यर्तेः संयोगादीनामृकारान्तानां यकि परतो लिङि च यकारादावसार्वधातुके। अर्यते। अर्यात्। स्मर्यते। स्मर्यात्। इह संस्क्रियते, संस्क्रियादिति सुटो बहिरङ्गलक्षणस्यासिद्धत्वादभक्तत्वाद् वा संयोगादित्वमङ्गस्य नास्तीति गुणो न प्रवर्तते। यीत्येव—स्वृषीष्ट। ध्वृषीष्ट। असार्वधातुक इत्येव—इयृयात्॥

## यङि च॥ ३० ॥

यङि च परतो अर्तेः संयोगादेश्च ऋतो गुणो भवति। अरार्यते। सास्वर्यते। दाध्वर्यते। सास्मर्यते। अर्तेः 'अट्यर्त्यशूर्णोतीनामुपसंख्यानम्' ( ३.१.२२ वा० ) इति यङ्। 'न न्द्राः संयोगादयः' ( ६.१.३ ) इति द्विर्वचनप्रतिषेधो यकारपरस्य[1] नेष्यते ॥ हन्तेर्हिंसायां यङि घ्नीभावो वक्तव्यः॥ जेघ्नीयते। हिंसायामिति किम् ? जङ्घन्यते॥

## ई घ्राध्मोः॥ ३१ ॥

घ्रा ध्मा इत्येतयोर्यङि परत ईकारादेशो भवति। जेघ्रीयते। देध्मीयते॥

## अस्य च्वौ॥ ३२ ॥

ई इति वर्तते। अवर्णान्तस्याङ्गस्य च्वौ परत ईकारादेशो भवति। शुक्लीभवति। शुक्लीस्यात्। खट्वीकरोति। खट्वीस्यात्॥

## क्यचि च॥ ३३ ॥

अस्येति वर्तते। क्यचि परतोऽवर्णान्तस्याङ्गस्य ईकारादेशो भवति। पुत्रीयति। घटीयति। खट्वीयति। मालीयति। 'अकृत्सार्वधातुकयोर्दीर्घः' ( ७.४.२५ ) इत्यस्यापवादः। पृथग्योगकरणमुत्तरार्थम्॥

## अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु॥ ३४ ॥

अशनाय उदन्य धनाय इत्येतानि निपात्यन्ते बुभुक्षा पिपासा गर्ध इत्येतेष्वर्थेषु।

---

१ - ' यकारस्य ' इत्यपपाठो है०।

अशनायेत्यशनशब्दस्य आत्वं क्यचि निपात्यते। अशनायतीति भवति बुभुक्षा चेत्। अशनीयतीत्येवान्यत्र। उदन्येति उदकशब्दस्य उदन्नादेशो निपात्यते। उदन्यतीति भवति पिपासा चेत्। उदकीयतीत्येवान्यत्र। धनायेति धनशब्दस्य आत्वं निपात्यते। धनायतीति भवति गर्धश्चेत्। धनीयतीत्येवान्यत्र॥

## नच्छन्दस्यपुत्रस्य॥ ३५ ॥

छन्दसि विषये पुत्रवर्जितस्यावर्णान्तस्याङ्गस्य क्यचि यदुक्तं तद् न भवति। किं चोक्तम्? दीर्घत्वमीत्वं च। मित्रयुः ( मै० सं० २.६.१२ )। सं स्वेदयुः ( मै० सं० ४.१२.२ )। देवाञ्जिगाति सुम्नयुः ( ऋ० ३.२७.१ )। अपुत्रस्येति किम्? पुत्रीयन्तः सुदानवः ( ऋ० ७.९६.४ ) ॥ अपुत्रादीनामिति वक्तव्यम्॥ जनीयन्तो न्वग्रवः ( ऋ० ७.९६.४ )॥

## दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति॥ ३६ ॥

दुरस्युः द्रविणस्युः वृषण्यति रिषण्यति इत्येतानि छन्दसि निपात्यन्ते। दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते। अवियोना दुरस्युः[1]। दुष्टीयतीति प्राप्ते। द्रविणशब्दस्य द्रविणस्भावो निपात्यते। द्रविणस्युर्विपन्यया ( ऋ० ६.१६.३४ )। द्रविणीयतीति प्राप्ते। वृषशब्दस्य वृषण्भावो निपात्यते। वृषण्यति ( ऋ० ९.५.६ )। वृषीयतीति प्राप्ते। रिष्टशब्दस्य रिषण्भावो निपात्यते। रिषण्यति ( ऋ० २.२३.१२ )। रिष्टीयतीति प्राप्ते॥

## अश्वाघस्यात्॥ ३७ ॥

अश्व अघ इत्येतयोः क्यचि परतः छन्दसि विषय आकारादेशो भवति। अश्वायन्तो मघवन् ( ऋ० ७.३२.२३ )। मा त्वा वृका अघायवो विदन् ( मा० सं० ४.३४ )। एतदेवात्ववचनं ज्ञापकं 'नच्छन्दस्यपुत्रस्य' ( ७.४.३५ ) इति दीर्घप्रतिषेधो भवतीति॥

## देवसुम्नयोर्यजुषि काठके॥ ३८ ॥

देव सुम्न इत्येतयोः क्यचि परत आकारादेशो भवति काठके यजुषि। देवायते[2] यजमानाय ( काठ० सं० २.९ )। सुम्नायन्तो हवामहे ( काठ० सं० ८.१७ )। यजुषीति किम्? देवाञ्जिगाति सुम्नयुः[3] ( ऋ० ३.२७.१ )। काठक इति किम्? सुम्नयु-

१ – अवबाढो दुरस्युः ( काठ० सं० २.११ )।
२ – 'देवायन्तो' इति बाल०।
३ – बह्वृचानां काठकं सम्प्रति नोपलभ्यते।

रिदमंसीदमुसि ( तै० सं० २.५.७.४ )॥

## कव्यध्वरपृतनस्यर्चि लोपः॥ ३९ ॥

कवि अध्वर पृतना इत्येतेषामङ्गानां क्यचि परतो लोपो भवति ऋचि विषये। कव्यन्तः सुमनसः। अध्वर—अध्वुर्यन्तंः ( मा० सं० १७.५६ )। पृतन्यन्तः ( पै० सं० २.८९.४ ) तिष्ठन्ति॥

## द्यतिस्यतिमास्थामित् ति किति॥ ४० ॥

द्यति स्यति मा स्था इत्येतेषामङ्गानामिकारादेशो भवति तकारादौ किति प्रत्यये परतः। द्यति—निर्दितः। निर्दितवान्। स्यति—अवसितः। अवसितवान्। मा—मितः। मितवान्। स्था—स्थितः। स्थितवान्। तीति किम् ? अवदाय। कितीति किम् ? अवदाता॥

## शाच्छोरन्यतरस्याम्॥ ४१ ॥

शा छा इत्येतयोरन्यतरस्यामिकारादेशो भवति तकारादौ किति। शा—निशितम्, निशातम्। निशितवान्, निशातवान्। छा—अवच्छितम्, अवच्छातम्। अवच्छितवान्, अवच्छातवान् ॥ श्यतेरित्वं व्रते नित्यमिति वक्तव्यम्॥ संशितो ब्राह्मणः। संशितव्रत इत्यर्थः। व्यवस्थितविभाषाविज्ञानात् सिद्धम्।

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥

## दधातेर्हिः॥ ४२ ॥

दधातेरङ्गस्य हीत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः। हितः। हितवान्। हित्वा॥

## जहातेश्च क्त्वि॥ ४३ ॥

जहातेरङ्गस्य हीत्ययमादेशो भवति क्त्वाप्रत्यये परतः। हित्वा राज्यं वनं गतः। हित्वा गच्छति। जहातेर्निर्देशाद् जिहातेः[1] न भवति। हात्वां[2]॥

---

१ – 'जिहीतेः' इति मुद्रितपाठः।
२ – जाहित्वेति प्रयोजनान्तरं द्रष्टव्यं यथान्यासपदमञ्जरि।

## विभाषा छन्दसि ॥ ४४ ॥

जहातेरङ्गस्य विभाषा हीत्ययमादेशो भवति छन्दसि विषये क्त्वाप्रत्यये परतः। हित्वा शरीरं ( तै० ब्रा० २.५.६.५ ) यातव्यम्। हात्वा ॥

## सुधितवसुधितनेमधितधिष्वधिषीय च ॥ ४५ ॥

सुधित वसुधित नेमधित धिष्व धिषीय इत्येतानि छन्दसि विषये निपात्यन्ते। तत्र सुधित वसुधित नेमधित इति सुवसुनेमपूर्वस्य दधातेः क्तप्रत्यय इत्वमिडागमो वा प्रत्ययस्य निपात्यते। गर्भं माता सुधितम् ( ऋ० १०.२७.१६ )। सुहितमिति प्राप्ते। वसुधितमग्नौ जुहोति। वसुहितमिति प्राप्ते। नेमधिता ( ऋ० १०.९३.१३ ) बाधन्ते। नेमहिता इति प्राप्ते। धिष्वेति लोण्मध्यमैकवचने दधातेरित्वमिडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते। स्तोमं धिष्व ( ऋ० ८.३३.१५ )। धत्स्वेति प्राप्ते। धिषीयेति आशीर्लिङ्यात्मनेपदोत्तमैकवचने दधातेरित्वमिडागमो वा प्रत्ययस्य निपात्यते। धिषीय ( तै० सं० १.६.४.४ )। धासीयेति प्राप्ते ॥

## दो दद् घोः ॥ ४६ ॥

दा इत्येतस्य घुसंज्ञकस्य ददित्ययमादेशो भवति तकारादौ किति प्रत्यये परतः। दत्तः। दत्तवान्। दत्तिः। द इति किम् ? धीतः। धीतवान्। धेट एतद् रूपम्। घोरिति किम् ? 'दाप् लवने' ( अदा० ५२ )—दातं बर्हिः। 'दैप् शोधने' ( भ्वा० ६५८ )—अवदातं मुखम्। अयमादेशस्थान्त इष्यते। एवं ह्युक्तम्—

तान्ते दोषो दीर्घत्वं स्याद् दान्ते दोषो निष्ठानत्वम्।
धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात् थान्तम् ॥ ( महाभाष्य ३.३५०–३५१ )

यदि तु 'दस्ति' ( ६.३.१२४ ) इति तकारादौ दीर्घत्वम्, तदा तान्तेऽप्यदोषः। दान्तधान्तयोरपि 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि० ८५ ) इति नत्वधत्वे न भविष्यत इति न दोषः।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

'अच उपसर्गात् तः' ( ७.४.४७ ) इति प्राप्ते निपात्यन्ते[1]। अनुपसर्गा वा एतेऽवादयः क्रियान्तरविषया वेदितव्याः ॥

---

१ – पूर्वत्र काशिका ( १.४.५७ ) द्रष्टव्या।

## अच उपसर्गात् तः॥ ४७ ॥

अजन्तादुपसर्गादुत्तरस्य दा इत्येतस्य घुसंज्ञकस्य त इत्ययमादेशो भवति तकारादौ किति। प्रत्तम्। अवत्तम्। नीत्तम्। परीत्तम्। अच इति किम् ? निर्दत्तम्। दुर्दत्तम्। उपसर्गादिति किम् ? दधि दत्तम्। मधु दत्तम्। घोरित्येव—अवदातं मुखम्। उपसर्गादिति पञ्चमीनिर्देशादादेरलः प्राप्नोति। तत्र समाधिमाहुः। अच इत्येतद् द्विरावर्तयितव्यम्[1]। तत्रैकं पञ्चम्यन्तमुपसर्गविशेषणार्थम्, अपरमपि षष्ठ्यन्तं स्थानिनिर्देशार्थमित्याकारस्य स्थाने तकारो भवति। द्वितकारो वा संयोगोऽयमादिश्यते, सोऽनेकाल्त्वात् सर्वस्य भविष्यति। 'अपो भि' ( ७.४.४८ ) इत्यत्र पञ्चम्यन्तमच इत्यनुवर्तते। तेन पकारमात्रस्य भविष्यति ॥ द्यतेरित्वादचस्त इत्येतद् भवति विप्रतिषेधेन॥ अवत्तम्। प्रत्तं ( मै० सं० १.६.९ ) जुहोति॥

## अपो भि॥ ४८ ॥

अप् इत्येतस्याङ्गस्य भकारादौ प्रत्यये परतस्त इत्ययमादेशो भवति। अद्भिः। अद्भ्यः। भीति किम् ? अप्सु। स्ववःस्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि भकारादौ। स्ववद्भिः। स्वतवद्भिः[2]। माद्भिष्ट्वा इन्द्रो वृत्रहा[3]। समुषद्भिरजायथाः ( ऋ० १.६.३ )॥

## सः स्यार्धधातुके॥ ४९ ॥

सकारान्तस्याङ्गस्य सकारादावार्धधातुके परतस्तकारादेशो भवति। वत्स्यति। अवत्स्यत्। विवत्सति। जिघत्सति। स इति किम् ? वक्ष्यति। सीति किम् ? घासः। वासः। आर्धधातुक इति किम् ? आस्से। वस्से॥

## तासस्त्योर्लोपः॥ ५० ॥

तासेरस्तेश्च सकारस्य सकारादौ प्रत्यये परतो लोपो भवति। तासेः—कर्तासि। कर्तासे। अस्तेः—त्वमसि। व्यतिसे। अस्तेरकारसकारयोर्लुप्तयोः स इति प्रत्ययमात्रमेतत् पदम्। तेन 'सात्पदाद्योः' ( ८.३.१०९ ) इति षत्वं न भवति[4]॥

---

१ - ' आवर्त्यते ' इति बाल०।
२ - स्वतवद्भ्यः ( मै० सं० १.१०.६ )।
३ - माद्भ्यस्त्वां चन्द्रो वृत्रहा ( शौ० सं० १९.२७.२ )।
४ - यथान्यासपदमञ्जरि ' तेन........भवति ' इति पाठो न स्यात्।

## रि च ॥ ५१ ॥

रेफादौ च प्रत्यये परतः तासस्त्योः सकारस्य लोपो भवति। कर्तारौ, कर्तारः। अध्येतारौ, अध्येतारः ॥

## ह एति ॥ ५२ ॥

तासस्त्योः सकारस्य हकारादेशो भवत्येति परतः। कर्ताहे। अस्तेः—व्यतिहे ॥

## यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥

यकारादाविवर्णादौ च परतो दीधीवेव्योर्लोपो भवति। यकारादौ—आदीध्य गतः। आवेव्य गतः। आदीध्यते। आवेव्यते। इवर्णादौ—आदीधिता। आवेविता। लिङि—आदीधीत। आवेवीत। यीवर्णयोरिति किम् ? आदीध्यनम्। आवेव्यनम् ॥

## सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥

सनि प्रत्यये सकारादौ परतो मी मा घु रभ लभ शक पत पद इत्येतेषामङ्गानामचः स्थान इसित्ययमादेशो भवति। मी इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमिष्यते। मित्सति। प्रमित्सति। मा इति 'गामादाग्रहणेष्वविशेषः' ( परि० १०६ )। मित्सते। अपमित्सते। घु—दित्सति। धित्सति। रभ—आरिप्सते। लभ—आलिप्सते। शक—शिक्षति। पत—पित्सति। पद—प्रपित्सते। सनीति किम् ? दास्यति। सीत्येव—पिपतिषति। 'तनिपतिदरिद्राणामुपसंख्यानम्' ( ७.२.४९ का० ) इति पतेरिडागमविकल्पः ॥ सनि राधो हिंसायामच इस् वक्तव्यः॥ प्रतिरित्सति। हिंसायामिति किम् ? आरिरात्सति ॥

## आप्ज्ञप्यृधामीत् ॥ ५५ ॥

आप् ज्ञपि ऋध इत्येतेषामङ्गानामच ईकारादेशो भवति सनि सकारादौ परतः। आप्—ईप्सति। ज्ञपि—ज्ञीप्सति। ऋध्—ईर्त्सति। ज्ञपेर्द्वावचौ तत्र णेः पूर्वविप्रतिषेधेन लोपः, इतरस्य त्वीत्वम्। सनीत्येव—प्राप्स्यति। सीत्येव—जिज्ञपयिषति। अर्दिधिषति। 'सनीवन्तर्ध०' ( ७.२.४९ ) इति ज्ञपेर्ऋधेश्चेटो विकल्पः ॥

## दम्भ इच्च ॥ ५६ ॥

दम्भेरच इकारादेशो भवति, चकारादीत् च, सनि सकारादौ परतः। धिप्सति। धीप्सति। सीत्येव—दिदम्भिषति ॥

## मुचोऽकर्मकस्य गुणो वा ॥ ५७ ॥

मुचोऽकर्मकस्य गुणो वा भवति सनि सकारादौ परतः। 'हलन्ताच्च' ( १.२.१० ) इति कित्त्वप्रतिषेधो विकल्प्यते। मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव। अकर्मकस्येति किम् ? मुमुक्षति वत्सं देवदत्तः। कर्मकर्तरि मुचिरकर्मको भवति, कर्मविशेषस्याविवक्षितत्वाद् वा ॥

## अत्र लोपोऽभ्यासस्य ॥ ५८ ॥

यदेतत् प्रक्रान्तं 'सनि मीमा०' ( ७.४.५४ ) इत्यादि 'मुचोऽकर्मकस्य०' ( ७.४.५७ ) इति यावत्, अत्राभ्यासलोपो भवति। तथैवोदाहृतम्। अभ्यासस्येत्येतत् चाधिकृतं वेदितव्यमाध्यायपरिसमाप्तेः। इत उत्तरं यद् वक्ष्यामोऽभ्यासस्येत्येवं तद् वेदितव्यम्। वक्ष्यति—'ह्रस्वः' ( ७.४.५९ )—डुढौकिषते। तुत्रौकिषते। सनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्चेत्येवं सिद्धे यदत्रग्रहणमिह क्रियते, तद् विषयावधारणार्थम्—अत्रैवाभ्यासलोपो भवति, सन्वद्भावविषये न भवति। अमीमपत्। अदीदपत्। 'सन्वल्लघुनि चङ्परे०' ( ७.४.९३ ) इतिं सन्वद्भावात् प्राप्नोति। सर्वस्याभ्यासस्यायं लोप इष्यते, तदर्थमेव केचिदत्रग्रहणं वर्णयन्ति। 'नानर्थकेऽलोन्त्यविधिः०' ( परि० ९६ ) इत्यपरे सर्वस्य कुर्वन्ति ॥

## ह्रस्वः ॥ ५९ ॥

ह्रस्वो भवत्यभ्यासस्य। डुढौकिषते। तुत्रौकिषते। डुढौके। तुत्रौके। अडुढौकत्। अतुत्रौकत् ॥ अभ्यासस्यानचि ॥ अभ्यासस्य यदुच्यतेऽनचि तद् भवतीति वक्तव्यम्। चराचरः। चलाचलः। पतापतः। वदावदः। हलादिः शेषः ( ७.४.६० ) न भवति ॥

## हलादिः शेषः ॥ ६० ॥

अभ्यासस्य हलादिः शिष्यते, अनादिर्लुप्यते। जग्लौ। मम्लौ। पपाच। पपाठ। आट, आटतुः, आटुः। आदिशेषनिमित्तोऽयमनादेर्लोपो विधीयते। तत्राभ्यासजातेराश्रयणात् क्वचिदपि वर्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति। अपरे तु ब्रुवते—शेषशब्दोऽयं निवृत्त्या विशिष्टमवस्थानमाह। तदवस्थानमुक्तितो यद्यपि प्रधानम्, अविधेयत्वात् तु तदप्रधानम्। निवृत्तिरेव तु विधेयत्वात् प्रधानम्। तत्रायमर्थोऽस्य जायते—अभ्यासस्यानादेर्हलो निवृत्तिर्भवतीति। सा किमित्यादेरविधेयां सतीमनिवृत्तिमपेक्षिष्यत इति ॥

## शर्पूर्वाः खयः ॥ ६१ ॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते। चुश्च्योतिषति[1]। तिष्ठासति। पिस्पन्दिषते। शर्पूर्वा इति किम्? पपाच। खय इति किम्? सस्नौ ॥ खर्पूर्वाः खय इति वक्तव्यम् ॥ उचिच्छिषतीत्यत्र उच्छेरन्तरङ्गत्वात् तुकि कृते द्विर्वचनम्, तत्र हलादिः शेषे (७.४.६०) सत्यभ्यासे तकारः श्रूयेत ॥

## कुहोश्चुः ॥ ६२ ॥

अभ्यासस्य कवर्गहकारयोश्चवर्गादेशो भवति। चकार। चखान। जगाम। जघास[2]। हकारस्य—जहार। जिहीर्षति। जहौ ॥

## न कवतेर्यङि ॥ ६३ ॥

कवतेरभ्यासस्य यङि परतश्चुर्न भवति। कोकूयत उष्ट्रः। कोकूयते खरः[3]। कवतेरिति विकरणनिर्देशः कौतेः कुवतेश्च निवृत्त्यर्थः। तयोश्चुत्वमेव भवति। चोकूयते। यङीति किम्? चुकुवे ॥

## कृषेश्छन्दसि ॥ ६४ ॥

कृषेश्छन्दसि विषये यङि परतोऽभ्यासस्य चुर्न भवति। करीकृष्यते यज्ञकुणपः। छन्दसीति किम्? चरीकृष्यते कृषीवलः ॥

## दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६५ ॥

दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते अलर्षि आपनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रत् दविध्वतः दविद्युतत् तरित्रतः सरीसृपतं वरीवृजत् मर्मृज्य आगनीगन्ति इत्येतानि अष्टादश छन्दसि विषये निपात्यन्ते। दाधर्ति दर्धर्ति दर्धर्षीति धारयतेर्धृङो वा श्लौ यङ्लुकि वाभ्यासस्य दीर्घत्वं णिलोपश्च। दाधर्ति। एवं दर्धर्ति—श्लौ रुगभ्यासस्य निपात्यते। तथा दर्धर्षि (ऋ० ५.८४.३) इति। अत्र च यद्

---

१ – 'चुश्चोतिषति' इति बाल०, यथान्यासं च।
२ – 'जघान' इत्यपपाठो मुद्रितेपु।
३ – 'स्वरः' इति है०।

लक्षणेनानुपपन्नं तत् सर्वं निपातनात् सिद्धम्। बोभूत्विति—भवतेर्यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते। नैतदस्ति प्रयोजनम्, अत्र 'भूसुवोस्तिङि' ( ७.३.८८ ) इति गुणाभावः सिद्धः। ज्ञापनार्थं तर्हि निपातनम्—एतद् ज्ञापयति—अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति। बोभोति। बोभवीति ( ऋ० ३.५३.८ )। तेतिक्ते ( ऋ० ४.२३.७ )—तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। यङो ङित्त्वात् प्रत्ययलक्षणेनात्मनेपदं सिद्धमेव। ज्ञापनार्थं त्वात्मनेपदनिपातनम्—अन्यत्र यङ्लुगन्तादात्मनेपदं न भवति। अलर्षीति—इयर्तेर्लटि सिप्यभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते। सिपा निर्देशोऽतन्त्रम्, तिप्यपि दृश्यते—अलर्ति दक्षः ( ऋ० ८.४८.८ )। आपनीफणत् ( ऋ० ४.४०.४ ) इति फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतर्यभ्यासस्य नीग् निपात्यते। संसनिष्यदत् ( मै० सं० १.११.२ ) इति—स्यन्देः संपूर्वस्य यङ्लुक्, शतर्येवाभ्यासस्य निक्, धातुसकारस्य षत्वं निपात्यते। न चास्य संपूर्वता तन्त्रम्, अन्यत्रापि हि दृश्यते—आसनिष्यददिति। करिक्रत् ( ऋ० १.१३१.३ ) इति—करोतेर्यङ्लुगन्तस्य शतरि[1] चुत्वाभावोऽभ्यासककारस्य, रिगागमो निपात्यते। कनिक्रदत् ( ऋ० १.१२८.३ ) इति—क्रन्देर्लुङि च्लेरङादेशो द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपात्यते। तथा चास्य हि विवरणं कृतम्। अक्रन्दीदिति भाषायाम्। भरिभ्रत् ( ऋ० १०.४५.७ ) इति—बिभर्तेर्यङ्लुगन्तस्य शतरि[2] 'भृञामित्' ( ७.४.७६ ) इतीत्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमो निपात्यते। दविध्वत इति—ध्वरतेर्यङ्लुगन्तस्य शतरि जसि रूपमेतत्। अत्राभ्यासस्य विगागम ऋकारलोपश्च निपात्यते। दविध्वतो रश्मयः सूर्यस्य ( ऋ० ४.१३.४ )। दविद्युतत् ( ऋ० ६.१६.४५ ) इति—द्युतेर्यङ्लुगन्तस्य शतर्यभ्यासस्य संप्रसारणाभावोऽत्वं विगागमश्च निपात्यते। तरित्रत इति—तरतेः शतरि श्लौ षष्ठ्येकवचनेऽभ्यासस्य रिगागमो निपात्यते। सरीसृपतमिति—सृपेः शतरि श्लौ द्वितीयैकवचनेऽभ्यासस्य रीगागमो निपात्यते। वरीवृजत् ( ऋ० ७.२४.४ ) इति—वृजेः शतरि श्लौ रीगागमो निपात्यतेऽभ्यासस्य। मर्मृज्येति—मृजेर्लिटि णलि अभ्यासस्य रुगागमो धातोश्च युगागमो निपात्यते। ततो 'मृजेर्वृद्धिः' ( ७.२.११४ ) न भवति, अलघूपधत्वात्। लघूपधगुणे प्राप्ते वृद्धिरारभ्यते। आगनीगन्तीति—आङ्पूर्वस्य गमेर्लटि श्लौ अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते। वक्ष्यन्ती वेदागनीगन्ति कर्णम् ( ऋ० ६.७५.३ )। इतिकरणमेवंप्रकाराणामन्येषामप्युपसंग्रहार्थम्॥

## उरत् ॥ ६६ ॥

ऋवर्णान्तस्याभ्यासस्याकारादेशो भवति। ववृते। ववृधे। शशृधे। नर्नर्त्ति,

१ – 'करोतेः शतरि श्लौ' इति पाठोऽत्र युक्तः, तथैव रिगागमनिपातनसंगतेः।
२ – 'बिभर्तेः शतरि श्लौ' इति पाठोऽत्र युक्तः, अन्यथाग्रिमग्रन्थस्यासंगतेः।

नरिनर्त्ति, नरीनार्त्ति इत्येवमादौ 'अभ्यासविकारेष्वपवादो नोत्सर्गान् विधीन् बाधते' (सीर० प० ९६) इत्युरदत्वे कृते रुगादय आगमाः क्रियन्ते ॥

## द्युतिस्वाप्योः संप्रसारणम् ॥ ६७ ॥

द्युति स्वापि इत्येतयोरभ्यासस्य संप्रसारणं भवति। विदिद्युते। व्यदिद्युतत्। विदिद्योतिषते, विदिद्युतिषते। विदेद्युत्यते। स्वापेः—सुष्वापयिषति। स्वापिर्ण्यन्तो गृह्यते, तस्याभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति संप्रसारणमिष्यते। इह न भवति—स्वापयतेर्ण्वुल् स्वापकः, तस्मात् क्यचि स्वापकीयति, स्वापकीयतेः सन् सिस्वापकीयिषति[1]॥

## व्यथो लिटि ॥ ६८ ॥

व्यथेर्लिटि परतोऽभ्यासस्य संप्रसारणं भवति। विव्यथे, विव्यथाते, विव्यथिरे। हलादिःशेषेण (७.४.६०) यकारस्य निवृत्तौ प्राप्तायां संप्रसारणं क्रियते, वकारस्य 'न संप्रसारणे संप्रसारणम्' (६.१.३७) इति प्रतिषिध्यते। लिटीति किम् ? वाव्यथ्यते॥

## दीर्घ इणः किति ॥ ६९ ॥

इणोऽङ्गस्य योऽभ्यासस्तस्य दीर्घो भवति किति लिटि परतः। ईयतुः, ईयुः। 'इणो यण्' (६.४.८१) इति यणादेशे कृते स्थानिवद्भावाद् द्विर्वचनम्। कितीति किम् ? इयाय। इययिथ॥

## अत आदेः ॥ ७० ॥

अभ्यासस्यादेरकारस्य दीर्घो भवति लिटि परतः। अतो गुणे (६.१.९७) पररूपत्वस्यापवादः। आट, आटतुः, आटुः। आदेरिति किम् ? पपाच। पपाठ॥

## तस्मान्नुड् द्विहलः ॥ ७१ ॥

तस्मादतोऽभ्यासाद् दीर्घीभूतादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो भवति। आनङ्ग, आनङ्गतुः, आनङ्गुः। आनञ्ज, आनञ्जतुः, आनञ्जुः। द्विहल इति किम् ? आट, आटतुः, आटुः। ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते। तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति—आनृधतुः, आनृधुः॥

## अश्नोतेश्च ॥ ७२ ॥

---

१ – 'सिप्वापकीयिषति' इत्यपपाठो मुद्रितेषु।

अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति। व्यानशे, व्यानशाते, व्यानशिरे। अश्नोतेरिति विकरणनिर्देशोऽश्नातेर्मा भूदिति। आश, आशतुः, आशुः॥

## भवतेरः॥ ७३ ॥

भवतेरभ्यासस्याकारादेशो भवति लिटि परतः। बभूव, बभूवतुः, बभूवुः। अनुबभूवे। भवतेरिति कर्तृनिर्देशादिह न[1] भवति[2]—अनुबभूवे[3] कम्बलो देवदत्तेन। लिटीत्येव—बुभूषति। बोभूयते॥

## ससूवेति निगमे॥ ७४ ॥

ससूव इति निगमे[4] निपात्यते। सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते। ससूव स्थविरं ( ऋ० ४.१८.१० ) विपश्चिताम्। सुषुवे इति भाषायाम्॥

## निजां त्रयाणां गुणः श्लौ॥ ७५ ॥

निजादीनां त्रयाणामभ्यासस्य गुणो भवति श्लौ सति। णिजिर्—नेनेक्ति। विजिर्—वेवेक्ति। विष्लृ—वेवेष्टि। त्रिग्रहणमुत्तरार्थम्, एषां हि वृत्करणं समाप्त्यर्थं पठ्यत एवेति। श्लाविति किम्? निनेज॥

## भृञामित्॥ ७६ ॥

भृञादीनां त्रयाणामभ्यासस्येकारादेशो भवति श्लौ सति। भृञ्—बिभर्ति। माङ्—मिमीते। ओहाङ्—जिहीते। त्रयाणामित्येव—जहाति। श्लावित्येव—बभार॥

## अर्तिपिपर्त्योश्च॥ ७७ ॥

अर्ति पिपर्ति इत्येतयोरभ्यासस्येकारादेशो भवति श्लौ। इयर्ति धूमम्। पिपर्ति सोमम्॥

---

१ – 'धातुनिर्देशादिहापि' इति तारा०। 'कृतविकरणनिर्देशादिह न' इति है०।

२ – इदं मतं क्षीरस्वामिनाप्यूरीक्रियते ( क्षीर० भ्वा० १ ), माधवीयधातुवृत्तौ ( भ्वा० १ ) प्रौढमनोरमायां च दूष्यते। न्यासपदमञ्जर्योस्तु वाक्यमिदं न व्याख्यायते। अतोऽस्य प्रक्षिप्तत्वमनुमीयते, 'अनुबभूवे' इत्युदाहरणमप्यत्रोपोद्बलकम्।

३ – अत्वाभावे त्वत्र 'अनुबुभूवे' इति पाठः स्यात्।

४ – 'निगमे' इति नास्ति मुद्रितेषु।

## बहुलं छन्दसि ॥ ७८ ॥

छन्दसि विषयेऽभ्यासस्य श्लौ बहुलमिकारादेशो भवति। पूर्णां विवष्टि ( ऋ० ७.१६.११ )। वशेरेतद् रूपम्। तथा वचेः—जनिमा विवक्ति ( ऋ० ९.९७.७ )। सचेः—वत्सं न माता सिषक्ति ( ऋ० १.३८.८ )। जिघर्ति सोमम्। न च भवति—ददातीत्येवं ब्रूयात्। जजनदिन्द्रम् ( मै० सं० १.९.१ )। माता यद्वीरं दधनद्धनिष्ठा ( ऋ० १०.७३.१ )॥

## सन्यतः ॥ ७९ ॥

सनि परतोऽकारान्ताभ्यासस्येकारादेशो भवति। पिपक्षति। यियक्षति। तिष्ठासति। पिपासति। सनीति किम् ? पपाच। अत इति किम् ? लुलूषति। तपरकरणं किम् ? पापचिषते॥

## ओः पुयण्ज्यपरे ॥ ८० ॥

सनीति वर्तते, इदिति च। उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे चावर्णपरे परत इकारादेशो भवति सनि प्रत्यये परतः। पवर्गेऽपरे—पिपविषते। पिपावयिषति। बिभावयिषति। यण्यपरे—यियविषति। यियावयिषति। रिरावयिषति। लिलावयिषति। ज्यपरे—जु इति सौत्रोऽयं धातुः, जिजावयिषति। एतदेव पुयण्ज्यपर इति वचनं ज्ञापकम् —अद्विर्वचननिमित्तेऽपि णौ स्थानिवद् भवतीति। ओरिति किम् ? पापच्यतेः सन्—पापचिषते। पुयण्जीति किम् ? अवतुतावयिषति। जुहावयिषति। अपर इति किम्? बुभूषति॥

## स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८१ ॥

स्रवति शृणोति द्रवति प्रवति प्लवति च्यवति इत्येतेषामभ्यासस्य ओरवर्णपरे यणि वेकारादेशो भवति सनि परतः। सिस्रावयिषति, सुस्रावयिषति। शृणोति—शिश्रावयिषति, शुश्रावयिषति। द्रवति—दिद्रावयिषति, दुद्रावयिषति। प्रवति—पिप्रावयिषति, पुप्रावयिषति। प्लवति—पिप्लावयिषति, पुप्लावयिषति। च्यवति—चिच्यावयिषति, चुच्यावयिषति। वचनसामर्थ्यादिकेन वर्णेन यणो व्यवधानमाश्रीयते। पूर्वसूत्रेण त्वनन्तर एव यणि भवितव्यमित्यप्राप्तविभाषेयम्। अपर इत्येव—सुस्रूषति। शुश्रूषते॥

## गुणो यङ्लुकोः ॥ ८२ ॥

यङि यङ्लुकि चेगन्तस्याभ्यासस्य गुणो भवति। चेचीयते। लोलूयते। यङ्लुकि—

जोहवीति। 'यङो वा' ( ७.३.९४ ) इतीड्विकल्पः। चोक्रुशीति॥

## दीर्घोऽकितः॥ ८३ ॥

अकितोऽभ्यासस्य दीर्घो भवति यङि यङ्लुकि च। पापच्यते। पापचीति। यायज्यते। यायजीति। अकित इति किम् ? यंयम्यते। यंयमीति। रंरम्यते। रंरमीति। ननु चात्रापवादत्वाद् नुकि कृतेऽभ्यासस्यानजन्तत्वादेव दीर्घत्वं न भविष्यति ? एवं तर्ह्यकित इत्यनेनैतद् ज्ञाप्यते—'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' ( सीर० प० ९६ ) इति। किमेतस्य ज्ञापने प्रयोजनम् ? डोढौक्यत इत्यत्र दीर्घोऽकित इत्यनेन संध्यक्षरह्रस्वो न बाध्यते, अचीकरदित्यत्र 'दीर्घो लघोः' ( ७.४.९४ ) इत्यनेन सन्वदित्वं न बाध्यते, मान्प्रभृतीनां दीर्घेण सनीत्वं न बाध्यते—मीमांसते, 'ई च गणः' ( ७.४.९७) इतीत्वेन 'हलादिः शेषः' ( ७.४.६० ) न बाध्यते—अजीगणत्॥

## नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्॥ ८४ ॥

वञ्चु स्रंसु ध्वंसु भ्रंसु कस पत पद स्कन्द इत्येतेषामभ्यासस्य नीगागमो भवति यङि यङ्लुकि च। वञ्चु—वनीवच्यते। वनीवञ्चीति। स्रंसु—सनीस्रस्यते। सनीस्रंसीति। ध्वंसु—दनीध्वस्यते। दनीध्वंसीति। भ्रंसु—बनीभ्रस्यते। बनीभ्रंसीति। कस—चनीकस्यते। चनीकसीति। पत—पनीपत्यते। पनीपतीति। पद—पनीपद्यते। पनीपदीति। स्कन्द—चनीस्कद्यते। चनीस्कन्दीति॥

## नुगतोऽनुनासिकान्तस्य॥ ८५ ॥

अनुनासिकान्तस्याङ्गस्य योऽभ्यासस्तस्याकारान्तस्य नुगागमो भवति यङ्यङ्लुकोः परतः। तन्तन्यते। तन्तनीति। जङ्गम्यते। जङ्गमीति। यंयम्यते। यंयमीति। रंरम्यते। रंरमीति। नुगित्येतदनुस्वारोपलक्षणार्थं द्रष्टव्यम्। स्थानिना ह्यादेशो लक्ष्यते। तेन यंयम्यत इत्येवमादावझल्परत्वेऽप्यनुस्वारो भवति ॥ पदान्तवच्चेति वक्तव्यम्॥ 'वा पदान्तस्य' ( ८.४.५९ ) इति परसवर्णविकल्पो यथा स्यादिति। अत इति किम् ? तेतिम्यते। तपरकरणं तु भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम्—बाभाम्यते। अनुनासिकान्तस्येति किम् ? पापच्यते॥

## जपजभदहदशभञ्जपशां च॥ ८६ ॥

जप जभ दह दश भञ्ज पश इत्येतेषामभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः। जञ्जप्यते। जञ्जपीतिं। जभ—जञ्जभ्यते। जञ्जभीति। दह—दन्दह्यते। दन्दहीति। दश—दन्दश्यते। दन्दशीति। दश इति दंशिरयं नकारलोपार्थमेव निर्दिष्टः।

तेन यङ्लुक्यपि नकारलोपो भवति। भञ्ज—बम्भज्यते। बम्भञ्जीति। पश इति सौत्रो धातुः—पम्पश्यते। पम्पशीति॥

## चरफलोश्च॥ ८७ ॥

चर फल इत्येतयोरभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः। चञ्चूर्यते। चञ्चुरीति[1]। पम्फुल्यते। पम्फुलीति॥

## उत् परस्यातः॥ ८८ ॥

चरफलोरभ्यासात् परस्यात उकारादेशो भवति यङ्यङ्लुकोः परतः। चञ्चूर्यते। चञ्चुरीति[2]। पम्फुल्यते। पम्फुलीति। परस्येति किम्? अभ्यासस्य मा भूत्। अत इति किम्? अलोऽन्त्यस्य मा भूत्। उदिति तपरकरणं चञ्चूर्ति, पम्फुल्ति[3] इत्यत्र लघूपधगुण-निवृत्त्यर्थम्। दीर्घस्यासिद्धत्वादिह लघुत्वं न निवर्तते॥

## ति च॥ ८९ ॥

तकारादौ प्रत्यये परतश्चरफलोरकारस्य उकारादेशो भवति। चरणं चूर्तिः। ब्रह्मण-श्चूर्तिः। प्रफुल्तिः। प्रफुल्ताः सुमनसः। यङ्लुकोरभ्यासस्येति चानुवर्तमानमपि वचन-सामर्थ्यादिह नाभिसंबध्यते॥

## रीगृदुपधस्य च॥ ९० ॥

ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रीगागमो भवति यङ्यङ्लुकोः परतः। वरीवृत्यते। वरीवृतीति। वरीवृध्यते। वरीवृधीति। नरीनृत्यते। नरीनृतीति॥ रीगृत्वत इति वक्तव्यम्॥ इहापि यथा स्यात्—वरीवृश्च्यते[4]। परीपृच्छ्यते[5]॥

## रुग्रिकौ च लुकि॥ ९१ ॥

यङ्लुकि ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतः, चकाराद्रीक् च। नर्नर्त्ति, नरिनर्त्ति, नरीनर्त्ति। वर्वर्त्ति, वरिवर्त्ति, वरीवर्त्ति। उकार उच्चारणार्थः॥ मर्मृज्यते मर्मृज्यमानास इत्युपसंख्यानम्॥ मर्मृज्यते। मर्मृज्यमानासः॥

---

१ – 'चञ्चूरीतिः' इत्यपपाठो मुद्रितेषु।
२ – 'चञ्चूरीति' इत्यपपाठो मुद्रितेषु।
३ – 'पम्फुलीति' इत्यपपाठो मुद्रितेषु।
४ – 'वरीवृश्चीति' इत्यधिकः पाठो मुद्रितेषु। स त्वयुक्तः।
५ – 'परीपृच्छीति' इत्यधिकः पाठो है० तारा०। स चायुक्तः।

## ऋतश्च ॥ ९२ ॥

ऋकारान्तस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतो रीक् च यङ्लुकि। चर्कर्ति, चरिकर्ति, चरीकर्ति। जर्हर्ति, जरिहर्ति, जरीहर्ति। तपरकरणं किम् ? किरतेश्चाकर्ति।

किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत्।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः॥

तत्रेयं प्राप्तिः—तपरकरणसामर्थ्यादङ्गविशेषणमृत इत्येतत्, तथा चाप्राप्तिः किरते रुगादीनामिति॥

## सन्वल्लघुनि चङ्परेऽनग्लोपे॥ ९३ ॥

लघुनि धात्वक्षरे परतो योऽभ्यासस्तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे। 'सन्यतः' (७.४.७९) इत्युक्तम् , चङ्परेऽपि तथा। अचीकरत्। अपीपचत्। 'ओः पुयण्ज्यपरे' (७.४.८०) इत्युक्तम्, चङ्परेऽपि तथा। अपीपवत्। अलीलवत्। अजीजवत्। 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' (७.४.८१) इत्युक्तम्, चङ्परेऽपि तथा। असिस्रवत्, असुस्रवत्। अशिश्रवत्, अशुश्रवत्। अदिद्रवत्, अदुद्रवत्। अपिप्रवत्, अपुप्रवत्। अपिप्लवत्, अपुप्लवत्। अचिच्यवत्, अचुच्यवत्। लघुनीति किम् ? अततक्षत्। अररक्षत्। जागरयतेः—अजजागरत्। अत्र केचिद् गशब्दं लघुमाश्रित्य सन्वद्भावमिच्छन्ति, सर्वत्रैव लघोरानन्तर्यम् अभ्यासेन[1] नास्तीति व्यवधानेऽपि वचनप्रामाण्याद् भवितव्यम्। तदसत्, 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' (व्या० प० ४६) इत्येकेन व्यवधानमाश्रीयते, न पुनरनेकेन। यद्येवम्, कथमचिक्षणदिति ? आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येवंजातीयकानामित्वमिति, यदयं तद्बाधनार्थं स्मरत्यादीनामत्वम् (७.४.९५) विदधाति। चङ्पर इति किम् ? अहं पपच। परग्रहणं किम् ? चङ्येव केवले मा भूत्—अचकमत। अनग्लोप इति किम् ? अचकथत्। दृषदमाख्यातवान् अददृषत्। वादितवन्तं प्रयोजितवान् अवीवददित्यत्र योऽसौ णौ णेर्लोपो नासावग्लोप इत्याश्रीयते। किं कारणम् ? चङ्पर इति णिजातेर्निमित्तत्वेनाक्षेपात् ततोऽन्यस्याको लोपः परिगृह्यते। मीमादीनामत्रग्रहणात् सन्वद्भावेनाभ्यासलोपो न भवतीत्युक्तम् (७.४.५८)। किं च सन्वदिति सनाश्रयं कार्यमतिदिश्यते, न च लोपः सनमेवापेक्षते। किं तर्हि ? इसूभावाद्यपि। तदभावादमीमपदित्यादावभ्यासलोपो न भविष्यति॥

---

१ - ' अभ्यासे ' इति न्यासे ।

## दीर्घो लघोः ॥ ९४ ॥

दीर्घो भवति लघोरभ्यासस्य लघुनि णौ चङ्परेऽनग्लोपे। अचीकरत्। अजीहरत्। अलीलवत्। अपीपचत्। लघोरिति किम् ? अबिभ्रजत्। लघुनीत्येव—अततक्षत्। अररक्षत्। चङीत्येव—अहं पपच। पर इत्येव—अचकमत। अनग्लोप इत्येव—अचकथत्॥

## अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ॥ ९५ ॥

स्मृ दृ त्वर प्रथ म्रद स्तृ स्पश इत्येतेषामभ्यासस्यादित्ययमादेशो भवति चङ्परे णौ परतः। स्मृ—असस्मरत्। दृ—अददरत्। त्वर—अतत्वरत्। प्रथ—अपप्रथत्। म्रद—अमम्रदत्। स्तृ—अतस्तरत्। स्पश—अपस्पशत्। सन्वद्भावादित्वं प्राप्तमनेन बाध्यते। तपरकरणसामर्थ्याददति कृते 'दीर्घो लघोः' (७.४.९४) इत्येतदपि न भवति। अददरत्॥

## विभाषा वेष्टिचेष्ट्योः ॥ ९६ ॥

वेष्टि चेष्टि इत्येतयोरभ्यासस्य विभाषा अदित्ययमादेशो भवति चङ्परे णौ परतः। अववेष्टत्, अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्। अभ्यासह्रस्वत्वे कृतेऽत्वं पक्षे भवति॥

## ई च गणः ॥ ९७ ॥

गणेरभ्यासस्य ईकारादेशो भवति चङ्परे णौ परतः, चकारादत् च। अजीगणत्, अजगणत्॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तौ सप्तमाध्यायस्य चतुर्थः पादः ॥



# ॥ अष्टमाध्यायस्य प्रथमः पादः ॥

## सर्वस्य द्वे ॥ १ ॥

सर्वस्येति च द्वे इति चैतदधिकृतं वेदितव्यम्। इत उत्तरं यद् वक्ष्यामः प्राक् 'पदस्य' ( ८.१.१६ ) इत्यतः, सर्वस्य द्वे भवत इत्येवं तद् वेदितव्यम्। वक्ष्यति—'नित्यवीप्सयोः' (८.१.४ ) इति, तत्र सर्वस्य स्थाने द्वे भवतः। के द्वे भवतः ? ये शब्दतश्चार्थतश्चोभयथान्तरतमे। एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ भवतः। पचतिपचति। ग्रामोग्रामो रमणीयः। यदा तु द्विःप्रयोगो द्विर्वचनं तदा स एव पचतिशब्दो द्विरावर्तते, तस्य द्वे आवृत्ती भवतः। सर्वस्येति किम् ? विस्पष्टार्थम्। अथ पदस्येत्येव कस्माद् नोच्यते ? नैवं शक्यम्, इह हि न स्यात्—प्रपचतिप्रपचतीति। इह द्रोग्धा, द्रोढा इति घत्वढत्वयोरसिद्धत्वादकृतयोरेव तयोर्द्विर्वचनं प्राप्नोति, तत्र पश्चाद्विकल्पे सत्यनिष्टमपि स्यात्—द्रोग्धाद्रोढा, द्रोढाद्रोग्धेति। तस्माद् वक्तव्यमेतत्—'पूर्वत्रासिद्धीयमद्विर्वचने' ( परि० ११७ ) इति। सर्वस्येत्येतदेव वा कृतं सर्वकार्यप्रतिपत्त्यर्थं द्रष्टव्यम्॥

## तस्य परमाम्रेडितम् ॥ २ ॥

तस्य द्विरुक्तस्य यत् परं शब्दरूपं तदाम्रेडितसंज्ञं भवति। चौरचौर३, वृषलवृषल३, दस्योदस्यो३ घातयिष्यामि त्वा, बन्धयिष्यामि त्वा। आम्रेडितप्रदेशाः—'आम्रेडितं भर्त्सने' ( ८.२.९५ ) इत्येवमादयः॥

## अनुदात्तं च ॥ ३ ॥

अनुदात्तं च तद् भवति यदाम्रेडितसंज्ञम्। भुङ्क्तेभुङ्क्ते। पशूनूपशून्॥

## नित्यवीप्सयोः ॥ ४ ॥

नित्ये चार्थे वीप्सायां च यद् वर्तते तस्य द्वे भवतः। केषु नित्यता ? तिङ्षु नित्यताव्ययकृत्सु च। कुत एतत् ? आभीक्ष्ण्यमिह नित्यता। आभीक्ष्ण्यं च क्रियाधर्मः। यां क्रियां कर्ता प्राधान्येनानुपरमन् करोति तन् नित्यम्। पचतिपचति। जल्पतिजल्पति। भुक्त्वाभुक्त्वा व्रजति। भोजंभोजं व्रजति। लुनीहिलुनीहि इत्येवायं लुनाति। क्त्वाणमुलोर्लोटश्च द्विर्वचनापेक्षायामेव पौनःपुन्यप्रकाशने शक्तिः। यङ् तु तन्निरपेक्षः प्रकाशयति। पुनः पुनः पचति पापच्यत इति। यदा तु तत्र द्विर्वचनं तदा क्रियासमभिहारे पौनःपुन्यं द्रष्टव्यम्—पापच्यतेपापच्यत इति। अथ केषु वीप्सा ? सुप्सु वीप्सा। का पुनर्वीप्सा? व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा। का पुनः सा ? नानावाचिनामधिकरणानां

क्रियागुणाभ्यां युगपत् प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा। नानाभूतार्थवाचिनां शब्दानां यान्यधिकरणानि वाच्यानि तेषां क्रियागुणाभ्यां युगपत् प्रयोक्तुर्व्याप्तुमिच्छा[1] वीप्सा। ग्रामोग्रामो रमणीयः। जनपदोजनपदो रमणीयः। पुरुषःपुरुषो निधनमुपैति। यत् तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात् प्रकर्षप्रत्यय इष्यते—पचतिपचतितरामिति। इह तु आढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्तस्य वीप्सायोग इष्यते॥

## परेर्वर्जने॥ ५ ॥

परीत्येतस्य वर्जनेऽर्थे द्वे भवतः। परिपरि त्रिगर्तेभ्यो वृष्टो देवः। परिपरि सौवीरेभ्यः। परिपरि सर्वसेनेभ्यः। वर्जनं परिहारः। वर्जन इति किम्? ओदनं परिषिञ्चति ॥ परेर्वर्जनेऽसमासे वेति वक्तव्यम्॥ परिपरि त्रिगर्तेभ्यो वृष्टो देवः, परि त्रिगर्तेभ्यः। समासे तु तेनैवोक्तत्वाद् वर्जनस्य नैव भवति—परित्रिगर्तं वृष्टो देव इति॥

## प्रसमुपोदः पादपूरणे॥ ६ ॥

प्र सम् उप उद् इत्येतेषां पादपूरणे द्वे भवतः, द्विर्वचनेन चेत् पादः पूर्यते। प्रप्रायमग्निर्भरतस्य शृण्वे (ऋ० ७.८.४)। संसमिद्युवसे वृषन् (ऋ० १०.१९१.१)। उपोप मे परां मृश (ऋ० १.१२६.७)। किं नोदुदु हर्षसे दातवा उ (ऋ० ४.२१.९)। पादपूरण इति किम्? प्र देवं देव्या धिया (ऋ० १०.१७६.२)। सामर्थ्यात् छन्दस्येवैतद् विधानम्। भाषायामनर्थकं स्यात् प्रयोगाभावात्॥

## उपर्यध्यधसः सामीप्ये॥ ७ ॥

उपरि अधि अधस् इत्येतेषां द्वे भवतः सामीप्ये विवक्षिते। सामीप्यं प्रत्यासत्तिः कालकृता देशकृता च। उपर्युपरि दुःखम्। उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधोऽधो नगरम्। सामीप्य इति किम्? उपरि चन्द्रमाः। इह कस्माद् न भवति—उपरि शिरसो घटं धारयति? औत्तराधर्यमेव विवक्षितं न सामीप्यमिति द्विर्वचनं न भवति॥

## वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु॥ ८ ॥

एकार्थः पदसमूहो वाक्यम्। वाक्यादेरामन्त्रितस्य द्वे भवतः, असूयासंमतिकोपकुत्सनभर्त्सनेषु यदि तद् वाक्यं भवति। तत्र परगुणानामसहनमसूया। पूजा संमतिः। कोपः क्रोधः। निन्दनं कुत्सनम्। अपकारशब्दैर्भयोत्पादनं भर्त्सनम्। एते च प्रयोक्तृधर्माः, नाभिधेयधर्माः। असूयायां तावत्—माणवक३ माणवक, अभिरूपक३ अभिरूपक रिक्तं

१ – 'प्रयोक्तुमिच्छा' इत्यपपाठो मुद्रितेषु।

त आभिरूप्यम्। संमतौ—माणवक३ माणवक, अभिरूपक३ अभिरूपक शोभनः खल्वसि। कोपे—माणवक३ माणवक, अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म। कुत्सने—शक्तिके३ शक्तिके, यष्टिके३ यष्टिके रिक्ता ते शक्तिः। भर्त्सने—चौरचौर३, वृषलवृषल३ घातयिष्यामि त्वा, बन्धयिष्यामि त्वा। असूयादिषु 'स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु' (८.२.१०३) इति पूर्वपदस्य प्लुतः। भर्त्सने तु 'आम्रेडितं भर्त्सने' (८.२.९५) इत्याम्रेडितस्यैव प्लुतः। वाक्यादेरिति किम्? अन्तस्य मध्यस्य च मा भूत्। शोभनः खल्वसि माणवक। आमन्त्रितस्येति किम्? उदारो देवदत्तः। असूयादिष्विति किम्? देवदत्त गामभ्याज शुक्लाम्॥

## एकं बहुव्रीहिवत्॥ ९ ॥

एकमित्येतत् शब्दरूपं द्विरुक्तं बहुव्रीहिवद् भवति। बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ। एकैकमक्षरं पठति। एकैकयाहुत्या जुहोति। सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते। तेनातिदेशिके बहुव्रीहौ न भवन्ति। एकैकस्मै। 'न बहुव्रीहौ' (१.१.२९) इति प्रतिषेधो न भवति, बहुव्रीहिरेव यो बहुव्रीहिरिति विज्ञानात्। ननं, सुसुं। 'नञ्सुभ्याम्' (६.२.१७२) इत्यन्तोदात्तत्वं न भवति। ऋगृक्, पूःपूः। 'ऋक्पूः ०' (५.४.७४) इति समासान्तो न भवति॥

## आबाधे च॥ १० ॥

आबाधनमाबाधः, पीडा प्रयोक्तृधर्मः, नाभिधेयधर्मः[१]। तत्र वर्तमानस्य द्वे भवतः। बहुव्रीहिवत् चास्य कार्यं भवति। गतगतः। नष्टनष्टः। पतितपतितः। गतगता। नष्टनष्टा। पतितपतिता। प्रियस्य चिरगमनादिना पीड्यमानः कश्चिदेवं प्रयुङ्क्ते प्रयोक्ता॥

## कर्मधारयवदुत्तरेषु॥ ११ ॥

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यं भवतीत्येतद् वेदितव्यम्। कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि। सुब्लोपः—पटुपटुः। मृदुमृदुः। पण्डितपण्डितः। पुंवद्भावः—पटुपट्वी। मृदुमृद्वी। कालककालिका। कोपधाया अपि हि कर्मधारयवद्भावात् 'पुंवत्कर्मधारय ०' (६.३.४२) इति पुंवद्भावो भवति। अन्तोदात्तत्वम्—पटुपटुः। पटुपट्वी। समासान्तोदात्तत्वमनेनैव विधीयत इति परत्वादाम्रेडितानुदात्तत्वं बाध्यते। अधिकारेणैव सिद्धे यदुत्तरेष्विति वचनं तद् विस्पष्टार्थम्॥

---

१ – 'नाभिधेयधर्मः' इति नास्ति बाल०।

## प्रकारे गुणवचनस्य ॥ १२ ॥

प्रकारो भेदः सादृश्यं च। तदिह सादृश्यं प्रकारो गृह्यते। प्रकारे वर्तमानस्य गुणवचनस्य द्वे भवतः। पटुपटुः। मृदुमृदुः। पण्डितपण्डितः। अपरिपूर्णगुण इत्यर्थः। परिपूर्णगुणेन न्यूनगुणस्योपमाने सत्येवं प्रयुज्यते। जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यते। पटुजातीयः, मृदुजातीयः इत्यपि हि भवति। तत् कथम् ? वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोः शेषो विज्ञायते। प्रकार इति किम् ? पटुर्देवदत्तः। गुणवचनस्येति किम् ? अग्निर्माणवकः। गौर्वाहीकः। यद्यप्यत्राग्निशब्दो गोशब्दश्च मुख्यार्थसंबन्धाद् अवधृतभेदं[1] तैक्ष्ण्यजाड्यादिकमर्थान्तरे गुणविशेषमेव प्रतिपादयितुं प्रवृत्तः, तथापि सर्वदा गुणवचनो न भवतीति न द्विरुच्यते ॥ आनुपूर्व्ये द्वे भवत इति वक्तव्यम् ॥ मूलेमूले स्थूलाः। अग्रेऽग्रे सूक्ष्माः। ज्येष्ठंज्येष्ठं प्रवेशय ॥ स्वार्थेऽवधार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम् ॥ अस्मात् कार्षापणादिह भवद्भ्यां माषंमाषं देहि। स्वार्थ एतद् द्विर्वचनम् , न वीप्सायाम्। अत्र हि द्वावेव माषौ दीयेते, न सर्वे कार्षापणसंबन्धिनो माषाः। तेन वीप्सा न विद्यते। अवधार्यमाण इति किम् ? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि, द्वौ माषौ देहि, त्रीन् वा माषान् देहि। अनेकस्मिन्निति किम् ? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि ॥ चापले द्वे भवत इति वक्तव्यम् ॥ संभ्रमेण प्रवृत्तिश्चापलम्। अहिरहिः, बुध्यस्वबुध्यस्व। नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ। किं तर्हि ? यावद्भिः शब्दैः सोऽर्थोऽवगम्यते तावन्तः प्रयोक्तव्याः। अहिरहिरहिः, बुध्यस्वबुध्यस्वबुध्यस्व इति ॥ क्रियासमभिहारे द्वे भवत इति वक्तव्यम् ॥ स भवान् लुनीहिलुनीहीत्येवायं लुनाति ॥ आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम् ॥ भुक्त्वाभुक्त्वा व्रजति। भोजंभोजं व्रजति। 'नित्य०' ( ८.१.४ ) इत्येव सिद्धमिति तत्रोक्तम् ॥ डाचि द्वे भवत इति वक्तव्यम् ॥ पटपटाकरोति। पटपटायते। अव्यक्तानुकरणे डाजन्तस्य द्विर्वचनमिष्यते। इह न भवति—द्वितीयाकरोति, तृतीयाकरोति। तदर्थं केचिद् डाचि बहुलम् इति पठन्ति ॥ पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् ॥ पूर्वंपूर्वं पुष्यन्ति। प्रथमंप्रथमं पच्यन्ते। आतिशायिकोऽपि दृश्यते—पूर्वतरं पुष्यन्ति, प्रथमतरं पच्यन्त इति ॥ डतरडतमयोः समसंप्रधारणयोः स्त्रीनिगदे भावे द्वे भवत इति वक्तव्यम् ॥ उभाविमावाढ्यौ। कतराकतरा अनयोराढ्यता। सर्व इम आढ्याः। कतमाकतमा एषामाढ्यता। डतरडतमाभ्यामन्यत्रापि हि दृश्यते। उभाविमावाढ्यौ। कीदृशीकीदृशी अनयोराढ्यता। तथा स्त्रीनिगदाद् भावादन्यत्रापि हि दृश्यते—उभाविमावाढ्यौ, कतरःकतरोऽनयोर्विभव इति ॥ कर्मव्यतिहारे सर्वनाम्नो द्वे भवत

---

१ – 'अवभृतभेदम्' इति है०।

इति वक्तव्यं समासवच्च बहुलम्[१]। यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य ॥ [२]अन्योऽन्यमिमे ब्राह्मणा भोजयन्ति। अन्योऽन्यस्य ब्राह्मणा भोजयन्ति। इतरेतरं भोजयन्ति। इतरेतरस्य भोजयन्ति ॥ स्त्रीनपुंसकयोरुत्तरपदस्य वाम्भावो[३] वक्तव्यः॥ अन्योऽन्यामिमे ब्राह्मण्यौ भोजयतः। अन्योऽन्यं भोजयतः। इतरेतरां भोजयतः। इतरेतरं भोजयतः। अन्योऽन्यामिमे ब्राह्मणकुले भोजयतः[४]। इतरेतरामिमे ब्राह्मणकुले भोजयतः। इतरेतरमिमे ब्राह्मणकुले भोजयतः ॥

## अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १३ ॥

प्रिय सुख इत्येतयोरन्यतरस्यां द्वे भवतोऽकृच्छ्रे द्योत्ये। कृच्छ्रं दुःखम् , तदभावोऽकृच्छ्रम्। प्रियप्रियेण ददाति। सुखसुखेन ददाति। प्रियेण ददाति। सुखेन ददाति। अखिद्यमानो ददातीत्यर्थः। अकृच्छ्र इति किम् ? प्रियः पुत्रः। सुखो रथः॥

## यथास्वे यथायथम् ॥ १४ ॥

यो य आत्मा, यद् यदात्मीयम्, तत् तद् यथास्वम्, तस्मिन् यथायथमिति निपात्यते। यथाशब्दस्य द्विर्वचनं नपुंसकलिङ्गता च निपात्यते। ज्ञाताः सर्वे पदार्था यथायथम्। यथास्वभावमित्यर्थः। सर्वेषां तु यथायथम्। यथात्मीयमित्यर्थः॥

## द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ १५ ॥

द्वन्द्वमिति द्विशब्दस्य द्विर्वचनम्, पूर्वपदस्याम्भावः, अत्वं चोत्तरपदस्य निपात्यते रहस्य मर्यादावचन व्युत्क्रमण यज्ञपात्रप्रयोग अभिव्यक्ति इत्येतेष्वर्थेषु। तत्र रहस्यं द्वन्द्वशब्दवाच्यम्, इतरे विषयभूताः। द्वन्द्वं मन्त्रयन्ते[५]। मर्यादावचने—मर्यादा स्थित्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति। माता पुत्रेण मिथुनं गच्छति, पौत्रेण, तत्पुत्रेणापीति मर्यादार्थः। व्युत्क्रमणे—द्वन्द्वं व्युत्क्रान्ताः। व्युत्क्रमणं भेदः, पृथगवस्थानम्। द्विवर्गसंबन्धेन[६] पृथगवस्थिता द्वन्द्वं व्युत्क्रान्ता इत्युच्यन्ते। यज्ञपात्रप्रयोगे—द्वन्द्वं न्यञ्चि यज्ञपात्राणि

---

१ - बहुलग्रहणाद् अन्यपरशब्दयोर्न समासवत् , इतरशब्दस्य तु समासवद् नित्यम् इति विवेकः।

२ - इतः पूर्वम् ' अन्यमन्यमिमे ब्राह्मणा भोजयन्ति ' इत्यपपाठो मुद्रितेषु।

३ - ' चाम्भावः ' इत्यपपाठो मुद्रितेषु।

४ - ' अन्योऽन्यमिमे ब्राह्मणकुले भोजयतः ' इत्यपि स्यात् ।

५ - ' मन्त्रयते ' इति है०।

६ - ' ० सम्बन्धनेन ' इति है०।

प्रयुनक्ति[1] धीरः। अभिव्यक्तौ—द्वन्द्वं नारदपर्वतौ। द्वन्द्वं संकर्षणवासुदेवौ। द्वावप्यभिव्यक्तौ साहचर्येणेत्यर्थः। अन्यत्रापि द्वन्द्वमित्येतद् दृश्यते, तदर्थं योगविभागः कर्तव्यः—द्वन्द्वं युद्धं वर्तते, द्वन्द्वानि सहते धीरः, 'चार्थे द्वन्द्वः' ( २.२.२९ ) इति॥

## पदस्य॥ १६ ॥

पदस्येत्ययमधिकारः प्रागपदान्ताधिकारात् ( ८.३.५५ )। यदित ऊर्ध्वमनुक्रमिष्यामः पदस्येत्येवं तद् वेदितव्यम्। वक्ष्यति—'संयोगान्तस्य लोपः' ( ८.२.२३ )—पचन्। यजन्। पदस्येति किम् ? पचन्तौ। यजन्तौ। वक्ष्यमाणवाक्यापेक्षया पदस्याधिकृतस्य षष्ठ्यर्थ-व्यवस्था द्रष्टव्या—क्वचित् स्थानषष्ठी क्वचिदवयवषष्ठी॥

## पदात्॥ १७ ॥

पदादित्ययमधिकारः प्राक् 'कुत्सने च सुप्यगोत्रादौ' ( ८.१.६९ ) इत्येतस्मात्। यदित ऊर्ध्वमनुक्रमिष्यामः पदादित्येवं तद् वेदितव्यम्। वक्ष्यति—'आमन्त्रितस्य च' ( ८.१.१९ )। आमन्त्रितस्य पदात् परस्यानुदात्तादेशो भवतीति। पचसि देवदत्त। पदादिति किम् ? देवंदत्त पचसि॥

## अनुदात्तं सर्वमपादादौ॥ १८ ॥

अनुदात्तमिति च, सर्वमिति च, अपादादाविति च। एतत् त्रयमधिकृतं वेदितव्यमा पादपरिसमाप्तेः। इत उत्तरं यद् वक्ष्यामोऽनुदात्तं सर्वमपादादावित्येवं तद् वेदितव्यम्। वक्ष्यति—'आमन्त्रितस्य च' ( ८.१.१९ ) इति। पचसि देवदत्त। अपादादाविति किम् ? यत्ते नियानं रजसं मृत्यो अनवधर्ष्यम् ( शौ० सं० ८.२.१० )। 'बहुवचनस्य वस्नसौ' ( ८.१.२१ )। ग्रामो वः स्वम् , जनपदो नः स्वम्। अपादादाविति किम् ?

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता।<br>
स एव नाथो भगवानस्माकं शत्रुमर्दनः॥

पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृह्यते। सर्वग्रहणं सर्वमनूद्यमानं विधीयमानं चानुदात्तं यथा स्यादिति। तेन युष्मदस्मदादेशानामपि वाक्यभेदेनानुदात्तत्वं विधीयते। युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य पदस्य यथा स्युः, यत्रापि स्वादिपदं ( १.४.१७ ) पदसंज्ञं भवति। ग्रामो वां दीयते। जनपदो नौ दीयते॥

---

१ - ( द्र०—आप० श्रौ० १.११.४ )।

## आमन्त्रितस्य च ॥ १९ ॥

आमन्त्रितस्य पदस्य पदात् परस्यापादादौ वर्तमानस्य सर्वमनुदात्तं भवति। पचसि देवदत्त। पचसि यज्ञदत्त। आमन्त्रिताद्युदात्तत्वे प्राप्ते वचनम् ॥ समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ॥ इह मा भूवन्—अयं दण्डो हरानेन, ओदनं पच तव भविष्यति, ओदनं पच मम भविष्यति। इह च यथा स्यात्—इह देवदत्त माता ते कथयति, नद्यास्तिष्ठति कूले, शालीनां त ओदनं दास्यामि इति। आमन्त्रितान्तं तिङन्तं युष्मदस्मच्छब्दौ[1] च यस्मात् पराणि न तेन[2] तेषां सामर्थ्यमिति तदाश्रया निघातयुष्मदस्मदादेशा न स्युः, 'समर्थः पदविधिः' (२.१.१) इति वचनात् ॥

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ॥ २० ॥

युष्मदस्मद् इत्येतयोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वाम् नौ इत्येतावादेशौ भवतः, तौ चानुदात्तौ। पदस्य पदादनुदात्तं सर्वमपादादाविति सर्वमिह संबध्यते। ग्रामो वां स्वम्। जनपदो नौ स्वम्। ग्रामो वां दीयते। जनपदो नौ दीयते। ग्रामो वां पश्यति। जनपदो नौ पश्यति। एकवचनबहुवचनान्तयोरादेशान्तरविधानाद् द्विवचनान्तयोरेतावादेशौ विज्ञायेते। षष्ठीचतुर्थीद्वितीयास्थयोरिति किम्? ग्रामे युवाभ्यां कृतम्। स्थग्रहणं श्रूयमाणविभक्त्यर्थम्। इह मा भूत्—अयं युष्मत्पुत्रः, अयमस्मत्पुत्र इति[3] ॥

## बहुवचनस्य वस्नसौ ॥ २१ ॥

बहुवचनान्तयोर्युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वस् नस् इत्येतावादेशौ भवतः। ग्रामो वः स्वम्। जनपदो नः स्वम्। ग्रामो वो दीयते। जनपदो नो दीयते। ग्रामो वः पश्यति। जनपदो नः पश्यति ॥

## तेमयावेकवचनस्य ॥ २२ ॥

युष्मदस्मदोरेकवचनान्तयोः षष्ठीचतुर्थीस्थयोर्यथासंख्यं ते मे इत्येतावादेशौ भवतः। ग्रामस्ते स्वम्। ग्रामो मे स्वम्। ग्रामस्ते दीयते। ग्रामो मे दीयते। द्वितीयान्तस्यादेशान्तरविधानसामर्थ्यात् षष्ठीचतुर्थ्योरेवायं योगः ॥

---

१ – 'युष्मदस्मदादेशाः' इत्यपपाठो मुद्रितेषु।
२ – 'तेन' इति नास्ति मुद्रितेषु।
३ – 'इह मा भूत्—इति युष्मत्पुत्र इति' इति पद०।

## त्वामौ द्वितीयायाः ॥ २३ ॥

एकवचनस्येति वर्तते। द्वितीयाया यदेकवचनं तदन्तयोर्युष्मदस्मदोर्यथासंख्यं त्वा मा इत्येतावादेशौ भवतः। ग्रामस्त्वा पश्यति। ग्रामो मा पश्यति॥

## न चवाहाहैवयुक्ते ॥ २४ ॥

च वा ह अह एव एभिर्युक्ते युष्मदस्मदोर्वान्नावादयो न भवन्ति। पूर्वेण प्रकरणेन[1] प्राप्ताः प्रतिषिध्यन्ते। ग्रामस्तव च स्वम्, ग्रामो मम च स्वम्, युवयोश्च स्वम्, आवयोश्च स्वम्, युष्माकं च स्वम्, अस्माकं च स्वम्। ग्रामस्तुभ्यं च दीयते, ग्रामो मह्यं च दीयते, युवाभ्यां च दीयते, आवाभ्यां च दीयते, युष्मभ्यं च दीयते, अस्मभ्यं च दीयते। ग्रामस्त्वां च पश्यति, ग्रामो मां च पश्यति, युवां च पश्यति, आवां च पश्यति, युष्मांश्च पश्यति, अस्मांश्च पश्यति। वा—ग्रामस्तव वा स्वम्, ग्रामो मम वा स्वम्, युवयोर्वा स्वम्, आवयोर्वा स्वम्, युष्माकं वा स्वम्, अस्माकं वा स्वम्। ग्रामस्तुभ्यं वा दीयते, ग्रामो मह्यं वा दीयते, युवाभ्यां वा दीयते, आवाभ्यां वा दीयते, युष्मभ्यं वा दीयते, अस्मभ्यं वा दीयते। ग्रामस्त्वां वा पश्यतिं, ग्रामो मां वा पश्यति, युवां वा पश्यति, आवां वा पश्यति, युष्मान् वा पश्यति, अस्मान् वा पश्यति। ह—ग्रामस्तव ह स्वम्, ग्रामो मम ह स्वम्, युवयोर्ह स्वम्, आवयोर्ह स्वम्, युष्माकं ह स्वम्, अस्माकं ह स्वम्। ग्रामस्तुभ्यं ह दीयते, ग्रामो मह्यं ह दीयते, युवाभ्यां ह दीयते, आवाभ्यां ह दीयते, युष्मभ्यं ह दीयते, अस्मभ्यं ह दीयते। ग्रामस्त्वां ह पश्यति, ग्रामो मां ह पश्यति, युवां ह पश्यति, आवां ह पश्यति, युष्मान् ह पश्यति, अस्मान् ह पश्यति। अह—ग्रामस्तवाह स्वम्, ग्रामो ममाह स्वम्, युवयोरह स्वम्, आवयोरह स्वम्, युष्माकमह स्वम्, अस्माकमह स्वम्। ग्रामस्तुभ्यमह दीयते, ग्रामो मह्यमह दीयते, युवाभ्यामह दीयते, आवाभ्यामह दीयते, युष्मभ्यमह दीयते, अस्मभ्यमह दीयते। ग्रामस्त्वामह पश्यति, ग्रामो मामह पश्यति, युवामह पश्यति, आवामह पश्यति, युष्मानह पश्यति, अस्मानह पश्यति। एव—ग्रामस्तवैव स्वम्, ग्रामो ममैव स्वम्, युवयोरेव स्वम्, आवयोरेव स्वम्, युष्माकमेव स्वम्, अस्माकमेव स्वम्। ग्रामस्तुभ्यमेव दीयते, ग्रामो मह्यमेव दीयते, युवाभ्यामेव दीयते, आवाभ्यामेव दीयते, युष्मभ्यमेव दीयते, अस्मभ्यमेव दीयते। ग्रामस्त्वामेव पश्यति, ग्रामो मामेव पश्यति, युवामेव पश्यति, आवामेव पश्यति, युष्मानेव पश्यति, अस्मानेव पश्यति। युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम्। युक्तयुक्ते प्रतिषेधो न भवति। ग्रामश्च ते स्वम्। नगरं च मे स्वम्॥

---

१ – 'प्रकारेण' इत्यपपाठो है०।

## पश्यार्थैश्चानालोचने ॥ २५ ॥

पश्यार्था दर्शनार्थाः। दर्शनं ज्ञानम्। आलोचनं चक्षुर्विज्ञानम्। तैः पश्यार्थैरनालोचने वर्तमानैर्युक्ते युष्मदस्मदोर्वान्नावादयो न भवन्ति। ग्रामस्तव स्वं समीक्ष्यागतः। ग्रामो मम स्वं समीक्ष्यागतः। ग्रामस्तुभ्यं दीयमानं समीक्ष्यागतः। ग्रामो मह्यं दीयमानं समीक्ष्यागतः। ग्रामस्त्वां समीक्ष्यागतः। ग्रामो मां समीक्ष्यागतः। अनालोचन इति किम्? ग्रामस्त्वा पश्यति। ग्रामो मा पश्यति। पश्यार्थैर्युक्तयुक्तेऽपि च प्रतिषेध इष्यते। तथा चैवोदाहृतम्॥

## सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥

विद्यमानपूर्वात् प्रथमान्तात् पदादुत्तरयोर्युष्मदस्मदोर्विभाषा वान्नावादयो न भवन्ति। ग्रामे कम्बलस्ते स्वम्, ग्रामे कम्बलस्तव स्वम्। ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम्। ग्रामे कम्बलस्ते दीयते, ग्रामे कम्बलस्तुभ्यं दीयते। ग्रामे कम्बलो मे दीयते, ग्रामे कम्बलो मह्यं दीयते। ग्रामे छात्रास्त्वा पश्यन्ति, ग्रामे छात्रास्त्वां पश्यन्ति। ग्रामे छात्रा मा पश्यन्ति, ग्रामे छात्रा मां पश्यन्ति। सपूर्वाया इति किम्? कम्बलस्ते स्वम्। कम्बलो मे स्वम्। प्रथमाया इति किम्? कम्बलो ग्रामे ते स्वम्। कम्बलो ग्रामे मे स्वम्॥ युष्मदस्मदोर्विभाषा अनन्वादेश इति वक्तव्यम्॥ इह मा भूत्—अथो ग्रामे कम्बलस्ते स्वम्। अथो ग्रामे कम्बलो मे स्वम्। अपर आह ॥ सर्व एव वान्नावादयोऽनन्वादेशे विभाषा वक्तव्याः॥ कम्बलस्ते स्वम्, कम्बलस्तव स्वम्। कम्बलो मे स्वम्, कम्बलो मम स्वम्। अनन्वादेश इति किम्? अथो कम्बलस्ते स्वम्। अथो कम्बलो मे स्वम्। न तर्हीदानीमिदं वक्तव्यं सपूर्वायाः प्रथमाया विभाषेति? वक्तव्यं च। किं प्रयोजनम्? अन्वादेशार्थम्। अन्वादेशे हि विभाषा यथा स्यात्। अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलस्तव स्वम्। अथो ग्रामे कम्बलो मे स्वम्, अथो ग्रामे कम्बलो मम स्वम्॥

## तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥

तिङन्तात् पदात् पराणि गोत्रादीनि कुत्सन आभीक्ष्ण्ये चार्थे वर्तमानान्यनुदात्तानि भवन्ति। पचति गोत्रम्। जल्पति गोत्रम्। आभीक्ष्ण्ये—पचतिपचति गोत्रम्। जल्पतिजल्पति गोत्रम्। ब्रुवः—पचति ब्रुवम्। जल्पति ब्रुवम्। पचतिपचति ब्रुवम्[1]। जल्पतिजल्पति ब्रुवम्[1]। ब्रुव इति ब्रुवः कर्त्रे[2] निपातनाद् वच्यादेशाभावश्च॥ गोत्र। ब्रुव। प्रवचन। प्रहसन[3]। प्रकथन। प्रत्ययन। प्रचक्षण। प्राय। विचक्षण। अवचक्षण। स्वाध्याय।

---

१ - यथापदमञ्जरि नेदमुदाहरणम्, ब्रुवशब्दस्य कुत्सितवचनत्वात्।

२ - पूर्वं (६.३.४३) पचाद्यचि निपातनमुक्तम्।

३ - 'प्रसहन' इति बाल०।

भूयिष्ठ। वा[1] नाम ( ग० सू० १८१ )। नामेत्येतद् वा निहन्यते। पक्ष आद्युदात्तमेव भवति। पचति नाम, पचति[2] नाम। तिङ इति किम् ? कुत्सितं गोत्रम्। गोत्रादीनीति किम् ? पचति पापम्। कुत्सनाभीक्ष्ण्ययोरिति किम् ? खनति गोत्रं समेत्य कूपम्। कुत्सनाभीक्ष्ण्यग्रहणं च पाठविशेषणं द्रष्टव्यम्। तेनान्यत्र ( ८.१.५७ ) अपि गोत्रादि-ग्रहणेन कुत्सनाभीक्ष्ण्ययोरेव कार्यं भवति ॥

## तिङ्ङतिङः ॥ २८ ॥

तिङन्तं पदमतिङन्तात् पदात् परमनुदात्तं भवति। देवदत्तः पचति। यज्ञदत्तः पचति। तिङिति किम् ? नीलम् उत्पलम्। शुक्लं वस्त्रम्। अतिङ इति किम् ? भवति पचति ॥

## न लुट् ॥ २९ ॥

पूर्वेणातिप्रसक्ते प्रतिषेध आरभ्यते। लुडन्तं तिङन्तं[3] नानुदात्तं भवति। श्वः कर्ता। श्वः कर्तारौ। मासेन कर्तारः। तासेः परस्य लसार्वधातुकस्यानुदात्तत्वे सति सर्वतासिरेवो-दात्तः। यत्र तु टिलोपः, तत्रोदात्तनिवृत्तिस्वरो भवति ॥

## निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ ३० ॥

नेति वर्तते। यत् यदि हन्त कुवित् नेत् चेत् चण् कच्चित् यत्र इत्येतैर्निपातैर्युक्तं तिङन्तं नानुदात्तं भवति। यत्—यत् करोति। यत् पचति। यदि—यदि करोति। यदि पचति। हन्त—हन्त करोति। हन्त पचति। कुवित्—कुवित् करोति। कुवित् पचति। नेत्—नेज्जिह्मायन्त्यो नरके पताम ( खि० १०.१०६ )। चेत्—स चेद् भुङ्क्ते। स चेदधीते। चण्—णिद्विशिष्टोऽयं चेदर्थे वर्तते। अयं च मरिष्यति। अयं चेद् मरिष्यतीत्यर्थः। समुच्चयादिषु तु यश्चशब्दः, तेन योगे[4] विधिरयं न भवति। कच्चित्—कच्चिद् भुङ्क्ते। कच्चिदधीते। यत्र—यत्र भुङ्क्ते। यत्राधीते। निपातैरिति किम् ? यत् कूजति शकटम्। गच्छत् कूजति शकटमित्यर्थः। इणः शतरि रूपमेतत्। युक्तमिति किम् ? यत्र क्वं च ते मनो दक्षं दधस उत्तरम् ( ऋ० ६.१६.१७ )॥

---

१ - 'वा' इति यथान्यासं न स्यात्।
२ - 'पठति' इति मुद्रितेपु।
३ - 'तिङन्तं' इति नास्ति है०।
४ - 'योगेन' इति मुद्रितेपु।

## नह प्रत्यारम्भे ॥ ३१ ॥

नह इत्येतेन युक्तं[1] प्रत्यारम्भे तिङन्तं नानुदात्तं भवति। चोदितस्यावधीरणे उपालिप्सया प्रतिषेधयुक्तः प्रत्यारम्भः क्रियते। नह भोक्ष्यसे। नह अध्येष्यसे। प्रत्यारम्भ इति किम्? नह वै तस्मिन्नमुष्मिन्[2] लोके दक्षिणामिच्छन्ति (काठ० सं० ९.१२)॥

## सत्यं प्रश्ने ॥ ३२ ॥

सत्यमित्यनेन युक्तं तिङन्तं नानुदात्तं भवति प्रश्ने। सत्यं भोक्ष्यसे? सत्यम् अध्येष्यसे? प्रश्न इति किम्? सत्यं वक्ष्यामि नानृतम् (शौ० सं० ४.९.७)॥

## अङ्गाप्रातिलोम्ये ॥ ३३ ॥

अङ्ग इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये गम्यमाने नानुदात्तं भवति। अङ्ग कुरु। अङ्ग पच। अङ्ग पठ। अप्रातिलोम्य इति किम्? अङ्ग कूज३ वृषल, इदानीं ज्ञास्यसि जाल्म। कूजनमनभिमतमसौ कुर्वन् प्रतिलोमो भवति॥

## हि च ॥ ३४ ॥

हि इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये नानुदात्तं भवति। स हि कुरु। स हि पच। स हि पठ। अप्रातिलोम्य इत्येव—स हि कूज३ वृषल, इदानीं ज्ञास्यसि जाल्म॥

## छन्दस्यनेकमपि साकाङ्क्षम् ॥ ३५ ॥

हि चेति वर्तते। छन्दसि विषये हियुक्तं तिङन्तं साकाङ्क्षमनेकमपि नानुदात्तं भवति, एकमपि। कदाचिदेकं कदाचिदनेकमित्यर्थः। तत्रानेकं तावत्—अनृतं हि मत्तो वदति, पाप्मा एनं विपुनाति[3]। तिङन्तद्वयमप्येतद् न निहन्यते। एकं खल्वपि—अग्निर्हि पूर्वमुदजयत्, तमिन्द्रोऽनूदजयत्[4]। तिङन्तद्वयमपि हिशब्दयुक्तमेतत्। तत्रैकमुदजयदित्याद्युदात्तम् अपरमनुदात्तम्। अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज्जनितारमग्रे (तै० सं० ४.२.१०.४)। अजनिष्टेत्याद्युदात्तम्, अपश्यदित्यनुदात्तम्॥

---

१ - 'युक्ते' इत्यपपाठो मुद्रितेषु।

२ - 'तस्मिंश्च' इति मुद्रितेषु।

३ - तु० — काठ० सं० १४.५,६।

४ - तु० — काठ० सं० १२.७।

## यावद्यथाभ्याम् ॥ ३६ ॥

यावद् यथा इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं भवति। यावद् भुङ्क्ते। यथा भुङ्क्ते। यावदधीते। यथा अधीते। देवदत्तः पचति यावत्। देवदत्तः पचति यथा। परेणापि योगे भवति प्रतिषेधः॥

## पूजायां नानन्तरम् ॥ ३७ ॥

यावद् यथा इत्येताभ्यां युक्तमनन्तरं तिङन्तं पूजायां विषये नानुदात्तं न भवति। किं तर्हि ? अनुदात्तमेव। यावत् पचति शोभनम्। यथा पचति शोभनम्। यावत् करोति चारु। यथा करोति चारु। पूजायामिति किम् ? यावद् भुङ्क्ते। यथा भुङ्क्ते। अनन्तरमिति किम् ? यावद् देवदत्तः पचति शोभनम्। यथा देवदत्तः करोति चारु। पूर्वेणात्र निघातः प्रतिषिध्यते॥

## उपसर्गव्यपेतं च ॥ ३८ ॥

यावद्यथाभ्यां युक्तम् उपसर्गव्यपेतं च पूजायां विषये नानुदात्तं न भवति। किं तर्हि? अनुदात्तमेव भवति। पूर्वमनन्तरमित्युक्तम्, उपसर्गव्यवधानार्थोऽयमारम्भः। यावत् प्रपचति शोभनम्। यथा प्रपचति शोभनम्। यावत् प्रकरोति चारु। यथा प्रकरोति चारु। अनन्तरमित्येव—यावद् देवदत्तः प्रपचति शोभनम्[1]। यथा विष्णुमित्रः प्रकरोति चारु॥

## तुपश्यपश्यताहैः पूजायाम् ॥ ३९ ॥

तु पश्य पश्यत अह इत्येतैर्युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये। तु—माणवकस्तु भुङ्क्ते शोभनम्। पश्य—पश्य माणवको भुङ्क्ते शोभनम्। पश्यत—पश्यत माणवको भुङ्क्ते शोभनम्। अह—अह माणवको भुङ्क्ते शोभनम्। पूजायामिति किम्? पश्य मृगो धावति। पूजायामिति वर्तमाने पुनः पूजायामित्युच्यते निघातप्रतिषेधार्थम्। तद्धि प्रतिषेधस्य प्रतिषेधेन संबद्धमिति॥

## अहो च ॥ ४० ॥

अहो इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये। अहो देवदत्तः पचति शोभनम्। अहो विष्णुमित्रः करोति चारु। पृथग्योगकरणमुत्तरार्थम्॥

---

१ - ' शोभनम् ' इति नास्ति मुद्रितेषु।

## शेषे विभाषा ॥ ४१ ॥

अहो इत्यनेन युक्तं तिङन्तं शेषे विभाषा नानुदात्तं भवति। कश्च शेषः ? यदन्यत् पूजायाः। कटमहो कुरिष्यसि। मम गेहमहो[1] एष्यसि[2]। असूयावचनमेतत्। पूजायामित्यस्य पूर्वत्र चानुकृष्टत्वाद् ( परि० ७८ ) अनधिकारे सिद्धे शेषवचनं विस्पष्टार्थम् ॥

## पुरा च परीप्सायाम् ॥ ४२ ॥

पुरा इत्यनेन युक्तं तिङन्तं परीप्सायामर्थे विभाषा नानुदात्तं भवति। परीप्सा त्वरा। अधीष्व माणवक, पुरा विद्योतते विद्युत्। पुरा स्तनयति स्तनयित्नुः। पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयति। परीप्सायामिति किम् ? नडेन स्म पुरा अधीयते। अत्र भूतकालविप्रकर्षं पुराशब्दो द्योतयति। ऊर्णया स्म पुरा अधीयते ॥

## नन्वित्यनुज्ञैषणायाम् ॥ ४३ ॥

ननु इत्यनेन युक्तं तिङन्तं नानुदात्तं भवत्यनुज्ञैषणायां विषये। अनुज्ञाया एषणा प्रार्थना अनुज्ञैषणा। अनुज्ञाप्रार्थनेत्यर्थः। ननु करोमि भोः। ननु गच्छामि भोः[3]। अनुजानीष्व मां करणं[4] प्रतीत्यर्थः। अनुज्ञैषणायामिति किम् ? अकार्षीः कटं देवदत्त ? ननु करोमि भोः। पृष्टप्रतिवचनमेतत्, नानुज्ञैषणा ॥

## किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥ ४४ ॥

किमित्येतत् क्रियाप्रश्ने यदा वर्तते तदानेन युक्तं तिङन्तमनुपसर्गमप्रतिषिद्धं नानुदात्तं भवति। किं देवदत्तः पचति, आहोस्विद् भुङ्क्ते। किं देवदत्तः शेते, आहोस्विदधीते। अत्र केचिदाहुः—पूर्वं किंयुक्तमिति तद् न निहन्यते, उत्तरं तु न किंयुक्तमिति तद् निहन्यत एवेति। अपरे त्वाहुः—यद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते, तथापि सर्वस्य संशयविषयस्य तेन योग इत्युभयत्र प्रतिषेधेन भवितव्यमिति। क्रियाग्रहणं किम् ? साधनप्रश्ने मा भूत्—किं देवदत्त ओदनं पचति आहोस्विच्छाकमिति। प्रश्न इति किम् ? किमधीते देवदत्तः। क्षेपे किंशब्दोऽयम्, न प्रश्ने। अनुपसर्गमिति किम् ? किं देवदत्तः प्रपचति,

---

१ -' अहो ' इति नास्ति मुद्रितेषु।

२ - पक्षे निघातोऽप्युदाहार्यः ।

३ - ' ननु गच्छामि भोः ' इत्यूहितः पाठः, न्यासपदमञ्जरीव्याख्याश्रयात्।

४ - ' गमनम् ' इति बाल०।

आहोस्वित् प्रकरोति। अप्रतिषिद्धमिति किम् ? किं देवदत्तो न पठति आहोस्विद् न करोति॥

## लोपे विभाषा॥ ४५ ॥

किमो लोपे क्रियाप्रश्ने तिङन्तमनुपसर्गमप्रतिषिद्धं विभाषा नानुदात्तं भवति। क्व चास्य लोपः ? यत्र गम्यते चार्थः, न च प्रयुज्यते किंशब्दः। देवदत्तः पचति, आहोस्वित् पठति[1]। विनैव किमा प्रश्नोऽवगम्यते। प्राप्तविभाषेयं किमर्थेन योगात्। पूर्ववत् प्रत्युदाहरणानि॥

## एहि मन्ये प्रहासे लृट्॥ ४६ ॥

एहि मन्य इत्यनेन युक्तं लृडन्तं नानुदात्तं भवति प्रहासे। प्रकृष्टो हासः प्रहासः, क्रीडा। एहि मन्य ओदनं भोक्ष्यसे, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एहि मन्ये रथेन यास्यसि, नहि यास्यसि, यातस्तेन ते पिता। प्रहास इति किम् ? एहि मन्यस ओदनं भोक्ष्य इति, सुष्ठु मन्यसे, साधु मन्यसे। 'गत्यर्थलोटा लृट्०' ( ८.१.५१ ) इत्येव सिद्धे सत्यारम्भो नियमार्थः—एहिमन्येयुक्ते प्रहास एव यथा स्यात्, अन्यत्र मा भूदिति। एहि मन्यस ओदनं भोक्ष्य इति। एहि मन्य इत्युत्तमोपादानमतन्त्रम्। प्रहास एव हि मन्यतेरुत्तमो विहितः, ततोऽन्यत्र मध्यम एव भवति। तत्रानेन नियमेन निवृत्तिः क्रियते—एहि मन्यस ओदनं भोक्ष्य इति॥

## जात्वपूर्वम्॥ ४७ ॥

जातु इत्येतदविद्यमानपूर्वम्, तेन युक्तं तिङन्तं नानुदात्तं भवति। जातु भोक्ष्यसे। जातु करिष्यामि। अपूर्वमिति किम् ? कटं जातु करिष्यति॥

## किंवृत्तं च चिदुत्तरम्॥ ४८ ॥

किमो वृत्तं किंवृत्तम्। किंवृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्, डतरडतमौ च प्रत्ययौ, तत् किंवृत्तं चिदुत्तरमविद्यमानपूर्वं यत् तेन युक्तं तिङन्तं नानुदात्तं भवति। कश्चिद् भुङ्क्ते। कश्चिद् भोजयति। कश्चिदधीते। केनचित् करोति। कस्मैचिद् ददाति। कतरश्चित् करोति। कतमश्चिद् भुङ्क्ते। चिदुत्तरमिति किम् ? को भुङ्क्ते। अपूर्वमित्येव—देवदत्तः किंचित् पठति॥

---

१ – पक्षे पचतिपठतिशब्दौ निहन्येते।

## आहो उताहो चानन्तरम् ॥ ४९ ॥

निघातप्रतिषेधोऽनुवर्तते, अपूर्वमिति च। आहो उताहो इत्येताभ्यामपूर्वाभ्यां युक्तमनन्तरं तिङन्तं नानुदात्तं भवति। आहो भुङ्क्ते। उताहो भुङ्क्ते। आहो पठति। उताहो पठति। अनन्तरमिति किम्? शेषे विभाषां (८.१.५०) वक्ष्यति। अपूर्वमित्येव—देवदत्त आहो भुङ्क्ते। देवदत्त उताहो भुङ्क्ते ॥

## शेषे विभाषा ॥ ५० ॥

आहो उताहो इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं शेषे विभाषा भवति। कश्च शेषः? यदन्यदनन्तरात्। आहो देवदत्तः पचति, पचति। उताहो देवदत्तः पचति, पचति। आहो देवदत्तः पठति, पठति। उताहो देवदत्तः पठति, पठति ॥

## गत्यर्थलोटा लृण्न चेत् कारकं सर्वान्यत् ॥ ५१ ॥

गमिना समानार्था गत्यर्थाः। गत्यर्थानां लोट् गत्यर्थलोट्। तेन गत्यर्थलोटा युक्तं लृडन्तं तिङन्तं नानुदात्तं भवति, न चेत् कारकं सर्वान्यद् भवति। यत्रैव कारके कर्तरि कर्मणि वा लोट्, तत्रैव यदि लृडपि भवतीत्यर्थः। कर्तृकर्मणी एवात्र तिङन्तवाच्ये कारकग्रहणेन गृह्येते, न करणादि कारकान्तरम्। आगच्छ देवदत्त ग्रामं द्रक्ष्यसि एनम्। आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे। उह्यन्तां देवदत्तेन शालयः, तेनैव भोक्ष्यन्ते। उह्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन भोक्ष्यन्ते। गत्यर्थग्रहणं किम्? पच देवदत्तौदनं भोक्ष्यस एनम्। लोटेति किम्? आगच्छेर्देवदत्त ग्रामं द्रक्ष्यसि एनम्। लृडिति किम्? आगच्छ देवदत्त ग्रामं पश्यसि एनम्। न चेत् कारकं सर्वान्यदिति किम्? आगच्छ देवदत्त ग्रामम्, पिता त ओदनं भोक्ष्यते। उह्यन्तां देवदत्तेन शालयः, सक्तवस्तेन पास्यन्ते। सर्वग्रहणं किम्? आगच्छ देवदत्त ग्रामम्, त्वं चाहं च द्रक्ष्यावं एनमित्यत्रापि निघातप्रतिषेधो यथा स्यात्। लृडन्तवाच्ये हि सर्वस्मिन् कारकेऽन्यस्मिन् न भवितव्यम्, इह तु यत् लोडन्तस्य कारकं तत् चान्यत् च लृडन्तेनोच्यत इति ॥

## लोट् च ॥ ५२ ॥

लोडन्तं तिङन्तं गत्यर्थलोटा युक्तं नानुदात्तं भवति, न चेत् कारकं सर्वान्यद् भवति। लोडन्तयोरेकं कारकं यदि भवतीत्यर्थः। आगच्छ देवदत्त, ग्रामं पश्य। आगच्छ [1]विष्णुमित्र, ग्रामं शाधि। आगम्यतां देवदत्तेन ग्रामो दृश्यतां यज्ञदत्तेन। गत्यर्थानामित्येव—पच देवदत्तौदनं भुङ्क्ष्व एनम्। लोटेत्येव—आगच्छेर्देवदत्त ग्रामं पश्य एनम्। न चेत् कारकं

---

१ - 'आव्रज' इति बाल०।

सर्वान्यदित्येव—आगच्छ देवदत्त ग्रामं पश्यतु एनं यज्ञदत्तः। सर्वग्रहणानुवृत्तेस्त्विह भवत्येव—आगच्छ देवदत्त ग्रामं त्वं चाहं च पश्याव। पृथग्योगकरणमुत्तरार्थम् ॥

## विभाषितं सोपसर्गमनुत्तमम् ॥ ५३ ॥

पूर्वं सर्वमनुवर्तते। प्राप्तविभाषेयम्। लोडन्तं सोपसर्गमुत्तमवर्जितं गत्यर्थलोटा युक्तं तिङन्तं विभाषितं नानुदात्तं भवति, न चेत् कारकं सर्वान्यद् भवति। आगच्छ देवदत्त ग्रामं प्रविश, प्रविश। आगच्छ देवदत्त ग्रामं प्रशाधि, प्रशाधि। सोपसर्गमिति किम् ? आगच्छ देवदत्त ग्रामं पश्य। अनुत्तममिति किम् ? अगच्छानि देवदत्त ग्रामं प्रविशानि ॥

## हन्त च ॥ ५४ ॥

पूर्वं सर्वमनुवर्तते गत्यर्थलोटं वर्जयित्वा। हन्त इत्यनेन युक्तं लोडन्तं सोपसर्गमुत्तमवर्जितं विभाषितं नानुदात्तं भवति। हन्त प्रविश, प्रविश। हन्त प्रशाधि, प्रशाधि। सोपसर्गमित्येव—हन्त कुरु। 'निपातैर्यद्यदिहन्त०' (८.१.३०) इति नित्यमत्र निघातप्रतिषेधो भवति। अनुत्तममित्येव—हन्त प्रभुनजावहै। हन्त प्रभुनजामहै ॥

## आम एकान्तरमामन्त्रितमनन्तिके ॥ ५५ ॥

आम उत्तरमेकपदान्तरमामन्त्रितान्तमनन्तिके नानुदात्तं भवति। आम् पचसि देवदत्त३। आम् भो देवदत्त३। भो इत्यामन्त्रितान्तमपि 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (८.१.७३) इति नाविद्यमानवद् भवति। आम इति किम् ? शाकं पचसि देवदत्त३। एकान्तरमिति किम् ? आम् प्रपचसि देवदत्त३। आमन्त्रितमिति किम्? आम् देवदत्तः पचति[1] अनन्तिक इति किम् ? आम् पचसि[2] देवदत्त। आम एकान्तरमामन्त्रितं यत् तस्य एकश्रुतेरनुदात्तस्य च प्रतिषेध इष्यते। तदुभयमनेन क्रियत इति केचिदाहुः। प्लुतोदात्तः पुनरसिद्धत्वाद् न प्रतिषिध्यते। अपरेषां दर्शनम्—अनन्तिक इत्यनेन यद् न दूरं न सन्निकृष्टं तत् परिगृह्यते, तेनास्मिन्नेकश्रुतेः प्राप्तिरेव नास्ति, प्लुतोदात्तोऽपि नोदाहर्तव्य इति ॥

## यद्धितुपरं छन्दसि ॥ ५६ ॥

आमन्त्रितमित्येतदस्वरितत्वाद् नानुवर्तते। तिङिति वर्तत एव। यत्परं हिपरं तुपरं च तिङन्तं छन्दसि नानुदात्तं भवति। यत्परं तावत्—गवां गोत्रमुदसृजो यदङ्गिरः (ऋ० २. २३.१८)। हिपरम् — इन्द्रवो वामुशन्ति हि (ऋ० १.२.४)। तुपरम्—आख्यास्यामि तु

१ – 'आम् पचति देवदत्तः' इत्यपपाठो मुद्रितेषु।
२ – 'पचसि' इति नास्ति मुद्रितेषु।

ते। 'निपातैर्यद्यदिहन्त०' ( ८.१.३० ) इति, 'हि च' ( ८.१.३४ ) इति, 'तुपश्यपश्यताहैः०' ( ८.१.३९ ) इति च निघातप्रतिषेधे सिद्धे वचनमिदं नियमार्थम्—एभिरेव परैर्योगे प्रतिषेधो भवति, नान्यैरिति। इह न भवति—जाये स्वो रोहावैहि[1]। एहीत्यनेन गत्यर्थलोटा युक्तस्य रोहावेत्यस्य लोडन्तस्य निघातो भवत्येव॥

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः॥ ५७ ॥

चन चिद् इव गोत्रादि तद्धित आम्रेडित इत्येतेषु परतोऽगतेरुत्तरं तिङन्तं नानुदात्तं भवति। चन—देवदत्तः पचति चन। चित्—देवदत्तः पचति चित्। इव—देवदत्तः पचतीव। गोत्रादि—देवदत्तः पचति गोत्रम्। देवदत्तः पचति ब्रुवम्। देवदत्तः पचति प्रवचनम्। इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोः ( ८.१.२७ ) एव गृह्यन्ते। तद्धित—देवदत्तः पचतिकल्पम्। देवदत्तः पचतिरूपम्। अनुदात्तस्तद्धित इहोदाहरणमन्यत्र तद्धित-स्वरेण तिङ्स्वरो बाध्यते। पचतिदेश्यः। आम्रेडित—देवदत्तः पचतिपचति। अगतेरिति किम्? देवदत्तः प्रपचति चन। अत्रागतिग्रहणे 'सगतिरपि तिङ्' ( ८.१.६८ ) इत्यत्र चोपसर्गग्रहणं द्रष्टव्यम्। इह मा भूत्—शुक्लीकरोति चन। यत् काष्ठं शुक्लीकरोति। यत् काष्ठं कृष्णीकरोति॥

## चादिषु च॥ ५८ ॥

चादिषु च परतः तिङन्तमगतेः परं नानुदात्तं भवति। चादयो 'न चवाहाहैवयुक्ते' ( ८.१.२४ ) इत्यत्र ये निर्दिष्टाः, त इह परिगृह्यन्ते। चशब्दे तावत्—देवदत्तः पचति च, खादति च[2]। वा—देवदत्तः पचति वा, खादति वा। ह—देवदत्तः पचति ह, खादति ह। अह—देवदत्तः पचत्यह, खादत्यह। एव—देवदत्तः पचत्येव, खादत्येव। अगतेरित्येव—देवदत्तः प्रपचति च, प्रखादति च। प्रथमस्यात्र तिङन्तस्य 'चवायोगे प्रथमा' ( ८.१.५९ ) इति निघातः प्रतिषिध्यत एव, परं तु निहन्यते॥

## चवायोगे प्रथमा॥ ५९ ॥

अगतेरिति पूर्वसूत्रे चानुकृष्टमित्यत्र नानुवर्तते ( परि० ७८ )। च वा इत्येताभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति। गर्दभांश्च कालयति, वीणां च वादयति। गर्दभान् वा कालयति, वीणां वा वादयति। योगग्रहणं पूर्वाभ्यामपि योगे निघातप्रतिषेधो यथा स्यादिति। प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूदिति। चवायोगो हि द्विसमुच्चये विकल्पे च सति भवति। स चानेकस्य धर्म इति॥

---

१ - तु०—जाय एहि स्वो रोहाव ( श० ब्रा० ५.२.१.१० )।

२ - इहोत्तरत्र च प्रथमान्येवोदाहरणानि, द्वितीयानि तु वाक्यादित्वादेव नानुदात्तानि।

## हेति क्षियायाम् ॥ ६० ॥

ह इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति क्षियायां गम्यमानायाम्। क्षिया धर्मव्यतिक्रमः, आचारभेदः। स्वयं ह रथेन यातिं३, उपाध्यायं पदातिं गमयति। स्वयं हौदनं भुङ्क्तें३, उपाध्यायं सक्तून् पाययति। प्रथमस्य तिङन्तस्यात्र निघातः प्रतिषिध्यते। 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' ( ८.२.१०४ ) इति च प्लुतो भवति ॥

## अहेति विनियोगे च ॥ ६१ ॥

अह इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति विनियोगे गम्यमाने, चशब्दात् क्षियायां च। नानाप्रयोजनो नियोगो विनियोगः। त्वमह ग्रामं गच्छं, त्वमहारण्यं गच्छ। क्षियायाम्—स्वयमह रथेन यातिं३, उपाध्यायं पदातिं गमयति। स्वयमहौदनं भुङ्क्तें३, उपाध्यायं सक्तून् पाययति। पूर्ववद् निघातप्रतिषेधः, प्लुतश्च ॥

## चाहलोप एवेत्यवधारणम् ॥ ६२ ॥

चलोपेऽहलोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति, एवेत्येतत् चेदवधारणार्थं प्रयुज्यते। क्व चास्य लोपः ? यत्र गम्यते चार्थो न च प्रयुज्यते, तत्र लोपः। तत्र चशब्दः समुच्चयार्थः, अहशब्दः केवलार्थ इति समानकर्तृके चलोपः, नानाकर्तृकेऽहलोपः। चलोपे—देवदत्त एव ग्रामं गच्छंतु, स देवदत्त एवारण्यं गच्छतु। ग्रामं चारण्यं च गच्छत्वित्यर्थः। अहलोपे—देवदत्त एव ग्रामं गच्छंतु, यज्ञदत्त एवारण्यं गच्छतु। ग्रामं केवलम् , अंरण्यं केवलमित्यर्थः। अवधारणमिति किम् ? देवदत्तः क्वेव भोक्ष्यते। अनवक्लृप्तावयमेवशब्दः। न क्वचिद् भोक्ष्यत इत्यर्थः। 'एवे चानियोगे' ( ६.१.९४ वा० ) इति पररूपम् ॥

## चादिलोपे विभाषा ॥ ६३ ॥

चादयो 'न चवाहाहैवयुक्ते' ( ८.१.२४ ) इति सूत्रनिर्दिष्टा गृह्यन्ते। तेषां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति विभाषा। चलोपे—शुक्ला व्रीहयो भवंन्ति, भवन्ति, श्वेता गा आज्याय दुहन्ति। भवन्तीत्येतद् विकल्पेन न निहन्यते। वालोपे—व्रीहिभिर्यजेंत, यजेत, यवैर्यजेत। एवं शेषेष्वपि यथादर्शनमुदाहार्यम् ॥

## वैवावेति चच्छन्दसि ॥ ६४ ॥

वै वाव इत्येताभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये। अहर्वै देवानामासीद् रात्रिरसुंराणाम् ( तै० सं० १.५.९.२ )। बृहस्पतिर्वै देवानां

पुरोहित आसीत् शण्डामर्कावसुराणाम् ( तै० सं० ६.४.१०.१ )। वाव—अयं वाव हस्त आसीत् ( काठ० सं० ३६.७ )। नेतर आसीत्॥

## एकान्याभ्यां समर्थाभ्याम्॥ ६५ ॥

एक अन्य इत्येताभ्यां समर्थाभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये। प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देवयूनाम् ( शौ० सं० ८.९.१३ )। जिन्वतीत्येतत् पक्षे न निहन्यते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ( ऋ० १.१६४.२० )। अत्तीत्येतत् पक्षे न निहन्यते। समर्थाभ्यामिति किम्? एको देवानुपातिष्ठत्। एक इति संख्यापदमेतद् अन्यार्थे न वर्तते। एकशब्दस्य व्यवस्थार्थं च समर्थग्रहणम्, व्यभिचारित्वात् तस्य॥

## यद्वृत्तान्नित्यम्॥ ६६ ॥

प्रथमा छन्दसीति च निवृत्तम्। निघातप्रतिषेध इत्येव। यदो वृत्तं यद्वृत्तम्। यत्र पदे यच्छब्दो वर्तते तत् सर्वं यद्वृत्तम्। इह वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्, डतरडतमौ च प्रत्ययौ इत्येतद् नाश्रीयते। तस्माद् यद्वृत्तादुत्तरं तिङन्तं नानुदात्तं भवति नित्यम्। यो भुङ्क्ते। यं भोजयति। येन भुङ्क्ते। यस्मै ददाति। यत्कामास्ते जुहुमः ( ऋ० १०.१२१.१० )। यद्रियङ् वायुर्वाति ( तै० सं० ५.५.१.१ )। यद्वायुः पवते। पञ्चमीनिर्देशेऽप्यत्र व्यवहिते कार्यमिष्यते ॥ याथाकाम्ये वेति वक्तव्यम्॥ यत्र क्व चन यजन्ते[1]॥

## पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः ॥ ६७ ॥

पूजनवचनेभ्यः[2] काष्ठादिभ्य उत्तरपदं पूजितमनुदात्तं भवति। काष्ठ—काष्ठाध्यापकः। काष्ठाभिरूपकः। दारुण—दारुणाध्यापकः। दारुणाभिरूपकः। अमातापुत्र—अमातापुत्राध्यापकः। अयुत—अयुताभिरूपकः। अयुताध्यापकः। अद्भुत—अद्भुताध्यापकः। अनुक्त—अनुक्ताध्यापकः। भृश—भृशाध्यापकः। घोर—घोराध्यापकः। परम—परमाध्यापकः। सु—स्वध्यापकः। अति—अत्यध्यापकः ॥ मलोपश्च ॥ इति वार्त्तिककारमतम्। मयूरव्यंसकादित्वात् समासः। समासे चैतदनुदात्तत्वम्। समासान्तोदात्तत्वापवाद इष्यते। दारुणमध्यापक इत्येवमादिषु न भवति। मलोपश्चेत्यनेनाप्ययमेव विषय आख्यायते। यत्र विभक्तेरभावाद् मकारो न श्रूयते, तत्रानुदात्तत्वमिति। असमासे हि मलोपो नैवेष्यते। दारुणमधीते दारुणमध्यापक इति। पूजनादित्येव पूजितपरिग्रहे सिद्धे

---

१ - यत्रैव क्वचनाग्निमाधाय यजते देवयजन एव यजते ( मै० सं० ३.८.४ )।
२ - ' पूजनेभ्यः ' इति मुद्रितेषु।

पूजितग्रहणमनन्तरपूजितप्रतिपत्त्यर्थम्। एतदेव ज्ञापकमिह प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयत इति। तथा च 'यद्वृत्तान्नित्यम्' (८.१.६६) इत्यत्रोदाहृतम्। अनुदात्त-मिति वर्तमाने पुनरनुदात्तग्रहणं प्रतिषेधनिवृत्त्यर्थम्॥

## सगतिरपि तिङ्॥ ६८ ॥

सगतिरगतिरपि पूजनेभ्यः काष्ठादिभ्यः परं पूजितं तिङन्तमनुदात्तं भवति। यत् काष्ठं पचति। यत् काष्ठं प्रपचति। यद् दारुणं पचति। यद् दारुणं प्रपचति। 'तिङ्ङतिङः' (८.१.२८) इति निघातस्य 'निपातैर्यद्यदिहन्त०' (८.१.३०) इति प्रतिषेधे प्राप्ते पुनर्विधानम्। सगतिग्रहणात् च गतिरपि निहन्यते। गतिग्रहणे चात्रोपसर्गग्रहणमिष्यते। इह न भवति—यत् काष्ठं शुक्लीकरोति। यत् काष्ठं कृष्णीकरोति॥

## कुत्सने च सुप्यगोत्रादौ॥ ६९ ॥

पदादिति निवृत्तम्। सगतिरपि तिङिति वर्तते। कुत्सने च सुबन्ते गोत्रादिवर्जिते परतः सगतिरपि तिङ् अगतिरप्यनुदात्तो भवति। पचति पूति। प्रपचति पूति। पचति मिथ्या। प्रपचति मिथ्या। कुत्सन इति किम्? पचति शोभनम्। सुपीति किम्? पचति क्लिश्नाति[1]। अगोत्रादाविति किम्? पचति गोत्रम्। पचति ब्रुवम्। पचति प्रवचनम्॥ क्रियाकुत्सन इति वक्तव्यम्॥ कर्तुः कुत्सने मा भूत्। पचति पूतिर्देवदत्तः। प्रपचति पूतिः॥ पूतिश्चानुबन्धो भवतीति वक्तव्यम्॥ तेनायं चकारानुबन्धकत्वादन्तोदात्तो भवति॥ विभाषितं चापि बह्वर्थमनुदात्तं भवतीति वक्तव्यम्॥ पचन्ति पूतिः, पचन्ति पूतिः। प्रपचन्ति पूतिः, प्रपचन्ति पूतिः।

सुपि कुत्सने क्रियाया मलोप इष्टोऽतिङीति चोक्तार्थम्।
पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम्॥

## गतिर्गतौ॥ ७० ॥

गतिर्गतौ परतोऽनुदात्तो भवति। अभ्युद्धरति। समुदानयति[2]। अभिसंपर्याहरति। गतिरिति किम्? देवदत्तः प्रपचति। गताविति किम्? आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः (ऋ० ३.४५.१)। याहीत्येतत् प्रति क्रियायोगादाङित्येष गतिः। तस्य गतावित्येतस्मिन्नसति गतिरित्यनाश्रितपरनिमित्तकमनुदात्तत्वं स्यात्॥

---

१ – भिन्नवाक्यत्वाद् इदं चिन्त्यमिति हरदत्तः।

२ – उदानयति (तै० ब्रा० १.६.५.३)।

## तिङि चोदात्तवति ॥ ७१ ॥

गतिरिति वर्तते। तिङन्त उदात्तवति परतो गतिरनुदात्तो भवति। यत् प्रपचति। यत् प्रकुरोति। तिङ्ग्रहणमुदात्तवतः परिमाणार्थम्। अन्यथा हि यं प्रति गतिः, तत्रानुदात्तो भवतीति धातावेवोदात्तवति स्यात्, प्रत्यये न स्यात्—यत् प्रकुरोति इति। 'यत्क्रियायुक्ताः प्रादयस्तेषां तं प्रति गत्युपसर्गसंज्ञे भवतः' (महाभाष्य १.७५) इति तिङन्ते धातुमेव प्रति गतिसंज्ञा। आमन्ते तर्हि न प्राप्नोति—प्रपचतितराम्, प्रपचतितमामिति[1] ? अत्र केचिदामन्तेन गतेः समासं कुर्वन्ति। तेषामव्ययपूर्वपदप्रकृतिस्वरत्वे (६.२.२) सत्यक्रियमाणेऽपि तिङ्-ग्रहणे परमनुदात्तवद् भवतीति गतिनिघातो नैव सिध्यति। अथ तरबन्तस्य गतिसमासः? एवमपि सतिशिष्टत्वादाम एव स्वरे सति गतेः 'अनुदात्तं पदमेकवर्जम्' (६.१.१५८) इत्येवानुदात्तत्वं सिद्धम्। येषां 'गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः' (परि० ७५) इत्यनेन वचनेन कृदन्तेनैव प्राक् सुबुत्पत्तेः समासो भवति नान्येनेति दर्शनम्, तेषामेवंविधे विषये समासेन नैव भवितव्यमिति। पृथक्स्वरप्रवृत्तौ सत्यामनेन निघातेन प्रयोजनमस्ति। तदर्थं यत्नः कर्तव्यः। उदात्तवतीति किम् ? प्रपचति। प्रकरोति॥

## आमन्त्रितं पूर्वमविद्यमानवत् ॥ ७२ ॥

आमन्त्रितं पूर्वमविद्यमानवद् भवति। तस्मिन् सति यत् कार्यं तद् न भवति, असति यत् तद् भवति। कानि पुनरविद्यमानवत्त्वे प्रयोजनानि ? आमन्त्रिततिङ्निघात-युष्मदस्मदादेशाभावाः। देवदत्त यज्ञदत्त इत्यत्रामन्त्रितस्य पदात् परस्य (८.१.१९) इति निघातो न भवति। षाष्ठिकामन्त्रिताद्युदात्तत्वं (६.१.१९८) भवति। देवदत्त पचसि इत्यत्र 'तिङ्ङतिङः' (८.१.२८) इति निघातो न भवति। देवदत्त तव ग्रामः स्वम्, देवदत्त मम ग्रामः स्वमित्येवमादिषु युष्मदस्मदादेशा न भवन्ति। पूजायामनन्तरप्रतिषेधः प्रयोजनम्। यावद् देवदत्त पचसि इत्यत्रापि 'पूजायां नानन्तरम्' (८.१.३७) इत्येव प्रतिषेधो भवति। 'जात्वपूर्वम्' (८.१.४७) इत्येतद् देवदत्त जातु पचसि इत्यत्रापि भवति। 'आहो उताहो चानन्तरम्' (८.१.४९) इति, आहो देवदत्त पचसि, उताहो देवदत्त पचसि इत्यत्रापि भवति। 'आम एकान्तरमामन्त्रितमनन्तिके' (८.१.५५) इति आम् भोः पचसि देवदत्त इत्यत्रापि भवति। आमन्त्रितमिति किम् ? देवदत्तः पचति। पूर्वमिति किम् ? देवदत्त इत्येतस्यामन्त्रिताद्युदात्तत्वे कर्तव्ये नाविद्यमानवद् भवति। पूर्वत्वं च परापेक्षं भवतीति परस्यैव कार्ये स्वनिमित्तेऽन्यनिमित्ते वा तदविद्यमानवद् भवति, न तु स्वकार्ये। देवदत्त पचसि इत्यत्रापि ह्यामन्त्रिताद्युदात्तत्वं भवत्येव। इह इमं मे गङ्गे यमुने सरस्वति इति

१ - द्र०—पूर्वत्र (६.२.१३९) वृत्तिः।

गङ्गेशब्दः पूर्वमामन्त्रितम्, ततः परस्य यमुनेशब्दस्यानुदात्तत्वे कर्तव्ये स्वयमविद्यमानवत्त्वाद् निमित्तं न भवति। मेशब्दस्य निमित्तभावं न प्रतिबध्नाति ॥

## नामन्त्रिते समानाधिकरणे सामान्यवचनम् ॥ ७३ ॥

अविद्यमानवत्त्वस्य प्रतिषेधः। आमन्त्रितान्ते समानाधिकरणे परतः पूर्वमामन्त्रितान्तं सामान्यवचनं नाविद्यमानवद् भवति। किं तर्हि ? विद्यमानवदेव। अग्ने॑ गृहपते ( तै० सं० २.४.५.२ )। माण॑वक जटिलकाध्यापक। पूर्वस्य विद्यमानवत्त्वात् परमनुदात्तमेव भवति। आमन्त्रित इति किम् ? देव॑दत्त॒ पच॑सि। समानाधिकरण इति किम् ? देव॑दत्त॒ पण्डित यज्ञदत्त। अत्र यज्ञदत्तविशेषणं पण्डितशब्दः, न पूर्वेण समानाधिकरणः। सामान्यवचनमिति किम् ? पर्यायेषु मा भूत्। अघ्न्ये॑ देवि॑ सर॑स्वति ईडे॑ काव्ये॑ विह॑व्ये॑[1]। पर्यायशब्दा एते। एवं ह्युक्तम्—एता ते॑ अघ्न्ये॒ नामा॑नि ( मा० सं० ८.४३ ) इति ॥

## विभाषितं विशेषवचने बहुवचनम् ॥ ७४ ॥

पूर्वेणाविद्यमानवत्त्वे प्रतिषिद्धे विकल्प उच्यते। विशेषवचने समानाधिकरण आमन्त्रितान्ते परतः पूर्वमामन्त्रितं बहुवचनान्तं विभाषितमविद्यमानवद् भवति। देवा॒ः शर॑ण्याः, देवा॑ः शरण्याः। ब्राह्म॑णा॒ वैया॑करणाः, ब्राह्म॑णा वैयाकरणाः। सामान्यवचनाधिकारादेव विशेषवचन इति सिद्धे विशेषवचनग्रहणं विस्पष्टार्थम्। बहुवचनमिति किम्? माण॑वक जटिलक। नित्यमेतद् विद्यमानवदेव ॥

इति श्रीवामनविरचितायां काशिकायां वृत्तावष्टमाध्यायस्य प्रथमः पादः ॥



१ - इडे॒ रन्ते॒ हव्ये॒ काम्ये॒ चन्द्रे॒ ज्योतेऽदि॑ते॒ सर॑स्वति॒ ( मा० सं० ८.४३ )।

# ॥ अष्टमाध्यायस्य द्वितीयः पादः ॥

## पूर्वत्रासिद्धम् ॥ १ ॥

पूर्वत्रासिद्धमित्यधिकारोऽयम् आध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामः पूर्वत्रासिद्धमित्येवं तद् वेदितव्यम्। तत्र येयं सपादसप्ताध्याय्यनुक्रान्ता, एतस्यामयं पादोनोऽध्यायोऽसिद्धो भवति। इत उत्तरं चोत्तर उत्तरो योगः पूर्वत्रपूर्वत्रासिद्धो भवति, असिद्धवद् भवति। सिद्धकार्यं न करोतीत्यर्थः। तदेतदसिद्धत्ववचनमादेशलक्षण-प्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च। अस्मा उद्धर, द्वा अत्र, द्वा आनय, असा आदित्य इत्यत्र व्यलोपस्यासिद्धत्वाद् 'आद् गुणः' (६.१.८७) इति, 'अकः सवर्णे दीर्घः' (६.१.१०१) इति च न भवति। अमुष्मै, अमुष्मात्, अमुष्मिन् इत्युत्वस्यासिद्धत्वाद् स्मायादयो भवन्ति।

शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा ।
मतोर्वत्वे झलां जश्त्वं[1] गुडलिण्मान्निदर्शनम् ॥

शुष्किकेत्यत्र 'शुषः कः' (८.२.५१) इत्यस्यासिद्धत्वाद् 'उदीचामातः स्थाने यक-पूर्वायाः' (७.३.४६) इत्येतद् न भवति। शुष्कजङ्घा इति 'न कोपधायाः' (६.३.३७) इति पुंवद्भावप्रतिषेधो न भवति। क्षामिमानिति क्षामस्यापत्यं क्षामिः, क्षामो वा अस्या-स्तीति क्षामी। क्षामिः क्षामी वा यस्यास्तीति क्षामिमान्। 'क्षायो मः' (८.२.५३) इत्यस्यासिद्धत्वाद् 'मादुपधायाश्च०' (८.२.९) इति वत्वं न भवति। औजढदिति वहेर्निष्ठायामूढः, तमाख्यदिति णिच्, तदन्ताद् लुङ्, 'चङि' (६.१.११) इति द्विर्वचने कर्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वाद् णौ च यष्टिलोपस्तस्य स्थानिवद्भावाद् हूत इत्येतद् द्विरुच्यते। अनग्लोपे (७.४.९३) इति प्रतिषेधात् सन्वदित्वं नास्ति। तेनौजढदिति भवति। औजिढदित्येतत् तु क्तिन्नन्तस्य ऊढिशब्दस्य भवति। गुडलिण्मानिति गुडलिहोऽस्य सन्तीति मतुप्, तत्र ढत्वजश्त्वयोरसिद्धत्वाद् 'झयः' (८.२.१०) इति वत्वं न भवति। येऽत्र षष्ठीनिर्देशाः, सप्तमीनिर्देशाः, पञ्चमीनिर्देशाश्च, तेषां 'षष्ठी स्थानेयोगा' (१.१.४९), 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१.१.६६), 'तस्मादित्युत्तरस्य' (१.१.६७) इति च कर्तव्ये नासिद्धत्वं भवति। 'कार्यकालं हि संज्ञापरिभाषम्' (परि० ३) इति पूर्वत्वमासां परिभाषाणां नास्तीति। 'विप्रतिषेधे परम्०' (१.४.२) इत्येषा तु परिभाषा येन पूर्वेण लक्षणेन सह स्पर्धते परं लक्षणम्; तत् प्रति तस्यासिद्धत्वाद् न प्रवर्तते। तथा च विस्फोर्यम्, अवगोर्यम् इति गुणः परेण 'हलि च' (८.२.७७) इति दीर्घत्वेन न बाध्यते। अपवादस्य तु परस्यापि उत्सर्गे कर्तव्ये वचनप्रामाण्यादसिद्धत्वं न भवति। तेन

१ – 'जश्त्वे' इति है० तारा०।

दोग्धा, दोग्धुमित्यत्र घत्वस्यासिद्धत्वाद् 'हो ढः' ( ८.२.३१ ) इति न भवति ॥

## नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥ २ ॥

नलोपः पूर्वत्रासिद्धो भवति सुब्विधौ, स्वरविधौ, संज्ञाविधौ, तुग्विधौ च कृति। विधिशब्दोऽयं प्रत्येकमभिसंबध्यमानः स्वरसंज्ञातुकां विधेयत्वात् तैः कर्मषष्ठीयुक्तैर्भाव-साधनोऽभिसंबध्यते। सुपा तु संबन्धसामान्यवचनषष्ठ्यन्तेन कर्मसाधनः। तेन सुपः स्थाने यो विधिः, सुपि च परभूते, सर्वोऽसौ सुब्विधिरिति सर्वत्रासिद्धत्वं भवति। सुब्विधौ तावत्—राजभिः, तक्षभिः इत्यत्र नलोपस्यासिद्धत्वाद् 'अतो भिस ऐस्' ( ७.१.९ ) इति न भवति। राजभ्याम्, तक्षभ्याम्, राजसु, तक्षस्विति 'सुपि च' ( ७.३.१०२ ) इति, 'बहुवचने झल्येत्' ( ७.३.१०३ ) इति दीर्घत्वमेत्वं च न भवति। स्वरविधौ—राजवतीत्यत्र नलोपस्यासिद्धत्वाद् 'अन्तोऽवत्याः' ( ६.१.२२० ) इति न भवति। पञ्चार्मम्, दशार्ममित्यत्र नलोपस्यासिद्धत्वाद् 'अर्मे चावर्णं द्व्यच् त्र्यच्' ( ६.२.९० ) इति पूर्वपदस्याद्युदात्तत्वं न भवति। पञ्चदण्डी इत्यत्र नलोपस्यासिद्धत्वादिगन्ते द्विगौ ( ६.२.२९ ) इति पूर्वपद-प्रकृतिस्वरो न भवति। संज्ञाविधौ—पञ्च ब्राह्मण्यः, दश ब्राह्मण्य इति नलोपस्यासिद्धत्वाद् 'ष्णान्ता षट्' ( १.१.२४ ) इति षट्संज्ञा भवति। ततश्च 'न षट्स्वस्रादिभ्यः' ( ४.१.१० ) इति टापः प्रतिषेधो भवति। तदेतत् प्रयोजनं कथं भवति ? यदि प्रतिकार्यं संज्ञाप्रवृत्तिरित्येतद् दर्शनम्। या हि जश्शसोर्लुगर्था षट्संज्ञा प्रवृत्ता तया स्त्रीप्रत्ययप्रतिषेधो न क्रियत इति सा पुनः प्रवर्तयितव्येति। तुग्विधौ—वृत्रहभ्याम्, वृत्रहभिरिति नलोपस्यासिद्धत्वाद् 'ह्रस्वस्य पिति कृति तुक्' ( ६.१.७१ ) इति तुग् न भवति। अत्र केचित् 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि० ८५ ) इति तुकं प्रति नलोपस्यानिमित्तत्वाद् बहिरङ्गलक्षणेन वासिद्धत्वात् ( परि० ५० ) तुग्विधिग्रहणमनर्थकमिति प्रतिपन्नाः। तत् तु क्रियते परिभाषाद्वयस्यानित्यत्वं ज्ञापयितुम्। कृतीति किम् ? वृत्रहच्छत्रम्, वृत्रहच्छाया 'छे च' ( ६.१.७३ ) इति तुग् भवति। अत्र सिद्धे सत्यारम्भो नियमार्थः—एतेष्वेव नलोपोऽसिद्धो भवति, नान्यत्र। तेन राजीयति, राजायते, राजाश्व इतीत्वम्, दीर्घत्वम्, एकादेशश्च सिद्धो भवति ॥

## न मु ने ॥ ३ ॥

मुभावो नाभावे कर्तव्ये नासिद्धो भवति। किं तर्हि ? सिद्ध एव। अमुना। मुभावस्यासिद्धत्वाद् घिलक्षणो नाभावो ( ७.३.१२० ) न स्यात्। कृते तु नाभावे मुभावस्या-सिद्धत्वात् 'सुपि च' ( ७.३.१०२ ) इति दीर्घत्वं यत् प्राप्नोति, तत् 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि० ८५ ) इति न भवति। अथ वा योगद्वयमिदमुभयार्थं तन्त्रेणोच्चारितम्। अथ वा ने परतो यत् प्राप्नोति, तस्मिन् कर्तव्ये मुभावो नासिद्ध इत्येष

एवात्र सूत्रार्थः। ने तु कर्तव्ये मुभावस्य यत् सिद्धत्वं तदर्थात् संगृहीतम्। तेनात्र मुभावस्य सिद्धत्वाद् नाभावश्च भवति, दीर्घत्वं च न भवति ॥ एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः॥ किं प्रयोजनम् ? अयायावेकादेशशतृस्वरैकानुदात्तसर्वानुदात्तार्थम्। वृक्ष इदम्, प्लक्ष इदम्। अत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरेकादेशः। स 'एकादेश उदात्तेनोदात्तः' ( ८.२.५ ) इत्युदात्तः। तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यतोऽयादेश उदात्तो यथा स्यात्। आयू—कुमार्या इदम्। कथमिदमुदाहरणम् ? यदि 'उदात्तयणो हल्पूर्वात्' ( ६.१.१७४ ) इत्युदात्तत्वे कृते विभक्तेः 'आटश्च' ( ६.१.९० ) एकादेशः तदा भवतीदमुदाहरणम्। अथ तु कृत एकादेश 'उदात्तयणो हल्पूर्वात्' ( ६.१.१७४ ) इति स्वरः, तदा नैतदस्य प्रयोजनं भवति। आव्—वृक्षाविंदम्। प्लक्षाविंदम्। एकादेशस्वरः—गाङ्गेऽनूप इति गाङ्गेशब्द एकार 'एकादेश उदात्तेनोदात्तः' ( ८.२.५ ) इत्युदात्तः। तस्य सिद्धत्वाद् यः पुनः 'एङः पदान्तादति' ( ६.१.१०९ ) इत्येकादेशः स 'एकादेश उदात्तेनोदात्तः' ( ८.२.५ ) इति, अतः 'स्वरितो वानुदात्ते पदादौ' ( ८.२.६ ) इत्येतद् भवति। शतृस्वरः—तुदती। नुदती। अदुपदेशात् ( ६.१.१८६ ) इति लसार्वधातुकानुदात्तत्वे कृत एकादेशः, तदुदात्तस्य सिद्धत्वात् 'शतुरनुमो नद्यजादी' ( ६.१.१७३ ) अन्तोदात्तादित्येष स्वरो भवति। अनुमः ( ६.१.१७३ ) इति प्रतिषेधो ज्ञापकः—एकादेशस्वरः शतृस्वरे सिद्ध इति। न हि सनुंकं शत्रन्तं किंचिदेकादेशस्वरमन्तरेणान्तोदात्तमस्ति। एकानुदात्तः—तुदन्तिं। लिखन्तिं। एकादेशस्वरस्य सिद्धत्वात् तेन 'अनुदात्तं पदमेकवर्जम्' ( ६.१.१५८) इति वर्ज्यमानता भवति। सर्वानुदात्तः—ब्राह्मणास्तुदन्ति। ब्राह्मणा लिखन्ति। एकादेशस्वरस्य सिद्धत्वात् कृते तस्मिन् 'तिङ्ङतिङः' ( ८.१.२८ ) इति निघातो भवति। अन्तरङ्ग इति वचनाद् बहिरङ्गस्यासिद्धत्वम् ( परि० ५० ) एव—पचतीतिं। प्रपंचतीतिं ॥ संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः॥ किं प्रयोजनम् ? हरिवो मेदिनं त्वा ( तै० सं० ४.७.१४.४ )। हरिव इति मतुबन्तमेतत्। तत्र 'छन्दसीरः' ( ८.२.१५ ) इति वत्वे, संयोगान्तस्य लोपे च कृते, 'मतुवसो रु संबुद्धौ छन्दसि' ( ८.३.१ ) इति रुत्वम्। तस्य संयोगान्तस्य लोपस्यासिद्धत्वाद् 'हशि च' ( ६.१.११४ ) इत्युत्वं न प्राप्नोति ॥ सिज्लोप एकादेशे सिद्धो वक्तव्यः॥ अलावीत्। अपावीत्। 'इट ईटि' ( ८.२.२८ ) इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घत्वं भवति ॥ निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः॥ वृक्णः। वृक्णवान्। निष्ठादेशस्य सिद्धत्वाद् झलि ( ८.२.३६ ) इति षत्वं न भवति। कुत्वं तु प्रत्यसिद्ध एवेति तद् भवति। स्वरप्रत्ययविधीड्विधिषु क्षीबशब्द उदाह्रियते। तत्र च निपातनमनेकधा समाश्रीयते। यदा क्षीबेर्निष्ठायामिटि कृत इतुशब्दलोपो निपात्यते, तदा क्षीबं इति संज्ञायामितुशब्दलोपस्यासिद्धत्वाद् 'निष्ठा च द्व्यजनात्' ( ६.१.२०५ ) इत्येष स्वरो न प्राप्नोति, क्षीबेन तरति क्षीबिक इति द्व्यजुलक्षणष्ठन् ( ४.४.७) न प्राप्नोति। यदा तु तकारलोपो निपात्यते, तदा तस्यासिद्धत्वादिडागमः प्राप्नोति

॥ प्लुतविकारस्तुग्विधौ छे सिद्धो वक्तव्यः ॥ अग्ना३इच्छत्रम्। पटा३उच्छत्रम्। प्लुतविकारस्यासिद्धत्वात् 'छे च' (६.१.७३) इति ह्रस्वलक्षणो नित्यस्तुग् न प्राप्नोति ॥ श्चुत्वं धुटि सिद्धं वक्तव्यम् ॥ 'श्च्युतिर् क्षरणे' (भ्वा० ३४) इत्ययं धातुः सकारादिः पठ्यते, तस्य श्चुत्वस्यासिद्धत्वाद् अट्श्च्योतति, रट्श्च्योतति इति 'ङः सि धुट्' (८.३.२९) इति प्राप्नोति। अटतीत्यड्, रटतीति रड्, क्विबन्तोऽयम्। किमर्थं पुनः सकारादिः पठ्यते ? इह मधु श्च्योततीति मधुश्च्युत्, क्विबन्तः। मधुश्च्युतमाचष्ट इति णिच्, मधुश्च्ययति। मधुश्च्ययतेः पुनः क्विपि कृते संयोगादित्वात् (८.२.२९) सलोपः, संयोगान्तत्वाद् यलोपः[1], चकारस्य कुत्वम्, मधुगिति सिद्धम्। शकारादौ पुनरेतस्मिन् संयोगान्तलोपेन[1] यकारचकारयोर्लुप्तयोः शकारस्य षत्वे सति मधुडिति स्यात् ॥ अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वक्तव्ये ॥ बभणतुः। बभणुः। अभ्यासजश्त्वस्यासिद्धत्वादनादेशादेरित्येत्वं प्राप्नोति। छिदेः विचिच्छित्सति, उच्छेः उचिच्छिषति इति अभ्यासादेशस्यासिद्धत्वात् 'छे च' (६.१.७३) इति तुक् प्राप्नोति[2] ॥ द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् ॥ सँय्यँन्ता, सँव्वँत्सरः, यँल्ँलोकम् , तँल्ँलोकमिति परसवर्णस्यासिद्धत्वाद् यरः (८.४.४७) इति द्विर्वचनं न स्यात् ॥ पदाधिकारश्चेल् लत्वघत्वढत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि ॥ लत्वम्—गलोगलः, गरोगरः। घत्वम्—द्रोग्धाद्रोग्धा, ढत्वम्—द्रोढाद्रोढा। नत्वम्—नुन्नोनुन्नः, नुत्तोनुत्तः। रुत्वम्—अभिनोऽभिनः, अभिनदभिनत्। षत्वम्—मातुःष्वसामातुःष्वसा, मातुःस्वसामातुःस्वसा। पितुःष्वसापितुःष्वसा, पितुःस्वसापितुःस्वसा। णत्वम्—माषवापाणिमाषवापाणि, माषवापानिमाषवापानि। अनुनासिकम्—वाङ्नयनंवाङ्नयनम्, वाग्नयनंवाग्नयनम्। छत्वम्—वाक्च्छयनंवाक्च्छयनम्, वाक्शयनंवाक्शयनम्। लत्वादीनां विकल्पितानामसिद्धत्वात् कृते द्विर्वचने सत्युपरिष्टाद् विकल्पे सति गरोगलः, गलोगरः इत्येवं रूपमपि द्विरुक्तं स्यात्। तदेतत् सर्वं न मु ने इति योगविभागेन साध्यते। न इत्येतावदनिष्टे विषये पूर्वत्रासिद्धस्य प्रतिषेधार्थम्। ततो मु ने इति। नेत्येतदनुवर्तते ॥

## उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥ ४ ॥

उदात्तयणः स्वरितयणश्च परस्यानुदात्तस्य स्वरित आदेशो भवति। उदात्तयणः—कुमार्यौ, कुमार्यः। उदात्तनिवृत्तिस्वरेण (६.१.१६१) अयमीकार उदात्तः, तस्य स्थाने यणादेशः, स उदात्तयण्, तस्मात् परस्यानुदात्तस्य स्वरित आदेशो भवति। स्वरितयणः—सकूल्ल्व्यांशा। खलप्व्यांशा। सकूल्लूः, खलपूरिति कृत्स्वरेण (६.२.१३९) अन्तोदात्तौ,

---

१ – 'लोपो व्योर्वलि' (६.१.६६) इति यलोप इति नागेशः (८.२.६ उद्योत)।
२ – 'तुक् न प्राप्नोति' इति है० तारा० अपपाठः।

तयोः 'ओः सुपि' ( ६.४.८३ ) इति यणादेशः, स उदात्तयण्, ततः परस्य सप्तम्येकवचनस्य स्वरितत्वम्, तस्य यणादेशः स्वरितयण्, तस्मात् स्वरितयणः परस्याशाशब्दाकारस्यानुदात्तस्य स्वरितो भवति। ननु च सप्तम्येकवचनस्य यदुदात्तयण इति स्वरितत्वम्, तदसिद्धं यणादेशे, तत् कथमयं स्वरितयण् भवति? आश्रयात् सिद्धत्वं भविष्यति। यद्येवम् 'उदात्तादनुदात्तस्य स्वरितः' ( ८.४.६६ ) इत्येतस्याप्याश्रयात् सिद्धत्वं प्राप्नोति। ततश्च दध्याशेत्यत्रापि स्वरितः स्यात् ? तस्मादयमेव यण्स्वरो यणादेशे सिद्धो वक्तव्यः। केचित् तु ब्रुवते— उदात्तात् स्वरितयणोऽपि परस्यानुदात्तस्य स्वरितत्वं दृश्यते। तथा च तैत्तिरीयके शाखान्तरे पठ्यते—यास्ते विश्वाः समिधः सन्त्यंग्ने ( तै० सं० ३.५.५.३ ) इति। अग्न इत्ययमकारः स्वरितः पठ्यते। तथा ब्राह्मणेऽपि दध्यांशयति ( तै० ब्रा० १.७.६.५ ) इत्याकारः स्वरितः पठ्यत इति। यथा तु वार्त्तिकं भाष्यं च तथा उदात्तात् स्वरितयणः परस्यानुदात्तस्यानेन स्वरितत्वं न भवतीति स्थितम्। तथा च भाष्ये स्वरितयण्ग्रहणमिदं प्रत्याख्यायते, सकृल्ल्व्यांशा इत्येवमादावुदात्तयण इत्येव स्वरितस्य सिद्धत्वात्। स्वरितयण्व्यवधानमव्यवधानमेव—'स्वरविधौ व्यञ्जनमविद्यमानवत्' ( परि० ७९ ) इति। तत् तु क्रियते, पूर्वस्मादपि विधौ स्थानिवद्भावाद् व्यवधानमस्ति, स्वरदीर्घयलोपेषु च लोपाजादेशस्य स्थानिवद्भावः प्रतिषिध्यत इति। उदात्तस्वरितयोरिति किम् ? बैदी आशा बैद्याशा। शार्ङ्गरव्याशा। अनुदात्तयणादेशोऽयम्। अनुदात्तस्येति किम् ? कुमार्यत्रं। किशोर्यत्रं। अत्रेत्ययमाद्युदात्तो लित्स्वरेण ( ६.१.१९३ )॥

## एकादेश उदात्तेनोदात्तः॥ ५ ॥

उदात्तेन सहानुदात्तस्य[1] य एकादेशः स उदात्तो भवति। अनुदात्तस्येति वर्तते। अग्नी। वायू। वृक्षैः। प्लक्षैः[2]। उदात्तेनेति किम् ? पचंन्ति। यजंन्ति। लसार्वधातुकानुदात्तत्वे ( ६.१.१८६ ) कृते द्वयोरनुदात्तयोरयमेकादेशः, पररूपे कर्तव्ये स्वरितस्य ( ८.४.६६ ) असिद्धत्वात्॥

## स्वरितो वानुदात्ते पदादौ॥ ६ ॥

अनुदात्ते पदादावुदात्तेन सह य एकादेशः स स्वरितो वा भवत्युदात्तो वा[3]। सु उत्थितः—सूंत्थितः, सूत्थितंः। वि ईक्षते—वींक्षते, वीक्षंते। वसुकः असि—वसुकोंऽसि, वसुकोऽसिं। सूत्थित इति सुशब्दः 'सुः पूजायाम्' ( १.४.९४ ) इति कर्मप्रवचनीयः, तस्य

१ - केचिदत्र ' अनुदात्तस्य ' इति नानुवर्तयन्ति। तथा च स्वरितस्यापि उदात्तेन सहैकादेश उदात्तो भवति। वृत्तिकारमतमेव भाष्यानुमोदितमिति स्वरसिद्धान्तचन्द्रिकात्रैव सूत्रे।

२ - ' वृक्षौ प्लक्षौ ' इति न्यासे।

३ व्यवस्थितेयं विभाषा—मैत्रायण्यां संहितायां स्वरित एव, तैत्तिरीयायां तूदात्त एव स्वरो दृश्यत इति युधिष्ठिरमीमांसकाः। तथा हि — नंमोऽस्यद्भ्यः ( मै० सं० २.९.४ ), नमोऽस्यंद्भ्यः ( तै० सं० ४.५.३.२ )।

प्रादित्वात् समासे सत्यव्ययपूर्वपदप्रकृतिस्वरत्वेन ( ६.२.२ ) आद्युदात्तत्वम्,[१] शेषमनुदात्तम् ( ६.१.१५८ ) इति चानुदात्ते पदादावेकादेशो भवति। वीक्षते, वसुकोऽसीत्यत्रापि 'तिङ्ङतिङः' ( ८.१.२८ ) इति निघाते कृतेऽनुदात्ते पदादावेकादेशः। स्वरितग्रहणं विस्पष्टार्थम्। उदात्ते हि विकल्पिते तस्मिन्नसत्यान्तर्यत एव स्वरितो भविष्यतीति। अनुदात्त इति किम्? देवदत्तोऽत्र। पदादाविति किम् ? वृक्षौ। वृक्षाः॥

## नलोपः प्रातिपदिकान्तस्य ॥ ७ ॥

पदस्येति वर्तते। प्रातिपदिकस्य पदस्य योऽन्त्यो नकारस्तस्य लोपो भवति। राजा। राजभ्याम्। राजभिः। राजता। राजतरः। राजतमः। प्रातिपदिकग्रहणं किम् ? अहन्नहिम् ( ऋ० १.३२.२ )। अन्तग्रहणं किम् ? राजानौ। राजानः। प्रातिपदिकग्रहणमसमस्तमेव 'सुपां सुलुक् ०' ( ७.१.३९ ) इति षष्ठ्या लुका निर्दिष्टम् ॥ अह्नो नलोपप्रतिषेधो वक्तव्यः॥ अहः। अहोभ्याम्, अहोभिः। 'अहन्', 'रोऽसुपि' ( ८.२.६८, ६९ )[२] इति रेफरुत्वयोरसिद्धत्वाद् नलोपः प्राप्नोति, सावकाशं तदुभयं संबुद्धौ—हेऽहः, हे दीर्घाहो निदाघेति ? तत्र समाधिमाहुः। 'अहन्' ( ८.२.६८ ) इति रुविधौ यदुपादीयते प्रथमैकवचनान्तमकृतनलोपं तदावर्त्यते, तत्रैकयावृत्त्या तदेवंरूपं नलोपाभावार्थमन्वाख्यायते, द्वितीययापि तस्य रुर्विधीयते॥

## न ङिसंबुद्ध्योः ॥ ८ ॥

ङौ परतः संबुद्धौ च नकारलोपो न भवति। आर्द्रे चर्मन् ( तै० सं० ७.५.९.३ )। लोहिते[३] चर्मन् ( काठ० सं० २४.२ )। 'सुपां सुलुक् ०' ( ७.१.३९ ) इति ङेर्लुक्। संबुद्धौ—हे राजन्। हे तक्षन्। एतस्मादेव नलोपप्रतिषेधवचनाद् अप्रत्ययः ( १.२.४५ ) इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा न प्रतिषिध्यत इति ज्ञाप्यते, भसंज्ञा च न भवतीति। तथा च राज्ञः पुरुषो राजपुरुष इत्यत्र नलोपः ( ८.२.७ ) च भवति, अल्लोपः ( ६.४.१३४ ) च न भवति ॥ ङावुत्तरपदे प्रतिषेधस्य प्रतिषेधो वक्तव्यः॥ चर्मणि तिला अस्य चर्मतिलः। हे राजवृन्दारक[४] इत्यत्र तु समुदायार्थसंबोधनं न पूर्वपदार्थसंबोधनं प्रतीयत इति संबुद्ध्यन्तं पूर्वपदं नैव समस्यते ॥ वा नपुंसकानामिति वक्तव्यम्॥ हे चर्मन्। हे चर्म॥

---

१ - 'आद्युदात्तः' इत्यपपाठो मुद्रितेषु ।
२ - विपर्ययेण सूत्रे उद्ध्रियेते।
३ - 'रोहिते' इति काठ० सं०।
४ - 'राजनूवृन्दारक' इत्यपपाठो है०।

## मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ ९ ॥

मतोरिह कार्यित्वेनोपादानात् सामर्थ्यलब्धं प्रातिपदिकम्, तद् मादिति मकारावर्णाभ्यां विशिष्यते, मकारावर्णविशिष्टया चोपधया इत्ययमर्थो भवति—मकारान्ताद् मकारोपधादवर्णान्तादवर्णोपधात् चोत्तरस्य मतोर्व इत्ययमादेशो भवति, यवादिभ्यस्तु परतो न भवति। मकारान्तात् तावत्—किंवान्। शंवान्। मकारोपधात्—शमीवान्। दाडिमीवान्। अवर्णान्तात्—वृक्षवान्। प्लक्षवान्। खट्वावान्। मालावान्। अवर्णोपधात्—पयस्वान्। यशस्वान्। भास्वान्। मादुपधायाश्चेति किम् ? अग्निमान्। वायुमान्। अयवादिभ्य इति किम् ? यवमान्। दल्मिमान्। ऊर्मिमान्॥ यव। दल्मि। ऊर्मि। भूमि। कृमि। क्रुञ्चा। वशा। द्राक्षा। एतेषां 'मादुपधायाश्च०' ( ८.२.९ ) इति प्राप्नोति। ध्रजि, ध्वजि, सञ्जि इत्येतेषां 'छन्दसीरः' ( ८.२.१५ ) इति। हरित्, ककुत्, गरुत् इत्येतेषां 'झयः' ( ८.२.१० ) इति। इक्षु, मधु, द्रुम, मण्ड, धूम इत्येतेषां 'संज्ञायाम्' ( ८.२.११ ) इति। आकृतिगणश्च यवादिः। अकृतवत्वो मतुब् यवादिषु द्रष्टव्यः। यस्य सति निमित्ते मतुपो वत्वं न दृश्यते, स यवादिषु द्रष्टव्यः। इह नृमत इदं नार्मतमिति बहिरङ्गलक्षणत्वात् ( परि० ५० ) अवर्णोपधस्य मतुपो वत्वं न भवति॥

## झयः ॥ १० ॥

झयन्तादुत्तरस्य मतोर्व इत्ययमादेशो भवति। अग्निचित्वान् ग्रामः। उदश्वित्वान् घोषः[1]। विद्युत्वान् बलाहकः। इन्द्रो मरुत्वान् ( आ० श्रौ० २.११.१० )। दृषद्वान् देशः॥

## संज्ञायाम् ॥ ११ ॥

संज्ञायां विषये मतोर्व इत्ययमादेशो भवति। अहीवती। कपीवती। ऋषीवती। मुनीवती॥

## आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ॥ १२ ॥

आसन्दीवद् अष्ठीवत् चक्रीवत् कक्षीवद् रुमण्वत् चर्मण्वती इत्येतानि संज्ञायां निपात्यन्ते। वत्वं पूर्वेणैव सिद्धम्, आदेशार्थानि निपातनानि। आसन्दीवदिति आसनशब्दस्यासन्दीभावो निपात्यते। आसन्दीवान् ग्रामः। आसन्दीवदहिस्थलम्। आसनवानित्येवान्यत्र। अपरे त्वाहुः—आसन्दीशब्दोऽपि प्रकृत्यन्तरमेवास्ति, तथा चोक्तम्—औदुम्बरी राजासन्दी भवति ( श० ब्रा० ३.३.४.२६, २७ ) इति। तस्य 'संज्ञायाम्' ( ८.२.११ )

---

१ – 'उदश्वित्वान् घोषः' इति नास्ति है०।

इति वत्वेन सिद्धम्, आसन्दीवदित्येतत् प्रपञ्चार्थमिह पठ्यते। अष्ठीवदिति अस्थ्नोऽष्ठीभावः। अष्ठीवानिति शरीरैकदेशसंज्ञा। अस्थिमानित्येवान्यत्र। चक्रीवदिति चक्रशब्दस्य चक्रीभावो निपात्यते। चक्रीवान् राजा। चक्रवानित्येवान्यत्र। चक्रीवन्ति सदो हविर्धानानि ( का० श्रौ० २४.३.२६ ) भवन्तीत्येतत् तु छान्दसत्वाद् अनुगन्तव्यम्। कक्षीवदिति कक्ष्यायाः संप्रसारणं निपात्यते। कक्षीवान् नाम ऋषिः। कक्ष्यावानित्येवान्यत्र। रुमण्वदिति लवणशब्दस्य रुमण्भावो निपात्यते। लवणवानित्येवान्यत्र। अपरे त्वाहुः—रुमन्निति प्रकृत्यन्तरमस्ति, तस्यैतद् निपातनं नकारलोपाभावार्थम्, णत्वार्थं च, मतोर्वा नुडर्थमिति। चर्मण्वतीति चर्मणो नलोपाभावो णत्वं च निपात्यते, मतोर्वा नुडागमः। चर्मण्वती नाम नदी। चर्मवतीत्येवान्यत्र॥

## उदन्वानुदधौ च॥ १३ ॥

उदन्वानित्युदकशब्दस्य मतावुदन्भावो निपात्यत उदधावर्थे संज्ञायां च विषये। उदन्वान् नाम ऋषिर्यस्यौदन्वतः पुत्रः। उदधौ—उदन्वान्। यस्मिन्नुदकं धीयते, स एवमुच्यते। उदधाविति किम् ? उदकवान् घट इत्यत्र तु दधात्यर्थो न विवक्ष्यते। किं तर्हि ? उदकसत्तासंबन्धसामान्यम्॥

## राजन्वान् सौराज्ये॥ १४ ॥

राजन्वानिति निपात्यते सौराज्ये गम्यमाने। शोभनो राजा यस्मिन्निति स राजन्वान् देशः। राजन्वती पृथ्वी। राजवानित्येवान्यत्र॥

## छन्दसीरः॥ १५ ॥

छन्दसि विषय इवर्णान्ताद् रेफान्तात् चोत्तरस्य मतोर्वत्वं भवति। इवर्णान्तात् तावत्—त्रिवती याज्यानुवाक्या भवति[1]। हरिवो मेदिनं त्वा ( तै० सं० ४.७.१४.४ )। अधिपतिवतीर्जुहोति[2]। चुरुरग्निवाँ इव ( ऋ० ७.१०४.२ )। आरेवानेतु मा विशत्। 'रयेर्मतौ०' ( ६.१.३७ वा० ) इति संप्रसारणम्। सरस्वतीवान् भारतीवान् ( मै० सं० ३.१०.६ )। दधिवांश्चरुः ( शौ० सं० १८.४.१७ )। 'छन्दसि सर्वे विधयो विकल्प्यन्ते' ( परि० ३५) इतीह न भवति—सप्तर्षिमन्तम्, ऋषिमान्, ऋतीमान्, सूर्यं ते द्यावापृथिवीमन्तमिति। रेफान्तात्—गीर्वान्। धूर्वान्। आशीर्वान्॥

---

१ - त्रिवतीर्याज्यानुवाक्या भवन्ति ( काठ० सं० ११.१ )।

२ - अधिपतिवतीर्भवन्ति ( काठ० सं० २१.३ )।

## अनो नुट् ॥ १६ ॥

छन्दसीति वर्तते। अनन्तादुत्तरस्य मतोर्नुडागमो भवति छन्दसि विषये। अक्षण्वन्तः कर्णवन्तः सखायः ( ऋ० १०.७१.७ )। अस्थन्वन्तं यदनस्था बिभर्ति ( ऋ० १.१६४.४)। अक्षण्वता[1] लाङ्गलेन ( पै० सं० ९.८.१ )। शीर्षण्वतीं ( शौ० सं० १०.१.२ )। मूर्धन्वतीं ( तै० सं० २.६.२.२ )। नुटोऽसिद्धत्वात् तस्य च वत्वं न भवति, ततः परस्य च भवति ॥

## नाद् घस्य ॥ १७ ॥

नकारान्तादुत्तरस्य घसंज्ञकस्य नुडागमो भवति छन्दसि विषये। सुपथिन्तरः। दस्युहन्तमः[2] ॥ भूरिदाव्नस्तुड् वक्तव्यः ॥ भूरिदावत्तरः ( ऋ० ८.५.३९ ) ॥ ईद्रथिनः ॥ रथिन ईकारान्तादेशो घे परतः। रथीतरः ( ऋ० १.८४.६ )। रथशब्दादेव वा मत्वर्थीयोऽयमीकारः 'छन्दसीवनिपौ ०' ( ५.२.१०९ वा० ) इति ॥

## कृपो रो लः ॥ १८ ॥

कृपेर्धातो रेफस्य लकारादेशो भवति। र इति श्रुतिसामान्यमुपादीयते। तेन यः केवलो रेफः, यश्च ऋकारस्थः तयोर्द्वयोरपि ग्रहणम्। ल इत्यपि सामान्यमेव[3]। ततोऽयं केवलस्य रेफस्य स्थाने लकारादेशो विधीयते। ऋकारस्याप्येकदेशविकारद्वारेण ऌकारः, एवं च 'लुटि च क्लृपः' ( १.३.९३ ) इत्येवमादयो निर्देशा उपपद्यन्ते। कल्प्ता, कल्प्तारौ, कल्प्तारः। चिक्लृप्सति। क्लृप्तः। क्लृप्तवान्। कृपा इत्येतत् 'क्रपेः संप्रसारणं च' ( ग० सू० ३० ) इति भिदादिषु पाठाद् भवति। तस्य हि कृतसंप्रसारणस्य लाक्षणिकत्वाद् ( परि० १०५ ) इह कृप इति ग्रहणं नास्ति। कृपणकृपीटकर्पूरादयोऽपि क्रपेरेव द्रष्टव्याः। 'उणादयो बहुलम्' ( ३.३.१ ) इति वा कृपेरेव लत्वाभावः ॥ वालमूललघ्वसुरालमङ्गुलीनां वा रो लमापद्यत इति वक्तव्यम्[4] ॥ वालः, वारः। मूलम्, मूरम्। लघु, रघु। असुरः, असुलः। अलम्, अरम्। अङ्गुलिः, अङ्गुरिः ॥ कपिलकादीनां संज्ञाछन्दसोर्वा रो लमापद्यत[5] इति वक्तव्यम् ॥ कपिरकः, कपिलकः। तिल्पिलीकम्, तिर्पिरीकम्। लोमानि, रोमाणि। पांशुरम्, पांशुलम्। कर्म, कल्म। शुक्रः, शुक्लः। रलयोरेकत्वस्मरणमिति केचित्। किमिदमेकत्वस्मरणमिति ? समानविषयत्वमेव तयोः स्मर्यत इत्यर्थः ॥

---

१ – 'अकृण्वता' इति मुद्रितसंहितायाम्।
२ – दस्युहन्तमम् ( ऋ० ६.१६.१५ )।
३ – 'उपादीयते' इत्यधिकं बाल०।
४ – अत्र वार्तिकेऽसुरशब्दः प्रक्षिप्तः प्रतीयते। 'लो रमापद्यते' इति पाठो युक्तः स्यात्, भाष्ये तथा दर्शनात्।
५ – 'लो रमापद्यते' इति युक्तः पाठः।

## उपसर्गस्यायतौ ॥ १९ ॥

अयतौ परत उपसर्गस्य यो रेफस्तस्य लकार आदेशो भवति। प्लायते। पलायते। अत्र च योऽयमेकादेशः, तस्य स्थानिवद्भावादयतेरुपसर्गस्य च विभागे सति, यद्ययतिग्रहणं रेफस्य विशेषणम्, तदा 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' ( व्या० प० ४६ ) इत्येकेन वर्णेन व्यवधानेऽपि सति लत्वं भवति। तथा च पल्ययत इत्यत्रापि भवति। उपसर्गविशेषणे त्वयतिग्रहणे सिद्धमेवैतत् सर्वम्, प्रतेरपि तु व्यवहितेऽपि प्राप्नोति। तत्र केषांचिद् दर्शनम्—भवितव्यमेव प्लत्ययत इति। प्रथमपक्षदर्शनाभिनिविष्टास्तु प्रत्ययत इत्येव भवतीति मन्यन्ते। अपरे तु प्रतिशब्दोपसृष्टस्यायतेः प्रयोगमेव नेच्छन्ति। निस् दुस् इत्येतयोस्तु रुत्वस्यासिद्धत्वाद् लत्वेन नैव भवितव्यम्। निरयणम्। दुरयणम्॥

## ग्रो यङि ॥ २० ॥

गॄ इत्येतस्य धातो रेफस्य लकार आदेशो भवति यङि परतः। निजेगिल्यते, निजेगिल्येते, निजेगिल्यन्ते। भावगर्हायां ग्रो यङ् विहितः ( ३.१.२४ )। केचिद् ग्र इति गिरतेर्गृणातेश्च सामान्येन ग्रहणमिच्छन्ति। अपरे तु गिरतेरेव, न गृणातेः। गृणातेर्हि यङेव नास्ति, अनभिधानादिति। यङीति किम् ? निगीर्यते॥

## अचि विभाषा ॥ २१ ॥

अजादौ प्रत्यये परतो ग्रो रेफस्य विभाषा लकारादेशो भवति। निगिरति, निगिलति। निगरणम् , निगलनम्। निगारकः, निगालकः। इयं तु व्यवस्थितविभाषा। तेन गल इति प्राण्यङ्गे नित्यं लत्वं भवति, गर इति विषे नित्यं न भवति। निगार्यते, निगाल्यत इति णिलोपस्य स्थानिवद्भावादचि विभाषेति लत्वविकल्पः। 'पूर्वत्रासिद्धे न स्थानिवत्' ( महाभाष्य १.१५४ ) इत्येतदपि सापवादमेव, तस्य दोषः संयोगादिलोपलत्वणत्वेषु ( महाभाष्य १.१५५ ) इति। अन्तरङ्गत्वाद् वा कृते लत्वविकल्पे णिलोपो भविष्यति। गिरौ, गिर इत्यत्र 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' ( पु० वृ० ५५ ) इति लत्वं न भवति। गिरतिर्वा लत्वविधावधिकृतो गृणातेरेतद् रूपम्॥

## परेश्च घाङ्कयोः ॥ २२ ॥

परि इत्येतस्य यो रेफस्तस्य घशब्देऽङ्कशब्दे च परतो विभाषा लकार आदेशो भवति। परिघः, पलिघः। पर्यङ्कः, पल्यङ्कः। घ इति स्वरूपग्रहणमत्रेष्यते, न 'तरप्तमपौ ०' ( १.१.२२ ) इति ॥ योगे चेति वक्तव्यम्॥ परियोगः, पलियोगः॥

## संयोगान्तस्य लोपः॥ २३ ॥

संयोगान्तस्य पदस्य लोपो भवति। गोमान्। यवमान्। कृतवान्। हतवान्। इह श्रेयान्, भूयानिति रुत्वं परमप्यसिद्धत्वात् संयोगान्तस्य लोपं न बाधते। जश्त्वे तु नाप्राप्ते तदारभ्यत इति तस्य बाधकं भवति—यशः, पय इति। दध्यत्र, मध्वत्रेत्यत्र तु यणादेशस्य बहिरङ्गलक्षणस्यासिद्धत्वात् संयोगान्तलोपो न भवति॥

## रात् सस्य॥ २४ ॥

संयोगान्तस्य पदस्य[1] यो रेफस्तस्मादुत्तरस्यान्त्यस्य[2] सकारस्य लोपो भवति। गोभिंरक्षाः (ऋ० ९.१०७.९)। प्रत्यञ्चंमत्साः (ऋ० १०.२८.४)। क्षरतेः त्सरतेश्च लुङि सिचश्छान्दसत्वादीडभावो 'बहुलं छन्दसि' (७.३.९७) इति वचनात्। वृद्धौ सत्यां[3] रूपमेतत्। मातुः, पितुरिति 'ऋत उत्' (६.१.१११) इत्युत्वे कृते रपरत्वे (१.१.५१) च सति रात् सस्येति सलोपः। सिद्धे सत्यारम्भो नियमार्थः—रात् सस्यैव लोपो भवति, नान्यस्येति। ऊर्जेः क्विप्—ऊर्क्। मृजेर्लङि—न्यमार्ट्॥

## धि च॥ २५ ॥

धकारादौ प्रत्यये परतः सकारस्य लोपो भवति। अलविध्वम्, अलविढ्वम्। अपविध्वम्, अपविढ्वम्। यद्यत्र सकारलोपो न स्यात्, सिचः षत्वे जश्त्वे च 'विभाषेटः' (८.३.७९) इति मूर्धन्याभावपक्षेऽपि न धकारः श्रूयेत। इतः प्रभृति सिचः सकारस्य लोप इष्यते। इह न भवति—चकाद्धि पलितं शिर इति। तथा पयो धावतीत्येवमादावपि न भवति। सग्धिः (मा० सं० १८.९) बुब्धाम् (निरु० ५.१२) इति छान्दसो वर्णलोपः। भाष्यकारस्त्वाह—चकाधीत्येव भवितव्यमिति। तेन पयो धावतीत्येवमादौ यत्नान्तरमास्थेयम्॥

धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम्।
आशाध्वं तु कथं जश्त्वं सकारस्य भविष्यति॥ १॥
सर्वमेवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते।
लुङश्चापि न मूर्धन्ये ग्रहणं सेटि दुष्यति॥ २॥
घसिभसोर्न सिध्येत तस्मात् सिज्ग्रहणं न तत्।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे[4]॥ ३॥

निष्कुर्तारमध्वरस्य (तै० सं० ४.२.७.३) इत्येवं प्राप्ते॥

---

१ - समस्तमेतद् मुद्रितेषु। २ - 'उत्तरस्यान्तस्य' इति मुद्रितेपु।
३ - 'दीर्घे सति' इत्यपपाठो मुद्रितेपु।
४ - दुष्कुर्तारमध्वरस्य (ऋ० १०.१४०.५)।

## झलो झलि ॥ २६ ॥

झल उत्तरस्य सकारस्य झलि परतो लोपो भवति। अभित्त। अभित्थाः। अच्छित्त। अच्छित्थाः। अवात्ताम्, अवात्तेत्यत्र वा सिचः सकारलोपस्यासिद्धत्वात् 'सः स्यार्धधातुके' (७.४.४९) इति सकारस्य तकारः। झल इति किम्? अमंस्त। अमंस्थाः। झलीति किम्? अभित्साताम्। अभित्सत। अयमपि सिच एव लोपः, तेनेह न भवति—सोमसुत् स्तोता, दृषत्स्थानमिति॥

## ह्रस्वादङ्गात् ॥ २७ ॥

ह्रस्वान्तादङ्गादुत्तरस्य सकारस्य[1] लोपो भवति झलि परतः। अकृत। अकृथाः। अहृत। अहृथाः। ह्रस्वादिति किम्? अच्योष्ट। अप्लोष्ट। अङ्गादिति किम्? अलाविष्टाम्, अलाविषुः। झलीत्येव—अकृषाताम्, अकृषत। अयमपि सिच एव लोपः, तेनेह न भवति—द्विष्टराम्, द्विष्टमामिति। सुजन्ताद् द्विशब्दात्तरप्तमपौ, अद्रव्यप्रकर्ष आतिशायिकाद्[2] आम् प्रत्ययः॥

## इट ईटि ॥ २८ ॥

इट उत्तरस्य सकारस्य लोपो भवतीटि परतः। अदेवीत्[3]। असेवीत्। अकोषीत्। अमोषीत्। इट इति किम्? अकार्षीत्। अहार्षीत्। ईटीति किम्? अलाविष्टाम्, अलाविषुः॥

## स्कोः संयोगाद्योरन्ते च ॥ २९ ॥

पदस्यान्ते यः संयोगः, झलि परतो वा यः संयोगः, तदाद्योः सकारककारयोर्लोपो भवति। लस्जेः—लग्नः। लग्नवान्। साधुलक्। मस्जेः—मग्नः। ककारस्य—तक्षेः—तट्। तष्टः। तष्टवान्। काष्ठतट् ॥ झलि सङीति वक्तव्यम् ॥ किमिदं सङीति? सनः सप्रभृति महिङो ङकारेण प्रत्याहारः। इह मा भूत्—काष्ठशक्स्थातेति। थकारे झलि ककारस्य संयोगादेर्लोपः प्राप्नोति। तदत्र शकेः क्विबन्तस्य प्रयोग एव नास्तीत्याह—'काष्ठशगेव नास्ति कुतोऽयं[4] काष्ठशकि तिष्ठेत्' (महाभाष्य ३.४००) इति। वास्यर्थम्, काक्यर्थम्[5] इत्यत्रापि बहिरङ्गलक्षणस्य यणादेशस्यासिद्धत्वात् (परि० ५०) संयोगादिलोपो

१ – 'सकारस्य' इति नास्ति मुद्रितेषु।
२ – 'आतिशायिकः' इत्यपपाठो मुद्रितेषु।
३ – 'अदावीत्, अलावीत्' इति है०। 'आदावीत्' इति बाल०।
४ – 'यः' इति महाभाष्यपाठः।
५ – 'काक्वर्थम्' इति है०।

न भवति। स्कोरिति किम्? नर्नर्त्ति। वर्वर्त्ति[1]। संयोगाद्योरिति किम्? पयः। शक्। अन्ते चेति किम्? तक्षिता। तक्षकः[2]॥

## चोः कुः॥ ३०॥

चवर्गस्य कवर्गादेशो भवति झलि परतः पदान्ते च। पक्ता। पक्तुम्। पक्तव्यम्। ओदनपक्। वक्ता। वक्तुम्। वक्तव्यम्। वाक्। क्रुञ्चेत्यत्र सङ्गीति वचनाद् ञकारस्य चकारे झलि कुत्वं न भवति। युजिक्रुञ्चां च (३.२.५९) इति निपातनाद् वा। नकारोपधो वा धातुरयं रेफरहितश्च 'कुञ्च कौटिल्याल्पीभावयोः' (भ्वा० ११३) इति पठ्यते। नकारलोपे हि निकुचितिः (महाभाष्य १.२००) इति दृश्यते। युजिक्रुञ्चां च (३.२.५९) इति तस्यैव रेफोऽधिकः, नकारस्य लोपाभावश्चेति निपात्यते। तत्रानुस्वारस्य परसवर्णस्य चासिद्धत्वाद् ञकार एव नास्तीति कुत्वं न भविष्यति॥

## हो ढः॥ ३१॥

हकारस्य ढकारादेशो भवति झलि परतः, पदान्ते च। सोढा। सोढुम्। सोढव्यम्। जलाषाट्[3]। वोढा। वोढुम्। वोढव्यम्। प्रष्ठवाट्। दित्यवाट्[4]॥

## दादेर्धातोर्घः॥ ३२॥

दकारादेर्धातोर्हकारस्य घकारादेशो भवति झलि परतः पदान्ते च। दग्धा। दग्धुम्। दग्धव्यम्। काष्ठधक्। दोग्धा। दोग्धुम्। दोग्धव्यम्। गोधुक्। दादेरिति किम्? लेढा। लेढुम्। लेढव्यम्। गुडलिट्। धातोरिति दादिसमानाधिकरणमेतद् न। किं तर्हि? तद्विशेषणमवयवषष्ठ्यन्तम्—धातोरवयवो यो दादिः शब्दस्तदवयवस्य हकारस्येति। किं कृतं भवति? अधोगित्यत्रापि घकारः सिद्धो भवति। कथं दोग्धा, दोग्धुमिति? व्यपदेशिवद्-भावात् (परि० ३०)। अथवा धातूपदेशे यो दादिरित्येवं विज्ञायते। तथा च दामलिह-मिच्छति दामलिह्यति, दामलिह्यतेः क्विप् प्रत्ययो दामलिडित्यत्रापि न भवति॥

## वा द्रुहमुहष्णुहष्णिहाम्॥ ३३॥

द्रुह मुह ष्णुह ष्णिह इत्येतेषां धातूनां हकारस्य वा घकारादेशो भवति झलि परतः, पदान्ते च। द्रुह—द्रोग्धा, द्रोढा। मित्रध्रुक्, मित्रध्रुट्। मुह—उन्मोग्धा, उन्मोढा। उन्मुक्,

---

१ - 'स्कोरिति..........वर्वर्त्ति' इति मूले न स्यात् न्यासे स्वातन्त्र्येण व्याख्यातत्वात्।
२ - 'अन्ते........तक्षकः' इति मूले न स्यात् न्यासे स्वातन्त्र्येण व्याख्यानात्।
३ - 'तुराषाट्' इति बाल०।
४ - 'दिव्यवाट्' इति है०।

उन्मुट्। ष्णुह—उत्स्नोग्धा, उत्स्नोढा। उत्स्नुक्, उत्स्नुट्। ष्णिह—स्नेग्धा, स्नेढा। स्निक्, स्निट्। द्रुहेर्दादित्वाद् घत्वं नित्यं प्राप्तम्, इतरेषामप्राप्तमेव घत्वं विकल्प्यते॥

## नहो धः॥ ३४ ॥

नहो हकारस्य धकारादेशो भवति झलि परे, पदान्ते च। नद्धम्। नद्धुम्। नद्धव्यम्। उपानत्। परीणत्॥

## आहस्थः॥ ३५ ॥

आहो हकारस्य थकारादेशो भवति झलि परतः। इदमात्थ। किमात्थ। आदेशान्तरकरणं 'झषस्तथोर्धोऽधः' (८.२.४०) इत्यस्य निवृत्त्यर्थम्। झलीत्येव—आह, आहतुः, आहुः॥ हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम्॥ गर्द॒भेन॒ संभ॑रति॒ (तै० सं० ५.१.५.५)। ग्रभीता। जभ्रिरे। उ॒द्ग्रा॒भं च॒ निग्रा॒भं च॒ ब्रह्म॑ दे॒वा अ॑वीवृधन् (तै० सं० १.१.१३.१)॥

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः॥ ३६ ॥

व्रश्च भ्रस्ज सृज मृज यज राज भ्राज इत्येतेषाम्, छकारान्तानाम्, शकारान्तानां च षकार आदेशो भवति झलि परतः, पदान्ते च। व्रश्च—व्रष्टा। व्रष्टुम्। व्रष्टव्यम्। मूलवृट्। भ्रस्ज—भ्रष्टा। भ्रष्टुम्। भ्रष्टव्यम्। धानाभृट्। सृज—स्रष्टा। स्रष्टुम्। स्रष्टव्यम्। रज्जुसृट्। मृज—मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्। कंसपरिमृट्। यज—यष्टा। यष्टुम्। यष्टव्यम्। उपयट्। राज—सम्राट्। स्वराट्। विराट्। भ्राज—विभ्राट्। राजभ्राजोः पदान्तार्थं ग्रहणम्, झलादिराभ्यामिटा पर्यवपद्यते। केचित् तु राष्टिर्भ्राष्टिरिति क्तिन्नन्तम्[1] इच्छन्ति। छकारान्तानाम्—प्रच्छ—प्रष्टा। प्रष्टुम्। प्रष्टव्यम्। शब्दप्राट्। 'च्छ्वोः शूडनुनासिके च' (६.४.१९) इत्यत्र क्ङितीत्यनुवर्तत इति छग्रहणमिह क्रियते। शकारान्तानाम्—लिश्—लेष्टा। लेष्टुम्। लेष्टव्यम्। लिट्। विश्—वेष्टा। वेष्टुम्। वेष्टव्यम्। विट्॥

## एकाचो बशो भष् झषन्तस्य स्ध्वोः॥ ३७ ॥

धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् आदेशो भवति झलि सकारे ध्वशब्दे च परतः, पदान्ते च। अत्र चत्वारो बशः स्थानिनो भषादेशाश्चत्वार एव, तत्र संख्यातानुदेशे प्राप्ते डकारस्य स्थानिनोऽभावात् ढकारादेशो न भवति ? आन्तर्यतो व्यवस्था विज्ञास्यते[2]। बुध—भोत्स्यते[3]। अभुद्ध्वम्। अर्थभुत्। गुह—निघोक्ष्यते। न्यघूढ्वम्।

१ - 'क्विन्नन्तम्' इत्यपपाठो मुद्रितेषु।
२ - 'अत्र..........विज्ञास्यते' इति पाठोऽन्ते न्यस्तो बाल०। न्यासे न व्याख्यातः।
३ - 'भोत्स्यन्ते' इति मुद्रितेषु।

पर्णघुट्। दुह—धोक्ष्यते। अधुग्ध्वम्। गोधुक्। अजर्घाः—गृधेर्यङ्लुगन्तस्य लङि सिपि लघूपधगुणे कृते सिपो हल्ङ्यादिलोपे च धातोरवयवस्यैकाचो बशः स्थाने भष्भावः, ततो धकारस्य जश्त्वम्, 'दश्च' ( ८.२.७५ ) इति रुत्वम्, 'रो रि' ( ८.३.१४ ) इति पूर्वरेफस्य लोपः, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ( ६.३.१११ ) इति दीर्घत्वम्। गर्दभयतेरप्रत्ययः—गर्द्धप्। एकाच इति किम्? दामलिहमिच्छति दामलिह्यति, दामलिह्यतेरप्रत्ययो दामलिट्। असति ह्येकाज्ग्रहणे धातोरित्येतद् बशो विशेषणं स्यात्। बश इति किम्? क्रुध — क्रोत्स्यति। झषंन्तस्येति किम्? दास्यति। स्ध्वोरिति किम्? बोद्धा। बोद्धुम्। बोद्धव्यम्। धकारस्य वकारोपसृष्टस्य ग्रहणं किम्? दादद्धि। 'दध धारणे' ( भ्वा० ७ ) इत्येतस्य यङ्लुकि लोटि 'हुझल्भ्यो हेर्धिः' ( ६.४.१०१ ) इति धिभावे सत्येतद् भवति॥

## दधस्तथोश्च ॥ ३८ ॥

दध इति दधातिः कृतद्विर्वचनो निर्दिश्यते। तस्य झषन्तस्य[१] बशः स्थाने भष् आदेशो भवति तकारथकारयोः परतः, चकारात् स्ध्वोश्च परतः। धत्तः। धत्थः। धत्से। धत्स्व। धद्ध्वम्। वचनसामर्थ्यादातो लोपस्य स्थानिवद्भावो न भवति, अभ्यासजश्त्वस्य चासिद्धत्वम्। तथोरिति किम्? आनन्तर्यात् स्ध्वोरेव विज्ञायेत। चकारस्तयोरनुवृत्त्यर्थः। झषन्तस्येत्येव—दधाति॥

## झलां जशोऽन्ते ॥ ३९ ॥

झलां जश आदेशा भवन्ति पदस्यान्ते वर्तमानानाम्। वागत्र। श्वलिडत्र। अग्निचिदत्र। त्रिष्टुबत्र। अन्तग्रहणं झलीत्येतस्य निवृत्त्यर्थम्। वस्ता। वस्तव्यम्॥

## झषस्तथोर्धोऽधः ॥ ४० ॥

झष उत्तरयोस्तकारथकारयोः स्थाने धकार आदेशो भवति, दधातिं वर्जयित्वा। लब्धा। लब्धुम्। लब्धव्यम्। अलब्ध। अलब्धाः। दुह—दोग्धा। दोग्धुम्। दोग्धव्यम्। अदुग्ध। अदुग्धाः। लिह—लेढा। लेढुम्। लेढव्यम्। अलीढ। अलीढाः। बुध—बोद्धा। बोद्धुम्। बोद्धव्यम्। अबुद्ध। अबुद्धाः। अध इति किम्? धत्तः। धत्थः॥

## षढोः कः सि ॥ ४१ ॥

षकारढकारयोः ककारादेशो भवति सकारे परतः। षकारस्य—पिष्—पेक्ष्यति। अपेक्ष्यत्। पिपिक्षति। ढकारस्य—लिह—लेक्ष्यति। अलेक्ष्यत्। लिलिक्षति। सीति किम्? पिनष्टि। लेढि॥

---

१ - 'झलन्तस्य' इत्यपपाठो मुद्रितेषु।

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४२ ॥

रेफदकाराभ्यामुत्तरस्य निष्ठातकारस्य नकार आदेशो भवति, पूर्वस्य च दकारस्य। रेफात्[1] तावत्—आस्तीर्णम्। विस्तीर्णम्। विशीर्णम्। निगीर्णम्। अवगूर्णम्। दकारात्—भिन्नः। भिन्नवान्। छिन्नः। छिन्नवान्। रदाभ्यामिति किम् ? कृतः। कृतवान्। र इत्यत्र रश्रुतिसामान्यं नोपादीयते। किं तर्हि ? व्यञ्जनमात्रम्। रेफसामान्यनिर्देशेऽपि सति रेफात् परा याऽभक्तिः, तद्व्यवधानाद् नत्वं न भवति। निष्ठेति किम् ? कर्ता। हर्ता। त इति किम् ? चरितम्। मुदितम्। पूर्वस्येति किम् ? परस्य मा भूत्—भिन्नवद्भ्याम्, भिन्नवद्भिः। इह कृतस्यापत्यं कार्तिरिति वृद्धेर्बहिरङ्गलक्षणाया असिद्धत्वाद् ( परि० ५० ) नत्वे कर्तव्ये रेफस्यासिद्धत्वम् ॥

## संयोगादेरातो धातोर्यण्वतः ॥ ४३ ॥

संयोगादिर्यो धातुराकारान्तो यण्वान्, तस्मादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। प्रद्राणः। प्रद्राणवान्। म्लानः। म्लानवान्। संयोगादेरिति किम् ? यातः। यातवान्। आत इति किम् ? च्युतः। च्युतवान्। प्लुतः। प्लुतवान्। धातोरिति किम् ? निर्यातः। निर्वातः। यण्वत इति किम् ? स्नातः। स्नातवान् ॥

## ल्वादिभ्यः ॥ ४४ ॥

'लूञ् छेदने' ( क्र्या० १२ ) इत्येतत्प्रभृति 'व्री[2] वरणे' ( क्र्या० ३७ ) इति यावत् वृत्करणेन समापिता ल्वादयो गृह्यन्ते। तेभ्य उत्तरस्य निष्ठातकारस्य नकारादेशो भवति। लूनः। लूनवान्। धूनः। धूनवान्। जीनः। जीनवान् ॥ ॠकारल्वादिभ्यः[3] क्तिन्निष्ठावद् भवतीति वक्तव्यम् ॥ कीर्णिः। गीर्णिः। शीर्णिः। लूनिः। धूनिः[4] ॥ दुग्वोर्दीर्घश्चेति वक्तव्यम् ॥ दु—आदूनः। गु—विगूनः ॥ पूञो विनाश इति वक्तव्यम् ॥ पूना यवाः। विनष्टा इत्यर्थः। विनाश इति किम् ? पूतं धान्यम् ॥ सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम् ॥ सिनो ग्रासः स्वयमेव। ग्रासकर्मकर्तृकस्येति किम् ? सिता पाशेन सूकरी। ग्रासोऽपि यदा कर्मैव भवति न कर्मकर्ता, तदा न भवति—सितो ग्रासो देवदत्तेनेति ॥

---

१ – ' रेफान्तात् ' इति मुद्रितेषु ।

२ – ' वृञ् ' इत्यपपाठो है०। ' वृ ' इत्यप्यपपाठो बाल०। साम्प्रतिकधातुपाठे ' प्ली गतौ, वृत्, व्री वरणे ' इत्यानुपूर्वी। एकविंशतिँल्ल्वादीन् गणयामास दीक्षितः।

३ – ' ऋकारल्वादिभ्यः ' इति ह्रस्वर्कारयुक्तोऽपपाठो मुद्रितेषु।

४ – ' पूनिः ' इति मुद्रितेषु। हरदत्तः पवतेः पूनिं साधयति ? नागेशोऽपि पुनातेः ?

## ओदितश्च ॥ ४५ ॥

ओकारेतो धातोरुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। ओलस्जी—लग्नः। लग्नवान्। ओविजी—उद्विग्नः। उद्विग्नवान्। 'ओप्यायी वृद्धौ' ( भ्वा० ३२८ ) — आपीनः। आपीनवान्। 'स्वादय ओदितः' ( दिवा० ३१ )। षूङ्—सूनः। सूनवान्। दूङ्—दूनः। दूनवान्। दीङ्—दीनः। दीनवान्। डीङ्—डीनः। डीनवान्। धीङ्—धीनः। धीनवान्। मीङ्—मीनः। मीनवान्। रीङ्—रीणः। रीणवान्। लीङ्—लीनः। लीनवान्। व्रीङ्—व्रीणः। व्रीणवान्॥

## क्षियो दीर्घात् ॥ ४६ ॥

क्षियो धातोर्दीर्घादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। क्षीणाः क्लेशाः। क्षीणो जाल्मः। क्षीणस्तपस्वी। 'क्षियः', 'निष्ठायामण्यदर्थे', 'वाक्रोशदैन्ययोः' ( ६.४.५९, ६०, ६१ ) इति दीर्घत्वं भवति। दीर्घादिति किम् ? अक्षितमसि मा मेंक्षेष्ठाः ( तै० सं० १.६.५.१ )। अक्षितमिति क्तप्रत्ययो भावे, भावश्च ण्यदर्थ इति दीर्घाभावः। ह्रस्वस्यापि हि धात्वनुकरणस्य दृष्ट[1] इयङा निर्देशः—'क्षियः', 'निष्ठायामण्यदर्थे' ( ६.४.५९, ६० ) इत्यत्र दीर्घग्रहणं क्रियते। 'विपराभ्यां जेः' ( १.३.१९ ) इत्येवमादौ तु धातुत्वमनुकार्यगतं सदप्यविवक्षितत्वाद् जिरूपसामान्यानुकरणं द्रष्टव्यम्॥

## श्योऽस्पर्शे ॥ ४७ ॥

श्यायतेरुत्तरस्य निष्ठातकारस्यास्पर्शे नकार आदेशो भवति। शीनं घृतम्। शीनं मेदः। शीना वसा। अस्पर्श इति किम् ? शीतं वर्तते। शीतो वायुः। शीतमुदकमित्यत्र गुणभूतोऽपि स्पर्शो नत्वप्रतिषेधस्य संप्रसारणस्य च निमित्तं भवति। गुणे च स्पर्शे प्रतिषेधोऽयं न रोगे, तेन प्रतिशीन इत्यत्र नत्वं भवत्येव॥

## अञ्चोऽनपादाने ॥ ४८ ॥

अञ्चतेरुत्तरस्य[2] निष्ठातकारस्य नकारादेशो भवति, न चेदपादानं तत्र भवति। समक्नौ शकुनेः पादौ। तस्मात् पशवो न्यक्नाः ( काठ० सं० २९.९ )। अनपादान इति किम् ? उदक्तमुदकं कूपात्। व्यक्तमित्येतदञ्जे रूपम्॥

---

१ – यथान्यासपदमञ्जरि शोधितः पाठः। 'इष्टः' इति बाल०। 'इह' इति तारा०, है०।
२ – 'उत्तरपदस्य' इत्यपपाठो मुद्रितेषु।

## दिवोऽविजिगीषायाम् ॥ ४९ ॥

दिव उत्तरस्य निष्ठातकारस्य नकारादेशो भवति अविजिगीषायामर्थे। आद्यूनः। परिद्यूनः। अविजिगीषायामिति किम् ? द्यूतं वर्तते। विजिगीषया हि तत्राक्षपातनादि क्रियते॥

## निर्वाणोऽवाते ॥ ५० ॥

निर्वाण इति निस्पूर्वाद् वातेरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते, न चेद् वाताधिकरणो वात्यर्थो भवति। निर्वाणोऽग्निः। निर्वाणः प्रदीपः। निर्वाणो भिक्षुः। अवात इति किम्? निर्वातो वातः। निर्वातं वातेन। निर्वाणः प्रदीपो वातेनेत्यत्र तु प्रदीपाधिकरणो वात्यर्थः, वातस्तु तस्य करणमिति भवत्येव नत्वम्॥

## शुषः कः ॥ ५१ ॥

शुषेर्धातोरुत्तरस्य निष्ठातकारस्य ककारादेशो भवति। शुष्कः। शुष्कवान्॥

## पचो वः ॥ ५२ ॥

पचेर्धातोरुत्तरस्य निष्ठातकारस्य वकारादेशो भवति। पक्वः। पक्ववान्॥

## क्षायो मः ॥ ५३ ॥

क्षैधातोरुत्तरस्य निष्ठातकारस्य मकारादेशो भवति। क्षामः। क्षामवान्॥

## प्रस्त्योऽन्यतरस्याम् ॥ ५४ ॥

प्रपूर्वात् स्त्यायतेरुत्तरस्य निष्ठातकारस्यान्यतरस्यां मकारादेशो भवति। प्रस्तीमः। प्रस्तीमवान्। प्रस्तीतः। प्रस्तीतवान्। यदा मत्वं नास्ति तदा 'संयोगादेरातो धातोर्यण्वतः' (८.२.४३) इत्यस्य पूर्वत्रासिद्धत्वात् संप्रसारणं प्रथमं क्रियते। तत्र कृते निमित्तव्याघाताद् नत्वं न भवति॥

## अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः ॥ ५५ ॥

फुल्ल क्षीब कृश उल्लाघ इत्येते निपात्यन्ते, न चेदुपसर्गादुत्तरा भवन्ति। फुल्ल इति 'ञिफला विशरणे' (भ्वा० ३४६) इत्येतस्माद् धातोरुत्तरस्य निष्ठातकारस्य लकारो निपात्यते। उत्वमिडभावश्च सिद्ध एव। क्तवत्वन्तस्याप्येतद् लत्वमिष्यते—फुल्लः, फुल्लवानिति। क्षीबकृशोल्लाघा इति क्षीबिकृशिभ्यामुत्पूर्वात् च लाघेः क्तप्रत्ययस्य तलोप

इडभावश्च निपात्यते, कृते वेटि इच्छब्दलोपः। क्षीबः। कृशः। उल्लाघः। अनुपसर्गादिति किम्? प्रफुल्ताः सुमनसः। प्रक्षीबितः। प्रकृशितः। प्रोल्लाघितः। लाघेरुदोऽन्य उपसर्गः प्रतिषिध्यते ॥ उत्फुल्लसंफुल्लयोरिति वक्तव्यम्॥ उत्फुल्लः। संफुल्लः। परिकृश इत्यत्र यः परिशब्दः स क्रियान्तरयोगात् कृशिं प्रत्यनुपसर्ग एव—परिगतः कृशः परिकृश इति ॥

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ॥ ५६ ॥

नुद विद उन्द त्रा घ्रा ह्री इत्येतेभ्य उत्तरस्य निष्ठातकारस्य नकार आदेशो भवत्यन्यतरस्याम्। नुद—नुन्नः, नुत्तः। विद—विन्नः, वित्तः। उन्द—समुन्नः, समुत्तः। त्रा—त्राणः, त्रातः। घ्रा—घ्राणः, घ्रातः। ह्री—ह्रीणः, ह्रीतः। ह्री इत्येतस्मादप्राप्तं नत्वम्, इतरेषां नित्यं प्राप्तं विकल्प्यते। 'विद विचारणे' ( रुधा० १३ ) इत्यस्य विदेरिह ग्रहणमिष्यते। एवं ह्युक्तम्—

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते।
विन्तेर्विन्नश्च वित्तश्च भोगवित्तश्च[1] विन्दतेः ॥ इति ॥

## न ध्याख्यापॄमूर्च्छिमदाम् ॥ ५७ ॥

ध्या ख्या पॄ मूर्च्छि मद इत्येतेषां निष्ठातकारस्य नकारादेशो न भवति। ध्यातः। ध्यातवान्। ख्यातः। ख्यातवान्। पूर्तः। पूर्तवान्। मूर्तः। मूर्तवान्। मत्तः। मत्तवान्। 'रदाभ्यां०' ( ८.२.४२ ), 'संयोगादेः०' ( ८.२.४३ ) इति च प्राप्तः प्रतिषिध्यते ॥

## वित्तो भोगप्रत्यययोः ॥ ५८ ॥

वित्त इति विदेर्लाभार्थात् ( तुदा० १४१ ) उत्तरस्य क्तस्य नत्वाभावो निपात्यते भोगे प्रत्यये चाभिधेये। वित्तमस्य बहु। धनमस्य बह्वित्यर्थः। धनं हि भुज्यत इति भोगोऽभिधीयते। प्रत्यये—वित्तोऽयं मनुष्यः। प्रतीत इत्यर्थः। प्रतीयत इति प्रत्ययः। भोगप्रत्यययोरिति किम्? विन्नः ॥

## भित्तं शकलम् ॥ ५९ ॥

भित्तमिति निपात्यते शकलं चेत् तद् भवति। भित्तं तिष्ठति। भित्तं प्रपतति। शकलपर्यायोऽयम्। अत्र भिदिक्रिया शब्दव्युत्पत्तेरेव निमित्तम्। भिदिक्रियाविवक्षायां हि शकलविषये भिन्नं भित्तमित्येव भवति ॥

---

१ – 'वित्तो भोगेषु' इति महाभाष्ये।

## ऋणमाधमर्ण्ये ॥ ६० ॥

ऋणमिति ऋ इत्येतस्माद् धातोरुत्तरस्य निष्ठातकारस्य नकारो निपात्यत आधमर्ण्यविषये। अधम ऋणेऽधमर्णः। एतस्मादेव निपातनात् सप्तम्यन्तेनोत्तरपदेन समासः, तद्भाव आधमर्ण्यम्। यद्येवम्, उत्तमर्ण इति न सिध्यति ? नैष दोषः। कालान्तरदेयविनिमयोपलक्षणार्थं चेदमुपात्तम्। तेनोत्तमर्ण इत्यपि हि भवति। ऋणं ददाति। ऋणं धारयति। आधमर्ण्य इति किम् ? ऋतं वक्ष्यामि नानृतम् ॥

## नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि ॥ ६१ ॥

नसत्त निषत्त अनुत्त प्रतूर्त सूर्त गूर्त इत्येतानि छन्दसि विषये निपात्यन्ते। नसत्त निषत्तेति सदेर्नञ्पूर्वाद् निपूर्वात् च नत्वाभावो निपात्यते। नसत्तमञ्जसा। नसन्नमिति भाषायाम्। निषत्तः ( ऋ० १.५८.३ )। निषण्ण इति भाषायाम्। अनुत्तमित्युन्देर्नञ्पूर्वस्य निपातनम्। अनुत्तमा ते मघवन् ( ऋ० १.१६५.९ )। अनुन्नमिति भाषायाम्। प्रतूर्तमिति त्वरतेः, तुर्वी इत्येतस्य वा निपातनम्। प्रतूर्तं वाजिन् ( तै० सं० ४.१.२.१ )। प्रतूर्णमिति भाषायाम्। सूर्तमिति सृ इत्येतस्योत्वं निपात्यते। सूर्ता गावः। सृता गाव इति भाषायाम्। गूर्तमिति गूरी इत्येतस्य नत्वाभावो निपात्यते। गूर्ता अमृतस्य ( मा० सं० ६.३४ )। गूर्णमिति भाषायाम् ॥

## क्विन्प्रत्ययस्य कुः ॥ ६२ ॥

पदस्येति वर्तते। क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते। क्विन् प्रत्ययो यस्माद् धातोः स क्विन्प्रत्ययः, तस्य पदस्यालोऽन्त्यस्य कवर्गादेशो भवति। 'स्पृशोऽनुदके क्विन्' ( ३.२.५८ )—घृतस्पृक्। हलस्पृक्। मन्त्रस्पृक्। क्विनः कुरिति वक्तव्ये प्रत्ययग्रहणं कृतं बहुव्रीहिविज्ञानार्थम्, क्विन् प्रत्ययो यस्माद् विहितस्तस्मादन्यस्मिन्नपि प्रत्यये कुत्वं यथा स्यात्। मा नो अस्राक्। मा नो अद्राक्। सृजिदृशिभ्यां हि क्विन् विहितः, तयोर्लुङि कुत्वमेतत्। माङ्योगेऽपि छान्दसत्वादडागमः। ईट् च न भवति 'बहुलं छन्दसि' ( ७.३.९७ ) इति। तथा दृग्भ्याम्, दृग्भिरिति क्विबन्तस्यापि दृशेः कुत्वं भवति। एवं च सति रज्जुसृड्भ्यामित्यत्रापि कुत्वं प्राप्नोति। अथ तु नेष्यते, प्रतिविधानं कर्तव्यमिति ॥

## नशेर्वा ॥ ६३ ॥

पदस्येति वर्तते। नशेः पदस्य वा कवर्गादेशो भवति। सा वै जीवनगाहुतिः। सा वै जीवनडाहुतिः ( मै० सं० १.४.१३ )। नशेरयं संपदादित्वाद् भावे क्विप्। जीवस्य नाशो जीवनक् , जीवनट्। षत्वे प्राप्ते कुत्वविकल्पः ॥

## मो नो धातोः ॥ ६४ ॥

मकारान्तस्य धातोः पदस्य नकारादेशो भवति। प्रशान्। प्रतान्। प्रदान्। शमितमिदमादीनां क्विप्। 'अनुनासिकस्य क्विझलोः क्ङिति' ( ६.४.१५ ) इति दीर्घत्वम्[1]। नत्वस्यासिद्धत्वाद् नलोपो न भवति। म इति किम् ? भित्। छित्। धातोरिति किम् ? इदम्। किम्। पदस्येत्येव—प्रतामौ। प्रतामः॥

## म्वोश्च ॥ ६५ ॥

मकारवकारयोश्च परतः मकारान्तस्य धातोर्नकारादेशो भवति। अगन्म तमसस्पारम् ( मा० सं० १२.७३ )। अगन्व। गमेर्लङि 'बहुलं छन्दसि' ( २.४.७३ ) इति शपो लुक्। जगन्वान्। 'विभाषा गमहनविदविशाम्' ( ७.२.६८ ) इति क्वसाविडागमस्याभावः। अपदान्तार्थ आरम्भः॥

## ससजुषो रुः ॥ ६६ ॥

सकारान्तस्य पदस्य सजुष् इत्येतस्य च रुर्भवति। सकारान्तस्य—अग्निरत्र। वायुरत्र। सजुषः—सजूर्ऋतुभिः ( मै० सं० २.८.१ )। सजूर्देवेभिः ( ऋ० ७.३४.१५ )। जुषेः क्विपि सपूर्वस्य रूपमेतत्॥

## अवयाःश्वेतवाःपुरोडाश्च ॥ ६७ ॥

अवयाः श्वेतवाः पुरोडाः इत्येते निपात्यन्ते। अवपूर्वस्य यजेः, श्वेतपूर्वस्य वहेः, पुरस्पूर्वस्य दाशतेः 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्', 'अवे यजः' ( ३.२.७१, ७२) इति ण्विनि कृते, 'श्वेतवहादीनां डस्पदस्य' ( ३.२.७१ वा० ) इति डस्प्रत्यये निपातनान्येतानि। किमर्थं तर्हि निपातनं यावता पूर्वेणैव रुः सिद्धः, दीर्घत्वमपि 'अत्वसन्तस्य चाधातोः' ( ६.४.१४ ) इति ? संबुद्धौ दीर्घार्थमेते निपात्यन्ते। 'अत्वसन्तस्य चाधातोः' ( ६.४.१४ ) इत्यत्र ह्यसंबुद्धाविति वर्तते। हे अवयाः ( मा० सं० ३.४६ )। हे श्वेतवाः। हे पुरोडाः ( ऋ० ३.२८.२ )। चकारोऽनुक्तसमुच्चयार्थः। हे उक्थशाः ( तै० सं० ३.२.९.१ )॥

## अहन् ॥ ६८ ॥

अहन्नित्येतस्य पदस्य रुर्भवति। अहोभ्याम्। अहोभिः। नलोपमकृत्वा निर्देशो ज्ञापकः—नलोपाभावो यथा स्यादिति। दीर्घाहा निदाघः। हे दीर्घाहोऽत्रेति। अहन्नित्यत्र

---

१ - ' शमितमि.........दीर्घत्वम् ' इति पाठो न स्याद् यथान्यासम्।

तु लाक्षणिकत्वात् ( परि० १०५ ) अहन्शब्दस्य रुर्न भवति ॥ अह्नो रुविधौ रूपरात्रि-रथन्तरेषूपसंख्यानं कर्तव्यम् ॥ अहोरूपम्। अहोरात्रः। अहोरथन्तरम्। 'रोऽसुपि' ( ८.२.६९ ) इत्यस्यापवादो रुत्वमुपसंख्यायते। अपर आह—सामान्येन रेफादौ रुत्वं भवति—अहोरम्यम्, अहोरत्नानीति ॥

## रोऽसुपि ॥ ६९ ॥

अहन्नित्येतस्य रेफादेशो भवत्यसुपि परतः। अहर्ददाति। अहर्भुङ्क्ते। असुपीति किम् ? अहोभ्याम्। अहोभिः। ननु चात्रापि प्रत्ययलक्षणेन ( १.१.६२ ) सुबस्ति—अहर्ददाति, अहर्भुङ्क्त इति ? नैतदस्ति। उक्तमेतत्—'अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवति' ( महाभाष्य १.१६६ ) इति नायमहःशब्दः सुप्परो भवति। यत्र तु लोपशब्देन लुप्यते तत्र प्रत्ययलक्षणं भवत्येव, यथा हे दीर्घाहोऽत्र, दीर्घाहा[१] निदाघ इति। अत्र हि 'हल्ङ्याब्भ्यः०' ( ६.१.६८ ) इति लोपेन प्रत्ययस्य निवृत्तिः ॥

## अम्नरूधरवरित्युभयथा छन्दसि ॥ ७० ॥

अम्नस् ऊधस् अवस् इत्येतेषां छन्दसि विषय उभयथा भवति, रुर्वा रेफो वा। अम्नस्—अ॒म्नं ए॒वं ( मै० सं० १.६.१० )। अम्नरेव। ऊधस्—ऊध एव ( काठ० सं० ७.५ )। ऊधर्॒ ( ऋ० १०.१००.११ ) एव। अवस्—अ॒वः ( शौ० सं० २०.२५.२ ) एव। अवरेव। यदा रुत्वं तदा 'भोभगोअघोअपूर्वस्य योऽशि' ( ८.३.१७ ) इति यकारः ॥ छन्दसि भाषायां च विभाषा प्रचेतसो राजन्युपसंख्यानं कर्तव्यम् ॥ प्रचेता॒ राज॒न् ( ऋ० १.२४.१४ ), प्रचेतो॒ राज॒न् ( तै० सं० १.५.११.३ ) ॥ अहरादीनां पत्यादिषूपसंख्यानं कर्तव्यम् ॥ अहर्पतिः[२], अहःपतिः। गीर्पतिः, गीःपतिः। धूर्पतिः, धूःपतिः। विसर्जनीय-बाधनार्थमत्र पक्षे रेफस्यैव रेफो विधीयते ॥

## भुवश्च महाव्याहृतेः ॥ ७१ ॥

भुवस् इत्येतस्य महाव्याहृतेश्छन्दसि विषय उभयथा भवति, रुर्वा रेफो वा। भुव इत्यन्तरिक्षम्। भुवरित्यन्तरिक्षम्। महाव्याहृतेरिति किम् ? भुवो॒ विश्वे॑षु॒ सव॑नेषु य॒ज्ञियः ( ऋ० १०.५०.४ )। भुवरित्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ॥

## वसुस्रंसुध्वंस्वनडुहां दः ॥ ७२ ॥

---

१ – ' दीर्घाह ' ( बाल० ), ' दीर्घाहो ' ( है० ) इत्यपपाठौ।
२ – अ॒हर्प॑तये ( मा० सं० ९.२० )।

'ससजुषोः०' ( ८.२.६६ ) इत्यतः स इति वर्तते। तेन संभवाद् व्यभिचारात् च वसुरेव विशेष्यते, न स्रंसुध्वंसू व्यभिचाराभावाद्, असंभवात् च नानडुह्शब्दः। वस्वन्तस्य पदस्य सकारान्तस्य, स्रंसु, ध्वंसु, अनडुह् इत्येतेषां च दकारादेशो भवति। वसु—विद्वद्भ्याम्, विद्वद्भिः। पपिवद्भ्याम्, पपिवद्भिः। स्रंसु—उखास्रद्भ्याम्, उखास्रद्भिः। ध्वंसु—पर्णध्वद्भ्याम्, पर्णध्वद्भिः। अनडुह्—अनडुद्भ्याम्, अनडुद्भिः। स इत्येव—विद्वान्। पपिवान्। नकारस्य न भवति। रुत्वे नाप्राप्त इदमारभ्यत इति तद् बाध्यते। संयोगान्तलोपस्तु नैवमिति तेनैतदेव दत्वं बाध्यते। अनडुहोऽपि ढत्वमनेन बाध्यते। नुमस्तु विधानसामर्थ्याद् न भवति—अनड्वान्। हे अनड्वन्निति। पदस्येत्येव—विद्वांसौ, विद्वांसः॥

## तिप्यनस्तेः॥ ७३ ॥

तिपि परतः सकारान्तस्य पदस्यानस्तेर्दकार आदेशो भवति। अचकाद् भवान्। अन्वशाद् भवान्। तिपीति किम् ? चकास्तेः क्विप्, चकाः। अनस्तेरिति किम् ? आप एवेदं सलिलं सर्वमाः[1]। आ इत्यस्तेर्लङि तिपि 'बहुलं छन्दसि' ( ७.३.९७ ) इतीड् न कृतः॥

## सिपि धातो रुर्वा॥ ७४ ॥

सिपि परतः सकारान्तस्य पदस्य धातो रुरित्ययमादेशो भवति, दकारो वा। अचकास्त्वम्, अचकात् त्वम्। अन्वशास्त्वम्, अन्वशात् त्वम्। धातुग्रहणं चोत्तरार्थं रुग्रहणं च॥

## दश्च ॥ ७५ ॥

दकारान्तस्य धातोः पदस्य सिपि परतो रुर्भवति, दकारो वा। अभिनस्त्वम्, अभिनत् त्वम्। अच्छिनस्त्वम्, अच्छिनत् त्वम्॥

## र्वोरुपधाया दीर्घ इकः ॥ ७६ ॥

रेफवकारान्तस्य धातोः पदस्योपधाया इको दीर्घो भवति। गीः। धूः। पूः। आशीः। वकारग्रहणमुत्तरार्थम्। उपधाग्रहणं किम् ? अबिभर्भवान्। अभ्यासेकारस्य मा भूत्। इक इति किम् ? अत्रैव प्रत्युदाहरणे भशब्दाकारस्य मा भूत्। धातोरित्येव—अग्निः। वायुः। पदस्येत्येव—गिरौ, गिरः॥

---

१ - अप्रकेतं सलिलं सर्वमा इदम् ( ऋ० १०.१२९.३ )।

## हलि च ॥ ७७ ॥

हलि च परतो रेफवकारान्तस्य धातोरुपधाया इको दीर्घो भवति। आस्तीर्णम्। विस्तीर्णम्। विशीर्णम्। अवगूर्णम्। वकारान्तस्य—दीव्यति। सीव्यति। धातोरित्येव—दिवमिच्छति दिव्यति। चतुर इच्छति चतुर्यति। इक इत्येव—स्मर्यते। भव्यम्। अपदान्तार्थोऽयमारम्भः॥

## उपधायां च ॥ ७८ ॥

हलीत्यनुवर्तते। धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घो भवति। हुर्छा—हूर्छिता। मुर्छा—मूर्छिता। उर्वी—ऊर्विता। धुर्वी—धूर्विता। हलीत्येव—चिरि जिरि—चिरिणोति। जिरिणोति। इह कस्माद् न भवति—'रि गतौ' (तुदा० ११४) रिर्यतुः, रिर्युः, वी गत्यादिषु (अदा० ४१) विव्यतुः, विव्युरिति ? यणादेशस्य स्थानिवत्त्वाद् असिद्धत्वात् च बहिरङ्गलक्षणत्वेन हल्परौ रेफवकारौ न भवतः। चतुर्यितेत्यत्रापि बहिरङ्गलक्षणत्वादतो लोपस्य (६.४.४८) धातोरुपधाभूतो रेफो न भवति। प्रतिदीव्नेत्यत्र तु 'हलि च' (८.२.७७) इति दीर्घत्वम्, दीर्घविधौ लोपाजादेशस्य स्थानिवद्भावप्रतिषेधात् (१.१.५८) 'असिद्धं बहिरङ्गमन्तरङ्गे' (परि० ५०) इत्येतत् तु नाश्रयितव्यम् (८.२.२ का०)। 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' (परि० २२) इति जिव्रिः किर्योर्गिर्योरित्येवमादिषु दीर्घो न भवति॥

## न भकुर्छुराम् ॥ ७९ ॥

रेफवकारान्तस्य भस्य कुर् छुर् इत्येतयोश्च दीर्घो न भवति। धुरं वहति धुर्यः। धुरि साधुर्धुर्यः। दिव्यम्। कुर्—कुर्यात्। छुर्—छुर्यात्। रेफवकाराभ्यां भविशेषणं किम् ? प्रतिदीव्ना। प्रतिदीव्ने॥

## अदसोऽसेर्दादु दो मः ॥ ८० ॥

अदसोऽसकारान्तस्य वर्णस्य दात् परस्योवर्णादेशो भवति, दकारस्य च मकारः। अमुम्, अमू, अमून्। अमुना, अमूभ्याम्। 'भाव्यमानेनाप्युकारेण सवर्णानां ग्रहणमिष्यते' (परि० २०) इत्येकमात्रिकस्य मात्रिकः, द्विमात्रिकस्य द्विमात्रिक आदेशो भवति। असेरिति किम् ? अद इच्छति अदस्यति ॥ अदसोऽनोस्र इति वक्तव्यम्॥ ओकाररेफयोरपि प्रतिषेधो यथा स्यादिति। अदोऽत्र। अदः। तदर्थं केचित् सूत्रं वर्णयन्ति—अः सेर्यस्य सोऽयमसिः, यत्र सकारस्याकारः क्रियत इति। तेन त्यदाद्यत्वविधान एतद्, अन्यत्र न भवितव्यमेवेति। अद्र्यादेशे कथम् ?

अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिद् अन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥ इति ॥

यैरसेरिति सकारस्य प्रतिषेधः क्रियते, 'अनन्त्यविकारेऽन्त्यसदेशस्य०' (परि० ९५) इति च परिभाषा नाश्रीयते, तेषामुभयोरपि मुत्वेन भवितव्यम्—अमुमुयङ्, अमुमुयञ्चौ, अमुमुयञ्च इति, यथा चलीक्लृप्यत इति लत्वम्। ये तु परिभाषामाश्रयन्ति, तेषामन्त्यसदेशस्यैव भवितव्यम्—अदमुयङ्, अदमुयञ्चौ, अदमुयञ्च इति। येषां तु त्यदाद्यत्वविषय एव मुत्वेन भवितव्यमिति दर्शनम्, तेषामत्र न भवितव्यम्—अदद्र्यङ्, अदद्र्यञ्चौ, अदद्र्यञ्च इति। दादिति किम्? अलोऽन्त्यस्य मा भूत्—अमुया। अमुयोः॥

## एत ईद् बहुवचने ॥ ८१ ॥

अदसो दकारादुत्तरस्य एकारस्य ईकारादेशो भवति, दकारस्य च मकारः, बहुवचने बहूनामर्थानामुक्तौ। अमी। अमीभिः। अमीभ्यः। अमीषाम्। अमीषु। बहुवचन इत्यर्थनिर्देशोऽयम्, पारिभाषिकस्य हि बहुवचनस्य ग्रहणेऽमी इत्यत्र न स्यात्॥

## वाक्यस्य टेः प्लुत उदात्तः ॥ ८२ ॥

अधिकारोऽयम्। वाक्यस्य टेरिति, प्लुत इति च, उदात्त इति च, एतत्त्रयमप्यधिकृतं वेदितव्यमा पादपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामो वाक्यस्य टेः प्लुत उदात्त इत्येवं तद् वेदितव्यम्। वक्ष्यति—'प्रत्यभिवादेऽशूद्रे' (८.२.८३)। अभिवादये देवदत्तोऽहं भोः, आयुष्मानेधि दे॒व॒द॒त्त३। पदाधिकारोऽनुवर्तत एव। वाक्यग्रहणमनन्त्यस्य पदस्य प्लुत-निवृत्त्यर्थम्। टिग्रहणं व्यञ्जनान्तस्यापि टेरचः प्लुतो यथा स्यात्—अ॒ग्नि॒चि३त् इति॥

## प्रत्यभिवादेऽशूद्रे ॥ ८३ ॥

प्रत्यभिवादो नाम यदभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते, तत्राशूद्रविषये यद् वाक्यं वर्तते तस्य टेः प्लुत उदात्तो भवति। अभिवादये देवदत्तोऽहं भोः, आयुष्मानेधि दे॒व॒द॒त्त३। अशूद्र इति किम्? अभिवादये तुषजकोऽहं भोः, आयुष्मानेधि तुषजक ॥ स्त्रियामपि प्रतिषेधो वक्तव्यः॥ अभिवादये गार्ग्यहं भोः, आयुष्मती भव गार्गि। असूयकेऽपि केचित् प्रतिषेधमिच्छन्ति। अभिवादये स्थाल्यहं भोः, आयुष्मानेधि स्थालिन्। यावच्च तस्यासूयकत्वं न ज्ञायते, तावदेव प्रत्यभिवादवाक्यम्। तस्मिंस्त्वसूयकत्वेन निर्ज्ञाते प्रत्य-भिवाद एव नास्ति, कुतः प्लुतः? तथा ह्युक्तम्—'असूयकस्त्वं जाल्म, न त्वं प्रत्यभिवादम्'[1]

---

१ - 'प्रत्यभिवादनम्' इत्यपपाठो मुद्रितेषु।

अर्हसि, भिद्यस्व वृषल स्थालिनू' ( महाभाष्य ३.४१६ ) इति। अभिवादवाक्ये[१] यत् संकीर्तितं नाम गोत्रं वा, तद् यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्र प्लुतिरिष्यते। इह न भवति—देवदत्त कुशल्यसि, देवदत्त आयुष्मानेधीति ॥ भोराजन्यविशां वेति वक्तव्यम् ॥ भो अभिवादये देवदत्तोऽहम् , आयुष्मानेधि देवदत्त भो३ः, आयुष्मानेधि देवदत्त भोः। राजन्य—अभिवादय इन्द्रवर्माहं भोः, आयुष्मानेधीन्द्रवर्म३न्, आयुष्मानेधीन्द्रवर्मन्। विश्—अभिवादय इन्द्रपालितोऽहं भोः, आयुष्मानेधीन्द्रपालित३। आयुष्मानेधीन्द्रपालित ॥

## दूराद्धूते च ॥ ८४ ॥

दूराद्धूते यद् वाक्यं वर्तते तस्य टेः प्लुतो भवति, स चोदात्तः। आह्वानं हूतम्, शब्देन संबोधनम्। आगच्छ भो माणवक देवदत्त३। आगच्छ भो माणवक यज्ञदत्त३। दूरं यद्यप्यपेक्षाभेदादनवस्थितम्, तथापि हूतापेक्षं यत् तदाश्रीयत इति यत्र प्राकृतात् प्रयत्नात् प्रयत्नविशेष आश्रीयमाणे शब्दः श्रूयते तद् दूरम्। हूतग्रहणं च सम्बोधनमात्रोपलक्षणार्थं द्रष्टव्यम्। तेन यत्राप्याह्वानं नास्ति, तत्रापि प्लुतिर्भवति—सक्तून् पिब देवदत्त३, पलायस्व देवदत्त३ इति। अस्याश्च प्लुतेरेकश्रुत्या समावेश इष्यते। दूरादिति किम्? आगच्छ भो माणवक देवदत्त। दूरादाह्वाने वाक्यस्यान्ते यत्र संबोधनपदं भवति, तत्रायं प्लुत इष्यते। तेनेह न भवति—देवदत्त आगच्छ[२]॥

## हैहेप्रयोगे हैहयोः ॥ ८५ ॥

हैहेप्रयोगे दूराद्धूते[३] यद् वाक्यं वर्तते तत्र हैहयोरेव प्लुतो भवति। है३ देवदत्त। हे३ देवदत्त। देवदत्त है ३। देवदत्त हे३। पुनर्हैहयोर्ग्रहणम् अनन्त्ययोरपि[४] यथा स्यात् ॥

## गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ॥ ८६ ॥

'प्रत्यभिवादेऽशूद्रे' ( ८.२.८३ ) इत्येवमादिना यः प्लुतो विहितः, तस्यैवायं स्थानिविशेष उच्यते। ऋकारवर्जितस्य गुरोरनन्त्यस्य, अपिशब्दादन्त्यस्यापि टेरेकैकस्य संबोधने वर्तमानस्य प्लुतो भवति प्राचामाचार्याणां मतेन। दे३वदत्त, देवद३त्तं, देवदत्त ३। य३ज्ञदत्त, यज्ञद३त्तं, यज्ञदत्त३। गुरोरिति किम्? वकारात् परस्य मा भूत्। अनृत इति किम्? कृष्णमि३त्रं, कृष्णमित्र३। एकैकग्रहणं पर्यायार्थम्। प्राचामिति ग्रहणं विकल्पार्थम्—आयुष्मानेधि देवदत्त। तदनेन यदेतदुच्यते—'सर्व एव प्लुतः साहसमनिच्छता

---

१ – 'अभिवादनवाक्ये' इति न्यासे, मुद्रितेषु च।
२ – 'दूरादाह्वाने...........आगच्छ' इति पाठो न सार्वत्रिकः।
३ – 'दूराद्धूते' इति नास्ति है०।
४ – 'अन्त्ययोरपि' इत्यपपाठो है०।

विभाषा कर्तव्यः' ( महाभाष्य ३.४२० ) इति, तदुपपन्नं भवति ॥

## ओमभ्यादाने ॥ ८७ ॥

अभ्यादानं प्रारम्भः, तत्र य ओमूशब्दः तस्य प्लुतो भवति। ओ३म् अग्निमींळे पुरोहिंतम् ( ऋ० १.१.१ )। अभ्यादान इति किम् ? ओमित्येतदक्षरमुद्गीथमुपासीत ( छा० उप० १.१.१ )॥

## ये यज्ञकर्मणि ॥ ८८ ॥

ये इत्येतस्य यज्ञकर्मणि प्लुतो भवति। ये३ यजामहे। यज्ञकर्मणीति किम् ? ये यजांमहे इति पञ्चाक्षरम् ( तै० सं० १.६.११.१ ) इति स्वाध्यायकाले मा भूत्। ये यजामह इत्यत्रैवायं प्लुत इष्यते। इह हि न भवति — ये देंवासो दिव्येकांदश स्थ ( ऋ० १. १३९.११ ) इति ॥

## प्रणवष्टेः ॥ ८९ ॥

यज्ञकर्मणीति वर्तते। यज्ञकर्मणि टेः प्रणव आदेशो भवति। क एष प्रणवो नाम? पादस्य वार्द्धर्चस्य वान्त्यमक्षरमुपसंगृह्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारमोङ्कारं वा विदधतिं, तं प्रणवमित्याचक्षते। अपां रेतांसि जिन्वतो३म् ( ऋ० ८.४४.१६ )। देवान् जिंगाति सुम्नयो३म् ( ऋ० ३.२७.१ )। टिग्रहणं सर्वादेशार्थम्। ओकारः सर्वादेशो यथा स्यात्, व्यञ्जनान्तेऽन्त्यस्य मा भूदिति। यज्ञकर्मणीत्येव—अपां रेतांसि जिन्वति ( ऋ० ८. ४४.१६ )॥

## याज्यान्तः ॥ ९० ॥

याज्या नाम ये याज्याकाण्डे[२] पठ्यन्ते मन्त्रास्तेषामन्त्यो यष्टिः स प्लवते यज्ञकर्मणि। स्तोमैर्विधेमाग्नयें३ ( ऋ० ८.४३.११ )। जिह्वामंग्ने चकृषे हव्यवाहं३म् ( तै० सं० ४.४. ४.१ )। अन्तग्रहणं किम् ? याज्या नाम ऋचः काश्चिद् वाक्यसमुदायरूपाः, तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति। सर्वान्त्यस्यैवेष्यते, तदर्थमन्तग्रहणम् ॥

## ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥ ९१ ॥

ब्रूहि प्रेष्य श्रौषट् वौषट् आवह इत्येतेषामादेः प्लुतो भवति यज्ञकर्मणि। अग्नयेऽ-

---

१ - तु०—आ० श्रौ० १.२.१० ।
२ - द्र०—मै० सं० ४.१०-१४।

नुब्रू३हि ( श० ब्रा० २.५.३.१२ )। प्रेष्य—अग्नये गोमयान् प्रे३ष्यं। श्रौषट्—अस्तु श्रौ३षट् ( तै० सं० १.६.११.१ )। वौषट् — सोमस्याग्ने वीही३वौ३षट् ( ऐ० ब्रा० ३.५,६ )। आवह — अग्निमा३वह ( तै० ब्रा० ३.५.३.२ )। आवह देवान् यजमानाय (तै० ब्रा० ३.५.३.२ ) इत्येवमादावयं प्लुतो न भवति। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' ( परि० ३५ ) इति ॥

## अग्नीत्प्रेषणे परस्य च ॥ ९२ ॥

अग्नीधः प्रेषणमग्नीत्प्रेषणम्। तत्रादेः प्लुतो भवति परस्य च। आ३ श्रा३वय ( तै० सं० १.६.११.२ )। ओ३श्रा३वय। अत्रैवायं प्लुत इष्यते। तेनेह न भवति—अग्नीदग्नीन् विहर बर्हिःस्तृणाहि ( तै० सं० ६.३.१.२ ) इति। तदर्थं केचिद् वक्ष्यमाणं विभाषेत्यभिसंबध्नन्ति। सा च व्यवस्थितविभाषेति। अपर आह—'सर्व एव प्लुतः साहसमनिच्छता विभाषा विज्ञेयः' ( महाभाष्य ३.४२० ) इति। इह तु उद्धर३उद्धर, अभिहर३अभिहर इति छान्दसः प्लुतव्यत्ययः। यज्ञकर्मणीत्येव—ओ श्रावय ॥

## विभाषा पृष्टप्रतिवचने हेः ॥ ९३ ॥

पृष्टप्रतिवचने विभाषा हेः प्लुतो भवति। अकार्षीः कटं देवदत्त ? अकार्षं हि३, अकार्षं हि। अलावीः केदारं देवदत्त ? अलाविषं हि३, अलाविषं हि। पृष्टप्रतिवचन इति किम् ? कटं करिष्यति हि। हेरिति किम् ? करोमि ननु ॥

## निगृह्यानुयोगे च ॥ ९४ ॥

स्वमतात् प्रच्यावनं निग्रहः। अनुयोगस्तस्य मतस्याविष्करणम्। तत्र निगृह्यानुयोगे यद् वाक्यं वर्तते तस्य टेः प्लुतो भवति विभाषा। अनित्यः शब्द इति केनचित् प्रतिज्ञातम्, तमुपालिप्सुरुपपत्तिभिर्निगृह्य साभ्यसूयमनुयुङ्क्ते—अनित्यः शब्द इत्यात्थ३, अनित्यः शब्द इत्यात्थ। अद्य श्राद्धमित्यात्थ३, अद्य श्राद्धमित्यात्थ। अद्यामावास्येत्यात्थ३, अद्यामावास्येत्यात्थ। अद्यामावास्येत्येवं वादी युक्त्या प्रच्याव्य स्वमतादेवमनुयुज्यते ॥

## आम्रेडितं भर्त्सने ॥ ९५ ॥

'वाक्यादेरामन्त्रितस्य०' ( ८.१.८ ) इति भर्त्सने द्विर्वचनमुक्तम्, तस्याम्रेडितं प्लवते। चौरचौर३, वृषलवृषल३, दस्योदस्यो३ घातयिष्यामि त्वा, बन्धयिष्यामि त्वा ॥ भर्त्सने पर्यायेणेति वक्तव्यम् ॥ चौर३चौर, चौरचौर ३। तदर्थमाम्रेडितग्रहणं द्विरुक्तोपलक्षणार्थं वर्णयन्ति ॥

## अङ्गयुक्तं तिङाकाङ्क्षम् ॥ ९६ ॥

अङ्ग इत्यनेन युक्तं तिङन्तमाकाङ्क्षं भर्त्सने प्लवते। अङ्ग कूज३, अङ्ग व्याहर३ इदानीं ज्ञास्यसि जाल्म। तिङिति किम्? अङ्ग देवदत्त, मिथ्या वदसि। आकाङ्क्षमिति किम्? अङ्ग पच। नैतदपरमाकाङ्क्षति। भर्त्सन इत्येव—अङ्गाधीष्व, ओदनं ते दास्यामि॥

## विचार्यमाणानाम् ॥ ९७ ॥

प्रमाणेन वस्तुपरीक्षणं विचारः, तस्य विषये विचार्यमाणानां वाक्यानां टेः प्लुतो भवति। होतव्यं दीक्षितस्य गृहा३इ (तै० सं० ६.१.४.५)। होतव्यं न होतव्यमिति विचार्यते। तिष्ठेद्यूपा३इ। अनुप्रहरेद्यूपा३इ। यूपे तिष्ठेत्, यूपेऽनुप्रहरेदिति विचार्यते॥

## पूर्वं तु भाषायाम् ॥ ९८ ॥

भाषायां विषये विचार्यमाणानां पूर्वमेव प्लवते। अहिर्नु३ रज्जुर्नु। लोष्टो[1] नु३ कपोतो नु। प्रयोगापेक्षं पूर्वत्वम्। इह भाषाग्रहणात् पूर्वयोगश्छन्दसि विज्ञायते॥

## प्रतिश्रवणे च ॥ ९९ ॥

प्रतिश्रवणमभ्युपगमः, प्रतिज्ञानम्, श्रवणाभिमुख्यं च। तत्राविशेषात् सर्वस्य ग्रहणम्। प्रतिश्रवणे यद् वाक्यं वर्तते तस्य टेः प्लुतो भवति। देवदत्त भोः, किमात्थ३[2]। गां मे देहि भोः, अहं ते ददामि३। नित्यः शब्दो भवितुमर्हति३॥

## अनुदात्तं प्रश्नान्ताभिपूजितयोः ॥ १०० ॥

अनुदात्तः प्लुतो भवति प्रश्नान्ते, अभिपूजिते च[3]। अगमं३ः पूर्वां३न् ग्रामां३न् अग्निभूता३ इ, पटा३उ। अग्निभूते, पटो इत्येतयोः प्रश्नान्ते वर्तमानयोरनुदात्तः प्लुतो भवति। अगम इत्येवमादीनां तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः' (८.२.१०५) इति स्वरितः प्लुतो भवति। अभिपूजिते—शोभनः खल्वसि माणवक३॥

---

१ – 'लोष्ठः' इत्यपपाठो है०।

२ – इदमुदाहरणमन्ते न्यस्तं मुद्रितेषु।

३ – 'नानेन प्लुतो विधीयते किं तु दूराद्धूतादिषु विहितस्यानन्त्यस्यापि प्रश्नाख्यानयोरिति स्वरितप्लुतस्यानुदात्तत्वं गुणमात्रं विधीयते' इत्यधिकं क्वचित्।

## चिदिति चोपमार्थे प्रयुज्यमाने ॥ १०१ ॥

अनुदात्तमिति वर्तते। चिदित्येतस्मिन् निपात उपमार्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवति। प्लुतोऽप्यत्र विधीयते, न गुणमात्रम्। अग्निचिद् भाया३त्। राजचिद् भाया३त्। अग्निरिव भायात्, राजेव भायादित्यर्थः। उपमार्थ इति किम् ? कथंचिदाहुः। प्रयुज्यमान इति किम् ? अग्निर्माणवको भायात्॥

## उपरिस्विदासीदिति च ॥ १०२ ॥

अनुदात्तमिति वर्तते। उपरिस्विदासीदित्येतस्य टेरनुदात्तः प्लुतो भवति। अधस्विंदासी३द् उपरिं स्विदासी३त् ( तै० ब्रा० २.८.९.५ )। अधः स्विदासीदित्यत्र 'विचार्यमाणानाम्' ( ८.२.९७ ) इत्युदात्तः प्लुतः। उपरिस्विदासीदित्यत्र तु अनेनानुदात्तः॥

## स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ १०३ ॥

स्वरितः प्लुतो भवति आम्रेडिते परतोऽसूयायाम्, संमतौ, कोपे, कुत्सने च गम्यमाने। 'वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु' ( ८.१.८ ) इति द्विर्वचनमुक्तम्, तत्रायं प्लुतविधिः। असूयायां तावत्—माणवकं३ माणवक, अभिरूपकं३ अभिरूपक रिक्तं त आभिरूप्यम्। संमतौ—माणवकं३ माणवक, अभिरूपकं३ अभिरूपक शोभनः खल्वसि। कोपे—माणवकं३ माणवक, अविनीतकं३ अविनीतक इदानीं ज्ञास्यसि जाल्म। कुत्सने—शाक्तीकं३ शाक्तीक, याष्टीकं ३ याष्टीक रिक्ता ते शक्तिः ॥ असूयादिषु वावचनं कर्तव्यम्॥ माणवक माणवकेत्येवमाद्यपि यथा स्यात्॥

## क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ॥ १०४ ॥

स्वरित इति वर्तते। क्षिया आचारभेदः, आशीः प्रार्थनाविशेषः, शब्देन व्यापारणं प्रैषः—एतेषु गम्यमानेषु तिङन्तमाकाङ्क्षं यत् तस्य स्वरितः प्लुतो भवति। आकाङ्क्षतीत्याकाङ्क्षम्, तिङन्तमुत्तरपदमाकाङ्क्षतीत्यर्थः। क्षियायां तावत्—स्वयं रथेन यातिं३, उपाध्यायं पदातिं गमयतीति। स्वयम् आदेनं ह भुङ्क्तें३, उपाध्यायं सक्तून् पाययति। पूर्वमत्र तिङन्तमुत्तरपदमाकाङ्क्षतीति आकाङ्क्षं[1] भवति। आशिषि—सुतांश्च लप्सीष्टं३ धनं च तात। छन्दोऽध्येषीष्टं३ व्याकरणं च भद्र। प्रैषे—कटं कुरुं३ ग्रामं च गच्छ। यवान् लुनीहिं३ सक्तूंश्च पिब। आकाङ्क्षमिति किम् ? दीर्घं त आयुरस्तु। अग्नीन् विहर॥

---

१ – 'साकाङ्क्षम्' इति मुद्रितेषु।

## अनन्त्यस्यापि प्रश्नाख्यानयोः ॥ १०५ ॥

पदस्येति वर्तते, स्वरितमिति च। अनन्त्यस्यापि अन्त्यस्यापि पदस्य टेः प्लुतो भवति प्रश्न आख्याने च। अगमं३ः पूर्वां३न् ग्रामां३न् अग्निभूतां३इ, पटां३उ। सर्वेषामेव पदानामेष स्वरितः प्लुतः। अन्त्यस्य 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' (८.२.१००) इति अनुदात्तोऽपि पक्षे भवति। आख्याने—अगमं३म्[1] पूर्वां३न् ग्रामां३न् भोः३ ॥

## प्लुतावैच इदुतौ ॥ १०६ ॥

दूराद्धूतादिषु प्लुतो विहितः। तत्र ऐचः प्लुतप्रसङ्गे तदवयवभूताविदुतौ प्लुतौ। ऐ३तिकायन। औ३पमन्यव। अत्र यदेवर्णोवर्णयोरवर्णस्य च समविभागः, तदेदुतौ द्विमात्रावनेन प्लुतौ क्रियेते। प्लुताविति हि क्रियानिमित्तोऽयं व्यपदेशः। इदुतौ प्लवेते वृद्धिं गच्छत इत्यर्थः। तावती च सा प्लुतिर्भवति, यावत्या[2] तावैचौ त्रिमात्रौ संपद्येते। यदा त्वर्धमात्रावर्णस्याध्यर्धमात्रेवर्णोवर्णयोः, तदा तावर्धतृतीयमात्रौ क्रियेते इति। भाष्ये तूक्तम्—इष्यत एव[3] चतुर्मात्रः प्लुत इति। तत् कथम् ? समप्रविभागपक्ष इदुतोरनेन त्रिमात्रः प्लुतो विधीयते ॥

## एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ॥ १०७ ॥

एचोऽप्रगृह्यस्यादूराद्धूते प्लुतविषयस्य पूर्वस्यार्धस्याकार[4] आदेशो भवति, स च प्लुतः, उत्तरस्येकारोकारावादेशौ भवतः। विषयपरिगणनं कर्तव्यम् ॥ प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम् ॥ प्रश्नान्ते—अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ, पटा३उ। अभिपूजिते—भद्रं करोषि माणवक३ अग्निभूता३इ, पटा३उ। विचार्यमाणे—होतव्यं दीक्षितस्यं गृहा३इ (तै० सं० ६.१.४.५)। प्रत्यभिवादे—आयुष्मानेधि अग्निभूता३इ, पटा३उ। याज्यान्ते—उक्षान्नांय वशान्नांय सोमंपृष्ठाय वेधसें। स्तोमैर्विधेमाग्नया३इ (ऋ० ८.४३.११)। सोऽयम् अकारः[5] प्लुतो यथाविषयमुदात्तोऽनुदात्तः स्वरितो वेदितव्यः। इदुतौ पुनरुदात्तावेव भवतः। परिगणनं किम् ? विष्णुभूते विष्णुभूते३ घातयिष्यामि त्वा। आगच्छ भो माणवक विष्णुभूते। परिगणने च सत्यदूराद्धूत इति न वक्तव्यम्। पदान्तग्रहणं तु कर्तव्यम्। इह मा

---

१ – 'अगम३ः' इत्यपपाठो मुद्रितेषु।
२ – 'यया' इति मुद्रितेषु ।
३ – 'एव' इति नास्ति बाल०।
४ – 'पूर्वस्य' इति नास्ति मुद्रितेषु ।
५ – 'आकारः' इत्यपपाठो मुद्रितेषु।

भूत्—भद्रं करोषि गौ३ः इति। अप्रगृह्यस्येति किम्? शोभने खलु स्तः खट्वे३ ॥ आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः॥ अग्ना३इ पत्नीवा३ः (तै० सं० १.४.२७.१)॥

## तयोर्य्वावचि संहितायाम्॥ १०८ ॥

तयोरिदुतोर्यकारवकारादेशौ भवतोऽचि संहितायां विषये। संहितायामित्येतत् चाधिकृतम्। इत उत्तरमाध्यायपरिसमाप्तेर्यद् वक्ष्यामः संहितायामित्येवं तद् वेदितव्यम्। अग्ना३याशा। पटा३वाशा। अग्ना३यिन्द्रम्। पटा३वुदकम्। अचीति किम्? अग्ना३इ। पटा३उ। संहितायामिति किम्? अग्ना३इ इन्द्रम्। पटा३उ उदकम्। इदुतोरसिद्धत्वात् 'इको यणचि' (६.१.७७) इति न प्राप्नोतीत्ययमारम्भः। अथापि कथंचित् तयोः सिद्धत्वं स्यात्, एवमपि सवर्णदीर्घत्वनिवृत्त्यर्थम् (६.१.१०१) शाकलनिवृत्त्यर्थं (६.१.१२७) च वक्तव्यमेतत्। अथापि तन्निवृत्त्यर्थं यत्नान्तरमस्ति, तथापि यण्स्वर-निवृत्त्यर्थमिदमारभ्यते। यणादेशस्यासिद्धत्वाद् 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४) इत्येष स्वरो न भवति।

किं तु[1] यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ॥
इक्तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः॥

इति श्रीवामनविरचितायां काशिकायां वृत्तावष्टमाध्यायस्य द्वितीयः पादः॥



१ - 'नु' इति है०।

# ॥ अष्टमाध्यायस्य तृतीयः पादः ॥

## मतुवसो रु संबुद्धौ छन्दसि ॥ १ ॥

संहितायामिति वर्तते। मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति संबुद्धौ परतश्छन्दसि विषये। मत्वन्तस्य तावत् — इन्द्रं मरुत्व इह पाहि सोमम् ( तै० सं० १.४.१८.१ )। हरिवो मेदिनं त्वा ( तै० सं० ४.७.१४.४ )। मरुतोऽस्य सन्ति, हरयोऽस्य सन्तीति मतुप्। सुतकारयोः[1] हल्ङ्यादिलोपे ( ६.१.६८ ) संयोगान्तस्य लोपे ( ८.२.२३ ) च कृते नकारस्य रुर्भवति। वस्वन्तस्य खल्वपि—मीढ्वस्तोकाय तनयाय मृळ ( ऋ० २.३३.१४ )। इन्द्र साह्वः। क्वसोर्निपातनं 'दाश्वान्साह्वान्मीढ्वांश्च ( ६.१.१२ ) इति। मतुवसोरिति किम् ? ब्रह्मन् स्तोष्यामः। संबुद्धाविति किम् ? यं एवं विद्वांनग्निंमुपतिष्ठते ( मै० सं० १.५.७ )। छन्दसीति किम् ? हे गोमन्। हे पपिवन् ॥ वन उपसंख्यानं कर्तव्यम् ॥ यस्त्वायन्तं वसुना प्रातरित्वः ( ऋ० १.१२५.२ )। इणः प्रातःपूर्वस्य छन्दसि क्वनिप् ॥ विभाषा भवद्भगवदघवतामोच्चावस्य ॥ छन्दसि भाषायां च भवद् भगवद् अघवद् इत्येतेषां विभाषा रुर्वक्तव्यः, अवशब्दस्य च ओकारादेशः। सामान्येन छन्दसि भाषायां चेदं वचनम्। भवत्—हे भोः, हे भवन्। भगवत्—हे भगोः, हे भगवन्। अघवत्—हे अघोः, हे अघवन्। निपातविज्ञानाद्[2] वा सिद्धम्। अथवा भो इत्येवमादयो निपाता द्रष्टव्याः। असंबुद्धावपि द्विवचनबहुवचनयोरपि दृश्यन्ते। भो देवदत्तयज्ञदत्तौ। भो देवदत्तयज्ञदत्तविष्णुमित्राः। तथा स्त्रियामपि च दृश्यन्ते—भो ब्राह्मणि इत्यादि। संहिताधिकार उत्तरत्रोपयुज्यते, यत्र भिन्नपदस्थौ निमित्तनिमित्तिनौ—'नश्छव्यप्रशान्' ( ८.३.७ ) इति[3]॥

## अत्रानुनासिकः पूर्वस्य तु वा ॥ २ ॥

अधिकारोऽयम्। इत उत्तरं यस्य स्थाने रुर्विधीयते, ततः पूर्वस्य तु वर्णस्य वानुनासिको भवतीत्येतदधिकृतं वेदितव्यम्, यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र। वक्ष्यति—'समः सुटि' ( ८.३.५ )—सँस्स्कर्ता। सँस्स्कर्तुम्। सँस्स्कर्तव्यम्। अत्रग्रहणं रुणा सह संनियोगप्रतिपत्त्यर्थम्। अधिकारपरिमाणापरिग्रहे हि सति 'ढो ढे लोपः' ( ८.३.१३ ) इत्यत्रापि पूर्वस्यानुनासिक आशङ्क्येत ॥

---

१ – ' सुप्नुमोः ' इति बाल० ' सुप्तकारयोः ' इति तारा०, है०। सर्वत्रापपाठः।
२ – ' निपातनविज्ञानाद् ' इत्यपपाठो बाल० , है०।
३ – ' संहिताधिकार ----- इति ' इति पाठः क्वाचित्कः ।

## आतोऽटि नित्यम् ॥ ३ ॥

अटि परतो रोः पूर्वस्याकारस्य स्थाने नित्यमनुनासिकादेशो भवति। 'दीर्घादटि समानपादे' ( ८.३.९ ) इति रुत्वं वक्ष्यति, ततः पूर्वस्यातोऽनुनासिकविकल्पे प्राप्ते नित्यार्थं वचनम्। म॒हाँ अ॑सि ( ऋ० ३.४६.२ )। म॒हाँ इन्द्रो॒ य ओज॑सा ( ऋ० ८.६.१ )। दे॒वाँ अच्छा॒ दीद्य॑त् ( ऋ० ३.१.१ )। केचिदनुस्वारमधीयते, सच्छान्दसो व्यत्ययो द्रष्टव्यः। आत इति किम् ? ये वा॒ व॒नस्पती॑ँ१रनुं ( मा० सं० १३.७ )। अटीति किम् ? भवांश्चरति। भवांश्छादयति[1]। नित्यग्रहणं विस्पष्टार्थम् ॥

## अनुनासिकात् परोऽनुस्वारः ॥ ४ ॥

अन्यशब्दोऽत्राध्याहर्तव्यः। तदपेक्षया चेयमनुनासिकादिति पञ्चमी। अनुनासिकादन्यो यो वर्णो रोः पूर्वः, यस्यानुनासिको न कृतः, ततः परोऽनुस्वार आगमो भवति। वक्ष्यति—'समः सुटि' ( ८.३.५ )—संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम्। 'पुमः खय्यम्परे' ( ८.३.६ )—पुंस्कामा। 'नश्छव्यप्रशान्' ( ८.३.७ )—भवांश्चरति। केचित् तु परशब्दमेवान्यार्थं वर्णयन्ति। अनुनासिकात् परोऽनुनासिकादन्योऽनुस्वारो भवति। यस्मिन् पक्षेऽनुनासिको नास्ति, तत्रानुस्वारागमो भवति। स तु कस्यागमो भवति? रोः पूर्वस्यैवेति वर्तते, व्याख्यानादादेशो न भवति ॥

## समः सुटि ॥ ५ ॥

रुर्वर्तते। सम्[2] इत्येतस्य रुर्भवति सुटि परतः संहितायां विषये। सँस्स्कर्ता। सँस्स्कर्तुम्। सँस्स्कर्तव्यम्। संस्स्कर्ता। संस्स्कर्तुम्। संस्स्कर्तव्यम्। अत्र रोर्विसर्जनीये कृते 'वा शरि' ( ८.३.३६ ) इति पक्षे विसर्जनीय एव प्राप्नोति। व्यवस्थितविभाषा द्रष्टव्या। तेनात्र नित्यं सकार एव भवति। अस्मिन्नेव सूत्रे सकारादेशो वा निर्दिश्यते। समः स्सुटीति द्विसकारको निर्देशः। सम इति किम् ? उपस्कर्ता। सुटीति किम् ? संकृतिः। कश्चिदाह— ॥ संपुंकानां सो वक्तव्यः ॥ रुविधौ ह्यनिष्टप्रसङ्गः—संस्कर्ता, पुंस्कामा, कांस्कानिति[3] ॥

## पुमः खय्यम्परे ॥ ६ ॥

पुमित्येतस्य रुर्भवत्यम्परे खयि परतः। पुँस्कामा, पुंस्कामा। पुँस्पुत्रः, पुंस्पुत्रः।

---

१ – ' भवांश्लाघयति ' इत्यपपाठो है० तारा०।

२ – ' समः ' इत्यपपाठो मुद्रितेषु।

३ – अत्र ' समो वा लोपमेक इच्छन्ति ' इति वचनमपि महाभाष्येऽधीयते।

पुँस्फलम्, पुंस्फलम्। पुँश्चली, पुंश्चली। पुंस्कामेत्यत्र विसर्जनीयस्य 'कुप्वोः ≍क ≍पौ च' (८.३.३७) इति प्राप्नोति। तस्मादत्र सकार एवादेशो वक्तव्यः। द्विसकारकनिर्देशपक्षे तु पूर्वस्मादेव सूत्रात् स इत्यनुवर्तते। रुत्वं त्वनुवर्तमानमपि नात्राभिसंबध्यते, संबन्धानुवृत्तिस्तस्येति। खयीति किम् ? पुंदासः। पुंगवः। अम्पर इति किम् ? पुंक्षीरम्। पुंक्षुरम्। परग्रहणं किम्? पुमाख्यः। पुमाचारः॥

## नश्छव्यप्रशान्॥ ७ ॥

अम्पर इति वर्तते। नकारान्तस्य पदस्य प्रशान्वर्जितस्य रुर्भवत्यम्परे छवि परतः। भवाँश्छादयति, भवांश्छादयति। भवाँश्चिनोति, भवांश्चिनोति। भवाँष्टीकते, भवांष्टीकते। भवाँस्तरति, भवांस्तरति। छवीति किम् ? भवान् करोति। अप्रशानिति किम् ? प्रशान् छादयति। प्रशान् चिनोति। अम्पर इत्येव—भवान् त्सरुकः॥

## उभयथर्क्षु॥ ८ ॥

पूर्वेण नित्ये प्राप्ते विकल्पः क्रियते। नकारान्तस्य पदस्य छवि परतोऽम्पर उभयथा ऋक्षु भवति, रुर्वा नकारो वा। तस्मिंस्त्वा दधाति, तस्मिन्त्वा दधाति। ऋक्ष्विति किम् ? ताँस्त्वं खादॗ सुखादितान् (मा० सं० ११.७८)॥

## दीर्घादटि समानपादे॥ ९ ॥

न इत्यनुवर्तते। दीर्घादुत्तरस्य पदान्तस्य नकारस्य रुर्भवत्यटि परतः तौ चेद् निमित्तनिमित्तिनौ समानपादे भवतः। ऋक्ष्विति प्रकृतत्वादृक्पाद इह गृह्यते। परिधीँरति (ऋ० ९.१०७.१९)। देवाँ अच्छा दीद्यत् (ऋ० ३.१.१)। महाँ इन्द्रो य ओजसा (ऋ० ८.६.१)। दीर्घादिति किम् ? अहन्नहिम् (ऋ० १.३२.१)। अटीति किम् ? इभ्यान् क्षत्रियान्[1]। समानपाद इति किम् ? यातुधानानुपस्पृश (ऋ० १०.८७.२)। उभयथेत्येव— आदित्यान् हवामहे[2]॥

## नॄन् पे॥ १० ॥

नॄनित्येतस्य नकारस्य रुर्भवति पशब्दे परतः। अकार उच्चारणार्थः। नॄँः पाहि (ऋ० ८.८४.३), नॄंः पाहि। नॄँः प्रीणीहि, नॄंः प्रीणीहि। प इति किम् ? नॄन् भोजयति। उभयथेत्यपि केचिदनुवर्तयन्ति। नॄन् पाहि (ऋ० १.१७४.१) इत्यपि यथा स्यात्॥

---

१ - तु०—ऋ० १.६५.४।
२ - तु०—ऋ० १०.६६.४।

## स्वतवान् पायौ ॥ ११ ॥

स्वतवानित्येतस्य नकारस्य रुर्भवति पायुशब्दे परतः। स्वतंवाँः पायुरंग्ने ( ऋ० ४. २.६ )॥

## कानाम्रेडिते ॥ १२ ॥

कानित्येतस्य नकारस्य रुर्भवति आम्रेडिते परतः। कांस्कानामन्त्रयते। कांस्कान् भोजयति। अस्य कस्कादिषु ( ८.३.४८ ) पाठो द्रष्टव्यः। तेन 'कुप्वोः ≍क ≍पौ च' ( ८.३.३७ ) इति न भवति। 'समः सुटि' ( ८.३.५ ) इत्यतो वा सकारोऽनुवर्तते, स एवात्र विधीयते। पूर्वेषु योगेषु संबन्धानुवृत्त्यागतस्य रोरत्रानभिसंबन्धः। आम्रेडित इति किम् ? कान् कान् पश्यति। एकोऽत्र कुत्सायाम् ॥

## ढो ढे लोपः ॥ १३ ॥

ढकारस्य ढकारे लोपो भवति। सत्यपि पदाधिकारे तस्यासंभवादपदान्तस्य ढकारस्यायं लोपो विज्ञायते। लीढम्। मीढम्[१]। उपगूढम्। ष्टुत्वस्यात्र सिद्धत्वमाश्रयाद् द्रष्टव्यम्। श्वलिड् ढौकत इत्यत्र तु जश्त्वे कृते कार्यी[२] नास्तीति लोपाभावः। न च ढलोपो जश्त्वापवादो विज्ञातुं शक्यते, तस्य हि लीढादिर्विषयः संभवति। तत्र हि श्रुतिकृतमानन्तर्यमस्ति। शास्त्रकृतं तु यदनानन्तर्यं[३] ष्टुत्वस्यासिद्धत्वेन प्राप्तम्, तत् तु सूत्रकरणसामर्थ्याद् बाध्यते। श्वलिड् ढौकत इत्यत्र तु न श्रुतिकृतमानन्तर्यम्, न शास्त्रकृतमिति अविषयोऽयं ढलोपस्य ॥

## रो रि ॥ १४ ॥

रेफस्य रेफे परतो लोपो भवति। नीरक्तम्। दूरक्तम्। अग्नी रथः। इन्दू रथः। पुना रक्तं वासः। प्राता राजक्रयः। पदस्येत्यत्र विशेषणे षष्ठी, तेनापदान्तस्यापि[४] रेफस्य लोपो भवति। जर्गृधेरजर्घाः, पास्पर्धेरपास्पा इति ॥

## खरवसानयोर्विसर्जनीयः ॥ १५ ॥

र इति वर्तते। रेफान्तस्य पदस्य खरि परतोऽवसाने च विसर्जनीयादेशो भवति।

---

१ – 'मीढम्' इति नास्ति मुद्रितेषु।
२ – 'कार्यम्' इत्यपपाठो मुद्रितेषु।
३ – 'यदा नानन्तर्यम्' इति है०। तत्र 'यदा' 'तत्' न संवदेते।
४ – 'तेन पदान्तस्यापि' इति बाल०।

वृक्षश्छादयति। प्लक्षश्छादयति[1]। वृक्षस्तरति। प्लक्षस्तरति। अवसाने—वृक्षः। प्लक्षः। खरवसानयोरिति किम्? अग्निर्नयति। वायुर्नयति। इह नृकुट्यां भवो नार्कुटः, नृपतेरपत्यं नार्पत्य इति वृद्धेर्बहिरङ्गलक्षणत्वात् तदाश्रयस्य रेफस्य 'असिद्धं बहिरङ्गम्०' (परि० ५०) इत्यसिद्धत्वाद् विसर्जनीयो न भवति॥

## रोः सुपि॥ १६॥

रु इत्येतस्य[2] रेफस्य सुपि परतो विसर्जनीयादेशो भवति। पयःसु। सर्पिःषु। यशःसु। सुपीति सप्तमीबहुवचनं गृह्यते। सिद्धे सत्यारम्भो नियमार्थः। रोरेव सुपि विसर्जनीयादेशः, नान्यस्य। गीर्षु। धूर्षु॥

## भोभगोअघोअपूर्वस्य योऽशि॥ १७॥

भोर् भगोर् अघोर् इत्येवंपूर्वस्यावर्णपूर्वस्य च रो रेफस्य यकारादेशो भवत्यशि परतः। भो अत्र। भगो अत्र। अघो अत्र। भो ददाति। भगो ददाति। अघो ददाति। अवर्णपूर्वस्य—क आस्ते, कय् आस्ते। ब्राह्मणा ददति। पुरुषा ददति। भोभगोअघोअपूर्वस्येति किम्? अग्निरत्र। वायुरत्र। अशुग्रहणं किम्? वृक्षः। प्लक्षः। नैतदस्ति, 'संहितायाम्' (८.२.१०८) इत्यनुवर्तते। तर्ह्यश्ग्रहणमुत्तरार्थम्। 'हलि सर्वेषाम्' (८.३.२२) इत्ययं लोपोऽशि हलि यथा स्यात्। इह मा भूत्—वृक्षं वृश्चतीति वृक्षवृट्, तमाचष्टे यः स वृक्षवयति, वृक्षवयतेरप्रत्ययो वृक्षव् करोति। अथ तत्रैवाश्ग्रहणं कस्माद् न कृतम्? उत्तरार्थम्, 'मोऽनुस्वारः' (८.३.२३) इति हल्मात्रे यथा स्यात्। 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' (८.३.१८), 'लोपः शाकल्यस्य' (८.३.१९) इत्येतत् च वृक्षव् करोतीत्यत्र मा भूदित्यश्ग्रहणम्। रोरित्येव—प्रातरत्र। पुनरत्र॥

## व्योर्लघुप्रयत्नतरः शाकटायनस्य॥ १८॥

वकारयकारयोर्भोभगोअघोअवर्णपूर्वयोः पदान्तयोर्लघुप्रयत्नतर आदेशो भवत्यशि परतः शाकटायनस्याचार्यस्य मतेन। भोयत्र, भो अत्र। भगोयत्र, भगो अत्र। अघोयत्र, अघो अत्र। कयास्ते, क आस्ते। अस्मायुद्धर, अस्मा उद्धर। असावादित्यः, असा आदित्यः। द्वावत्र, द्वा अत्र। द्वावानय, द्वा आनय। लघुप्रयत्नतरत्वमुच्चारणे स्थानकरण-शैथिल्यम्। स्थानं ताल्वादि। करणं जिह्वामूलादि। तयोरुच्चारणे शैथिल्यं मन्दप्रयत्नता॥

---

१ - 'वृक्षष्टकारः, प्लक्षष्टकारः, वृक्षश्चिनोति, प्लक्षश्चिनोति, वृक्षष्टीकते, प्लक्षष्टीकते' इत्यधिकं क्वचित्।

२ - 'इंत्यस्य' इति हैं०।

## लोपः शाकल्यस्य ॥ १९ ॥

वकारयकारयोः पदान्तयोरवर्णपूर्वयोर्लोपो भवति शाकल्यस्याचार्यस्य मतेनाशि परतः। क आस्ते, कयास्ते। काक आस्ते, काकयास्ते। अस्मा उद्धर, अस्मायुद्धर। द्वा अत्र, द्वावत्र। असा आदित्यः, असावादित्यः। शाकल्यग्रहणं विभाषार्थम्। तेन यदापि लघुप्रयत्नतरो न भवत्यादेशः, तदापि व्योः पक्षे श्रवणं भवति॥

## ओतो गार्ग्यस्य॥ २० ॥

ओकारादुत्तरस्य यकारस्य लोपो भवति गार्ग्यस्यांचार्यस्य मतेनाशि परतः। भो अत्र। भगो अत्र। भो इदम्। भगो इदम्। नित्यार्थोऽयमारम्भः। गार्ग्यग्रहणं पूजार्थम्। योऽयमलघुप्रयत्नस्य विकल्पेन लोपः क्रियते सोऽनेन निवर्त्यते। लघुप्रयत्नतरस्तु भवत्येव यकारः। भो अत्र, भोयत्र। भगो अत्र, भगोयत्र। अघो अत्र, अघोयत्र। केचित् तु सर्वमेव यकारमत्र नेच्छन्ति॥

## उञि च पदे॥ २१ ॥

अवर्णपूर्वयोर्व्योः पदान्तयोर्लोपो भवत्युञि च पदे परतः। सं <u>उ</u> एक<u>वि</u>शं<u>व</u>र्तनिः (मै० सं० २.७.२०)। स उ एकाग्निः। पद इति किम्? तन्त्र उतम्, तन्त्रयुतम्। वेञः संप्रसारणे कृत उञिति भूतपूर्वेण ञकारेण शक्यते प्रतिपत्तुमिति। अथोञित्येवंरूपो निपातः प्रतिपदोक्तोऽस्ति, तदा लाक्षणिकत्वाद् वेञादेशस्य ग्रहणमिह नास्ति (परि० १०५), उत्तरार्थं पदग्रहणं क्रियते॥

## हलि सर्वेषाम्॥ २२ ॥

हलि परतो भोभगोअघोअपूर्वस्य यकारस्य पदान्तस्य लोपो भवति सर्वेषामाचार्याणां मतेन। भो हसति। भगो हसति। अघो हसति। भो याति। भगो याति। अघो याति। वृक्षा हसन्ति। सर्वेषांग्रहणं शाकटायनस्यापि लोपो यथा स्यात्, लघुप्रयत्नतरो मा भूदिति॥

## मोऽनुस्वारः॥ २३ ॥

मकारान्तस्य पदस्य[1] अनुस्वार आदेशो भवति हलि परतः। कुण्डं हसति। वनं हसति। कुण्डं याति। वनं याति[2]। हलीत्येव—त्वमत्र। किमत्र। पदान्तस्येत्येव—गम्यते। रम्यते॥

---

१ – 'मकारस्य पदान्तस्य' इति मुद्रितेषु। स तु न युज्यते।
२ – 'वनं याति' इति नास्ति बाल०।

## नश्चापदान्तस्य झलि ॥ २४ ॥

नकारस्य मकारस्य चापदान्तस्यानुस्वारादेशो भवति झलि परतः। पयांसि। यशांसि। सर्पींषि। धनूंषि[1]। मकारस्य—आक्रंस्यते। आचिक्रंसते[2]। अधिजिगांसते। अपदान्तस्येति किम् ? राजन् भुङ्क्ष्व। झलीति किम् ? रम्यते। गम्यते॥

## मो राजि समः क्वौ ॥ २५ ॥

समो मकारस्य मकार आदेशो भवति राजतौ क्विप्प्रत्ययान्ते परतः। सम्राट्। साम्राज्यम्। मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम्। राजीति किम् ? संयत्। सम इति किम् ? किंराट्। क्वाविति किम् ? संराजिता। संराजितुम्। संराजितव्यम्॥

## हे मपरे वा ॥ २६ ॥

हकारे मकारपरे परतो मकारस्य वा मकार आदेशो भवति। किम् ह्मलयति, किं ह्मलयति। कथम् ह्मलयति, कथं ह्मलयति ॥ यवलपरे यवला वा॥ यवलपरे हकारे मकारस्य यवला यथासंख्यं वा भवन्तीति वक्तव्यम्। कियँ ह्यः, किं ह्यः। किवँ ह्वलयति, किं ह्वलयति। किलँ ह्लादयति, किं ह्लादयति॥

## नपरे नः ॥ २७ ॥

नकारपरे हे परतो मकारस्य वा नकारादेशो भवति। किन् ह्नुते, किं ह्नुते। कथन् ह्नुते, कथं ह्नुते॥

## ङ्णोः कुक्टुक् शरि ॥ २८ ॥

ङकारणकारयोः पदान्तयोः कुक् टुग् इत्येतावागमौ वा भवतः शरि परतः। प्राङ्क् शेते, प्राङ् शेते। प्राङ्क् षष्ठः, प्राङ् षष्ठः। प्राङ्क् साये, प्राङ् साये। णकारस्य—वण्ट् शेते, वण् शेते। पूर्वान्तकरणं प्राङ्क् छेते इत्यत्र छत्वार्थम्। 'शश्छोऽटि' ( ८.४.६३ ) इति हि पदान्ताद् झय इति तद् विज्ञायते। इह मा भूत्—पुरा क्रूरस्यं विसृपों विरप्शिन् ( मा० सं० १.२८ ), प्राङ्क् साय इत्यत्रापि 'सात्पदाद्योः' ( ८.३.१०९ ) इति षत्वप्रतिषेधार्थं च, वण्ट् साय इत्यत्र च 'न पदान्ताट्टोरनाम्' ( ८.४.४२ ) इति ष्टुत्वप्रतिषेधार्थम्॥

---

१ - ' धनूंषि ' इति नास्ति है०।

२ - ' आचिक्रंस्यते ' इति मुद्रितेषु।

## डः सि धुट् ॥ २९ ॥

डकारान्तात् पदादुत्तरस्य सकारादेः पदस्य वा धुडागमो भवति। श्वलिट्त्साये, श्वलिट् साये। मधुलिट्त्साये, मधुलिट् साये। परादिकरणं 'न पदान्ताट्टोरनाम्' ( ८.४.४२ ) इति ष्टुत्वप्रतिषेधार्थम् ॥

## नश्च ॥ ३० ॥

नकारान्तात् पदादुत्तरस्य सकारस्य वा धुडागमो भवति। भवान्त्साये, भवान् साये। महान्त्साये, महान् साये। धुटश्चर्त्वस्य चासिद्धत्वाद् 'नश्छव्यप्रशान्' ( ८.३.७ ) इति रुत्वं न भवति[१]॥

## शि तुक् ॥ ३१ ॥

नकारस्य पदान्तस्य शकारे परतो वा तुगागमो भवति। भवाञ्च्छेते। पूर्वान्तकरणं छत्वार्थम्। यद्येवं कुर्वञ्च्छेते इत्यत्र नकारस्यापदान्तत्वाद् णत्वं प्राप्नोति। तत्र समाधिमाहुः— 'स्तोः श्चुना श्चुः' ( ८.४.४० ) इत्यत्र योगविभागः क्रियते णत्वप्रतिषेधार्थम् , स्तोः श्चुना णकारो न भवतीति, ततः श्चुरिति ॥

## ङमो ह्रस्वादचि ङमुण् नित्यम् ॥ ३२ ॥

ह्रस्वात् परो यो ङम् तदन्तात् पदादुत्तरस्याचो ङमुडागमो भवति नित्यम्। ङणनेभ्यो यथासंख्यं ङणना भवन्ति—ङकारान्ताद् ङुट्—प्रत्यङ्ङास्ते। णकारान्ताद् णुट्—वण्णास्ते। वण्णवोचत्। नकारान्ताद् नुट्—कुर्वन्नास्ते। कुर्वन्नवोचत्। कृषन्नास्ते। कृषन्नवोचत्। ङम इति किम् ? त्वमास्से। ह्रस्वादिति किम् ? प्राङास्ते। भवानास्ते। अचीति किम् ? प्रत्यङ् करोति। इह परमदण्डिनौ, परमदण्डिनेति 'उत्तरपदत्वे चापदादिविधौ' ( महाभाष्य १.१६६ ) इति प्रत्ययलक्षणप्रतिषेधादुत्तरपदस्य पदत्वं नास्तीति ङमुड् न भवति। अथवा 'उञि च पदे' ( ८.३.२१ ) इत्यतः सप्तम्यन्तं पद इत्यनुवर्तते। तेनाजादौ पदे ङमुड् भवति ॥

## मय उञो वो वा ॥ ३३ ॥

मय उत्तरस्य उञो वा वकारादेशो भवत्यचि परतः। शम्वंस्तु ( मा० सं० २३.४४)

---

१ – वस्तुतस्त्वत्र रुत्वप्राप्तिरेव नास्ति, छवोऽम्परत्वाभावात्। व्याख्याकृतोः कल्पना तु श्रद्धातिरेकमात्रम्। अग्रन्थोऽयमित्येव साम्प्रतम्।

वेदिः, शमु अस्तु वेदिः। तद्वस्य परेतः, तदु अस्य परेतः। किम्वावपनम् ( मा० सं० २३. ९ ), किमु आवपनम्। प्रगृह्यत्वादुञः प्रकृतिभावे प्राप्ते वकारो विधीयते। तस्यासिद्धत्वाद् हलीति 'मोऽनुस्वारः' ( ८.३.२३ ) न भवति॥

## विसर्जनीयस्य सः॥ ३४ ॥

खरीत्यनुवर्तते। विसर्जनीयस्य सकार आदेशो भवति खरि परतः। वृक्षश्छादयति। प्लक्षश्छादयति। वृक्षष्ठकारः। प्लक्षष्ठकारः। वृक्षस्थकारः। प्लक्षस्थकारः। वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षस्तरति। प्लक्षस्तरति॥

## शर्परे विसर्जनीयः॥ ३५ ॥

शर्परे खरि परतो विसर्जनीयस्य विसर्जनीयादेशो भवति। शशः क्षुरम्। पुरुषः क्षुरम्। अद्भिः प्सातम्। वासः क्षौमम्। पुरुषः त्सरुः। घनाघनः क्षोभणश्चर्षणीनाम् ( ऋ० १०.१०३.१ )। नेति वक्तव्ये विसर्जनीयस्य विसर्जनीयादेशविधानं विकार-निवृत्त्यर्थम्। तेन जिह्वामूलीयोपध्मानीयौ न भवतः॥

## वा शरि॥ ३६ ॥

विसर्जनीयस्य विसर्जनीयादेशो वा भवति शरि परे। वृक्षः शेते, वृक्षश्शेते। प्लक्षः शेते, प्लक्षश्शेते। वृक्षः षण्डे, वृक्षष्षण्डे। वृक्षः साये, वृक्षस्साये ॥ खर्परे शरि वा लोपो वक्तव्यः॥ वृक्षा स्थातारः, वृक्षाः स्थातारः, वृक्षास्स्थातारः॥

## कुप्वोः ᳲकᳲपौ च॥ ३७ ॥

कवर्गपवर्गयोः परतो विसर्जनीयस्य यथासंख्यं ᳲ क ᳲ प इत्येतावादेशौ भवतः, चकाराद् विसर्जनीयश्च। वृक्ष ᳲ करोति, वृक्षः करोति। वृक्ष ᳲ खनति, वृक्षः खनति। वृक्ष ᳲ पचति, वृक्षः पचति। वृक्ष ᳲ फलति, वृक्षः फलति। कपावुच्चारणार्थौ। जिह्वामूलीयो-पध्मानीयावेतावादेशौ। 'विसर्जनीयस्य सः' ( ८.३.३४ ) इत्येतस्मिन् नाप्राप्त इदमारभ्यत इत्येतस्य बाधकम्, 'शर्परे विसर्जनीयः' ( ८.३.३५ ) इत्येतत् तु न बाध्यते—वासः क्षौमम्, अद्भिः प्सातम्। पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति 'शर्परे विसर्जनीयः' ( ८.३.३५ ) इत्येतदेव भवति। केचित् तु एतदर्थं योगविभागं कुर्वन्ति। कुप्वोः शर्परयोः विसर्जनीयस्य विसर्जनीय आदेशो भवति। किमर्थमिदम् ? ᳲ क ᳲ पौ चेति वक्ष्यति, तद्बाधनार्थमिति॥

## सोऽपदादौ ॥ ३८ ॥

सकार आदेशो भवति विसर्जनीयस्य कुप्वोरपदाद्योः परतः। पाशकल्पककाम्येषु। 'याप्ये पाशप्' ( ५.३.४७ )—पयस्पाशम्। 'ईषदसमाप्तौ कल्पप्०' ( ५.३.६७)—पयस्कल्पम्। यशस्कल्पम्। 'प्रागिवात् कः' ( ५.३.७० )—पयस्कम्। यशस्कम्। 'काम्यच्०' ( ३.१.९ )—पयस्काम्यति। यशस्काम्यति। अपदादाविति किम्? पय ᳲ कामयते। पय ᳲ पिबति ॥ सोऽपदादावित्यनव्ययस्येति वक्तव्यम्॥ इह मा भूत्—प्रातःकल्पम्, पुनःकल्पमिति ॥ रोः काम्ये नियमार्थम्॥ रोरेव काम्ये नान्यस्येति नियमार्थं वक्तव्यम्। पयस्काम्यति। यशस्काम्यति। इह मा भूत्—गीःकाम्यति। धूःकाम्यति ॥ उपध्मानीयस्य च[1]॥ कवर्गे परतः सकार आदेशो भवतीति वक्तव्यम्। किं प्रयोजनम्? उब्जिरुपध्मानीयोपधः पठ्यत इति दर्शनेऽभ्युद्गः, समुद्ग इति यथा स्यात्॥

## इणः षः ॥ ३९ ॥

अपदादाविति वर्तते। इण उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोरपदाद्योः परतः। पाशकल्पककाम्येषु। पाश—सर्पिष्पाशम्। यजुष्पाशम्। कल्प—सर्पिष्कल्पम्। यजुष्कल्पम्। क—सर्पिष्कम्। यजुष्कम्। काम्य—सर्पिष्काम्यति। यजुष्काम्यति। अपदादावित्येव—अग्निः करोति। वायुः करोति। अग्निः पचति। वायुः पचति। कुप्वोरित्येव—सर्पिस्ते। यजुस्ते। इत उत्तरं स इति, इणः ष इति च वर्तते। तत्रेणः परो यो विसर्जनीयस्तस्य षकारो भवति, अन्यस्य सकारो भवति॥

## नमस्पुरसोर्गत्योः ॥ ४० ॥

नमस् पुरस् इत्येतयोर्गतिसंज्ञकयोर्विसर्जनीयस्य सकारादेशो भवति कुप्वोः परतः। नमस्कर्ता। नमस्कर्तुम्। नमस्कर्तव्यम्। पुरस्कर्ता। पुरस्कर्तुम्। पुरस्कर्तव्यम्[2]। गत्योरिति किम्? पूः, पुरौ, पुरः करोति॥

## इदुदुपधस्य चाप्रत्ययस्य ॥ ४१ ॥

इकारोपधस्य उकारोपधस्य चाप्रत्ययस्य विसर्जनीयस्य षकार आदेशो भवति कुप्वोः परतः। निर्दुर्बहिराविश्चतुर्प्रादुस्। निस्—निष्कृतम्। निष्पीतम्। दुस्—दुष्कृतम्। दुष्पीतम्। बहिस्—बहिष्कृतम्। बहिष्पीतम्। आविस्—आविष्कृतम्। आविष्पीतम्।

---

१ – 'च' इति नास्ति मुद्रितेषु।

२ – 'पुरस्कर्ता, पुरस्कर्तुम्, पुरस्कर्तव्यम्' इति नास्ति मुद्रितेषु।

चतुर्—चतुष्कृतम्। चतुष्कपालम्। चतुष्कलम्। चतुष्कण्टकम्। चतुष्पीतम्[1]। प्रादुस्—प्रादुष्कृतम्। प्रादुष्पीतम्। अप्रत्ययस्येति किम् ? अग्निः करोति। वायुः करोति। मातुः करोति। पितुः करोति। अत्र 'रात् सस्य' ( ८.२.२४ ) इति सकारलोपे कृते रेफस्य यो विसर्जनीयः, तस्याप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति। कस्कादिषु ( ८.३.४८ ) तु भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तत्वात् षत्वप्रतिषेधस्य ॥ पुम्मुहुसोः प्रतिषेधो वक्तव्यः॥ पुँस्कामा। मुहु×कामा। नैष्कुल्यम्। दौष्कुल्यम्। दौष्पुरुष्यम्। नि३ष्कुलम्। दु३ष्कुलम्। दु३ष्पुरुषः। बहिरङ्गलक्षणयोर्वृद्धिप्लुतयोरसिद्धत्वात् ( परि ५० ) षत्वं प्रवर्तते॥

## तिरसोऽन्यतरस्याम्॥ ४२ ॥

तिरसो विसर्जनीयस्यान्यतरस्यां सकारादेशो भवति कुप्वोः परतः। तिरस्कर्ता। तिरस्कर्तुम्। तिरस्कर्तव्यम्। तिरः कर्ता। तिरः कर्तुम्। तिरः कर्तव्यम्। गतेरित्येव—तिरः कृत्वा काण्डं गतः॥

## द्विस्त्रिश्चतुरिति कृत्वोऽर्थे॥ ४३ ॥

ष इति संबध्यते। द्विस् त्रिस् चतुर् इत्येतेषां कृत्वोऽर्थे वर्तमानानां विसर्जनीयस्य षकार आदेशो भवत्यन्यतरस्यां कुप्वोः परतः। द्विष्करोति, द्विःकरोति। त्रिष्करोति, त्रिःकरोति। चतुष्करोति, चतुःकरोति। द्विष्पचति, द्विःपचति। त्रिष्पचति, त्रिःपचति। चतुष्पचति, चतुःपचति। कृत्वोऽर्थ इति किम् ? चतुष्कपालम्। चतुष्कण्टकम्। पूर्वेण नित्यं षत्वं भवति। 'इदुदुपधस्य ०' ( ८.३.४१ ) इत्यस्यानुवृत्तौ सत्यां कृत्वोऽर्थविषयेण च पदेन विसर्जनीये विशेष्यमाणे द्विस्त्रिश्चतुरिति शक्यमकर्तुम्।

कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा।
षत्वं विभाषया भून्ननु सिद्धं तत्र पूर्वेण॥ १ ॥
सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि॥ २ ॥
एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम्।
अन्यो हि नेदुदुपधः कृत्वोऽर्थः कश्चिदप्यस्ति॥ ३ ॥
अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत।
चतुरो न सिध्यति तथा रेफस्य विसर्जनीयो हि॥ ४ ॥
तस्मिंस्तु क्रियमाणे युक्तं चतुरो विशेषणं भवति।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम्॥ ५ ॥

१ – ' चतुष्पीतम् ' इति नास्ति मुद्रितेषु।

एवं त्वक्रियमाणे[1] द्विस्त्रिश्चतुर्ग्रहणे चतुःशब्दस्य कृत्वोऽर्थेऽपि वर्तमानस्य पूर्वेणैव नित्यं षत्वं स्यात्। पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य॥

## इसुसोः सामर्थ्ये॥ ४४ ॥

ष इति संबध्यते। इसुस् उस् इत्येतयोर्विसर्जनीयस्यान्यतरस्यां षकारादेशो भवति सामर्थ्ये कुप्वोः परतः। सर्पिष्करोति, सर्पिः करोति। यजुष्करोति, यजुः करोति। सामर्थ्य इति किम्? तिष्ठतु सर्पिः, पिब त्वमुदकम्। सामर्थ्यमिह व्यपेक्षा, न पुनरेकार्थीभावः, उभयं वा॥

## नित्यं समासेऽनुत्तरपदस्थस्य॥ ४५ ॥

इसुसोरिति वर्तते। समासविषय इसुसोर्विसर्जनीयस्यानुत्तरपदस्थस्य नित्यं षत्वं भवति कुप्वोः परतः। सर्पिष्कुण्डिका। धनुष्कपालम्। सर्पिष्पानम्। धनुष्फलम्। अनुत्तरपदस्थस्येति किम्? परमसर्पिःकुण्डिका। परमधनुःकपालम्। पूर्वसूत्रेण विकल्पोऽप्यत्र न भवति। एतदेवानुत्तरपदस्थस्येति वचनं ज्ञापकम्—इसुसोः प्रत्ययग्रहणे 'यस्मात् स विहितस्तदादेः०' (परि० २३) इत्ययं नियमो न भवति। तेन वाक्येऽपि—परमसर्पिष्करोति, परमसर्पिः करोति, 'इसुसोः सामर्थ्ये' (८.३.४४) इत्येतद् भवति। व्यपेक्षा च तत्र सामर्थ्यमाश्रितमिति समासे न भवति॥

## अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य॥ ४६ ॥

अकारादुत्तरस्यानव्ययविसर्जनीयस्य समासेऽनुत्तरपदस्थस्य नित्यं सकारादेशो भवति कृ कमिं कंस कुम्भ पात्र कुशा कर्णी इत्येतेषु परतः। कृ—अयस्कारः। पयस्कारः। कमि—अयस्कामः। पयस्कामः। कंस—अयस्कंसः। पयस्कंसः। कुम्भ—अयस्कुम्भः। पयस्कुम्भः। अयस्कुम्भी, पयस्कुम्भीत्यत्रापि भवति, 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' (परि० ७१) इति। पात्र—अयस्पात्रम्। पयस्पात्रम्। अयस्पात्री। पयस्पात्री। कुशा—अयस्कुशा। पयस्कुशा। कर्णी—अयस्कर्णी। पयस्कर्णी। शुनस्कर्ण इत्ययं तु कस्कादिषु (८.३.४८) द्रष्टव्यः। अत इति किम्? गीःकारः। धूःकारः। तपरकरणं किम्? भाःकरणम्। भास्कर इत्ययं तु कस्कादिषु (८.३.४८) द्रष्टव्यः। अनव्ययस्येति किम्? श्वःकारः। पुनःकारः। समास इत्येव—यशः करोति। पयः करोति। यशः कामयते। अनुत्तरपदस्थस्येत्येव—परमपयःकारः। परमपयःकामः॥

## अधःशिरसी पदे॥ ४७ ॥

---

१ - 'च क्रियमाणे' इति बाल०, 'तु क्रियमाणे' इति है० तारा० । मुद्रितेष्वपपाठः सर्वत्र।

अधस् शिरस् इत्येतयोर्विसर्जनीयस्य समासेऽनुत्तरपदस्थस्य सकार आदेशो भवति पदशब्दे परतः। अधस्पदम्। शिरस्पदम्। अधस्पदी। शिरस्पदी। समास इत्येव—अधः पदम्। अनुत्तरपदस्थस्येत्येव—परमशिरःपदम्। अधस्पदमिति मयूरव्यंसकादित्वात् ( २.१.७२ ) समासः॥

## कस्कादिषु च॥ ४८ ॥

कस्क इत्येवमादिषु च विसर्जनीयस्य सकारः षकारो वा यथायोगमादेशो भवति कुप्वोः परतः। कस्कः। कौतस्कुतः। तत[1] आगत इत्यण्। भ्रातुष्पुत्रः। शुनस्कर्णः। सद्यस्कालः। सद्यस्क्रीः। क्रीणातेरयं संपदादित्वात् ( ३.३.९४ वा० ) क्विप् प्रत्ययः। तत्र भवः क्रतुः साद्यस्क्रः। कांस्कान्। 'कानाम्रेडिते' ( ८.३.१२ ) इति रुत्वमत्र। सर्पिष्कुण्डिका, धनुष्कपालम्, बर्हिष्पूलम्, यजुष्पात्रमित्येषां पाठ उत्तरपदस्थस्यापि षत्वं यथा स्यादिति। परमसर्पिःफलमित्येवमादिप्रत्युदाहरणादिति पारायणिका आहुः। भाष्ये वृत्तौ च 'नित्यं समासेऽनुत्तरपदस्थस्य' ( ८.३.४५ ) इत्यत्र परमसर्पिःकुण्डिकेत्येतदेव प्रत्युदाहरणम्। अयस्काण्डः। मेदस्पिण्डः। अविहितलक्षण उपचारः कस्कादिषु द्रष्टव्यः॥

## छन्दसि वाप्राम्रेडितयोः॥ ४९ ॥

छन्दसि विषये विसर्जनीयस्य वा सकारादेशो भवति कुप्वोः परतः प्रशब्दमाम्रेडितं च वर्जयित्वा। अयःपात्रम्, अयस्पात्रम् ( शौ० सं० ८.१३.२ )। विश्वतः पात्रम्, विश्वतस्पात्रम्। उरु णः कारः, उरु णस्कारः। अप्राम्रेडितयोरिति किम्? अग्निः प्रविद्वान् ( शौ० सं० ५.२६.१ )। परुंषःपरुषः परि ( मा० सं० १३.२० )। सूर्यरश्मिर्हरिकेशः पुरस्तात् ( ऋ० १०.१३९.१ ), स नः पावकः ( ऋ० १.१२.१० ) इत्येवमादिषु 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' ( परि० ३५ ) इति सत्वं न भवति॥

## कः करत्करतिकृधिकृतेष्वनदितेः॥ ५० ॥

कः करत् करति कृधि कृत इत्येतेषु परतोऽनदितेर्विसर्जनीयस्य सकारादेशो भवति छन्दसि विषये। कः—विश्वतस्कः। करत्—विश्वतस्करत्। करति—पयस्करति। कृधि—उरु णस्कृधि ( ऋ० ८.७५.११ )। कृत—सदस्कृतम्। अनदितेरिति किम्? यथा नो अदितिः करत् ( ऋ० १.४३.२ )॥

---

१ - 'कुत' इति मुद्रितेषु।

## पञ्चम्याः परावध्यर्थे ॥ ५१ ॥

छन्दसीत्येव। पञ्चमीविसर्जनीयस्य सकारादेशो भवति परौ परतोऽध्यर्थे। दिवस्परिं प्रथमं जंज्ञे ( ऋ० १०.४५.१ )। अग्निः[1] हिमवंतस्परिं ( शौ० सं० ४.९.९ )। दिवस्परिं ( ऋ० १.१२१.१० )। महस्परि। पञ्चम्या इति किम् ? अहिंरिव भोगैः पर्येति बाहुम् ( ऋ० ६.७५.१४ )। पराविति किम् ? एभ्यो वा एतल्लोकेभ्यः प्रजापतिः समैरयत्। अध्यर्थ इति किम् ? दिवस्पृथिव्याः पर्योज उद्भृतम् ( ऋ० ६.४७.२७ )। अत्र परिः सर्वतोभावे, अध्यर्थ उपरिभावः॥

## पातौ च बहुलम् ॥ ५२ ॥

पातौ च धातौ परतः पञ्चमीविसर्जनीयस्य बहुलं सकार आदेशो भवति छन्दसि विषये। दिवस्पांतु ( ऋ० १०.१५८.१ )। राज्ञस्पातु। न च भवति—परिषदः पातु॥

## षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥ ५३ ॥

षष्ठीविसर्जनीयस्य सकारादेशो भवति पति पुत्र पृष्ठ पार पद पयस् पोष इत्येतेषु परतः छन्दसि विषये। वाचस्पतिं विश्वकर्माणमूतयें ( ऋ० १०.८१.७ )। पुत्र—दिवस्पुत्राय सूर्याय ( ऋ० १०.३७.१ )। पृष्ठ—दिवस्पृष्ठे धावंमानं सुपर्णम् ( शौ० सं० १३.२.३७)। पार—अगंन्म तमंसस्पारम् ( मा० सं० १२.७३ )। पद—इडस्पदे समिंध्यसे[3] ( ऋ० १०.१९१.१ )। पयस्—सूर्यं चक्षुर्दिवस्पयः[2]। पोष—रायस्पोषं यजंमानेषु धारय ( ऋ० १०.१२२.८ )। षष्ठ्या इति किम् ? मनुः पुत्रेभ्यो दायं व्यंभजत् ( तै० सं० ३.१.९.४ )॥

## इडाया वा ॥ ५४ ॥

इडायाः षष्ठीविसर्जनीयस्य वा सकार आदेशो भवति पत्यादिषु परतश्छन्दसि विषये। इडायास्पतिः, इडायाः पतिः। इडायास्पुत्रः ( ऋ० ३.२९.३ ), इडायाः पुत्रः। इडायास्पृष्ठम्, इडायाः पृष्ठम्। इडायास्पारम्, इडायाः पारम्। इडायास्पदम् ( मा० सं० ४.२२ ), इडायाः पदम्[4] ( तै० सं० १.२.५.१ )। इडायास्पयः, इडायाः पयः। इडायास्पोषम्, इडायाः पोषम्॥

## अपदान्तस्य मूर्धन्यः ॥ ५५ ॥

---

१ – 'जातम्' इति शौ० सं० पाठः।
२ – दिवस्पयः ( ऋ० १०.११४.१ )।
३ – 'धत्तम्' इति बाल०।
४ – 'पदे' इति तै० सं० पाठः।

पदाधिकारो निवृत्तः। अपदान्तस्येति मूर्धन्य इति चैतदधिकृतं वेदितव्यमा पादपरिसमाप्तेः। वक्ष्यति—'आदेशप्रत्यययोः' ( ८.३.५९ )—सिषेव। सुष्वाप। अग्निषु। वायुषु। अपदान्तस्येति किम् ? अग्निस्तत्र। वायुस्तत्र। ष इत्येव[1] सिद्धे मूर्धन्यग्रहणं ढकारार्थम्। अकृढ्वम्। चकृढ्वे॥

## सहेः साडः सः॥ ५६ ॥

सहेर्धातोः साड्रूपस्य यः सकारस्तस्य मूर्धन्य आदेशो भवति। जलाषाट्। तुराषाट्। पृतनाषाट्। सहेरिति किम् ? सह डेन वर्तते सडः, तस्यापत्यं साडिः। साड्ग्रहणं किम् ? यत्रास्यैतद् रूपं तत्र यथा स्यात्। इह मा भूत्—[2]तुरासाहम्। स इति किम् ? आकारस्य मा भूत्॥

## इण्कोः॥ ५७ ॥

इण्कोरित्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद् वक्ष्यामः, इणः कवर्गात् चेत्येवं तद् वेदितव्यम्। वक्ष्यति—'आदेशप्रत्यययोः' ( ८.३.५९ )—सिषेव। सुष्वाप। अग्निषु। वायुषु। कर्तृषु। हर्तृषु। गीर्षु। धूर्षु। वाक्षु। त्वक्षु। इण्कोरिति किम् ? दास्यति। असौ॥

## नुम्विसर्जनीयशर्व्यवायेऽपि॥ ५८ ॥

नुम्व्यवायेऽपि विसर्जनीयव्यवायेऽपि शर्व्यवायेऽपि इण्कोरुत्तरस्य सकारस्य मूर्धन्यादेशो भवति। व्यवायशब्दः प्रत्येकमभिसंबध्यते। नुम्व्यवाये तावत्—सर्पींषि। यजूंषि। हवींषि। विसर्जनीयव्यवाये—सर्पिःषु। यजुःषु। हविःषु। शर्व्यवाये—सर्पिष्षु। यजुष्षु। हविष्षु। नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते, न समस्तैः। तेनेह न भवति—निंस्से, निंस्स्व[3] इति। णिसि चुम्बन इत्येतस्यैतद् रूपम्। अत्र हि नुमा सकारेण च शरा[4] व्यवधानम्॥

## आदेशप्रत्यययोः॥ ५९ ॥

मूर्धन्य इति वर्तते, स इति च। आदेशप्रत्यययोरिति षष्ठी भेदेन संबध्यते। आदेशो यः सकारः, प्रत्ययस्य च यः सकारः इण्कोरुत्तरस्तस्य मूर्धन्यो भवत्यादेशः। आदेशस्य

---

१ – 'इत्येवम्' इति मुद्रितेषु।
२ – इतः प्राग् 'जलासाहम्' इति पाठो मुद्रितेषु। स त्वयुक्त इति न्यासः।
३ – 'निंस्स्वः' इत्यपपाठो है०।
४ – 'शरा च' इति विपर्यस्तः पाठो है० तारा०।

तावत्—सिषेव। सुष्वाप। प्रत्ययस्य—अग्निषु। वायुषु। कर्तृषु। हर्तृषु। इन्द्रो मा वक्षत्, स देवान् यक्षत् ( ऋ० ३.४.३ ) इति व्यपदेशिवद्भावात् प्रत्ययस्येति षत्वं भवति। यजतेर्वहतेश्च पञ्चमलकारे परस्मैपदप्रथमैकवचन इकारलोपः, 'लेटोऽडाटौ' ( ३.४.९४ ) इत्यट्, 'सिब्बहुलं लेटि' ( ३.१.३४ ) इति सिप्, ततः सिद्धं यक्षत्, वक्षद् इति ॥

## शासिवसिघसीनां च ॥ ६० ॥

शासि वसि घसि इत्येतेषां चेण्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति। अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्। शिष्टः। शिष्टवान्। वसि—उषितः। उषितवान्। उषित्वा। घसि—जक्षतुः, जक्षुः। 'घसिभसोः०'[1] ( ६.४.१०० ) इत्युपधालोपः। अक्षंन् पितरोऽमीमदन्त[2] पितरः ( मा० सं० १९.३६ )। अनादेशार्थं वचनम्। घसिर्यद्यप्यादेशः सकारस्त्वादेशो न भवति। इण्कोरित्येव—शास्ति। वसति। जघास ॥

## स्तौतिण्योरेव षण्यभ्यासात् ॥ ६१ ॥

स्तौतेर्ण्यन्तानां च षभूते सनि परतोऽभ्यासादिण उत्तरस्य आदेशसकारस्य मूर्धन्यादेशो भवति। तुष्टूषति। ण्यन्तानाम्—सिषेचयिषति[3]। सिषञ्जयिषति। सुष्वापयिषति। सिद्धे सत्यारम्भो नियमार्थः, स्तौतिण्योरेव षण्यभ्यासाद् यथा स्याद्, अन्यस्य मा भूत्—सिसिक्षति। सुसूषते[4]। एवकारकरणमिष्टतोऽवधारणार्थम्। स्तौतिण्योः षण्येवेति हि विज्ञायमाने तुष्टावेत्यत्र न स्यात्, इह च स्यादेव—सिसिक्षतीति। षणीति किम् ? अन्यत्र नियमो मा भूत्—सिषेच। को विनतेऽनुरोधः ? अविनते नियमो मा भूत्—सुषुप्सति। तिष्ठासति। कः सानुबन्धेऽनुरोधः ? षशब्दमात्रे नियमो मा भूत्—सुषुपिष[5] इन्द्रम्। अभ्यासादिति किम् ? अभ्यासाद् या प्राप्तिस्तस्या नियमो यथा स्यात्, धातोर्या प्राप्तिस्तस्या नियमो मा भूत्—प्रतीषिषति। अधीषिषति ॥

## सः स्विदिस्वदिसहीनां च ॥ ६२ ॥

स्विदि स्वदि सहि इत्येतेषां ण्यन्तानां सनि षभूते परतोऽभ्यासादुत्तरस्य सकारस्य सकारादेशो भवति। स्विदि—सिस्वेदयिषति। स्वदि—सिस्वादयिषति। सहि—सिसाहयिषति। सकारस्य सकारवचनं मूर्धन्यनिवृत्त्यर्थम् ॥

---

१ - 'गमहनजनखनघसाम्०' ( ६.४.९८ ) इति पाठोऽत्र युक्तः स्यात्।
२ - 'अक्षन्नमीमदन्त पितरः' इति बाल०। अक्षन्नमीमदन्त हि ( ऋ० १.८२.२)।
३ - 'सिषेवयिषति' इति मुद्रितेषु ।
४ - 'सुसूषति' इति मुद्रितेषु ।
५ - तु० — सुषुपुषं इन्द्रियम् ( तै० सं० ६.१.४.७ )।

## प्राक् सितादड्व्यवायेऽपि ॥ ६३ ॥

सेवसित० ( ८.३.७० ) इति वक्ष्यति। प्राक् सितसंशब्दनाद् यानित[१] ऊर्ध्वमनुक्रमिष्यामस्तत्राड्व्यवायेऽपि मूर्धन्यो भवतीत्येवं[२] वेदितव्यम्, अपिशब्दादनड्-व्यवायेऽपि। वक्ष्यति—'उपसर्गात् सुनोतिसुवति ०' ( ८.३.६५ ) इति षत्वम्। अभिषुणोति। परिषुणोति। विषुणोति। निषुणोति। अभ्यषुणोत्। पर्यषुणोत्। व्यषुणोत्। न्यषुणोत् ॥

## स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ६४ ॥

प्राक् सितादिति वर्तते। 'उपसर्गात् सुनोति०' ( ८.३.६५ ) इत्यत्र स्थासेनयसेधेति स्थादयः, तेषु स्थादिषु प्राक् सितसंशब्दनाद् अभ्यासेन व्यवाये मूर्धन्यो भवति, अभ्यास-सकारस्य च भवतीत्येवं वेदितव्यम्। अभ्यासेन व्यवाये[३] अषोपदेशार्थं च—अभिषिषेणयिषति, परिषिषेणयिषति। अवर्णान्ताभ्यासार्थं च—अभितष्ठौ, परितष्ठौ। षणि प्रतिषेधार्थं च—अभिषिषिक्षति, परिषिषिक्षति। अभ्यासस्येति वचनं नियमार्थम्—स्थादिष्वेवाभ्याससकारस्य मूर्धन्यो भवति, नान्यत्र। अभिसुसूषति। अभिसिषासति ॥

## उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिच-सञ्जस्वञ्जाम् ॥ ६५ ॥

मूर्धन्य इति वर्तते, स इति च। उपसर्गस्थाद् निमित्तादुत्तरस्य सुनोति सुवति स्यति स्तौति स्तोभति स्था सेनय सेध सिच सञ्ज स्वञ्ज इत्येतेषां सकारस्य मूर्धन्यादेशो भवति। सुनोति—अभिषुणोति। परिषुणोति। अभ्यषुणोत्। पर्यषुणोत्। सुवति—अभिषुवति। परिषुवति। अभ्यषुवत्। पर्यषुवत्। स्यति—अभिष्यति। परिष्यति। अभ्यष्यत्। पर्यष्यत्। स्तौति—अभिष्टौति। परिष्टौति। अभ्यष्टौत्। पर्यष्टौत्। स्तोभति—अभिष्टोभते। परिष्टोभते। अभ्यष्टोभत। पर्यष्टोभत। स्था—अभिष्ठास्यति। परिष्ठास्यति। अभ्यष्ठात्। पर्यष्ठात्। अभितष्ठौ। परितष्ठौ। सेनय—अभिषेणयति। परिषेणयति। अभ्यषेणयत्। पर्यषेणयत्। अभिषिषेणयिषति। परिषिषेणयिषति। सेध—अभिषेधति। परिषेधति। अभ्यषेधत्। पर्यषेधत्। सिच—अभिषिञ्चति। परिषिञ्चति। अभ्यषिञ्चत्। पर्यषिञ्चत्। अभिषिषिक्षति। परिषिषिक्षति। सञ्ज—अभिषजति। परिषजति। अभ्यषजत्। पर्यषजत्। अभिषिषङ्क्षति। परिषिषङ्क्षति। स्वञ्ज—अभिष्वजते। परिष्वजते। अभ्यष्वजत।

१ – 'यदितः' इति बाल०।
२ – 'तद्' इत्यधिकं मुद्रितेषु।
३ – 'परितष्ठौ' इत्यधिकं बाल० तारा०।

पर्यष्वजत। अभिषिष्वङ्क्षते। परिषिष्वङ्क्षते। सेध इति शब्विकरणनिर्देशः सिध्यतिनिवृत्त्यर्थः। उपसर्गादिति किम्? दधि सिञ्चति। मधु सिञ्चति। निर्गताः सेचका अस्माद् देशाद् निःसेचको देश इति नायं सिचेरुपसर्गः। अभिसावकीयतीत्यत्रापि न सुनोतिं प्रति क्रियायोगः। किं तर्हि? सावकीयं प्रति। अभिषावयतीत्यत्र तु सुनोतिमेव प्रतिं क्रियायोगो न सावयतिं प्रतीति षत्वं भवति॥

## सदिरप्रतेः॥ ६६ ॥

सदेः सकारस्य उपसर्गस्थाद् निमित्तादप्रतेरुत्तरस्य मूर्धन्य आदेशो भवति। निषीदति। विषीदति। न्यषीदत्। व्यषीदत्। निषसाद। विषसाद। अप्रतेरिति किम्? प्रतिसीदति॥

## स्तन्भेः॥ ६७ ॥

उपसर्गादिति वर्तते। स्तन्भेः सकारस्य उपसर्गस्थाद् निमित्तादुत्तरस्य मूर्धन्य आदेशो भवति। अभिष्टभ्नाति। परिष्टभ्नाति। अभ्यष्टभ्नात्। पर्यष्टभ्नात्। अभितष्टम्भ। परितष्टम्भ। अप्रतेरित्येतदिह नानुवर्तते, तेनैतदपि भवति—प्रतिष्टभ्नाति। प्रत्यष्टभ्नात्। प्रतितष्टम्भ॥

## अवाच्चालम्बनाविदूर्ययोः॥ ६८ ॥

अवशब्दादुपसर्गादुत्तरस्य स्तन्भेः सकारस्य मूर्धन्य आदेशो भवत्यालम्बनेऽर्थ आविदूर्ये च। आलम्बनमाश्रयणम्। अविदूरस्य भाव आविदूर्यम्। आलम्बने तावत्—अवष्टभ्यास्ते। अवष्टभ्य तिष्ठति। आविदूर्ये—अवष्टब्धा सेना। अवष्टब्धा शरत्। आलम्बनाविदूर्ययोरिति किम्? अवस्तब्धो वृषलः शीतेन। अनिणर्थ[1] आरम्भः॥

## वेश्च स्वनो भोजने॥ ६९ ॥

वेरुपसर्गादवाच्चोत्तरस्य भोजनार्थे स्वनतेः सकारस्य मूर्धन्यादेशो भवति। विष्वणति। व्यष्वणत्। विषष्वाण। अवष्वणति। अवाष्वणत्। अवषष्वाण। अभ्यवहारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति। भोजन इति किम्? विस्वनति मृदङ्गः॥

## परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्॥ ७० ॥

परि नि वि इत्येतेभ्य उपसर्गेभ्य उत्तरेषां सेव सित सय सिवु सह सुट् स्तु स्वञ्ज इत्येतेषां सकारस्य मूर्धन्य आदेशो भवति। परिषेवते। निषेवते। विषेवते। पर्यषेवत।

---

१ – 'अनिगर्थः' इत्यपपाठो है० तारा०।

न्यषेवत। व्यषेवत। परिषिषेविषते। निषिषेविषते। विषिषेविषते। सित—परिषितः। निषितः। विषितः। सय—परिषयः। निषयः। विषयः। सिवू—परिषीव्यति। निषीव्यति। विषीव्यति। पर्यषीव्यत्। न्यषीव्यत्। व्यषीव्यत्। पर्यसीव्यत्। न्यसीव्यत्। व्यसीव्यत्। सह—परिषहते। निषहते। विषहते। पर्यषहत। न्यषहत। व्यषहत। पर्यसहत। न्यसहत। व्यसहत। सुट्—परिष्करोति। पर्यष्करोत्। पर्यस्करोत्। स्तु—परिष्टौति। निष्टौति। विष्टौति। पर्यष्टौत्। न्यष्टौत्। व्यष्टौत्। पर्यस्तौत्। न्यस्तौत्। व्यस्तौत्। स्वञ्ज—'दंशसञ्जस्वञ्जाम् ०' ( ६.४.२५ ) इति नलोपः। परिष्वजते। निष्वजते। विष्वजते। पर्यष्वजत, पर्यस्वजत। पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहणमुत्तरार्थम्, अड्व्यवाये विभाषा यथा स्यात्॥

## सिवादीनां वाड्व्यवायेऽपि॥ ७१ ॥

अनन्तरसूत्रे सिवुसहसुट्स्तुस्वञ्जाम् ( ८.३.७० ) इति सिवादयः। सिवादीनामड्व्यवायेऽपि परिनिविभ्य उत्तरस्य सकारस्य वा मूर्धन्यो भवति। तथा चैवोदाहृतम्॥

## अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु॥ ७२ ॥

अनु वि परि अभि नि इत्येतेभ्य उत्तरस्य स्यन्दतेरप्राणिषु सकारस्य वा मूर्धन्यादेशो भवति। अनुष्यन्दते। विष्यन्दते। परिष्यन्दते। अभिष्यन्दते तैलम्। निष्यन्दते। अनुस्यन्दते। विस्यन्दते। परिस्यन्दते। अभिस्यन्दते। निस्यन्दते। अप्राणिष्विति किम्? अनुस्यन्दते मत्स्य उदके। प्राण्यप्राणिविषयस्यापि स्यन्दतेरयं विकल्पो भवति। अनुष्यन्देते मत्स्योदके, अनुस्यन्देते। अप्राणिष्विति पर्युदासोऽयम्, न प्रसज्यप्रतिषेधः॥

## वेः स्कन्देरनिष्ठायाम्॥ ७३ ॥

वेरुपसर्गादुत्तरस्य स्कन्देः सकारस्य मूर्धन्यो वा भवत्यनिष्ठायाम्। विष्कन्ता, विस्कन्ता। विष्कन्तुम्, विस्कन्तुम्। विष्कन्तव्यम्, विस्कन्तव्यम्। अनिष्ठायामिति किम्? विस्कन्नः॥

## परेश्च॥ ७४ ॥

परिशब्दात् चोत्तरस्य[1] स्कन्देः सकारस्य वा मूर्धन्यो भवति। परिष्कन्ता। परिष्कन्तुम्। परिष्कन्तव्यम्। परिस्कन्ता। परिस्कन्तुम्। परिस्कन्तव्यम्। पृथग्योगकरणसामर्थ्यादनिष्ठायामित्येतद् नानुवर्तते। परिष्कण्णः, परिस्कन्नः॥

---

१ - 'च' इति नास्ति है०।

## परिस्कन्दः प्राच्यभरतेषु ॥ ७५ ॥

परिस्कन्द इति मूर्धन्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु। पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्दः। अन्यत्र परिष्कन्दः। अचि निपातनम्। अथवा निष्ठातकारस्य लोपः। भरतग्रहणं प्राच्यविशेषणम् ॥

## स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥ ७६ ॥

स्फुरतिस्फुलत्योः सकारस्य निस् नि वि इत्येतेभ्य उत्तरस्य वा मूर्धन्यादेशो भवति। स्फुरति—निष्ष्फुरति, निस्स्फुरति। निष्फुरति, निस्फुरति। विष्फुरति, विस्फुरति। स्फुलति—निष्ष्फुलति, निस्स्फुलति। निष्फुलति, निस्फुलति। विष्फुलति, विस्फुलति ॥

## वेः स्कभ्नातेर्नित्यम् ॥ ७७ ॥

वेरुत्तरस्य स्कभ्नातेः सकारस्य नित्यं मूर्धन्यादेशो भवति। विष्कभ्नाति। विष्कम्भिता। विष्कम्भितुम्। विष्कम्भितव्यम् ॥

## इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ ७८ ॥

मूर्धन्य इति वर्तते। इणन्तादङ्गादुत्तरेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यादेशो भवति। च्योषीढ्वम्। प्लोषीढ्वम्। लुङ्—अच्योढ्वम्। अप्लोढ्वम्। लिट्—चकृढ्वे। ववृढ्वे। 'इण्कोः' (८.३.५७) इति वर्तमाने पुनरिण्ग्रहणं कवर्गनिवृत्त्यर्थम्। पक्षीध्वम्। यक्षीध्वम्। षीध्वंलुङ्लिटामिति किम्? स्तुध्वे[1]। अस्तुध्वम्। अङ्गादिति किम्? परिवेविषीध्वम्। अर्थवद्ग्रहणाद् (परि० १४) अप्येतत् सिद्धम्? तत् तु नाश्रितम् ॥

## विभाषेटः ॥ ७९ ॥

इणः परस्मादिट उत्तरेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यादेशो भवति विभाषा। लविषीढ्वम्, लविषीध्वम्। पविषीढ्वम्, पविषीध्वम्। लुङ्—अलविढ्वम्, अलविध्वम्। लिट्—लुलुविढ्वे, लुलुविध्वे। इण इत्येव—आसिषीध्वम्। अथेह कथं भवितव्यम्—उपदिदीयिध्वे? केचिदाहुः—इणन्तादङ्गादुत्तरस्येट आनन्तर्यं युटा व्यवहितमिति न भवितव्यं ढत्वेनेति। अपरेषां दर्शनम्—अङ्गादिति निवृत्तम्, इण इत्यनुवर्तते, ततश्च यकारादेव इणः परोऽनन्तर इडिति पक्षे भवितव्यं मूर्धन्येनेति ॥

## समासेऽङ्गुलेः सङ्गः ॥ ८० ॥

---

१ – 'स्तुध्वम्' इति न्यासे।

सङ्गसकारस्याङ्गुलेरुत्तरस्य मूर्धन्य आदेशो भवति समासे। अङ्गुलेः सङ्गः अङ्गुलिषङ्गः। अङ्गुलिषङ्गा यवागूः। अङ्गुलिषङ्गो गाः सादयति। समास इति किम्? अङ्गुलेः[1] सङ्गं पश्य॥

## भीरोः स्थानम्॥ ८१ ॥

स्थानसकारस्य भीरोरुत्तरस्य मूर्धन्यादेशो भवति। भीरुष्ठानम्। समास इत्येव—भीरोः[2] स्थानं पश्य॥

## अग्नेः स्तुत्स्तोमसोमाः॥ ८२ ॥

अग्नेरुत्तरस्य स्तुत् स्तोम सोम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ[3]। अग्नेर्दीर्घात् सोमस्येष्यते। तेनेह न भवति—अग्निसोमौ माणवकौ। तथा च ज्योतिरग्निः, सोमो लताविशेषः। अग्निसोमौ तिष्ठतः। समास इत्येव—अग्नेः स्तोमः॥

## ज्योतिरायुषः स्तोमः॥ ८३ ॥

ज्योतिस् आयुस् इत्येताभ्यामुत्तरस्य स्तोमसकारस्य मूर्धन्यादेशो भवति समासे। ज्योतिष्टोमः[4]। आयुष्टोमः[4]। समास इत्येव—ज्योतिः स्तोमं दर्शयति॥

## मातृपितृभ्यां स्वसा॥ ८४ ॥

मातृ पितृ इत्येताभ्यामुत्तरस्य स्वसृसकारस्य समासे मूर्धन्यादेशो भवति। मातृष्वसा। पितृष्वसा॥

## मातुःपितुर्भ्यामन्यतरस्याम्॥ ८५ ॥

मातुर् पितुर् इत्येताभ्यामुत्तरस्य स्वसृशब्दस्यान्यतरस्यां मूर्धन्यादेशो भवति समासे। मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। मातुःपितुरिति रेफान्तयोरेतद्ग्रहणम्। एकदेशविकृतस्यानन्यत्वात् ( परि० ३७ ) विसर्जनीयान्तात् सकारान्तात् च षत्वं भवति। समास इत्येव—वाक्ये मा भूत्—मातुः स्वसेत्येव नित्यं भवति॥

---

१ – 'अङ्गुले' इति बाल०।
२ – 'भीरो' इति बाल०।
३ – 'अग्नीषोमः' इत्यपपाठो मुद्रितेषु।
४ – 'खर्परे शरि विसर्जनीयलोपः' ( ८.३.३६ वा० )।

## अभिनिसः स्तनः शब्दसंज्ञायाम् ॥ ८६ ॥

अभिनिस् इत्येतस्मादुत्तरस्य स्तनतिसकारस्य मूर्धन्यादेशो भवत्यन्यतरस्यां शब्द-संज्ञायां गम्यमानायाम्। अभिनिष्टानो[१] वर्णः, अभिनिस्तानो वर्णः। अभिनिष्टानो विसर्जनीयः, अभिनिस्तानो विसर्जनीयः। शब्दसंज्ञायामिति किम्? अभिनिस्स्तनति मृदङ्गः। समास इत्यतः प्रभृति निवृत्तम्॥

## उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८७ ॥

उपसर्गस्थाद् निमित्तात् प्रादुस्शब्दात् चोत्तरस्य यकारपरस्याच्परस्य चास्ति-सकारस्य मूर्धन्यो भवति। अभिषन्ति। निषन्ति। विषन्ति। प्रादुःषन्ति। अभिष्यात्। निष्यात्। विष्यात्। प्रादुःष्यात्। उपसर्गादिति किम्? दधि स्यात्। मधु स्यात्। अस्तीति किम्? अनुसृतम्। विसृतम्। अथासत्यपि अस्तिग्रहणे सकारमेव प्रत्युपसर्ग आश्रीयते, प्रादुःशब्दस्य च कृभ्वस्तिष्वेव प्रयोग इत्यन्यत्राप्रसङ्गः? तथाप्येतत् प्रत्युदाहर्तव्यम्—अनुसूते अनुसूः, अनुस्वोऽपत्यम् आनुसेयः। शुभ्रादित्वाद्[२] ढक् (४.१.१२३)। 'ढे लोपोऽकद्र्वाः' (६.४.१४७) इत्युवर्णलोपः। यच्पर इति किम्? निस्तः। विस्तः। प्रादुःस्तः॥

## सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८८ ॥

सु वि निर् दुर् इत्येतेभ्य उत्तरस्य सुपि सूति सम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति। सुपीति स्वपिः कृतसंप्रसारणो गृह्यते। सुषुप्तः। विषुप्तः। निःषुप्तः। दुःषुप्तः। सूतीति स्वरूपग्रहणम्। सुषूतिः। विषूतिः। निःषूतिः। दुःषूतिः। सम—सुषमम्। विषमम्। निःषमम्। दुःषमम्।

सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न।
हलादिशेषान्न सुपिरिष्टं पूर्वं प्रसारणम्॥ १॥
स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः।
अनर्थके विषुषुपुः षुपिभूतो[३] द्विरुच्यते॥ २॥

'पूर्वत्रासिद्धीयमद्विर्वचने' (परि० ११७) इति कृते षत्वे ततो द्विर्वचनम्॥

---

१ – 'खर्परे शरि विसर्जनीयलोपः' (८.३.३६ वा०)।
२ – शुभ्रादिपु न पठ्यते। 'चतुष्पाद्भ्यो ढञ्' (४.१.१३५) इति कैयटः।
३ – 'सुपिभूतः' इति मुद्रितेपु।

## निनदीभ्यां स्नातेः कौशले ॥ ८९ ॥

नि नदी इत्येताभ्यामुत्तरस्य स्नातिसकारस्य मूर्धन्यादेशो भवति कौशले गम्यमाने। निष्णातः कटकरणे। निष्णातो रज्जुवर्तने। नद्यां स्नातीति नदीष्णः। 'सुपि स्थः' ( ३.२.४ ) इत्यत्र सुपीति योगविभागात् कप्रत्ययः। कौशल इति किम् ? निस्नातः। नद्यां स्नातो नदीस्नात इति॥

## सूत्रं प्रतिष्णातम् ॥ ९० ॥

प्रतिष्णातमिति निपात्यते, सूत्रं चेद् भवति। प्रतिष्णातं सूत्रम्। शुद्धमित्यर्थः। प्रतिस्नातमित्येवान्यत्र॥

## कपिष्ठलो गोत्रे ॥ ९१ ॥

कपिष्ठल इति निपात्यते गोत्रविषये। कपिष्ठलो नाम स यस्य[१] कापिष्ठलिः पुत्रः। गोत्र इति किम् ? कपेः स्थलं कपिस्थलम्॥

## प्रष्ठोऽग्रगामिनि ॥ ९२ ॥

प्रष्ठ इति निपात्यतेऽग्रगामिन्यभिधेये। प्रतिष्ठत इति प्रष्ठोंऽश्वः। अग्रतो गच्छतीत्यर्थः। अग्रगामिनीति किम् ? प्रस्थे हिमवतः पुण्ये। प्रस्थो व्रीहीणाम्॥

## वृक्षासनयोर्विष्टरः ॥ ९३ ॥

विष्टर इति निपात्यते वृक्ष आसने च वाच्ये। विपूर्वस्य स्तृणातेः षत्वं निपात्यते। विष्टरो वृक्षः। विष्टरमासनम्। वृक्षासनयोरिति किम् ? औलपिवाक्यस्य विस्तरः॥

## छन्दोनाम्नि च ॥ ९४ ॥

विष्टार इति निपात्यते। विपूर्वात् स्तॄ इत्येतस्माद् धातोः 'छन्दोनाम्नि च' ( ३.३.३४ ) इत्येवं विहितो घञ् इति विष्टर इत्यपि प्रकृते विष्टार इत्यत्र विज्ञायते। विष्टारपङ्क्तिः छन्दः। विष्टारबृहती[२] छन्दः। छन्दोनाम्नीति किम् ? पटस्य विस्तारः॥

## गवियुधिभ्यां स्थिरः ॥ ९५ ॥

गवियुधिभ्यामुत्तरस्य स्थिरसकारस्य मूर्धन्यादेशो भवति। गविष्ठिरः। युधिष्ठिरः।

१ – ' यस्य सः ' इति मुद्रितेषु व्यत्यस्तः पाठः।
२ – ' विष्टारो बृहती ' इति मुद्रितेषु।

गोशब्दादहलन्तादपि एतस्मादेव निपातनात् सप्तम्या अलुग् भवति ॥

## विकुशमिपरिभ्यः स्थलम् ॥ ९६ ॥

वि कु शमि परि इत्येतेभ्य उत्तरस्य स्थलसकारस्य मूर्धन्यादेशो भवति। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम् ॥

## अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥ ९७ ॥

अम्ब आम्ब गो भूमि सव्य अप द्वि त्रि कु शेकु शङ्कु अङ्गु मञ्जि पुञ्जि परमे बर्हिस् दिवि अग्नि इत्येतेभ्य उत्तरस्य स्थशब्दसकारस्य मूर्धन्यादेशो भवति। अम्बष्ठः। आम्बष्ठः। गोष्ठः। भूमिष्ठः। सव्येष्ठः। अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः ॥ स्थास्थिन्स्थृणामिति वक्तव्यम् ॥ सव्येष्ठाः। परमेष्ठी। सव्येष्ठृसारथिः[1] ॥

## सुषामादिषु च ॥ ९८ ॥

सुषामादिषु शब्देषु सकारस्य मूर्धन्यादेशो भवति। शोभनं साम यस्यासौ सुषामा ब्राह्मणः। दुष्षामा। निष्षामा। निष्षेधः। दुष्षेधः। सुशब्दस्य कर्मप्रवचनीयसंज्ञकत्वाद् निरुदुर्शब्दयोश्च क्रियान्तरविषयत्वादनुपसर्गत्वे सति पाठोऽयम्। 'सेधतेर्गतौ' (८.३.१११) इति वा प्रतिषेधबाधनार्थः। सुषन्धिः। दुष्षन्धिः। निष्षन्धिः। सुष्ठु। दुष्ठु। तिष्ठतेरुणादिषु (प० उ० १.२५) एतौ व्युत्पाद्येते। गौरिषक्थः संज्ञायाम् (ग० सू० १८२)। ङ्यापोः संज्ञाछन्दसोर्बहुलम् (६.३.६३) इति पूर्वपदस्य ह्रस्वत्वम्। प्रतिष्णिका। प्रतिष्णाशब्दादयं कन् प्रत्ययः। जलाषाहम्। नौषेचनम्। दुन्दुभिषेवणम्। एति संज्ञायामगात् (ग० सू० १८३)। एकारपरस्य सकारस्य मूर्धन्यादेशो भवतीण्कोरुत्तरस्यागकारात् परस्य संज्ञायां विषये। हरिषेणः। वारिषेणः। जानुषेणी। एतीति किम्? हरिसक्थम्। संज्ञायामिति किम्? पृथ्वी सेना यस्य स पृथुसेनो राजा। अगादिति किम्? विष्वक्सेनः। इण्कोरित्येव—सर्वसेनः। नक्षत्राद् वा (ग० सू० १८४)। नक्षत्रवाचिनः शब्दादुत्तरस्य सकारस्य वा एति संज्ञायामगकाराद् मूर्धन्यो भवति। रोहिणीषेणः, रोहिणीसेनः। भरणीषेणः, भरणीसेनः। अगकारादित्येव—शतभिषक्सेनः। अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः ॥

---

१ - 'सव्येष्ठा सारथिः' इति पद०। तु०—सव्यष्ठृसारथी (श० ब्रा० ५.३.१.८)।

## ह्रस्वात् तादौ तद्धिते ॥ ९९ ॥

ह्रस्वादुत्तरस्य सकारस्य मूर्धन्यादेशो भवति तादौ तद्धिते परतः। तरप् तमप् तय त्व तल् तस् त्यप् एतानि प्रयोजयन्ति। तरप्—सर्पिष्टरम्। यजुष्टरम्। तमप्—सर्पिष्टमम्। यजुष्टमम्। तय—चतुष्टये ब्राह्मणानां निकेताः। त्व—सर्पिष्ट्वम्। यजुष्ट्वम्। तल्—सर्पिष्टा। यजुष्टा। तस्—सर्पिष्टः। यजुष्टः। त्यप्—आविष्ट्यों वर्धते ( ऋ० १.९५.५)। ह्रस्वादिति किम् ? गीस्तरा। धूस्तरा। तादाविति किम् ? सर्पिस्साद् भवति। प्रत्ययसकारस्य 'सात्पदाद्योः' ( ८.३.१०९ ) इति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात्। तद्धित इति किम् ? सर्पिस्तरति ॥ तिङन्तस्य प्रतिषेधो वक्तव्यः॥ भिन्द्युस्तराम्। छिन्द्युस्तराम्॥

## निसस्तपतावनासेवने ॥ १०० ॥

निसः सकारस्य मूर्धन्यादेशो भवति तपतौ परतोऽनासेवनेऽर्थे। आसेवनं पुनः पुनः करणम्। निष्टपति सुवर्णम्। सकृदग्निं स्पर्शयतीत्यर्थः। अनासेवन इति किम् ? निस्तपति सुवर्णं सुवर्णकारः। पुनः पुनरग्निं स्पर्शयतीत्यर्थः। निष्टप्तं रक्षो निष्टप्ता अरातयः ( मा० सं० १.७ ) इत्यत्र सदप्यासेवनं न विवक्ष्यते, छान्दसो वा वर्णविकारः॥

## युष्मत्तत्ततक्षुःष्वन्तःपादम् ॥ १०१ ॥

युष्मत् तत् ततक्षुस् इत्येतेषु तकारादिषु परतः सकारस्य मूर्धन्यादेशो भवति, स चेत् सकारोऽन्तःपादं भवति। युष्मदादेशास्त्वम्, त्वाम्, ते, तव। अग्निष्ट्वं नामासीत्। त्वा—अग्निष्ट्वा वर्धयामसि। ते—अग्निष्टे विश्वमानय। तव—अप्स्वग्ने सधिष्टव ( ऋ० ८.४३.९ )। तत्—अग्निष्टद्विश्वमापृणाति ( ऋ० १०.२.४ )। ततक्षुस्—द्यावापृथिवी निष्टतक्षुः ( ऋ० १०.३१.७ )। अन्तःपादमिति किम् ? यन्मे आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः ( तै० सं० ३.२.५.४ )॥

## यजुष्येकेषाम् ॥ १०२ ॥

यजुषि विषये युष्मत्तत्ततक्षुःषु परत एकेषामाचार्याणां मतेन सकारस्य मूर्धन्यादेशो भवति। अर्चिर्भिष्ट्वम् ( मा० सं० १२.३२ ), अर्चिर्भिस्त्वम्। अग्निष्टेऽग्रम्, अग्निस्तेऽग्रम् ( तै० सं० ३.५.६.२ )। अग्निष्टत् ( तै० सं० १.१.१४.५ ), अग्निस्तत् ( तै० सं० ३.२.५.४ )। अर्चिर्भिष्टतक्षुः, अर्चिर्भिस्ततक्षुः॥

## स्तुतस्तोमयोश्छन्दसि ॥ १०३ ॥

एकेषामिति वर्तते। स्तुत स्तोम इत्येतयोः सकारस्य छन्दसि विषये मूर्धन्यादेशो भवत्येकेषामाचार्याणां मतेन। त्रिभिष्टुतस्य[1], त्रिभिस्तुतस्य। गोष्टोमं ( तै० सं० ७.४.११.१ ) षोडशिनम्, गोस्तोमं षोडशिनम् ( तु०—आ० श्रौ० ९.५.२ )। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम् ॥

## पूर्वपदात् ॥ १०४ ॥

छन्दसीति वर्तते, एकेषामिति च। पूर्वपदस्थाद् निमित्तादुत्तरस्य[2] सकारस्य मूर्धन्यादेशो भवति छन्दसि विषय एकेषामाचार्याणां मतेन। द्विषन्धिः ( मै० सं० ३.८.२), द्विसन्धिः। त्रिषन्धिः ( मै० सं० ३.८.२ ), त्रिसन्धिः। मधुष्ठानम्[3], मधुस्थानम्। द्विषाहस्रं चिन्वीत ( तै० सं० ५.६.८.२ ), द्विसाहस्रं चिन्वीत। असमासेऽपि यत् पूर्वपदं तदपीह गृह्यते। त्रिःषमृद्धत्वाय[4], त्रिःसमृद्धत्वाय ॥

## सुञः ॥ १०५ ॥

सुञिति निपात इह गृह्यते, तस्य पूर्वपदस्थाद् निमित्तादुत्तरस्य मूर्धन्यादेशो भवति छन्दसि विषये। अभी षु णः सखीनाम् ( ऋ० ४.३१.३ )। ऊर्ध्व ऊ षु णं[5] ऊतये ( ऋ० १.३६.१३ )॥

## सनोतेरनः ॥ १०६ ॥

सनोतेरनकारान्तस्य सकारस्य मूर्धन्यादेशो भवति। गोषाः ( ऋ० ९.२.१० )। नृषाः ( ऋ० ९.२.१० )। अन इति किम् ? गोसनिं वाचमुदेयम्[6] ( शौ० सं० ३.२०.१० )। पूर्वपदादित्येव सिद्धे नियमार्थमिदम्। अत्र केचित् सवनादिपाठाद् गोसनिर्नियमस्य फलं न भवतीति सिसानयिषतीति प्रत्युदाहरन्ति। सिसनिषतेरप्रत्ययः, सिसनीरित्यपरे ॥

## सहेः पृतनर्ताभ्यां च ॥ १०७ ॥

---

१ – नृभिष्टुतस्य ( मै० सं० १.३.३९ )।
२ – 'परस्य' इति है०।
३ – मधुष्ठालम् ( मै० सं० १.११.७ )।
४ – त्रिष्षमृद्धत्वाय ( तै० सं० २.४.११.५ ), तु० — ऐ० ब्रा० २.१६।
५ – 'इकः सुञीति दीर्घः। नश्च धातुस्थोरुषुभ्य इति णत्वम्' इत्यधिकं बाल०।
६ – 'वाचमुदीरयन्' इति बाल०।

पृतना ऋत इत्येताभ्यामुत्तरस्य सहिसकारस्य मूर्धन्यादेशो भवति। पृतनाषाहम् ( ऋ० ६.७२.५ )। ऋताषाहम्। केचित् सहेः इति योगविभागं कुर्वन्ति। ऋतीषहम् ( ऋ० ६.१४.४ ) इत्यत्रापि यथा स्यात्। ऋतिशब्दस्य पूर्वपदस्य 'संहितायाम्' ( ६.३. ११६ ) एतद् दीर्घत्वम्, षत्वं च[1]। अवग्रहे तु ऋति सहम् इत्येव भवति। चकारोऽनुक्तसमुच्चयार्थः। तेन ऋतीषहम् ( ऋ० ६.१४.४ ) इति सिद्धम्॥

## न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्॥ १०८ ॥

रेफपरस्य सकारस्य सृपि सृजि स्पृशि स्पृहि सवनादीनां च मूर्धन्यो न भवति। रपर—विस्रंसिकायाः काण्डाभ्यां जुहोति ( मै० सं० २.६.१ )। विस्रब्धः कथयति। सृपि—पुरा क्रूरस्य विसृपः ( मा० सं० १.२८ )। सृजि—वाचो विसर्जनात्। स्पृशि—दिविस्पृशम् ( ऋ० १.१४२.८ )। स्पृहि—निस्पृहं कथयति। सवनादीनाम्—सवनेसवने। सूतेसूते। सामेसामे। सवनमुखेसवनमुखे। किं स्यतीति[2] किंसंकिंसम्। अनुसवनमनुसवनम्। गोसनिं ( शौ० सं० ३.२०.१० ) गोसनिम्। अश्वसनिमश्वसनिम्। 'पूर्वपदात्' ( ८.३.१०४ ) इति प्राप्तेः प्रतिषेधः। अश्वसनिग्रहणमनिणोऽपि षत्वमस्तीति ज्ञापनार्थम्। तेन जलाषाहमश्वषाहमित्येतत् सिद्धं भवति। क्वचिदेवं गणपाठः—सवनेसवने। अनुसवनेऽनुसवने। संज्ञायां बृहस्पतिसवः। शकुनिसवनम्। सोमेसोमे। सूतेसूते। संवत्सरेसंवत्सरे। किंसंकिंसम्। बिसंबिसम्। मुसलंमुसलम्। गोसनिमश्वसनिम्। सवनादिः॥

## सात्पदाद्योः॥ १०९ ॥

सादित्येतस्य पदादेश्च मूर्धन्यादेशो न भवति। 'विभाषा साति कार्त्स्न्ये' ( ५.४. ५२)। प्रत्ययसकारत्वात् प्राप्तिः, पदादेश्चादेशसकारत्वात्। सात्—अग्निसात्। दधिसात्। मधुसात्। पदादेः—दधि सिञ्चति। मधु सिञ्चति॥

## सिचो यङि॥ ११० ॥

सिचः सकारस्य यङि परतो मूर्धन्यादेशो न भवति। सेसिच्यते। अभिसेसिच्यते। 'उपसर्गात्०' ( ८.३.६५ ) इति या प्राप्तिः सा पदादिलक्षणमेव प्रतिषेधं बाधते, न सिचो यङीति। तस्मादयं प्रतिषेधः सर्वत्र भवति। यङीति किम् ? अभिषिषिक्षति॥

---

१ - ' षत्वं च ' इति नास्ति है०।
२ - ' इति ' इति नास्ति है०।

## सेधतेर्गतौ ॥ १११ ॥

गतौ वर्तमानस्य सेधतेः सकारस्य मूर्धन्यादेशो न भवति। अभिसेधयति गाः। परिसेधयति गाः। गताविति किम् ? शिष्यमकार्यात् प्रतिषेधयति ॥

## प्रतिस्तब्धनिस्तब्धौ च ॥ ११२ ॥

प्रतिस्तब्ध निस्तब्ध इत्येतौ मूर्धन्यप्रतिषेधाय निपात्येते। 'स्तम्भेः' ( ८.३.६७ ) इति प्राप्तं षत्वं प्रतिषिध्यते। प्रतिस्तब्धः। निस्तब्धः॥

## सोढः ॥ ११३ ॥

सहिरयं सोढ्भूतो[1] गृह्यते, तस्य सकारस्य मूर्धन्यादेशो न भवति। परिसोढा[2]। परिसोढुम्। परिसोढव्यम्। सोढ्भूतग्रहणं किम् ? परिषहते॥

## स्तम्भुसिवुसहां चङि ॥ ११४ ॥

स्तम्भु सिवु सह इत्येतेषां चङि परतः सकारस्य मूर्धन्यादेशो न भवति। 'स्तम्भेः' ( ८.३.६७ ) इति 'परिनिविभ्यः ०' ( ८.३.७० ) इति च प्राप्तो मूर्धन्यः प्रतिषिध्यते। स्तम्भु—पर्यतस्तम्भत्। अभ्यतस्तम्भत्। सिवु—पर्यसीषिवत्। न्यसीषिवत्। सह—पर्यसीषहत्। व्यसीषहत् ॥ स्तम्भुसिवुसहां चङि उपसर्गादिति वक्तव्यम् ॥ उपसर्गाद् या प्राप्तिस्तस्या एव प्रतिषेधो यथा स्यात्, अभ्यासाद् या प्राप्तिस्तस्या मा भूदिति। तथा चैवोदाहृतम् ॥

## सुनोतेः स्यसनोः ॥ ११५ ॥

सुनोतेः सकारस्य मूर्धन्यादेशो न भवति स्ये सनि च परतः। अभिसोष्यति। परिसोष्यति। अभ्यसोष्यत्। पर्यसोष्यत्। सनि किमुदाहरणम् ? सुसूषति[3]। नैतदस्ति प्रयोजनम्, अत्र 'स्तौतिण्योरेव षण्यभ्यासात्' ( ८.३.६१ ) इति नियमाद् न भविष्यति। इदं तर्हि, अभिसुसूषति[4]। एतदपि नास्ति, 'स्थादिष्वभ्यासेन चाभ्यासस्य' ( ८.३.६४ ) इति नियमात्। इदं तर्हि, अभिसुसूषतेरप्रत्ययोऽभिसुसूरित्युदाहरणमिति। अत्र हि सन् षभूतो न भवतीत्यभ्यासात् प्राप्तिरस्ति। स्यसनोरिति किम् ? सुषाव ॥

१ – 'सोढभूतः' इत्यपपाठो है०।
२ – 'परिसोढः' इति मुद्रितेषु।
३ – 'अभिसुसूषति' इत्यपपाठः तारा० है०।
४ – 'अभिसुसूषते' इति मुद्रितेषु ।

## सदिष्वञ्जोः परस्य लिटि ॥ ११६ ॥

सदि ष्वञ्जि इत्येतयोर्धात्वोर्लिटि परतः सकारस्य परस्य मूर्धन्यो न भवति। अभिषसाद। परिषसाद। निषसाद। विषसाद। परिषस्वजे, परिषस्वजाते, परिषस्वजिरे। अभिषस्वजे। स्वञ्जेः संयोगान्तादपि विभाषा लिटः कित्त्वमिच्छन्ति ( १.२.६ वा० ) इति पक्षेऽनुषङ्गलोपः ॥

## निव्यभिभ्योऽड्व्यवाये वा छन्दसि ॥ ११७ ॥

नि वि अभि इत्येतेभ्य उपसर्गेभ्य उत्तरस्य सकारस्याड्व्यवाये छन्दसि विषये मूर्धन्यादेशो न भवति वा। न्यषीदत् पिता नः, न्यसीदत्। व्यषीदत् पिता नः, व्यसीदत्। अभ्यषीदत्, अभ्यसीदत्। सदिष्वञ्जोरिति तदिह नानुवर्तते। सामान्येनैव एतद्वचनम्[१]। न्यष्टौत्, न्यस्तौत्, अभ्यष्टौत्, अभ्यस्तौत् इत्येतदपि सिद्धं भवति ॥

॥ इति श्रीवामनविरचितायां काशिकायां वृत्तावष्टमाध्यायस्य तृतीयः पादः ॥



# ॥ अष्टमाध्यायस्य चतुर्थः पादः ॥

## रषाभ्यां नो णः समानपदे ॥ १ ॥

रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति, समानपदस्थौ चेद् निमित्तनिमित्तिनौ भवतः। आस्तीर्णम्। विशीर्णम्। अवगूर्णम्। षकारात्—कुष्णाति। पुष्णाति। मुष्णाति। षग्रहणमुत्तरार्थम्, ष्टुत्वेनैव हि सिद्धमेतत्। समानपद इति किम् ? अग्निर्नयति। वायुर्नयति ॥ ऋवर्णाच्चेति वक्तव्यम् ॥ तिसृणाम्। चतसृणाम्। मातृणाम्। पितृणाम्। रश्रुतिसामान्यनिर्देशात्[२] सिद्धम्। ऋवर्णभक्त्या[३] च व्यवधानेऽपि णत्वं भवतीति क्षुभ्नादिषु ( ८.४.३९ ) नृनमनतृप्नोतिग्रहणं ज्ञापकम्। अथवा ऋवर्णादपि णत्वं भवतीत्येतदेवानेन ज्ञाप्यते ॥

---

१ – 'तद्वचनम्' इति मुद्रितेषु ।

२ – ' वा ' इत्यधिकं है० ।

३ – ' अवर्णभक्त्या ' इति है० । ' अवर्णभाग् ' इति न्यासे । ' वर्णभक्त्या ' इति तारा०, पद० ।

## अट्कुप्वाङ्नुम्व्यवायेऽपि ॥ २ ॥

अट् कु पु आङ् नुम् इत्येतैर्व्यवायेऽपि रेफषकाराभ्यामुत्तरस्य नकारस्य णकार आदेशो भवति। अड्व्यवाये तावत्—करणम्। हरणम्। किरिणा। गिरिणा। कुरुणा। गुरुणा। कवर्गव्यवाये—अर्केण। मूर्खेण। गर्गेण। अर्घेण। पवर्गव्यवाये—दर्पेण। रेफेण। गर्भेण। चर्मणा। वर्मणा। आङ्व्यवाये—पर्याणद्धम्। निराणद्धम्। अड्व्यवाय इति सिद्ध आङ्ग्रहणं 'पदव्यवाये०' (८.४.३८) इत्यस्य प्रतिषेधस्य बाधनार्थम्। नुम्व्यवाये—बृंहणम्। बृंहणीयम्। नुम्ग्रहणमनुस्वारोपलक्षणार्थं द्रष्टव्यम्। तेन तृंहणम्, तृंहणीयमित्यत्रानुस्वारव्यवाये नुमभावेऽपि णत्वं भवति। सत्यपि च नुमि यत्रानुस्वारो न श्रूयते तत्र न भवति—प्रेन्वनम्, प्रेन्वनीयमिति। व्यवायोपलक्षणार्थत्वादडादीनामिह व्यस्तैः समस्तैश्च[1] व्यवायेऽपि णत्वं भवति ॥

## पूर्वपदात् संज्ञायामगः ॥ ३ ॥

पूर्वपदस्थाद् निमित्तादुत्तरस्य गकारवर्जिताद् नकारस्य णकार आदेशो भवति संज्ञायां विषये। द्रुणसः। वार्ध्रीणसः। खरणसः। शूर्पणखा। संज्ञायामिति किम्? चर्मनासिकः। अग इति किम्? ऋगयनम्। केचिदेतद् नियमार्थं वर्णयन्ति—पूर्वपदात् संज्ञायामेव णत्वं नान्यत्रेति। समासेऽपि हि समानपदे निमित्तनिमित्तिनोर्भावादस्ति पूर्वेण प्राप्तिरिति। स च नियमः पूर्वपदसंबन्धादुत्तरपदस्थस्यैव णत्वं निवर्तयति चर्मनासिक इति, न तद्धितपूर्वपदस्थस्य—खारपायणः, मातृभोगीणः, करणप्रिय इति। अग इति योगविभागेन णत्वप्रतिषेधः, न नियमप्रतिषेध इति। अपरे तु पूर्वसूत्रे समानमेव यद् नित्यं पदं तत् समानपदमित्याश्रयन्ति, समानग्रहणात्। तेषामप्राप्तमेव णत्वमनेन विधीयते। समासे हि पूर्वपदोत्तरपदविभागादसमानपदत्वमप्यस्तीति ॥

## वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ॥ ४ ॥

पूर्वपदात् संज्ञायामिति वर्तते। पुरगा मिश्रका सिध्रका शारिका कोटरा अग्र इत्येतेभ्यः पूर्वपदेभ्य उत्तरस्य वननकारस्य णकारादेशो भवति संज्ञायां विषये। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। शारिकावणम्। कोटरावणम्। अग्रेवणम्। सिद्धे सत्यारम्भो नियमार्थः—एतेभ्य एव परस्य वननकारस्य णकारादेशो भवति, नान्येभ्य इति। कुबेरवनम्। शतधारवनम्। असिपत्रवनम् ॥

## प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ॥ ५ ॥

---

१ – 'च' इति नास्ति है०।

प्र निर् अन्तर् शर इक्षु प्लक्ष आम्र कार्ष्य खदिर पीयूक्षा इत्येतेभ्य उत्तरस्य वननकारस्य संज्ञायामसंज्ञायामपि णकारादेशो भवति। प्र—प्रवणे यष्टव्यम्। निर्—निर्वणे प्रतिधीयते। अन्तर्—अन्तर्वणे। शर—शरवणम्। इक्षु—इक्षुवणम्। प्लक्ष—प्लक्षवणम्। आम्र—आम्रवणम्। कार्ष्य—कार्ष्यवणम्। खदिर—खदिरवणम्। पीयूक्षा—पीयूक्षावणम्॥

## विभाषौषधिवनस्पतिभ्यः॥ ६ ॥

वनमित्येव। ओषधिवाचि यत् पूर्वपदं वनस्पतिवाचि च तत्स्थाद् निमित्तादुत्तरस्य वननकारस्य णकार आदेशो भवति विभाषा। ओषधिवाचिभ्यस्तावत्—दूर्वावणम्, दूर्वावनम्। मूर्वावणम्, मूर्वावनम्। वनस्पतिभ्यः—शिरीषवणम्, शिरीषवनम्। बदरीवणम्, बदरीवनम् ॥द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम्॥ इह मा भूत्—देवदारुवनम्। भद्रदारुवनम् ॥ इरिकादिभ्यः प्रतिषेधो वक्तव्यः॥ इरिकावनम्। तिमिरवनम्।

फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः।
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः[१]॥ इति।

सत्यपि भेदे वृक्षवनस्पत्योरिहाभेदेन ग्रहणं द्रष्टव्यम्॥

## अह्नोऽदन्तात्॥ ७ ॥

अदन्तं यत् पूर्वपदं तत्स्थाद् निमित्तादुत्तरस्याह्नो नकारस्य णकार आदेशो भवति। पूर्वाह्णः। अपराह्णः। अदन्तादिति किम्? निरह्नः। दुरह्नः। 'अह्नोऽह्न एतेभ्यः' (५.४.८८) इत्यह्नादेशः। अह्न इत्यकारान्तग्रहणाद् दीर्घाह्नी शरदित्यत्र न भवति[२]॥

## वाहनमाहितात्॥ ८ ॥

आहितवाचि यत् पूर्वपदं तत्स्थाद् निमित्तादुत्तरस्य वाहननकारस्य णकार आदेशो भवति। इक्षुवाहणम्। शरवाहणम्। दर्भवाहणम्। वाहने यद् आरोपितमुह्यते तदाहितमुच्यते। आहितादिति किम्? दाक्षिवाहनम्। दाक्षिस्वामिकं वाहनमित्यर्थः॥

## पानं देशे॥ ९ ॥

पाननकारस्य पूर्वपदस्थाद् निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति। पीयत इति पानम्। 'कृत्यल्युटो बहुलम्' (३.३.११३) इति कर्मणि ल्युट्। क्षीरं पानं येषां ते क्षीरपाणा उशीनराः। मनुष्याभिधानेऽपि देशाभिधानं गम्यते। सुरापाणाः प्राच्याः।

---

१ - तु० — चरक सूत्र० १.७१॥ मनु० १.४६ – ४८॥
२ - इदमेकदेशिमतम्, युवादिप्रतिषेधेन (८.४.११ वा०) सिद्धत्वात्।

सौवीरपाणा बाह्लीकाः। कषायपाणा गान्धाराः। देश इति किम् ? दाक्षीणां पानं दाक्षिपानम् ॥

## वा भावकरणयोः ॥ १० ॥

भावे करणे च यः पानशब्दस्तदीयस्य नकारस्य णकार आदेशो भवति वा पूर्वपदस्थाद् निमित्तादुत्तरस्य। क्षीरपाणं वर्तते, क्षीरपानम्। कषायपाणम्, कषायपानम्। सुरापाणम्, सुरापानम्। करणे—क्षीरपाणः कंसः, क्षीरपानः ॥ वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम् ॥ गिरिणदी, गिरिनदी। चक्रणदी, चक्रनदी। चक्रणितम्बा, चक्रनितम्बा ॥

## प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ११ ॥

वेति वर्तते। प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारस्तस्य पूर्वपदस्थाद् निमित्तादुत्तरस्य वा णकार आदेशो भवति। प्रातिपदिकान्ते तावत्—माषवापिणौ, माषवापिनौ। नुमि—माषवापाणि, माषवापानि। व्रीहिवापाणि, व्रीहिवापानि। विभक्तौ—माषवापेण, माषवापेन। व्रीहिवापेण, व्रीहिवापेन। पूर्वपदाधिकारादुत्तरपदस्य प्रातिपदिकस्थो योऽन्त्यो नकारस्तस्येदं णत्वमिष्यते। इह हि न भवति—गर्गाणां भगिनी गर्गभगिनी। यदा त्वेवं भवति—गर्गाणां भगो गर्गभगः। गर्गभगोऽस्या अस्तीति गर्गभगिणीति। तदा मातृभोगीणवद् नित्यमेव णत्वेन भवितव्यम्। माषवापिणी, माषवापिनीत्यत्र तु 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' ( परि० ७५ ) इति कृदन्तेनैव समासे सति प्रातिपदिकस्योत्तरपदस्यैव सतो नकारो भवति। तथा चात्र[1] नुम्ग्रहणं कृतम्। स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवति ॥ युवादीनां प्रतिषेधो वक्तव्यः ॥ आर्ययूना। क्षत्रिययूना। प्रपक्वानि। दीर्घाह्नी शरत् ॥

## एकाजुत्तरपदे णः ॥ १२ ॥

एकाजुत्तरपदं यस्य स एकाजुत्तरपदः, तस्मिन्नेकाजुत्तरपदसमासे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थाद् निमित्तादुत्तरस्य नकारस्य णकार आदेशो भवति। वृत्रहणौ, वृत्रहणः। नुमि—क्षीरपाणि। सुरापाणि। विभक्तौ—क्षीरपेण। सुरापेण। ण इति वर्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम् ॥

## कुमति च ॥ १३ ॥

कवर्गवति चोत्तरपदे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थाद् निमित्तादुत्तरस्य

१ – 'चात्र' इति नास्ति बाल०।

नकारस्य णकारादेशो भवति। वस्त्रयुगिणौ, वस्त्रयुगिणः। स्वर्गकामिणौ। वृषगामिणौ। नुमि—वस्त्रयुगाणि। खरयुगाणि। विभक्तौ—वस्त्रयुगेण। खरयुगेण॥

## उपसर्गादसमासेऽपि णोपदेशस्य॥ १४ ॥

ण उपदेशे यस्यासौ णोपदेशः। णोपदेशस्य धातोर्यो नकारः तस्य उपसर्गस्थाद् निमित्तादुत्तरस्य णकारादेशो भवत्यसमासेऽपि समासेऽपि। प्रणमति। परिणमति। प्रणायकः। परिणायकः। उपसर्गादिति किम्? प्रगता नायका अस्माद् देशात् प्रनायको देशः। असमासेऽपीति किम्? पूर्वपदाधिकारात् समास एव स्यादिति तदधिकारनिवृत्तिद्योतनार्थम्। णोपदेशस्येति किम्? प्रनर्दति। प्रनर्दकः॥

## हिनुमीना॥ १५ ॥

हिनु मीना इत्येतयोरुपसर्गस्थाद् निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। प्रहिणोति, प्रहिणुतः। प्रमीणाति, प्रमीणीतः। हिनुमीनाग्रहणे विकृतस्यापि भवति, अजादेशस्य स्थानिवत्त्वात्[1]॥

## आनि लोट्॥ १६ ॥

आनीत्येतस्य लोडादेशस्योपसर्गस्थाद् निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। प्रवपाणि। परिवपाणि। प्रयाणि। परियाणि। लोडिति किम्? प्रवपानि मांसानि॥

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च॥ १७ ॥

नि इत्येतस्योपसर्गस्थाद् निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद नद पत पद घु मा स्यति हन्ति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि इत्येतेषु परतः। गद—प्रणिगदति। परिणिगदति। नद—प्रणिनदति। परिणिनदति। पत—प्रणिपतति। परिणिपतति। पद—प्रणिपद्यते। परिणिपद्यते। घु—प्रणिददाति। परिणिददाति। प्रणिदधाति। परिणिदधाति। माङ्—प्रणिमिमीते। परिणिमिमीते। मेङ्—प्रणिमयते। परिणिमयते। मा इति माङ्मेङोर्ग्रहणमिष्यते। स्यति—प्रणिष्यति। परिणिष्यति। हन्ति—प्रणिहन्ति। परिणिहन्ति। याति—प्रणियाति। परिणियाति। वाति—प्रणिवाति। परिणिवाति। द्राति—प्रणिद्राति। परिणिद्राति। प्साति—प्रणिप्साति। परिणिप्साति। वपति—प्रणिवपति। परिणिवपति। वहति—प्रणिवहति। परिणिवहति। शाम्यति—

१ - 'हिनुमीनाग्रहणे..........स्थानिवत्त्वात्' इति पाठो न स्यात्, न्यासपदमञ्जरीभ्यां स्वातन्त्र्येणोपपादितत्वात्।

प्रणिशाम्यति। परिणिशाम्यति। चिनोति—प्रणिचिनोति। परिणिचिनोति। देग्धि—प्रणिदेग्धि। परिणिदेग्धि। अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते। प्रण्यगदत्। परिण्यगदत्॥

## शेषे विभाषाकखादावषान्त उपदेशे॥ १८ ॥

नेरिति वर्तते, उपसर्गादिति च। अककारादिरखकारादिरषान्त[1] उपदेशे यो धातुः[2] शेषस्तस्मिन् परत उपसर्गस्थाद् निमित्तादुत्तरस्य नेर्नकारस्य विभाषा णकार आदेशो भवति। प्रणिपचति, प्रनिपचति। प्रणिभिनत्ति, प्रनिभिनत्ति। अकखादाविति किम्? प्रनिकरोति। प्रनिखादति। अषान्त इति किम्? प्रनिपिनष्टि। उपदेशग्रहणं किम्? इह च प्रतिषेधो यथा स्यात्—प्रनिचकार, प्रनिचखाद, प्रनिपेक्ष्यतीति। इह च मा भूत्—विशेः[3]—प्रणिवेष्टा[4]॥

## अनितेः॥ १९ ॥

अनितेर्नकारस्योपसर्गस्थाद् निमित्तादुत्तरस्य णकारादेशो भवति। प्राणिति। पराणिति॥

## अन्तः ॥ २० ॥

अनितेरिति वर्तते। उपसर्गस्थाद् निमित्तादुत्तरस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो भवति। हे प्राण्। हे पराण्। 'पदान्तस्य' (८.४.३७) इति प्रतिषेधस्यापवादोऽयम्। अन्तश्च पदापेक्षो गृह्यते। केचित् तु पूर्वसूत्र एवैतदन्तग्रहणं सामीप्यार्थमभिसंबध्नन्ति। निमित्तसमीपभूतस्य[5] एकवर्णव्यवहितस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो यथा स्यात्। इह मा भूत्—पर्यनितीति। तैर्द्वितीयमपि पदान्तस्य णत्वार्थमन्तग्रहणमाश्रयितव्यमेव। येषां तु पर्यणितीति भवितव्यमिति दर्शनम्, तेषां पूर्वसूत्रे नार्थोऽन्तग्रहणेन॥

## उभौ साभ्यासस्य॥ २१ ॥

साभ्यासस्यानितेरुपसर्गस्थाद् निमित्तादुत्तरस्योभयोर्नकारयोर्णकार आदेशो भवति। प्राणिणिषति। प्राणिणत्। पराणिणिषति। पराणिणत्। 'पूर्वत्रासिद्धीयमद्विर्वचने' (परि० ११७) इत्येतस्मिन् सति पूर्वेणैव कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि

---

१ – 'अषकारान्तश्च' इति मुद्रितेषु।
२ – 'स' इत्यधिकं है० तारा०। तदपार्थकम्।
३ – 'विशेः' इति नास्ति है०।
४ – 'प्रणिवेक्ष्यति' इत्यधिकं मुद्रितेषु। तत् त्वयुक्तम्।
५ – 'निमित्तसमीपस्थस्यं' इति है० 'निमित्तसमीपस्य' इति बाल०।

वचनम् ? एतत् तु नाश्रयितव्यमिति सूत्रमिदमारभ्यते। तेन औजढदिति सिद्धं भवति[१]॥

## हन्तेरत्पूर्वस्य ॥ २२ ॥

अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थाद् निमित्तादुत्तरस्य णकार आदेशो भवति। प्रहण्यते। परिहण्यते। प्रहणनम्। परिहणनम्। अत्पूर्वस्येति किम् ? प्रघ्नन्ति। परिघ्नन्ति। तपरकरणं किम् ? चिणि—प्राघानि। पर्यघानि॥

## वमोर्वा ॥ २३ ॥

हन्तेरिति वर्तते। वकारमकारयोः परतो हन्तिनकारस्योपसर्गस्थाद् निमित्तादुत्तरस्य वा णकारादेशो भवति। प्रहण्वः, प्रहन्वः। परिहण्वः, परिहन्वः। प्रहण्मः, प्रहन्मः। परिहण्मः, परिहन्मः॥

## अन्तरदेशे ॥ २४ ॥

अन्तःशब्दादुत्तरस्य हन्तिनकारस्यात्पूर्वस्य णकारादेशो भवति अदेशाभिधाने। अन्तर्हण्यते। अन्तर्हणनं वर्तते। अदेश इति किम् ? अन्तर्हननो देशः। अत्पूर्वस्येत्येव—अन्तर्घ्नन्ति। तपरकरणम् इत्येव[२]—अन्तरघानि॥

## अयनं च ॥ २५ ॥

अन्तरदेश इति वर्तते। अयननकारस्य चान्तःशब्दादुत्तरस्य णकारादेशो भवत्यदेशाभिधाने। अन्तरयणं वर्तते। अन्तरयणं शोभनम्। अदेश इत्येव—अन्तरयनो देशः॥

## छन्दस्यृदवग्रहात् ॥ २६ ॥

पूर्वपदादिति वर्तते। ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये। नृमणाः ( ऋ० १.१६७.५ )। पितृयाणम् (ऋ० १०.२.७)। अत्र हि नृऽमनाः, पितृऽयानम्[३] इति ऋकारोऽवगृह्यते। अवग्रहग्रहणं किमर्थमुच्यते, यावता संहिताधिकार आध्यायपरिसमाप्तेः ( ८.२.१०८ ) इत्युक्तम् ? विषयोपलक्षणार्थमवग्रहग्रहणम्—अवगृह्यमाणाद् यथा स्यात्, अनवगृह्यमाणाद् मा भूत्[४]। अपदान्ते चावग्रहो नास्ति॥

---

१ – 'तेन.........भवति' इति पाठोऽत्र न स्यात्, न्यासपदमञ्जर्योः स्वातन्त्र्येण व्याख्यातत्वात्।
२ – 'किम्' इति है०।
३ – 'नृमणाः, पितृयाणम्' इति मुद्रितेषु।

## नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥

नस् इत्येतस्य नकारस्य णकारादेशो भवति धातुस्थाद् निमित्तादुत्तरस्योरुशब्दात् षुशब्दात् च छन्दसि विषये। धातुस्थात् तावत् — अग्ने रक्षा णः ( ऋ० ७.१५.१३ )। शिक्षा णो अस्मिन् ( ऋ० ७.३२.२६ )। उरुशब्दात्—उरु णस्कृधि ( ऋ० ८.७५.११ )। षुशब्दात्—अभी षु णः सखीनाम् ( ऋ० ४.३१.३ )। ऊर्ध्व ऊ षु णं ऊतये ( ऋ० १.३६.१३ )। अस्मदादेशोऽयं नस्शब्दो 'बहुवचनस्य वस्नसौ' ( ८.१.२१ ) इति ॥

## उपसर्गाद् बहुलम् ॥ २८ ॥

उपसर्गस्थाद् निमित्तादुत्तरस्य नसो नकारस्य णकारादेशो भवति बहुलम्। प्रणः शूद्रः। प्रणसः। प्रणो राजा। न च भवति—प्र नो मुञ्चतम् ( ऋ० ६.७४.४ )। बहुलग्रहणाद् भाषायामपि भवति। प्रणसं मुखम्। 'उपसर्गाच्च' ( ५.४.११९ ) इति नासिकाया नसादेशः ॥

## कृत्यचः ॥ २९ ॥

कृत्स्थो यो नकारोऽच उत्तरस्तस्योपसर्गस्थाद् निमित्तादुत्तरस्य णकारादेशो भवति। अन, मान, अनीय, अनि, इनि, निष्ठादेश एते णत्वं प्रयोजयन्ति। अन—प्रयाणम्। परियाणम्। प्रमाणम्। परिमाणम्। मान—प्रयायमाणम्। परियायमाणम्। अनीय—प्रयाणीयम्। परियाणीयम्। अनि—अप्रयाणिः। अपरियाणिः। इनि—प्रयायिणौ। परियायिणौ। निष्ठादेशः — प्रहीणः। परिहीणः। प्रहीणवान्। परिहीणबान्। अच इति किम् ? प्रमग्नः। परिभुग्नः। 'भुजो कौटिल्ये' (तुदा० १२७ ), अस्य निष्ठाप्रत्ययः। 'ओदितश्च' ( ८.२.४५ ) इति निष्ठानत्वम्, 'चोः कुः' ( ८.२.३० ) इति कुत्वे सिद्धं परिभुग्न इति ॥ कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानं कर्तव्यम् ॥ निर्विण्णोऽस्मि खलसङ्गेन। निर्विण्णोऽहमत्र वासेन ॥

## णेर्विभाषा ॥ ३० ॥

ण्यन्ताद् यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्योपसर्गस्थाद् निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रयापणम्, प्रयापनम्। परियापणम्, परियापनम्। प्रयाप्यमाणम्, प्रयाप्यमानम्। प्रयापणीयम्, प्रयापनीयम्। अप्रयापणिः, अप्रयापनिः। प्रयापिणौ, प्रयापिनौ। विहितविशेषणं किम् ? प्रयाप्यमाणमित्यत्र यका व्यवधानेऽपि यथा स्यादिति ॥

## हलश्चेजुपधात् ॥ ३१ ॥

कृत्यच इति वर्तते। हलादिर्यो धातुरिजुपधस्तस्मात् परो यः कृत्प्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थाद् निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रकोपणम्, प्रकोपनम्। परिकोपणम्, परिकोपनम्। हल इति किम् ? प्रेहणम्। प्रोहणम्। इजुपधादिति किम् ? प्रवपणम्। परिवपणम्। कृत्यच इति नित्ये प्राप्ते विकल्पः। अच इत्येव— परिभुग्नः। इजुपधस्य सर्वस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम् ॥

## इजादेः सनुमः ॥ ३२ ॥

हल इति वर्तते। तेनेह सामर्थ्यात् तदन्तविधिः। इजादेः सनुमो हलन्ताद् धातोर्विहितो यः कृत् तत्स्थस्य नकारस्योपसर्गस्थाद् निमित्तादुत्तरस्य णकारो भवति। प्रेङ्खणम्। परेङ्खणम्। प्रेङ्गणम्। परेङ्गणम्। प्रोम्भणम्। परोम्भणम्। सिद्धे सत्यारम्भो नियमार्थः— इजादेरेव सनुमः, नान्यस्मादिति। प्रमङ्गनम्। परिमङ्गनम्। हल इत्यधिकाराद् ण्यन्ते नित्यं विध्यर्थमेतद् न भवति ॥

## वा निंसनिक्षनिन्दाम् ॥ ३३ ॥

उपसर्गादिति वर्तते। निंस निक्ष निन्द इत्येतेषां नकारस्योपसर्गस्थाद् निमित्तादुत्तरस्य वा णकारादेशो भवति। प्रणिंसनम्, प्रनिंसनम्। प्रणिक्षणम्, प्रनिक्षणम्। प्रणिन्दनम्, प्रनिन्दनम्। णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः ॥

## न भाभूपूकमिगमिप्यायीवेपाम् ॥ ३४ ॥

भा भू पू कमि गमि प्यायी वेप इत्येतेषामुपसर्गस्थाद् निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति। भा—प्रभानम्। परिभानम्। भू—प्रभवनम्। परिभवनम्। पू—प्रपवनम्। परिपवनम्। पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यम्। पूङो हि भवत्येव णत्वम्— प्रपवणं सोमस्येति। कमि—प्रकमनम् । परिकमनम्। गमि—प्रगमनम्। परिगमनम्। प्यायी—प्रप्यायनम्। परिप्यायनम्। वेप—प्रवेपनम्। परिवेपनम् ॥ ण्यन्तानां भादीनामुपसंख्यानं कर्तव्यम् ॥ प्रभापनम्। परिभापनम् ॥

## षात् पदान्तात् ॥ ३५ ॥

षकारात् पदान्तादुत्तरस्य नकारस्य णकारादेशो न भवति। निष्पानम्। दुष्पानम्। सर्पिष्पानम्। यजुष्पानम्। षादिति किम् ? निर्णयः। पदान्तादिति किम् ? कुष्णाति। पुष्णाति। पदे अन्तः पदान्त इति सप्तमीसमासोऽयम्, तेनेह न भवति—सुसर्पिष्केण।

सुयजुष्केण। 'शेषाद् विभाषा' ( ५.४.१५४ ) इति कप्॥

## नशेः षान्तस्य ॥ ३६ ॥

नेति वर्तते। नशेः षकारान्तस्य णकारादेशो न भवति। प्रनष्टः। परिनष्टः। षान्तस्येति किम् ? प्रणश्यति। परिणश्यति। अन्तग्रहणं षान्तभूतपूर्वमात्रस्यापि यथा स्यात्—प्रनङ्क्ष्यति। परिनङ्क्ष्यति॥

## पदान्तस्य ॥ ३७ ॥

पदान्तो यो नकारस्तस्य[१] णकारादेशो न भवति। वृक्षान्। प्लक्षान्। अरीन्। गिरीन्॥

## पदव्यवायेऽपि ॥ ३८ ॥

पदेन व्यवायः पदव्यवायः पदव्यवधानम्। पदेन व्यवायेऽपि सति निमित्त-निमित्तिनोर्नकारस्य णकारादेशो न भवति। माषकुम्भवापेन। चतुरङ्गयोगेन। प्रावनद्धम्। पर्यवनद्धम्। प्र गां नयामः। परि गां नयामः ॥पदव्यवायेऽतद्धित इति वक्तव्यम्॥ इह मा भूत्—आर्द्रगोमयेण। शुष्कगोमयेण। 'गोश्च पुरीषे' ( ४.३.१४५ ) इति मयट्। स्वादौ पूर्वं पदमिति गोशब्दः पूर्वपदम्, तेन व्यवायः॥

## क्षुभ्नादिषु च ॥ ३९ ॥

नेति वर्तते। क्षुभ्ना इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति। क्षुभ्नाति। अजादेशस्य स्थानिवद्भावादिहापि प्रतिषेधो भवति—क्षुभ्नीतः, क्षुभ्नन्ति। नृनमनः। 'पूर्वपदात् संज्ञायाम्०' ( ८.४.३ ) इति प्राप्तिः। 'छन्दस्यृदवग्रहात्' ( ८.४.२६ ) इति च प्राप्नोति। नन्दिन्, नन्दन, नगर एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति। हरिनन्दी। हरिनन्दनः। गिरिनगरम्। नृतिर्यङि प्रयोजयति[२]। नरीनृत्यते। तृप्नु—तृप्नोति। नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप एतान्युत्तरपदानि प्रयोजयन्ति। परिनर्तनम्, परिगहनमिति संज्ञायां 'पूर्वपदात् संज्ञायाम्०' ( ८.४.३ ) इति प्राप्नोति। परिनन्दनमित्यत्र 'उपसर्गाद-समासेऽपि ०' ( ८.४.१४ ) इति प्राप्नोति। शरनिवेशः, शरनिवासः, शराग्निः, दर्भानूप इत्येताः संज्ञाः। आचार्यादणत्वं च ( ग० सू० १८५ )। आचार्यभोगीनः। आचार्यानी।

---

१ – 'पदान्तस्य नकारस्य' इति है०।
२ – 'नृतिं यङि प्रयोजयन्ति' इति है०।

इरिकादिभ्यो वनोत्तरपदेभ्यः[1] संज्ञायाम् ( ग० सू० १८६ )। इरिका, तिमिर, समीर, कुबेर, हरि, कर्मार इत्युत्तरपदवनशब्दस्थस्य संज्ञायाम्। क्षुभ्नादिराकृतिगणः। अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः॥

## स्तोः श्चुना श्चुः॥ ४० ॥

सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः। स्तोः श्चुनेति यथासंख्यमत्र नेष्यते। सकारस्य शकारेण चवर्गेण द्वाभ्यामपि संनिपाते शकारो भवति। तवर्गस्यापि च शकारेण चवर्गेण च संनिपाते चवर्गो भवति। आदेशे तु यथासंख्यमिष्यते। सकारस्य शकारः, तवर्गस्य च चवर्ग इति। सकारस्य शकारेण संनिपाते—वृक्षश्शेते। प्लक्षश्शेते। तस्यैव चवर्गेण—वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षश् छादयति। प्लक्षश्छादयति। तवर्गस्य शकारेण—अग्निचिच्छेते। सोमसुच्छेते। तस्यैव चवर्गेण—अग्निचिच्चिनोति। सोमसुच्चिनोति। अग्निचिच्छादयति। सोमसुच्छादयति। अग्निचिज्जयति। सोमसुज्जयति। अग्निचिज्झकारः। सोमसुज्झकारः। अग्निचिञ्ञकारः। सोमसुञ्ञकारः। मस्जेः—मज्जति। भ्रस्जेः—भृज्जति। व्रस्चेः[2]—वृश्चति। यजेः—यज्ञः। याचेः—याच्ञा। 'शात्' ( ८.४.४४ ) इति प्रतिषेधो ज्ञापकः संख्यातानुदेशाभावस्य। स्तोः श्चाविति सप्तमीनिर्देशो न कृतः, पूर्वेण परेण च श्चुना संनिपाते श्चुत्वं यथा स्यादिति॥

## ष्टुना ष्टुः॥ ४१ ॥

स्तोरिति वर्तते। सकारतवर्गयोः षकारटवर्गाभ्यां संनिपाते षकारटवर्गावादेशौ भवतः। अत्रापि[3] तथैव संख्यातानुदेशाभावः। षकारेण सकारस्य—वृक्षष्षण्डे। प्लक्षष्षण्डे। तस्यैव टवर्गेण—वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षष्ठकारः। प्लक्षष्ठकारः। तवर्गस्य षकारेण—पेष्टा। पेष्टुम्। पेष्टव्यम्। कृषीष्ट। कृषीष्ठाः। तस्यैव टवर्गेण—अग्निचिट्टीकते। सोमसुट्टीकते। अग्निचिट्ठकारः। सोमसुट्ठकारः। अग्निचिड्डीनः। सोमसुड्डीनः। अग्निचिड् ढौकते। सोमसुड् ढौकते। अग्निचिण्णकारः। सोमसुण्णकारः। अतुट—अट्टति। अदुड—अड्डति॥

## न पदान्ताट्टोरनाम्॥ ४२ ॥

पदान्ताट् टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति नामित्येतद् वर्जयित्वा। श्वलिट्

१ – 'इरिकादीनि वनोत्तरपदानि' इति पाठान्तरम्।

२ – 'व्रश्चेः' इति मुद्रितेषु।

३ – 'तत्रापि' इति है०।

साये। मधुलिट् तरति। पदान्तादिति किम् ? 'ईड स्तुतौ' (अदा० ९) — ईट्टे। टोरिति किम् ? सर्पिष्टमम्। अनामिति किम् ? षण्णाम्। अत्यल्पमिदमुच्यते ॥ अनाम्नवति-नगरीणामिति वक्तव्यम् ॥ षण्णाम्। षण्णवतिः। षण्णगरी ॥

## तोः षि ॥ ४३ ॥

नेति वर्तते। तवर्गस्य षकारे यदुक्तं तद् न भवति। अग्निचित् षण्डे। भवान् षण्डे। महान् षण्डे ॥

## शात् ॥ ४४ ॥

तोरिति वर्तते। शकारादुत्तरस्य तवर्गस्य यदुक्तं तद् न भवति। प्रश्नः। विश्नः ॥

## यरोऽनुनासिकेऽनुनासिको वा ॥ ४५ ॥

पदान्तग्रहणमनुवर्तते। यरः पदान्तस्यानुनासिके परतो वानुनासिक आदेशो भवति। वाङ् नयति, वाग् नयति। श्वलिण् नयति, श्वलिड् नयति। अग्निचिन् नयति, अग्निचिद् नयति। त्रिष्टुम् नयति, त्रिष्टुब् नयति। पदान्तस्येत्येव—वेद्मि। क्षुभ्नाति ॥ यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्तव्यम् ॥ वाङ्मयम्। त्वङ्मयम्। व्यवस्थितविभाषा-विज्ञानात् सिद्धम् ॥

## अचो रहाभ्यां द्वे ॥ ४६ ॥

यर इति वर्तते। अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः। अर्क्कः। मर्क्कः। ब्रह्म्मा। अपह्न्नुते। अच इति किम् ? किन् ह्नुते। किम् ह्मलयति ॥

## अनचि च ॥ ४७ ॥

अच इति वर्तते, यर इति च। अनच्परस्य[1] अच उत्तरस्य यरो द्वे[2] भवतः[3]। दद्ध्यत्र। मद्ध्वत्र। अच इत्येव—स्मितम्। ध्मातम् ॥ यणो मयो द्वे भवत इति वक्तव्यम् ॥ केचिदत्र यण इति पञ्चमी मय इति षष्ठीति व्याचक्षते। तेषामुल्क्का, वल्म्मीक इत्युदा-हरणम्। अपरे तु यण इति षष्ठी मय इति पञ्चमीति। तेषां दध्य्यत्र, मध्व्वत्रेत्युदाहरणम् ॥ शरः खयो द्वे भवत इति वक्तव्यम् ॥ अत्रापि यदि शर इति पञ्चमी खय इति षष्ठी,

१ – 'अनच्परस्य' इति नास्ति बाल०।
२ – 'द्वे वा' इति है० , तारा०।
३ – 'अनचि परतः' इत्यधिकं बाल०।

तदा स्त्थाली स्त्थातेत्युदाहरणम्। अथवा खय उत्तरस्य शरो द्वे भवतः। वत्स्सः। इक्ष्ष्युः। क्ष्षीरम्। अप्स्सराः ॥ अवसाने च यरो द्वे भवत इति वक्तव्यम्॥ वाक्क्, वाक्। त्वक्क्, त्वक्। षट्ट्, षट्। तत्त्, तत्॥

## नादिन्याक्रोशे पुत्रस्य ॥ ४८ ॥

आदिनी परत आक्रोशे गम्यमाने पुत्रशब्दस्य न द्वे भवतः। 'अनचि च' (८.४.४७) इति प्राप्तिः प्रतिषिध्यते। पुत्रादिनी त्वमसि पापे। आक्रोश इति किम्? तत्त्वकथने द्विर्वचनं भवत्येव। पुत्रानत्तीति पुत्त्रादिनी शिशुमारी व्याघ्री ॥ तत्परे चेति वक्तव्यम्॥ पुत्रपुत्रादिनी त्वमसि पापे ॥ वा हतजग्धपर इति वक्तव्यम्॥ पुत्त्रहती, पुत्रहती। पुत्त्रजग्धी, पुत्रजग्धी ॥ चयो द्वितीयाः शरि पौष्करसादेः॥ चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन। तकारस्य थकारः—वथ्सः। ककारस्य खकारः—ख्षीरम्। पकारस्य फकारः—अफ्सराः॥

## शरोऽचि ॥ ४९ ॥

नेति वर्तते। शरोऽचि परतो न द्वे भवतः। 'अचो रहाभ्याम्०' (८.४.४६) इति प्राप्तिः प्रतिषिध्यते। कर्षति। वर्षति। आदर्शः[1]। अक्षदर्शः[2]। अचीति किम्? दश्श्र्यते॥

## त्रिप्रभृतिषु शाकटायनस्य ॥ ५० ॥

त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्याचार्यस्य मतेन द्वित्वं न भवति। इन्द्रः। चन्द्रः। मन्द्रः[3]। राष्ट्रम्। भ्राष्ट्रम्॥

## सर्वत्र शाकल्यस्य ॥ ५१ ॥

शाकल्यस्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न भवति। अर्कः। मर्कः। ब्रह्मा। अपह्नुते॥

## दीर्घादाचार्याणाम् ॥ ५२ ॥

दीर्घादुत्तरस्याचार्याणां मतेन न द्वित्वं भवति। दात्रम्। पात्रम्। मूत्रम्। सूत्रम्॥

---

१ – 'आकर्षः' इति है०।
२ – 'दर्शः' इति न्यासपद०।
३ – 'उष्ट्रः' इति है०।

## झलां जश् झशि ॥ ५३ ॥

झलां स्थाने जशादेशो भवति झशि परतः। लब्धा। लब्धुम्। लब्धव्यम्। दोग्धा। दोग्धुम्। दोग्धव्यम्। बोद्धा। बोद्धुम्। बोद्धव्यम्। झशीति किम् ? दत्तः। दत्थः। दध्मः॥

## अभ्यासे चर्च ॥ ५४ ॥

अभ्यासे वर्तमानानां झलां चरादेशो भवति, चकाराद् जश् च। चिखनिषति। चिच्छित्सति। टिठकारयिषति। तिष्ठासति। पिफकारयिषति। बुभूषति। जिघत्सति। डुढौकिषते। प्रकृतिचरां प्रकृतिचरो भवन्ति—चिचीषति। टिटीकिषते। तितनिषति। प्रकृतिजशां प्रकृतिजशो भवन्ति—जिजनिषते। बुबुधे। ददौ। डिड्ये॥

## खरि च ॥ ५५ ॥

खरि च परतो झलां चरादेशो भवति। जश्ग्रहणं नानुवर्तते पूर्वसूत्रे चानुकृष्टत्वात् (परि० ७८)। भेत्ता। भेत्तुम्। भेत्तव्यम्। युयुत्सते। आरिप्सते। आलिप्सते॥

## वावसाने ॥ ५६ ॥

झलां चरिति वर्तते। अवसाने वर्तमानानां झलां वा चरादेशो भवति। वाक्, वाग्। त्वक्, त्वग्। श्वलिट्, श्वलिड्। त्रिष्टुप्, त्रिष्टुब्॥

## अणोऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अणोऽप्रगृह्यसंज्ञस्यावसाने वर्तमानस्य वानुनासिकादेशो भवति। दधिँ, दधि। मधुँ, मधु। कुमारीँ, कुमारी। अण इति किम् ? कर्तृ। हर्तृ। अप्रगृह्यस्येति किम् ? अग्नी। वायू॥

## अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

अनुस्वारस्य ययि परतः परसवर्ण आदेशो भवति। शङ्किता। शङ्कितुम्। शङ्कितव्यम्। उञ्छिता। उञ्छितुम्। उञ्छितव्यम्। कुण्डिता। कुण्डितुम्। कुण्डितव्यम्। नन्दिता। नन्दितुम्। नन्दितव्यम्। कम्पिता। कम्पितुम्। कम्पितव्यम्। इह कुर्वन्ति, कृषन्ति[1] इत्यत्र णत्वस्यासिद्धत्वात् पूर्वं नकारस्यानुस्वारः क्रियते। तस्यापि परसवर्णेन पुनर्नकार एव

---

१ – ‘ वृषन्ति ’ इत्यपपाठो मुद्रितेषु।

